# PATAÑJALI'S

# VYĀKARAṆA MAHĀBHĀṢYA

WITH

## KAIYAṬA'S PRADĪPA

AND

## NĀGEŚA'S UDDYOTA

**Vol. IV**




Edited with foot-notes etc.,

BY

Pt. BHĀRGAVAS'ĀSTRĪ JOSHI S'ĀSTRĀCĀRYA

PANDIT, WILSON COLLEGE, BOMBAY.



PUBLISHED

BY

SATYABHAMABAI PANDURANG,

FOR THE 'NIRNAYA-SAGAR' PRESS,

BOMBAY.

1942.

Price 5 Rupees



श्रीमद्भगवत्पतञ्जलिमुनिविरचितं

# पाणिनीयव्याकरणमहाभाष्यम् ।



एतद्व्याख्यानभूत उपाध्यायकैयटप्रणीतो भाष्यप्रदीपस्तद्व्याख्यानभूतो
नागेशभट्टविरचितो भाष्यप्रदीपोद्द्योतः ।

तत्र

चतुर्थपञ्चमाध्यायव्याख्यानभूतं

## चतुर्थखण्डम् ।

परशुरामक्षेत्राभिजनजोश्युपाभिधश्रीभिकाजीपन्तात्मजेन भार्गवशास्त्रिणा
शास्त्राचार्येण विषमस्थलटिप्पणीभिः पाठभेदादिसंदर्शनेन च
संभूष्य संस्कृतम् ।




प्रथमं संस्करणम् ।


मुम्बय्यां
सत्यभामाबाई पाण्डुरङ्ग इत्येताभिः,
निर्णयसागरमुद्रणालयार्थं तत्रैव मुद्रयित्वा प्राकाश्यं नीतम् ।

शकाब्दाः १८६४, ख्रिस्ताब्दाः १९४२.

मूल्यं ५ रूप्यकाः ।







विदिततरमेवैतत्तत्रभवतां प्रथितयशसां यन्निर्णयसागराधिपतिभिः प्रदीपोद्द्योतसहितं व्याकरणमहाभाष्यमभिनवपरिपाट्या प्रकाशयितुमारब्धमिति । अद्ययावन्महता प्रयासेन तृतीयाध्यायान्तं भागत्रयमेव विद्वत्करकमलयोरुपनिवेशयितुं प्रभविष्णवस्ते । सुप्रभातमिवाद्य चतुर्थपञ्चमाध्यायद्वयस्य चतुर्थोऽयं भागो विद्वज्जनकरकमलेषु विनिवेशयितुं न चिरादवतीर्ण इति । म. म. शिवदत्तपण्डितैरुपक्रान्तोऽयं मार्गः शनैः शनैराक्रम्यमाणोऽपि बुद्धिलाघवात् ग्रन्थस्यास्यातीवदुरूहत्वात् आलस्यादिदोषबाहुल्याद्वा वर्षद्वयाभ्यन्तरे कष्टभरेणैवायं भागोऽस्माभिः पूर्णतां नीत इति गुणैकपक्षपातिनो विद्वांसः शिवेन चक्षुषाऽवलोकयिष्यन्ति ।

इदानीं विरलप्रचारे महाभाष्याध्ययने दौर्भाग्यमिव यत् भाष्यवार्तिकयोर्भेदो नोपलभ्यते । तेन कियान् वार्तिकांशः कियांश्च भाष्यांश इत्येतन्निर्णये महान् प्रत्यूह इति–एतद्विषये यदस्माभिः प्रयतितं तत् पदमञ्जरीकौस्तुभमञ्जूषादिप्रबन्धग्रन्थसाहाय्येन । प्राचीनग्रन्थकारैश्च वार्तिकत्वोपलब्धिचिह्नं भाष्यकुण्डलनारूपं प्रामुख्येनाध्यवसितम् । अतश्च प्रामाणिकः शुद्धः पुरातनश्च भाष्यपाठो महताऽपि प्रयत्नेन प्रकाशकैः संरक्षणीयः । अद्ययावत् गीर्वाणवाणीपीठरूपेऽस्मिन् भारते वर्षे महाभाष्यप्रकाशनपरिश्रमः सव्येतरकराङ्गुलिपरिमितैरेव महाभागैः कष्टभरेणासादितः । तत्र काश्यां बहुतिथकालात्प्राक् स्थानत्रये ह्येतन्मुद्रितमपि नातीव मनोरमं सङ्कीर्णं च भाष्यवार्तिकयोर्विभागविधौ नातीवोपयुक्तमिति तन्न विचार्यते । मुम्बापुर्यां द्वीपान्तरीयमहाभागेन पण्डितमण्डलीसाहाय्यमुपसम्पाद्य मुद्रितं मूलमात्रमसंदिग्धं प्रायः प्रमादरहितमस्माभिः पाठभेददर्शनावसरे (छ)संज्ञकत्वेन गृहीतं भाष्यवार्तिकयोर्भेदविधौ विचारकक्षामापतति । तस्मिंश्च पुस्तके वार्तिकानि स्थूलाक्षरेण मुद्रितानीति भेदः सुस्पष्टं व्यज्यते । तस्मिन् पुस्तके सुस्पष्टं भेदे प्रतीयमानेऽपि नास्माभिरन्धानुकरणं तस्य कृतम् । यतस्तत्र प्रमादपतितानि बहूनि स्थलानि दरीदृश्यन्ते । तानि च स्थलानि कतिपयान्युदाह्रियन्ते—

'यञञश्च' ( ४।१।१६ ) इति सूत्रे 'आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम्' इत्येतद्वार्तिकमेतद्भिन्नेषु सर्वेष्वपि पुस्तकेषु दृश्यते । अत्र च 'आपत्यग्रहणं कर्तव्यं द्वीपाद्यञः प्रतिषेधार्थम्' इत्येव वार्तिकरहितं भाष्यं संदृश्यते । सर्वेषु मुद्रितामुद्रितपुस्तकेषु ऐकमत्येन वार्तिकपाठदर्शनादस्माभिरपि तस्य वार्तिकस्योल्लेखः कृतः । एतद्वार्तिकमिति तु प्राचीनपुस्तकेषु तथा पाठदर्शनादेवावगतमिति न । कौस्तुभकृद्भिरपि तस्य वार्तिकत्वेनोल्लेखः सुस्पष्टं कृतः । मनोरमायां च 'यद्यपि 'आपत्यग्रहणं कर्तव्यम्' इति वार्तिकं तथापि अपत्याधिकारविहितपरं तत्' इत्युक्तम् । एवं च वैय्याकरणश्रेष्ठैर्दीक्षितैर्यद्वार्तिकत्वेन परिगृहीतं तद्वार्तिकमेवेति धियाऽस्माभिस्तदुपन्यस्तम् ।

'गोत्रोक्षोष्ट्रोरभ्रराजराजन्य–' (४।२।३९) इति सूत्रे 'वृद्धाच्च' इति वार्तिकमस्माभिरुपन्यस्तम् । कीलहॉर्नपुस्तके तु 'वृद्धाच्चेति वक्तव्यम्' इत्येवं भाष्यपाठः, नतु तत्र तस्य वार्तिकस्योल्लेखः । बहुषु पुस्तकेषु वार्तिकपाठदर्शनात्तथोपन्यस्तम् ।

'केदाराद्यञ्च' (४।२।४०) इति सूत्रे 'गणिकायाश्च' इति वार्तिकमेतत्पुस्तके उद्धृतम् । (छ)संज्ञककीलहॉर्नपुस्तके तु नैतद्दृश्यते ।

'ग्रामजनबन्धुभ्यस्तल्' (४।२।४३) इति सूत्रे 'गजसहायाभ्याञ्च' इति वार्तिकमत्रोपन्यस्तम् । (छ)पुस्तके तु नास्योपन्यासः । अस्माभिरुपन्यस्तानि वार्तिकानि प्राचीनपुस्तकेषु दृश्यन्त इति प्रामाणिकानीति वयं विद्मः । अन्यच्च ग्रामजनेति सूत्रव्याख्यानावसरे तत्त्वबोधिनीकारेण 'वृत्तिकृता तु वार्तिकस्थसहायशब्दोऽपि सूत्रे प्रक्षिप्तः' इत्युक्तम् । तेन च 'गजसहायाभ्यां च' इति वार्तिकमित्येव निर्णीयते ।

'क्रतूक्थादिसूत्रान्ताट्ठक्' (४।२।६०) इति सूत्रे 'तस्येदं प्रत्ययाल्लुक्' इत्येतद्वार्तिकमस्मत्पुस्तके निर्दिश्यते । कीलहॉर्नपुस्तके तु नास्य वार्तिकेषु परिगणनम् । अत्र नागेशभट्टचरणैः 'तस्येदं प्रत्ययादिति' इति प्रतीकमुपगृह्य 'वार्तिके षष्ठ्यर्थे पञ्चमी' इत्युक्तम् । तेन चास्य वार्तिकेष्वपरिगणयतामयं प्रमाद एव ।

'वयसि प्रथमे' (४।१।२०) इति सूत्रे 'वयस्य चरमे' इति वार्तिकमस्मदुपनिर्दिष्टम् । द्वीपान्तरीयपण्डितेन नैतद्वार्तिकेषु परिगणितम् । बहुषु पुस्तकेषु वार्तिकेष्वस्य पाठ इत्यस्माभिरुपन्यस्त इति तु सत्यमेव । भाष्ये कृतभूरिपरिश्रमैर्भट्टाचार्यैश्च 'ये त्रीणीति' इति प्रतीकमुपादाय 'वार्तिकसंमतत्वादिदमेव युक्तम्' इत्युक्तम् । एतेनास्य वार्तिकेष्वपरिगणनं भ्रम एव ।

वार्तिकविषये संदिह्यद्भिरस्माभिर्बहूनि पुस्तकानि 'वार्तिकपाठ'संज्ञकानि प्राचीनानि उपसंगृहीतानि । तानि च कतिपयवार्तिकसंग्रहेणैव कृतकृत्यतां गतानि अकिञ्चित्कराणीति न तद्दर्शनेन संतोषः ।

एवं वार्तिकविषये प्रामाण्यमुपसंगृह्यैव प्रायशः सर्वाणि तानि संगृहीतानि न तु तत्र गतानुगतिकसरणिः । अत एव कतिपयान्युदाहरणमात्राणि कीलहॉर्नपुस्तकस्थानि वाचकवृन्दकरकमलयोः समर्प्यन्ते, न तु दोषैकदर्शनजिज्ञासासमुत्थेन प्रौढिवादमात्रेणेत्यतिक्रान्तमपि क्षन्तव्यं सुधीभिः ॥

एकत्र च वास्तविकवार्तिकान्यपि अपरिगणितानि, अन्यत्र तु अवार्तिकान्यपि स्वकपोलकल्पितपाठानुसारेण वार्तिकत्वेन स्वीकृतानीति विपर्ययदर्शनेनानुपेक्षणीयोऽयं विषय इत्येवं विज्ञाप्यन्ते वैय्याकरणाः ।

काश्यामचिरोद्धृतमहाभाष्यपुस्तके बहुषु स्थलेषु नूत्नाः पाठाः प्रकल्पिताः । भाष्यवाक्यान्येव वार्तिकत्वेन परिगणितानि इत्येवं चमत्कृतिर्दुर्नोत्येव संशोधनव्यापृतचेतः । तत्रैकमुदाहरणमुपन्यस्यते विद्वज्जनसेवायाम्—

'तदस्मिन्नधिकमिति दशान्ताड्डः' (५।२।४५) इति सूत्रे—

अधिके समानजातौ, इष्टं शतसहस्रयोः । यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ॥

इत्येवं भाष्येष्टिर्दरीदृश्यते । इयं च भाष्येष्टिर्वार्तिकत्वेन परिगणिता तैर्महाभागैः, तदर्थं च 'यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम' इत्यस्याग्रे 'यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम' इत्येवं कुण्डलनारूपम्पाठं परिकल्प्य टिप्पण्या सूच्यते च 'अयं पाठो नेदानीमुपलभ्यते क्वापि, औचित्यादस्माभिरत्र स्थापितः' इति । भाष्यकाराणामियं शैली समुपलभ्यते यत् वार्तिकव्याख्याने 'इष्टम्' 'इष्यते' इत्यादि पदं प्रायो न क्वापि संप्रयुज्यते । वार्तिकविषये व्यामोहश्च प्राचीनविदुषामपि चक्षुर्गोचरो भवति । यतो भैरवमिश्रैरेतद्वार्तिकमित्युद्घोषितम् ।

तदनुसारेण वार्तिकमेतदिति स्वीकारेऽपि 'अव्ययात्त्यप्' (४।२।१०४) इति सूत्रे 'निशब्दादपि वाच्योऽयं ध्रुवार्थे नियते तथा' इत्येतद्वार्तिकेषु परिगणय्य 'इदमुत्तरार्धं लुप्तं गौडैरुद्धृतम्' इत्येतत् टिप्पण्या सूचितम् । 'निशब्दादपि–' इत्येतद्वार्तिकमेवाप्रामाणिकम् । 'अस्माभिः कल्पितोऽयं पाठः' इत्येतदुल्लिख्यापि 'निनिभ्यामपि वाच्योऽयं ध्रुवार्थे गमने तथा इति पाठान्तरम्' इति सूचितम् । स्वकपोलकल्पितपाठस्यापि पाठान्तरमवलोक्य विस्मयेत वाचकवृन्दानां चेतः । अन्यच्च 'त्यब्नेर्ध्रुवे' इत्येतस्मिन् वार्तिके जाग्रति सति कपोलकल्पितवार्तिकस्य क उपयोग इत्येतत्सुधीभिर्विमर्शनीयम् । एतच्चोदाहरणमात्रम्, अन्यान्यप्यसंख्येयानि तादृश्युदाहरणानि इतस्ततः संदृश्यमानानि विस्मापयिष्यन्तीति नात्रारोपितानि ।

एवं च सहृदयैः सूरिभिरस्मिन् विषये दत्तदृष्टिभिर्भवितव्यमिति विज्ञाप्य प्रकृतमनुसरामः ।

सूत्रग्रन्थस्य वैदिकपठनपाठनशैलीसिद्धत्वेन तत्र भ्रमस्तु विरलप्रचारः क्वचिद्दृश्यते—वैदिकपाठे 'रैवतिकादिभ्यश्छः' 'कौपिञ्जलहास्तिपदादण्' 'आथर्वणिकस्येकलोपश्च' इत्येतानि सूत्राणि पठ्यन्ते । तत्र 'कौपिञ्जलहास्तिपदादण्' इत्येतद्वार्तिकमपि पाठकप्रमादात्सूत्रेषु संबद्धम् । कीलहॉर्नभाष्यपुस्तके च कौपिञ्जलेति साहचर्यात् आथर्वणिकस्येत्येतदपि वार्तिकेष्वेवोपनिबद्धम् । केवलभाष्यदर्शनेन च संदिग्धमप्येतत्कैय्यटादिदर्शनादसंदिग्धमेव । कैय्यटश्च 'अण्वक्तव्य इति' इति प्रतीकमुपादाय 'कौपिञ्जलहास्तिपदादण् इत्यस्यापाणिनीयत्वात्' इत्याह । तेन कौपिञ्जलहास्तिपदेत्यस्य वार्तिकत्वेन वार्तिकात्सूत्रेऽनुवृत्त्यसम्भवात् 'आथर्वणिकस्येकलोपश्च' इत्यत्राण् वक्तव्य इत्यर्थं उक्तः । भाष्यैकप्रमाणेन शेखरकृताऽपि 'नन्वाथर्वणिकेत्यत्राणनुवृत्त्यैव सिद्धेऽण्वक्तव्य इति व्यर्थमत आह—कौपिञ्जलेति । वार्तिकस्थस्य सूत्रेऽनुवृत्तिर्दुर्लभेत्यर्थः' इति कैय्यटव्याख्यानावसर उक्तम् । तेनेदं सूत्रमिति सुस्पष्टमेव । पदमञ्जर्यादावस्य वार्तिकेषु परिगणनं प्रामादिकमेव । सूत्रेषु मतभेदस्य क्वाचित्कत्वेऽपि अन्यान्यप्येतादृशान्युदाहरणानि विस्तरभयात्संक्षिप्यन्ते ।

वार्तिकपदानि सूत्रेऽनुवर्तन्ते न वेत्येतद्विषये 'काम्ये रोरेवेति वाच्यम्' इत्यस्य निदर्शनमेवालम् ॥

ननु इन्द्रचन्द्रापिशलिकाशकृत्स्नभारद्वाजादीनामनेकेषां व्याकरणप्रणेतॄणामुपलब्धौ मुनित्रयस्यैवास्य प्रामाण्यमाश्रयणीयमिति दुराग्रह एव । पाणिनीयव्याकरणे च पाणिनिकात्यायनपतञ्जलीनामेव प्रामाण्यमाश्रीयते न त्वितरेषाम्, तदेतदसांप्रतमिति चेन्न । 'शताच्च ठन्यतावशते' इत्येतस्मिन् सूत्रे कैय्यटेन 'आपिशलकाशकृत्स्नयोस्त्वग्रन्थे–इति

वचनादन्यत्र प्रतिषेधाभावो नियतकालाश्च स्मृतयो व्यवस्था हेतव इति मुनित्रयमतेनाद्यत्वे साध्वसाधुप्रविभागः' इति सुस्पष्टं प्रतिपादितम्। सर्वतन्त्रस्वतन्त्रैर्नागेशभट्टैरपि 'नियतकालाश्चेति' इति प्रतीकमुपादाय 'कलौ पाराशरी स्मृतिरितिवदिति भावः' इति व्याख्यातम्।

एवं च व्याकरणविषये मुनित्रयमेवैतत्सर्वतन्त्रस्वतन्त्रमिति नात्र संशयलेशः॥

प्रस्तुतेऽस्मिन् खण्डे चतुर्थपञ्चमाध्यायौ च सुप्स्त्रीप्रत्ययतद्धितसमासान्तविषयकौ, तत्र चतुर्थाध्यायप्रथमे पादे द्वितीयं सूत्रं सुब्विधायकम्। ततश्च चतुःसप्ततिसूत्राणि स्त्रीप्रत्ययविषयकाणि। तत आरभ्य पञ्चमाध्यायचतुर्थपादस्थसप्तषष्टितमान्तसूत्राणि च तद्धितप्रत्ययविधायकानि। ततश्चापञ्चमाध्यायं समासान्तविधायकानि सूत्राणि—इत्येवं विषयविभागः॥

ननु अस्मिन् शास्त्रे शब्दादिगतं लिङ्गमाश्रीयते। तत्र शब्दस्य गुणत्वे शब्दे लिङ्गस्यानुपपत्तिः स्यात्, पञ्चकं प्रातिपदिकार्थं इति पक्षे च संख्यारूपगुणस्यापि शब्देऽसम्भवापत्तिः, गुणे गुणानङ्गीकारात्। एवं चास्य शास्त्रस्य शब्दसाधुत्वमात्रप्रतिपादकत्वपरत्वेऽपि शास्त्रीयव्यवहाराय यदनुरोधेन पदार्थाः स्वीकरणीयास्तत्किमप्यास्थेयम्, येन निष्कृष्टार्थकरणे न कोऽपि व्याघातः संभाव्येत। तच्च भाष्यादितोऽवगन्तव्यम्। भाष्यकृद्भिश्च 'स्त्रियाम्' इति सूत्रे—'अवश्यञ्च कश्चित् स्वकृतान्त आस्थेयः। कोऽसौ स्वकृतान्तः? संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः' इत्युक्तम्।

व्याख्याकृद्भिरुद्द्योतकारैश्च—'साङ्ख्यमतावष्टम्भेनाह—स्वकृतान्त इति। एतेन सांख्यशास्त्रानुसारित्वं व्याकरणस्येति सूचयति' इत्युक्तम्।

'स्वकृतान्त आस्थेयः' इत्येतद्भाष्यं सांख्यशास्त्रानुसारित्वमस्य शास्त्रस्योपपादयितुं नालमतो भगवान् स्वयमेवाग्रे आह—'कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमान्? गुणानाम्। केषां? शब्दस्पर्शरूपरसगन्धानाम्। सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणास्तत्रावतरतस्त्रयः शब्दः स्पर्शो रूपमिति। रसगन्धौ न सर्वत्र'।

अनेन च सुस्पष्टं प्रतिपादितं साङ्ख्यशास्त्रानुसारित्वमस्य। कथमन्यथा 'सर्वाश्च पुनर्मूर्तय एवमात्मिकाः' इत्येवं वदेद्भगवान् पतञ्जलिः।

कैय्यटोऽपि—'सत्त्वरजस्तमांसि गुणास्तत्परिणामरूपाश्च तदात्मका एव शब्दादयः पञ्च गुणाः, तत्संघातरूपं च घटादि, नतु तद्व्यतिरिक्तमवयविद्रव्यमस्तीति सांख्यानां सिद्धान्तः' इत्याद्याह।

साङ्ख्यसिद्धान्तश्च श्रीनागेशभट्टचरणैरेवमुपपादितः—'सर्वस्य जगतः सुखदुःखमोहान्वयात्तत्कारणत्वेन सत्त्वरजस्तमांसि परिकल्प्यन्ते। त्रिगुणात्मिका च प्रकृतिर्महच्छब्दवाच्यबुद्धिरूपेण परिणमते। महदहङ्कारात्मना। अहङ्कारस्य—गन्धरूपरसस्पर्शशब्दात्मकपञ्चतन्मात्राः, दशेन्द्रियाणि, मनश्च परिणामः। अत एव सत्त्वाद्यात्मकाः शब्दादयश्च पृथिव्याद्यात्मना परिणमन्ते। तत्र गन्धादीनां पञ्चानां पृथिवी, चतुर्णां गन्धादीनामापः, रूपरसस्पर्शानां त्रयाणां तेजः, रसस्पर्शयोर्द्वयोर्वायुः, शब्दस्यैकस्य गगनम्। एवं प्रकृतिः सर्वरूपा पुरुषभोगार्था। पुरुषश्च न प्रकृतिर्नापि विकृतिः, केवलचैतन्यरूपोऽपरिणामी शुद्ध इति साङ्ख्यसिद्धान्तः। प्रकृतिरचेतनाऽपि चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं तत्र दृष्टादिसहकारेणेश्वरेण प्रवर्त्यते इति च सेश्वरसाङ्ख्यसिद्धान्तः'—इति।

भगवान् पतञ्जलिः—'गुणसमूहो द्रव्यम्' इति योगशास्त्रे आह। एवं च सेश्वरसाङ्ख्यसिद्धान्तानुयायिभिरेभिर्वैय्याकरणैरपि गुणसमुदायो द्रव्यं न त्वतिरिक्तं किञ्चिदित्येवावगन्तव्यम्। तथा च शब्दादिगुणसमुदायरूपस्य घटादिशब्दरूपद्रव्यस्य लिङ्गयोगित्वेऽपि न क्षतिरिति वैय्याकरणसिद्धान्तसमुच्चयः॥

वैय्याकरणाश्च लिङ्गबोधकप्रत्ययान्तैः शब्दैः स्त्रीलिङ्गबोधमाहुः। तदर्थं च तैः—टाप्, डाप्, चाप्, ङीप्, ङीन्, ङीष्—इत्याद्याः प्रत्यया आश्रिताः।

ननु किमिदं लिङ्गं लौकिकमलौकिकं वा? किञ्चैतच्छब्दगतमुतार्थगतम्? इत्यादिविचार्यमाणे यदि च लौकिकमाश्रीयेतैतल्लिङ्गम् तदा लोके यथा—इयं स्त्री, अयं पुमान्, इदं नपुंसकम्, इत्याद्यालोच्यैतदध्यवसीयते तद्वत् खट्वादिष्वभावात् खट्वाशब्दात्स्त्रीत्वबोधो न स्यात्। स्याच्च भ्रूकुंसशब्दादपि स्त्रीप्रत्ययः, यतो लोके विज्ञायमानस्य स्त्रीत्वस्य स्तनवस्त्रवैशिष्ट्यस्य च सत्त्वेन लौकिकलिङ्गसत्त्वात्।

लौकिकस्यैवाश्रयणे च खरकुटीः पश्येत्यादौ लौकिकस्य पुंस्त्वस्य सत्त्वेन पुंस्त्वप्रयुक्तकार्यप्रसक्तिः स्यात्।

एवं च लौकिकलिङ्गस्य ग्रहणे खट्वावृक्षादिशब्दानां लिङ्गं न सिध्येत् खरकुट्यादीनां विरुद्धलिङ्गतापत्तिश्चेति वैय्याकरणैः शब्दादिगतमन्यदेव लिङ्गमाश्रितम्, तच्च लोकानुसारादिति—लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य—इत्यादिना भगवानाह॥

हरिरपि—सन्निधाने निमित्तानां किञ्चिदेव प्रवर्तकम् । यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ।
भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः । यद्यद्धर्मेऽङ्गतामेति लिङ्गं तत्तत्प्रचक्षते ॥
इत्याह ।

"तक्षणच्छेदनाद्यनेकनिमित्तानां सन्निधानेऽपि तक्षणमेव तक्षाशब्दस्य प्रवर्तकम् । तथा लिङ्गेषु नियमः । भावतत्त्वविदः शिष्टाः शब्दार्थेषु प्रमाणत्वेन व्यवस्थिताः । तेषां प्रयोगे यद्यल्लिङ्गं धर्मेऽङ्गतामेति तत्तल्लिङ्गं प्रचक्षते"—इत्यादिव्याख्यानेन नागेशोऽप्येतदनुसंधत्ते । एवं च लोकाश्रयं लिङ्गं शब्दनियतमित्यतो दाराशब्दादौ पुंस्त्वस्योपपत्तिः, खट्वाघटाद्यचेतनादिषु स्त्रीत्वपुंस्त्वस्यान्वयः, तटादिशब्दादिषु चानेकलिङ्गसमवायोऽप्युपपद्यते ॥

तदेतत्स्त्रीत्वं किं प्रत्ययार्थं उत प्रकृत्यर्थं इत्यादिविचारश्च भगवता 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे प्रत्ययः' इत्यादिना सुस्पष्टं प्रतिपादित इति तत एवावधार्यताम् ॥

चतुर्थाध्याये पूर्वं प्रतिपादिताः सुप्प्रत्ययाः संख्यादीनां वाचका अपि तदनन्तरं प्रतिपादिताः स्त्रीप्रत्यया द्योतका एव न तु वाचकाः । स्त्रीप्रत्ययानां वाचकत्वे बहवो दोषा भाष्यादावुक्तास्तट्टीकादौ च स्पष्टीकृता इति नात्र विविच्यन्ते । पञ्चकं प्रातिपदिकार्थ इति पक्षे संख्यायाः कारकस्य च प्रातिपदिकार्थत्वेन सुबर्थत्वाभावात्सुपामपि द्योतकत्वमेवेति न प्रसरभङ्गः ।

सुपां द्योतकत्वमेवेति 'क्रीतात्करणपूर्वात्' इति सूत्रस्थभाष्याज्ज्ञायते । तत्र हि—'करणपूर्वादिति किमर्थम् ? गवा क्रीता, अश्वेन क्रीता । करणपूर्वादित्युच्यमानेऽप्यत्र प्राप्नोति, एषोऽपि क्रीतशब्दः करणपूर्वः । विभक्त्या व्यवहितत्वान्न भविष्यति' इत्युक्तम् । करणतृतीयायाः करणवाचकत्वे 'विभक्त्या व्यवहितत्वान्न भविष्यति' इति कथनमयुक्तं स्यात्, अतश्च सुपां द्योतकत्वमेवेति राद्धान्तः ॥

प्रत्ययाश्च तावद्द्विविधाः—धातूत्तरं जायमानाः, प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नोद्देश्यकाश्च । तत्र धातूत्तरं जायमानाः प्रत्ययास्तृतीयेऽध्याये एव व्यवस्थिताः, ततश्च प्रातिपदिकत्वव्याप्यधर्मावच्छिन्नोद्देश्यकाः प्रत्यया अनयोरध्याययोरुक्ताः । धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यकप्रत्ययानां प्रागुपन्यासस्तु प्रातिपदिकेष्वपि धातूनामेव निगूहनात्तेषामभ्यर्हितत्वात् प्रातिपदिकत्वसंपादकत्वाच्च भगवता क्रियत इति नासमञ्जसं किञ्चित् ।

ननु संख्याकारकबोधकाः स्त्रीप्रत्ययान्तेभ्यो विधीयमानाश्च सुप्प्रत्ययाः स्त्रीप्रत्ययानन्तरमेव वक्तव्या न तु ततः पूर्वं, स्वार्थादीनां क्रमेणैवोपस्थितेः—इति कथमत्र सुपां प्रागुपन्यासः संगच्छेतेति चेन्न । स्त्रीप्रत्ययप्रकरणानन्तरं सुपां कथने तेषां तद्धितसंज्ञा स्यात्, तद्धिताधिकारस्य 'यूनस्तिः' इति सूत्रप्रतिपादिततिप्रत्ययात् प्रागेवोपलब्धेः । तद्धिताधिकाराद्प्राक्कथने तु तेषां स्त्रीत्वमापद्येतेति पूर्वमुक्ताः सुप्प्रत्ययाः ।

अपि च स्वौजसमौडिति सामान्यसूत्रेण विधीयमानाः प्रातिपदिकमात्रोद्देश्यकाः प्रत्ययाः 'ङ्याप्प्रातिपदिकात्' इत्यधिकारप्रणयनानन्तरं द्राक् स्मृतिपथमारूढाः—इति अन्तरङ्गत्वादेव पूर्वमुक्ताः । स्त्रीप्रत्ययानां तद्धितानां च प्रातिपदिकरूपार्थापेक्षयाऽधिकार्थापेक्षासत्त्वेन सुपामन्तरङ्गत्वमिति नानिष्टं किञ्चित् ।

ननु अष्टाङ्गयोगवदष्टाध्यायात्मिकेयमष्टाध्यायी द्वात्रिंशत्पादैः प्रक्रमतीति न न्यूनाऽस्या गतिः । तथापि अध्यायानां पादानां च येयं मर्यादा समुद्भासते सा किं अशोकवनिकान्यायेन, कारणनियन्त्रिता वा—इत्याद्यनेकविधविचारश्च अङ्गाधिकारप्रस्तावनायां विस्तरशः प्रस्तूयेतेति विस्तरभिया नात्र विचारयामः किन्तु प्रस्तुते चतुर्थपञ्चमाध्यायद्वये तादृशीं सङ्गतिं ब्रूमो येन पादाध्यायसमाप्तिर्न स्वेच्छया भगवता क्रियते किन्तु कारणनियन्त्रितैव सेति ।

धातुप्रत्ययप्रकरणस्यावसितत्वेन तृतीयाध्यायः कथं समाप्त इति नात्र सुधीनां कारणजिज्ञासा स्यात् । तृतीयाध्यायस्थप्रकरणापेक्षया प्रातिपदिकाधिकारप्रकरणस्य भिन्नत्वेन पृथगध्यायोऽयमारब्ध इति नैतच्चित्रम्, परं च यथा धातुप्रत्यया एकस्मिन्नेवाध्याये उक्तास्तथेमे प्रातिपदिकप्रत्यया अपि चतुर्थाध्याये एव निरूपणीयाः किमर्थमयमध्यायभेद आरब्ध इत्यादिचिन्ताजर्जरचेतसामत्रभवतामिदमुत्तरम्—यत् स्त्रीप्रत्ययान्त एव प्रथमः पादः समापनीयो यदि तद्धिताधिकारः स्त्रीप्रत्ययेषु न स्यात् । स च स्त्रीप्रत्ययेष्वप्यनुवर्तेत इति न पादभेदः कृतः । ततश्चापत्याधिकारान्तः प्रथमः पादः । 'वृद्धाच्छः' इति छप्रत्ययान्तो द्वितीयः पादः । प्राग्दीव्यतीयान्तस्तृतीयः पादः । प्राग्घितीयान्तश्चतुर्थः पादः । इत्थं चतुर्थाध्यायस्य चत्वारः पादाः प्रकल्पिताः । तत्र प्रायः प्रकरणभेदे पादसमाप्तिर्दृश्यते । अध्यायस्य च धर्मार्थकाममोक्षवच्चत्वारः पादाः प्रकल्पिताः, तादृक्संकेतभेदो मा भूदिति पादबाहुल्यं न स्वीकृतं भगवतेत्यपि वक्तुं शक्यम् ।

अपि च अर्थमवधीकृत्य विधीयमानः प्रत्ययो द्वितीयतृतीयचतुर्थपादादौ न दृश्यते तादृशश्च यत्र पादादौ दृश्यते—'प्राक् क्रीताच्छः' इत्यत्र, तत्राध्यायभेदः कृत इत्यपि न विरुद्धम् ।

अन्यच्च मुख्यं तद्धितप्रकरणं चतुर्थाध्याये प्रथममुक्त्वा तस्य शेषभूतं स्वार्थिकसमासान्तादिप्रत्ययबहुलीभूतमध्यायं पृथगेवाचार्यः कृतवानित्यध्यायभेदेऽप्येतत्सामञ्जस्यं स्यादित्यलमतिविचारेण ।

अस्मिन् भागे केषुचित् कठिनस्थलेषु कतिपयाष्टिप्पण्यो दत्तास्ता नास्मत्पाण्डित्यप्रदर्शनार्थं विरचिताः । अभ्यासकाले संपादिताः केवलं जिज्ञासूनां ग्रन्थतत्त्वावगाहने साहाय्यभूता भविष्यन्तीत्येतद्धियैवात्रारोपिता इति क्वचित्स्खलनमपि विदुषांवरैः क्षन्तव्यमित्यभ्यर्थयामः । चतुर्थाध्याये सूत्रवार्तिकयोः क्रमाङ्कलेखनव्यत्यासोऽनवधानतया क्वचिद्दृश्यते ॥

सोद्द्योतप्रदीपभाष्यप्रकाशनं च बहुतरवित्तकष्टादिसाध्यमपि निर्णयसागराधिपतिभिः प्रारब्धमिति ते न किमिव धन्यवादार्हाः । मन्यामहे तावत् निर्णयसागराधिपतये सपरिवाराय समन्त्रिणे च स्वस्ति–इति निखिलोऽपि पण्डितसमाजः सुभृशमविरतं चाशास्ते–इति । यैर्मुद्रणालयाधिपतिभिः सुश्लिष्टाक्षरविन्याससुशोभीनि विद्वदधिगततत्त्वादशुद्धिरहितानि दुर्लभतराणि पुस्तकान्यल्पेनैव मूल्येन प्रत्यहं प्रदीयन्ते तैर्महाभाष्यस्यायं चतुर्थो भागो विद्वत्करकमलेष्विदानीं समर्प्यत इति नैतच्चित्रम् ॥

उद्द्योतप्रदीपसमुद्भासितमहाभाष्यप्रकाशनस्यायं समुद्योगः प्रथमोऽपि नाद्वितीयतां सांप्रतमुपादत्ते । यतः काश्यां पण्डितवरश्रीगुरुप्रसादशास्त्रिभिरचिरेणैव कालेन सोद्द्योतं सप्रदीपं सम्पूर्णमपि महाभाष्यं मुद्रितं नितरां विराजते । अभिनन्दामो वयं द्रौपदीस्वयंवरे ब्राह्मणसमाजादुत्तिष्ठन्तमर्जुनमिव राजस्थानसंस्कृतमहाविद्यालयाध्यक्षमपि । नात्र संशयलेशोऽपि यच्चमत्कृतिरिवैतत्प्रकाशनम्–इति । नूनं समयातिलाघवाद्विद्वद्भिर्यत्र तत्र दृश्यमाना दोषा अध्यसंधेया एव । अयं चात्रत्यो दोषोऽनुपेक्षणीय इवावभासते–'तद्युक्तात्कर्मणोऽण्' इति सूत्रस्थ 'अण् प्रकरणे कुलाल–' इति वार्तिके **'लुप्तोऽयं पाठः सम्प्रति गौडैरुद्धृतः'** इत्येतादृग्वचनं प्रमाणमनुपन्यसद्भिर्गौडैर्यत्र तत्र जोघुष्यमाणं नातीव रमणीयमिति सुधीभिर्विचारणीयम् । 'गौडैरुद्धृतम्' इत्यर्थकानि वचनान्यपरिमितानीति सुभृशं सन्दूयते चेतः । लेखकप्रमादात्पाठभेदाः समुपजायन्ते, तत्र यदि प्रकाशकैरपि पाठभेदः कृतः क्षते क्षारमिवासह्यमिति प्रकाशनविदां व्युत्पत्तिरित्यलं परदोषाविष्करणेन ॥

अथात्रास्मिन् समुद्योगे क-संज्ञकं राजापूरपाठशालातो लब्धं भाष्यकैय्यटपुस्तकम् । पुस्तकमेतत्प्राचीनमपि सुश्लिष्टाक्षरमपि नातीवशुद्धम् । ख-संज्ञकं अस्मन्मित्रवरैर्भट्टकुलावतंसैर्विद्वदग्रेसरैः श्रीगोपालभट्टचरणैर्दत्तमुद्द्योतपुस्तकम् । विद्वत्कुलक्रमागतमेतत्प्रामाणिकमित्यत्र न सन्देहः । अस्मद्दुर्भाग्यवशात्तत्रभवन्तो भट्टचरणा विद्वन्मण्डलीदर्शनार्थमिव कैलासं गता नेदानीमिमं प्रयत्नमवलोकयन्ति । ग-संज्ञकं उद्द्योतपुस्तकमसम्पूर्णमपि अतीवशुद्धम्, क्लिष्टाक्षरमपि विद्वद्भिः कृतपरिचयं श्रेष्ठिमहोदयैर्गुर्जरमुद्रणयन्त्रालयाधिपतिभिर्दत्तम् । घ-संज्ञकं उद्द्योतपुस्तकं राजापूरपाठशालातो लब्धमशुद्धिबहुलम् । ङ-संज्ञकं भाष्यकैय्यटोद्द्योतसहितं गुर्जरदेशतोऽत्रत्यैर्विद्वदग्रेसरैः श्रीमोतीरामशास्त्रिभिरानीतम् । पुस्तकमेतत्सुश्लिष्टाक्षरमशुद्धिरहितं च दृश्यते, नैतत् सम्पूर्णं । च-संज्ञकं काश्यां मुद्रितं चौखम्भायन्त्रालयस्थं भाष्यकैय्यटपुस्तकम् । छ-संज्ञकं कीलहॉर्नमुद्रितं महाभाष्यम् । ज-संज्ञकं नागपुरप्रान्ते निवसद्भिर्विदुषांवरैः श्रीकृष्णशास्त्रि घुले सुगृहीतनामधेयैः स्वकुलभूषणमिव प्रयत्नत उपहितम् । पुस्तकं चैतन्निःसन्दिग्धं सुश्लिष्टाक्षरं भ्रान्तिरहितं च प्रकाशनविधौ तरणिरिवातितरां विराजते । झ-संज्ञकं पं. गुरुप्रसादशास्त्रिभिर्मुद्रितम् । ञ-संज्ञकं काश्यां मुद्रणयन्त्रालये मुद्रितं प्राचीनं पुस्तकम् । एतानि च पुस्तकानि पाठभेदादौ संज्ञापितानि । अन्यानि च त्रुटितानि कतिपयपत्रमात्राणि बहुविधानि पुस्तकानि संनिहितान्यपि न निर्दिष्टानि । यैर्महाभागैः पुस्तकानि ददद्भिरुपकृता वयं तेषां धन्यवाददानमपि नैतत्किञ्चित् । यैश्च विद्वद्भिर्निर्णयसागरास्थानपण्डितैः सुगृहीतनामधेयैः साधलेकुलावतंसैः **श्रीबालकृष्णशास्त्रिभिः, सोमणमहोदयैः,** आचार्योपाभिधश्रीनारायणशास्त्रिभिः प्रधानपण्डितैश्च प्रतिपदमनुसन्धानमाचरद्भिर्यैरुपकृता वयं तत्तैरेव कर्तुं शक्यमित्येव निर्दिश्यते ।

महाभाष्यसंशोधनाख्ये दुरूहेऽपरिचिते चास्मिन् कर्मणि प्रवर्तयितारो विल्सनूमहाविद्यालये प्रधानाध्यापकपदमलङ्कुर्वन्तो वेलणकरोपाह्वहरिशर्माणः । तैश्च पुस्तकसंपादनाद्यनेकविधसाहाय्यदानेन उपकृता वयमत्र पराक्रान्ता इति कथं न ते धन्यवादार्हाः ।

टङ्कसंयोजकहिराजीप्रभृतीनां कौशलं शीघ्रकारित्वं च नास्मिन्नवसरेऽनुपेक्षणीयम् । पुस्तके चास्मिन्नष्टविधाष्टङ्का व्यवह्रियन्ते । तेषां संकरप्रसङ्गश्च तदीयहस्तलाघवेनैव विनिवारित इत्येतन्निर्विवादम् ॥

भागेऽस्मिन्नन्ते अभ्याससौलभ्यायाध्यायद्वयगतसूत्रवार्तिकपाठः प्रतिनिवेशितस्तथा चादौ सूत्रसूचिरपि सन्निवेशिता । अनल्पमतिभिरुपक्रमणीयेऽस्मिन् कर्मणि यद्धाष्ट्यादस्माभिरुपक्रान्तं तदुदाराशयाः सफलयन्तु तत्रभवन्तो विद्वच्चरणाः ।

यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे नहि । यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्नहि ॥ इति

श्रीमधुसूदनसरस्वतीनिष्यन्दैरत्रत्यसत्यतत्त्वप्रथनेन विद्वदनुग्रहं संप्रार्थयामो वयं

नागपञ्चमी
शाके १८६४

काशीविश्वविद्यालयविनेयाः
म. म. श्रीजयदेवमिश्रचरणान्तेवासिनः
श्रीभार्गवशास्त्रिणः



# चतुर्थपञ्चमाध्यायभाष्यव्याख्यातसूत्रसूचिः ।

भाष्यव्याख्यातसूत्रसूचिः समाप्ता ।



॥ श्रीः ॥

# श्रीमद्भगवत्पतञ्जलिमुनिविरचितं

# महाभाष्यम् ।

## तद्व्याख्यानभूतः कैयटविरचितः प्रदीपः,

## तद्व्याख्यानभूतो नागेशभट्टविरचित उद्द्योतश्च प्रारभ्यते ।

## चतुर्थाध्यायस्य प्रथमपादस्य प्रथममाह्निकम् ।

### [ विधिप्रकरणम् ]

( ६१८ अधिकारसूत्रम् ॥ ४ । १ । १ अ. १ सूत्रम् ॥ )

### १२७५ ङ्याप्प्रातिपदिकात् ॥ ४।१।१ ॥

( अधिकारप्रयोजनाधिकरणम् )

( आक्षेपभाष्यम् )

**ङ्याप्प्रातिपदिकग्रहणं किमर्थम् ।**

( प्रदीपः ) **श्रीगणेशाय नमः ॥ ङ्याप्प्रातिपदिकात् ॥ १ ॥ ङ्याप्प्रातिपदिकग्रहणं किमर्थमिति ।** परश्चेति व[1]चनात्परे भवन्तो वक्ष्यमाणाः प्रत्ययाः प्रत्ययार्थसंबन्धयोग्यार्[2]थाभिधायिनीं ङ्याप्[3]प्रातिपदिकलक्षणामेव प्रकृतिमाक्षेप्स्यन्ति । सति च पञ्चमीनिर्देशे परश्चेति प्रत्याख्यातम्, असति त्विह पञ्चमीनिर्देशे वक्ष्यमाणप्रत्ययपरत्वप्रति[4]पादनपरत्वान्नास्ति प्रत्याख्यानम् । सति वा प्र[5]त्याख्याने प्रत्ययद्योत्यवाच्यार्थसंबन्ध्यर्थाभिधायिप्रकृत्याक्षेपः सिद्ध इति प्रश्नः ॥

( उद्द्योतः ) **श्रीगणेशाय नमः** । ङ्याप्रा । नन्वेतदभावे केवलानामेव स्वादीनां प्रयोगः स्यादत आह—**परश्चेतीति** ॥ नन्वेवं धात्वादेरपि स्युरत आह—**प्रत्ययार्थेति** । स च कर्मादिरपत्यादिश्च, तत्संबंधयोग्यार्थस्याभिधायिनीमित्यर्थः ॥ नतु प्रत्याख्यातसूत्रमादायैतदाक्षेपो न युक्तोऽत आह—**सति चेति** । एतदादि पंचमीनिर्देशैस्तस्मादिति परिभाषया परत्वलाभेन हि तत्प्रत्याख्यातमिति भावः ॥ **प्रतिपादनपरत्वादिति** । परश्चेति सूत्रस्येति शेषः ॥ ननु वचनान्तराश्रयेण वचनान्तराक्षेपो न युक्तः, अत आह—**सति चेति** । द्योत्यवाच्यार्थयोः संबंधी योऽर्थ इत्यर्थः ॥ **प्रकृत्याक्षेप इति** । नित्[6]याकांक्षत्वादित्यर्थः । प्र[7]त्याययति प्रकृत्या सह स्वार्थमिति प्रत्यय इति भावः ॥

( समाधानभाष्यम् )

**ङ्याप्प्रातिपदिकात्स्वादयो यथा स्युः । धातोर्मा भूवन्निति ॥**

( प्रदीपः ) **धातोर्मा भूवन्निति** । असतीह प्रकृतिनिर्देशे धात्वधिकाराद्धातोरेव स्युः । वासरूपविधिश्च स्यात् ॥ अथ वा प्रत्ययपरत्वेन प्रकृतिमात्राक्षेपे धातोरपि स्युः । तत्र यथा कर्तृकर्मणोर्[8]लकार उत्पद्यते, साधनाश्रयसंख्यायां च तिङामुत्पत्तिः, कर्त्रादिषु तृच्तव्यादीनां च, तथा स्वादयोपि स्युरिति भावः ॥

( उद्द्योतः ) **असतीहेति** । सजातीयाधिकारान्तरादर्शनेन पूर्वाधिकारनिवृत्तिरयुक्तेत्यर्थः ॥ नन्वेवं विशेषविहिततव्यादयो व्यर्थास्युरत आह—**वासरूपेति** ॥ ननु व्याख्यानादेव पूर्वाधिकारनिवृत्तिः सिद्धेत्यत आह—**अथवेति** ॥ ननु पदान्तरवाच्यक्रियापेक्षकारकबोधकता स्वादीनां दृष्टेति धातोर्नोत्पत्तिः । ततो विधीयमानानां तथात्वासंभवादत आह—**तत्र यथेति** । प्रकृतिमात्राक्षेपे यथा प्रकृ[9]त्यर्थापेक्षकर्तृकर्मादावभिधेये लादय उत्पद्यन्ते, तथा स्वादयो-

---

१ प्रत्ययः, परश्चेत्यधिकारादित्यर्थः ॥

२ सम्बन्धयोग्याभिधायिनीमिति क. पु. ।

३ ङ्याप्प्रातिपदिकादित्यस्याभावे परश्चेत्यनेन प्रत्ययः परे भवन्तीति नियमेपि धात्वादिभ्योऽनर्थकाद्वा भविष्यन्तीत्याशङ्कायां प्रत्ययार्थेन सह सम्बद्धुं योग्यमर्थमभिदधती प्रकृतिरपेक्ष्येत, अन्यथा प्रत्ययार्थान्वयो न स्यादित्यर्थः ॥

४ परश्चेति सूत्रस्य सार्थक्येन न तस्य प्रत्याख्यानमित्यर्थः ॥

५ परश्चेत्यस्य प्रत्याख्यानेऽपि प्रत्ययानां द्योत्यो वाच्यो वा योऽर्थस्तत्सम्बन्ध्यर्थस्याभिधायिनीं प्रकृतिमाक्षेप्स्यन्ति प्रत्ययाः । एवं च तत्प्रत्याख्यानेपि ङ्याप्प्रातिपदिकादित्यपि न कार्यमित्यर्थः ॥

६ द्योत्यानां स्त्रीप्रत्ययटाबादीनां वाच्यानामपत्याद्यर्थकाणादीनाम्प्रकृत्यंशे नित्यसाकांक्षतया प्रत्ययार्थानुकूलार्थवत्प्रकृत्याक्षेप इति भावः ॥

७ प्रत्ययानां नित्यसाकाङ्क्षत्वमेव दर्शयति—**प्रत्याययतीति** ॥

८ धातूत्तरविहितप्रत्ययानां कारकबोधकत्वं नास्तीत्यन्वयव्यतिरेकाभ्यां तथा सिद्धे कारकबोधने प्रसिद्धानां स्वादीनामेषां न धातूत्तरप्राप्तिरिति भावः ॥

९ ग. घ. पुस्तकयोः 'यथा कृत्यर्थापेक्ष' इति पाठः । प्रत्ययानाम्प्रकृतिमात्राक्षेपे धात्वर्थकृतिरूपार्थापेक्षकर्तृकर्मादावभिधेय इत्यर्थः ॥

ऽपि स्युरिति योजना । प्रातिपदिकाद्विधौ तु प्रकृत्यर्थापेक्षकर्माद्यसंभवादगत्या तथा स्वीकार इति भावः ॥ नन्वेवमपि धात्वर्थस्य संख्याऽभावात्कथमुत्पत्तिरत आह—**साधनाश्रयेति** । यथा तदाश्रयेण लब्धसंख्यया तिङः, तथा स्वादयोऽपि स्युरिति भावः ॥ ननु स्वादीनां तृजादीनां च बाध्यबाधकभावोऽयुक्तोऽत आह—**कर्त्रादिष्विति** । यथा ण्वुल्तृचोः कर्तृतिङा, यथा वा तव्यादीनां कर्मतिङा पर्यायस्तथा स्वादीनामपि तैः स्यादिति भावः । धातोरित्यननुवृत्तावपि वासरूप इति संबध्यत एवेत्यभिमानः ॥

( प्रयोजननिरासभाष्यम् )

**नैतदस्ति प्रयोजनम् । धातोस्तव्यदादयो विधीयन्ते, तेऽपवादत्वाद्बाधका भविष्यन्ति ॥**

**( प्रदीपः ) धातोरिति** । धातुग्रहणं निवृत्तम् । तत्र प्रकृतिमात्राद्विधीयमानाः स्वादय उत्सर्गाः, तव्यदादयस्तु प्रकृतिविशेषाश्रयेण विधानादपवादा इति भावः ॥

**( उद्योतः )** सिद्धान्ताशयमाह—**निवृत्तमिति** । अत एव तदधिकारसंबद्धवासरूपविधिरपि नेति भावः ॥

( प्रयोजनपरभाष्यम् )

**तिङन्तात्तर्हि मा भूवन्निति ॥**

**( प्रदीपः ) तिङन्तादिति** । कर्मादयः स्वादीनामर्थाः । तत्र यथा पुत्रीयशब्दादन्तर्भूतकर्मक्रियावाचिनः कर्तरि लकार उत्पद्यते, तथा पचतिशब्दात्कर्तृविशिष्टक्रियावाचिनः कर्मादिषु द्वितीयादयः स्युः । यद्वैकत्वादिष्वपि विभक्त्यर्थेषु यथैको द्वौ बहव इति प्रकृत्यभिहितेष्वपि भवत्येवं तिङाऽभिहितेष्वपि स्युरिति भावः ॥

**( उद्योतः )** ननु कर्मादौ विधीयमानाः स्वादयः कर्माद्यभिधायिनस्तिङन्तात् कर्मादेरुक्तत्वेन न भविष्यन्तीत्यत आह—**कर्मादय इति** । अन्तर्भूतकर्मेति बहुव्रीहिः । ततः क्रियापदेन कर्मधारयः ॥

नन्वेवमेकत्वादिषु विभक्त्यर्थेषु संख्याया उक्तत्वान्न स्युरत आह—**यद्वेति** । अत्र पक्षे प्रथमाऽऽपत्तिर्बोध्या ॥

( प्रयोजनपरिहारभाष्यम् )

**एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । ते चात्र तिङोक्ता एकत्वादय इति कृत्वा, उक्तार्थत्वान्न भविष्यन्ति ॥**

**( प्रदीपः ) एकत्वादिष्विति** । संख्या विभक्त्यर्थः, सा च तिङैवाभिहितेत्युक्तार्थत्वात् स्वादयो न भवन्ति, एकादिभ्यस्तु वचनग्रहणाद्यत्नात्संख्यावाचिभ्योऽपि प्रथमा भवति । न च पचतिशब्दात्कर्त्रभिधायिनः कर्मादिषु द्वितीयादीनामुत्पत्तिर्युक्ता । न ह्येकक्रियापेक्षभिन्नसाधनाभिधायिनोरेकस्मिन् पदेऽनुसहायभावो युक्तः । पुत्रीयशब्दस्तु जीवत्यादिधातुवद्विशिष्टक्रियावाचीति ततः कर्तरि लकारोत्पत्तिरविरुद्धा । अनभिहिताधिकाराच्च तिङभिहिते साधने स्वाद्यनुत्पत्तिः ॥

**( उद्योतः ) वचनग्रहणादिति** । प्रवृत्तिनिमित्तभूता हि संख्या वचनशब्देनोच्यत इति नायं यत्नः प्रकृत इति भावः ॥ प्रकारान्तरेणाप्यप्राप्तिमुपपादयति—**न चेति** । एकप्रकृत्यर्थक्रियाया एकपदे प्रत्ययद्वयवाच्येन भिन्नेन साधनद्वयेन संबंधो न युक्तः । शाब्दे व्यवहारे तथा क्वचिददर्शनादिति भावः ॥ **भिन्नसाधनाभिधायिनोरिति** । प्रत्यययोरिति शेषः । एकक्रियापेक्षः—एकक्रियायामनेकसाधनान्वयबोधजननायापेक्षणीयं सहायत्वं तयोर्न युक्तमित्यन्वयः ॥ ननु पुत्रीयतीत्यादावेकस्या इच्छायाः शब्दद्वयवाच्येन कर्मणा कर्त्रा च संबंधो दृष्ट इत्यत आह—**पुत्रीयेति** ॥ नन्वेवं [11]तिङ्वाच्य एव साधने स्वादयः स्युरत आह—**अनभिहितेति** । अत्रेदं चिन्त्यम्—पचतीति पश्यतेत्यादौ क्रियाया अपि कर्मत्वाद्भाष्योक्त एव समाधिर्युक्त इति । न [13]चौत्सर्गिकमेकवचनं युक्तम् । न केवला प्रकृतिरिति निषेधेन यत्र केवलप्रकृतिप्रयोगो न प्राप्तस्तत्र

१ ङ्याप्प्रातिपदिकादिति सत्त्वे तु प्रकृतीनां निश्चितत्वेन तासां कर्माद्यपेक्षाभावाच्च स्वादीनां कारकाद्यर्थबोधकतेति भावः ॥

२ साधनाश्रयाल्लब्धसंख्यायां यथा तिङो भवन्ति तथा साधनाश्रयलब्धसंख्यायां सुबादयोऽपीति भावः ॥

३ यथा ण्वुल् तृचोः कर्मतिङा पर्यायो भवति तथा स्वादीनामपि तिङादिप्रत्ययैः पर्यायः स्यादिति भावः ॥

४ व्याख्यानादिना धातोरित्यस्य स्वादिप्रत्ययविधायकेष्वननुवृत्तावपि वासरूपविधिस्याद्येन सुबादीनां तिङादिभिः पर्यायो भवेदित्यभिमान इति भावः ॥

५ ङ्याप्प्रातिपदिकादित्यस्याभावे प्रत्यय इति महासंज्ञया प्रकृति माक्षेपेण प्रकृतिमात्राद्विधीयमानाः प्रत्यया उत्सर्गास्तेषां च प्रकृतिविशेषाद्विधीयमानैस्तव्यदादिभिर्बाध इति भावः ॥

६ एवं चात्र वासरूपविधेरभावेन धातुभ्यः सुपां प्राप्तिरेव नेति न दोष इत्याशयः ॥

७ ननु पुत्रीयशब्दादन्तर्भूतकर्मक्रियावाचिनः कर्तृप्रत्ययस्योत्पत्तिः साधयितुं शक्या, यतः शाब्दबोधे प्रत्ययार्थस्य क्यजर्थस्येच्छाऽनुकूलव्यापाररूपस्य विशेष्यत्वेन तत्र पुत्रकर्मत्वस्यान्वयो भवितुमर्हति, इच्छाऽनुकूलव्यापारे च तिङर्थस्य कर्तृरूपार्थस्यान्वय इति न कोऽपि बाधः । पचतिपदात्कर्मार्थकप्रत्यये तु विभक्त्यर्थकर्मादावभेदेन सम्बन्धेन प्रकृत्यर्थस्यान्वयानुरोधात्कर्तृवृत्तिविक्लित्त्यनुकूलव्यापाराभिन्नकर्मेत्यर्थः स्वीकार्यः स्यात्, तच्चानुपपन्नमित्यत आह—यद्वैकत्वादिष्विति॥

८ ननु तिङन्तपदैरेकत्वादीनामुक्तत्वेन तेभ्य एकत्वादिवाचकानां सुबादीनामनुत्पत्तिः । द्वित्ववाचकादेकत्ववाचकस्य प्राप्तिस्त्वनन्वयान्न स्यादत आह—नन्वेवमिति ॥

९ तिङन्तात्सुबिति पक्षे न तेभ्यः सर्वेषां सुपामुत्पत्तिः, किन्तु कर्माद्यर्थानभिधायिनी प्रथमैवेति भावः । एवं च प्रथमाया अपि तिङन्तादुत्पत्तिर्मा भूदित्येतदर्थम्प्रातिपदिकग्रहणमावश्यकमेव ॥

१० ननु वचनग्रहणाद्यत्नादेकादिशब्देभ्यो यथा प्रथमा भवति तथैकत्वादिवाचिभ्यः पचत्यादिशब्देभ्योपि स्यादित्यत आह—प्रवृत्तिनिमित्तेति । यत्र प्रवृत्तिनिमित्तभूता संख्या वाच्या स्यात्तेभ्यो वचनग्रहणेन स्वादयो विधीयन्ते, पचत्यादौ तु न तथेति न प्राप्तिरिति भावः ॥

११ एकादिशब्देभ्यो यथोक्तेऽप्येकत्वे स्वादयो भवन्ति तथा तिङ्वाच्यसाधने कर्तृकर्मादौ तत्तदर्थकाः स्वादयो भविष्यन्तीति भावः ॥

१२ ननु पश्य मृगो धावतीत्यादौ दर्शनक्रियायाः कर्मत्वं भवतिक्रियायाः पचतिक्रियाः कर्त्र्यो भवन्तीति भाष्यादविरुद्धमिति ततः कर्मादिबोधकानां स्वादीनामुत्पत्तिः सुकरेत्यत आह—पचतीति । एवं च कर्मत्वादिबोधकानां स्वादीनामनन्वयान्न तत उत्पत्तिरिति समाधिर्न युक्त इति भावः ॥

१३ नन्वेकवचनमुत्सर्गतः करिष्यत इति न्यायादुक्तेऽप्येकत्वे स्वादयो भविष्यन्तीत्यत आह—न चौत्सर्गिकमिति ॥

तत्प्रवृत्तावपि[1], अन्यत्र तत्प्रवृत्तौ मानाभावात् । प्रकृतित्वं च प्रत्ययविधानुद्देश्यतावच्छेदकावच्छिन्नत्वम् । एतदधिकाराभावे हि प्रत्ययान्तरानभिहितसंख्याकारकत्वमुद्देश्यतावच्छेदकम्, न चेदं तदवच्छिन्नमिति नैतद्विषये[2] तन्निषेधप्रवृत्तिः । अव्ययेभ्यस्त्वव्ययादाप्सुप इति ज्ञापकात्कस्यचिदुत्पत्तावावश्यिकायामौत्सर्गिकं तदेव भवति । पचन्तिरूपमित्यादावपि पूर्वोत्तर[3]तद्धितानां सुप्प्रकृतित्वनिर्णयेनास्यापि प्रकृतित्वान्न केवलेत्यादिनिषेधप्रवृत्तिः सूपपादा । तृतीयाद्येकवचनं त्वत्रानभिधानान्नेति भावः । अत एव सुप्तिङन्तमिति[4] सूत्रे तिङ्ग्रहणं चरितार्थम् ॥

**( प्रयोजनपरभाष्यम् )**

**टाबादयस्तर्हि तिङन्तान्मा भूवन्निति ॥**

**( प्रदीपः ) टाबादय इति ।** यथा साधनाश्रयसंख्याभिधायित्वं तिङां तथा तद्गतलिङ्गाभिधायित्वमपि स्यादिति भावः ॥

**( उद्योतः )** ननु क्रियाया लिङ्गाभावोऽत आह—**यथेति ॥**

**( प्रयोजननिरासभाष्यम् )**

**स्त्रियां टाबादयो विधीयन्ते । न च तिङन्तस्य स्त्रीत्वेन योगोऽस्ति ॥**

**( प्रदीपः ) न च तिङन्तस्येति ।** क्रियाप्रधानत्वादा[5]ख्यातस्य क्रियायाश्चासत्त्वभूतत्वात्सत्त्वधर्मेण लिङ्गेनायोगः । न च द्रव्यधर्मलिङ्गग्रहणयोग्यत्वनियतत्वाच्छब्दशक्तीनामिति भावः । तदुक्तं हरिणा—

**एकत्वेऽपि क्रियाख्याते[6] साधनाश्रयसंख्यया ।**
**भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः ॥ १ ॥**
**तस्मादुपस्थिते[7]ऽप्यर्थे कस्यचित्प्रतिबध्यते ।**
**शब्दस्य शक्तिर्न त्वेष शास्त्रेऽन्वाख्यायते विधिः ॥२॥**

इति ॥

शोभनं[8] पचतीत्यादावुक्तक्रियाविशेषणस्य नपुंसकत्वम्, न तु क्रियायाः । पचतिरूपमित्यादौ तु रूपबाद्यन्तार्थस्य क्रियायाः शब्दशक्तिस्वाभाव्यादेव नपुंसकत्वम् । नानारूपा हि शब्दानां शक्तयो न सामान्यतो दृष्टेनानुमानेन व्यवस्थापयितुं शक्यन्ते । अनेनैव न्यायेन धातोष्टाबाद्यनुत्पत्तिर्व्याख्येया ॥

**( उद्योतः )** ननु कारकद्वारा[9] संख्याकार्यवत्तद्वारैव लिङ्गकार्यमस्त्वत आह—**न चेति ॥** तिङन्तोपस्थाप्यक्रियाया द्रव्यधर्मसंख्यया परंपरायोगेऽपि न तथा लिङ्गेन योगः, विचित्रत्वाच्छब्दशक्तीनामिति भावः ॥ **भिद्यते**=आरोपितसंख्यावती भवति । **तदाश्रयः**=तत्संबन्धो लिङ्गाख्योभेदः, तत्र नारोप्यत इति शेषः ॥१॥ कस्यचिच्छब्दस्य शक्तिः कस्मिंश्चिदुपस्थितेऽप्यर्थे प्रतिबध्यत इत्यन्वयः । एष प्रकारः स्वाभाविकत्वाच्छास्त्रे नान्वाख्यायत इत्यर्थः ॥ २ ॥ अत्रैतत्[10]स्वरसात्साधनगतसंख्यायाः क्रियायामारोपेण तिङर्थसंख्यायाः प्रकृत्यर्थ एवान्वयः । आरोपमूलतया[11] च कर्तुरप्येकत्वप्रतीतिः, शब्दशक्तिस्वभावाच्च स्वप्रकृतिक प्रत्ययवाच्यसाधनगताया एव तस्यास्तत्रारोपः । तेन[12] भावेन द्विर्वचनाद्यापाद्यम् । यदा तु तत्र प्रकारान्तरेण संख्यावगमस्तदा भावेऽपि बहुवचनं भवत्येव—हतशायिकाः शय्यन्त इति यथा । तत्र हि उपमानबहुत्वाद्धात्वर्थे बहुत्वावगतिः । अन्यथा तत्र बहुत्वोपादानं व्यर्थं स्यात् । एतेन क्रिया संख्यायामयोग्यैवेति परास्तम् ॥ न चैवं पचेतः[13]कल्पमित्यादौ द्विवचनाद्यापत्तिः, संख्यायास्तिङोक्तत्वात् । एकवचनं तु साधुत्वार्थमिति न दोषः । तदपि प्रथमाया एव नान्यासामनभिधानात् इत्यादि पञ्चमे वक्ष्यते । अत एवं[14] सुबाद्युत्पत्तिरेकत्वादीनामुक्तत्वाद्वारिता, न तु संख्याभावादित्युक्तम् । यदि संख्यायाः स्वप्रकृत्यर्थकर्त्रादावन्वयस्तदा क्लीबस्यापि तत्रैव स्यादिति वैषम्यं दुरुपपादम् । किं च पचति पश्येत्यादौ द्वितीयावारणाय संख्याभावादित्येव वक्तुं युक्तं न तूक्तत्वादिति । त्वद्रीत्या पचतीति तिङा कर्तृगताया उक्तत्वेऽपि क्रियागताया अनुक्तेः । अत एव कर्माद्यभावादिति नोक्तमित्यधिकं मंजूषायां द्रष्टव्यम् ॥ **न तु क्रियाया इति ।** शब्दशक्तिस्वभावेनाख्यातोपात्तक्रियायास्तदयोगादिति भावः ॥ **नपुंसकत्वमिति ।** नपुंसकत्वमेव, नान्यलिङ्गयोग इत्यर्थः ॥ **सामान्यतो दृष्टेनेति ।** विमतं, न लिङ्गयोगि, क्रियात्वात्, यथा पचतीति । एवंरूपेणानुमानेनेत्यर्थः ॥ **अनेनैवेति ।** लिङ्गाभावेनैवेत्यर्थः ॥

---

१ न केवला प्रकृतिः प्रयोक्तव्येति निषेधात्केवलप्रकृतिप्रयोगः प्राप्तोऽपि कर्तुं न शक्यते । तत्प्रवृत्तावपि=तत्रैकवचनस्य प्रवृत्तावपीति तात्पर्यम् ॥

२ पचतीत्यादिविषये न केवलाप्रकृतिरिति निषेधो न प्रवर्तत इत्यर्थः । पचतीत्यादीनां सुब्विध्युद्देश्यतावच्छेदकावच्छिन्नत्वाभावात् ॥

३ 'विभाषा सुपो बहुच् पुरस्तात्तु' इत्यादिना विहितान्तद्धितविशिष्टानां सुप्प्रकृतित्वमिवास्यापि सुप्प्रकृतित्वमिति भावः ॥

४ यदि सर्वत्रापि तिङन्तेभ्य औत्सर्गिकमेकवचनं स्यात्तदा सुबन्तस्यैव पदसंज्ञायामिष्टसिद्धौ तिङ्ग्रहणं व्यर्थं स्यादिति भावः ॥

५ यदि च पचतीत्यादितिङन्तेषु विक्लृत्त्यनुकूलव्यापाराश्रय इति बोधः स्यात्तदा सत्त्वधर्मेण लिङ्गेन योगः स्यात् । परंतु भावप्रधानमाख्यातमिति सिद्धान्तेन क्रियाप्राधान्यम्, तस्याश्च सत्त्वधर्मेणायोग इत्यर्थः ॥

६ क्रियावाचकस्याख्यातस्यैक्येपि कारकाश्रयसंख्यायाः क्रियायामारोपो भवति । कारकाश्रितलिङ्गस्य चारोपस्तस्यां न भवतीत्यर्थः ॥

७ एवं च शब्दस्य कस्य इति चन शक्तिः कस्मिंश्चिदर्थे निरुध्यतस्वाभाविकोयं शब्दस्य महिमेति विशेषाभावान्नोल्लिख्यते शास्त्र इत्यर्थः ॥

८ ननु क्रियाया नपुंसकत्वेनैव तद्विशेषणस्यापि नपुंसकत्वम्भवतीति पचतिशब्दादपि सत्त्वधर्मलिङ्गकार्यं स्यादित्यत आह—**शोभनं पचतीति ।** शब्दशक्तिस्वाभाव्यादेव तथेति भावः ॥

९ ननु पचतीत्यादौ यथा संख्यासंबन्धो भवति, तथा लिङ्गयोगोऽपि स्यादित्याह—**ननु कारकद्वारेति ॥**

१० तिङर्थसंख्यया न साधनगता संख्याऽभिधीयते, प्रत्युत साधनगता संख्या क्रियायामारोप्यते तस्यां च तिङर्थसंख्याया अन्वय इति प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेर्न भङ्ग इति भावः ॥

११ नन्वेवं तिबर्थसंख्यया कर्तुरेकत्वादिकं न प्रतीयेतेत्यत आह—**आरोपमूलतयेति ॥**

१२ साधनगतसंख्याया आरोपेण क्रियारूपात् भावादपि द्विवचनाद्युत्पत्तिर्भवतीति भावः ॥

१३ पचतःकल्पमित्यत्राद्विवचनापत्तिरित्यर्थः । तस् प्रत्ययेनोक्तत्वान्न भवति ॥

१४ क्रियायाः संख्यायोगेऽप्युक्तार्थानामप्रयोगादेव ॥

१५ यैः कर्तृगतसंख्याया आरोपेणैव क्रियायां संख्याप्रतीतिर्भवतीति न मन्यते तैः पचत्यादौ संख्याभावान्न स्वादिरित्येव वक्तव्यं स्यादित्यर्थः ॥ साधनगतसंख्यातिरिक्ता संख्या यदि क्रियायामभीप्सित तदा तद्बोधनार्थम्प्रत्ययावश्यकत्वमित्यर्थः ॥

( प्रयोजनपरभाष्यम् )

**अ[1]णादयस्तर्हि तिङन्तान्मा भूवन्निति ॥**

( प्रदीपः ) **अणादय इति** । यथैव गर्गस्यापत्यमित्यपत्यापत्यवत्संबन्धादिसंभवः, एवं पचति यस्तस्यापत्यमिति सर्वनामप्रत्यवमृष्टतिङन्तार्थाधारसंबन्धसंभव इति भावः ॥ ननु[2] षष्ठ्यन्तादपत्ये प्रत्ययो विधीयते, सर्वनाम्नश्चात्र षष्ठ्यन्तत्वं न तिङन्तस्य । नैष दोषः । गर्गस्यायमित्यत्रापि वाक्यगोचरैव षष्ठी संबन्धस्य प्रदर्शनायोपादीयते । प्रत्ययस्तु प्रातिपदिकादेवोत्पद्यते । लुग्विधानद्वारेण ह्याचार्यः स्वाभाविकीं प्रत्ययस्यानुत्पत्तिमाचष्टे । तस्येति तु षष्ठीनिर्देशः सति संबन्धे प्रत्ययविधानार्थो न तु षष्ठ्यन्तात्प्रत्ययोत्पत्त्यर्थः ॥

(उद्द्योतः) ननु तिङन्तार्थस्यापत्यादिना कथं योगोऽत आह—**यथैवेति** । सर्वनामप्रत्यवमृष्टो यस्तिङन्तार्थक्रियाधारस्तेन संबंधसंभव इति भावः ॥ ननु प्रातिपदिकादेवोत्पत्तौ लुग्विधानं व्यर्थमत आह—**लुग्विधानेति** । न तु सतो निवृत्तिराख्यायते, अयुक्तत्वादिति भावः । तद[3]न्वाख्यानफलं च प्रत्ययलक्षणसिद्धिरिति बोध्यम् । स्तोकान्मु[4]क्त आमुष्यायण इत्यादौ त्वलुग्विधानादेव षष्ठी बोध्येत्यभिमानः ॥ नन्वेवं तस्यापत्यमित्यादौ किमर्थं समर्थविभक्तिनिर्देशोऽत आह—**तस्येति त्विति** ॥

( प्रयोजननिरासभाष्यम् )

**अपत्यादिष्वर्थेष्वणादयो विधीयन्ते । न च तिङन्तस्यापत्यादिभिर्योगोऽस्ति ॥**

( प्रदीपः ) **न चेति** । क्रियाप्र[5]धानत्वादाख्यातस्य, तस्याश्चासत्त्वभूतत्वादपत्यादिभिर्योगाभावः । साधनस्यापि क्रियां प्रति गुणभावादपत्यादिभिर्योगो नास्ति । शब्दान्तरपरामृष्टस्य साधनस्यापत्यादियोगसंभवेऽपि तिङन्तप्रतिपाद्यस्य साधनस्यापत्यादिभिर्योगाभावः । न हि यथा पाचकस्यापत्यमिति संबन्धप्रतिपत्तिरेवं पचत्यपत्यमिति ॥

( उद्द्योतः ) **असत्त्वभूतत्वादिति** । तस्य हि सत्त्वभूतमर्थं प्रति विशेषणत्वं न दृष्टमिति भावः ॥ **शब्दान्तरेति** । यच्छब्दपरामृष्टस्यापत्यादियोगस्तच्छब्दादेव प्रत्यय इति भावः ॥

( अभ्युपगमभाष्यम् )

**अथापि कथंचिद्योगः स्यात् । एवमपि न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—न तिङन्तादणादयो भवन्तीति यदयं क्वचित्तद्धितविधौ तिङ्ग्रहणं करोति—अतिशायने तमबिष्ठनौ, तिङश्चेति ॥**

( प्रदीपः ) **अथापीति** । सर्वनामप्रत्यवमृष्टस्यार्थस्यापत्यादियोगसंभवादिति भावः । धातोरप्यणाद्युत्पत्तिर्धात्वर्थस्यापत्यादियोगाभावादेव प्रतिक्षिप्ता, वाक्यार्थस्याप्यसत्त्वभूतत्वाच्छक्तिलिङ्गापत्यादियोगाभावाद्वक्ष्यमाणप्रत्ययानुत्पत्तिरभिधानीया । भाष्यकारेण तु न्यायस्योक्तत्वात् पृथगुपन्यासो न कृतः ॥

( उद्द्योतः ) **अथापि कथंचिदिति** । भाष्यमभ्युपगमवादमात्रम् । केचित्तु तिङश्चेति ज्ञापकं न तिङन्तात्स्वादयो भवंतीत्येवं सामान्यापेक्षम् ॥ भाष्ये—**अणादय इति** । आदिशब्दः प्र[6]कारवाचीत्याहुः ॥ **वाक्यार्थस्येति** । कारकान्वितक्रियैवास्मन्मते वाक्यार्थ इति भावः ॥ **शक्तिः**=कारकम् ॥ **न्यायस्योक्तत्वादिति** । न च तिङन्तस्य स्त्रीत्वेन योगोऽस्तीत्यनेनेत्यर्थः । तदेवं स्वादिविधौ प्रकृत्यन्तरासम्भवात्पारिशेष्येण ङ्याप्प्रातिपदिकलक्षणैव प्रकृतिरिति स्थितम् ॥

( वार्तिकावतरणभाष्यम् )

**अत उत्तरं पठति—**

( ५०९४ प्रयोजनवार्तिकम् ॥ १ ॥ )

**॥*॥ ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् ॥ * ॥**

( भाष्यम् ) **ङ्याप्प्रातिपदिकग्रहणं क्रियते, अङ्गभपदसंज्ञार्थम् । अङ्गभपदसंज्ञा ङ्याप्प्रातिपदिकस्य यथा स्युरिति ॥**

( प्रदीपः ) **अङ्गभपदसंज्ञार्थमिति** । यस्मात्प्रत्ययविधिरित्यत्र विधिग्रहणाद्यस्य प्रत्ययविधौ शब्देनाश्रयणं तस्य तस्याङ्गसंज्ञा । भपदसंज्ञे अप्युत्तरत्र यस्मात्प्रत्ययविधिरित्यस्यानुवर्तनात्तस्यैवेति भावः ॥

( उद्द्योतः ) ननु तेषामेवाक्षेपे तत एव स्वादय इति—अंगत्वादिकमपि तेषां सिद्धमत आह—**शब्देनेति** ॥

( वार्तिकोक्तप्रयोजननिराकरणभाष्यम् )

**क[10] पुनरिहाङ्गभपदसंज्ञार्थेन ङ्याप्प्रातिपदिकग्रहणेनार्थः ? ।**

---

१ ननु तिङन्तस्य स्त्रीत्वेनायोगाट्टाबादीनामनुत्पत्तावपि अपत्याद्यर्थबोधकाणादीनान्तत उत्पत्तिः स्यात् । पचतीत्यस्य विक्लित्यनुकूलव्यापाराश्रय इत्यर्थः । तस्य चापत्येनार्थेन योग इति भावः ॥

२ ननु तिङन्तात्सुबादीनामनुत्पत्तौ तस्य सुबन्तत्वाभावेनापत्याद्यर्थकप्रत्ययानां सुबन्तेभ्यो विधानाच्च नायं दोष इत्याशङ्कायामाह—**ननु षष्ठ्यन्तादिति** ॥

३ सुपो लुगन्वाख्यानम्प्रत्ययलक्षणेन पदत्वादिसम्पादनायेत्यर्थः ॥

४ ननु प्रत्ययस्य न सुबन्तादुत्पत्ति किन्तु प्रातिपदिकादेवेति कैय्यटमतस्वीकारे आमुष्यायण इत्यादौ न विभक्तिश्रवणं स्यादत आह—**स्तोकान्मुक्तेति** ॥

५ क्रियाप्रधानमाख्यातं सत्त्वप्रधानानि नामानि इति स्वीकारादिति भावः ॥

६ अणादय इत्यनेन स्वादीनामपि संग्रहो यथा स्यादित्येतदर्थमाह—**प्रकारवाचीति** ॥

७ वाक्यार्थस्यापि क्रियाप्राधान्येन तस्याश्चापत्यादिसम्बन्धाभावेन न वाक्यादणादिप्रत्ययसम्भवः ॥

८ ङ्याप्प्रातिपदिकादित्यधिकाराभावेपि सुबादीनाम्प्रकृत्यन्तरासम्भवान्नानिष्टापत्तिरिति ङ्याप्प्रातिपदिकादिति व्यर्थमेवेति नेदम्प्रयोजनमधिकारस्येति भावः ॥

९ ननु ङ्याप्प्रातिपदिकादित्यधिकाराभावे सुबुत्पत्तावुद्देश्यत्वेन येषामन्वयस्तेषामङ्गसंज्ञाऽपि स्यादिति तदर्थन्नापेक्षाऽधिकारस्येत्याह—**ननु तेषामिति** ॥ भवामीत्यादावङ्गसंज्ञार्थमावश्यकेन विधिशब्देनायमर्थो लभ्यत इति भावः ॥

१० विशेषजिज्ञासायामाह—**क पुनरिति** ॥

टाबादिषु ।
नैतदस्ति प्रयोजनम् ।
ग्रहणवद्भ्यष्टाबादयो विधीयन्ते ।
उगितो ङीब्भवति ।
अतष्टाब्भवतीति यत्तच्छब्दरूपं गृह्यते, तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ॥

( प्रदीपः ) भाष्यकार एतत्प्रयोजनं निराकर्तुमाह—**क्व पुनरिति ॥ ग्रहणवद्भ्य इति** । ग्रहणमुपादानं तच्च क्वचित्साक्षात्, यथाऽजाद्यतष्टाबित्यजादीनाम् । क्वचित् संज्ञाद्वारेण, यथाऽत्रैवाकारेणादन्तानाम् । क्वचिदनुबन्धनिर्देशोपलक्षितसंज्ञानिर्देशेन, यथोगितश्चेति । अत्र स्त्र्यर्थाभिधायिशब्द आक्षिप्तोऽकारेणोगिता च विशेष्यते ॥

( उद्योतः ) **भाष्यकार इति** । ननु वार्तिककृत्, तेनोत्तरवार्तिके चकारकरणात्[2], इति भावः । वस्तुत उत्तरवार्तिके चशब्दो वार्तिककृताऽपि तदर्थ[3] एव प्रयुक्तः । हृदि स्थितयाऽरुच्या च वार्तिके फलान्तरकल्पनम्, तामरुचिं भाष्यकारः स्फुटयति, इत्येवं व्याख्यानमुचितमेवमन्यत्रापि बोध्यम् ॥ **उपादानमिति** । न तु साक्षादुच्चारणमिति भावः ॥ **संज्ञेति** । येन विधिरित्यनेनेति भावः । नन्वेतदधिकाराभावेपि[4] विशेष्यासंनिधानात्कथं तदंतविधिरत आह—**अत्रेति** । स्त्र्यधिकारेणेत्यर्थः ॥

( अभ्युपगमवादभाष्यम् )

अथापि कश्चिदग्रहणः ।
एवमपि न दोषः ।
स्त्रियां टाबादयो विधीयन्ते । यत्तच्छब्दरूपं[5] स्त्रियां वर्तते, तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ॥

( प्रदीपः ) **अथापीति** । सामर्थ्याक्षिप्तस्याप्युपादानमस्त्येव । अभ्युपगम्यवादेन तु दर्शयति । वयसि प्रथम इत्यादौ सामर्थ्याक्षिप्ता प्रकृतिः । अथ त्वत्राप्यत इत्यनुवर्तनाद्वर्णग्रहणे च सर्वत्र तदन्तविधिसंभवादकारान्तस्य ग्रहणं तदा नास्ति कश्चिदग्रहणष्टाबादिः ॥

( उद्योतः ) **दर्शयतीति** । यः सामर्थ्याक्षिप्तस्योपादानं नाभ्युपगच्छति तं प्रति क्वचित् तदभ्युपगमावश्यकत्वमेकदेशी दर्शयति—इत्यर्थः ॥ परमार्थतस्तत्रापि ग्रहणमस्तीत्याह—**अथ त्विति** ॥

( आशंकानिराकरणभाष्यम् )

अणादिषु तर्हि ।
अणादयोऽपि ग्रहणवद्भ्यो विधीयन्ते—गर्गादिभ्यो यञ्, नडादिभ्यः फगिति । यत्तच्छब्दरूपं गृह्यते, तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ॥

( अभ्युपगमवादभाष्यम् )

अथापि कश्चिदग्रहणः ।
एवमपि न दोषः । अपत्यादिष्वर्थेष्वणादयो विधीयन्ते । यत्तच्छब्दरूपमपत्यादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ॥

( प्रदीपः ) **यत्तच्छब्दरूपमपत्यादिष्विति** । परार्थाभिधानं वृत्तिरिति प्रकृतिरप्यपत्यादिषु वर्तते ॥

( उद्योतः ) नन्वपत्ये[8] न तु प्रकृतिरिति यत्तच्छब्दरूपमित्यादिभाष्यमनुपपन्नमत आह—**परार्थेति** । तद्धितवृत्तौ परस्य प्रत्ययस्यार्थं प्रकृतिरभिधत्ते=तदन्वितस्वार्थं प्रतिपादयति, इत्याशयेनैतदित्यर्थः । यच्छब्दरूपमपत्यादिष्वर्थेषु वर्तते तदन्वय्यर्थप्रतिपादकमित्यन्ये ॥

( आशंकानिराकरणभाष्यम् )

स्वार्थिकेषु तर्हि ।
स्वार्थिका अपि ग्रहणवद्भ्यो विधीयन्ते—यावादिभ्यः कन्, प्रज्ञादिभ्योऽणिति । यत्तच्छब्दरूपं गृह्यते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ॥

( अभ्युपगमवादभाष्यम् )

यस्तर्ह्यग्रहणः[11] । शुक्लतमः शुक्लतरः कृष्णतमः कृष्णतर इति ।
अत्रापि न यावच्छुक्लः=तावच्छुक्लतरः, प्रकृष्टः शुक्लः=शुक्लतरः । यत्तच्छब्दरूपं प्रकृष्टे वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ।

( प्रदीपः ) **शुक्लतर इति** । न ह्यत्र शब्देन प्रकृतिरुपात्तेति भावः ॥ **न यावदिति** । यावत्तावच्छब्दौ निपातौ पर्यायतां द्योतयतः ॥

( उद्योतः ) ननु यावदिति नपुंसकस्य शुक्ल इत्यनेन सामानाधिकरण्यमयुक्तमत आह—**यावत्तावदिति** । न तु तद्धितान्तावित्यर्थः ॥

---

१ ननु स्त्र्यर्थाभिधायिशब्दादाक्षिप्तात्प्रत्ययेऽपि स प्रातिपदिकादेव भवत्विति तद्ग्रहणमपेक्ष्यत इति चेदत्र पूर्वोक्त एव समाधिरवगन्तव्यः । पारिशेष्यात्सुबादिप्रत्ययविध्युद्देश्यम्प्रातिपदिकमेव स्यादिति भावः ॥

२ उत्तरवार्तिकद्वये चकारकरणेन वार्तिककारस्य दोषसमुच्चय एवेष्टः । भाष्यकारस्तु तत्खण्डयति ॥

३ 'पूर्वोक्तदोषो न चेत्तर्हि' इत्यर्थः । एवं च भाष्यकारवद्वार्तिककारोऽपि दोषान्तरमेवाहेति भावः ॥

४ अदन्तस्य संज्ञात्वमुपपादयति—**येन विधिरित्या**दिना ॥

५ 'भावे विशे' इति ख. पाठः । अपिशब्दपाठे स शब्दस्तदर्थ इति भावः ॥

६ स्त्रियामित्यधिकारबलात्स्त्रीत्वयोग्यर्थकः शब्दो विशेष्यत्वेनान्वेतीत्यर्थः ॥

७ यस्य स्त्रीत्वेन योगस्तस्मात्प्रत्यय इष्ट एवेति न दोष इत्याशयः ॥

८ अपत्याद्यर्थान्वययोग्यशब्दादुत्पत्तिरित्यर्थः ॥

९ वृत्तौ संश्लिष्टार्थकत्वेनापत्यरूपोप्यर्थः प्रकृतेरिति भावः ॥

१० स्वार्थिकप्रत्ययानाम्प्रकृतिसामान्यापेक्षणादनिष्टापत्तिः स्यादित्याशयः ॥

११ प्रकृतेरेवातिशयद्योत्ये ये प्रत्ययाः प्रकृतिविशेषानाश्रयणेन संगृहीतास्तेष्वनिष्टापत्तिरित्यर्थः ॥

( आशंकानिराकरणभाष्यम् )

**स्वादिषु तर्हि ।**

**एकत्वादिष्वर्थेषु स्वादयो विधीयन्ते । यत्तच्छब्दरूपमेकत्वादिष्वर्थेषु वर्तते तस्मादुत्पत्तिस्तस्यैताः संज्ञा भविष्यन्ति ॥**

( प्रदीपः ) **स्वादिषु तर्हीति** । प्रकरणोत्कर्षाद्बहुषु बहुवचनमित्यादेः स्वादिविधिवाक्यस्य च भिन्नवाक्यतां मन्यते ॥ **एकत्वादिष्विति** । आकाङ्क्षायोग्यतावशाद्भिन्नप्रकरणपठितानामप्येकवाक्यत्वमिति भावः । तत्र त्रिके प्रातिपदिकार्थे, चतुष्केपि पक्षे स्वादय एकत्वादीनां वाचकाः । पञ्चके तु पक्षे, चतुष्के च द्योतकाः । तत्रैकत्वादिषु द्योतका वाचका वा विधीयन्त इत्यर्थः ॥ **यत्तदिति** । द्योतकपक्षेऽयमर्थः—एकत्वादिषु यद्वर्तते तस्मात् स्वादय एकत्वादीनां द्योतका उत्पद्यन्ते ॥ वाचकपक्षे त्वयमर्थः—एकत्वादिषु स्वादिवाच्येष्वाधेयेषु यच्छब्दरूपं तदाधारार्थवाचि, तस्मात् स्वादय एकत्वादीनां वाचका उत्पद्यन्ते ॥

( उद्योतः ) ननु संख्यावाक्यैः स्वादिविधीनामेकवाक्यत्वा वक्ष्यमाणरीत्या न दोषोऽत आह—**प्रकरणेति** ॥ **त्रिके**=स्वार्थद्रव्यलिङ्गरूपे ॥ **चतुष्केपीति** । स्वार्थद्रव्यलिङ्गकारकरूपेत्यर्थः ॥ **चतुष्के चेति** । स्वार्थद्रव्यलिङ्गसंख्यारूपोऽत्र चतुष्कशब्दार्थः ॥ ननु वाचकत्वपक्षे यत्तच्छब्दरूपमेकत्वादिषु वर्तत इति भाष्यमनुपपन्नमत आह—**वाचकपक्षे त्विति** । द्योतकत्वपक्ष एव तु भाष्यस्वरसः । अत एव तस्या विशेषणत्वमेवेति बोध्यम् ॥

( आक्षेपभाष्यम् )

**कथं पुनरिहोच्यमानाः स्वादय एकत्वादिष्वर्थेषु शक्या विज्ञातुम् ॥**

( समाधानभाष्यम् )

**एकवाक्यत्वात् । एकं वाक्यंतच्चेदं च ।**

**यद्येकं वाक्यं तच्चेदं च किमर्थं नानादेशस्थं क्रियते ? कौशलमात्रमेतदाचार्यो दर्शयति—यदेकं वाक्यं सन्नानादेशस्थं करोति, अन्यदपि किंचित्संग्रहीष्यामीति ॥**

( प्रदीपः ) **अन्यदपीति** । तिङ्विधिवाक्येनापि सहैकवाक्यत्वं यथा स्यादित्येवमर्थमित्यर्थः । अङ्गानां हि प्रधानसंनिधावुपदेशार्हाणां प्रकरणोत्कर्षेणोपदेशः सर्वप्रधानसंबन्धार्थः ॥

( उद्योतः ) **अङ्गानां हीति** । एकसन्निधौ पाठे हि तदन्वय एव स्यादिति भावः ॥

( ५०९५ द्वितीयप्रयोजनवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ यच्छयोश्च लुगर्थम् ॥ * ॥

( भाष्यम् ) **यच्छयोस्तर्हि लुगर्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते । "कंसीयपरशव्ययोर्यञञौ लुक्च" इति ङ्याप्प्रातिपदिकात्परस्य लुग्यथा स्यात् । अक्रियमाणे हि ङ्याप्प्रातिपदिकग्रहणे प्रकृतेरपि लुक् प्रसज्येत ॥**

( प्रदीपः ) **यच्छयोश्चेति** । वार्तिककारस्य समुच्चयार्थश्चशब्दः, भाष्यकारेण तु पूर्वप्रयोजनस्य दूषितत्वात्तर्ह्यर्थे च शब्दो व्याख्यातः ॥ **प्रकृतेरपीति** । यच्छयोर्या प्रकृतिः कंसशब्दः परशुशब्दश्च तदवयवस्यापि प्रत्ययस्येत्यर्थः ॥

( उद्योतः ) एवं च यस्मात्प्रत्ययविधिरित्यत्र विधिग्रहणाद्यस्य प्रत्ययविधौ शब्देनार्थतो वाऽवधितयाऽऽश्रयणन्तस्याङ्गादिसंज्ञा सिध्यतीत्यङ्गादिसंज्ञार्थं सूत्रं न कार्यमिति स्थिते फलान्तरमाशङ्कते—**यच्छयोश्चेति** ॥ ननु प्रत्ययस्य लुगिति वचनात् कथं प्रकृतेर्लुगापादनमत आह—**यच्छयोरिति** ॥

( प्रयोजननिराकरणभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । यथापरिभाषितं प्रत्ययस्य लुक्श्लुलुपो भवन्तीति—प्रत्ययस्य भविष्यति ॥**

( प्रदीपः ) इतरश्च प्रकृतेरिति स्थानषष्ठीं मत्वाऽऽह—**एतदपीति** ॥

( अनिष्टापत्युद्भावकभाष्यम् )

**एवमप्युकारसकारयोः प्रसज्येत । कमेः सः कंसः । परान् शृणातीति परशुरिति ॥**

(प्रदीपः) इतरः पूर्वमेवार्थं स्पष्टीकरोति—**एवमपीति** ॥

( समाधानभाष्यम् )

**उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥**

---

१ विधिशास्त्रेण पूर्वंप्रवृत्तिस्ततो नियमशास्त्रेण निवृत्तिरित्यभिप्रायेणेदम् । विधिनियमयोरेकवाक्यताभिप्रायेण च 'एकत्वादिष्वर्थेषु' इत्युत्तरम् ॥ एवं च विधिशास्त्रस्य नियमशास्त्रेणैकवाक्यतयैव लाघवात्प्रवृत्तिरिति सिद्धान्तः ॥

२ श्रुतिलिङ्गवाक्यप्रकरणेति प्रकरणप्रमाणेन विधिशास्त्रस्य नियमाऽनपेक्ष्यैव शाब्दबोध इत्याशयेनेदम् ॥

३ वाक्यरूपप्रमाणस्य प्राबल्येनाकांक्षायोग्यतादीनामपि शाब्दबोधे कारणत्वमिति सिद्धान्ताशयेनेदम् ॥

४ संख्यातिरिक्तार्थक इत्यर्थः ॥

५ संख्यासहित त्रय इत्यर्थः ॥

६ तस्याः=संख्यायाः ॥ यदि संख्यारूपोर्थो वाच्यः स्यात्स्वादीनाम्, तर्हि तस्यैव प्राधान्यं स्यात् । अन्यथा प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति व्युत्पत्तिभङ्गः स्यादित्यर्थः ॥

७ ननु विधिनियमयोरेकवाक्यत्वे तयोर्ज्ञानगौरववारणायैकप्रकरण एव पाठ आवश्यक इत्याशङ्कां निवारयितुं ज्ञानगौरवफलमाह—अन्यदपीति ॥

८ यदि द्व्येकयोर्द्विवचनेत्यादिसूत्राणां स्वौजसमौडित्यत्र पाठः क्रियेत तर्हि द्व्येकयोरित्यादीनामन्वयाकांक्षाया अभावेन न तिङ्विधायकैः सह तेषामन्वयः स्यात् ॥ तथा च तदर्थमन्यवचनापेक्षेति गौरवमिति भावः ॥

९ कंसीयेति लुक् कमुधातोः क्रियमाणस्य प्रत्ययस्यापि स्यादिति भावः ॥

१० लुक्पदेन प्रत्ययस्य लोप एव गृह्यत इति न प्रकृतेर्लोप शङ्केति भावः ॥

११ 'इतरः प्र' इति (क.)

१२ 'पूर्वमर्थं' इति (क.)

( प्रदीपः ) **उणादय इति ।** अतः कृकमिकंसेति कमिग्रहणेनैव कंसग्रहणे सिद्धे कंसशब्दोपादानं ज्ञापकं क्वचिदेषां व्युत्पत्तिकार्यं न भवतीति । यञञोस्तु विधानसामर्थ्याल्लुङ् न भवतीति यच्छयोरेव भविष्यतीत्यर्थः ।

( उद्योतः ) ननु कमेः स इति व्युत्पादनादव्युत्पन्नानीत्ययुक्तमत आह—**अत इति ।** कंसेस्तु न कंसोऽनभिधानादिति भावः ॥ ननु यञञोरेव लुक् स्यादत आह—**यञञोस्त्विति ।** औत्सर्गिकाण एव लुका सिद्धे तद्विधानं व्यर्थं स्यादिति भावः । विकल्पस्त्वष्टदोषदुष्ट इति ध्येयम् ॥

( ५०९६ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थम् ॥ * ॥

( भाष्यम् ) **वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे तर्हि प्रत्ययविधौ तत्सम्प्रत्ययार्थं ङ्याप्प्रातिपदिकग्रहणं क्रियते । वृद्धात्, अवृद्धात्, अवर्णान्तात्, अनुदात्तादेः, द्व्यचः, इत्येतानि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरिति ॥**

( प्रदीपः ) **वृद्धावृद्धेति ।** अत्रापि वार्तिककारस्य चशब्दः समुच्चये, भाष्यकारस्य तु तर्ह्यर्थः । वृद्धादयो लक्षणं निमित्तं यस्य प्रत्ययविधेस्तस्मिन् वृद्धादीनि ङ्याप्प्रातिपदिकविशेषणानि यथा स्युरित्यर्थः ॥

( उद्योतः ) अथ मुख्यफलमाह—**वृद्धेत्यादि ॥** नन्वसाधारणधर्मो लक्षणम्, न च वृद्धादिः प्रत्ययस्यासाधारणो धर्मोऽत आह—**वृद्धादय इति ॥ वृद्धादीनीति ।** तस्य ङ्याप्प्रातिपदिकस्य वृद्धादिविशेष्यत्वेन संप्रत्ययो यथा स्यादिति वार्तिकार्थ इति भावः ॥

( एकदेश्याक्षेपभाष्यम् )

**अथाक्रियमाणे ङ्याप्प्रातिपदिकग्रहणे कस्यैतानि विशेषणानि स्युः ॥**

( प्रदीपः ) **अथेति ।** प्रत्ययार्थसंबन्धयोग्यार्थाभिधायित्वान् ङ्याप्प्रातिपदिकस्यैव विशेषणानि भविष्यन्तीति प्रश्नः ॥

( उद्योतः ) **प्रत्ययार्थेति ।** भाष्ये कस्यैतानीति किं शब्दः क्षेपे । नान्यस्य कस्यापि, किं तर्हि?—ङ्याप्प्रातिपदिकस्यैवेत्यर्थ इति भावः ॥

( एकदेशिसमाधानभाष्यम् )

**समर्थविशेषणानि ॥**

( प्रदीपः ) **समर्थविशेषणानीति ।** समर्थानां प्रथमादित्यधिकाराद्विभक्तिमन्तरेण सामर्थ्यानवगमाद्विभक्त्यन्तस्यैव विशेषणानि स्युरित्यर्थः । ङ्याप्प्रातिपदिकग्रहणे तु सति तदुपादानसामर्थ्यात्तद्विशेषणानि वृद्धादीनि भवन्ति ॥

( उद्योतः ) **अधिकारादिति ।** समर्थः पदविधिरित्येतदधिकारादिति वक्तुं युक्तम् । श्रुतविशेष्यसंभवेन कल्पनावकाश इति भावः ॥ नन्वेतदधिकारेपि संनिहितत्वाविशेषात्समर्थविशेषणान्येव स्युरत आह—**तदुपादानसामर्थ्यादिति ।** प्रागुक्तप्रयोजनानि तु भगवता खण्डितान्येवेति भावः ॥ **वृद्धादीनीति ।** आदिनौ समर्थानां प्रथमादित्यपि । अन्यथा कृतवर्णानुपूर्वीकत्वसामर्थ्यस्य सुबन्तविशेषणत्वे भानोरपत्यं भानव इत्यत्र—ओकारसहितस्य—लुका निवृत्तौ तद्रूपासिद्धिः स्यादिति बोध्यम् ॥

( दोषनिरूपकभाष्यम् )

**तत्र को दोषः ॥**

**उदीचां वृद्धादगोत्रात् । इह च प्रसज्येत । ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् ॥**

---

१ उणादयो व्युत्पन्नानीत्यत्र ज्ञापकमाह—अतः कृकेति ॥

२ कंसीयपरशव्यशब्दाभ्यां विहितयोर्यञञोरित्यर्थः ॥

३ ननु यञञोर्लुकि कृतेपि तदर्थस्य लाभेन न यञञोर्विधानमनर्थकमत आह—औत्सर्गिकाण इति ॥

४ अत्र विकल्पसम्भावना चेत्थम्—कंसीयपरशव्ययोर्यञञौ लुक् चेत्यनेन यञञौ विधीयेते लुक् च, स च लुक् यञञोर्यच्छयोर्वा पर्यायेण भवति इति स्वीकारो यञञोर्विधानसामर्थ्यात्सर्वथा लुक् न, किन्तु पर्यायेणेति सामर्थ्यकल्पनारूपं गौरवम् ॥ यदा च यच्छयोर्लुक् तदा यच्छयोर्लुग्वतो लक्ष्यस्य साधुत्वम्, यञिञोर्लुग्वतो लक्ष्यस्य चासाधुत्वम् । यच्छयोर्लुकि तद्वितरलुको बाधः, तेन चास्य बाध इति विकल्पस्य गौरवजनकत्वमिति भावः ॥ ननु वैयाकरणैस्तत्र तत्र विकल्पः स्वीक्रियत एवेति न दोष इति चेत् यथा अग्निहोत्रं जुहोतीत्यस्योत्पत्तिविधित्वस्वीकारे द्रव्याकाङ्क्षायां 'दध्ना जुहोति, 'पयसा जुहोति' इति वाक्यजातेन खले कपोतन्यायेन गुणा विधीयन्ते ततो नानेकादृष्टकल्पनागौरवम् । तथाऽप्राप्तविकल्पस्थले विधानसहचरितस्यैव विकल्पस्य विधानेन न बाधादिदोषाः ॥ प्राप्तविकल्पस्थले विकल्पस्य केवलनिषेधबोधकत्वादेव न दोषः ॥ प्राप्ताप्राप्तस्थले दोषसम्भावनासत्त्वादेव न वेति विभाषेत्यारब्धम्भगवता, येन प्रथमतः सर्वोन्निषिध्योत्पत्तिसहचरित एव वेत्यनेन विकल्पः क्रियत इति सर्वं निरवद्यम् ॥

५ तस्मिन्=तादृशे प्रत्ययविधिसूत्रे ॥

६ वार्तिकस्थलक्षणपदस्यासाधारणधर्मवत्परत्वं मत्वाऽऽशङ्कते—नन्वसाधारणेति ॥

७ यथा स्वौजसमौडित्यादौ ङ्याप्प्रातिपदिकग्रहणाभावेपि सुबर्थसंख्याऽन्वययोग्यस्यान्यस्य कस्यचनालाभेन प्रातिपदिकस्यैवान्वयस्तद्वदत्रापि तस्यैव विशेष्यत्वेनान्वयः स्यादित्याशयेनाशङ्कत इत्यर्थः ॥

८ तद्विशेषणानि=प्रातिपदिकविशेषणानि । प्रातिपदिकस्य विशेषणानीत्यर्थः ॥

९ समर्थानाम्प्रथमादितिसूत्रघटकसमर्थपदस्य कृतसन्धिकार्यपरत्वेन न तस्य विशेषणानीति भाष्याभिप्रायः । समर्थः पदविधिरित्यधिकारादित्येवं वक्तुं युक्तम् । समर्थानामिति पदस्य तदर्थकत्वाभावे समर्थः पदविधिरित्यनेन तस्य वैयर्थ्यमेव स्यात् । पदविधित्वन्त्वस्य घकालतनेष्वित्यादिना सिद्धमेव । समर्थानामिति पदस्य कृतसन्धिकार्यपरकत्वाभावे च सौत्थितिरिति न स्यादित्यपि ॥

१० समर्थपदसांनिध्येन तद्विशेष्यत्वकल्पनाया अवकाश इति भावः ॥

११ ननु प्रातिपदिकाधिकारसत्वेऽपि संनिहितत्वरूपविशेषात्समर्थस्यैवैतानि विशेषणानि भविष्यन्ति । प्रातिपदिकादित्यस्य वैयर्थ्यमपि न, प्रत्ययस्तु प्रातिपदिकादेव वृद्धादिविशेषणानि समर्थस्येत्यर्थादित्याक्षेपं निराकरोति—प्रागुक्तप्रयोजनानीत्यादिना । वृद्धादिविशेष्यत्वमेव प्रातिपदिकाधिकारस्य फलमित्यर्थः ॥

१२ समर्थानामित्यपि प्रातिपदिकस्यैव विशेषणम्, तेन कृतसन्धिकार्यत्वमपि प्रातिपदिकस्यैवेष्यते न तु समर्थस्येति भावः ॥

**इह च न स्यात् । ज्ञयोर्ब्राह्मण्योरपत्यमिति । एतद्धि समर्थमवृद्धम् । वृद्ध ॥**

( प्रदीपः ) **ज्ञानामिति** । ननु वृत्तावभेदैकत्वसंख्योपजननान्नास्ति द्विवचनबहुवचनान्तात्प्रत्ययः । नैष दोषः । क्वचिदादेशादिवशात्संख्याविशेषोऽपि प्रतीयते—यथा तावको मामक इति । एवमिहापि फिञ् विधीयमानो बहुवचनमन्तरेण वृद्धत्वाभावाद्बहुत्वं गमयेत् । प्रकरणादिवशाद्वा । तदुक्तम्—

**भेदः संख्याविशेषो वा व्याख्यातो वृत्तिवाक्ययोः ।**
**सर्वत्रैव विशेषस्तु नावश्यं तादृशो भवेत् ॥** इति ॥

( उद्योतः ) ननु आम्रगुप्तायनिरित्यादौ चरितार्थः फिञ् कथं बहुत्वं गमयेदत आह—**प्रकरणादिवशाद्वेति** । **भेदः**=पृथगुपस्थितिः । **संख्याविशेषः**=द्वित्वादिः । **व्याख्यातः**=वृत्तावसत्त्वेन वाक्ये सत्त्वेनेत्यर्थः ॥ **विशेषस्त्विति** । संख्याविशेषस्त्वित्यर्थः । **तादृशः**=असत्त्वविशिष्टः । शौर्पिकमासजाततावकीनादौ व्यभिचारादिति भावः । वस्तुतो वृत्तौ द्वित्वादीनामभानमेव । प्रकृत्यर्थताऽवच्छेदकरूपेणानेकव्यक्तिभानम् । तत्र तद्बोधनायेदं वाक्यं प्रदर्श्यते नत्वेष विग्रह इति बोध्यम् ॥

( दोषप्रदर्शकभाष्यम् )

**अवृद्ध, प्राचामवृद्धात्फिन्बहुलम् । इह च प्रसज्येत—ज्ञयोर्ब्राह्मण्योरपत्यमिति । एतद्धि समर्थमवृद्धम् । इह च न स्यात्—ज्ञानां ब्राह्मणानामपत्यमिति । एतद्धि समर्थं वृद्धम् । अवृद्ध ॥**

**अवर्ण, अत इञ्भवतीति—इहैव स्यात्—दक्षस्यापत्यं दाक्षिरिति । एतद्धि समर्थमकारान्तम् । इह च न स्यात्—दक्षयोरपत्यं दक्षाणामपत्यमिति । एतद्धि समर्थमनवर्णान्तम् । अवर्ण ॥**

**स्वर, अनुदात्तादेरञ्भवति । इह च प्रसज्येत—वाचो विकारस्त्वचो विकार इति । एतद्धि समर्थमनुदात्तादि । इह च न स्यात्—सर्वेषां विकार इति । एतद्धि समर्थमुदात्तादि । स्वर ॥**

**द्व्यज्लक्षण, द्व्यचष्ठन्निति । इह च प्रसज्येत—वाचा तरति त्वचा तरतीति । एतद्धि समर्थं द्व्यच् । इह च न स्यात्—घटेन तरतीति । एतद्धि समर्थमद्व्यच् ॥**

( प्रदीपः ) **वाचो विकार इति** । सावेकाच इति विभक्तेरुदात्तत्वात्पदमेतदनुदात्तादि । एतच्चोदाहरणदिक्प्रदर्शनार्थम् । एतस्य हि वृद्धत्वान्मयटा भाव्यम् । इदं तूदाहरणं—पञ्चानां विकार इति । षट्त्रिचतुर्भ्यो हलादिरिति विभक्तेरुदात्तत्वादनुदात्तादिसमर्थमेतत् । प्रातिपदिकं तु त्रः संख्याया इत्याद्युदात्तम् ॥ **सर्वेषामिति** । सर्वस्य सुपीत्याद्युदात्तं पदम् । प्रातिपदिकं तु सर्वशब्दोऽन्तोदात्तो निपातित इत्यनुदात्तादि ॥

( उद्योतः ) **मयटेति** । नित्यं वृद्धेत्यनेन । केचित्तु नित्यं वृद्धेत्यत्र भाषायामित्यनुवृत्तेर्भाष्यं छन्दोभिप्रायमित्याहुः ॥ **सर्वस्य सुपीति** । सौवरसप्तमीनां तदन्तसप्तमीत्वेन प्रत्यये परतः पूर्वकार्यत्वाभावेन न लुमतेत्यस्याप्राप्तौ प्रत्ययलक्षणेन सुबन्तत्वं बोध्यम् । अन्तरङ्गानपीति न्यायोऽप्यन्तरङ्गनिमित्तविनाशकस्यैव लुको बलवत्त्वबोधकः । अकृतव्यूहपरिभाषाया भाष्यकृताऽस्वीकाराच्च । सुप्ग्रहणफलमप्येतदेव, तदभावे हि सर्वत्रानेनाद्युदात्तत्वेऽनुदात्तादित्वाभावादञनापत्तिरिति बोध्यम् ॥ ननु शिट्स्वरेण सर्वशब्दआद्युदात्त एवेति किं सर्वस्य सुपीत्यनेनेत्यत आह—**सर्वशब्द इति** । अत एव सिद्धान्ते सार्वं इत्यञन्तप्रयोगसिद्धिः ॥

( समर्थाधिकारफलप्रदर्शकभाष्यम् )

**अस्ति पुनः समर्थविशेषणे सति किंचिदिष्टं संगृहीतं भवति । आहोस्विद्दोषान्तमेव । अस्तीत्याह । किम्? साम्ना तरति वेम्ना तरतीति । एतद्धि समर्थमपि द्व्यच् ङ्याप्प्रातिपदिकमपि ॥**

( आक्षेपभाष्यम् )

**अथ ङ्याब्ग्रहणं किमर्थम् । न प्रातिपदिकादित्येव सिद्धम् ॥**

( प्रदीपः ) **अथेति** । लिङ्गविशिष्टपरिभाषया सिद्धं मन्यते ॥

( समाधानभाष्यम् )

**न सिध्यति ।**

**अप्रत्यय इति प्रातिपदिकसंज्ञायाः प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) इतरोऽगृहीताभिप्राय आह—**न सिध्यतीति** ॥

( प्रत्याक्षेपभाष्यम् )

**यद्येष ङ्याब्ग्रहणे हेतुः । त्यूँङ्ग्रहणमपि कर्तव्यम् । तावपि हि प्रत्ययौ ॥**

( प्रत्याक्षेपनिरासभाष्यम् )

**तिग्रहणे तावद्वार्तम् । तद्धितः प्रातिपदिकमिति प्रातिपदिकसंज्ञा भविष्यति ॥**

**ऊङ्ग्रहणे चापि वार्तम् । उवर्णान्तादूङ्विधीयते**

१ तवममादेशावेकत्व एवोपपद्यन्त इति भावः ॥

२ ज्ञशब्दस्य बहुवचनपरकत्व एव वृद्धत्वमुपपद्यत इति भावः ॥

३ ज्ञादिशब्देषु कथंचित्संख्याऽवगमेपि आम्रगुप्तायनिरित्यादौ तदनवगतिरित्यर्थः ॥

४ वृद्धत्वादञ्बाधको मयडेव स्यादिति भावः ॥

५ प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषया प्रातिपदिकग्रहणेनैव सिद्धमिति प्रश्नाशयः । अन्याभिप्रायेणैव 'न सिध्यति' इत्युत्तरम् ॥

६ ङ्याबन्तस्य प्रत्ययान्तभिन्नत्वाभावेन प्रातिपदिकसंज्ञा न स्यादिति भावः ॥

७ त्यूङन्तस्यापि प्रत्ययान्तत्वेन प्रातिपदिकसंज्ञा न स्यादिति भावः ॥

८ त्यन्तस्य प्रत्ययान्तत्वेपि कृत्तद्धितेति प्रातिपदिकसंज्ञा युक्तैवेति भावः । अथवा त्यन्ते प्रातिपदिकसंज्ञायाः सिद्धत्वेन तिग्रहणं निर्बलमिति भावः ॥

तत्रैकादेशः । एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति ॥

( प्रदीपः ) तिग्रहण इति । वार्तं=युक्तं प्रातिपदिकत्वमित्यर्थः ॥

( उद्द्योतः ) वार्तं युक्तमिति । वार्तशब्दो युक्तपर्यायोऽसारपर्यायश्च ॥ भाष्ये—ऊङ्ग्रहणे चेति । श्वश्रूशब्दः "श्वशुरः श्वश्र्वा" इति निर्देशादनूङन्त एवायमव्युत्पन्न इति भावः ॥

( आक्षेपसमर्थकभाष्यम् )

यद्येष[2] ऊङोऽग्रहणे हेतुः । आब्ग्रहणमपि न कर्तव्यम् । आबपि ह्यकारान्ताद्विधीयते । तत्रैकादेशः । एकादेशे कृतेऽन्तादिवद्भावात्प्रातिपदिकसंज्ञा भविष्यति ॥

यस्तर्ह्यनकारान्तात्—क्रुञ्चा, उष्णिहा, देवविशेति । अत्राप्यकारान्ताद् वृत्तिर्लक्ष्यते—क्रुञ्चानालभेत, उष्णिहककुभौ, देवविशं च मनुष्यविशं चेति ॥

( प्रदीपः ) क्रुञ्चानिति । अजादिषु[3] तु पाठो जातिलक्षणङीष्बाधनार्थः ॥

( उद्द्योतः ) अदन्तत्वेऽजादि पाठो व्यर्थ इत्यत आह—अजादिष्विति ॥

( आब्ग्रहणवादिभाष्यम् )

इह तावदुष्णिहककुभा[4]विति ।
आप एवैतदौत्तरपदिकं ह्रस्वत्वम् ॥

इह खल्वपि देवविशं[5] च मनुष्यविशं चेति ।
नास्ति विशेषः । अकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति ॥

( प्रदीपः ) आब्ग्रहणवाद्याह—इह तावदिति ॥ आप इति । ङ्यापोरिति ह्रस्वत्वं हलन्तादेव विहितस्याप इत्यर्थः ॥ इहेति । ततश्च देवविद्शब्दादेवामिति भावः ॥

( उद्द्योतः ) हलन्तादेवेति । एवं[6]कारो भिन्नक्रमः । हलन्ताद्विहितस्याप एवेत्यर्थः ॥ नन्वविशेषे 'अकारान्तादम्' इति सोऽप्यस्तीति तत आपि, अन्तवद्भावेन सिद्धमत आह—देवविद् शब्दादेवामिति । एवं चाप्यवहृतादन्तत्वे मानाभावेन नाकारान्तादाप् वक्तुं शक्य इति भावः । देवविट् शब्दादेवाबिति पाठेऽप्युक्त एवार्थः ॥

( प्रत्याख्यानवादिभाष्यम् )

यत्तावदुच्यते—
इह तावदुष्णिहककुभावित्याप एवैतदौत्तरपदिकं ह्रस्वत्वमिति ॥
संज्ञाछन्दसोरित्येवं तत् ॥
नैषा संज्ञा, नापीदं छन्दः ॥

यदप्युच्यते इह खल्वपि देवविशं च मनुष्यविशं चेति ॥

नास्ति विशेषः—अकारान्तादम उत्पत्तौ सत्यां व्यञ्जनान्ताद्वेति ॥

स्वरे[7] विशेषः—यद्यत्र व्यञ्जनान्तादुत्पत्तिः स्याद् देवविशं[8]मित्येवं स्वरः प्रसज्येत । देवविशमिति चेष्यते । तस्मात्क एष एवं विषयः ॥

( प्रदीपः ) आब्ग्रहणप्रत्याख्यानवाद्याह—यत्तावदिति । स्वरे विशेष इति । क्विबन्तस्य कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तत्वाद्विभक्तेः सुप्त्वादनुदात्तत्वं भवति । यदा तु मूलविभुजादित्वाद् 'देवविश' शब्दः कप्रत्ययान्तस्तदा थाथादिस्वरेणान्तोदात्तत्वाद्विभक्त्या च सहैकादेश उदात्तो भवति ॥

( उद्द्योतः ) भाष्ये—तस्मात्क एष इति । कप्रत्ययान्तोऽदन्त एव एवं विषयः—देवविशं देवविशेत्यादिप्रयोगविषयो न हलंत इत्यर्थः । अनेनातिप्रसङ्गो वारितः । एतेन हलन्तेभ्योऽपि टाबिति भागुरिमतं चिन्त्यमिति सूचितम् ॥

( आब्ग्रहणवादिभाष्यम् )

इदं तर्हि—"पादोऽन्यतरस्याम्" "टाबृचि"[9] इति ॥
ऋ[10]चीत्युच्यते ॥
तत्र च्छान्दसत्वाद्भविष्यति ॥

ऋचीति नेदं छन्दो विवक्षितम्—काठकं कालापकं मौदकं पैप्पलादकं वा । किं तर्हि—प्रत्ययार्थविशेषणमेतत् । ऋक्चेत्प्रत्ययार्थो भवतीति ॥

एतदपि नास्ति प्रयोजनम् । पद[11]शब्दः पादशब्दसमानार्थोऽकारान्तश्छन्दसि दृश्यते—तस्याः सता-

---

१ ननु श्वशुरस्य स्त्रीत्यर्थविवक्षायां श्वशुरस्योकाराकारलोपश्चेत्यनेन श्वशुरशब्दादूङि उकाराकार लोपे च श्वश्रूरिति सिध्यति । तत्रैकादेशाभावेनान्तादिवद्भावात्प्रातिपदिकसंज्ञोङन्तस्य न स्यादित्यसङ्गतमित्यत आह—श्वश्रूशब्द इति ॥

२ समानप्रतिपत्त्याऽऽशङ्कते—यद्येष इति ॥

३ नन्वदन्तत्वादेव क्रुञ्चादिभ्यष्टापि सिद्धेऽजादि पाठो व्यर्थः स्यादत आह—अजादिष्विति । सपाठो बाधकबाधनार्थ इति भावः ॥

४ ककुभ् शब्दाट्टापि ङ्यापोरित्यनेन ह्रस्वः । एवंचानकारान्तात्तस्माट्टापि प्रातिपदिकसंज्ञार्थमावश्यकमाप्ग्रहणमिति भावः ॥

५ देवविशं च मनुष्यविशं चेति प्रयोगादकारान्त एव देवविशशब्द इति ज्ञातुमशक्यमित्यर्थः ॥

६ ननु 'आप एवैतत्' इति भाष्यस्य व्याख्यानं कैयटेन 'ङ्यापोरिति ह्रस्वत्वं हलन्तादेव' इत्यादिना कृतमनुपपन्नं यतो भाष्ये 'एव'कारस्यापपदोत्तरमेवान्वयादत आह—एवकारो भिन्नेति ॥

७ हलन्तात्कृत्स्वरेणान्तोदात्तादम अनुदात्तत्वे 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन शकाराकारस्य स्वरितत्वमिति भावः ॥

८ देवविशशब्दस्याकारान्तत्वे शकाराकारस्योदात्तत्वमिति भावः ॥

९ ननु 'टाबृचि' इत्यनेन हलन्तात्पादशब्दाट्टाब् विधीयते, तत्र प्रातिपदिकसंज्ञार्थमाब्ग्रहणं स्यादित्यत आह—ऋचीत्युच्यत इति ॥

१० स्त्रीप्रत्ययस्य द्योतकत्वे ऋक् चेत्प्रकृतिप्रत्ययसमुदायस्यार्थ इति भावः ॥

११ अत्र टाबृचीत्यस्य प्रत्याख्यानं सूचयति भाष्यकारः । सूत्रसत्त्वे 'एकपदा' इति प्रयोगो भवति, स च पादशब्दसमानार्थपदशब्दमाश्रित्य तदन्तात्टापि सिध्यतीति सूत्रं न कार्यमिति भावः ॥

क्षरमेकं पदम्, एकः पाद इत्यर्थः । तस्मादुत्पत्तिर्भविष्यति ॥

इदं तर्हि—"डाबुभाभ्यामन्यतरस्याम्" इति । बहुराजा बहुराजे बहुराजा इति ॥

( प्रदीपः ) तत्र च्छान्दसत्वादिति । अप्रातिपदिकत्वेऽपि प्रत्ययोत्पत्तिरिति शेषः ॥

( उद्द्योतः ) भविष्यति—इत्यस्य किमित्याकाङ्क्षायामाह—अप्रातिपदिकत्वेऽपीति ॥ भाष्ये—पदशब्द इति । छन्दसि दृष्टस्य लोकेऽपि क्वचित्प्रयोगाङ्गीकारे बाधकाभावेनाकारान्तादेव प्रत्ययः । एवं च टाबृचीति सूत्रं न कार्यमिति भावः । एवं च ऋचि वाच्यायामपि एकपदी एकपादित्यस्य भाष्यरीत्या सत्त्वेन टाबृचीति सूत्रारम्भेऽपि तत्रान्यतरस्यां ग्रहणानुवृत्त्या तत्साध्यमिति सूचितम् ॥ भाष्ये—बहुराजेतीति । वाचा निशा दिशादेरप्युपलक्षणमिदम् ॥

( ५०९७ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् ॥ * ॥

( भाष्यम् ) ङ्याब्ग्रहणमनर्थकम् ॥

किं कारणम् ?

'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात्' ॥

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येषा परिभाषा कर्तव्या ।

कः पुनरत्र विशेषः ?

एषा वा परिभाषा क्रियेत, ङ्याब्ग्रहणं वा ?

अवश्यमेषा परिभाषा कर्तव्या । बहून्येतस्याः परिभाषायाः प्रयोजनानि ॥

( प्रदीपः ) लिङ्गविशिष्टस्येति । यथा कथञ्चित् प्रातिपदिकग्रहण एषा परिभाषोपतिष्ठते न तु प्रातिपदिकस्य स्वरूपेण ग्रहण एवेति भावः ॥ कः पुनरिति । ङ्याब्ग्रहणं लघु, न तु परिभाषेति भावः ॥

( उद्द्योतः ) स्वरूपग्रहण एवेति । विशिष्यैग्रहण एवेत्यर्थः । अत एव भाष्ये—'प्रमाणे द्वयसच्' इति फलेषु 'ञ्नित्यादिः' इति च दोषेषु, उक्तं संगच्छते । 'कः पुनः' इति प्रश्ने विशेषाभावमात्रं न विवक्षितमित्याह—लघ्विति ॥

( जिज्ञासाभाष्यम् )

कानि ?

१ अकारान्ताड्डापि कृतेऽपि डित्वाट्टिलोपे जाते हलन्तात्पर एवाबिति तत्र प्रातिपदिकसंज्ञार्थमाब्ग्रहणमिति भावः ॥

२ प्रातिपदिकत्वतद्व्याप्यधर्मग्रहण एवैषा परिभाषोपतिष्ठते न तु प्रातिपदिकाप्रातिपदिकग्रहण इति भावः ॥

३ प्रातिपदिकत्वव्याप्यधर्मपुरस्कारेणैवेत्यर्थः ॥

४ अत्रोभयत्रापि प्रातिपदिकसामान्यग्रहणमेवेति भावः ॥

( ५०९८ प्रयोजनवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् ॥ * ॥

( भाष्यम् ) सर्वनामविधिः प्रयोजनम् । सर्वनाम्नः सुड्हैव स्यात्—येषाम्, तेषाम् ॥

यासाम्, तासामित्यत्र न स्यात् ॥

( प्रयोजनखण्डनभाष्यम् )

नैतदस्ति प्रयोजनम् ।

अवर्णान्ताट्टाड्विधीयते । तत्रैकादेशे कृतेऽन्तादिवद्भावात्सुड् भविष्यति ॥

( प्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—"सर्वनाम्नस्तृतीया च" इहैव स्यात्—भवता हेतुना, भवतो हेतोरिति ।

भवत्या हेतुना, भवत्या हेतोरित्यत्र न स्यात् । सर्वनाम ॥

( व्याख्यानभाष्यम् )

स्वर, "कुसूलकूपकुम्भशालं बिले" इहैव स्यात्—कुसूलबिलम् ।

कुसूलीबिलमित्यत्र च न स्यात् । स्वर ॥

( व्याख्यानभाष्यम् )

समास द्वितीया श्रितादिभिः सह समस्यते । इहैव स्यात्—कष्टं श्रितः=कष्टश्रितः ।

कष्टं श्रिता=कष्टश्रितेत्यत्र न स्यात् ॥

( वार्तिकोक्तप्रयोजनखण्डनभाष्यम् )

एतदपि नास्ति प्रयोजनम् । श्रितशब्दोऽकारान्तस्तत्रैकादेशे कृतेऽन्तादिवद्भावाद्भविष्यति ॥

( प्रयोजनभाष्यम् )

इदं तर्हि—पूर्वसदृशेति । इहैव स्यात्—पित्रा सदृशः=पितृसदृशः ॥

पित्रा सदृशी=पितृसदृशीत्यत्र न स्यात् । समास ॥

( व्याख्यानभाष्यम् )

तद्धितविधि, "अचित्तहस्तिधेनोष्ठक्" इहैव स्यात्—हस्तिनां समूहो हास्तिकम् ॥

हस्तिनीनां समूहो हास्तिकमित्यत्र न स्यात् ॥

( प्रयोजननिरासभाष्यम् )

एतदपि नास्ति प्रयोजनम् । पुंवद्भावेनैतत्सिद्धम् ॥

५ 'कुसूलादीन्यन्तोदात्तानि बिलपरे' एतदर्थकेन कुसूलीशब्दस्य कुसूलशब्दत्वाभावेनायं स्वरो न स्यादिति भावः ॥

६ श्रिताशब्दस्य श्रितशब्दत्वाभावेनास्य प्रवृत्तिर्न स्यादित्यर्थः ॥

७ हस्तिनीशब्दस्य पुंवद्भावे प्रत्ययोत्पत्तेः पूर्वं कृते हस्तिशब्दत्वेन तत्राचित्तहस्तीत्यस्य सुलभप्रवेशेनेष्टसिद्धेः ॥

( उद्द्योतः ) भाष्ये—पुंवद्भावेनैतत्सिद्धमिति । भस्याढे तद्धिते सिद्धश्च[1] प्रत्ययविधावित्युक्तेरिति भावः ॥

( प्रयोजनभाष्यम् )

इदं तर्हि—प्रमाणे द्वयसच् । यथेह भवति—हस्तिद्वयसम्, हस्तिमात्रम् । एवं हस्तिनीद्वयसम्[2], हस्तिनीमात्रमित्यपि यथा स्यात् । तद्धितविधि ॥

( व्याख्यानभाष्यम् )

लुक्, "नेन्सिद्धबध्नातिषु च" इहैव स्यात्—स्थण्डिलशायी ॥

स्थण्डिलशायिनीत्यत्र न स्यात् । लुक् ॥

( प्रदीपः ) स्थण्डिलशायिनीति । गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेरिति वचनादनुत्पन्न एव ङीपि समासे सति, इन्नन्तमेवोत्तरपदमित्यप्रयोजनमेतत्[3] । एवं ग्रामेवासिनी, दर्शनीयमानिनी, दीर्घमुखमानिनीत्यपि द्रष्टव्यम् ॥

( उद्द्योतः ) अप्रयोजनमिति । तदनित्यत्वाश्रयेण भाष्यम् । किं चास्याः परिभाषायाः प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गविशिष्टेऽतिदेश इत्यर्थ इति बहुव्रीहेरूधस इति सूत्रभाष्ये व्यक्तीभविष्यति । एवं च समासोत्तरमप्यन्तरङ्गत्वाल्लुकः पूर्वं ङीपि तेन न्यायेनोत्तरपदत्वस्य तद्विशिष्ट एव सत्त्वेन लुगलुगादि न स्यादिति सा तदर्थमावश्यकीत्याशयः । एतदपि भाष्यं तत्र मानमित्यन्ये[4] ॥

( व्याख्यानभाष्यम् )

अलुक् "शयवासवासिष्वकालात्" इहैव स्यात्—ग्रामेवासी ॥

ग्रामेवासिनीत्यत्र न स्यात्[5] ॥

( ५०९९ परिभाषाप्रयोजनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ मानिनि च विधिप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) मानिनि च विधिप्रतिषेधार्थं प्रयोजनम्—विध्यर्थं तावत् "क्यङ्मानिनोश्च" इहैव स्यात् । दर्शनीयमानी ॥

दर्शनीयमानिनीत्यत्र न स्यात् ॥

प्रतिषेधार्थमपि । वक्ष्यति "स्वाङ्गाच्चेतोऽमानिनि" तस्मिन् क्रियमाणे इहैव स्यात्—दीर्घमुखमानी ॥

दीर्घमुखमानिनीत्यत्र न स्यात् ॥

( ५१०० परिभाषाप्रयोजनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ प्रत्ययग्रहणोपचारेषु च ॥ * ॥

( भाष्यम् ) प्रत्ययग्रहणोपचारेषु च प्रयोजनम् । "तृजकाभ्यां कर्तरि" इहैव स्यात्—अपां स्रष्टा ॥

अपां स्रष्ट्रीत्यत्र न स्यात् । प्रत्यय ॥

उपचार—"अतः कृकमिकंसकुम्भ" इहैव स्यात्—अयस्कुम्भः ॥

अयस्कुम्भीत्यत्र न स्यात् ॥

( परिभाषाफलोपसंहारभाष्यम् )

एतान्येतस्याः परिभाषायाः प्रयोजनानि । यदर्थमेषा परिभाषा कर्तव्या ॥

एतस्यां च सत्यां नार्थो ङ्याब्ग्रहणेन ॥

( ५१०१ परिभाषाक्षेपवार्तिकम् ॥ ८ ॥ )

॥ * ॥ अतिप्रसङ्ग उपपदविधौ ॥ * ॥

( भाष्यम् ) उपपदविधावतिप्रसङ्गो भवति "द्विषत्परयोस्तापेः" यथेह भवति—द्विषन्तप इति ॥

एवं द्विषतीताप[6] इत्यत्रापि स्यात् ॥

( उद्द्योतः ) परः परिभाषास्वीकारे दोषानुद्भावयति—अतिप्रसङ्ग इत्यादि ॥

( ५१०२ परिभाषाक्षेपे द्वितीयवार्तिकम् ॥ ९ ॥ )

॥ * ॥ यञिञोः फकि ॥ * ॥

( भाष्यम् ) यञिञोः फक्यतिप्रसङ्गो भवति । यथेह भवति—गार्ग्यायणः, दाक्षायणः ॥

एवं गार्गेयो दाक्षेय इत्यत्रापि स्यात् ॥

नैष दोषः ॥

ढगत्र बाधको भविष्यति ॥

( प्रदीपः ) ढगत्रेति । परत्वादिति भावः ॥

( उद्द्योतः ) अपवादत्वाधसम्भवादाह—परत्वादिति । ढकोवकाशो दात्तेय इति ॥

( ५१०३ परिभाषाक्षेपे तृतीयवार्तिकम् ॥ १० ॥ )

॥ * ॥ समासान्तेषु च ॥ * ॥

( भाष्यम् ) समासान्तेषु चातिप्रसङ्गो भवति

---

१ बहुपूगगणसंघस्येति सूत्रे प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापीति परिभाषया बह्वीशब्दात्प्रत्यये कृते 'पुंवद्वचनं च' इति वार्तिकखण्डनावसरे 'न भस्याढे तद्धिते पुंवद्भवतीति सिद्धम् । भस्येत्युच्यते यजादौ च भं भवति । नात्र यजादिं पश्यामः । इदमिह सम्प्रधार्यं तिथुक् क्रियतां पुंवद्भाव इति । परत्वात्पुंवद्भावो नित्यस्तिथुक् । पुंवद्भावे कृते पुनः प्रसङ्गविज्ञानात्तिथुक् सिद्धः' इति भगवतोक्तम् । तेन प्राक् प्रत्ययोत्पत्तेः पुंवद्भाव इत्यर्थ इति कैयटेन व्याख्यातम् । तथा च प्रत्ययविधौ पूर्वम्पुंवद्भावः सिद्ध इति भाष्याशय इति भावः ॥

२ प्रमाणेद्वयसजित्यस्य समर्थात्प्रातिपदिकात्प्रमाणेद्वयसजादयो भवन्तीत्यर्थात् ङ्याबधिकाराभावे हस्तिनीशब्दस्य प्रातिपदिकत्वाभावेन स न स्यादित्यर्थः ॥

३ प्रातिपदिकग्रहणेति परिभाषया प्रातिपदिकवृत्त्युत्तरपदत्वस्य ङीन्विशिष्टेऽतिदेशेन तद्विशिष्ट एवोत्तरपदत्वमिति भावः ॥

४ प्रातिपदिकत्वतद्व्याप्यधर्माणां लिङ्गप्रत्ययरहिते दृष्टानान्तद्विशिष्टेप्यतिदेश इति लिङ्गविशिष्टपरिभाषाया अर्थ इत्यत्र मानमिति भावः ॥

५ अत्रापि गतिकारकोपपदानां कृद्भिः सहेति वचनात् ङीबुत्पत्तेः प्राक् समासेऽलुकि च ङीप्यपीष्टसिद्धिः ॥ ङीबुत्पत्तावपि वासिशब्दपरत्वमपि सुसाधम् ॥

६ द्विषच्छब्दत्वन्द्विषतीशब्देऽनयापरिभाषयाऽतिदिश्येत । तथा च मुम्, स्यादिति भावः ॥

"राजाहःसखिभ्यष्टच्" यथेह भवति—मद्रराजः, कश्मीरराजः ॥

एवं मद्रराज्ञी कश्मीरराज्ञीत्यत्रापि स्यात् ॥

( आक्षेपभाष्यम् )

न वा भवति मद्रराजीति ॥

( उपपादकभाष्यम् )

भवति, यदा समासान्तादीकारः । लिङ्गविशिष्टग्रहणे तु ईकारान्तात्समासान्तः प्रसज्येत ॥

तत्र को दोषः? पुंवद्भावष्टिलोपश्च । तत्र मद्रराजीत्येवं रूपं स्यात् । मद्रराज्ञीति चेष्यते ॥

( प्रदीपः ) समासान्तादीकार इति । मद्रराजस्य भार्या मद्रराजीति पुंयोगादाख्यायामिति ङीष् ॥ तत्र को दोष इति । टचि कृते यस्येति चेतीकारे लुप्ते टित्वाद् ङीपि कृते मद्रराज्ञीति सिध्यतीति प्रश्नः ॥

( उद्द्योतः ) ईकारे लुप्त इति । तस्याभीयत्वेनासिद्धत्वान् 'नस्त' इति टिलोपाभावे 'अल्लोपो नः' इत्यकार लोपे यस्येति लोपे च सतीत्यर्थः ॥ भाष्ये—पुंवद्भावष्टिलोपश्चेति । भस्याढ इति पुंवत्वम्, नस्तद्धित इति टिलोप इत्यर्थः ॥

( ५१०४ परिभाषाक्षेपे चतुर्थवार्तिकम् ॥ ११ ॥ )

॥ * ॥ महदात्वे प्रियादिषु ॥ * ॥

( भाष्यम् ) महदात्वे प्रियादिष्वतिप्रसङ्गो भवति । "आन्महतः समानाधिकरणजातीययोः" इति यथेह भवति महान् प्रियोऽस्य महाप्रियः ॥

एवं महती प्रियाऽस्य महतीप्रिय इत्यत्रापि स्यात् ॥

किमुच्यते प्रियादिष्विति? यत्र पुंवद्भावः प्रतिषिध्यते ॥[1]

यत्र तु न प्रतिषिध्यते भवितव्यमेव तत्रात्वेनेति ॥

( प्रदीपः ) यत्र पुंवद्भाव इति । तत्रापूरणीप्रियादिष्विति वचनात् ॥ यत्र त्विति । महाजङ्घ इत्यादौ ॥

( उद्द्योतः ) महाजङ्घ इति । महती जङ्घा यस्येति समासे 'स्त्रियाः' इति पुंवत्वे आत्वं भवत्येवेत्यर्थः ॥

( ५१०५ परिभाषाक्षेपे पञ्चमवार्तिकम् ॥ १२ ॥ )

॥ * ॥ ञ्नित्स्वरे ॥ * ॥

( भाष्यम् ) ञ्नित्स्वरेऽतिप्रसङ्गो भवति "ञ्नित्यादिः" उदात्तो भवतीति । यथेह भवति—दाक्षिः, अहिचुम्बकायनिः ॥

एवं दाक्षी, अहिचुम्बकायनीत्यत्रापि स्यात् ॥

( प्रदीपः ) दाक्षीति । इतो मनुष्यजातेरिति ङीष् प्रत्ययस्वरेणान्तोदात्त इष्यते ॥

( ५१०६ परिभाषाक्षेपे षष्ठवार्तिकम् ॥ १३ ॥ )

॥ * ॥ राज्ञः स्वरे ब्राह्मणकुमारयोः ॥ * ॥

( भाष्यम् ) राज्ञः स्वरे ब्राह्मणकुमारयोरतिप्रसङ्गो भवति "राजा च" ब्राह्मणकुमारयोरिति । यथेह भवति—राजब्राह्मणः, राजकुमारः ॥

एवं राजब्राह्मणी, राजकुमारीत्यत्रापि स्यात् ॥

( उद्द्योतः ) इष्यत इति । आद्युदात्तं तु पदं प्राप्नोतीत्यर्थः ॥

( ५१०७ परिभाषाक्षेपे सप्तमवार्तिकम् ॥ १४ ॥ )

॥ * ॥ समाससंघातग्रहणेषु च ॥ * ॥

( भाष्यम् ) समाससंघातग्रहणेषु चातिप्रसङ्गो भवति "बहोर्नञ्वदुत्तरपदभूम्नि"[2] यथेह भवति—बहुगोमान् बहुयवमान् ॥

एवं बहुगोमती बहुयवमतीत्यत्रापि स्यात् ।

( प्रदीपः ) बहोर्नञ्वदिति । बहुशब्दादुत्तरपदबहुत्वे वर्तमानाद्यत्परं पदं तदन्तस्य[3] समासस्य नञ इव स्वरो भवतीत्यतिदेशार्थः । तेन बहवो गोमन्तोऽस्य बहुगोमानित्यत्र 'नञ्सुभ्याम्' इति समासान्तोदात्तत्वं भवति ॥ बहुगोमतीति । बहवो गोमन्तोऽस्या इति बहुव्रीहिः, उगितश्चेति ङीप् । समासोऽत्र संघातरूपः कार्यीति लिङ्गविशिष्टसमासाग्रहणात्समासान्तोदात्तत्वाभावादीकारः पित्त्वादनुदात्तो भवति, ईकारात्तु पूर्व उदात्तो भवति ॥

( उद्द्योतः ) अत्र यथा पूर्वोत्तरपदरूपसमाससंघातग्रहणं तथा सूत्रार्थव्याजेन दर्शयति—बह्विति ॥ बहवो गोमंत्यो यस्या इति विग्रहे एतत्प्रवृत्तेरिष्टत्वादाह—बहवो गोमंतोऽस्या इति ॥ ईकारात्पूर्व इति । ततः पूर्वो मशब्दाकारो बहोरिति सूत्रेणोदात्त इत्यर्थः ॥

( संघातपदाक्षेपभाष्यम् )

किमुच्यते समाससंघातग्रहणेष्विति? ॥

( संघातपदप्रयोजनभाष्यम् )

यदवयवग्रहणं प्रयोजनमेवैतस्याः परिभाषायाः

---

१ प्रियादिभिन्नेषु परेष्वपि स्त्रीलिङ्गमहच्छब्दस्यात्वापत्तिरूपदोषसत्वेन महदात्वे प्रियादिष्वित्यत्र प्रियादिष्वति किमर्थमिति प्रश्नाशयः । प्रियादिभिन्नेषु परेषु पुंवद्भावेन स्त्रीलिङ्गमहच्छब्दस्य सम्भव एव नास्तीति प्रियादिपदम्पुंवद्भावप्रतिषेधपरमित्युत्तराशयः ॥

२ बहुगोमतीत्यत्र ङीबन्तविशिष्टस्य समासस्वरः स्यात् । न च बहोर्नञिति सूत्रे प्रातिपदिकपदाभावेन नात्रास्याः परिभाषायाः प्राप्तिरिति वाच्यम् । लिङ्गविशिष्टपरिभाषा हि प्रातिपदिकत्वतद्व्याप्यधर्मग्रहणे प्रवर्तत इति सिद्धान्तात् । अत्र हि प्रातिपदिकत्वव्याप्यधर्मः समासपदेन गृहीत इति दोषापादनम् ॥

३ वस्तुतस्तु ङीबन्तस्य समासत्वरूपप्रातिपदिकत्वव्याप्यधर्मत्वेऽपि बहुशब्दाद्यत्परं पदं तदन्तत्वाभावेन नात्र ङीब्विशिष्टस्य स्वरापत्तिः ॥

४ उत्तरपदचरमावयवकसमुदायस्यैव बहोर्नञिति सूत्रेण स्वरविधानादुत्तरपदत्वं च ङीब्विशिष्टेऽसम्भवात्परिभाषास्वीकारेऽपि नायन्दोष इति भावः ॥

५ अत्र हि ङीब्विशिष्टस्यैवोत्तरपदत्वेन नानया किञ्चिदनिष्टापादनम् ॥

"कुसूलकूपकुम्भशालं बिले" कुसूलीबिलमिति यथा ॥

( प्रदीपः ) कुसूलीबिलमिति । पूर्वपदस्यात्र कार्यित्वम्, न तु संघातस्येति पूर्वपदान्तोदात्तत्वं भवत्येव ॥

( ५१०८ परिभाषाक्षेपेऽमँष्टवार्तिकम् ॥ १५ ॥ )

## ॥ * ॥ विभक्तौ चोक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ? न वा विभक्तौ लिङ्गविशिष्टाग्रहणादिति ॥

( प्रदीपः ) विभक्तौ चोक्तमिति । उगिदचामित्यत्रोक्तम्—यथा गोमानित्यत्र नुम्भवति, एवं गोमतीत्यत्रापि प्राप्नोति । तत्र परिहार उक्तः—'न वा विभक्तौ लिङ्गविशिष्टाग्रहणात्' इति । विभक्त्याश्रयकार्ये क्रियमाणे लिङ्गविशिष्टपरिभाषा नेष्यत इत्यर्थः ॥

( उद्द्योतः ) उगिदचामित्यत्रेति । युवोरनाका[1]विति सूत्रे तत्सूत्रमपि गृहीत्वाऽस्यार्थस्योक्तत्वादिति बोध्यम् ॥

( परिभाषोपसंहारभाष्यम् )

एतेऽस्याः परिभाषाया दोषाः, एतानि च प्रयोजनानि स्युः ॥

एते दोषाः समा भूयांसो वा ?

तस्मान्नार्थोऽनया परिभाषया ॥

न हि दोषाः सन्तीति परिभाषा न कर्तव्या । लक्षणं वा न परिणेयम् ॥

न हि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते । न च मृगाः सन्तीति यवा नोप्यन्ते ॥

दोषाः खल्वपि साकल्येन परिगणिताः । प्रयोजनानामुदाहरणमात्रम् । कुत एतत् । न हि दोषाणां लक्षणमस्तीति ॥

तस्माद्यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा परिभाषा कर्तव्या, प्रतिविधेयं च दोषेषु ॥

( प्रदीपः ) प्रतिविधेयमिति । अच्प्रकरणे शक्तिलाङ्गुलाङ्कुशेत्यत्र वार्तिके घटग्रहणेनैव घटीग्रहणे सिद्धे घटीग्रहणमस्याः परिभाषाया अनित्यत्वज्ञापनार्थम्, तेनानिष्टविषये नोपतिष्ठते ॥

( उद्द्योतः ) दोषोद्भावयिता आह—एते दोषा इति । मदुक्ता इत्यर्थः ॥ एतानि च=त्वदुक्तानि ॥ समा भूयांसो वेति । अन्येषामपि दोषाणां सत्त्वादित्यभिमानः[2] । परिभाषावाद्याह—नहि दोषा इत्यादि ॥ आरंभे युक्त्यन्तरमाह—दोषाः खल्वपीति । अन्यत्र दोषाभावादिति भावः ॥

( ५१०९ ङ्याप्प्रयोजनवार्तिकम् ॥ १६ ॥ )

## ॥ * ॥ तद्धितविधानार्थं तु ॥ * ॥

( भाष्यम् ) तद्धितविधानार्थं तु ङ्याब्ग्रहणं कर्तव्यं ङ्याबन्तात्तद्धितोत्पत्तिर्यथा स्यात्—कालितरा, हरणितरा, खट्वातरा, मालातरा ॥

( प्रदीपः ) तद्धितविधानार्थं त्विति । सति ङ्याब्ग्रहणे तद्धितविधौ प्रकृतित्रयाधिकारसामर्थ्यात् पूर्वं ङ्यापौ भवतः, तदन्तात्तद्धित इत्यर्थः ॥

( उद्द्योतः ) ननु ङ्याप्ग्रहणे कृतेऽपि प्रातिपदिकत्वमाश्रित्य परत्वात्तद्धितः स्यादत आह—सतीति । प्रकृतित्रयाधिकारसामर्थ्यादिति पाठः ॥

( आक्षेपभाष्यम् )

किं पुनः कारणं न सिध्यति ?

( ५११० आक्षेपसाधकवार्तिकम् ॥ १७ ॥ )

## ॥ * ॥ विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् ॥ * ॥

( भाष्यम् ) विप्रतिषेधाद्धि तद्धितोत्पत्तिः प्राप्नोति ॥

( प्रदीपः ) विप्रतिषेधाद्धीति । स्त्रीप्रत्यय[3]स्यावकाशो यत्र प्रकर्षो न विवक्ष्यते—कालीति । प्रकर्षप्रत्ययस्यावकाशो यत्र स्त्रीत्वाविवक्षा—कालतर इति । स्त्रीत्वप्रकर्षयोस्तु युगपद्विवक्षायां परत्वात्प्रकर्षप्रत्ययः स्यादित्यर्थः ॥ ननु स्त्रीत्वस्यान्तरङ्गत्वात्तन्निमित्तः प्रत्ययोन्तरङ्गः, प्रकर्षस्तु बाह्यप्रति[4]योग्यपेक्षत्वाद् बहिरङ्गः । ततस्तन्निमित्तस्य प्रत्ययस्यापि बहिरङ्गत्वम् । अन्तरङ्गबहिरङ्गयोश्चायुक्तो विप्रतिषेधः । तथा च वक्ष्यते—'स्वार्थ[5]मभिधाय शब्दो निरपेक्षो[6] द्रव्यमाह । समवेतं[7] समवेतस्य च वचने[8] लिङ्गं संख्यां विभक्तिं चाभिधाय तान्विशेषा[9]नपेक्षमाणश्च कृत्स्नमात्मानं प्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ विभक्त्यन्त इति' । [10]एवं तर्ह्येतत्क्रमानाश्रयेण लौकिके प्रयोगे पदादुच्चरिताद्युगपदर्थाः प्रतीयन्त इति लौकिकार्थव्यवस्थाङ्गीकरणेन प्रातिपदिकार्थगतस्त्रीत्वप्रकर्षविवक्षाश्रयेण विप्रतिषेध उक्तः ॥

---

१ तत्सूत्रे 'विप्रतिषेधाट्टापो बलीयस्त्वम्, इति वार्तिकव्याख्यानावसरे 'उगितश्च' इति सूत्रव्याख्यायामयमर्थः प्रकाशित इति भावः ॥

२ पूर्वपक्षिण इति शेषः । दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेः । अस्याः परिभाषाया अनित्यत्वादेतावत्स्वेवाप्रवृत्तिरित्यर्थः ॥

३ तुल्यबलविरोधम्प्रदर्शयति—स्त्रीप्रत्ययेति ॥

४ तरबर्थप्रतियोगि च स्वार्थे समासम्पदमिति स्त्रीप्रत्ययस्य पूर्वम्प्रवृत्तत्वेनान्तरङ्गत्वमिति भावः ॥

५ स्वार्थे परिपूर्णः शब्द इत्यर्थः ॥

६ स्वार्थापेक्षारहितः ॥

७ स्वार्थे समवेतम् ॥

८ वचने=बोधने ॥

९ तान्विशेषान्=लिङ्गसंख्याविभक्तिनिमित्तान् प्रत्ययादीनित्यर्थः ॥

१० ननु स्त्रीप्रत्ययस्यान्तरङ्गत्वेन पूर्वम्प्रवृत्तौ विप्रतिषेधादित्ययुक्तमत आह—एवमिति ॥

( उद्द्योतः ) बाह्यप्रतियोग्यपेक्षत्वादिति । तदपेक्षप्रकर्षाद्यन्वयश्च स्वार्थे समाप्तस्यैवेति तरबादिर्बहिरङ्ग इति भावः ॥ स्वार्थमिति । स्वार्थेऽत्र प्रवृत्तिनिमित्तं समवेतम् । तेन स्वार्थेनाश्रितमित्यर्थः । विभक्तिः=कारकम्, यतः कृत्स्नमात्मानमपेक्षमाणः पूर्वं तत्तद्विषयकाकाङ्क्षावानतः—ततः क्रियादिषु प्रवर्तत इत्यन्वयः ॥ युगपदर्था इति । शब्दबुद्धिकर्मणां विरम्य व्यापारायोगादिति भावः । न तु शास्त्रे कल्पितां कल्पितन्यायवशादारोपितक्रमवतीमर्थवत्तामाश्रित्येति तात्पर्यम् । तदाश्रयणे तु सत्यंतरङ्गत्वादेव पूर्वं स्त्रीप्रत्यये व्यर्थमेव ङ्याप्ग्रहणमिति भावः ॥

( ५१११ ङ्याब्ग्रहणे दोषवार्तिकम् ॥ १८ ॥ )

## ॥ * ॥ तत्र समासान्तेषु दोषः ॥ * ॥

( भाष्यम् ) तत्र समासान्तेषु दोषो भवति—बहुगोमत्का, बहुयवमत्का ॥

समासान्ता अपि ङ्याबन्तात्स्युः ॥

( प्रदीपः ) समासान्ता अपीति । तत्र बहवो गोमन्तोऽस्या इति बहुव्रीहौ कृते ङीपि च कबुत्पत्तौ बहुगोमतीकेति प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—तत्र समान्तेषु दोष इत्यतः प्राक् 'तत्र को दोषः' इति क्वाचित्कोऽपपाठः । प्रश्नस्यानन्वयात्, बहुयवमत्केत्युत्तरं वा स ग्रन्थः । तत्र ङ्याप्ग्रहणे कृते समासान्तेषु दोष इति तदर्थः ॥

( ५११२ न्यूनतापूरकवार्तिकम् ॥ १९ ॥ )

## ॥ * ॥ त्यूङश्च ग्रहणम् ॥ * ॥

( भाष्यम् ) त्यूङश्चापि ग्रहणं कर्तव्यं भवति । युवतिका, ब्रह्मबन्धुकेति ॥

( प्रदीपः ) ब्रह्मबन्धुकेति । अज्ञाताद्यर्थविवक्षायामूङन्तात्कप्प्रत्यय इष्यते ॥

( वार्तिकाक्षेपभाष्यम् )

ऊङ्ग्रहणेन तावन्नार्थः । नास्त्यत्र विशेषः । उकारान्तादुत्पत्तौ सत्यामूङन्ताद्वा ॥

( प्रदीपः ) नास्त्यत्रेति । केण इति ह्रस्वविधानादिति भावः ॥

( उद्द्योतः ) ननु ह्रस्वदीर्घयोर्विशेषान्नास्त्यत्रेत्यनुपपन्नमत आह—केण इतीति ॥

( प्रयोजनभाष्यम् )

इदं तर्हि—युवतितरा, ब्रह्मबन्धुतरा, इति ॥

( प्रदीपः ) युवतितरेति । जातेश्चेति पुंवद्भावप्रतिषेधं मन्यते । यौवनस्य जातिरूपत्वात् ॥ ब्रह्मबन्धुतरेति । अत्र नद्याः शेषस्यान्यतरस्यामिति विकल्पेन ह्रस्वः ॥

( उद्द्योतः ) ननु युवतितरेत्यत्र तसिलादिष्विति पुंवत्त्वं दुर्वारमत आह—जातेश्चेतीति । एषां जातिकार्यस्य वैकल्पिकताया अग्रे वक्ष्यमाणत्वान्न 'अचः परस्मिन्' इति सूत्रस्थ युवजानिरिति भाष्यप्रयोगासङ्गतिः ॥ विकल्पेनेति । एवं च तदभावे दीर्घश्रवणार्थमूङन्तात्तद्धितोऽवश्यमङ्गीकार्य इति भावः ॥

( ५११३ दोषपरिहारवार्तिकम् ॥ २० ॥ )

## ॥ * ॥ तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः ॥ * ॥

( भाष्यम् ) तदन्तस्य च ङ्याबन्तस्य प्रत्ययार्थेनायोगात्तद्धितोत्पत्तिर्न प्राप्नोति । कालितरा, हरिणितरा, खट्वातरा, मालातरेति ॥

किं कारणम् ?

ङ्याबन्तमेतत् स्त्रीप्रधानम् । न च स्त्रीत्वस्य प्रकर्षाप्रकर्षौ स्तः ।

नैष दोषः ।

न हि किंचिदुच्यते—एवंजातीयकादुत्पत्तव्यमेवंजातीयकान्नेति ।

एतावदुच्यते—"अतिशायने तमबिष्ठनौ" "तिङश्च" इति । यस्य च प्रकर्षोऽस्ति तस्य प्रकर्षे प्रत्ययो भविष्यति । अस्ति चाप्रधानस्य गुणस्य प्रकर्षः ।

इह खल्वपि शुक्लतरः कृष्णतर इति ।

द्रव्यं प्रधानम् । गुणस्य च प्रकर्षे प्रत्यय उत्पद्यते ॥

( प्रदीपः ) न च स्त्रीत्वस्येति । तस्य सर्वत्रैकरूपत्वात् प्रकर्षाप्रकर्षाभाव इत्यर्थः ॥ इह खल्वपीति । सर्वत्र प्रधानस्य प्रकर्षाभावः । तदुक्तं हरिणा—

सर्वस्यैव प्रधानस्य न विना भेदहेतुना ।
प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम् ॥ इति ॥

ततश्च कालितरेत्यत्रापि कालगुणप्रकर्षाश्रयस्तरप्प्रत्ययः ॥

१ तदपेक्ष=प्रतियोग्यपेक्षेति भावः ॥

२ शब्दोच्चारणसमकालमेव तज्ज्ञानम्भवतीति स्वार्थे परिपूर्णमित्यादिक्रमो नापेक्ष्यत इति भावः ॥

३ ङ्याब्ग्रहणे दोषमाह—तत्र समासान्तेष्विति ॥

४ ङ्याब्ग्रहणाधिकारसामर्थ्यात्समासान्ता अपि स्त्रीप्रत्ययात्पूर्वं न स्युरित्यर्थः ॥

५ त्यूङ्ग्रहणाभावे च तद्धितः पूर्वं स्यादिति दोषः ॥

६ रूपे न विशेष इत्याशयः ॥

७ जातेरस्त्रीति सूत्रोक्तं जातिलक्षणद्वयमपि भाष्यकृतामभिमतम् । पूर्वलक्षणेन युवत्यादीनां जातित्वमुत्तरेण च नेति वैकल्पिकमेषां जातिकार्यमिति भावः ॥

८ ननु युवत्यादिशब्दानाञ्जातिवाचकत्वे युवजानिरिति भाष्यप्रयोगोऽसङ्गतः स्यादत आह—एषां जातीति ॥

९ तरप्प्रत्ययेन मत्वर्थमुख्यविशेष्यताश्रयस्यैव प्रकर्षो बोध्यत इत्यभिप्रायेणेदम् ॥

१० मत्वर्थमुख्यविशेष्यताश्रये गुणीभूतस्यापि मत्वर्थस्य प्रकर्षोऽनेन बोध्यत इत्याह—एतावदिति ॥

११ अत्र दृष्टान्तमाह—इह खल्वपीति ॥

( उद्द्योतः ) भाष्ये दोषान्तरमाह—तदन्तस्य चेति ॥ तस्य सर्वत्रेति । प्रत्ययार्थत्वात् शास्त्रीयं स्त्रीत्वं प्रधानम् ॥ सर्वस्यैवेति । भेदहेतुर्गुणादिकं विना न द्रव्यस्य स्वतः प्रकर्षः । नापि भेदहेतुं विना स द्रव्यरूपः प्रधानोऽर्थः शब्दाभिधेय इत्यर्थः । एवं च निरुपाधेर्व्यपदेशाभावाद्यदुपाधिकृतो व्यपदेशस्तन्निमित्त एव प्रकर्षः । उपाधिरपि यत्र प्रकर्षादिहीनस्तत्र तत्सहचरितगुणप्रकर्षो बोध्यः—यथा गोतर इत्यादौ । एवं गुणादिरेव यत्र प्रधानं तत्र तस्य द्रव्यायमाणत्वात्तत्संसर्गिधर्मान्तरनिमित्त एव प्रकर्षः, यथा शुक्लतरं रूपम्=अतिशयेन शुक्लमित्यर्थ इत्यादि बोध्यम् ॥

( ५११४ सिद्धान्तवार्तिकम् ॥ २१ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम्? 'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात्स्वार्थे टाबादयः' इति । प्रातिपदिकविशेषणं स्त्रीग्रहम्, स्वार्थिकाष्टाबादयः ॥

नैवं विज्ञायते—स्त्रियामभिधेयायामिति ॥

नापि स्त्रीसमानाधिकरणात्प्रातिपदिकादिति ॥

कथं तर्हि—यत्प्रातिपदिकं स्त्रियां वर्तते तस्माट्टाबादयो भवन्ति ॥

कस्मिन्नर्थे?

स्वार्थे इति ॥

( प्रदीपः ) उक्तं वेति । नात्र स्त्रीत्वं प्राधान्येन प्रत्ययाभिधेयम् । किं तर्हि, स्त्रीत्ववति द्रव्ये वर्तमानात् प्रातिपदिकात् स्वार्थे टाबादयः । ततश्च द्रव्यमेव प्राधान्येनाभिधीयते तस्य च व्यपदेशहेतुगुणप्रकर्षाश्रयातिशयविवक्षायां प्रकर्षप्रत्यय इत्यर्थः ॥

( उद्द्योतः ) स्त्रीत्ववति द्रव्ये इति । प्रातिपदिकविशेषणत्वादित्यस्य तदर्थविशेषणत्वादित्यर्थ इति भावः । स्वार्थे टाप्यपि प्रकृते किमायातमत आह—ततश्चेति ॥ गुणप्रकर्षाश्रयेति । गुणप्रकर्षकृतेत्यर्थः । गुणगतप्रकर्षस्य द्रव्ये आरोप इति भावः ॥

( वार्तिकोक्तदोषपरिहारभाष्यम् )

ननु चोक्तं तत्र समासान्तेषु दोष इति ॥

समासान्ता अपि स्वार्थिकाः ॥

उभयोः स्वार्थिकयोः परत्वात्समासान्ता भविष्यन्ति ॥

( प्रदीपः ) समासान्ता अपीति । ङ्याब्ग्रहणप्रत्याख्यानेन समासान्तेषु परिहारः । स्त्रियामन्यपदार्थे बहुव्रीहिविधानात् स्त्रीप्रत्ययस्य च समासान्तस्य च विप्रतिषेधोपपत्तिः । कालितरेत्यादौ तु पूर्वोक्तेन न्यायेनान्तरङ्गत्वात् स्त्रीप्रत्यये कृते प्रकर्षप्रत्यय उत्पद्यते ॥

( उद्द्योतः ) अन्त्यदोष उद्धृतेऽप्याद्यो दोषोऽस्त्येवेत्याह—ननु चोक्तमिति—भाष्ये ॥ स्वार्थे कथं कालिकेत्यग्रिमभाष्यानुत्थानापत्तेराह—प्रत्याख्यानेनेति ॥ विप्रतिषेधोपपत्तिरिति । अर्थकृतबहिरङ्गत्वानाश्रयणात् स्त्रीप्रत्ययानां न बहिरङ्गत्वमिति भावः ॥ ननु पूर्वोक्तकालितरेत्यादि त्यक्त्वा 'कथं कालिका' इत्युदाहरणांतरदाने बीजमाह—कालितरेत्यादौ त्विति । पूर्वोक्तेन=स्वार्थमभिधायेत्यादिना । अत्यंतस्वार्थिकतरपोऽभावादिति भावः ॥

( वार्तिकोक्तदोषपरिहारभाष्यम् )

कथं कालिकेति? ॥

प्रत्ययस्थात्कात्पूर्वस्येतीत्वं भविष्यति ॥

( प्रदीपः ) कथं कालिकेति । 'वर्णे चानित्ये' 'रक्ते' इति वर्तमाने 'कालाच' इति स्वार्थे कन्प्रत्ययस्तदपेक्षं च स्त्रीप्रत्ययस्यान्तरङ्गत्वं नास्तीति परत्वात्कन् स्यादिति प्रश्नः ॥

( उद्द्योतः ) ननु कालिकेत्यादावपि तेनैव न्यायेनान्तरङ्गत्वात्स्त्रीप्रत्ययः स्यादत आह—वर्णे चेति ॥ स्वार्थे=केवलस्वार्थे । अत्यन्तस्वार्थिकत्वात्तेषाम्, तत्र च न तन्न्यायावसर इति भावः ॥

( वार्तिकोक्तदोषपरिहारभाष्यम् )

कथं हरिणिकेति? ॥

हरिणशब्दः प्रकृत्यन्तरमस्ति ।

( प्रदीपः ) कथं हरिणिकेति । स्वार्थे हरितशब्दात् परत्वात्कन् स्यादिति प्रश्नः । अज्ञातादिकनस्तु बहिरङ्गत्वात् प्रागेव स्त्रीप्रत्ययः सिध्यति ॥ हरिणशब्द इति । हरितशब्दसमानार्थ इति भावः । तत्र हरितशब्दस्य हरितिकेति भवति । हरिणशब्दस्य तु हरिणिकेति भावः ॥

( उद्द्योतः ) हरितशब्दात्परत्वात्कनिति । ततश्च वर्णादनु-

---

१ द्रव्यस्य प्रकर्षो भेदहेतुगुणादिप्रकर्षेणैव बोद्धुं शक्यः । गुणादिव्यतिरेकेण केवलद्रव्यस्य प्रकर्षो न भवतीत्याशयः ॥

२ भेदहेतूपाधिव्यतिरिक्तं वस्तु शब्दवाच्यं न भवतीत्यर्थः ॥

३ निरुपाधेर्वस्तुनो व्यपदेशाभावेन=व्यवहाराभावेन तत्तदुपाधिकृत एव प्रकर्षः ॥ यथा मालातर इत्यादौ । मालाशब्दः पुष्परचनाविशेषोपाधिना व्यवहृतो भवति । तत्र पुष्परचनायाः प्रकर्षे तरप्प्रत्यय इत्यर्थः ॥

४ ननु गवादिशब्देषु गोत्वमुपाधिः स च प्रकर्षाप्रकर्षाभ्यां रहित इति गोशब्दात्तरप्प्रत्ययो न स्यादत आह—उपाधिरपीति । एवं च गवादिशब्दात्तरप्प्रत्यये गवादिगत जाड्यादिगुणानामेव प्रकर्षो बोध्य इति भावः ॥

५ यत्र शुक्लतरं रूपमित्यादौ शुक्लशब्दस्य शुक्लरूपपरत्वेन भेदहेतु गुणादिकं विना मुख्यस्यार्थस्य प्रकर्षाभावाच्छुक्लरूपे तरप्प्रत्ययेन न प्रकर्षः किन्तु रूपसंसर्गिधर्मान्तरशुक्लनिमित्त एव प्रकर्ष इति तात्पर्यम् ॥

६ एवं च भेदहेतुगुणादिकं विना न द्रव्यस्येत्यत्र द्रव्यपदं मुख्यार्थपरमेव । तेन द्रव्यायमाणत्वात्=द्रव्यसदृशमुख्यार्थत्वादित्यर्थः ॥

७ स्त्रीप्रत्ययानान्द्योतकत्वमभिधायोक्तदोषान्निरस्यति भगवान्—सिद्धन्त्विति ॥

८ स्त्रीप्रत्ययानां वाचकत्वन्निरस्यति—नैवमिति, नापीति च ॥

९ एवं च स्त्रियां विद्यमानं यत्प्रातिपदिकमित्यर्थः ॥

१० नन्वेवं गोतरेत्यादौ गवादिगतजाड्यादिगतप्रकर्षविवक्षायान्तरप्प्रत्यये प्रत्ययार्थः प्रकृत्यर्थेऽन्वेतीति सिद्धान्तव्याकोपः । जाड्यादिगुणानां गोशब्दवाच्यत्वाभावादत आह—गुणगतप्रकर्षेति ॥

११ अन्त्यदोषे='तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः' इति दोषवारणेऽप्याद्यो दोषः='तत्र समासान्तेषु दोषः' इति दोष इत्यर्थः ॥

१२ अन्तरङ्गन्यायावसरः ॥

दात्तादिति ङीप् नकारौ न स्यातामिति भावः । अज्ञातादिकस्य त्विति पाठः । कन इति पाठे संज्ञायां कनिति बोध्यम् ॥

( वार्तिकोक्तदोषपरिहारभाष्यम् )

**कथं लोहिनिकेति?**

**वक्ष्यत्येतल्लोहिताल्लिङ्गबाधनं वेति ॥ १ ॥**

( प्रदीपः ) **लोहिनिकेति** । न हि लोहिनशब्दः प्रातिपदिकमस्तीति प्रश्नः ॥ **वक्ष्यत्येतदिति** । अवश्यवक्तव्यतां दर्शयति । क्रियमाणेऽपि ङ्याब्ग्रहणे 'लोहितान्मणौ' 'वर्णे चानित्ये' 'रक्ते' इति प्रतिपदविधानाद् बलीयस्त्वात् स्त्रीप्रत्ययं बाधित्वा कन्नेव स्यात् ॥ १ ॥

( उद्द्योतः ) ननु वचनान्तरस्वीकारेण वचनप्रत्याख्यानमयुक्तमत आह—**अवश्येति** । लोहितात्कना परत्वेन प्राप्तं लिङ्गबोधकप्रत्ययबाधनं चेति तदर्थः ॥ **प्रतिपदेति** । अनवकाशत्वे सत्येव तस्य[1] बाधकत्वप्रयोजकत्वाच्चिन्त्यमिदम्, परत्वादिति वक्तुमुचितम् । एतिक एनिकेत्यादि तु अत्यंतस्वार्थिके कनि न भवत्येव । वचनाभावात्, एनशब्दस्य प्रकृत्यंतरस्याभावाच्च किंत्वेतिकेत्येव । सूत्रमतेपि ङ्याप्ग्रहणमत्यन्तस्वार्थिकानारभ्य निवृत्तमेव । अत्र चार्थे 'लोहितात्' इति वचनमेव ज्ञापकं । सूत्रे ङ्याप्ग्रहणं तु कालितरेत्यादावुक्तन्यायसिद्धार्थकथनमेवेति न सूत्रभाष्ययोर्विरोधः । न च हरिणिकेत्यादौ कनिकृतेऽपि पूर्वभागे वर्णाद[3]नुदात्तादिति दुर्वारम् । एकाज्द्विर्वचनन्यायेन समुदायात्स्त्रीप्रत्यये—नैवोक्ततया मध्ये तदनुत्पत्तेरित्याहुः ॥

---

( ६१९ अधिकारसूत्रम् ॥ ४ । १ । १ आ. २ )

## १२७७ स्त्रियाम् ॥ ४ । १ । ३ ॥

( लिङ्गाधिकरणम् )

( आक्षेपभाष्यम् )

**स्त्रियामित्युच्यते ।**

**का स्त्री नाम ॥**

( प्रदीपः ) **का स्त्री नामेति** । प्रसिद्ध[5]स्यार्थस्य कार्यान्तरविधानायानुवादसम्भवात्, इह च शास्त्रे[4] स्त्रिया अपरिभाषितत्वात् । लोके च खट्वादिषु स्त्रीव्यव[6]हाराभावाल्लौकिकस्त्रीग्रहणेऽव्याप्त्यतिव्याप्तिदर्शनात्प्रश्नः । न च गोत्वा[7]दिवत्संस्थानविशेषव्यङ्ग्यत्वं स्त्रीत्वस्य, यतः सामान्यविशेषरूपत्वं तस्य स्यात् । खट्[8]वाशिंशपानगर्यादिषु भिन्नत्वात्संस्थानस्य । न च[9] सकृदाख्यातं स्त्रीत्वं गोत्वादिवत् सर्वेषु स्त्रीलिङ्गेषु व्यक्त्यन्तरेषु ग्रहीतुं शक्यते ॥ यत्र वस्तुस्वरूपजिज्ञासा तत्र प्रथमान्तेन प्रश्नो युक्त इति का स्त्री नामेत्युक्तम् । कस्यां स्त्रियामिति तूच्यमाने विशेषविषयः प्रश्नः स्यात् ॥

( उद्द्योतः ) शास्त्रप्रसिद्धेरभावेऽपि लोकप्रसिद्धार्थानुवादो भविष्यतीत्यत आह—**लोके चेति** । खट्वादिष्व[10]व्याप्तिः, भ्रूकुंसादिष्वतिव्याप्तिरित्यर्थः ॥ ननु यद्यपि लौकिकस्त्रीव्यक्तिग्रहणे दोषस्तथापि जातिरूपस्य खट्वादिसाधारणस्य भ्रूकुंसादिव्यावृत्तस्य ग्रहणमस्त्वित्यत आह—**न चेति** ॥ **सामान्यविशेषरूपत्वम्**=जातिविशेषरूपत्वमित्यर्थः ॥ **भिन्नत्वादिति** । एतेनाकृतिग्रहणेत्येतल्लक्षित[11]त्वं न स्त्रीत्वस्येत्युक्तम् ॥ लक्षणान्तरमपि नास्तीत्याह—**न चेति** ॥ सौत्रविभक्त्यनुसारेणैव प्रश्ने कर्तव्ये किमित्यन्यथा प्रश्नोऽत आह—**यत्र वस्त्विति** ॥ **विशेषविषय इति**=स्त्रीवि[12]शेषविषय इत्यर्थः ॥

( समाधानभाष्यम् )

**लोकत एते शब्दाः प्रसिद्धाः । स्त्री पुमान्नपुंसकमिति ।**

**यल्लोके दृष्ट्वा एतदवसीयते—**

**इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति ।**

**सा स्त्री, स पुमान्, तन्नपुंसकमिति ॥**

( प्रदीपः ) **लोकत इति** । पञ्चम्यन्तात्सप्तम्यन्ताद्वा तसिः ॥ **शब्दाः प्रसिद्धा इति** । विशिष्टा[13]र्थाभिधायित्वेनेति भावः । पुंनपुंसकयोरुपादानं प्रसङ्गेन तद्विषयस्याप्यज्ञानस्य निराकरणार्थम् ॥ **यल्लोक इति** । यन्निमित्तमुपलभ्य निमित्तवत्यर्थे प्रत्यय उपजायते तत्स्त्र्यादिशब्दवाच्यमित्यर्थः । तद्यो[14]गाच्च निमित्तवानप्यर्थः स्त्र्यादिशब्दवाच्यो भवति ॥

---

१ तस्य=प्रतिपदविधानस्य ॥ शेषाद्विभाषेति सूत्रस्थ 'शेषग्रहणमनर्थकं ये प्रतिपदं विधीयन्ते ते बाधका भविष्यन्ति' इत्याशङ्क्य 'अनवकाशा हि विधयो बाधका भवन्ति' इति भाष्यात्प्रतिपदोक्तत्वस्य निरवकाशत्वे सत्येव बाधकत्वमिति सिद्धम् ॥

२ वर्णादनुदात्तादित्यस्य वैकल्पिकत्वेन 'एतिका, एनिका' इति द्वे रूपे भवतः । तत्र परत्वात्कनि 'एतिका' इत्येव रूपं स्यादिति ॥

३ कनः पूर्वभागे हरितशब्दे तस्य वर्णवाचित्वेन प्राप्तिरिति शङ्कितुराशयः । समुदायात्स्त्रीप्रत्ययेऽनेन न्यायेन समुदायस्यैव वर्णवाचित्वन्नतु कनः पूर्वभागस्येत्युत्तरम् ॥

४ स्त्रीत्वस्य शास्त्रे क्वाप्यव्याख्यानात् प्रश्नः ॥

५ यथा वृद्धिरेचीत्यादौ वृद्धिरादैजित्यत्र प्रसिद्धस्य वृद्धिपदस्योपादानं तथा नात्रेत्याह—**प्रसिद्धार्थस्येति** ॥

६ खट्वादिषु शब्देषु स्त्रीलिङ्गव्यवहारसत्त्वेपि 'इयं खट्वा स्त्री' इति व्यवहारो नास्तीति भावः ॥

७ यथाऽवयवसंस्थानव्यङ्ग्यं गोत्वं सर्वास्वपि गोव्यक्तिषु वर्तते, न तथा स्त्रीत्वं सकलस्त्रीव्यक्तिष्ववयवसंस्थानव्यङ्ग्यमस्ति, अतो न तस्य स्त्रीत्वस्य जातिरूपत्वमित्यर्थः ॥

८ अवयवसंस्थानविशेषव्यङ्ग्यत्वव्यभिचारं दर्शयति—**खट्वेति** ॥

९ नन्वाकृतिग्रहणा जातिरिति लक्षणलक्षितजातिरूपत्वं स्त्रीत्वस्य खट्वादिषु व्यभिचारान्मास्तु । सकृदाख्यातनिर्ग्राह्येति लक्षितजातिरूपत्वे स्त्रीत्वस्य को बाध इत्याह—**न चेति** ॥

१० लोकप्रसिद्धस्य 'स्तनकेशवती' इति स्त्रीत्वस्य ग्रहणे खट्वादिषु तदभावादव्याप्तिः । भ्रूकुंसादिषु स्तनकेशसम्बन्धसत्त्वेनातिव्याप्तिरित्यर्थः ॥

११ इत्येतल्लक्षणलक्षितजातिरूपत्वमित्यर्थः ॥

१२ स्त्रीत्वव्याप्यधर्मविषयक इति भावः ॥

१३ लोक एते शब्दा विशिष्टार्थाभिधायित्वेनेति कथनेन का स्त्रीनामेति भाष्यतः स्त्रीत्वरूपार्थविषयकप्रश्नस्योत्तरमपि स्त्रीत्वरूपार्थविषयकमेव सम्भवति ॥ अन्यथा प्रश्नोत्तरयोर्वैयधिकरण्यापातः ॥

१४ तद्योगात्=निमित्तयोगात् ॥ निमित्तस्य वाचकः स्त्रीशब्दो यत्र तन्निमित्तं गवादिशब्देषु वर्तते तस्यापि वाचको भवतीति गौः स्त्रीति व्यवहारः सम्पन्नः ॥

**( उद्द्योतः ) पञ्चम्यन्तादिति** । [१]आद्ये लोकशब्देन व्यवहारः । अन्त्ये व्यवहर्तार इति भेदः ।

**लोक्यते येन शब्दार्थौ लोकस्तेन स उच्यते ।**
**व्यवहारोऽथवा वृद्धव्यवहर्तृपरंपरा ॥** इत्युक्तेः ॥

नन्वर्थे पृष्टे शब्दप्रसिद्ध्यभिधानं व्यधिकरणमत आह—**विशिष्टेति** ॥ **प्रसंगेनेति** । न तु तत्प्रकृतमिति भावः ॥ दर्शनावसाययोरेकत्वादाह—**यन्निमित्तमिति** । यन्निमित्तमुपलभ्य एतन्निमित्तवदर्थरूपं स्त्र्यादिशब्देनावसीयते=प्रत्याय्यत इत्यक्षरार्थः ॥ भाष्येऽवसायाकारमाह—**इयं स्त्रीत्यादि** ॥ ननु स्त्रीत्वावसायस्येयं स्त्रीत्याकारोऽनुपपन्नोऽत आह—**तद्योगाच्चेति** । शुक्लादि[२]शब्दवदिति भावः ॥ सा[३] स्त्रीत्यादौ तदादीनां विधेयलिङ्गग्राहितया नानुपपत्तिः, अन्यथा तत्स्त्रीत्यादि वक्तव्यं स्यात् ॥

( स्त्रीत्वनिमित्तजिज्ञासाभाष्यम् )

**किं पुनर्लोके दृष्ट्वा एतदवसीयते—**
**इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति ॥**

**( प्रदीपः ) किं पुनरिति** । द्रव्ये सत्तादेरनेकार्थस्य सम्भवात्प्रश्नः ॥

**( उद्द्योतः ) सत्तादेरिति** । आदिना संख्याकर्मत्वादि ॥

( निमित्तकथनभाष्यम् )

**लिङ्गम् ॥**

**( प्रदीपः ) लिङ्गमिति** । स्तनकेशादिकमिति भावः ॥

**( उद्द्योतः )** लिङ्गमित्यस्यानुमितिजनकत्वमिति नार्थ इत्याह—**स्तनेति** ॥

( जिज्ञासाभाष्यम् )

**किं पुनस्तत् ?**

( लिङ्गलक्षणभाष्यम् )

**स्तनकेशवती स्त्री स्याल्लो-**
**मशः पुरुषः स्मृतः ।**
**उभयोरन्तरं यच्च तद-**
**भावे नपुंसकम् ॥**

**( प्रदीपः ) स्तनकेशवतीति** । भूमादौ मतुप् । तथैव **लोमश इति**—शः । [४]लिङ्गे पृष्टे लिङ्गिकथनं लिङ्गप्रतिपत्तिपरमिति प्रश्नप्रतिवचनयोर्नास्त्यसंगतिः । स्तनकेशं च प्रसिद्धत्वादन्यस्यापि स्त्रीप्रतिपत्तिनिमित्तस्य कुमार्यादिगतस्योपलक्षणम् । तदनेन स्त्रीत्वादीनां स्तनाद्युपव्यञ्जनानां गोत्वादिवत्सामान्यविशेषत्वं दर्शितम् । यथोक्तं हरिणा—

**हस्तिन्यां वडवायां च स्त्रीति बुद्धेः समन्वयः ।**
**अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम् ॥** इति ॥

**उभयोरन्तरमिति** । लिङ्गवत्त्वेन सदृशमित्यर्थः । तेनाव्याख्यातार्थस्य नपुंसकत्वाभावः । तदभाव इत्यनेन मयूरीकुक्कुटादीनां स्त्रीपुंससमुदायानां नपुंसकत्वं निराकृतम् । भवति हि समुदायः समुदायिनोः सदृश इति स्यान्नपुंसकत्वम् । अथ तु परवल्लिङ्गमित्यनेन समुदायस्य परवल्लिङ्गतातिदेशादप्रसङ्गो नपुंसकत्वस्य । ततो वस्तुस्वरूपनिरूपणपरमेतदित्यवगन्तव्यम् ॥

**( उद्द्योतः )** ननु स्तनादिसंबंधस्यान्यत्रापि दर्शनादाह—**भूमादाविति** । [६]आदिना—अतिशयः ॥ **लिङ्गप्रतिपत्तिपूर्वकमिति** । पूर्व[७]कमिति स्वार्थे कस्ततः षष्ठीसमासः, तज्जनकमित्यर्थः । **लिङ्गप्रतिपत्तिपरमिति** पाठे तत्प्रतिपत्तितात्पर्यकमित्यर्थः ॥ ननु कुमार्यामतिशयितस्तनाद्यभावात्कथं स्त्रीत्वमत आह—**अन्यस्यापीति** । योन्यादेरित्यर्थः ॥ ननु स्तनादीनामननुगतत्वात्तन्निमित्तानुगतप्रत्ययप्रयोगयोरयोगोऽत आह—**अनेनेति** । जातिविशेषरूपं स्त्रीत्वादिकम् ॥ तत्राकृतिग्रहणत्वं दर्शयति—**स्तनाद्युपव्यञ्जनानामिति**—बहुव्रीहिः ॥ **समन्वयः**=अनुगमः ॥ **द्रव्यादीति** । आदिना गुणक्रियाजातीनां संग्रहः । स्तनादीत्यादिपदेन शब्दगतटाबाद्यपि, शब्दार्थयोरभेदाच्च तदप्यर्थगतस्त्रीत्वादि व्यंजकं बोध्यम् । स्तनादीनां व्यंजकत्वादेव भाष्ये [८]यद्दृष्ट्वा एतदवसीयत इत्युक्तम् । तत्र हि स्वरसतो यच्छब्दैतच्छब्दार्थयोर्भेदः प्रतीयते ॥ अंतरशब्दः सदृशवाचीत्याह—**लिङ्गेति** । अनेन सादृश्यहेतुरुक्तः ॥ **तेनेति** । लिङ्गवत्तया सादृश्यग्रहणेनेत्यर्थः । अव्ययार्थानामसत्त्वभूतत्वान्न लिङ्गयोग इति भावः । [९]तदभाव इत्युच्यमानेऽव्ययानामपि नपुंसकत्वं स्यादिति तात्पर्यम् ॥ **तदभावे इति** । स्त्रीपुंस्त्वाभावे इत्यर्थः ॥

( लिङ्गलक्षणदूषणभाष्यम् )

**लिङ्गात्स्त्रीपुंसयोर्ज्ञाने भ्रूकुंसे टाप्प्रसज्यते ।**

**लिङ्गात्स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप्प्राप्नोति । यद्धि लोके दृष्ट्वैतदवसीयते—इयं स्त्री ।**

---

१ पञ्चम्यन्तात्तसिमत्यये लोकादिते शब्दाः प्रसिद्धा इत्यस्य लोकव्यवहारात्प्रसिद्धा इत्यर्थः । सप्तम्यन्ताच्च प्रत्यये लोके=व्यवहर्तृषु प्रसिद्धा इत्यर्थः । व्यवहरणक्रियायाः शब्दाधारत्वासम्भवादियमुक्तिः ॥

२ शुक्लनीलादिसमुदायवाचकस्य रूपशब्दस्य व्यापकस्य रूपत्वव्याप्येन शुक्लेन सहाभेदान्वयस्तथा स्त्रीत्वगोत्वाद्यवच्छिन्नादिसमुदायस्य 'इयं' शब्दार्थस्य स्त्रीत्वगोत्वाद्यवच्छिन्नव्याप्येन स्त्रीशब्दार्थेनाभेद इति तात्पर्यम् ॥

३ ननु 'सा स्त्री' इत्यादिभाष्ये तत्पदेन स्त्रीत्वनिमित्तमुद्दिश्य स्त्रीपदेन स्त्रीत्वं विधीयते तत्र तत्पदस्य स्त्रीत्वनिमित्तवाचकत्वेन नपुंसकनिर्देश आवश्यक अत आह—सा स्त्रीत्यादि ॥

४ ननु किम्पुनर्लिङ्गमिति प्रश्नस्य स्तनकेशवती स्त्री स्यादिति लिङ्गाश्रयकमुत्तरमयुक्तमत आह—लिङ्गे पृष्ट इति ॥

५ तदभावे नपुंसकमित्यनेन मयूरीकुक्कुटादिसमुदाये स्त्रीपुंल्लक्षणस्य सत्त्वान्न नपुंसकत्वमिति भावः ॥

६ स्तनकेशवतीत्यत्र 'अतिशयार्थे' मतुबित्यर्थः ॥

७ स्वार्थे कप्रत्यय इत्यनेन बहुव्रीहिर्नेति बोध्यते । लिङ्गप्रतिपत्तिपूर्वकमिति पाठ इदानीन्तनेषु पुस्तकेषु नोपलभ्यत इति स नात्र स्थापितः । लिङ्गिकथनं लिङ्गज्ञानजनकमित्यर्थः ॥

८ यद्लोके दृष्ट्वैतदवसीयत इति भाष्ये यत्पदेन व्यञ्जकं स्तनकेशादि, एतत्पदेन च व्यङ्ग्यं स्त्रीत्वमिति तयोर्भेद इत्यर्थः ॥

९ उभयोरन्तरमित्युच्यमान इति शेषः । एवं चांशद्वयस्यापि नपुंसकलक्षणे सार्थक्यमित्याशयः ॥

**अस्ति तद् भ्रूकुंसे ॥**

**( प्रदीपः ) इदानीमेतद्[1] दूषयितुमाह—लिङ्गादिति ।** भ्रूकुंसः स्त्रीवेषधारी नटस्तस्य स्तनकेशसंबन्धात् स्त्रीत्वे सति टाप्स्यात् ॥ ननु नित्ययोगे स्तनकेशवतीति मतुब्विज्ञानाद्[2] भ्रूकुंसशब्दस्य स्त्रीत्वाभावः । नैतदस्ति । प्रतिपत्तॄणां नित्यलिङ्गदर्शनात्तत्रापि स्त्रीत्वप्रसङ्गात् । केशवपने च स्त्रियाः स्त्रीत्वन्न स्यात्, तदानीं केशसंबन्धाभावात् । स्तनातिशयसम्बन्धस्य चोत्तरकालभावित्वादतिशयेऽपि मतुपि विज्ञायमाने प्राक् स्त्रीत्वं न स्यात् । अव्याप्तिसद्भावाद्धेयत्वादस्य दर्शनस्य न सुष्ठु निर्बन्धोत्र कर्तव्यः ॥

**( उद्द्योतः ) प्रतिपत्तॄणामिति ।** सामाजिकानां[3] स्त्रीवेषधारिण एव तस्य दर्शनादिति भावः ॥ नित्ययोगे मतुपि दोषांतरमाह—**केशवपने चेति ॥** ननु स्तनातिशययोगादेव तत्र[4] स्त्रीत्वमत आह—**स्तनेति ।** बालायाः[5] केशवपने तत्संबन्धोऽपि नास्तीत्यर्थः ॥ ननु स्तनकेशग्रहणमन्यस्य योन्यादेरुपलक्षणमित्युक्तमतो न दोष इत्यत आह—**अव्याप्तीति ।** खट्वादावित्यर्थः । दारादिष्वतिव्याप्[6]पकत्वमपि बोध्यम् ॥

**( द्वितीयदूषणभाष्यम् )**

## नत्वं खरकुटीः पश्य ॥

**इह चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः[7] पश्येति तस्माच्छसो नः पुंसीति नत्वं प्राप्नोति ॥**

**यद्धि लोके दृष्ट्वैतदवसीयते—अयं पुमानिति । अस्ति तद्वध्रिकादिषु ॥**

**( प्रदीपः ) नत्वमिति ।** खरकुटी नापितगृहमुच्यत इति केचिदाहुः । तत्रेवार्थे 'संज्ञायाम्' इति कन्प्रत्ययः, तस्य 'लुम्मनुष्ये' इति लुप् । तत्र मनुष्यस्य वाच्यत्वात्तस्य च लोमशत्वात् पुंस्त्वात् खरकुटीः पश्येत्यादौ नत्वप्रसङ्गः ॥

**( उद्द्योतः ) इति केचिदाहुरिति ।** तस्य लोमशत्वेन पुंस्त्वान्नत्वापत्तिरिति तदाशयः । चञ्चेत्यादिसाधारण्येन प्रकारान्तरमाह—**तत्रेवार्थ इति ॥ लुम्मनुष्य इति ।** यद्यपि मनुष्यशब्दः स्त्रीपुंससाधारणस्तथापि पुरुषसंज्ञायामयं प्रसंगो बोध्यः ॥

**( तृतीयदूषणभाष्यम् )**

## खट्वावृक्षौ न सिध्यतः ॥

**खट्वावृक्षयोश्च[8] लिङ्गं न सिध्यति । यद्धि लोके दृष्ट्वैतदवसीयते—इयं स्त्री, अयं पुमानिति । न तत्खट्वावृक्षयोरस्ति ॥**

**किं तर्हि तयोर्लिङ्गं न्याय्यम् ?**

**( दूषणसाधकभाष्यम् )**

## नापुंसकं[9] भवेत्तस्मिन् ॥

**नापुंसकं खट्वावृक्षयोर्लिङ्गं न्याय्यम्[10] । किमिदं नापुंसकमिति ? नपुंसके भवं नापुंसकम् ॥**

**( प्रदीपः ) नापुंसकमिति ।** नपुंसके वस्तुनि भवं लिङ्गं नापुंसकम्, नापुंसकत्वं[11] तत् प्राप्तं स्त्रीत्वपुंस्त्वयोरभावात्, स्त्रीपुंससदृशत्वाच्च लिङ्गवत्त्वेन, सत्त्वरूपत्वाच्च[12]—लिङ्गसंख्यारहितस्यासत्त्वभूतस्यार्थस्याभावादिति भावः ॥

**( उद्द्योतः )** नपुंसकशब्दाद्भावेऽणो दुर्लभत्वादाह—**नपुंसक इति ।** लिङ्गवत्वेन स्त्रीपुंससदृशत्वादित्यन्वयः ॥ लिङ्गवत्त्वे हेतुमाह—**सत्त्वेति ।** सत्त्वरूपत्वं कथं लिङ्गवत्त्वे साधकमत आह—**लिङ्गेत्यादि ॥**

**( दूषणसाधकभाष्यम् )**

## तदभावे नपुंसकम् ॥

**तदभावे स्त्रीपुंसलिङ्गाभावे नपुंसकं लिङ्गं न्याय्यम्**

**( लिङ्गसाधकभाष्यम् )**

## असत्तु मृगतृष्णावत् ॥

**असत्तु खट्वावृक्षयोर्लिङ्गं द्रष्टव्यम् । कथं पुनरसन्नाम लिङ्गं शक्यं द्रष्टुम् ? मृगतृष्णावत् । तद्यथा—मृगास्तृषिता अपां धाराः पश्यन्ति । न च ताः सन्ति ॥**

**( प्रदीपः ) असत्त्विति ।** मृगतृष्णा[13]विषया मरुमरीचिका

---

१ एतत्=लिङ्गलक्षणमित्यर्थः ॥

२ ननु पूर्वोक्तरीत्याऽतिशयेऽर्थे मतुपि भ्रूकुंसे स्तनकेशातिशयसत्त्वेन स्त्रीत्वं दुर्वारमत आह—ननु नित्ययोग इति ॥ भ्रूकुंसादौ तद्वारणाय नित्ययोगे मतुबाश्रीयत इत्यर्थः ॥

३ भ्रूकुंसे स्तनकेशानां नित्ययोगाभावेऽपि सामाजिकाः स्तनकेशरहितांस्तान्न पश्यन्तीति सामाजिकव्यवहारे स्तनकेशानां नित्यसम्बन्ध इति भावः । तस्य=भ्रूकुंसस्य ॥

४ तत्र=कृतकेशवपनस्त्रीव्यक्तौ ॥

५ बालायाःस्तनसम्बन्धाभावेन केशवपने च कृते स्तनकेशवतीति लक्षणस्य सुतरामप्राप्तिरिति भावः ॥

६ एवं च स्तनकेशवतीति लक्षणमव्याप्त्यतिव्याप्तिदोषदुष्टत्वाद्धेयमिति भाष्याशयः ॥

७ केवलखरकुटीशब्दस्य नापितगृहवाचकत्वेन तस्य च लोमनखादिसंकीर्णत्वेन लोमशः पुरुष इति लक्षणान्नत्वप्राप्तिरित्यर्थः । तत्रेवार्थेकन्निकृते पुरुषाद्दृश्यस्यापि सम्भवेन पुंस्त्वान्नत्वप्राप्तिश्च ॥

८ चञ्चादिषु लिङ्गलक्षणस्यातिव्याप्तिम्प्रदर्श्याव्याप्तिमपि दर्शयति—खट्वावृक्षावित्यादि ॥

९ नपुंसकत्वलक्षणस्य खट्वावृक्षादावतिव्याप्तिमपि प्रदर्शयति—नापुंसकमिति ॥

१० नापुंसकम्भवेत्तस्मिन्नित्यस्य नपुंसकत्वमयुक्तङ्कार्यं खट्वावृक्षादौ भवेदित्यर्थः । तत्र च नपुंसके भवमिति भवार्थे प्रत्ययस्य नपुंसकलिङ्गे कस्यचन कार्यस्यासम्भवादसङ्गतिः स्यादित्यत आह—नपुंसके वस्तुनीति ॥

११ मुद्रितपुस्तकेषु 'नपुंसके वस्तुनि भवं लिङ्गं नापुंसकत्वं तत्प्राप्तं स्त्रीत्व' इत्यादि पाठो दृश्यते । तदपेक्षया लिखितपाठः श्रेयानिति स एव स्थापितः । स्त्रीत्वपुंस्त्वयोरभावात्तल्लिङ्गं नापुंसकत्वम्, लिङ्गवत्त्वेन सादृश्याच्चेत्यर्थः ॥

१२ ननु खट्वावृक्षादौ स्त्रीपुंल्लक्षणाप्रवेशेन स्त्रीत्वपुंस्त्वयोरभाव इत्येव न । किन्तु असत्त्वभूतत्वेन सर्वलिङ्गस्याप्यभाव इत्याशङ्कां निरस्यति—सत्त्वरूपत्वादित्यादिना ॥

१३ यथा मृगतृष्णारूपा मरुमरीचिकाऽसत्यजलस्वरूपा भासते तथा खट्वावृक्षौ असत्त्वेन स्त्रीपुंसत्वेन प्रतिभासेत इति भावः ॥

यथाऽसत्येन जलरूपेण प्रतिभासते, तथा खट्वावृक्षावसता स्त्रीपुंसत्वेनेत्यर्थः ॥

( उद्द्योतः ) वृक्षादावव्याप्तिवारणायाह भाष्ये—असत्त्विति । तत्राविद्यमानमित्यर्थः । बुद्धौ तु सदिति भावः । तदुक्तं—

विप्रपृथ्व्यादि चित्तस्थं न बहिष्ठं कदा च न ।
स्वप्नभ्रममदाद्येषु सर्वैरेवानुभूयते ॥ इति ।

अत्र न कदा च नेत्युक्त्या सर्वः प्रपंचो बहिरसन्नेवेति सूचयति । प्रपंचितं चैतदस्माभिः परमार्थसारोद्योते । तत्र ह्येवमुक्तं भगवता शेषेण—

मृगतृष्णायामुदकं, शुक्तौ रजतं, भुजंगमो रज्ज्वां ।
तैमिरिकचंद्रयुगवत् भ्रान्तमखिलं जगद्रूपम् ॥ इति ।

भ्रमे च बहिरसत एव भानमित्यत्रोक्तम् ॥ ननु मृगतृष्णा न स्वरूपेणासती, नाप्यन्यरूपेण तत्प्रतिभासः, यतः प्रतिभासमानान्यरूपेणासत्त्वं स्यादत आह—मृगेति । पिपासापर्यायतृष्णाशब्देन तत्कृतभावनावशादुदकत्वेन प्रतिभासमाना मरुमरीचिकोच्यत इति भावः । मरुमरीचिकाशब्देन रविकिरणा ऊर्ध्वाधरभावेन नभ आक्रामन्तस्तरंगाकारप्रतीतिजनका उच्यन्ते । तद्यथा—मृगास्तृषिता इति भाष्ये मृगा इत्युपलक्षणम् ॥

( लिङ्गसाधकभाष्यम् )

## गन्धर्वनगरं यथा ॥[2]

**यथा गन्धर्वनगराणि दूरतो दृश्यन्ते, उपसृत्य च नोपलभ्यन्ते । तद्वत्खट्वावृक्षयोरसल्लिङ्गं द्रष्टव्यम् ॥**

( प्रदीपः ) अथोच्यते—मरीचिदर्शनात्सादृश्याज्जलं पूर्वानुभूतं स्मर्यते न तु तत्रासज्जलं चकास्तीति तत्राह—गन्धर्वनगरं यथेति । न हि गन्धर्वनगरमन्तरिक्षे कदाचिदुपलब्धम् । न च तत्र तत्सदृशवस्त्वन्तरग्रहणं येन गन्धर्वनगरं स्मर्येत । तस्मादसतामपि भावानामचिन्त्यान्निमित्तसामर्थ्याद्यथोपलम्भः, तथा खट्वादावपि स्त्रीत्वादेरित्यर्थः । तदुक्तं हरिणा—

**यथा सलिलनिर्भासो मृगतृष्णासु जायते ।**
**जलोपलब्ध्यनुगुणाद् बीजाद् बुद्धिर्जलेऽसति ॥**
**तथैवाव्यपदेश्येभ्यो हेतुभ्यस्तारकादिषु ।**
**मुख्येभ्य इव लिङ्गेभ्यो भेदो लोके व्यवस्थितः ॥ इति ॥**

( उद्द्योतः ) स्मर्येत इति । प्रमोषाच्च[4] न तत्तोल्लेख इति भावः । इदं च वैशेषिकादिमतानुसारेण ॥ अत्र स्मरणाभावं दर्शयति—न हीति । अनुभवः[3] सदृशवस्त्वंतरग्रहणादिसंस्कारोद्बोधश्च स्मृतिहेतुरिति भावः । अदृष्टवशादपि संस्कारोद्बोधेनानादौ संसारे तेषामपि दर्शनेन च तत्रापि स्मरणसंभवाचिन्त्यमेतत् । पातंजलैः पूर्वानुभूततारूपतत्तायाः[6] प्रमोषानंगीकारान्न जलमात्रस्मरणसंभवः । किं च जलस्य स्मरणेपि तस्य तद्देशस्थत्वमसदेव भासत इति भाष्याशयः ॥ अचिंत्येति । अनाद्यविद्यारूपमिथ्यावासनावशादित्यर्थः । अदृष्टविशेषवशादित्यर्थ इत्युच्यते ॥ मृगतृष्णासु तद्विषयमरुमरीचिकासु सलिलनिर्भासं स्वयमेव विवृणोति—बुद्धिरित्यादि । असति जले तद्बुद्धिरित्यर्थः । बीजम्=मिथ्यावासनादि, अव्यपदेश्येभ्यः=अचिंत्येभ्यो हेतुभ्यः=मिथ्यावासनाऽदृष्टरूपेभ्यः कारणेभ्य इत्यर्थः ॥ तारकादिषु । तारका=पुष्यः=नक्षत्रमित्यादिष्वचेतनेषु । मुख्येभ्यः=कुमारीत्यादिषु बहिर्विद्यमानेभ्यः स्तनकेशादिभ्यो हेतुभ्यस्तद्धेतुकतद्व्यवहार इवासल्लिंगहेतुकोऽपि भेदाभेदव्यवहार इत्यर्थः । शब्देन सम्यक्ज्ञानमिथ्याज्ञानाभ्यामावेदितस्यार्थस्याविशेषेणाभिधानाच्चेतनेषु देवदत्तादिष्विवाचेतनेषु तारकापुष्यनक्षत्रादिषु लिङ्गप्रतीतिरविरुद्धेति भावः । प्रतीतिमात्रेणैव च शास्त्रीयकार्यनिर्वाह इति तात्पर्यम् ॥

( लिङ्गसाधकभाष्यम् )

## आदित्यगतिवत्सन्न ॥

**अथ वा यथा—आदित्यगतिः सती नोपलभ्यते । तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते ॥**

( प्रदीपः ) इदानीमसत्त्वं निराकरोति—आदित्यगतिवत्सन्नेति । यथाऽऽदित्यगतिः सती प्रत्यक्षेण नोपलभ्यते देशान्तरप्राप्त्याऽनुमीयते तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात्प्रत्यक्षेणाशक्यं ग्रहीतुं तत्कृतकार्यदर्शनादनुमीयते । किंचिद्धि स्थूलमुपलभ्य व्यञ्जनम्, किंचित्सूक्ष्मत्वाद् दुरवधारणमिति भावः ॥

( उद्द्योतः ) निराकरोतीति[7] । मृगतृष्णादिदृष्टान्तेनासतो लिंगस्य खट्वादौ मिथ्याज्ञानात्मकप्रत्यक्षविषयतामुक्त्वा तस्यैव शब्दबोध्यतोक्ता । तत्रासत उपलंभे शशविषाणादेरप्युपलब्ध्यापत्तिरित्याशयेनासत्त्वं निराकरिष्यन् प्रकारान्तरमाहेत्यर्थः । तत्र तन्निराकरणम् 'तयोस्तु तत्कृतं दृष्ट्वा' इत्यादिना वक्ष्यति । क्रियाप्रत्यक्षत्ववादिमत-

१ असत्तु मृगतृष्णावदित्यनेन बाह्यपदार्थानामसत्त्वमेव प्रतिपादयति भगवान् । तत्र प्रमाणमाह—विप्रेति । यतः स्वप्नभ्रमादिष्वसन्तोपि पदार्था बाह्यपदार्थवदनुभूयन्ते, अतः पृथ्व्यादिवस्तुजातम्बौद्धमेवावगन्तव्यम्, न बहिष्ठमित्यर्थः ॥

२ नन्वसत्तु मृगतृष्णावदित्युक्तिरयुक्ता । यतो मरुमरीचिकायां जलसादृश्येन तत्स्मरणम्भवति नत्वसज्जलन्तत्रानुभूयते । खट्वावृक्षादौ तु लिङ्गसदृशस्य कस्यचन दर्शनाभावेन लिङ्गस्मरणमशक्यमेव । एवं च मृगतृष्णेत्यादिदृष्टान्तोक्तिरयुक्तेत्याशयेनाह—गन्धर्वनगरमिति ॥

३ ख. ग. पुस्तकयोः 'अनुभवः सदृशवस्त्वंतरग्रहणादिसंस्कारोद्बोधेनानादौ संसारे तेषामपि दर्शनेन च तत्रापि स्मरणसम्भवाचिन्त्यमेतत्' इति पाठः ॥

४ ननु मृगतृष्णायाम्पूर्वानुभूतजलस्मरणस्वीकारेऽपि मरुमरीचिकायाः पूर्वानुभूतत्वस्य च ज्ञानं स्यादेवेति तृषोपशान्त्यर्थं मृगाणामनुधावनमसङ्गतमेव स्यादित्यभिप्रेत्याह—प्रमोषाच्चेति । जलस्मरणेन मरुमरीचिकाज्ञानस्य प्रमोष इत्यर्थः ॥

५ गन्धर्वनगराणि दूरतो दृश्यमानानि वस्तुतो नोपलभ्यंत इत्येतन्न युक्तम् । अनादौ संसारे तादृशस्य पूर्वानुभूतगन्धर्वनगरस्यापि सम्भवसत्त्वेन पूर्वानुभूतस्य गन्धर्वनगरस्य स्मरणमेव तत्रेति वक्तुं शक्यम् ॥

६ ग-पुस्तके 'पूर्वानुभूततायाः प्रमोष' इति पाठः ॥

७ इदानीमसत्त्वं निराकरोतीति प्रदीपस्यार्थमाह—असत्त्वं निराकरिष्यन् प्रकारान्तरमाहेत्यर्थ इति ॥

साधारण्याथादित्यगतिर्दृष्टान्तत्वेनोक्ता भाष्ये। तत्कृतं कार्यं=टानादि॥ **किंचिद्वीति** । उद्भूतानुद्भूतगंधादिवदित्यर्थः ॥ **व्यंजनम्**=स्त्रीत्वाभिव्यंजकं स्तनकेशादि । अनिर्वचनीयवादेनापि न निर्वाहः । अनिर्वचनीयस्याप्युपलब्धिदर्शनात् । किं च **'नानिर्वचनीयस्य ख्यातिस्तदभावात्'** इति सांख्यसूत्रेण तन्निरासात्, तस्य लोके क्वाप्यदर्शनादिति तदर्थः । अत एवात्र भाष्येऽसत्तु मृगतृष्णावदित्येवोक्तम् । न तु 'अनिर्वचनीयं तु' इत्युक्तम् । किं च सद्भेदे—असत्त्वम्, असद्भेदे च सत्त्वमित्युभयरूपतापत्तिः, नत्वतिरिक्तत्वम् । तत्र सत्त्वमधिष्ठानगतमारोपितं यावद्विशेषदर्शनम् । असत्त्वं वास्तवम् । अत एव परमार्थसारे भगवता—

**सत्यमिव जगदसत्यं मूलप्रकृतेरिदं कृतं येन ।**

इत्यादिनोक्तम् । तत्र सत्त्वमधिष्ठानब्रह्मनिष्ठमारोपितमिति सत्यमिवेत्यनेन स्पष्टमेवोक्तम् । एतच्च परव्याख्याने प्रपंचितमिति बोध्यम्॥

( लिङ्गसाधकभाष्यम् )

## वस्त्रान्तर्हितवच्च तत् ॥

**यथा वस्त्रान्तर्हितानि द्रव्याणि नोपलभ्यन्ते । तद्वत्खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते ॥**

( आक्षेपभाष्यम् )

**विषम उपन्यासः । वस्त्रान्तर्हितानि द्रव्याणि वस्त्रापाय उपलभ्यन्ते । खट्वावृक्षयोः पुनर्येऽप्येते रथकारा वाशीवृक्षादनहस्ता मूलात्प्रभृति—आऽग्राद् वृक्षांस्तक्ष्णुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते ॥**

( प्रदीपः ) **विषम इति** । यस्य कदाचिदुपलब्धिर्भवति तस्यानुपलब्धिकारणं व्यवधानादिकमभिधीयताम् । अत्यन्तानुपलब्धस्य तु शशविषाणादिवत् खट्वादौ लिङ्गस्यासत्त्वमेवेत्यर्थः ॥ **येऽप्येत इति** । अनेन दृश्यानुपलब्धिमभावसंव्यवहारहेतुमुपन्यस्यति ॥ **रथकाराः**=तक्षाणः । **वृक्षादनम्**=शस्त्रकम् ॥

( उद्द्योतः ) **शशविषाणादिवदिति** । अन्यथा तेषामपि सत्त्वं स्यादिति भावः । **दृश्यानुपलब्धिम्**=दर्शनयोग्यानुपलब्धिम् । शस्त्रकमित्यत्र कः, अर्थे इति लोके प्रसिद्धमित्याहुः ॥

( आक्षेपसाधकभाष्यम् )

**केनैतदवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति ?**

**षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति—अतिसन्निकर्षात्, अतिविप्रकर्षात्, मूर्त्यन्तरव्यवधानात्, तमसावृतत्वाद्, इन्द्रियदौर्बल्यात्, अतिप्रमादादिति ॥**

**अतोऽत्र कश्चिद्धेतुर्द्रष्टव्यो येन खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यते ॥**

( प्रदीपः ) इतरो विद्यमानस्यापि लिङ्गस्य सौक्ष्म्यमनुपलब्धिकारणं दर्शयितुमाह—**षड्भिरिति** ॥ **अतिसन्निकर्षादिति** । यथा स्वचक्षुर्गतस्याञ्जनादेः ॥ **अतिविप्रकर्षादिति** । यथोड्डीनस्य शकुनेः ॥ **मूर्त्यन्तरव्यवधानादिति** । कुड्यादिव्यवहितस्य सुवर्णादेः ॥ **तमसावृतत्वादिति** । अन्धकाराक्रान्तस्य श्वभ्रादेः ॥ **इन्द्रियदौर्बल्यादिति** । तिमिराद्यावृतस्य नयनादेः ॥ **अतिप्रमादादिति** । विषयान्तरव्यासक्तचित्तत्वादित्यर्थः । सौक्ष्म्यस्येन्द्रियदौर्बल्येऽन्तर्भावान्न पृथगुपन्यासः । दिव्यचक्षुःश्रोत्रा हि सूक्ष्ममप्यर्थमुपलभन्ते न तु दुर्बलेन्द्रियाः ॥ **अतोऽत्रेति** । इन्द्रियदौर्बल्यमिति भावः ॥

( उद्द्योतः ) भाष्ये—**केनैतदिति** । यतो नोपलभंतेऽत इदं केन मानेन निर्णीतम् ॥ **सदिति** । एवं च सत्त्वे मानाभावादसत एवोपलंभ इत्यवश्यमंगीकार्यम् । किं च यदि सत्तदाऽनुपलम्भे किं कारणमिति भावः ॥ **अन्धकारेति** । आलोकस्य सहकारित्वादिति भावः ॥ **श्वभ्रः**=गर्तः । इंद्रियाणां दौर्बल्यं=ग्राहकशक्तिहीनता, सा च स्वगततिमिरादिदोषेण, वस्तुगतसौक्ष्म्यदोषेण, तदाधारकालगतसौक्ष्म्यदोषेण च ॥ **विषयांतरेति** । मनःसमाधेरपि तत्सहकारित्वादिति भावः ॥ ननु प्रकृतेऽनुपलब्धिकारणसौक्ष्म्यस्यानुल्लेखन्यूनतेत्यत आह—**सौक्ष्म्यस्येति** ॥ तदुपपादयति—**दिव्यचक्षुरिति** । योगसामर्थ्येनेति भावः । एवं चास्मदादीनामिंद्रियशक्त्यभावेन सूक्ष्मार्थसूक्ष्मकालावच्छिन्नार्थग्रहणायोग्यत्वमिति भावः । यद्यपि सर्वदर्शनशक्तिमत्सर्वमिंद्रियं तथाऽप्यस्मदादीनामिंद्रियस्य बह्व्यः शक्तयस्तमसावृता इति न देशकालस्वभावविप्रकृष्टानां प्रत्यक्षम्, योगाभ्यासेन च

---

१ खट्वाशब्दे टा, वृक्षे नकारश्च ॥

२ 'उद्भूतगन्धादिवत्' इति ग. पाठः ॥ यथोद्भूतगन्धवत्त्वे पृथिवीलक्षणं सम्यगुपपद्यते । अनुद्भूतगन्धवत्त्वेऽपि गन्धवत्त्वं स्वीक्रियत एव, तथा स्थूलं स्तनकेशादि क्वचिद्भवति तत्र स्त्रीत्वमस्त्येव यत्र च स्थूलं किंचिन्नोपलभ्यते तत्रापि स्त्रीत्वमस्त्येवेति तात्पर्यम् ॥

३ लिङ्गस्यानिर्वचनीयत्ववर्णनेनापि न निर्वाहः । अनिर्वचनीयस्यापि वस्तुनः प्रतीतेरावश्यकत्वात्, लिङ्गस्य च क्वचित्प्रत्यक्षं क्वचिच्च प्रतीतेरप्यभाव इति न लिङ्गमनिर्वचनीयमित्यर्थः ॥

४ ननु लिङ्गमनिर्वचनीयमित्याश्रयणेऽपि जगतो ह्यनिर्वचनीयत्वेन सदसद्रूपत्वमाश्रीयते तथा लिङ्गस्यापि सदसद्रूपत्वप्रसङ्गः । तस्य सद्रूपत्वं त्वाश्रीयत एव, असद्रूपत्वन्तु आश्रयितुमशक्यमिति लिङ्गस्यानीर्वचनीयत्वं कल्पयितुमशक्यमिति प्रपञ्चयति—**किं च सद्भेद इति** ॥

५ क. पुस्तके—कृतं येनेत्यादिना सत्वम्ब्रह्मनिष्ठमारोपितमिति पाठः । ग. पुस्तके च—येनेत्यादिना सत्त्वम्ब्रह्मनिष्ठमारोपितं सत्यमिवेति पाठः ॥

६ खट्वावृक्षादिषु लिङ्गमस्त्येव, व्यवधानान्न दृश्यते । यथा वस्त्रान्तर्हितानि द्रव्याणि न दृश्यन्ते तद्वत् ॥

७ **दर्शनयोग्यानुपलब्धिमिति** । प्रत्यक्षयोग्यस्य वस्तुनः प्रयत्नविशेषेणाप्यदर्शनमभाव एव तस्य वस्तुनः प्रतिपादयति ॥

८ **आलोकस्येति** । वस्तुनः प्रत्यक्ष इत्यादिः ॥

९ **मनः समाधेरिति** । वस्तुनः प्रत्यक्ष इत्यादिः ॥

१० ननु यत्र सौक्ष्म्यादप्रत्यक्षत्वमित्युच्यते तत्र तस्य वस्तुनः कदाप्युपलम्भाभावेनासत्वमेवेति किं नोच्यत इत्यत आह—**तदुपपादयतीति** । एवञ्च योगिनां योगसामर्थ्येनेन्द्रियवृत्तितमोनाशात्सूक्ष्मवस्तुनः प्रत्यक्षमिन्द्रियैरेव भवतीति अनुपलम्भाद्धेतोस्तस्य वस्तुनोऽभावो न कल्पनीय इत्यर्थः ॥

तदपनये क्लृप्तैः संनिकर्षैः संयोगादिभिरेव सर्वं प्रत्यक्षम्, योगजधर्मस्य पृथक्प्रत्यासत्तित्वकल्पनस्य गुरुत्वादिति तात्पर्यम् ॥ भाष्ये—**अतोऽत्रेति** । अतः—उक्तपदृकादित्यर्थः ॥

( लिङ्गसाधकभाष्यम् )

**केनैतदवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति ?**

## तयोस्तु तत्कृतं दृष्ट्वा

**स्त्रीकृतं शब्दं दृष्ट्वा स्त्रीत्यवसीयते । पुंस्कृतं शब्दं दृष्ट्वा पुमानिति ॥**

( प्रदीपः ) **केनैतदिति** । सतामसतां चानुपलम्भात् खट्वादिषु सर्वदा लिङ्गानुपलम्भात् सदसत्त्वविषयः संदेह इति प्रश्नः ॥ इतरस्तत्सद्भावेऽनुमानमाह—**तयोस्त्विति** । स्त्रीपुंसकार्यं टाबन्तत्वादिकं दृष्ट्वा कारणभूतलिङ्गानुमानं क्रियत इत्यर्थः॥

( उद्योतः ) **सतामसतां चेति** । सतां विप्रकर्षादिना, असतामसत्त्वेन । अनुपलम्भोऽत्राप्रत्यक्षम् । एवं च खट्वादिषु लिङ्गसदसत्त्वसंदेह एव, न सत्त्वनिश्चय इत्यर्थः ॥ **लिंगानुमानमिति** । स्त्रीत्वसत्ताऽनुमानमेव जायते, न तु तद्बाधज्ञानमपि कदाचिद्व्यवहारपर्यंतम्, मृगतृष्णाजलादेस्तूत्तरकालं बाधनिश्चयोऽतो न तद्वदारोपेणासतो भानमत्रेत्यर्थः ॥

( लिङ्गसाधने दृष्टान्तभाष्यम् )

## यथाऽऽकाशेन ज्योतिषः ।

**तद्यथा—आकाशं दृष्ट्वा ज्योतिरत्रेति गम्यते । ज्योतिर्निमित्तं ह्याकाशम् ॥**

( प्रदीपः ) **आकाशेनेति** । आकाशत इत्याकाशम्=प्रकाश=आलोकः, तेन यथा मेघान्तरितं ज्योतिरनुमीयते तथा लिङ्गमित्यर्थः ॥

( उद्योतः ) नन्वव्याप्यत्वात्कथं गगनेन ज्योतिरनुमानमत आह—**आकाशत इति** ॥

( आक्षेपभाष्यम् )

## अन्योन्यसंश्रयं त्वेतत्

**अन्योन्यसंश्रयं त्वेतद्भवति । स्त्रीकृतः शब्दः, शब्दकृतं च स्त्रीत्वम् । एतदितरेतराश्रयं भवति । इतरेतराश्रयाणि च न प्रकल्पन्ते ॥**

( प्रदीपः ) **अन्योन्यसंश्रयमिति** । ज्योतिःप्रकाशयोः प्रत्यक्षेण कार्यकारणभावावगमात् भवतु कार्येण कारणानुमानम् । खट्वादिषु तु लिङ्गस्य कदाचिदप्यग्रहणान्न तेन कस्यचित्कार्यकारणभावग्रहणम् । तत्र हि लिङ्गावगमात् शब्दप्रयोगः, शब्दप्रयोगाल्लिङ्गावगतिरितीतरेतराश्रयमेतदित्यर्थः ॥

( उद्योतः ) **न तेन कस्यचित्कार्यकारणेति** । अनेन दृष्टविषयानुमानायोगोऽत्र दर्शितः ॥ अथ स्त्रियां टाबिति शब्दतस्तयोः कार्यकारणभावग्रहात् कार्यं कारणपूर्वमिति सामान्यव्याप्त्या च टाबादिना कार्येण तत्कारणलिंगानुमानं स्यात्, तत्रेतरेतराश्रयमाह—**तत्र हीति** ॥ **एतदिति** । लिंगकार्यदर्शनेन लिंगानुमानमित्यर्थः । साधुलिंगकार्येण लिंगसत्ताऽनुमानं लिंगसत्ताज्ञानेन च तत्साधुत्वज्ञानमित्यन्योन्याश्रय इति भावः ॥

( दूषणभाष्यम् )

## प्रत्यक्षेण विरुध्यते ॥

**प्रत्यक्षेण खल्वपि स विरुध्यते—**

**य आह खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति । तत्र स्वेन्द्रियविरोधः कृतो भवति ।**

**न च नाम स्वेन्द्रियविरोधिना भवितव्यम् ॥**

( प्रदीपः ) यदुक्त**मादित्यगतिवत्सन्नेति** तद्दूषयति—**प्रत्यक्षेणेति** । लिङ्गस्वरूपविविक्तखट्वादिवस्तुविषयेण प्रत्यक्षेण लिङ्गाभावनिश्चयकारिणा विरुध्यत एतदित्यर्थः । ईन्द्रियदौर्बल्यमनुपलब्धिकारणं प्रमाणान्तरावसितवस्तुविषयमेवाभिधातुं शक्यते ॥

( उद्योतः ) **लिङ्गस्वरूपविविक्तेति** । लिंगस्वरूपेण विविक्तं रहितं यत् खट्वादि तत्प्रत्यक्षेणेत्यर्थः । एवं च प्रत्यक्षबाधितमनुमानमिति भावः ॥ ननु इंद्रियदौर्बल्यादनुपलब्धिरित्युक्तं तत्राह—**इन्द्रियेति** । अन्यथा शशविषाणादावप्येवं स्यादिति भावः ॥

१ ननु योगिनां प्रत्यक्षम्भवतीति तद्योगेनैव नन्विन्द्रियैरित्याशङ्कामपनयति—**योगजधर्मस्येति** ॥

२ स्त्रीपुंल्लिंगहेतूनां स्तनकेशादीनां सतां, तदभावे नपुंसकमिति नपुंसकलिंगहेतूनामसताञ्चाप्रत्यक्षत्वादित्यर्थः । ननु खट्वादौ तदभावे नपुंसकमिति लक्षणसत्त्वेनासतामित्यनुपपन्नमिति चेत् साम्यावस्थारूपहेतूनामप्रत्यक्षत्वादित्यर्थो बोध्यः ॥

३ लौकिकलिङ्गाश्रयणे शब्दे लिङ्गं दृष्ट्वा प्रत्ययः प्रवर्तते, प्रत्ययसन्निधाने च शब्दे लिङ्गं दृश्यत इत्येतदितरेतराश्रयम् ॥

४ दृष्टविषये एव प्रवर्तमानं यदनुमानं तस्यानुमानस्य सर्वथाऽप्रत्यक्षत्वाल्लिङ्गस्यात्र न प्रवृत्तिरित्यर्थः ॥

५ ननु संसारस्यानादित्वेन प्रयोगे वर्तमानाच्छब्दाल्लिङ्गावगतिः स्यात्तस्य स्वकीयः प्रयोगोप्युपपद्येतेत्यन्योन्याश्रयस्य न प्रतिबन्धकत्वमित्याशङ्कायां शब्दस्य साधुत्वज्ञानं लिङ्गसत्तानन्तरभावि, लिङ्गमेवैत्येतदात्मिका लिङ्गसत्ता च साधुत्वज्ञानानन्तरभावीत्येतदात्मकमन्योन्याश्रयमाह—**साधुलिङ्गेत्यादिना** ॥ अस्य चान्योन्याश्रयस्य पूर्वं साधुत्वाभावादेव प्रतिबन्धकत्वमिति सुस्पष्टमेव ॥

६ लौकिकलिङ्गरहितखट्वादिवस्तुदर्शनेन खट्वारूपे वस्तुनि लिङ्गं नास्तीति प्रत्यक्षम्, खट्वाशब्दे स्त्रीप्रत्ययादिदर्शनहेतुना लिङ्गस्यानुमानं स्यात् तच्च प्रत्यक्षविरुद्धमिति अप्रमाणमिति भावः ॥

७ ननु खट्वादिषु विद्यमानमपि लिङ्गमतिदूरादतिसन्निकर्षादिन्द्रियदौर्बल्याच्च नोपलभ्यत इत्येतत्प्रतिपादयति—**नन्विति** ॥

८ प्रबलप्रमाणान्तरसिद्धवस्तुविषयकमेवानुपलब्धिसाधकमिन्द्रियदौर्बल्यादि, अन्यथा शशविषाणं सदपि इन्द्रियदौर्बल्यादिप्रतिबन्धकवशान्नोपलभ्यत इत्येतदप्यादरणीयं स्यात्तदाह—**शशेति** ॥

९ इन्द्रियदौर्बल्यस्यानुपलब्धिकारणत्वन्तथाश्रयितुं शक्यते यत्र प्रबलप्रमाणान्तरेण निश्चितसत्ताकमपि वस्तु क्वचिदनुपलब्धं स्यात्, न तु सर्वत्र ॥

प्रमाणांतरावसितेति । प्रबलमानांतरेत्यर्थः ॥ भाष्ये—**स्वेंद्रियविरोधः**—स्वेंद्रियजन्यप्रत्यक्षविरोधः । अनुमानेन च स्वेंद्रियजप्रत्यक्षविरोधिना न भवितव्यमित्यर्थः । अनयोः प्रत्यक्षानुमानयोरनुमानस्यानन्यथासिद्धत्वरूपबलवत्त्वाभावेन प्रत्यक्षेण बाध एवोचित इति तात्पर्यम् ॥

( दूषणान्तरभाष्यम् )

**तटे च सर्वलिङ्गानि दृष्ट्वा कोऽध्यवसास्यति ॥**

**तटे च खल्वपि सर्वाणि लिङ्गानि दृष्ट्वा—तटः, तटी, तटमिति, कस्तदध्यवसातुमर्हति—इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति ॥**

( प्रदीपः ) **तटे चेति** । लिङ्गशब्देन तत्कार्याण्यभिधीयन्ते । एकस्मिन् द्रव्ये विरोधात्सर्वलिङ्गासम्भवः । स्त्रीपुंससद्भावे च नपुंसकत्वं न स्यात् 'तदभावे नपुंसकम्' इति वचनात् ॥

( उद्द्योतः ) कार्येण लिंगानुमानेन दोषान्तरमाह भाष्ये—**तटे चेति** ॥ ननु तटे स्तनादिलिंगानि नोपलभ्यंतेऽत आह—**लिंगशब्देनेति** । भाष्ये—**अध्यवसास्यति**=निश्चेष्यति ॥ ननु तत्र सर्वं लिंगानुमानमस्त्वत आह—**एकस्मिन्निति** ॥ **सर्वलिंगासम्भव इति** । लौकिकसर्वलिङ्गासम्भव इत्यर्थः । तेषां परस्परं विरोधेन विविक्तविषयावस्थानादिति भावः ॥

( पूर्वपक्षोपसंहारभाष्यम् )

**तस्मान्न[3] वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम् । अवश्यं च कश्चित्स्वकृतान्त आस्थेयः ।**

**कोऽसौ स्वकृतान्तः ?**

( प्रदीपः ) **स्वकृतान्त इति** । स्वसिद्धान्तः । स्त्रीपुमानिति रूढिपरिहारेण क्रियाशब्दत्वमाश्रयणीयमित्यर्थः ॥

( उद्द्योतः ) भाष्ये—**तस्मादिति** । सन् लिङ्गं नोपलभ्यत इति वक्तुमशक्यं प्रत्यक्षविरोधात्, तटादिषु विरोधाच्च । नाप्यसदुपलभ्यत इत्यपि सत्त्वेन प्रतीतिविरोधात्, कदाचिदपि बाधानुभवाच्च, अनुमानेन सत्त्वनिश्चयाच्च । तथा चाचेतनेऽव्याप्तिर्दारादिष्वतिव्याप्तिश्च यतस्तस्मादित्यर्थः ॥ सांख्यमतावष्टम्भेनाह—**स्वकृतान्त इति** । एतेन सांख्यशास्त्रानुसारित्वं व्याकरणस्येति सूचितम् ॥ **रूढिपरिहारेणेति** । लोके, अन्यतन्त्रे च रूयादिशब्दाः स्तनकेशादिमत्सुरूढा अपि, असच्छास्त्रे योगेन तैः संस्त्यानप्रसवावुच्येत इत्यर्थः ।

( सिद्धान्तभाष्यम् )

**संस्त्या[4]नप्रसवौ लिङ्गमास्थेयौ स्वकृतान्ततः ।**

**संस्त्यानप्रसवौ लिङ्गमास्थेयौ ॥**

( आक्षेपभाष्यम् )

**किमिदं संस्त्यानप्रसवाविति ?**

( व्युत्पत्तिदर्शकभाष्यम् )

**संस्त्याने स्त्यायतेर्ड्रट् स्त्री, सूतेः सप् प्रसवे पुमान् ॥ इति ।**

( आक्षेपभाष्यम् )

**ननु च लोकेऽपि स्त्यायतेरेव स्त्री, सूतेश्च पुमा[6]निति ॥**

( प्रदीपः ) **संस्त्यान** इति । भावसाधनत्वं दर्शयति ॥ **सूतेरिति** । 'सू'इत्येतस्य धातोः सप् भवति=सित्यस्य पकारो भवतीत्यर्थः । औणादिको मसुन्प्रत्ययः, ह्रस्वश्च बाहुलकात् ॥

( उद्द्योतः ) सपः प्रत्ययत्वभ्रमं निराकरोति—**सित्यस्येति** । सकारस्येति पाठान्तरम् । बाहुलकादिति सर्वान्वयि, पातेर्डुम्सुन्नित्यादि तु व्याकरणान्तरेऽप्यनार्षम् ॥

( समाधानभाष्यम् )

**अधिकरणसाधना लोके स्त्री—स्त्यायत्यस्याङ्गर्भ इति । कर्तृसाधनश्च पुमान्—सूते पुमानिति ।**

**इह पुनरुभयं भावसाधनम् । संस्त्यानं स्त्री, प्रवृत्तिश्च पुमान् ॥**

( प्रदीपः ) **स्त्यायत्यस्यामिति** । संघातरूपं प्राप्नोतीत्यर्थः ॥ **कर्तृसाधन इति** । सूतेऽपत्यं जनयतीति पुमानित्यर्थः ॥ **संस्त्यानमिति** । तिरोभावः, प्रवृत्तिराविर्भावः, साम्यावस्था स्थितिः, एताश्चावस्थाः शब्दगोचरा एवेत्यवसेयम् ॥

---

१ खट्वाशब्दादौ स्त्रीप्रत्ययादिदर्शनेन लिङ्गस्यानुमानं भवतीत्याग्रहेऽपि एकस्मिन् द्रव्ये लौकिकलिङ्गद्वयासम्भवेनानुमानस्यासम्भवमाह—तटे चेत्यादिना ॥

२ ननु विरोधादेकस्मिन् द्रव्ये सर्वलिङ्गानामसम्भवेऽपि एकस्मिन् शब्दे सर्वलिङ्गकार्याणि भविष्यन्ति तेन तेषामनुमानं स्यादित्यस्यासम्भवमाह—स्त्रीपुंसेति ॥

३ वैयाकरणैर्लौकिकलिङ्गस्वीकारे तटाद्यचेतनेषु शब्देष्वव्याप्तिस्तत्र कस्यापि लिङ्गस्याभावात् । दारादिशब्देष्वतिव्याप्तिस्तत्र लौकिकस्य स्त्रीत्वस्य विद्यमानत्वेन पुंस्त्वमनुपपन्नं यतस्तस्मादित्यर्थः ॥

४ स्त्रीपुमानित्याद्यन्वर्थसंज्ञाऽऽश्रयेण स्त्यायतीति-स्त्री, सूते-पुमान् स्त्यै धातोर्ड्रटि स्त्रीप्रत्यये च स्त्री, सू धातोरौणादिके मसुन् प्रत्यये सू इत्यस्य सकारस्य पकारे बाहुलकाद्ध्रस्वे च पुमानित्याद्याह—संस्त्यानेत्यादिना ॥

५ इदानीन्तनेषु कैय्यटपुस्तकेषु सकारस्येत्येव पाठ उपलभ्यते तथाऽपि उद्द्योतानुरोधेन स पाठः स्थापितः ॥

६ सप्पदेन सकारस्य स्थाने पकार आदेशो विधीयतेऽतः 'सू इत्येतस्य,' 'धातोः' इत्यनयोः षष्ठ्यन्तत्वमुपपन्नम् ॥

७ क. छ. पुस्तकयोः 'इति' शब्दो न दृश्यते ॥

८ बाहुलकादेव सप्, मसुन् प्रत्ययः, ह्रस्वोऽपि ॥

९ गुणानां सत्त्वरजस्तमसां तिरोभावः स्त्री, तेषां गुणानामाविर्भावश्च पुमान् । एवं च गुणानामाधिक्ये पुमान्, गुणानां न्यूनतायां स्त्री, साम्ये च नपुंसकमिति फलति ॥

( **उद्द्योतः** ) **संघातरूपमिति** । गर्भ[1]पदेन तत्कारणं शुक्रशोणितमुच्यते ॥ संस्त्यानपदार्थमाह—**तिरोभाव इति** ॥ संस्त्यानप्रसवाभ्यां तृतीयमपि लक्ष्यत इत्याह—**साम्यावस्थेति** ॥ नन्वेतासामवस्थानां सर्वत्र सत्त्वे प्रत्यक्षेण कुतो नोपलंभोऽत आह—**एता इति** । **शब्दगोचरा एव**—शब्दजन्यप्रतीतिविषया एवेत्यर्थः । यद्यपि वक्ष्यमाणन्यायेन सर्वेषु पदार्थेष्वेता व्याप्तास्तथाऽपि केनचिच्छब्देन कस्यचिदेव प्रत्यायनमित्यपि शब्दगोचरा इत्यनेनोच्यते ॥

( **आक्षेपभाष्यम्** )

**कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमान् ? गुणानाम् ।**

**केषाम्[3] ?**

( **प्रदीपः** ) **गुणानामिति** । सत्त्वरजस्तमांसि गुणाः, तत्परिणामरूपाश्च तदात्मका एव शब्दादयः पञ्च गुणाः । तत्संघात[4]रूपं च घटादि, न तु तद्व्यतिरिक्तमवयविद्रव्यमस्तीति सांख्यानां सिद्धान्तः ॥ **केषामिति** । सत्त्वादीनामनारब्धकार्याणां सूक्ष्मावस्थायिनामप्रत्यक्षत्वाच्छब्दै[5]र्व्यवहारागोचरत्वात्प्रश्नः । तथा चोक्तम्—

**गुणानां परमं रूपं न दृष्टिपथमृच्छति** ॥ इति ।

( **उद्द्योतः** ) भाष्ये—**कस्य पुनरिति** । जातावेकवचनम् ॥ **सत्त्वेत्यादि** । सर्वस्य जगतः सुखदुःखमोहान्वयात्तत्कारणत्वेन सत्त्वादीनि परिकल्प्यंते । प्रकृतिस्त्रिगुणात्मिका महच्छब्दवाच्यबुद्धिरूपेण परिणमते । महदहंकारात्मना, अहंकारस्य गंधरूपरसस्पर्शशब्दात्मकपञ्चतन्मात्रा दशेंद्रियाणि मनश्च परिणामः । अत एव सत्त्वाद्यात्मकाः शब्दादयश्च पृथिव्यात्मना परिणमंते । तत्र पञ्चानां पृथ्वी, चतुर्णामापः, त्रयाणां तेजः, द्वयोर्वायुः, एकस्य गगनं । एवं प्रकृतिः सर्वरूपा पुरुषभोगार्था, पुरुषश्च न प्रकृतिर्नापि विकृतिः । केवलचैतन्यरूपोऽपरिणामी ह[6] इति सांख्यसिद्धान्तः ॥ प्रकृतिरचेतनाऽपि चेतनस्य पुरुषस्य भोगापवर्गलक्षणमर्थं साधयितुं तत्तदद्वष्टादिसहकारेण ईश्वरेण प्रवर्त्यत इति च सेश्वरसांख्यसिद्धान्तः ॥ **तत्संघातरूपं चेति** । शब्दादिसंघातरूपमित्यर्थः ॥ **नतु तद्व्यतिरिक्तमिति** । अत एवाग्रे सर्वाश्च मूर्तय एवमात्मिका इति भाष्यकारो वक्ष्यति ॥ **सांख्यानामिति** । सेश्वरसांख्यानामाचार्यस्य पतञ्जलेरित्यर्थः । 'गुणसमूहो द्रव्यमिति पतञ्जलिः' इति योगभाष्ये स्पष्टम्, तद्वक्ष्यति—सर्वाश्च मूर्तय एवमात्मिका इति ॥ **सूक्ष्मावस्थायिनामिति** । प्रकृतिरूपाणामित्यर्थः । अप्रत्यक्षत्वादित्यस्यैव व्याख्यानं **शब्दव्यवहारेति** । प्रकृतिर्व्यतिरिक्तशब्दावाच्यत्वादित्यर्थः । तदवस्थानामाविर्भावतिरोभावयोरभावाल्लिंगत्रयव्यवहारानुपपत्तेरित्यपि बोध्यम् । यद्वा शब्दकृतव्यवहारस्य प्रवृत्तिनिवृत्तिरूपस्याविषयत्वादित्यर्थः, तत्राप्रत्यक्षत्वं हेतुः । **परमम्**=शब्दादिरूपेणापरिणतम्, **दृष्टिपथमित्यस्य** ज्ञानविषयत्वमित्यर्थः ॥

( **समाधानभाष्यम्** )

**शब्दस्पर्शरूपरसगन्धानाम्** ॥

( **प्रदीपः** ) इतरस्तत्परिणामरूपान् लोकप्रसिद्धानाह—**शब्दस्पर्शेति** ॥

( **उद्द्योतः** ) शब्दादि[10]ग्रहणं तत्परिणामसामान्योपलक्षणम् ॥

( **सामान्यप्रतिपत्तिभाष्यम्** )

**सर्वाश्च पुनर्मूर्तय[11,12] एवमात्मिकाः—संस्त्यानप्रसवगुणाः, शब्दस्पर्शरूपरसगन्धवत्यः ॥**

**यत्राल्पीयांसो गुणास्तत्रावरतस्त्रयः—शब्दः, स्पर्शः, रूपमिति ॥**

**रसगन्धौ न सर्वत्र ॥**

( **प्रदीपः** ) **अवरत इति** । अन्तत इत्यर्थः । ननु आकाशं शब्दात्मकमेव, स्पर्शात्मकश्च वायुः । नैष दोषः । संपिण्डितस्वभावाश्चक्षुर्गोचरा मूर्तिशब्देनात्र विवक्षिताः ॥ **रसगन्धाविति** । वाय्वाकाशयोरभावात् ॥

( **उद्द्योतः** ) भाष्ये संस्त्यानप्रसवगुणत्वे हेतुकथनम्—**शब्दस्पर्शेत्यादि** । शब्दादिपदेन शब्दादितन्मात्राणि, तेषां तिरोभावादिसंभवादिति भावः । समूहसमूहिनोः काल्पनिको भेदोऽपीति सूचयितुमत्र मत्वर्थीयः ॥ **स्पर्शात्मकश्चेति** । चात् शब्दात्मक इति बोध्यम् ॥ भाष्ये—**शब्दस्पर्शे**त्याद्युपलक्षणं सत्त्वरजस्तमःकार्यमात्रस्य । अत एव रसो गंधः पाक इत्यादौ लिंगव्यवहारनिर्वाहः । पद्मावत्यादौ रूपादीनां सुखदुःखमोहजनकतया तेषां सत्त्वरजस्तमोमयतायाः स्पष्टतया तत्कथनद्वारा सर्वं तत्कार्यमुपलक्षितमिति बोध्यम् । एतेन शब्दनिष्ठमेव लिङ्गमिति नव्योक्तं परास्तम् । स्पर्शादिकथनस्य भाष्ये वैयर्थ्यापत्तेः ॥ **चक्षुर्गोचरा इति** । वाय्वाकाशयो-

१ स्त्यायत्यस्यां गर्भ इति विग्रह इति भावः । यस्यां शुक्रशोणिते संघातरूपं प्राप्नुत इत्यर्थः ॥

२ छ. पुस्तके 'स्त्यानम्' इति पाठः ॥

३ गुणपदेन सत्त्वरजस्तमसामेव ग्रहणं स्यात्तथाऽपि तेषामतीव सूक्ष्मत्वात्तिरोभावाविर्भावौ न दृश्येत इत्येतदसंगतमिव भातीत्युपपादयति प्रश्नमुखेन भाष्यकारः—केषामिति ॥

४ सांख्यमते समवायस्यानभ्युपगमेनावयवातिरिक्तमवयवि द्रव्यं न स्वीकर्तुं शक्यम्, अवयवसमुदायरूपत्वादेवावयविनः ॥

५ इन्द्रियजन्यप्रत्यक्षविषयस्यैव पदार्थस्य शब्दव्यवहारगोचरत्वम् । अनारब्धकार्याणां सत्त्वरजस्तमसामिन्द्रियजन्यप्रत्यक्षविषयत्वाभावेन शब्दव्यवहारगोचरत्वाभाव इति भावः ॥

६ ख. ग. पुस्तकयोः 'शुद्धः' इति पाठः ॥

७ सत्त्वरजस्तमःपरिणामरूपशब्दस्पर्शरूपरसगन्धगुणानामित्यर्थः ॥

८ मूर्तयः=अवयविनः, द्रव्यरूपाः ॥

९ 'प्रकृतिशब्दातिरिक्तशब्दावाच्यत्वात्' इति ख, ग. पाठः ॥

१० ननु गुणानामहंकारोत्पन्नानां परिगणनसमये शब्दस्पर्शेत्यादिकथनस्य न्यूनतेत्यत आह—शब्दादिग्रहणमिति ॥

११ शब्दादिपदेन=शब्दस्पर्शरूपरसगन्धपदैः शब्दादितन्मात्राणि गृह्यन्ते, तेष्वेवाविर्भावतिरोभावसम्भवादित्यर्थः ॥

१२ सर्वाश्च पुनर्मूर्तयः—सर्वाणि द्रव्याणीत्यर्थः । सांख्यमतेनावयवातिरिक्तावयविनोऽभावेन गुणसमुदायो द्रव्यं न तु तद्व्यतिरिक्तं किञ्चित् ॥

रेवंरूपत्वाभावेन ताविह न विवक्षिताविल्यर्थः ॥ **वाय्वाकाशयो-रिति** । इदमुपलक्षणं तेजसोऽपि, तत्रापि रसगंधयोरभावात् ॥

**( सर्वपदार्थेषु लिङ्गबोधकभाष्यम् )**

**प्रवृत्तिः खल्वपि नित्या । न हीह कश्चिदपि स्वस्मिन्नात्मनि मुहूर्तमप्यवतिष्ठते, वर्द्धते वा यावदनेन वर्द्धितव्यम्, अपायेन वा युज्यते ॥**

**तच्चोभयं सर्वत्र ॥**

( प्रदीपः ) सर्वपदार्थव्यापित्वं पुंस्त्वादीनामाह—**प्रवृत्तिरिति** ॥ **न हीति** ॥ सत्त्वादीनामाविर्भावादिरूपः प्रवृत्तिशब्दवाच्यो नित्यः परिणाम इत्यर्थः । पुरुषो यद्यप्यपरिणामी तथाऽपि भोक्तृत्वात्तद्धर्मापन्न इव भवति । तदुक्तं हरिणा—

**प्रवृत्तिरिति सामान्यं लक्षणं तस्य कथ्यते ।**
**आविर्भावस्तिरोभावः स्थितिश्चेत्यथ भिद्यते ॥ १ ॥**
**प्रवृत्तिमन्तः सर्वेऽर्थास्तिसृभिश्च प्रवृत्तिभिः ।**
**सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः ॥ २ ॥**
**यश्चाप्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते ।**
**अनुयातीव सोन्येषां प्रवृत्तीर्विष्वगाश्रयः ॥ ३ ॥**
**तेनास्य चितिरूपं च चितिकालश्च भिद्यते ।**
**तस्य स्वरूपभेदस्तु न कश्चिदपि विद्यते ॥ ४ ॥**
**अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते ।**
**प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम् ॥ ५ ॥** इति

**सामान्यमपि** गोत्वादिकं व्यक्तेरव्यतिरिक्तत्वात्प्रवृत्तिधर्मैः । **शश**विषाणादावपि उत्तरपदार्थस्य सद्भावात्तद्द्वारको लिङ्गयोग इति सर्वपदार्थव्यापिनीत्वं **प्रवृत्तेः** । आविर्भावतिरोभावान्तरालावस्था स्थितिरुच्यते । सा च नपुंसकत्वेन व्यवस्थाप्यते । स्त्रीत्वं स्त्रीता पुंस्त्वमित्यादौ **संस्त्यानादे**रपि प्रवृत्तिलक्षणलिङ्गयोगः ॥

**( उद्द्योतः )** नन्वेवमपि संस्त्यानप्रसवगुणत्वं सर्वत्र कथमत आह भाष्ये—**प्रवृत्तिः खल्वपीति** । प्रवृत्तिरिति लिंगसामान्यलक्षणम् । **नित्या** सार्वदिकत्वात्सार्वत्रिकत्वाच्च, तदाह—**सर्वपदार्थव्यापित्वमिति** । रूपरसादिसर्वपदार्थेत्यर्थः । इदमुपलक्षणं सर्वकालव्यापित्वस्य । **प्रवृत्तिः खल्वपि नित्येत्यनेनान्त्यम्** । **तच्चोभयं सर्वत्रेत्यनेनाद्यं** दर्शितमिति बोध्यम् ॥ भाष्ये—**नहीहेति** । रूपादीनामपि काञ्चिदवस्था प्रलीयते काञ्चिद्धत्ते इति आविर्भावतिरोभावौ सर्वत्रेत्यर्थः ॥ **आविर्भावादीति** । आदिना तिरोभावस्थिती ॥ **नित्य इति** । नित्यत्वं च सर्वदा सर्वत्र च भावात्, तच्च नहीत्यादिना भाष्ये दर्शितम् ॥ ननु पुरुषे परिणामानभ्युपगमात् कथं पुरुषश्चितिश्चैतन्यमिति लिङ्गत्रययोग इति शंकते—**पुरुषो यद्यपीति** ॥ **तद्धर्मापन्न इवेति** । भोग्यत्रिगुणात्मकसकलवस्तुधर्मापन्नेत्यर्थः । अयं भावः—भोक्तृत्वावस्थायां भोग्यवस्तुशबलितमेव चैतन्यं प्रतीयते, तदेव च शब्दगोचरं; एवं च गच्छति पुरुष इतिवत्तस्य लिङ्गत्रयोपपत्तिरिति ॥ **प्रवृत्तिरिति** । अजस्रपरिणामिनां गुणानां परिणामविशेषानादरेण प्रवृत्तिः=परिणाम इति सामान्यलक्षणमित्यर्थः ॥ अथ तत्सामान्यमाविर्भावादिरूपेण त्रिधा भिद्यते, तत्राविर्भावः पुंस्त्वम्, तिरोभावः स्त्रीत्वम्, स्थितिरंतरालावस्था नपुंसकत्वम्, अत एव स्थितेः संस्त्यानप्रसवव्यापित्वेन लिङ्गसर्वनामनपुंसकम् ॥ १ ॥ प्रवृत्तेः सार्वत्रिकत्वं दर्शयति—**प्रवृत्तिमन्त इति** । यतस्तिसृभिः प्रवृत्तिभिः सततं सर्वदा न वियुज्यंतेऽतः सर्वेऽर्थाः प्रवृत्तिमन्त इत्यन्वयः, नित्ययोगे मतुप् । नित्यं प्रवृत्तिमंत इत्यर्थः । **सततमि**त्यनेन सार्वदिकत्वमुक्तम् ॥ **वाचश्चेवेति** । एवंभूतेषु पदार्थेष्वेव वाचःशब्दस्य संभवः, न हि शुद्धं परिणामरहितं वस्तु शब्दविषयः, आकारावग्रहेणैव शब्दवाच्यत्वादिति भावः ॥ २ ॥ अपरिणामधर्मिणि पुरुषे लिङ्गमुपपादयति—**यश्चेति** । **चितिरूपेण**=केवलचैतन्यरूपेण । **गृह्यते** योगिभिरिति शेषः । **अन्येषां**=भोग्यानां, **विष्वगाश्रयः**=सर्वपदार्थानुगतः । 'विष्वगाश्रयाः', इति पाठोऽसंगतः । अन्येषां प्रवृत्तिरित्यनेन पौनरुक्त्यादित्याहुः ॥ **अनुयातीव**=अनुगच्छतीव । वस्तुतः परिणामाभावेऽपि व्यवहारे भोग्यशबलितत्वेनैव ग्रहणात् भोग्यनिष्ठप्रवृत्त्यादिना सोऽपि लिङ्गादिमानिति भावः । तत्तदवस्थतत्तद्वस्त्वाकारवृत्तीनां चैतन्ये प्रतिबिंबादिति तत्त्वम् ॥ ३ ॥ तत्र मानं दर्शयति—**तेनेति** । तेन बुद्धिदर्पणसंक्रान्तेन भोग्यजातेन भोक्तुश्चितिरूपं भिद्यते । विषयाकारेण हि ज्ञानं भेदेन गृह्यत इत्यर्थः । यथा घटज्ञानं पटज्ञानमिति ॥ **कालश्चेति**—ज्ञास्यति ज्ञातेत्यादौ । **तस्य**=चैतन्यमात्ररूपस्य पुरुषस्य ॥ **स्वरूपभेद इति** । स्वरूपतो देशतः कालतो वा न कश्चित्स्वरूपभेदस्तस्य विद्यत इत्यर्थः ॥ ४ ॥ ननु शुद्धस्य पुरुषस्य भोग्येनासंबन्धात्कथं तद्वृत्तिधर्मेण व्यवहारोऽत आह—**अचेतनेष्विति** । चैतन्यमचेतनेषु संक्रान्तमिव दृश्यत इत्यन्वयः ॥ **प्रतिबिंबकधर्मेणेति** । बिंबप्रतिबिम्बन्यायेनेत्यर्थः । यथा दर्पणे मुखादि गृह्यते न च तद्वस्तुतस्तत्रास्ति, तद्वच्चैतन्यमपि दर्पणस्थानीयेषु सत्त्वादिगुणमयेषु जडेष्वंतःकरणादिषु सत्त्वधर्मस्वच्छत्वातिशयवशेन तत्राविद्यमानमपि संक्रान्तमिव दृश्यते । अतस्तत्संक्रमविशिष्टान्तःकरणवृत्तौ सर्वा-

१ तिरोभावाविर्भावौ सर्वत्र नित्यावेवेति कथयितुं—नहीह कश्चिदित्यादि ॥
२ तिरोभावाविर्भावौ ॥
३ भोग्यसम्बन्धि आविर्भावतिरोभावस्थितिरूपान् परिणामाननुगच्छतीव विष्वगाश्रय इत्यर्थः ॥
४ यद्यपि पुरुषः परिणामरहितोऽपि स्वीयविकारेष्वनुगतत्वात्तत्तल्लिङ्गभाग्भवति, तथाऽपि सामान्यादिषु पदार्थेषु प्रकृतिविकृतिभावाभावेन कथं लिङ्गयोगः संभवतीत्याह—सामान्यमपीति ॥
५ सर्वदाशब्दात्कालाट्ठञि सार्वदिक इति । सार्वकालिक इत्यर्थः ॥
६ प्रवृत्तिः खल्वपीति भाष्येण सर्वकालव्यापित्वरूपमन्त्यम्बोध्यत इत्यर्थः ॥
७ तच्चोभयं सर्वत्रेत्यनेन भाष्येण सर्वपदार्थव्यापित्वरूपमाद्यम्बोध्यत इत्यर्थः ॥
८ ननु स्थितिपदेन कथं नपुंसकलिंगग्रहणम्? तदभावे नपुंसकमित्यादिना अभावरूपत्वमेव नपुंसकलिंगस्येति स्थितिपदेन तद्ग्रहणमयुक्तमित्याशङ्कां वारयितुमाह—अत एव स्थितेरिति ॥
९ निराकारं वस्तु शब्दवाच्यं न भवतीति शब्दबोध्यत्वमाकारग्रहणेनेत्यर्थः ॥

र्थाकारसमर्पणात् तादृशवृत्तेश्च पुनश्चेतने प्रतिबिम्बादन्येषां प्रवृत्तिमनुविदधदनुभवति लिङ्गे योगमिति ॥ तदेव वाच्यो निबन्धनमिति भावः ॥ ५ ॥ ननु जातेर्नित्यतया प्रवृत्तिधर्मायोगात्कथं जातिः सामान्यमित्यादि लिङ्गयोगोऽत आह—**सामान्यमपीति** । तत्तद्व्यक्त्यनुगता वस्तुसत्त्वैव[1] गोत्वादिजातिरिति पक्षे इदम्, जातिव्यक्त्योस्तादात्म्यबोधकस्य समवायस्यैव संबंधत्वात्तद्धर्मारोपस्तत्रेत्यर्थः । वस्तुतस्तदपि प्रकृतेः परिणामविशेष एव, चिरस्थायिता मात्रेण तु परेषां नित्यत्वव्यवहारः ॥ अत्यंतासच्छशविषाणादौ लिङ्गयोगमुपपादयति—**शशेति** । एवं चोत्तरपदार्थ[2]धर्मस्य बौद्धे समुदाये आरोप इति भावः ॥ केचित्तु यथा बुद्धिविषया[3]र्थवत्त्वेन प्रातिपदिकत्वं तथा लिङ्गयोगोऽपीत्याहुः ॥ **प्रवृत्तेरिति** । परिणामस्येत्यर्थः ॥ ननु स्त्रीत्वादेः स्त्रीत्वांतराद्ययोगात् कथं स्त्रीतेत्यादीति तत्राह—**संस्त्यानादेरिति** । परिणामस्वरूपस्थायिसंस्त्यानादेः परिणामांतरसद्भावेन [4]सालिंगतोपपन्नेति भावः ॥

## ( आक्षेपभाष्यम् )

**यद्युभयं सर्वत्र,**

**कुतो व्यवस्था ?**

## ( समाधानभाष्यम् )

**विव[5]क्षातः ।**

**संस्त्यानविवक्षायां स्त्री, प्रसवविवक्षायां पुमान्, उभयविवक्षायां नपुंसकम् ॥**

( प्रदीपः ) **विवक्षात इति** । लोकव्यवहारानुवादिनी विवक्षाऽऽश्रीयते न तु प्रायोक्त्री । तदुक्तं हरिणा—

**संनिधाने निमित्तानां किंचिदेव प्रवर्तकम् ।**
**यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ १ ॥**
**भावतत्त्वविदः शिष्टाः शब्दार्थेषु व्यवस्थिताः ।**
**यद्यद्धर्मेऽङ्गतामेति लिङ्गं तत्तत्प्रचक्षते ॥ २ ॥** इति ॥

( उद्योतः ) **लोकव्यवहारेति** । पृषोदरादिसूत्रोक्तशिष्टलोकेत्यर्थः ॥ **किंचिदेवेति** । लिंगविशेषरूपं निमित्तमित्यर्थः । शब्दशक्तिवैचित्र्यादिति भावः । **प्रवर्तकम्**—तत्तदर्थे तत्तच्छब्दप्रयोगनियामकम् । यथा तक्षणच्छेदनाद्यनेकक्रियासंनिधानेऽपि तक्षणमाश्रित्य तक्षाऽयमिति व्यवह्रियते ॥ १ ॥ **भावतत्त्वविदः**—ब्रह्मतत्त्वसाक्षात्कारवंतः, निरुपपद[6]भावपदस्य ब्रह्मणि रूढेः । [7]ते=**शिष्टाः** । शब्दार्थेषु व्यवस्थिताः । प्रमाणत्वेनेति शेषः । तेषां प्रयोगे यद्यल्लिंगं धर्मेऽङ्गतामेति तत्तच्छब्दस्य लिङ्गमित्यन्वयः । एवं च येषां शब्दानां यल्लिङ्गमुपादाय शिष्टाः साधुत्वावगमपूर्वकं धर्मजनकत्वबुद्ध्या प्रयोगं कुर्वन्ति तेषां तदेव लिङ्गमिति नियमः सिद्ध[8] इति भावः ॥

## ( दोषपरिहारभाष्यम् )

# तस्योक्तौ लोकतो नाम

**त[9]स्योक्तौ वचने[10] लोकतो नामैतद्भवति—स्त्री, पुमान्, नपुंसकमिति ॥**

( प्रदीपः ) **तस्योक्ताविति** । **लोकतः**=शिष्टलोकात्तस्य लिङ्गस्य **प्रतिपादने** व्यवस्थाऽनुगन्तव्येत्यर्थः ॥

( उद्योतः ) तमेवार्थं भगवानाह—**तस्योक्ताविति** ॥ तस्योक्ताविल्यत्र वच्चिः प्रतिपादन इत्याह—**लोकत इति** । **प्रतिपादने**=शब्देन बोधने । तेनास्य लिंगस्य शब्दजन्यबोधविषयतोक्ता ॥ किमेतदित्य[11]त्राह—**स्त्रीपुमानित्यादि** ॥

## ( ईदृशलिङ्गाश्रयणे लाघवबोधकभाष्यम् )

# गुणो वा लुपि युक्तवत् ॥

**वर्ध्रिकादिषु भूयान् परिहारः ।**

**लुपि युक्तवद्व्यक्तिवचने ( १।२।५१ ) इत्येवमत्र गुणो भवति ॥**

( प्रदीपः ) **भूयानिति** । भ्रुकुंसादिषु स्तनकेशादिमत्त्वलक्षणलिङ्गाभ्युपगमत्यागः परिहारः । चञ्चादिषु तु तदपरित्यागेऽपि शास्त्राल्लिङ्गसिद्धिरिति भावः ॥

( उद्योतः ) भाष्ये—**गुणो वेति** । गुणशब्देन लिंगमुच्यते । एवंचातिदिश्यमानविरुद्धस्वकार्याभाव इति भावः ॥

## ( प्रमाणप्रदर्शकभाष्यम् )

**न चैतन्मन्तव्यं स्वमनीषिकयोच्यत इति ।**

**पठिष्यति ह्याचार्यः—लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति ।**

---

१ ब्रह्मसत्त्वैवेति पाठः ख. पु. ॥

२ शशविषाणादौ—उत्तरपदार्थस्य विषाणपदस्य सत्वेन तत्सहोच्चारितशशविषाणपदस्यापि बौद्धोऽर्थः कश्चन आश्रीयते तदुक्तं हरिणा— ।

व्यपदेशे पदार्थानां बाह्यसत्तौपचारिकी ।
सर्वावस्थासु सर्वेषामात्मरूपस्य दर्शिका ॥

अत्रत्य बाह्यसत्तौपचारिकीति पदस्य 'बाह्यविलक्षणसत्ता बुद्धिसमाविष्टा औपचारिकी=आरोपप्रयोजनवती' इत्यर्थमाह मञ्जूषाटीकाकारः ॥

३ यथा शशविषाणादिपदस्य बौद्धार्थमाश्रित्य प्रातिपदिकत्वादिव्यवहारस्तथा बौद्धार्थे वर्तमानस्य लिङ्गस्यापि शशविषाणपदे समाश्रयणादित्यर्थः ॥

४ ननु गुणानामाविर्भावः पुंस्त्वमित्यादिप्रकारेण लिङ्गव्यवस्था क्रियते चेत् आविर्भूतगुणवाचके पुम्पदे कथं लिङ्गयोगः स्यात्, तत्र गुणानामाविर्भावे न तेषां पुनरप्याविर्भावः सम्भवति, न च गुणाविर्भावे तिरोभावोऽपि वक्तुं शक्यः । एवं च लिङ्गमात्रबोधकपुंस्त्वादिपदेषु स्त्रीत्वादीनामुपपत्तये परिणामेऽपि परिणामान्तरसत्ता समाश्रयणीयेति लिङ्गवत्तोपपत्तिरित्यर्थः ॥

५ ननु आविर्भावतिरोभावस्थितीनां विवक्षाऽनुरोधेन लिङ्गवत्त्वाश्रयणे सर्वेषामपि पदानां सर्वलिङ्गबोधकत्वापत्तिः स्यात्तदाह—**विवक्षात इति**=लौकिकविवक्षयेत्यर्थः । एवं च यत्राविर्भाव एवाश्रीयते तत्र पुंस्त्वमेवेत्यादिना समाधेयमिति भावः ॥

६ 'निरूपपदस्य' इति ग. पाठः ॥

७ ते=ब्रह्मतत्त्वसाक्षात्कारवन्तः ॥

८ ख. घ. पुस्तकयोः 'सिद्धमिति' इति पाठः ॥

९ 'तस्योक्तौ च व' इति छ. पाठः ॥

१० लिङ्गस्य प्रतिपादनं लोकतो भवतीत्यर्थः ॥

११ तस्योक्तौ वचने लोकतो नामैतद्भवतीत्येतद्भाष्यगत 'एतत्' पदार्थमाह भगवान्—**स्त्री पुमानित्यादिना** ॥

पुनः पठिष्यति—एकार्थे शब्दान्यत्वात् दृष्टं लिङ्गान्यत्वम्, अवयवान्यत्वाच्च, इति ॥

**संस्त्याने स्त्यायतेर्ड्रट् स्त्री**
**सूतेः सप् प्रसवे पुमान् ।**
**तस्योक्तौ लोकतो नाम**
**गुणो वा लुपि युक्तवत् ॥**

( प्रदीपः ) **लिङ्गमशिष्यमिति** । लिङ्गव्यवस्थायां लोकः प्रमाणमित्यर्थः ॥ **एकार्थ इति** । अनेन **लिङ्गस्वरूपमपि** लोकादेव ज्ञायत इत्युक्तं भवति । **तत्रैकस्मिन्नेवार्थे** संस्त्यानादिसद्भावात्पुष्यस्तारका नक्षत्रमिति शब्दान्यत्वाल्लिङ्गान्यत्वम् । स्तनकेशादिसम्बन्धे तु लिङ्गेऽभ्युपगम्यमान एतन्न युक्तम् ॥ **अवयवान्यत्वाच्चेति** । कुटी कुटीर इति रेफस्यावयवस्योपजने लिङ्गभेदो दृष्ट इत्यर्थः । यद्यप्यविचारितरमणीयं लिङ्गमाश्रित्य वक्तारः शब्दानुच्चारयन्ति श्रोतारश्च प्रतिपद्यन्ते तथाऽपि वस्तुतत्त्वनिर्णयो भाष्यकारेण कृत इति यदन्यैरभ्यधायि—संस्त्यानादिलक्षणमलौकिकं लिङ्गमिति, तदपाकृतं[1] भवति ॥

( उद्द्योतः ) भाष्ये—**न चैतदिति** । **एतत्**=आविर्भावादिरूपं लिंगम्, तस्योक्तौ लोकतो नामेत्येतच्च स्वमनीषिकयोच्यत इति न मन्तव्यमित्यर्थः ॥ **आचार्य इति** । वार्तिककृदित्यर्थः ॥ **पुनः पठिष्यतीति** । तस्यापत्यमिति सूत्र इति बोध्यम् ॥ तत्राद्यवार्तिकार्थमाह—**लिंगव्यवस्थायामिति** । **लिंगस्वरूपम्**=संस्त्यानप्रसवावित्येतत् ॥ **तत्रेति** । गुणानामवस्था लिंगमित्यभ्युपगमे सतीत्यर्थः ॥ भाष्ये शब्दान्यत्वमेव प्रकारान्तरेणाह—**अवयवान्यत्वाच्चेति** । एवमपि शब्दान्यत्वमिति भावः ॥ नास्य प्रयोगप्रतिपत्तिः फलं विचारस्य, किं तर्हि परमतनिरास इत्याह—**यद्यपीति** । **अविचारितमपि**=आविर्भावत्वादिनाऽज्ञातमपि **रमणीयं**=शब्दबलात्प्रतीतं लिङ्गमाश्रित्य शब्दव्यवहारदर्शनान्नास्य विचारस्य प्रयोगप्रतिपत्तिः फलमित्यर्थः । तस्मात्स्त्रीत्वादिना प्रतीयमानं संस्त्यानादिकं लौकिकम् । तस्यालौकिकत्वे तु खट्वा स्त्री, वृक्षः पुमान्, इत्यादिव्यवहारोऽनुपपन्न इति तस्यापि लौकिकत्वप्रसाधनेनालौकिकत्वं निराकृतमिति भावः ॥

( 'स्त्रियाम्' पदान्वयाधिकरणम् )

( आक्षेपभाष्यम् )

**कथं पुनरिदं विज्ञायते—स्त्रियामभिधेयायां टाबादयो भवन्तीति । आहोस्वित् स्त्रीसमानाधिकरणात्प्रातिपदिकादिति ॥**[2]

कश्चात्र विशेषः ?

( प्रदीपः ) **कथमिति** । स्त्रीशब्दः शुक्लादिशब्दवद् गुणमात्रे गुणिनि च वर्तते । तत्र यदा[3] गुणमात्रमिह स्त्रीत्वं स्त्रीशब्देनोच्यते तदा द्रव्यवाचिनः प्रातिपदिकात् स्त्रीत्वे वाच्ये टाबादय इति स्त्रीत्वं प्रत्ययार्थ इति पक्षः संपद्यते । यदा तु स्त्रीत्वयुक्तं द्रव्यं स्त्रीशब्देनोच्यते तदा परं पक्षद्वयं संभवति स्त्रीत्वोपलक्षितद्रव्यवाचिनः प्रातिपदिकाट्टाबादय इति—स्त्रीसमानाधिकरणपक्षसंभवः । अथ स्त्रीत्वयुक्तद्रव्यवाचिनोऽङ्गीकृतस्त्रीत्वात्प्रातिपदिकादिति—प्रकृत्यर्थविशेषणपक्षसंभवः ॥

( उद्द्योतः ) **स्त्रीत्वोपलक्षितेति** । वस्तुतः स्त्रीत्वयुक्तं यद्द्रव्यं तन्मात्रवाचिनः, न तु स्त्रीत्वविशिष्टवाचिन इत्यर्थः ॥ **अंगीकृतस्त्रीत्वात्प्रातिपदिकादितीति** । अस्य पक्षस्तदेति[4] शेषः ॥

( ५११५ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः ॥ * ॥**

(भाष्यम्) **स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो भवन्ति, द्विवचनबहुवचनयोरनुपपत्तिः—कुमार्यौ, कुमार्यः, किशोर्यौ, किशोर्यः ॥**

**किं कारणम् ?**

**एकत्वात् स्त्रीत्वस्य । एकोऽयमर्थः स्त्रीत्वं नाम । तस्यैकत्वादेकवचनमेव प्राप्नोति ॥**[5]

( प्रदीपः ) **एकोऽयमर्थ इति** । प्रकृत्यर्थोपसर्जनस्य स्त्रीत्वस्य प्रत्ययेनाभिधानादिति भावः । यद्यपि शब्दादीनामवस्थाविशेषो लिङ्गम्, अवस्थाश्चावस्थातुरभिन्नाः, तथाऽपि यथा[6] शब्दादीनां संनिवेशमात्रे घटे शब्दादीनां बहुत्वेऽपि संनिवेशस्याभेदविवक्षायां घट इत्येकवचनं भवति । एवमवस्थाविशेषस्य लिङ्गस्याप्येकत्वमेव संस्त्यानादेरिति मन्यते ॥

( उद्द्योतः ) **प्रकृत्यर्थोपसर्जनेति** । यद्यपि स्त्रीत्वाश्रयद्रव्यस्य द्वित्वादिसंभवस्तथाऽपि प्रधानार्थस्य संख्यायां वचनेन भाव्यम्, तस्य च द्वित्वाद्यभाव इति भावः । वेदाः प्रमाणमित्याद्यपि प्रमाणत्वगतसंख्याया धर्मिण्यारोपात्साध्यमित्याशयः ॥ **शब्दादीनाम्**=शब्दरूपादिगुणानामित्यर्थः ॥ **अवस्थाश्चेति** । एवं च कुमार्य इत्यत्रावस्थाभूतानां गुणानां बहुत्वात् सर्वदा बहुवचनमेव स्यादिति चोदनीयमित्यर्थः ॥ **संनिवेशस्येति** । रूपादिसंघातरूपस्य संस्थानविशे-

---

१ अलौकिकस्य लिंगस्यादर्शनेऽपि दोषादर्शनात् ॥

२ भगवताऽत्र पक्षत्रयमुपन्यस्तम् । एकश्च प्रत्ययार्थपक्षः सुस्पष्ट एव । स्त्रीसमानाधिकरणादित्यनेन च स्त्रीसमानाधिकरणपक्षः, प्रकृत्यर्थविशेषणकपक्षश्च तत्र द्रव्यमात्रवाचिनः प्रातिपदिकस्य स्त्रीत्वन्नार्थः किन्तु द्रव्यसामानाधिकरण्यात्तदवगतिः । प्रकृत्यर्थविशेषणकपक्षे च स्त्रीत्वयुक्तद्रव्यवाचित्वेन स्त्रीत्वस्यापि तत्त्वमिति भावः ॥

३ क. पुस्तके 'यदा'शब्दो न दृश्यते ॥

४ अङ्गीकृतस्त्रीत्वात्प्रातिपदिकादिति यदा पक्षस्तदा प्रकृत्यर्थविशेषणसम्भव इत्यर्थः ॥

५ प्रकृत्यर्थविशेषणकप्रत्ययार्थस्त्रीत्वस्यैकत्वेन तत्रैकवचनमेव स्यान्न द्विबहुवचने । एवं च स्त्रीवाचकात्सर्वथैकवचनमेव स्यादिति दोषः ॥

६ क. पुस्तके 'यथा'शब्दो न दृश्यते ॥

षस्येत्यर्थः ॥ अभेदेति । एकत्वस्येत्यर्थः ॥ अवस्थाविशेषस्येति । अवस्थात्र[1]भेदस्यापि सत्वात्स्वगतैकत्वमेवेत्यर्थः ॥

( द्वितीयदोषप्रदर्शकभाष्यम् )

**अनेकप्रत्ययानुपपत्तिश्च ।**

**अनेकश्च प्रत्ययो नोपपद्यते—गार्ग्यायणी, कारीषगन्ध्या, कालितरा, इति ।**

**किं कारणम् ?**

**एकत्वात् स्त्रीत्वस्य । एकोऽयमर्थः स्त्रीत्वं नाम तस्यैकेनोक्तत्वाद् द्वितीयस्य प्रयोगेण न भवितव्यम् ।**

**किं कारणम् ?**

**उक्तार्थानामप्रयोग इति ॥**

( प्रदीपः ) **अनेकश्चेति** । पक्षद्वयेऽपि द्योतकः प्रत्ययः, अनेकस्यापि च प्रदीपादेर्दृष्टं द्योतकत्वमित्यनेकप्रत्ययोत्पत्तिरविरुद्धा । वाचके तु प्रत्ययेऽर्थप्रयुक्तत्वाच्छब्दस्यैकेनैवाभिहितेऽर्थे द्वितीयस्यानुत्पत्तिप्रसङ्गः ॥ **गार्ग्यायणीति** । गर्गस्यापत्यं गोत्रं स्त्री । गर्गादिभ्यो यञ् । तदन्तात्प्राचां ष्फ तद्धित इति ष्फः, तदन्तान् ङीष् ॥ करीषगन्धेरपत्यं स्त्र्यण् । तस्याणिञोरिति ष्यङ् । ततो यङश्चाबिति चाप् ॥ कालशब्दाज्जानपदादिसूत्रेण ङीष् । ततस्तरप् । ततष्टाब्न प्राप्नोति । ङीषा स्त्रीत्वस्योक्तत्वात् ॥

( उद्द्योतः ) नन्वितरयोरपि पक्षयोरनेकप्रत्ययानुपपत्तिस्तुल्या तत्राह—**पक्षद्वये त्विति** । समानाधिकरणपक्षे, प्रकृत्यर्थविशेषणपक्षे चेत्यर्थः ॥ **अनेकस्यापीति** । यथाऽन्धकारबाहुल्य एकप्रदीपेन प्रकाशाभावे प्रदीपान्तरोपादानम्, तद्वदेकेन स्त्रीत्वाद्योतने प्रत्ययान्तरोपादानमित्यर्थः ॥ **तदन्तान् ङीषिति** । द्योतकत्वे तु प्रातिपदिकेनोक्तेऽपि स्त्रीत्वे ङीषुत्पत्तिरविरुद्धेति भावः । स्त्रीसमानाधिकरणादिति पक्षेऽपि द्योतकतैवेति बोध्यम् ॥

( ५११६ आक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ स्त्र्यर्थस्य[2] च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिः ॥ * ॥**

( भाष्यम् ) **स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति—ईकारो न प्राप्नोति ॥**

( प्रदीपः ) **स्त्र्यर्थस्येति** । संस्त्यानवाचिड्ट्प्रत्ययान्तेन स्त्रशब्देन स्त्रीत्वस्याभिधानान् ङीब्न प्राप्नोति ॥

( पक्षान्तरोपपादकभाष्यम् )

**अस्तु तर्हि स्त्रीसमानाधिकरणात्[3]प्रातिपदिकादिति ॥**

( ५११७ आक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गो भवति—भूतमियं ब्राह्मणी, कारणमियं ब्राह्मणी, आवपनमियमुष्ट्रिकेति ॥**

( प्रदीपः ) **भूतमियमिति** । स्त्रीत्वोपलक्षितब्राह्मणीवृत्तित्वाद्भूतशब्दस्य तत्सामानाधिकरण्यात् स्त्रीप्रत्ययप्रसङ्गः ॥

( उद्द्योतः ) **स्त्रीत्वोपलक्षितेति** । अत्र पक्षे स्त्रीत्वं द्रव्योपलक्षणमिति तदुपलक्षितब्राह्मण्यां भूतशब्दस्य वृत्तेः । पदांतरोपलक्षितबहिरंगस्यैवार्थस्य स्त्रीप्रत्ययान्वाख्याने निमित्तत्वात्स स्यादिति भावः । ननु भूतमियमित्यत्र टाप्यपि ह्रस्वो नपुंसक इति ह्रस्वो दुर्वार इति चेन्न । पर्जन्यवल्लक्षणप्रवृत्त्याऽन्तरंगत्वात् ह्रस्वे ततष्टापि लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः । आवपनादौ ङीपः, भूतत्वस्य जातित्वे तत्रापि ङीषः प्रसंगाच्च ॥

( प्रथमपक्षसमर्थकभाष्यम् )

**स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु,**

**इह तावद्—भूतमियं ब्राह्मणीति, नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? पौतन्यम् ॥**

**कारणमियं ब्राह्मणीति, नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? प्राधान्यम् ॥**

**आवपनमियमुष्ट्रिकेति, नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? संभवनम् ॥**

( उद्द्योतः ) भाष्ये—**स्त्र्यर्थाभिधान इति** । स्त्र्यर्थस्याभिधाने=प्रतिपादने तन्निमित्तं प्रयोगे टाबादिषु सत्सु=जायमानेषु न दोष इति शेषः । दोषाभावमेवोपपादयति भाष्ये—**इहेति** ॥ **पौतन्यम्**=पूतनात्वम्, पिशाचता । तद्वाच्चिभूतशब्दो नित्यनपुंसकः । एवमावपनम्=भोजनविशेषः । पौतन्यादि—प्रवृत्तिनिमित्तम् ॥

( ५११८ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ षट्संज्ञकेभ्यश्च प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **षट्संज्ञकेभ्यश्च प्रतिषेधो वक्तव्यः । पञ्च ब्राह्मण्यः, दश ब्राह्मण्यः ॥**

( उद्द्योतः ) भाष्ये—**षट्संज्ञकेभ्य इति** । षट्संज्ञकानां लिंगाभावात्पक्षद्वये तन्न कर्तव्यमित्याशयः । भेदनियतत्वात्संख्या—भेदः ॥

---

१ ख. घ. पुस्तकयोः 'अवस्थात्रभेदेपि भेदस्यापि सत्वात्' इति पाठः । अस्मिन् पाठेऽवस्थातुरभेदेपि स्वगतभेदस्यापि सत्वेनावस्थागतैकत्वमानम् । अवस्थात्रभेदस्यापीति पाठे तु—अवस्थातुरभेदेनैक्यात्तद्गतैकत्वभानम् ॥

२ प्रातिपदिकेनोक्ते स्त्रीत्वे तदर्थकप्रत्ययस्य पुनरनुत्पत्तिरित्यर्थः । स्त्रीत्वस्य प्रत्ययार्थत्वपक्षे दोषोऽयम् ॥

३ प्रत्ययार्थपक्षातिरिक्तपक्षद्वयेऽयं दोषः ॥

४ स्त्रीसमानाधिकरणात्स्त्रीप्रत्यय इति पक्षे भूतादीनामपि ब्राह्मण्यादिसामानाधिकरण्यात् तेभ्यः स्त्रीप्रत्ययप्रसङ्ग इत्यर्थः ॥

५ परिच्छेदकभाण्डरूपः ॥

६ भूतादिशब्दानामिति शेषः ॥

७ स्त्रीसमानाधिकरणात्स्त्रीप्रत्यय इत्यर्थस्वीकारे ब्राह्मणीसामानाधिकरण्यात्पञ्चादिशब्देभ्योऽपि स्त्रीप्रत्ययस्यापत्तिः स्यादित्याशयः ॥

( प्रथमपक्षसमर्थकभाष्यम् )

**स्त्र्यर्थाभिधाने पुनष्टाबादिषु सत्सु, नात्र स्त्रीत्वं विवक्षितम् । किं तर्हि ? भेदो विवक्षितः संख्या ॥**

( प्रदीपः ) **स्त्र्यर्थाभिधान इति ।** प्रत्ययार्थपक्षे दोषोऽयं नावतरतीत्यर्थः । भूतादयः पौतन्याद्यर्थवृत्तय इति तदर्थस्य स्त्रीत्वेन संबन्धाभावात् प्रत्ययोत्पत्तिप्रसङ्गाभावः ॥

( दोषप्रतिपादकभाष्यम् )

**इह च 'स्त्री[1]' ईकारो न प्राप्नोति । न हि तेनैवं[2] तस्य सामानाधिकरण्यमस्ति ॥**

( प्रदीपः ) **न हि तेनैवेति ।** स्त्रीशब्दसामानाधिकरण्याद् ब्राह्मण्यादिषु स्त्रीप्रत्ययः सिध्यति । स्त्रीशब्दे तु पदान्तरप्रयोगाभावाद्, ब्राह्मण्यादिपदापेक्षाभावाच्च प्रत्ययो न प्राप्नोतीत्यर्थः । अथ ब्राह्मण्याद्यपेक्षया स्त्रीशब्दात्प्रत्ययः क्रियते तदेत[3]रेतराश्रयदोषापत्तिः । प्रत्ययोत्पत्तौ परस्परापेक्षणात् ॥

( उद्द्योतः ) **स्त्रीप्रत्यय इति ।** स्त्रीशब्दप्रयोगाभावेऽपि प्रविश पिण्डीमित्यादौ क्रियाकारकादेरिव तत्प्रतीत्या तत्सामानाधिकरण्यमिति भावः । नन्वत्र पक्षे यथा ब्राह्मण्यादिषु स्त्रीप्रत्ययस्तथा स्त्रीशब्देऽपि स्यादत आह—**स्त्रीशब्दे त्विति ॥ पदापेक्षाभावादिति ।** तदर्थापेक्षाभावादित्यपि बोध्यम्, सामान्यविवक्षया शब्दप्रयोगादिति भावः ॥ **अथेति ।** सामान्ये सर्वविशेषान्तर्भावात् ब्राह्मण्यादिप्रतीतेरिति भावः ॥ **परस्परापेक्षणादिति ।** स्त्रीशब्दान्ङीपि सति तत्सामानाधिकरण्यात् तदधिकारस्थस्त्रीप्रत्यये ब्राह्मण्यादिसिद्धिः, तत्सामानाधिकरण्याच्च स्त्रशब्दात्प्रत्यय इत्यर्थः । साधुत्वज्ञानानुपपत्तिरेतदितरेतराश्रयस्य दूषकताबीजम् ॥

( ५११९ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम् ?**

**स्त्रियाः प्रातिपदिकविशेषणत्वात् । प्रतिपदिकविशेषणं स्त्रीग्रहणम्, स्वार्थिकाष्टाबादयः ।**

**नैवं विज्ञायते स्त्रियाम[4]भिधेयायामिति ।**

**नापि स्त्रीसमानाधि[5]करणादिति ।**

**कथं तर्हि ?**

**स्त्रियां यत् प्रातिपदिकं वर्तते तस्माट्टाबादयो भवन्ति । कस्मिन्नर्थे ? स्वार्थ इति ॥**

( प्रदीपः ) इदानीं तृतीयं पक्षमाश्रित्याह—**सिद्धं त्विति ।** स्त्रीत्वयुक्तेऽर्थेऽङ्गीकृतसंस्त्याने वर्तमानात् स्वार्थे टाबादय इत्यर्थः ॥

( उद्द्योतः ) **अंगीकृतसंस्त्यान इति ।** तद्विशिष्टस्त्रीवाचकादित्यर्थः । अनेनात्र पक्षे स्त्रीत्वस्य विशेषणत्वमेवेति सूचितम् ॥

( पूर्वपक्षोपपादकभाष्यम् )

**अथ वा पुनरस्तु स्त्रियामभिधेयायामिति ।**

**ननु चोक्तं स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः, स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिरिति ॥**

( प्रथमपक्षोक्तदोषपरिहारभाष्यम् )

**नैष दोषः ॥**

**यत्तावदुच्यते द्विवचनबहुवचनयोरनुपपत्तिरिति ॥**

( ५१२० पूर्वपक्षोक्तदोषोद्धारकवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ गुणवचनस्य चाश्रयतो लिङ्गवचनभावात् ॥ * ॥

( भाष्यम् ) **गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति ।**

**यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति । एवमिहापि यददो द्रव्यं श्रितं भवति स्त्रीत्[6]वं गुणः, तस्य यल्लिङ्गं वचनं च तत् स्त्रीत्वस्यापि भविष्यति ॥**

( प्रदीपः ) **एवमिहापीति ।** यद्यपि गुणमात्रे प्रत्ययः क्रियते तथाऽपि गुणगुणिनोरभेदविवक्षायां स्वाभा[7]विकत्वाद्वा गुणप्रधानभावव्यवस्थायाः कुमारीशब्देन द्रव्यस्यैवाभिधानात्तद्गतसंख्यानिमित्ता वचनोत्पत्तिः, द्रव्यवाचिना च नित्यं सामानाधिकरण्यमिति भावः । तदुक्तं हरिणा—

**सोऽयमित्यभिसंबन्धादाश्रयं प्रतिपद्यते ।**
**स्त्रीत्वं स्वभावसिद्धो वा गुणभावविपर्ययः ॥** इति ॥

( उद्द्योतः ) ननु शुक्लादीनां द्रव्यविशेषणत्वादाश्रयगतलिंगादियुक्तम्, तस्याप्राधान्यात् । इह तु स्त्रीत्वं प्रधानम्, प्रत्ययवाच्यत्वात् । द्रव्यं गुणभूतं प्रकृत्यर्थत्वादिति कथं गुणधर्माणां प्रधाने

---

१ सामानाधिकरण्यपक्षे स्त्रीशब्दात्तदतिरिक्तस्त्रीलिङ्गशब्दसामानाधिकरण्याभावेन ङीप्प्रत्ययानुपपत्तिः ॥ च. पुस्तके 'स्त्रीति ई' इति पाठः ॥

२ स्त्रीशब्देनैव स्त्रीशब्दस्य सामानाधिकरण्यं नास्तीत्यर्थः ॥

३ क. पुस्तके 'तदेतराश्रयदोषापत्तिः' इति पाठः ॥

४ प्रत्ययार्थः स्त्रीत्वमिति नाश्रीयत इत्यर्थः ॥

५ प्रकृत्यर्थः स्त्रीत्वमित्यपि नेति भावः ॥

६ छ. पुस्तके 'स्त्रीत्वं तस्य' इति पाठः ॥

७ गुणप्रधानभावव्यवस्थायाः स्वाभाविकत्वाद्द्रव्यस्यैवाभिधानादित्यर्थः । प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमिति न नियमः किन्तूत्सर्ग इति भावः ॥

प्रतिपत्तिरिति शंकते—**यद्यपीति** । अभेदविवक्षायामित्यस्य द्रव्यस्यैवाभिधानादित्यनेनान्वयः ॥ **स्वाभाविकत्वाद्वेति** । प्रत्ययार्थप्राधान्यं तूत्सर्ग इति भावः ॥ **द्रव्यस्यैवेति** । न कदाचिदपि प्राधान्येन स्त्रीत्वस्य गुणस्येति भावः ॥ **नित्यं सामानाधिकरण्यमिति** । इयं स्त्रीत्येव सर्वदा, न त्वस्याः स्त्रीति कदाचिदिति भावः । एवं तु 'अजादीनां या स्त्री' इति 'अजाद्यतः' इति सूत्रे भाष्यम्, अजाद्यर्थगते स्त्रीत्व इत्यर्थं इति कैयटश्च कथं संगत इति चिन्त्यम् ॥ **सोऽयमितीति** । गुणमात्रस्य प्रत्ययार्थत्वेऽपि द्रव्येणोपचरिताभेदं गुणं प्रत्ययोऽभिधत्त इति स्त्रीत्वं कर्तृ—आश्रयमभेदेन प्रतिपद्यत इति तद्गतसंख्यादिलाभ इत्यर्थः । अत्रैव पक्षे भाष्यस्वारस्यम्, गुणवचनदृष्टान्तेन साधनात् । नहि गुणप्रधानभावविपर्ययेऽस्योपयोगः, संभवो वा। वाचकत्वे प्रत्ययार्थस्य प्राधान्यमेवेत्येव भाष्याशय इति दिक् ॥

( पूर्वपक्षोक्तदोषाक्षेपरभाष्यम् )

**यदप्युच्यते अनेकप्रत्ययानुपपत्तिरिति ॥**

( ५१२१ पूर्वपक्षोक्तदोषोद्धारकवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ भावस्य च भावयुक्तत्वात् ॥ * ॥**

( भाष्यम् ) **भावो भावेन युज्यते । तद्यथा—इषिरिषिणा, निमन्त्रिश्च निमन्त्रिणा ॥**

( प्रदीपः ) **भावस्येति** । स्त्रीत्वस्य स्त्रीत्वेन योग इत्यर्थः ॥ **इषिरिति** । एषितुमिच्छतीत्यत्रेत्यर्थः[1] ॥ **निमन्त्रिश्चेति** । 'निमन्त्रयेत' इत्यत्र निमन्त्रणे लिङ्विधावित्यर्थः ॥

( उद्द्योतः ) भावशब्देन धर्ममात्रमुच्यत इत्याह—**स्त्रीत्वस्येति** ॥ **निमन्त्रय इत्यत्रेति** । निमन्त्रणार्थकलिङ्विधिविषये निमन्त्रय इत्यत्रेत्यन्वयः ॥

( दृष्टान्तविघटकभाष्यम् )

**विषम उपन्यासः । युक्तं तत्रान्यत्वं साधनभेदात्, कालभेदाच्च ।**

**युक्तं तत्रैकस्य बाह्यं साधनम्, सर्वकालश्च प्रत्ययः ।**

**अपरस्याभ्यन्तरं साधनम्, वर्तमानकालश्च प्रत्यय इति ।**

**इह पुनरेकं स्त्रीत्वम् ॥**[2]

( प्रदीपः ) **एकस्येति** । एषितुमित्यस्येषेरित्यर्थः ॥ **बाह्यमिति** । भोजनादिकमित्यर्थः ॥ **सर्वकाल इति** । तुमुन्नित्यर्थः । स हि समानकर्तृकेषु तुमुन्निति कालमात्रे विधीयते ॥ **अपरस्येति** । इच्छतीत्यस्य ॥ **आभ्यन्तरमिति** । इषिरेव कर्मेत्यर्थः । स चैषिषतीत्यत्र प्रकृत्यर्थत्वादाभ्यन्तरः ॥ **इह पुनरिति** । भेदहेत्वभावादेकमेव स्त्रीत्वम् । इच्छायास्त्वभिन्नरूपाया अपि कालसाधनभेदाद् भवतु भेदग्रहणमित्यर्थः ॥

( उद्द्योतः ) कथं पुनरिषिरूपस्य कर्मण आभ्यन्तरत्वमत आह—**चेति** । इषिश्चेत्यर्थः ॥ **एकमेवेति** । ष्फङीषादिवाच्यमेकमेव स्त्रीत्वमिति स्वस्य स्वेन योगासंभव इत्यर्थः ॥ **अभिन्नरूपाया इति** । धातुतो भेदानवगतेरिति भावः ॥

( समानप्रतिपत्तिभाष्यम् )

**अथैकमप्युपलभ्यते ।**

**किं चातः ?**

**यद्येकमुपलभ्यते द्वितीयमप्युपलभ्यताम्[3] ।**

**अथैकमप्यनुमानगम्यं द्वितीयमप्यनुमानाद्गम्यताम् ॥**

( प्रदीपः ) इतर इह पुनरेकमिति ब्रुवता स्त्रीत्वमनेन प्रतिपन्नं भेदस्तु सुसाध इति मत्वाऽऽह—**अथैकमपीति** ॥ **यद्येकमुपलभ्यत इति ।**

**खट्वादिष्वसदपि मृगतृष्णावद्येद्युपलभ्यते लिङ्गम् । अविचारितरमणीयेन च तेन प्रसिद्धो व्यवहारः ॥**

तदा स्त्रीत्यादौ द्वितीयस्याप्युपलम्भोऽस्त्विति भावः ॥ **अथैकमिति** । सुखदुःखमोहान्वयात्सर्वव्यक्तीनां तत्परिणाम[5] एवेदं विश्वम्, गुणानां च प्रवृत्तिर्लिङ्गम्[6] । तत्र[4] प्रवृत्तेरपि प्रवृत्तिसद्भावाल्लिङ्गयोगोऽस्त्वितीत्यर्थः ॥

( उद्द्योतः ) भेदसाधनाय यद्येकमिति भाष्यम्, तद्याचष्टे—**खट्वादिष्विति** ॥ लिंगस्यानुमानगम्यत्वमुपपादयति—**सुखेति** ॥ **तत्परिणाम इति** । सुखाद्यात्मकसत्त्वादिपरिणाम इत्यर्थः । एवं च गुणानां प्रवृत्त्यनुमेयत्वेन तत्परिणामात्मकलिंगस्यापि तत्त्वम् ॥ **तत्र प्रवृत्तेरपीति** । गुणानां प्रवृत्तिः=आविर्भावादि लिङ्गं तत्पदवाच्यम् । एवं च प्रवृत्तेरपि गुणपरिणामत्वात्तत्रापि गुणा विभावादिसत्त्वाल्लिंगयोग इत्यर्थः ॥

( समाधानान्तरप्रतिपादकभाष्यम् )

**कस्य तावद्भवानेकं गुणं न्याय्यं मन्यते स्त्रीत्वं[8] नाम[7] ?**

**द्रव्यस्य ॥**

**द्रव्ये च भवतः कः संप्रत्ययः ?**

---

१ एषितुमिच्छतीत्यत्र द्वयोरपि 'इष्' धात्वोः कारके भिन्ने । प्रथमस्य 'इषेः' बहिर्भूतं भोजनादिकं साधनं स्वीकरणीयम् । द्वितीयस्य च प्रथम इषिरेव कर्मेति साधनभेदः स्पष्ट एव ॥

२ इह पुनरेकं स्त्रीत्वमिति ब्रुवता वादिना लिङ्गस्य स्वीकारः कृतः । स्वीकृते च तस्मिन्भेदोऽपि सुसाध एवेति मत्वा—अथैकमिति भाष्यम् । यदि स्त्रीत्वमस्ति तर्हि तस्य प्रत्यक्षमप्यवश्यं भविष्यति । यदि च तल्लिङ्गं प्रत्यक्षं न भवति किन्त्वनुमानाद्गम्यं तर्हि द्वितीयमप्यनुमानाज्ज्ञायेत एवेति भावः ॥

३ क-पुस्तके 'बध्यदुपलभ्यते' इति पाठः । सच युक्तः ॥

४ तत्र=गुणत्रयपरिणामरूपे विश्वे गुणानां सत्त्वादीनाम्प्रवृत्तिसद्भावात् प्रवृत्तेरपि लिंगमुपपद्यत इति भावः ॥ च. पुस्तके 'तत्र प्रवृत्तिसद्भावात्' इत्येव पाठः ॥

५ 'मेयत्वे तत्परी' इति ग. पाठः ॥

६ 'लिङ्गं तस्य तत्पद' इति घ. पाठः ॥

७ ननु स्त्रीत्वस्याश्रये निर्ज्ञाते तस्य प्रत्यक्षं भवति न वेति विचारो युज्येतेति स्त्रीत्वस्याश्रयपरिज्ञानार्थं भगवानाह—कस्य तावदिति ॥

८ छ. पुस्तके 'एतं गुणं' इति पाठः ॥

( प्रदीपः ) **कस्य तावदिति** । आश्रये निर्ज्ञाते सुवचः-समाधिरिति भावः ॥

( उद्द्योतः ) **सुवचःसमाधिरिति** । समाध्यंतरमनेनोच्यत इति भावः ॥ भाष्ये—**संप्रत्यय इति** । किमात्मकं द्रव्यं भवान् मन्यत इत्यर्थः ॥

( द्रव्यलक्षणभाष्यम् )

**यदि तावद् गुणसमुदायो द्रव्यम्** ॥

( प्रदीपः ) **गुणसमुदाय इति** । रूपादिसंनिवेशमात्र-मित्यर्थः ॥

( द्रव्यलक्षणखण्डनभाष्यम् )

**का गतिर्य एते भावाः कृदभिहितास्तद्धिताभिहि-ताश्च—चिकीर्षा, गोतेति** ॥

( प्रदीपः ) **गोतेति** । भावे तल् ॥

( उद्द्योतः ) भाष्ये—**य एते भावा इति** । तेषां गुण-समुदायत्वाभावात् स्त्रीत्वं न स्यादिति गुणसमुदायो द्रव्यमिति लक्षणं न युक्तमिति भावः ॥

( द्रव्यलक्षणसाधकभाष्यम् )

**अथ मतमेतत् 'कृदभिहितो भावो द्रव्यवद्भवति' इति स्त्रीत्वमपि स्त्रीत्वेनाभिहितं द्रव्यवद्भविष्यति** ॥

( प्रदीपः ) **अथ मतमिति** । इदम्, तत्, इति सर्व-नामप्रत्यवमर्शयोग्यं वस्तु द्रव्यमित्यर्थः । ततश्च स्त्रीत्वस्यापि द्रव्यरूपत्वादपरेण स्त्रीत्वेनाविरुद्धो योगः ॥

( उद्द्योतः ) **इदं तदितीति** । न तु गुणसमूहो द्रव्यमिति लक्षणमित्यर्थः । इदं चैतच्छास्त्रमात्रोपयोगि द्रव्यलक्षणमिति बोध्यम् ॥ **स्त्रीत्वस्यापीति** । चिकीर्षादेरिवेत्यर्थः । भाष्ये—**स्त्रीत्वे-नाभिहितमिति** । स्त्रीत्वेन—स्त्रीत्वगुणवैशिष्ट्येन ॥

( आक्षेपभाष्यम् )

**क्व च तावद् दोषः स्यात्?**

**दृष्टस्य हि दोषस्य सुसुखः परिहारः—गार्ग्या-यणी, कारीषगन्ध्या, कालितरेति** ॥

( उद्द्योतः ) भाष्ये—**क्व च तावदि**त्यादिना लिंगस्य लिंगा-न्तरानङ्गीकारेऽपि, अनेकप्रत्ययानुपपत्तौ समाधयन्तरम् ॥ **दृष्टस्येति** । त्वया दृष्टस्य गार्ग्यायणीत्यादावनेकप्रत्ययानुपपत्तिरूपस्योक्तस्येत्यर्थः ॥

( दोषोद्धारकभाष्यम् )

**इह तावद्—गार्ग्यायणीति । षित्करणसामर्थ्या-न्ङीष् भविष्यति** ॥

**कारीषगन्ध्येति । वचनाच्चाब्भविष्यति** ॥

**कालितरेति । न यावत्काली तावत्कालितरेति । किं तर्हि?**

**प्रकृष्टा काली कालितरा । यत्तच्छब्दरूपं प्रकर्षे वर्तते तस्यानुक्तं स्त्रीत्वमिति कृत्वा टाब्भविष्यति** ॥

( प्रदीपः ) **षित्करणसामर्थ्यादिति** । एकमपि स्त्रीत्वं प्रत्ययद्वयेनाभिधीयत इत्यर्थः ॥ **वचनादिति** । यङश्चाबित्य-स्मात् । तथाहि—अत्र सामान्यग्रहणाय तदविघाताय च ष्यङोऽनुबन्धद्वयं कृतमिति भावः ॥ **यावत्कालीति** । अन्योऽत्र प्रकर्षयुक्तोऽर्थोऽन्यश्चाप्रकर्षयुक्तः, अवस्थाभेदाद्वाचक-शब्दभेदाच्चैक एवार्थो भिद्यत इति भावः ॥

( उद्द्योतः ) नन्विदं ष्यङि सावकाशमत आह—**तथा ह्य-त्रेति** । एवं च ष्यङोऽपि चाबनुमीयत इत्यर्थः ॥ **अवस्थाभेदादिति** । प्रकर्षयुक्तत्वायुक्तत्वरूप एवावस्थाभेदः ॥ नन्वेवमपि लोहिनिकेत्यत्य-न्तस्वार्थिके कनि टाप् न स्यादत आह—**वाचकशब्दभेदाच्चेति** । शब्दस्यापि शाब्दबोधे विशेषणत्वादिति भावः ॥

( आक्षेपभाष्यम् )

**यदप्युच्यते—इह च 'स्त्री' इतीकारो न प्राप्नो-तीति** ॥

**निपातनादेतत् सिद्धम् ।**

**किं निपातनम्?**

**स्त्रियामवन्तिकुन्तिकुरुभ्यश्च (४।१।१७६) इति** ॥

( उद्द्योतः ) भाष्ये—**निपातनादिति** । उणादयोऽव्युत्पन्ना इति पक्षे इदम् । व्युत्पत्तिपक्षे ड्रटष्टित्वादपि ङीप् सिद्धिर्बोध्या ॥

---

१ गुणसमुदायो द्रव्यमिति स्वीकारे कृदाद्यभिहितभावानां गुणसमुदाय-रूपत्वाभावेन द्रव्यत्वानापत्तिः । ततश्च स्त्रीत्वरूपगुणस्याप्यसंभवः स्यादिति चिकीर्षादीनामनुपपत्तिरित्यत आह—**का गतिरिति** ॥

२ चिकीर्षादौ अनुपपत्तिं मनसि निधाय द्रव्यलक्षणान्तरमाह—**अथेति** ॥

३ कृदभिहितभावस्यापि द्रव्यत्वस्वीकारेण गुणसमुदायो द्रव्यमित्ययुक्त-मित्येव सूचयति भाष्यकारः । तदाशयं लक्षणान्तरप्रदर्शनेन व्याचष्टे—**इदं तदिति** ॥

४ इदं तच्छब्दाभ्यां प्रत्यवमर्शयोग्यं वस्तु द्रव्यमिति स्वीकारे गार्ग्यायणी-त्यादयो दोषाः सम्भवन्ति । तत्र हि एकमेव स्त्रीत्वं समुदायवाच्यम् । तदर्थे चैक एव प्रत्ययः स्यात्तत्परं इति ष्फप्रत्ययान्ङीप् न स्यात्, ष्यङ प्रत्ययाच्चाप् न स्यात्, कालीशब्दस्थेन स्त्रीप्रत्ययेन कालितरशब्दगतस्त्रीप्रत्ययस्यापि बोधने तत्र टाप् न स्यात्, कालीरूपार्थस्य तरप्प्रत्ययेनाधिक्यमेव गम्यते न त्वर्थान्तर-मिति स्त्रीत्वस्यान्यस्यासम्भवेन टाप् न स्यादित्यर्थः ॥

५ न यावत्कालीत्यनेन प्रकर्षरूपोऽर्थो यत्र न भासत एवं रूपः कालितरे-त्यस्यार्थो न, किन्तु प्रकर्षविशिष्ट इत्यर्थः ॥

६ ष्यङि षकारानुबन्धेऽकृते यङश्चाबित्यत्रास्यैव ग्रहणं भवेत्तदनुबन्धक-ग्रहणे नातदनुबन्धकस्येति परिभाषया, षकारे कृतेऽपि ङकारानुबन्धस्यभावे यङश्चाबित्यत्रास्य ग्रहणमेव न स्यादित्यर्थः ॥

७ अवस्थाभेदात्=प्रकर्षाप्रकर्षरूपावस्थाभेदादित्यर्थः ॥ लोहिनिकेत्यादौ स्वार्थे कप्रत्ययविधानेनावस्थाभेदाभावात्को न स्यादत आह—**वाचनिकेति** ।

८ कालीशब्दस्य कालीशब्दविशिष्टोऽर्थो वाच्यः । कालितरेत्यत्र च कालि-तरशब्दविशिष्टोऽर्थ इति शब्दविशिष्टवाच्ययोर्भेद इत्यर्थः ॥

९ ननु कारीषगन्ध्येत्यत्र टाबभावेपि यङश्चेति न व्यर्थमत आह—**नन्विति** ॥

( ५१२२ आक्षेपवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ स्त्रीविषये ङ्याबोरप्रसिद्धिर-कारान्तादर्शनात् ॥ * ॥

( भाष्यम् ) स्त्रीविषये[1] ङ्याबोरप्रसिद्धिः । खट्वा, माला ।

किं कारणम् ?

अकारान्तादर्शनात् । न ह्यकारान्तता दृश्यते ।

ननु चेयं दृश्यते—अतिखट्वः, अतिमाल इति ।

नैषाऽकारान्तता । आप एवैतद् ह्रस्वत्वम् ॥

( प्रदीपः ) स्त्रीविषय इति । ये नित्यमेव स्त्रियां वर्तन्ते खट्वामालादयस्तेषामकारान्तप्रकृतित्वमवधारयितुं[2] न शक्यते । अकारान्तस्य प्रयोगाभावात् । अनेकलिङ्गेषु तु कुक्कुटादिषु शक्यतेऽकारान्तत्वं निश्चेतुमिति भावः ॥

( उद्योतः ) विषयशब्दस्य प्रयोजनपूर्वमर्थं दर्शयति—ये नित्यमेवेति । अनन्यभावे हि विषयशब्दः ॥

( ५१२३ समाधानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः ॥ * ॥

( भाष्यम् ) सर्वेषामेव तु प्रातिपदिकानां स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः कर्तव्यः—

शशः, षष इति मा भूत् ।

पलाशः, पलाष इति मा भूत् ।

मञ्चकः, मञ्जक इति मा भूत् ॥

( प्रदीपः ) सर्वेषामिति । शाकटायनदर्शनेन सर्वशब्दानां व्युत्पाद्यत्वाच्छास्त्रद्वारेणाऽकारान्तता निश्चीयत इत्यर्थः[3] ॥

( उद्योतः ) शाकटायनेति । सर्वं नाम धातुजमाह । निरुक्ते, व्याकरणे, शकटस्य च तोकमित्युक्तेरिति भावः ॥ भाष्ये—उपदेशशब्देन[4]=व्युत्पादनम् ॥

( ५१२४ सिद्धान्तवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ तस्मात्सिद्धम् ॥ * ॥

( भाष्यम् ) तस्मात्सिद्धमेतद्भवति ॥

अथ वा इयमकारान्तता दृश्यते—पञ्चभिः खट्वाभिः क्रीतः पटः पञ्चखट्वः, दशखट्वः ॥

( प्रदीपः ) पञ्चभिरिति । तद्धितार्थे द्विगुः । आर्हादिति ठक् । तस्याध्यर्धपूर्वेति लुक् । लुक्तद्धितलुकीति स्त्रीप्रत्ययस्य लुकिकृते प्रयोग एवाकारान्तता दृश्यत एवेत्यर्थः ॥ ३ ॥

---

( ६२० प्रत्ययविधिसूत्रम् ॥ ४ । १ । ३ ॥ )
( प्रत्ययाधिकरणम् )

# १२७८ अजाद्यतष्टाप् ॥ ४ । १ । ४ ॥

( ५१२५ विधिवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ शूद्रा चामहत्पूर्वा ॥ * ॥

( भाष्यम् ) शूद्रा चामहत्पूर्वेति वक्तव्यम्—शूद्रा ॥

अमहत्पूर्वेति किमर्थम् ?

महाशूद्री ॥

( प्रदीपः ) शूद्रा चेति । जातिलक्षणो ङीष् अनेन टापा बाध्यते न तु पुंयोगलक्षणः, गौणमुख्ययोर्मुख्ये संप्रत्यय इति न्यायान्मुख्यार्थवृत्तेरिह शूद्रशब्दस्य ग्रहणात् । तेन शूद्रस्य भार्या शूद्रीत्येव भवति । अमहत्पूर्वेत्यत्र महच्छब्दस्यानुकरणशब्दत्वाल्लौकिकार्थाभिधायित्वाभावादात्वाभावः ॥ अमहत्पूर्वेति किमर्थमिति । अन्तरङ्गत्वात् पूर्वं टापि कृते सुप्युत्पन्ने समासेन भाव्यम्—महती शूद्रा महाशूद्रेति, ततश्च निर्वृत्तत्वाट्टापः प्रतिषेधोऽनर्थक इति प्रश्नः ॥ महाशूद्रीति । महाशूद्रशब्दः समुदाय एवाभीरजातिवचनो न त्वत्रावयवार्थोऽस्ति, यथा गौरखर इति । तत्र समुदायव्युत्पादनेऽवयवार्थस्य स्त्रीत्वाभावात्तदविवक्षितत्वैव समासः क्रियते । ततष्टापि प्रतिषिद्धे जातिलक्षणो ङीषेव भवति ॥

( उद्योतः ) भाष्ये—शूद्रा चेति । गणपठितशूद्रेत्यत्रामहत्पूर्वेति वक्तव्यमित्यर्थः । गणे अजा, एडका, मूषिका, शूद्रेति स्त्रीप्रत्ययान्ताः पठ्यन्त इति बोध्यम् । अत एवाग्रे शूद्राशब्दोऽजादिषु पठ्यत इति भाष्यं संगच्छते ॥ बाध्यत इति । अकारान्तत्वेन सिद्धे पुनः पाठादिति भावः ॥ गौणमुख्ययोरिति । यद्यपि पदकार्येष्वयं न्याय इत्योत्सूत्र उक्तम्, तथाऽपि यत्र प्रातिपदिकावस्थायामेव गौणत्वप्रतीतिस्तत्र तदाश्रयणं युक्तमेव । तत्र पदग्रहणस्य गौणवृत्त्याऽऽश्रयोपलक्षणत्वात् । अत्र हि पुंयोगात्स्त्रियां वृत्तौ स्त्रीत्वप्रतीतिसमये एव गौणार्थतेति भावः । अत्राहुः—लाक्षणिकत्वं न गौणत्वं किन्तु सदृशलाक्षणिकत्वमिति कथमत्रास्य न्यायस्य विषयः । शूद्रस्य स्त्र्यर्थे तु न टाप् । जातिवाचि[5] महत्पूर्वभिन्नस्य स्त्रीत्वविशिष्टजातिबोधकस्यैव शूद्रशब्दस्य ग्रहणात् । किं च येषां शब्दानामर्थस्य स्वत एव स्त्रीत्वं न तत्र पुंयोगाद्वृत्तिरित्यश्वस्य स्त्र्यर्थे ङीप् स्यादिति न वाच्यम् । यदा त्वन्यजातिः शूद्रभार्येति विवक्षिता तदा शूद्रीत्येवेति दिक् ॥ अंतरंगत्वादिति । एवं चारब्धेऽप्यशक्यक्रियः प्रतिषेध इति प्रश्न इति भावः । निर्वृत्तस्य

---

१ स्त्रीविषये—नित्यस्त्रीलिङ्ग इत्यर्थः ॥

२ 'प्रकृतिमवधा' इति क. पाठः ॥

३ सर्वेषामपि शब्दानां शाकटायनेन व्युत्पत्तिः प्रदर्श्यत इति भावः ॥

४ उपदेशशब्दस्य व्युत्पत्तिरेवार्थोऽभिधीयत इत्यर्थः ॥

५ ननु गौणमुख्ययोर्मुख्ये कार्यसंप्रत्यय इत्यत्रत्यगौणपदेन सदृशलाक्षणिक एव गृह्यते न लाक्षणिक इति शूद्रस्य स्त्र्यर्थविवक्षायां शूद्रशब्दस्य सदृशलाक्षणिकत्वाभावेन तस्माट्टाप् कस्मान्न स्यादित्यत आह—जातिवाचीति ॥

वचनशतेनापि दूरीकर्तुमशक्यत्वादिति तात्पर्यम् ॥ **आभीरेति** । क्षत्रियाच्छूद्रकन्यायामुत्पन्नोग्रकन्या, तस्यां ब्राह्मणादुत्पन्न आभीरः ॥ **तदविवक्षित्वैवेति** । अविवक्षायां हेतुः स्त्रीत्वाभावः ॥

( ५१२६ विध्यंशपूरकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ जातिः ॥ * ॥**

**( भाष्यम् ) जातिरिति वक्तव्यम् । या हि महती शूद्रा महाशूद्रा सा भवति ॥**

( प्रदीपः ) **जातिरिति** । महाशूद्रशब्दसमुदायो यदा जातिवाची तदा टापः प्रतिषेधः, यदा तु महत्त्वविशिष्टा शूद्रा प्रतिपिपादयिषिता तदा महाशूद्रेत्येव भवति । असति तु जातिग्रहणे, अमहत्पूर्वेति प्रतिषेधसामर्थ्यादन्तरङ्गोऽपि टाब्बाध्येत । ततश्चात्रापि ङीष् प्रसज्यते ॥

( उद्द्योतः ) ननु जातेरन्यत्रांतरंगे टापि ततः सुपि समासे च जातस्य टापो निवृत्त्ययोगान्निषेधो जातावेव पर्यवस्यतीति नार्थो जातिवचनेनेत्यत आह—**असतीति** । एतत्सर्वं चिंत्यम्—आभीरजातिवाचिमहाशूद्रशब्दे प्रतिषेधावकाशात् । नचानर्थकस्तत्र शूद्राशब्द इति तदंते प्राप्त्यभावादनर्थकः प्रतिषेधः, महाशूद्रावयवशूद्रशब्दस्यानर्थक्ये तदंताट्टापः प्राप्तिरेव नेति निषेधवैयर्थ्यानुद्धारात्, जातिरित्यस्य सुतरां वैय्यर्थ्यानुद्धाराच्च । वस्तुतो या हि महती शूद्रा तद्विवक्षायां जातिमात्रविवक्षया कुक्कुटाण्डादाविव शूद्राशब्देन समासे ततः स्त्रीत्वविवक्षायां निषेधेऽसति जातिलक्षणो ङीष् मा भूत् इत्यर्थं तत् । महाशूद्रशब्दे शूद्रशब्दश्चार्थवानेवेति भाष्याशयः॥ भाष्ये—**ग्रहणवतेति** । प्रत्ययविधौ प्रतिषेधोपलक्षणमिदम् ।

( वार्तिकप्रत्याख्यानभाष्यम् )

**शूद्रशब्दोऽजादिषु पठ्यते । तत्र कः प्रसङ्गो यन्महत्पूर्वात्स्यात् ?**

**नैव प्राप्नोति नार्थः प्रतिषेधेन ॥**

**तदन्तविधिना प्राप्नोति ॥**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥**

( समाधानभाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः—भवतीह तदन्तविधिरिति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**भवती, अतिभवती, महती, अतिमहती, अत्र तदन्तविधिः सिद्धो भवति ॥**

**जातिरिति[1] च वक्ष्यामीति ॥**

( प्रदीपः ) **अतिभवतीति** । भवन्तमतिक्रान्ता महान्तमतिक्रान्तेति प्रादिसमासः । तत उगितश्चेत्यनेनोगिदन्तादपि ङीप् सिद्धो भवति । गौरादिषु बृहन्महच्छब्दौ न पठितव्यौ । तथा[2] च शतुरनुम इत्यत्र नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमित्युक्तम् । अन्यथा ङीष एवोदात्तत्वेन सिद्धत्वात् किं ङीप उदात्तविधानेन ? विभक्त्युदात्तार्थं[3] तद्वचनमिति चेत् किं गौरादिषु पाठेन प्रयोजनम् ? अनुपसर्जनाधिकाराच्चातिमहतीत्यत्र गौरादिङीषभावादुगिल्लक्षणो ङीप् कर्तव्यस्तस्य चोदात्तत्वमुपसंख्यानेन कर्तव्यम् ॥ **जातिरिति च वक्ष्यामीति** । अन्यथाऽमहत्पूर्वेत्यसति प्रतिषेधे महाशूद्रीमहाशूद्राशब्दयोर्विषयविभागेन कथं साधुत्वं प्रतीयेतेति भावः ॥

( उद्द्योतः ) **उगिदन्तान्तादपीति** । भवच्छब्दः शन्त इत्यभिप्रायेणेदम् । उगिदन्तादपीति[4] तु युक्तः पाठः ॥ ननु गौरादिपाठान्महच्छब्दे ङीषा भाव्यम्,न तु ङीपेति भाष्ये महतीत्येतत्कथनमयुक्तमित्यत आह—**गौरादिष्विति** ॥ ननु गौरादिपाठेन तद्वचनमेव प्रत्याख्यायतामिति चेन्न । अन्यार्थमावश्यकत्वादित्याह—**विभक्तीति** ॥ फलान्तरमप्युपसंख्यानस्याह—**अनुपसर्जनेति** ॥ भाष्ये—**जातिरिति चेति** । तदन्तविधौ हि सति 'अमहत्पूर्वा' इत्यस्य करणे तद्विशेषणं जातिरिति वक्तुं शक्यमिति भावः ॥ जातिरित्यपि मास्त्विति शङ्कमानं प्रत्याह—**अन्यथेति** । अमहत्पूर्वेति[5] प्रतिषेधाभावे जातिरित्यस्याभावात् अनयोर्विषयविभागो न स्यादिति भावः[6] ॥ **साधुत्वमिति** । स्पष्टप्रतीतिर्न स्यादिति भावः ॥

( समाधानाक्षेपभाष्यम् )

**यद्येतज्ज्ञाप्यते[7]—पञ्चाजी, दशाजी, अत्रापि प्राप्नोति ॥**

---

१ अमहत्पूर्वेत्यसति जातिरिति कस्य विशेषणं स्यात्? एवं च तद्वक्तुमशक्यमिति भावः ॥

२ यदि बृहन्महच्छब्दाभ्यां ङीषुत्पद्येत तदा तस्योदात्तत्वेन नद्यजाद्युदात्तत्व इति भाष्योपसंख्यानस्य वैयर्थ्यं स्यात् ॥

३ शतुरनुमोनद्यजादीति सूत्रे भाष्ये बृहन्महतोरित्यस्य महती, महता, बृहती, बृहता, इत्युदाहरणान्युदाहृतानि । महतेत्यादौ विभक्त्युदात्तार्थं नद्यजाद्युदात्तत्वे बृहन्महतोरुपसंख्यानमित्यावश्यकमेव । गौरादिगणे पठितयोर्बृहन्महतोर्वा प्रत्याख्यानं नद्यजाद्युदात्तत्व इति वचनस्य वा प्रत्याख्यानमित्याशङ्कायां महतेत्यादौ विभक्त्युदात्तार्थं तद्वचनमावश्यकमिति गौरादिगण एव तौ न पठनीयावित्यर्थः ॥

४ इदानीन्तनेषूपलब्धेषु पुस्तकेषु 'उगिदन्तादपि' इत्येव पाठ उपलभ्यते ॥ भवच्छब्दस्य शन्तत्वस्वीकारादुगिदन्तान्तादिति पठितं कैयटेन । वस्तुतस्तु प्रातिपदिकाधिकारादुगिदन्तादिति तन्तविधिः, शूद्राचामहदिति ज्ञापितश्च द्वितीय इति 'उगिदन्तान्तात्' इति न्याय्यमेव ॥ प्रातिपदिकविशेषणेन प्राप्तस्य तदन्तविधेः'ग्रहणवता प्रातिपदिकेन'इत्यादिपरिभाषया वारणं तु न युक्तम् । तस्यास्तत्तद्रूपेण गृहीतप्रातिपदिकेष्वेव प्रवृत्तेः । एवं च 'उगिदन्तादपि' इति पाठस्य युक्तत्वं चिन्त्यम् ।

५ ख-ग-पुस्तकयोः 'महत्पूर्वेति' पाठः ॥

६ जातिरित्यस्याभावेपि पुंयोगविवक्षायां महाशूद्रीति, इतरत्र महाशूद्रेति रूपद्वयं स्यादेव । तथाऽपि 'अमहत्' इत्यस्याभावे इष्टस्य विषयविभागस्य स्पष्टप्रतीतिर्न स्यादित्यर्थः ॥

७ अमहत्पूर्वग्रहणेन यदि स्त्रीप्रत्ययेषु तदन्तविधिर्ज्ञाप्यते तदा पञ्चाजीत्यादौ टापा बाधितो ङीप् न स्यादित्यर्थः ॥

( प्रदीपः ) **पञ्चाजीति** । पञ्चानामजानां समाहार इति द्विगुः । ततो 'द्विगोः' इति ङीब्न प्राप्नोति । टापा बाध्यमानत्वात् ॥

( आक्षेपखण्डनभाष्यम् )

**नैष दोषः ॥**

**अजादिभिरत्र स्त्रियं विशेषयिष्यामः—अजादीनां या स्त्रीति ॥**

( प्रदीपः ) **अजादीनामिति** । अजाद्यत इति षष्ठी । तेनाजादिप्रातिपदिकाभिधेयसमवेतं स्त्रीत्वमिह गृह्यते । पञ्चाजी-त्यत्र तु समासाभिधेयसमाहारगतं स्त्रीत्वं न त्वजादिशब्दगत-मिति टापोऽप्रसङ्गः । प्रत्यासत्त्या च स्त्रीत्वविशेषणोपक्षीणा-नामप्यजादीनामेव प्रकृतित्वं विज्ञायते, सामर्थ्याद्वा । एवं तु सत्यमहत्पूर्वेति न प्रतिषेधो वक्तव्यः । न हि महाशूद्रीत्यत्र शूद्रार्थगतं स्त्रीत्वमिति टापः प्रसङ्गाभावः ॥ ४ ॥

( उद्द्योतः ) नन्वजाद्यतै इति पञ्चम्या कथं स्त्री विशेष्ये-त्यत आह—**अजाद्यत इतीति** ॥ नन्वेवं टाप् कस्मादिति न ज्ञायेतेत्यत आह—**प्रत्यासत्येति** ॥ **सामर्थ्याद्वेति** । अजाद्यन्तप्रातिपदिक-वदर्थगतस्त्रीत्वप्रतिपादनं तदुत्पन्नेनैव प्रत्ययेन शक्यते कर्तुमिति भावः ॥ **नहीति** । समुदायस्य जातिविशेषवाचित्वेन शूद्रशब्दस्य नैरर्थक्येन स्त्रीत्ववृत्तित्वाभावादिति भावः । तदन्तविधौ तु ज्ञापका-न्तरमनुसर्तव्यम् । **अत्र केचित्**—अनुलोमसंकराणामपि मातृजाति-वृत्तेः स्मृतिसूक्तत्वेन मातृजातीयत्वात्तत्रापि शूद्रत्वमस्ति । अत एव शंखस्मृतौ ब्राह्मण-क्षत्रिय-वैश्यैः क्षत्रिया-वैश्या-शूद्रासूत्पन्नाः क्षत्रिय-वैश्य-शूद्रा एवेत्युक्तम् ।

**शूद्राणां तु सधर्माणः सर्वेऽपध्वंसजाः स्मृताः ॥**

इति स्मृतिरपि तेषां शूद्रत्वारोपमूलिकैव, अन्यथाऽस्य मूलांतर-कल्पने गौरवं स्यात् । स्मृतावपध्वंसः शूद्राविवाह उच्यते । अतः शूद्रशब्दार्थसमवेतस्त्रीत्वस्य सत्त्वादस्त्येव टापः प्रसंग इत्यमहत्पूर्वे-त्यावश्यम् । जातिप्रत्ययश्च शूद्रशब्देन समास एव, न तु शूद्राशब्देन समासे, इति न प्रागुक्तदोषः । उक्तरीत्या जातिरिति चावश्यकमेवेति भाष्यतात्पर्यम्, अत एव भाष्यकृता नेदं प्रत्याख्यातमित्याहुः ॥

( ६२१ प्रत्ययविधायकसूत्रम् ॥ ४ । १ । ४ )

## १२८० उगितश्च ॥ ४ । १ । ६ ॥

( तदन्तविध्यभावे दोषप्रतिपादकं भाष्यम् )

**कथमिदं विज्ञायते—**

**उगितः प्रातिपदिकादिति,**

**आहो स्विदुगिदन्तात्प्रातिपदिकादिति ?**

**किं चातः ?**

**यदि विज्ञायते उगितः प्रातिपदिकादिति,**

**सिद्धम्—भवती, महतीति ।**

**अतिभवती, अतिमहतीति न सिध्यति ॥**

**तदन्तविधिना भविष्यति ।**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रति-षिध्यते ॥**

( प्रदीपः ) **कथमिति** । प्रातिपदिकादिति वर्तते । तत्र विशेषणविशेष्यभावे कामचाराद्यदि प्रातिपदिकेनोगिद्विशेष्यते तदोगितः प्राधान्यात्तेन तदन्तविधिर्नास्ति । न च प्रातिपदि-कान्तमुगित्संभवतीति प्रातिपदिकादुगित इति पक्षसम्भवः । यदा तूगिता प्रातिपदिकं विशेष्यते तदा तदन्तविधौ सत्युगि-दन्तात्प्रातिपदिकादित्येष पक्षो भवति । पक्षद्वयेऽप्यव्याप्तिरिति मत्वा प्रश्नः ॥ **भवतीति** । सर्वादिषु भवतुशब्द उगित्पठ्यते, महच्छब्दोऽपि शतृवद्भावादुगिद्व्यपदेश्यः ॥ **तदन्तविधि-नेति** । उगिता प्रातिपदिकस्य विशेषणादिति भावः ॥ **ग्रह-णवतेति** । ग्रहणमुपादानम्, न तु प्रातिपदिकस्य स्वरूपेणो-च्चारणम् ॥

(उद्द्योतः) ननु भातेर्डवतौ निष्पन्नस्य भवतो नोगित्वम्, किन्तू-गिदंतत्वमेवेत्यत आह—**सर्वादिष्विति** । तस्यैवनार्षमित्याहुः ॥ **शतृ-वद्भावेनेति** । 'वर्तमाने पृषन्महद्बृहज्जगच्छतृवच्च' इत्यनेन । उगिद्व्यप-देश इति पाठे—उगिदिति व्यपदेशो यस्येत्यर्थः । भाष्ये—**अतिभव-तीत्यादि** पचंतीत्यादेरप्युपलक्षणं बोध्यम् ॥ ननु प्रातिपदिकस्य स्वरू-

१ अनुपसर्जनादित्यधिकारसामर्थ्यात्तद्विषये स्त्रियामिति विशेषणं विशिष्टस्यै-वेति ज्ञाप्यते, तदत्र नास्तीति स्त्रियामिति विशेषणं गृह्यमाणस्यैवेति भावः ॥

२ ननु पञ्चाजीत्यादावन्यपदार्थबोधकबहुव्रीहेरभावेनाजशब्दवाच्यमेव त-त्स्त्रीत्वमिति भ्रमवारणायाह—**पञ्चाजीत्यत्रेति** ॥

३ अन्यस्याः प्रकृतेस्तत्र प्रत्यासन्नत्वाभावादिति भावः ॥

४ शूद्रशब्दार्थगतस्त्रीत्वे टाबित्यर्थकरणेन महाशूद्रशब्दस्य यत्र जाति-वाचकत्वं तत्रावयवार्थाभावेन शूद्रशब्दस्यानर्थकत्वान्न ततष्टाप् । महती चासौ शूद्रेत्यर्थकरणे तु टाप् स्यादिति विषयविभागः सुस्पष्ट एवेति भावः ॥

५ अजाद्यत इति पञ्चमीभ्रमवारणायाह—**नन्वजाद्यत इति** ॥

६ तत्रापि=जातिवाचकमहाशूद्रशब्दघटकशूद्रशब्देऽपि ॥

७ अपध्वंसजेषु शूद्रसधर्मत्वबोधिकया स्मृत्या तेषु शूद्रत्वस्यारोप एव बोध्यते ॥

८ एवं च जातिवाचकस्यापि महाशूद्रशब्दस्यारोपितशूद्रत्ववदपध्वंसज-बोधकत्वेन तद्घटकशूद्रशब्दस्यापि तदर्थबोधकत्वेन स्त्रीत्वसमवेतत्वात्ततष्टापः प्रसङ्ग एवेति शूद्रा चामहदित्यावश्यकमेवेति भावः ॥

९ ननु महाशूद्रशब्दे शूद्रस्यारोपितशूद्रत्ववदर्थः, महच्छब्देन च आरोप-विषयस्यैव महत्त्वं बोध्यत इति स्वीकारे शूद्राशब्देन सह महच्छब्दस्य समासे जातिवाचकत्वेऽपि महाशूद्रेति प्रयोगापत्तिः स्यादित्यत आह—**जातिप्रत्यय-श्चेति** । शब्दशक्तिस्वाभाव्यादिति भावः ॥

१० ननु प्रातिपदिकरूपविशेष्यसत्त्वे शूद्रा चामहदित्यनेन ज्ञापिते च तदन्तविधौ 'उगितः प्रातिपदिकात्' इति न सम्भवत्यत आह—**तत्र विशे-षणविशेष्यभाव इति** ॥

११ ननु प्रातिपदिकपदस्य विशेषणत्वे तत्रैव ज्ञापितस्तदन्तविधिः स्यादत आह—**न च प्रातिपदीति** ॥

१२ उगितो व्यपदेश इति षष्ठीतत्पुरुषादर्हतीत्यर्थे 'दण्डादिभ्यो यत्' (५।१।६६) इति यत् । क. पुस्तके 'व्यपदेशः' इत्येव पाठः ।

१३ तत्=भातेर्डवतुप्रत्ययनिष्पन्नो भवच्छब्दः, अप्रामाणिक इत्यर्थः ॥

१४ प्रातिपदिकस्य स्वरूपेणोच्चारणाभावेऽपि प्रातिपदिकपदमात्रेण तदन्त-विधिः स्यादिति पूर्वपक्ष्यभिप्रायेणेत्यर्थः ॥

पेणोच्चारणाभावात् कथमत्र न्यायप्राप्तिरत आह—ग्रहणमुपादानमात्रमिति ॥

( तदन्तविधौ दोषाधायकभाष्यम् )

**अथ विज्ञायते उगिदन्तात्प्रातिपदिकादिति, सिद्धम्—अतिभवती, अतिमहतीति ॥**

**भवती, महतीति न सिध्यति ।**

**व्यपदेशिवद्भावेनेह भविष्यति ।**

**व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥**

( प्रदीपः ) **अथेति** । अमहत्पूर्वेति प्रतिषेधेनेह प्रकरणे तदन्तविधेर्ज्ञापितत्वादिति भावः ॥

( पक्षद्वये दोषप्रतिपादकभाष्यम् )

**उभयथा च निर्गोमती, निर्यवमतीति न सिध्यति ॥**

**किं कारणम् ?**

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति ॥**

( प्रदीपः ) **निर्गोमतीति** । आद्ये पक्षे गोमतीत्यत्रापि न सिध्यति । उगित्त्वं मतुपो गोमानित्यादौ नुमर्थं स्यात् । द्वितीये तु गोमतीति सिध्यति, मतुप उगित्वात्तदन्तत्वाच्च गोमच्छब्दस्य । गोमतो निष्क्रान्तेति समासे तु कृते निरादेः समुदायात् मतुपो विधानाभावान् ङीब्न स्यादित्यर्थः ॥

( उद्द्योतः ) ननु मतुबादीनां उगित्वसामर्थ्यात्तदन्तविधिः स्यादत आह—**उगित्त्वं त्विति** । नुम्विधेरागत्वेन तत्र तदन्तविधिरिति भावः ॥ **समुदायादिति** । प्रत्ययग्रहणपरिभाषयेति भावः ॥

( प्रथमपक्षे दोषाभावोपपादकभाष्यम् )

**यथेच्छसि तथास्तु ॥**

**अस्तु तावदुगितः प्रातिपदिकादिति ॥**

**कथम्—अतिभवती, अतिमहतीति ? तदन्तविधिना भविष्यति ॥**

**ननु चोक्तं ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यत इति ।**

**नैतत्प्रातिपदिकग्रहणम् । प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम् ॥**

( प्रदीपः ) **तदन्तविधिनेति** । ननु च प्रातिपदिकेनोगितो विशेषणाद्विशेष्येण कथं तदन्तविधिः ? एवं तर्हि तन्त्रेण योगद्वयमुच्चार्यते, तत्रैकस्मिन् योगे प्रातिपदिकेनोगिद्विशेष्यते । द्वितीये तूगिता प्रातिपदिकमिति दोषाभावः ॥ **नैतदिति** । उगिद्यस्य तदुगिदिति शब्दरूपमात्रमन्यपदार्थ आश्रीयते न तु प्रातिपदिकमेवेत्यर्थः ॥

( उद्द्योतः ) नन्वाद्यपक्ष उगितो विशेष्यत्वात्तदंतविध्यभाव इत्युक्तमिति शंकते—**ननु चेति** ॥ ननूगिच्छब्दस्य संनिधानात् प्रातिपदिकमेवान्यपदार्थ इति प्रातिपदिकग्रहणमेवेदमत आह—**उगिद्यस्येति** ॥ **शब्दरूपमात्रमिति** । प्रत्ययोऽपीत्यर्थः ॥ नन्वनुवर्त्यं व्यपदेशिवद्भावानारंभ एव ज्यायानिति शंकायामाह—**तेनेति** । व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति भावः । वस्तुत इदं चिन्त्यम्, तस्याप्रत्ययविधिविषयत्वात् । गोक्षीरमित्यस्य यथा वारणं तथा गोस्त्रियोरित्यत्रैव निरूपितम् ॥

( द्वितीयपक्षे दोषाभावोपपादकभाष्यम् )

**अथवा पुनरस्तु—उगिदन्तात्प्रातिपदिकादिति ॥**

**कथं—भवती, महतीति ?**

**व्यपदेशिवद्भावेन भविष्यति ॥**

**ननु चोक्तं व्यपदेशिवद्भावोऽप्रातिपदिकेनेति ।**

**नैतत्प्रातिपदिकग्रहणम् । प्रातिपदिकाप्रातिपदिकयोरेतद् ग्रहणम् ॥**

( प्रदीपः ) **व्यपदेशिवद्भावेनेति** । प्रयोगभेदेन भवान् भवतीति यच्छब्दरूपं प्रयुज्यते तस्यायं भवच्छब्दोऽन्त इति कल्पनयेत्यर्थः । एतेन[10] येन विधिस्तदन्तस्येत्यत्र स्वं रूपमिति

---

१ निर्गोमतीत्यादौ प्रातिपदिकस्योगिद्रूपत्वाभावात्तदन्तविध्यभावे दोषः । अमहत्पूर्वेत्यनेन ज्ञापनात्तदन्तविधावपि निर्गोमतीत्यादौ उगिद्रूपस्यात्र प्रत्ययपरत्वेन प्रत्ययग्रहणे यस्मादिति परिभाषयोगिद्यस्माद्विहितस्तदादित्वदन्तत्वाभावान्न प्राप्तिरित्यर्थः ॥ प्रत्ययग्रहणपरिभाषा प्रत्ययाप्रत्ययविषयेऽपि प्रवर्तत इत्यभिप्रायेणेदम् ॥

२ गोमतीत्यत्र मतुप उगित्वेन प्रातिपदिकस्य चोगिद्रूपत्वाभावेनोगितः प्रातिपदिकादिति तदन्तविध्यभावपक्षेऽपि दोष इत्यर्थः ॥

३ गोशब्दस्य निर्शब्देन समासे गोशब्दस्य ह्रस्वः स्यादिति निर्गुमतीति रूपं स्यात् । गोमतीशब्देन समासेऽत्र 'निर्गोमती' इति दीर्घो न स्यादत आह—**गोमतो निष्क्रान्तेति** ॥

४ 'नुम्विधेरागमत्वेन' इति ग. पाठः । तदा समासप्रत्ययविधौ प्रतिषेध इति तदन्तविधेः प्रतिषेधो नुम आगमत्वेन प्रत्ययविधित्वाभावान्न प्रवर्तत इत्यर्थः ॥ नुम्विधेराङ्गत्वेनेति पाठे 'पदाङ्गाधिकारे' इति परिभाषया तदन्तविधिरिति भावः ॥

५ प्रत्ययग्रहणपरिभाषया समुदायस्योगिदन्तत्वाभावादित्यर्थः ॥

६ ग्रहणवतेति परिभाषा यत्र तत्तद्रूपेण प्रातिपदिकग्रहणं तत्रैव, न तु प्रातिपदिकाप्रातिपदिकग्रहण इत्याशयेनाह—**नैतदिति** ॥

७ अनुवर्त्य=येन विधिरिति सूत्रे स्वं रूपमित्यनुवर्त्य ॥

८ गोक्षीरमित्यादौ व्यपदेशिवद्भावप्रवर्तनेनैव ह्रस्ववारणम्, येन विधिरिति सूत्रे स्वं रूपमित्यस्यानुवर्तनेन व्यपदेशिवद्भावस्य प्रत्याख्याने तु गोशब्दस्य ह्रस्वः स्यात् । अत एवानुवर्तनापेक्षया व्यपदेशिवद्भावो भाष्यकृता स्वीकृतः । अत्र गोक्षीरमित्यत्रैव व्यपदेशिवद्भावप्रत्याख्याने दोषः, भवती-महतीत्यादिषु येन विधिरित्यनेनापि सिद्धमिति ध्वननं चिन्त्यमित्यर्थः । चिन्त्यत्वे हेतुमाह—**तस्याप्रत्ययेति** । येन विधिरिति सूत्रस्य प्रत्ययविध्यतिरिक्तविषयत्वेन व्यपदेशिवद्भावास्वीकारे भवतीत्यादीन्येव न स्युः ॥

९ तत्र हि-'परे तु प्रथमानिर्दिष्टमिति सूत्रोक्तरीत्या येन शब्देन समासविधौ यत्प्रथमानिर्दिष्टं तस्य तं प्रत्यप्रधानत्वेनोपसर्जनत्वात् प्रत्यासत्त्या तत्समासप्रातिपदिकान्त्यस्यैव ह्रस्व इति भाष्यार्थः' इत्यादिग्रन्थेन गोस्त्रियोरिति ह्रस्वाभावः साधितः ॥

१० ननु येन विधिस्तदन्तस्येति सूत्रे स्वं रूपमित्यस्यानुवर्तनेन तदन्तविधावपि केवलस्य कार्यं भवेदेवेत्याह—**एतेनेति** । व्यपदेशिवद्भावमाश्रित्यात्रानुवृत्तिर्न क्रियत इत्यर्थः ॥

निर्वृत्तमिति दर्शितं भवति । तेन गोक्षीरमित्यादौ गोस्त्रियोरिति ह्रस्वो न भवति ॥

( पक्षद्वये दोषाभावोपपादकभाष्यम् )

**यदप्युच्यते—उभयथा निर्गोमती, निर्यवमतीति न सिध्यतीति ।**

**किं कारणम् ?**

**प्रत्ययग्रहणे यस्मात्स विहितस्तदादेर्ग्रहणं भवतीति ॥**

**नैतत्प्रत्ययग्रहणम् । प्रत्ययाप्रत्यययोरेतद् ग्रहणम् ॥**

**कथम् ?**

**वर्णोप्युगित्, प्रत्ययोप्युगित्, प्रातिपदिकमप्युगित् ॥**

( प्रदीपः ) **वर्णोप्युगिदिति** । 'अर्वणस्त्रसावनञः' इत्यर्वन्शब्दस्य तृशब्द आदेशः, तत्रार्वतीति ङीब् भवति, अश्वपर्यायोऽर्वन् शब्दः । नन्वङ्गस्य तृशब्द आदेशो विधीयते तत्र ऋन्नेभ्य इति ङीपि कृते त्रादेशेन भाव्यम् । एवं तर्हि सम्भवमात्रेणैतदुक्तमित्यदोषः ॥

( उद्द्योतः ) अर्वन्शब्दस्य स्त्रियां वृत्तित्वं दर्शयति—**अश्वपर्याय इति** ॥ **भाव्यमिति** । ङीपं निमित्तीकृत्यैवेति भावः ॥ **संभवमात्रेणेति** । 'वर्णोऽप्युगित्संभवति' इत्येतदेव भाष्येऽभिसंहितम्, न तु प्रकृतोपयोगोऽपीत्यर्थः । वस्तुतस्तु क्रोष्ट्रीत्यादावांगोऽपि 'स्त्रियां च' इति तृज्वद्भावो यथा ङीबुत्पत्तेः प्राक्, तथा 'तृ' आदेशोऽपि ततः प्रागेवेति भाष्याशयः ॥

( ५१२७ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ धातोरुगितः प्रतिषेधः ॥ * ॥

**( भाष्यम् ) धातोरुगितः प्रतिषेधो वक्तव्यः । उखास्रद् ब्राह्मणी, पर्णध्वद् ब्राह्मणी ॥**

( ५१२८ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अञ्चतेश्चोपसंख्यानम् ॥ * ॥

**( भाष्यम् ) अञ्चतेश्चोपसंख्यानं कर्तव्यम् । प्राची, प्रतीची ॥**

( उद्द्योतः ) भाष्ये—**अञ्चतेश्चेति** । वार्तिके 'नलोपिनः' इति शेषः । एवं हि प्रत्याख्यानेन समफलता भवति ॥

( ५१२९ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥ * ॥

**( भाष्यम् ) "उगिति" अञ्चतिग्रहणादधातोः सिद्धम् ॥**

**अञ्चतिग्रहणं नियमार्थं भविष्यति । अञ्चतेरेवोगितो धातोर्नान्यस्योगितो धातोरिति ॥**

( प्रदीपः ) **उगित्यञ्चतिग्रहणादिति** । उगिदचामित्यत्रोगिद्ग्रहणादञ्चतेरपि ग्रहणे सिद्धेऽञ्चतिग्रहणं नियमार्थम्—इह शास्त्रे यत्कार्यमुगितो विधीयते तदञ्चतेरेव धातोर्भवति नान्यस्य धातोरिति कार्यमात्रं नियम्यते न तु नुमागम एव । अधातुग्रहणं तु तत्राधातुभूतपूर्वस्यापि नुमागमार्थम् । तेन गोमन्तमिच्छतीति क्यचि क्विपि च कृते गोमानित्यत्रापि नुम्भवति । अन्यथा धातुत्वादञ्चतिग्रहणात् नियमार्थान्न स्यात् । अन्ये त्वाहुः—उगितश्चेति यश्चशब्दः सोऽञ्चतेर्लुप्ताकारनकारस्यानुकरणम् । विभक्तेश्च सुपां सुलुगिति लुक् । भाविनं चाकारलोपमाश्रित्य चेति निर्देशः कृतः । ततश्चाञ्चतिग्रहणमिहैव नियमार्थम् । अकारनकारलोपयोश्चातन्त्रत्वात्—नाञ्चेः पूजायामिति यदा नलोपः प्रतिषिध्यते तदापि ङीप् भवति ॥ ६ ॥

( उद्द्योतः ) नन्वेवमधातोरिति व्यर्थमत आह—**अधात्विति** । वाक्यभेदेनेति भावः ॥ **च शब्द इति** । अकारस्तूच्चारणार्थ इति भावः ॥ **भाविनं चेति** । ङीपि कृते भाविनमित्यर्थः । न लोपस्तु न्याय्य एवेति भावः ॥ **तदापि ङीप् भवतीति** । इदं चिन्त्यम्—आद्यव्याख्याने 'उगिदचाम्' इत्यत्र न लोपस्य विवक्षितत्वात्पूजायामप्राप्तेः । अत एवौपदेशिकं प्राञ्चीत्याद्यपहायातिदेशिकं प्राचीत्याद्युदाहरणं भाष्ये दत्तम् । उगित्यञ्चतिग्रहणादिति चोक्तम्, अन्यथोगितीत्यस्य नोपयोगः स्यात् । एवं च पूजायां प्राचीत्याद्यसाध्वेवेत्यन्ये ॥

( १२२ प्रत्ययविधिसूत्रम् ॥ ४ । १ । ५ )

# १२८१ वनो र च ॥ ४ । १ । ७ ॥

( अतिव्याप्तिपरिहारभाष्यम् )

**इह कस्मान्न भवति—निःशुनी, अतियूनीति ?**

**अर्थवद्ग्रहणे नानर्थकस्येति ।**

---

१ क. पुस्तके 'स्वरूपमिति प्रवृत्तमिति' इति पाठः । अस्मिन् पाठेऽभिमग्रन्थः कथं संगच्छेतेति सुधीभिर्विभावनीयम् ॥

२ गोस्त्रियोरिति सूत्रे प्रथमानिर्दिष्टस्योपसर्जनस्य ग्रहणेन गोक्षीरमित्यत्र गोशब्दस्य गोशब्दान्तेत्यर्थकरणेऽपि येन विधिरिति सूत्रे स्वं रूपमित्यस्यानुवर्तनात् ह्रस्वप्राप्तिः स्यादिति स्वं रूपमित्यननुवर्त्य व्यपदेशिवद्भाव आश्रीयत इत्यर्थः । व्यपदेशिवद्भावस्य चाप्रातिपदिकविषयत्वादत्र न प्राप्तिः ॥ तेन केवलगोशब्दस्य न ह्रस्व इति भावः ॥

३ वर्णस्योगित्वं प्रदर्शयति—अर्वणस्त्रसाविति ॥

४ ननु विभक्तिनिमित्तकाङ्गसापेक्षत्वेन त्रादेशस्य बहिरङ्गत्वाङ्गीपः पूर्वमुत्पत्तिः स्यादित्याह—नन्वङ्गस्येति ॥

५ तदापि=पूजायामपि ॥

६ उगितश्चेत्यत्रत्य चकाराकार इत्यर्थः ॥

७ आद्यव्याख्यानानुरोधेन द्वितीयव्याख्यानेऽपि नलोपस्य विवक्षितत्वमेवोचितम् । अत्र द्वितीयपक्षे नकारलोपस्यातन्त्रत्वमेव चिन्त्यमित्यर्थः ॥ पूजायामपि ङीविष्टश्चेद्भाष्ये प्राथमिकं प्राञ्चीत्येव देयं स्यादित्याशयः ॥

८ स्त्रीप्रत्ययेषु तदन्तज्ञापनेन वन्नन्तात्तदन्तादित्यर्थः स्यात्, तथा च निःशुनीत्यादौ दोष इत्याशयेन शङ्कते—इह कस्मादिति ॥

एवमपि मघोनी—अत्र प्राप्नोति ।

मघवन्शब्दोऽव्युत्पन्नं प्रातिपदिकम् [1] ॥

( प्रदीपः ) निःशुनीति । शुनो निष्क्रान्ता, युवानमतिक्रान्तेति प्रादिसमासस्ततो ङीप् । श्वन्शब्दस्य गौरादिपाठेऽप्युपसर्जनत्वादत्र ङीष् न भवति [3] ॥ मघोनीति । मघमस्यास्तीति 'छन्दसीवनिपौ वक्तव्यौ' इति वनिप् । स चार्थवानिति प्रश्नः ॥ अव्युत्पन्नमिति । 'श्वन्नुक्षन्' इत्यौणादिको मघवञ्छब्दः । उणादिषु च नावश्यं व्युत्पत्तिनिमित्तं कार्यं भवतीति प्रागेवोक्तम् ॥

( उद्द्योतः ) वनोरच । ननु वनिपा व्युत्पन्नस्य कथमव्युत्पन्नत्वमुक्तमत आह—श्वन्नुक्षन्निति । ननु [4] तेन कनिप्रत्ययस्य, महेर्धस्य, अवुगागमस्य च निपातनाद्व्युत्पत्तिपक्षेऽपि नैरर्थक्यान्न दोषोऽत आह—नावश्यमिति । इत्याशयेनाव्युत्पन्नत्वमेवोक्तमिति भावः ॥

( ५१३० सिद्धान्तपूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ वनो न हशः ॥ * ॥

( भाष्यम् ) वनो र चेत्यत्र हशन्तान्न भवतीति वक्तव्यम् । इह मा भूत्—सहयुध्वा ब्राह्मणीति ॥

यदि न हश इत्युच्यते—शर्वरीति [6] न सिध्यति ।

विहितविशेषणं [7] हश्ग्रहणम्—हशन्ताद्यो विहित इति ।

एवमपि प्रेर्त्वरीति न सिध्यति ।

कथं चात्र तुगागमः ? छान्दसत्वात् । ङीब्रावपि तर्हि छान्दसत्वादेव भविष्यतः ॥

बहुलं छन्दसि ङीब्रौ वक्तव्यौ—यज्वरीरिषः । यज्वनीरिषः ॥

( प्रदीपः ) वनो न हश इति । द्वयोरपि ङीब्रेफयोर्निषेधः ॥ सहयुध्वेति । 'सहे च' इति क्वनिप् ॥ शर्वरीति । शॄ हिंसायामित्येतस्मात् 'अन्येभ्योऽपि दृश्यन्ते' इति वनिप् । तत्र गुणे रपरत्वे च कृते हशन्तो भवतीति पूर्वः [10] पक्षः ॥ प्रेर्त्वरीति । ईरगतावित्यस्मात्प्रपूर्वादन्येभ्योऽपि दृश्यन्त इति क्वनिब्वनिपोरन्यतरः, स च हशन्ताद्विहित इति ङीब्रौ न स्यातामिति प्रश्नः ॥ छान्दसत्वादिति । 'प्रईरिशद्योस्तुट् च' [11] इत्युणादिसूत्रमनपेक्ष्यैतदुक्तम् ॥ यज्वरीति । 'सुयजोर्ङ्वनिप्' । 'वा छन्दसि' इति पूर्वसवर्णदीर्घः ॥

( उद्द्योतः ) अनपेक्ष्येति । अनपेक्षा च तेषामाधुनिकत्वादिति बोध्यम् ॥ यज्वरीरिति । जसन्तम् । भो यजनशीलाः प्रजाभ्य इषोऽन्नानि देयत्वेन चनस्यत=प्रार्थयतेति मंत्रार्थः । तत्र दीर्घाज्जसीति निषेधाद्दीर्घो दुर्लभोऽत आह—वा छन्दसीति ॥

( ५१३१ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

॥ * ॥ रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् ॥ * ॥

( भाष्यम् ) रविधाने बहुव्रीहेरुपसंख्यानं कर्तव्यम्—बहुधीवरी, बहुपीवरी ॥

किं पुनः कारणं न सिध्यति ?

प्रतिषिद्धत्वात् । 'अनो बहुव्रीहेः' (४।१।१२) इति प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) बहुधीवरीति । बहवो धीवानोऽस्यामिति बहुव्रीहिस्तत्र 'अनो बहुव्रीहेः' इति ङीपः प्रतिषेधः प्राप्नोति । [12] रेफस्य ङीप्सन्नियोगेन विधानात्तदभावादेवाभावप्रसङ्गः । [13] यदि वा स्त्रियां यदुक्तं तस्य सर्वस्यानो बहुव्रीहेरिति प्रतिषेधविधानादत्र ङीब्रौ न प्राप्नुतः । तस्मात् 'वनो र च' 'बहुव्रीहेश्च' इति वक्तव्यमित्यर्थः । तत्र [14] बहुव्रीहेश्चेत्यनेन लक्षणान्तरेणान उपधालोपिन इत्यनेन विहिते ङीपि रेफमात्रं विधेयम् । यदि तु द्वा-

१ व्युत्पत्तिपक्षाभिप्रायेण प्रश्नः । उणादयोऽव्युत्पन्नानीत्याश्रित्योत्तरम् ॥

२ श्वन्शब्दान्ङीपि तेन प्रादिसमासे निःशुनिरिति ह्रस्वः स्यादित्याशङ्कां वारयितुमाह—शुनो निष्क्रान्तेति ॥

३ निःशुनीत्यत्र श्वशब्देन बहुव्रीहिसमासे च निःश्वीत्येव रूपं स्यादिति प्रादिसमास उक्तः । तस्य चान्यपदार्थे एव विद्यमानत्वेनोपसर्जनत्वान्न गौरादिपाठप्राप्तोऽपि ङीष् इत्यर्थः ॥

४ ननु अव्युत्पत्तिपक्षे दोषाभावेऽपि व्युत्पत्तिपक्षे कथं व्युदास इत्याशङ्कायामाह—ननु तेनेति । श्वन्नुक्षन्नित्यनेन कनिप्रत्ययस्य, महेर्हस्य स्थाने घस्य, प्रकृतेरवुगागमस्य च निपातनेन व्युत्पत्तिपक्षेऽपि कनिप्रत्यय एव क्रियतामिति वनोऽनर्थकत्वेन नास्यप्राप्तिरित्यर्थः ॥

५ व्युत्पत्तिपक्षेऽपि दोषाभावादित्यर्थः ॥

६ हशन्तात्परस्य वनो नस्य रेफो न भवतीत्यभिप्रायेण दोषमाह—शर्वरीति ॥

७ शर्वरीत्यादि दोषवारणायाह—विहितेति ॥

८ विहितविशेषणेऽपि दोषमाह—प्रेर्त्वरीतीति ॥ प्रपूर्वादीर गताविति धातोर्वनिपि रूपमिदम् । तत्र यथा तुडागमश्छान्दसत्वाद्भवति तथा ङीब्रावपीति भावः ॥

९ ननु अस्मिन् प्रकरणे बहुलं छन्दसीत्यस्याभावेन हशन्ताद्विहितस्य वनिपश्छन्दस्यपि रो न स्यादिति यज्वरीरिष इत्यादीनामसिद्धिप्रसङ्गः स्यादत आह—बहुलं छन्दसीति । अत्रैतद्वचनं कर्तव्यमित्याशयः । तेनैव च प्रेर्त्वरीति सिध्यतीति भावः ॥

१० क. पुस्तके 'पूर्वपक्षः' इति पाठः ।

११ 'प्रईरिशदोस्तुट् च' इति साम्प्रतम्पाठ उपलभ्यते, पदमञ्जर्यामिदानीमपि मूलस्थ एव पाठः ॥

१२ ननु ङीपोऽनो बहुव्रीहेरिति निषेधेऽपि रः कथं नेत्याशङ्कायामाह—रेफस्येति । सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपाय इति परिभाषणादिति भावः ॥

१३ ननु वनोरचेत्यत्र ऋन्नेभ्यो ङीबित्यस्य सम्बन्धः, अनो बहुव्रीहेरिति तु अन उपधालोपिन इत्यस्य प्रकरणान्तरपठितस्यास्य च निषेधकम् । यदा वनो रचेत्यनेन केवलरमात्रस्यैव विधानम्, ङीप् तु तत्तत्सूत्रेण भविष्यतीत्याश्रीयते तदा ङीब्रयोः सन्नियोगशिष्टत्वाभावेन ङीपो निषेधेऽपि रः स्यादेवेत्यत आह—यदि वेति । न षट्स्वस्रादिभ्य इतिवदनो बहुव्रीहेरित्येतदपि स्त्रियां यत्प्राप्नोति तन्नेत्यर्थबोधकमित्यर्थः ॥

१४ ननु वनोरचेत्यस्यानन्तरं बहुव्रीहेश्चेति वचनं क्रियते, तस्य च—वन्नन्ताद्बहुव्रीहेर्ङीब्रौ भवत इत्यर्थस्वीकारे सुपर्वेत्यादौ कस्मान्नेत्याशङ्कायामाह—तत्र बहुव्रीहेरिति ॥ एवं च बहुव्रीहेश्चेति वचनेन केवलरमात्रस्यैव विधानम्, ङीप् तु तत्तत्सूत्रेणैवेति भावः ॥

वपि ङीब्रौ विधीयेयाताम्, तदा सुपर्वादेरनुपधालोपिनोऽपि स्याताम् ॥

( उद्द्योतः ) ननु बहवो धीवर्यों यस्येति बहुव्रीहौ अंतरंगत्वाज्जातयोर्ङीप्रयोः प्रतिषेधस्य वचनेनाशक्यत्वात् उपसंख्यानं व्यर्थमत आह—बहव इति ॥ यदि चेति । इदं चावश्यकमिति नवडिलत्र वक्ष्यामः ॥

( ५२३२ पूर्वपक्षीयसमाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वावचनम् ॥ * ॥

( भाष्यम् ) अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वेति वक्तव्यम् ॥

( प्रदीपः ) अन इति । 'अनो बहुव्रीहेः' इत्यस्यानन्तरम् 'उपधालोपिनो वा' इति वक्तव्यम् । तेन 'अन उपधालोपिनोऽन्यतरस्याम्' इत्येतन्न वक्तव्यं भवति । तत्रानुपधालोपिनो नित्यो ङीप्प्रतिषेधो भवति ॥ सुपर्वेति । उपधालोपिनस्तु ङीब्विकल्पस्तेन—बहुराजी, बहुराजानौ, बहुराजेति रूपत्रयं सिध्यति । एवं बहुधीवरी, बहुधीवानौ, बहुधीवेति वन्नन्तस्याप्युपधालोपिनो रूपत्रयं भवति ॥

(उद्द्योतः) इत्यस्यानन्तरमिति । यथान्यासेप्यनुपसर्जनादितीह न संबध्यते, बहुव्रीहावन्नन्तस्यानुपसर्जनस्यासम्भवात् इति भावः ॥ ननु वचनेन वचनप्रत्याख्यानमयुक्तमत आह—तेनान उपधेति ॥ ङीप्विकल्प इति । निषेधविकल्पे विधिविकल्पः फलतीति भावः ॥ बहुराजानाविति । एकवचने—प्रतिषेधे, डापि च रूपभेदाभावाद्द्विवचनमुदाहृतम् ॥

( समाधानाक्षेपभाष्यम् )

अन्यथा कृत्वा चोदितमन्यथा कृत्वा परिहारः । यथोपसंख्यानं चोदितं तथा नित्याभ्यां ङीब्राभ्यां भवितव्यम् । यथा परिहारः, तथा विभाषया भवितव्यम् ॥

( प्रदीपः ) इतरः पूर्वोक्तमभिप्रायमप्रतिपद्याह—अन्यथा कृत्वेति ॥

( उद्द्योतः ) पूर्वोक्तमिति । अनउपधेत्यनेन विहिते ङीपि रमात्रमनेन विधीयत इत्येतमित्यर्थः ॥ यथोपसंख्यानमिति=बहुव्रीहेरित्येतत् । परिहारः=उपधालोपिनो वेत्येषः ॥

( सिद्धान्तभाष्यम् )

यथोपसंख्यानं चोदितमेवमपि विभाषया भवितव्यम्, न ह्यत्र ङीब् दुर्लभः । सिद्धोऽत्र ङीप्—अन उपधालोपिनोन्यतरस्याम् (४।१।२८) इति । ङीप्संनियोगेन र उच्यमानोऽन्येन सति न स्यादित्येवमर्थमुपसंख्यानं चोद्यते ॥

( प्रदीपः ) अन्येन सतीति । प्रकरणान्तरविहितत्वात्तस्य ङीप इति भावः । बहुव्रीहेश्चेति तु वचनेन प्रकरणान्तरविहिते पाक्षिके ङीपि रेफो विधीयत इति तदेव रूपत्रयं भवतीत्यर्थः ॥

( उद्द्योतः ) नन्वन उपधेति ङीपि तत्सन्नियोगेन वनोरचेत्यनेन रादेशस्यापि सिद्धेर्बहुव्रीहेश्चेत्युपसंख्यानं व्यर्थमतो भाष्ये—ङीप्सन्नियोगेनेति । ऋन्नेभ्य इति ङीप्सन्नियोगेनेत्यर्थः ॥ ननु ऋन्नेभ्य इति ङीप्सन्नियोगेनैवैतन्ङीप्सन्नियोगेनापि रत्वं दुर्वारमत आह—प्रकरणान्तरेति ॥ वचनेनेति । वचनसामर्थ्येनेत्यर्थः ॥

( सिद्धान्ताक्षेपभाष्यम् )

किं पुनः कारणं ङीप्संनियोगेन र उच्यते ? इह मा भूत्—सुपर्वा, चारुपर्वेति । तत्तर्ह्युपसंख्यानं कर्तव्यम् ?

---

१ ननु बहुशब्दस्य धीवरीशब्देन समासे रूपस्य सिद्धत्वाद्वार्तिकमनर्थकमत आह—ननु बहवो धीवर्यो यस्येतीति । एवं च धीवरीशब्देन समासे वार्तिकाभावेऽपि रूपं सिद्ध्यत्येव । बहवो धीवानो यस्यामिति विग्रहे रूपसिद्ध्यर्थं वार्तिकमपेक्ष्यत इति भावः ॥

२ क. पुस्तके 'अथवा—अनो बहुव्रीहिप्रतिषेधे 'उपधालोपिनो वे'ति वक्तव्यम्'—इति पाठः । मूलपाठे प्रथमो वाशब्दः 'अथवा' पदार्थकः ॥

३ अनो बहुव्रीहिप्रतिषेध इत्यादिभाष्यस्यार्थमाह—अनो बहुव्रीहेरित्यस्येति ॥

४ अनउपधालोपिन इति सूत्रं प्रत्याख्यायानो बहुव्रीहेरित्येतदनन्तरमुपधालोपिनो वेत्यस्यासाधारणं फलमाह—एवं बहुधीवरीत्यादि । यथान्यासे तु बहुधीवन् शब्दात्प्रकरणान्तरस्थेनानउपधेति सूत्रेण ङीपि कृतेऽपि रो न स्यादिति तन्न सिद्ध्येदित्यर्थः ॥

५ ननु अनउपधालोपिन इत्यत्रानुपसर्जनादित्यस्य सम्बन्धादनो बहुव्रीहेरित्यस्यानन्तरमुपधालोपिनो वेति सूत्रकरणेऽनुपसर्जनादित्यस्यासम्बन्ध इति दोषः स्यादेवेत्यत आह—यथा न्यासेऽपीति । अनुपसर्जनादित्येतद्विशेषणं गृह्यमाणस्यैवेति नियमादन्नन्तस्य तद्विशेषणेऽपि बहुव्रीहावनुपसर्जनस्य तस्यासम्भवात्फलाभाव इति भावः ॥

६ वचनेनेति । फलविशेषाभावे इत्यादिः । एवञ्च फलविशेषाभावे 'उपधालोपिनो वा' इति वचनेन 'बहुव्रीहेश्च' इति वचनप्रत्याख्यानमयुक्तमित्यर्थः । अत्र तु 'उपधालोपिनो वा' इति वचनकरणे बहुव्रीहेश्च, अनउपधालोपिनोन्यतरस्यामिति वचनद्वयं न कार्यमिति महल्लाघवमिति भावः ॥

७ अन्नन्तादुपधालोपिनो बहुव्रीहेर्वा ङीप् नेत्यर्थकोपधालोपिनो वेति वचनस्वीकारे निषेधाभावपक्षे ऋन्नेभ्य इति ङीप् स्यादेवेत्याह—निषेधेति ॥ 'प्रतिषेधविकल्पे' इति ग. पाठः ॥

८ ननु बहुराजी, बहुराजा, इति प्रथमान्तरूपद्वयमध्ये तृतीयस्यापि प्रथमान्तत्वमेव युक्तमिति बहुराजानावित्यस्यायुक्तत्वमित्याशङ्कायामाह—एकवचने इति ॥

९ वनो र चेत्यनन्तरं 'बहुव्रीहेश्च' इति करणे नित्यं ङीब्रौ भविष्यतः । अनो बहुव्रीहेरित्येतदनन्तरमुपधालोपिनो वेति पाठे विकल्पः स्यादिति फलभेद इत्यर्थः ॥

१० ननु वनोरचेत्यस्यानन्तरं बहुव्रीहेश्चेति पाठेऽपि न तेन ङीब्रयोर्विधानमपि तु केवलरस्यैव । तथा च प्रकरणान्तरपठितेनान उपधेत्यनेन ङीपि बहुव्रीहेश्चेत्यनेन रो न स्यादिति 'अन्येन सति न स्यात्' इत्येतद्भाष्यमनुपपन्नमत आह—बहुव्रीहेश्चेति त्विति । पुनोपधालोपिनो वेति पक्षो व्यावर्त्यते । बहुव्रीहेश्चेतिकरणपक्षेऽनुपधालोपिनो बहुव्रीहेर्ङीबभावेन, उपधालोपिनो बहुव्रीहेः प्रकरणान्तरस्थस्यैव ङीपः सम्भवेन च बहुव्रीहेरिति वचनं व्यर्थमेव स्यादिति तत्सामर्थ्यात्प्रकरणान्तरस्थेऽपि ङीपि तत्सम्भवतीति रूपत्रयं सुसाधमित्यर्थः ॥

११ वनोरचेत्यस्यानन्तरं बहुव्रीहेश्चेति पक्षे लाघवमप्याह भगवान्—तत्तर्हीति । अन्यतरस्यां ग्रहणसामर्थ्यादिष्टसिद्धेरिति भावः ॥

न कर्तव्यम् ॥

( प्रदीपः ) किं पुनरिति । ङीप्संनियोगमनपेक्ष्य रेफमात्रं वन्नन्तस्य स्त्रियां विधीयताम् । ततश्च बहुधीवरीत्यत्रापि रेफो भविष्यति, 'अन उपधालोपिनः' इत्यनेन च ङीबिति प्रश्नः ॥

( उद्योतः ) भाष्ये—किं पुनः कारणं ङीब्निति । सूत्रेणोपसंख्यानेन च किमिति मानान्तरसिद्धङीप्सन्नियोगेन रो विधीयते, अपूर्वावेव ङीब्रौ किं न विधीयेते इत्यर्थः । अपूर्वविधाने[1] च नित्यतैव स्यादिति भावः ॥ तत्तर्ह्युपसंख्यानमिति । वनोरचेत्यनन्तरं बहुव्रीहेश्चेतीत्यर्थः । 'उपधालोपिनो वेतिन्यासाभावे' इति शेषः ॥

( सिद्धान्तभाष्यम् )

**वक्ष्यति–डाबुभाभ्यामन्यतरस्यामित्यत्रान्यतरस्यांग्रहणस्य[2] प्रयोजनं डाप्प्रतिषेधाभ्यां मुक्ते ङीब्रावपि यथा स्यातामिति ॥**

( प्रदीपः ) डाबिति । एतत्तत्रैव व्याख्यास्यते । केचि[3]च्चोदयन्ति—वन्निति प्रत्ययग्रहणम्, कृद्ग्रहणं वा । ततश्च 'प्रत्ययग्रहणे यस्मात्स विहितः' इति 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति वा बहुधीवरी, अतिधीवरीति रेफो न प्राप्नोति । नैष दोषः । असमहत्पूर्वेति प्रतिषेधेन तदन्तविधेर्ज्ञापितत्वात् ॥ ७ ॥

( उद्योतः ) प्रत्ययग्रहणमिति । तद्धित[4]वनिपो ग्रहणे प्रत्ययग्रहणम्, फलाभावात् तदग्रहणे तु कृद्ग्रहणमिति विवेकः ॥ तदंतविधेरिति । प्रत्ययग्रहणपरिभाषया वन्नंतग्रहणे, तेन च प्रातिपदिकविशेषणे तदंतविधेर्ज्ञापनादिति[5] भावः ॥

( ६२३ ङीप्रत्ययनिषेधसूत्रम् ॥ ४ । १ । १ आ० ६ ॥ )

## १२८४ न षट्स्वस्रादिभ्यः ॥ ४।१।१० ॥

( निषेधाधिकरणम् )

( विषयोपन्यासभाष्यम् )

**कस्यायं प्रतिषेधः ?**

**ङीबनन्तरस्य प्रतिषेधः ॥**

( प्रदीपः ) कस्यायमिति । यदि ङीपः प्रतिषेधस्तदा 'पञ्च ब्राह्मण्यः' इत्यत्र नलोपे सति, अदन्तत्वाट्टाप् प्राप्नोतीति मत्वा प्रश्नः ॥ आचार्यः शिष्यबुद्धिपरीक्षार्थं परिहाराभासमाह—ङीबनन्तर इति । यस्तु 'टाबृचि' इति पादन्ताट्टाब्विहितस्तस्यात्र प्रसङ्गाभावात् 'ङीबनन्तरः' इत्युक्तम् ॥

( उद्योतः ) आचार्य इति । आचार्यदेशीयोक्ति[6]रित्यपि वक्तुं शक्यम् । नोभाविति—पूर्वपक्ष्युक्तिः, वार्तिककार एवात्र पूर्वपक्षी । आचार्य आह—तत्तर्हीतीत्यन्ये । ननु[7] टाबृचीत्यनन्तरमत आह—यस्त्विति ॥

( टाबापत्तिवारकभाष्यम् )

**अथेदानीं ङीपि प्रतिषिद्धे—**

**षट्संज्ञानामन्ते लुप्ते टाबुत्पत्तिः कस्मान्न स्यात् ?**

**अत इति प्राप्नोति ।**

**असिद्धो नलोपस्तस्यासिद्धत्वान्न भविष्यति ।**

**परिगणितेषु कार्येषु नलोपोऽसिद्धः । न चेदं तत्र परिगण्यते ।**

**इदमपि तत्र परिगण्यते ।**

**कथं ?**

**प्रत्याहाराचापा सिद्धम्**

**सुबिति नेदं प्रत्ययग्रहणम् ।**

**किं तर्हि ?**

**प्रत्याहारग्रहणम् ।**

**क संनिविष्टानां प्रत्याहारः ? प्रथमैकवचनात्प्रभृत्या चापः पकारात् ।**

( प्रदीपः ) परिगणितेष्विति । 'नलोपः[8] सुप्स्वर' इति सूत्रं नियमार्थम्—'सुबादिविधिष्वेव नलोपोऽसिद्धो नान्यत्र' इत्यर्थः ॥ आ चाप इति । 'यङश्चाप्' इत्यस्य । तत्र प्रत्याहारे टापोऽन्तर्भावाट्टाब्विधिः=सुब्विधिः, तत्र नलोपस्यासिद्धत्वमस्त्येवेत्यर्थः ॥

---

१ अपूर्वविधाने चेति । ङीप्सन्नियोगेन विधानाभावे=केवलरस्य विधाने 'अनउपधालोपिनः' इत्यस्यानपेक्षत्वेनान्यस्य विकल्पस्यात्र प्राप्त्यभावाच्च नित्य एवायं रः स्यादिति भावः ॥

२ डाबुभाभ्यामित्यत्र डाप्तदभावघटितरूपद्वयार्थमन्यतरस्यामित्येतदनावश्यकम्, योगविभागसामर्थ्येनैव तत्सिद्धेः । तदेतदन्यतरस्यां ग्रहणं व्यर्थं सद् ङीन्नयोरपि विधानं ज्ञापयति । तथा चान्नन्ताद्बहुव्रीहेर्ङीपि सिद्धे 'अन उपधेति' सूत्रं व्यर्थं सदस्यैव विकल्पविधायकमिति न तत्प्रकरणान्तरस्थङीब्विधायकमिति बहुधीवरीति सिद्धिरिति भाष्याशयः ॥

३ ननु वन्निति प्रत्ययग्रहणमेव न, किन्तु प्रत्ययत्वव्याप्यकृद्ग्रहणमेव । तथा च प्रत्ययत्वव्याप्यधर्मस्य तत्र ग्रहणेन तदादिनियमोऽत्र दुर्निवार एवेति बहुधीवरीत्यादि लक्ष्येषु सुतरां वनो र चेत्यस्याप्राप्तिरित्याशयेन शङ्कते—केचिच्चोदयन्तीति ॥

४ ननु वनिप्प्रत्ययस्य तद्धितस्यापि सत्त्वेन नैतद् कृद्ग्रहणमेवेत्याशङ्क्याहोद्योते—तद्धितेति । तद्धितवनिबन्तात्फलाभावेन ङीपोऽप्राप्तेर्न तस्य ग्रहणमिति मते कृद्ग्रहणमेवैतत् ॥

५ ख. घ. पुस्तकयोः 'तदन्तविधेर्ज्ञाप' इति पाठः ॥

६ नैतदाचार्याणां भाष्यकाराणां मतम्, किन्तु वार्तिककाराणामेव, अत आचार्यः शिष्येत्ययुक्तं स्यादत आह—आचार्यदेशीयेति । आचार्यः पूर्वपक्ष्युक्तिरित्युद्धृतेत्याचार्यदेशीयं मतमित्यर्थः । आचार्यमतं तु तत्तर्हि वक्तव्यमित्येवेति भावः ॥

७ टाबृचीत्यस्यानन्तरत्वेन ङीबनन्तर इति भाष्यमयुक्तमिति दोषवारणाय 'यस्त्विति' कैय्यटेनोक्तं तत्समर्थयति—ननु टाबिति ॥

८ नलोपासिद्धत्वस्य परिगणितत्वं साधयति—नलोप इति ॥

( आपत्युद्भावकभाष्यम् )

यदि प्रत्याहारग्रहणम्—

**दोषस्त्वित्वे**

इत्वे दोषो भवति—बहुचर्मिका, बहुवर्मिका । प्रत्ययस्थात्कात्पूर्वस्यात ( ७।३।४४ ) इति—इत्वं न प्राप्नोति ॥

( प्रदीपः ) दोषस्त्वित्व इति । तत्र हि सुब्विधिरिति सर्वविभक्त्यन्तावयवः[1] समास आश्रीयते । ततश्च[2] टापि सुपि विधिः 'इत्वम्' सुब्विधिर्भवतीति—इत्वे कर्तव्ये नलोपस्यासिद्धत्वात्कात्पूर्वोऽकारो न भवतीतीत्वं न स्यादित्यर्थः ॥

( उद्द्योतः ) नन्वित्वं टापो न विधीयत इति कथं सुप्विधिरत आह—तत्र हीति ।

( सिद्धान्तभाष्यम् )

**तस्मान्नोभौ ॥**

तस्मात् षड्संज्ञकेभ्य उभौ न भवत इति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् ।

स्त्रियाम् (४।१।३) इति वर्तते, स्त्रियां यत्प्राप्नोति तस्य प्रतिषेधः ॥

**षट्संज्ञानामन्ते लुप्ते**
**टाबुत्पत्तिः कस्मान्न स्यात् ।**
**प्रत्याहाराचापा सिद्धं**
**दोषस्त्वित्वे तस्मान्नोभौ ॥**

( प्रदीपः ) स्त्रियां यत्प्राप्नोतीति । अर्थाश्रयप्राप्तिमात्रापेक्षोऽयं प्रतिषेध इत्यर्थः ॥ १० ॥

( उद्द्योतः ) ननु[3] स्त्रियामित्यनुवृत्तावपि स्त्रियां विहितं नेत्यर्थेऽनंतरस्येत्यादि दुर्वारमत आह—अर्थाश्रयेति । प्रियपञ्चा द्रौपदी, अतिपञ्चा कुलटेत्यादौ गौणेऽप्ययं निषेधः, तदंतविधिसत्त्वात् । बहुवचनस्य व्यक्तिबहुत्वाभिप्रायेणैव सत्त्वेनार्थप्राधान्य एवैतत्प्रवृत्तौ मानाभावाच्च । एतेन चापः पकारेण प्रत्याहारे इत्वे दोषवत्, अतिपंचा कुलटेत्यादौ टाप्स्यादिति दोषानुपन्यासे बीजाभाव इत्यपास्तम् । एवं चैतद्भाष्यप्रामाण्याद्बहुधीवभ्यामित्यत्र नलोपे टाबभावनिर्णयाद्नो बहुव्रीहेरित्यनेनाप्युभयोर्निषेधः । एतदभिप्रायेणैव पूर्वत्र—'यदि वा स्त्रियां यदुक्तम्' इत्यादि कैय्यटेनोक्तमिति बोध्यम् ॥ १० ॥

———>o<———

( ६२४ डाप्विधिसूत्रम् ॥ ४ । १ । १ आ. ७ ॥ )

## १२८७ डाबुभाभ्यामन्यतरस्याम्

## ॥ ४ । १ । १३ ॥

( विकल्पाधिकरणम् )

( सूत्रैकदेशाक्षेपभाष्यम् )

किमर्थमुभाभ्यामित्युच्यते ?

( समाधानभाष्यम् )

**उभाभ्यां योगाभ्यां[4] डाब्यथा स्यात् । मन्नन्तादन्नन्ताच्च बहुव्रीहेः ॥**

( प्रदीपः ) योगाभ्यामिति । योगस्था प्रकृतिर्योगशब्देनोच्यते ॥

( उद्द्योतः ) योगाभ्यां प्रत्ययविधेरसंभवादाह—योगस्थेति ।

( सिद्धान्तभाष्यम् )

**नैतदस्ति प्रयोजनम् । प्रकृतमुभयमनुवर्तते ॥**

( प्रदीपः ) प्रकृतमिति । द्वयोरपि[6] स्वरितत्वप्रतिज्ञानात्, अपेक्षणाद्वेति भावः । एवमुभाभ्यामिति प्रत्याख्यातम् ॥

( उद्द्योतः ) नन्वनन्तरस्यैव सा स्यादतआह—द्वयोरपीति ॥ 'स्वरितेनाधिकारः' इत्यस्य प्रत्याख्यानपक्षेऽप्याह—अपेक्षणाद्वेति ।

( आक्षेपभाष्यम् )

**अथान्यतरस्यां ग्रहणं किमर्थम् ?**

( समाधानभाष्यम् )

**अन्यतरस्यां डाब्यथा स्यात् । डापामुक्ते प्रतिषेधोऽपि यथा स्यादिति ॥**

---

१ 'विभक्त्यन्तावयव इति समास' इति क. पाठः । अत्र—इतिशब्दः प्रकारार्थः, सुब्विधिरिति पदं सर्वविभक्त्यन्तावयवकमेवंप्रकारः समास आश्रीयत इत्यर्थः । इतिशब्दयुत एव पाठः श्रेयान् ॥ 'टापि सुपि' इत्यस्य—टाब्रूपे सुपि, विधिरित्वमित्यस्य इत्वाख्यो विधिरित्यर्थः ॥

२ इत्वस्य सुपि विधिः सुब्विधिरिति सप्तमीतत्पुरुषमाश्रित्य सुब्विधित्वं साधयति—ततश्चेति । बहुचर्मिकशब्दाट्टापि सुपि विधिरिति समासे इत्वं सुब्विधिर्भवति, इति इत्वे कर्तव्य इत्याद्यर्थः ॥

३ नन्वर्थाश्रयप्राप्तिमात्रेत्यादिकैय्यटेन षट्संज्ञकानामर्थप्राधान्य एवायं निषेध इति भ्रमो मा भूदित्यत आह—ननु स्त्रियामित्यादि । अत एव प्रियपञ्चेत्यादि गौणस्थलेऽपि निषेध इति ॥

४ ननु डाबुभाभ्यामिति सूत्रस्थ 'उभाभ्याम्' पदेन 'मनः' 'अनो बहुव्रीहेः' इति सूत्रद्वयं परामृश्यते । सूत्रद्वयाच्च डाब् नैव भविष्यति, तयोः प्रातिपदिकत्वाभावात्तथा च 'उभाभ्यां योगाभ्यां' इति भाष्यमनर्थकं स्यादत आहोद्द्योते—योगाभ्यामिति । सूत्रद्वयात्प्रत्ययोत्पत्तेरसम्भव इत्यर्थः ॥

५ उभाभ्यामिति पदं न करणीयम्, 'मनः' 'अनो बहुव्रीहेः' इति सूत्रयोरेवानुवृत्तिः करणीयेत्यर्थः ॥

६ द्वयोरपीति । 'मनः' 'अनो बहुव्रीहेः' इत्यनयोः स्वरितत्वप्रतिज्ञानादत्रानुवृत्तिः स्यादित्यर्थः ॥

७ स्वरितेनाधिकार इत्यस्य प्रत्याख्यानपक्षे स्वरितत्वप्रतिज्ञयाऽनुवर्तनासम्भवेऽपि सूत्रद्वयस्यात्रान्वयित्वेन विवक्षणात्तयोरत्रान्वयः स्यादित्यर्थः ॥

८ डाबुभाभ्यामिति सूत्रेण डापो विधानात्, पूर्वसूत्राभ्यां निषेधविधानाच्च रूपद्वयं सिध्यतीति विफलं विकल्पग्रहणमित्याशयेन शङ्कते—अथान्यतरेति ॥

( समाधानाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । इह डाबुच्यते, प्रतिषेधोऽपि । तावुभावपि वचनाद्भविष्यतः[1] ॥**

( प्रदीपः ) **तावुभाविति** । यदि[2] यत्रैव ङीप्प्रतिषेधस्तत्रैव डाप् स्यात्तदा प्रतिषेधमविधायैव 'मनो डाप्' इत्युच्येत, ततः 'अनो बहुव्रीहेः' इत्यनेनापि डाबेव विधीयेत, स एव हि ङीपं बाधिष्यते किं प्रतिषेधेन ? तस्मादुभयविधानसामर्थ्यादुभयं भविष्यतीत्यर्थः ॥

( उद्द्योतः ) ननु सम्भवत्येकविषयत्वे विषयभेदेन प्रवृत्तिर्न स्यादत आह—**यदि यत्रैवेति** ।

( समाधानभाष्यम् )

**इदं तर्हि प्रयोजनम्—**

**डाप्प्रतिषेधाभ्यां मुक्ते ङीबपि यथा स्यात्[3] ॥**

( उद्द्योतः ) भाष्ये—**डाप्प्रतिषेधाभ्यां मुक्ते इति** । अन्यतरस्यां ग्रहणं वाक्यभेदेनानन्तरस्य 'अनोबहुव्रीहेः' इत्येतस्य विषये ङीबनुज्ञानार्थमिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**सिद्धोऽत्र ङीप्—अन उपधालोपिनोऽन्यतरस्याम् (४।१।२८) इति ॥**

(प्रदीपः) **सिद्धोऽत्रेति** । ननु यत्र तेन न सिध्यति सुपर्वेत्यादौ, तदर्थमन्यतरस्यांग्रहणं स्यात् । नैतदस्ति । यदाऽनेनान्यतरस्यांग्रहणेन पक्षे ङीबनुज्ञायते तदाऽन उपधालोपिन इति नियमार्थं भवति—उपधालोपिन एवाऽन्नन्ताद् ङीब् भवति नान्यस्मादिति[4] । ततश्च सुपर्वेत्यादेरनुपधालोपिनो ङीपा न भाव्यमेव[5] ॥

( उद्द्योतः ) **तदर्थमिति** । तत्र ङीबनुज्ञानार्थमित्यर्थः । **न भाव्यमेवेति** । सत्यसति वाऽन्यतरस्यांग्रहण इत्यर्थः[6] ॥

( सूत्रान्तरैकदेशाक्षेपभाष्यम् )

**अथ तदन्यतरस्यांग्रहणं शक्यमकर्तुम् ?**

**बाढं शक्यम् ॥**

**कथम् ?**

**इह डाबप्युच्यते, प्रतिषेधोऽपि, ङीबपि । तत्सर्वं वचनाद्भविष्यति ॥**

( प्रदीपः ) **अथ तदिति** । अन्तराले विचारः क्रियते—इदमेवान्यतरस्यांग्रहणं भवतु, तत्रत्यं न कर्तव्यं भवतीति मन्यते ॥ इतरोऽकरणं संमन्यते—**बाढमिति** ॥ **ङीबपीति** । अन्यतरस्याङ्ग्रहणेनात्रत्येन प्रापित इति भावः ॥

( उद्द्योतः ) **विचार इति** । प्रकृतविचारोपयोगि विचारान्तरमित्यर्थः ॥ ननु द्वयोरपि तयोः प्रत्याख्याने सुपर्वेत्यादौ सावकाशयोर्डाप्प्रतिषेधयोः 'अन उपधालोपिनः' इति ङीप् बहुराजेत्यादौ बाधकः स्यादत आह—**इदमेवेति** । इदं च निषिद्धङीपोऽनुमतये, अस्यैव चानउपधालोपिन इत्येतन्नियमायेति बहुराजेत्यादौ ङीप्-डाप्-प्रतिषेधाः सिद्धाः, सुपर्वेत्यादौ च ङीबभावः ॥ ननु प्रतिषिद्धो ङीप् कथम् 'उच्यते इत्युच्यते'[7] अत आह—**अन्यतरस्यांग्रहणे नात्रत्येनेति** ॥

( आक्षेपनिरासभाष्यम् )

**नैवं शक्यं विज्ञातुम् । अक्रियमाणे हि तत्रान्यतरस्यां ग्रहणेऽनवकाशो ङीब् डाप्प्रतिषेधौ बाधेत[8] ॥**

( उद्द्योतः ) भाष्ये—**अनवकाश इति** । नित्योऽन उपधेति विधिस्तद्बाधनार्थः, विधिनियमसंभवे विधेरेव ज्यायस्त्वादिति भावः ।

( प्रत्याक्षेपभाष्यम् )

**डाप्प्रतिषेधावप्यनवकाशौ तौ वचनाद्भविष्यतः ॥**

( समाधानभाष्यम् )

**सावकाशौ डाप्प्रतिषेधौ । कोऽवकाशः ?**

**सुपर्वा, चारुपर्वेति ।**

**तस्मादन्यतरस्यां ग्रहणं कर्तव्यम् ॥**

( उद्द्योतः ) **तस्मादिति** । अन उपधेत्यस्य नियमत्वार्थमित्यर्थः । अन्यथा एतदन्यतरस्यांग्रहणबोधितविकल्पः सुपर्वेत्यादावपि स्यादिति भावः ॥

( आक्षेपभाष्यम् )

**इदं तु खल्वन्यतरस्यां ग्रहणं शक्यमकर्तुम्[9] ॥**

( प्रदीपः ) **इदं त्विति** । अस्मिन्नन्यतरस्यांग्रहणे क्रियमाणेऽन उपधालोपिनोऽन्यतरस्यामिति नियमार्थं कर्तव्यम् । तदेवेहाकृतेऽन्यतरस्यांग्रहणे विध्यर्थं भविष्यतीति भावः ॥

---

१ वचनात्=वचनसामर्थ्यादित्यर्थः ॥

२ वचनसामर्थ्यमेवोपपादयति—**यदि यत्रैवेति** । 'मनः' इति सूत्रेणैव डाब्विधेयः, स च 'अनो बहुव्रीहेः' इत्यत्राप्यनुवर्तेत । तथा च डाबुभाभ्यामिति सूत्रं नैव कार्यमिति तत्करणसामर्थ्याद्विकल्पः सिध्यतीति भावः ॥

३ ननु पृथक् 'डाप्'विधानसामर्थ्यादेव विकल्पे सिद्धेऽन्यतरस्यांग्रहणं व्यर्थं सत् डाप्प्रतिषेधाभ्यां मुक्ते ङीपमपि विधत्ते । स च ङीप् मन्नन्तादप्यापतति, तद्वारणायाह—**अन्यतरस्यामिति** ॥ 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति परिभाषणादिति भावः ॥

४ उपधालोपित्वाभावादिति भावः ॥

५ डाबुभाभ्यामित्यत्रत्यान्यतरस्यामिति पदेन समुच्चीयमानो ङीप् अन्नन्तबहुव्रीहिमात्रात्स्यादिति अनुपधालोपिनः सुपर्वशब्दादपि प्राप्येतेति भावः ॥

६ 'न भाव्यमेव' इति प्रदीपस्थ 'एव' शब्दाभिप्रायमाविष्कर्तुमाह—सत्यसतीति । सुपर्वेत्यादेः पक्षद्वयेऽपि ङीपो नावकाश इति भावः । अन्यतरस्यांपदसत्त्वे 'अन उपधालोपिनोऽन्यतरस्याम्' इत्यस्य नियमार्थतया न अनुपधालोपिनो ङीप्, तत्पदाभावे च विधानाभावादेव सुपर्वेत्यादेरनुपधालोपिनो न ङीबित्यर्थः ॥

७ ननु 'इह डाबप्युच्यते, प्रतिषेधोऽपि, ङीबपि' इत्यस्मिन् भाष्ये ङीबप्युच्यते इत्येतदनुपपन्नम्, तत्र ङीपो विधानाभावादित्येतदाह—**ननु प्रतिषिद्धो ङीबित्यादि** । यः प्रतिषिद्धो ङीप् स उच्यत इति पदेन कथमुच्यत इत्यर्थः ॥

८ अन उपधेत्यत्रान्यतरस्यांग्रहणाभावे नित्योयं विधिः पूर्वस्य डाबुभाभ्यामित्यस्य नियामको न स्यात् । तथा च 'अनुपधालोपिनि डाप् ङीप् प्रतिषेधाः' उपधालोपिनि च नित्योऽयं 'अन उपधा' इत्यनेन ङीबित्येतदनभिमेतमापद्येतेत्यर्थः ॥

९ एतत्=डाबुभाभ्यामिति सूत्रस्थ 'अन्यतरस्यां' ग्रहणम् ॥

( उद्द्योतः ) विध्यर्थं भविष्यतीति । फले न कश्चिद्विशेष इति भावः ॥

( समाधानभाष्यम् )

इदमप्यवश्यं कर्तव्यम् ॥

किं प्रयोजनम् ?

डाप्प्रतिषेधाभ्यां मुक्ते ङीब्वावपि यथा स्यातामिति । रविधाने बहुव्रीहेरुपसंख्यानं चोदितं तन्न वक्तव्यं भवति ॥

( प्रदीपः ) इदमपीति । असतीहान्यतरस्यांग्रहणे 'अन उपधालोपिनोन्यतरस्याम्' इति सूत्रं विध्यर्थं स्यात्ततश्च प्रकरणान्तरेण ङीपो विधानात् 'वनो र च' इत्यनेन 'ऋन्नेभ्यो ङीप्' इत्येतत्सूत्रविधीयमानङीप्सन्नियोगेन विधीयमानो रेफो बहुधीवरीत्यत्र न स्याद्, बहुधीव्नीति स्यात् । सति त्विहान्यतरस्यांग्रहणेऽन उपधालोपिन इति सूत्रं नियमार्थं भवति न तु विध्यर्थमिति बहुधीवरीत्यत्र ऋन्नेभ्यो ङीबित्यनेनैव ङीब् भवति । ततश्च वनो र चेति रेफादेशः सिध्यति । यदि तर्ह्यन्यतरस्यांग्रहणेन पक्षे ङीबनुज्ञायते तदा मन्नन्तादपि प्राप्नोति, व्यवस्थितविभाषाविज्ञानान्न भविष्यति। अथवा डाबुभाभ्यामित्येको योगः क्रियते, ततोऽन्यतरस्यामिति द्वितीयः, तत्रानो बहुव्रीहेरिति वर्तते न तु मन इति ॥

( उद्द्योतः ) इत्येतत्सूत्रेति । अनन्तरत्वादितिभावः ॥ ऋन्नेभ्यो ङीबित्यनेनैवेति । नियमार्थस्य तदनुवादरूपत्वादिति भावः ॥ मन्नन्तादपीति । अबहुव्रीहौ 'पामे, पामानौ' इत्यादौ डाबिवान्यतरस्यामित्यनेन वाक्यभेदेनानुज्ञायमानो ङीबप्युभाभ्यां स्यादिति भावः ॥ एकवाक्येन तदनुज्ञाऽसंभवाद्वाक्यभेद आवश्यक इत्याशयेनाह—अथवेति । व्यवस्थितविभाषया[1] तु नैतत्साधयितुं शक्यम्, 'मनः' इत्यस्य संबन्धे तद्वैयर्थ्यापत्तेः ॥

( जिज्ञासाभाष्यम् )

अथेह कथं भवितव्यं—

बहवः श्वानोऽस्यां रथ्यायाम्, बहवो युवानोऽस्यां शालायामिति ?

(प्रदीपः) अथेहेति । यदि 'नद्यृतश्च' इत्यनेन नद्यन्ताद् बहुव्रीहेः कब्विधीयते, तदाऽत्रापि कपा भाव्यम् । अथ नद्यन्तानां वर्तिपदानां यो बहुव्रीहिस्ततः कबिति, तदा तत्र कपा न भाव्यमिति संशय्य पृच्छति ॥

( उद्द्योतः ) तदाऽत्रापीति । डाप्–टिलोप–सम्प्रसारणपूर्वत्व–दीर्घत्वेषु कृतेषु नद्यन्तत्वादिति भावः ॥ नद्यन्तानां वर्तिपदानामिति । नद्यन्तोत्तरपदक इत्यर्थ इति भावः । बहुवचनं प्रयोगबाहुल्याभिप्रायेण ॥

( रूपाक्षेपभाष्यम् )

'बहुशूका, बहुयूका' इति भवितव्यम् ॥

का रूपसिद्धिः—डाप्, टिलोपः, प्रसारणम्, प्रसारणपरपूर्वत्वम्, नद्यृतश्चेति कप् ॥

(प्रदीपः) आचार्यदेशीय आह—बहुशूकेति ॥ प्रसारणपरपूर्वत्वमिति । सम्प्रसारणस्य, डापश्चेत्यर्थः । ततो 'हलः' इति सम्प्रसारणान्तस्य दीर्घत्वम्, अङ्गप्रत्यययोरेकादेशस्य पूर्वं प्रत्यन्तवद्भावात्ततो नदीसंज्ञायामुपजातायां नद्यृतश्चेति कप् ॥

( उद्द्योतः ) ननु टिलोपे पराभावात्कथं सम्प्रसारणपूर्वत्वमतआह—डापश्चेति ॥ दीर्घप्रवृत्तिनिमित्तं सम्प्रसारणत्वम्, तदन्तांगत्वं चोपपादयति—अंतवदिति । हल इति सूत्रारंभसामर्थ्येनाल्विधावप्यतिदेशप्रवृत्तिरिति भावः । अंतवत्वादेव च सम्प्रसारणान्तस्याङ्गत्वं बोध्यम् । एवं कपो निमित्तं बहुव्रीहित्वमप्यन्तवत्त्वेन बोध्यम् ॥ तत इति । दीर्घानंतरमित्यर्थः ॥

( सिद्धान्तभाष्यम् )

कपा तावन्न भवितव्यम् ॥

किं कारणम् ?

नद्यन्तानां यो बहुव्रीहिरित्येवं तद्विज्ञायते, न चैष नद्यन्तानां बहुव्रीहिः ॥

प्रसारणेनापि न भवितव्यम् ।

वक्ष्यत्येतत्—श्वादीनां प्रसारणे नकारान्तग्रहणमनकारान्तप्रतिषेधार्थमिति ॥

परपूर्वत्वेन चापि न भवितव्यम् ।

वक्ष्यत्येतत्—संप्रसारणपूर्वत्वे समानाङ्गग्रहणमसमानाङ्गप्रतिषेधार्थमिति ॥

तस्माद्बहुश्वा, बहुयुवेति भवितव्यमिति ॥

( प्रदीपः ) इदानीमाचार्य आह—कपा तावदिति ॥ वक्ष्यतीति । डापि परतः पूर्वमङ्गम्, डाबन्तन्तु प्रत्ययान्तरे इति संप्रसारणस्य डापश्च समानाङ्गत्वं नास्तीत्युकाराकारयोरेकादेशाभावः, यथा शकह्वाविति ॥

( उद्द्योतः ) भाष्ये—श्वादीनां सम्प्रसारण इति । ननु टिलोपस्याभीयासिद्धत्वेन कथं न नान्तत्वमिति चेन्न । तस्यानित्यत्वात् । ईदृशविषये व्याश्रयत्वादसिद्धत्वाप्रवृत्तिरित्यर्थस्यासिद्धवत्सूत्रे उपपादयिष्यमाणत्वाच्च ॥ प्रत्ययान्तरे इति । स च नाद्याप्युत्पन्न इति भावः ॥

—⊸o⟜—

( ६२५ अधिकारसूत्रम् ॥ ४ । १ । १ आ० ८ )

## १२९८ अनुपसर्जनात् ॥ ४।१।१४ ॥

( तदन्तविधिज्ञापनाधिकरणम् )

( आक्षेपभाष्यम् )

अनुपसर्जनादिति[2] किमर्थम् ?

---

१ डाबुभाभ्यामित्यत्र वाक्यभेदाभावे एकेनैव वाक्येन डापो ङीपश्च विधानमनुमन्तव्यम् । तत्र व्यवस्थितविभाषाऽऽश्रयणेऽपि यदि मन्नन्तान्ङीप् नैव भवति चेत् तर्हि मन इत्यस्य ङीबुद्देश्यतावच्छेदककोटौ सम्बन्धो विफल एव स्यादिति वाक्यभेद एवात्र शरणम् ॥

२ उपसर्जनपदेन नाप्रधानं गृह्यते, किन्तु 'एकविभक्ति चापूर्वनिपाते' इति सूत्रेण विधीयमाना संज्ञा यस्य स्यात्तदेवेहाश्रीयत इति तस्मादुपसर्जनात् ङीप्रत्यस्य प्राप्तिरेव नेति—अनुपसर्जनादिति किमर्थमिति प्रश्नः ॥

( प्रदीपः ) उपसर्जनमिह शास्त्रीयं गृह्यते—समासावयवभूतम् । तत्रावयवाश्रयं कार्यं समुदायस्य न प्राप्नोति । यदवयवे कार्यमकृतार्थं तत्समुदायस्य भवति, यथा—'जुगुप्सते' इत्यात्मनेपदम् । न तु यदवयवे कृतार्थम्, यथा—'पणायति' इति न भवति-आत्मनेपदम् । तदन्तविधिश्च 'ग्रहणवता' इति प्रतिषिद्धः । तत्रानर्थकोऽयं प्रतिषेध इति मत्वाऽऽह—**अनुपसर्जनादिति किमर्थमिति** ॥

( उद्द्योतः ) **शास्त्रीयमित्युक्तम्**, तत्र किं तच्छास्त्रीयमित्यत्राह—**समासावयव भूतमिति** । कृत्रिमत्वात् प्रथमानिर्दिष्टमित्यादीत्यर्थः ॥ निषेधवैयर्थ्योपपादिकां विधेरप्राप्तिमुपपादयति—**तत्रावयवेति** । कुरुचरशब्दो हि टित्, तदाश्रयो ङीप् समुदाये न प्राप्नोतीति निषेधो व्यर्थ इति भावः ॥ नन्ववयवानुदात्तत्वमाश्रित्य सन्नन्ताज्जुगुप्सत इत्यादावात्मनेपदं दृष्टम्, तद्वदिहापि स्यादत आह—**यदवयव इति** ॥ **कार्यम्**=प्रयोजकं निमित्तम् ॥ **यथा पणापयतीति** । आर्धधातुके 'आयस्य' वैकल्पिकत्वेन केवले तच्चरितार्थमिति भावः ॥ नन्वेवं तदंतविधिना स्यादत आह—**तदन्तेति** ॥

( प्रयोजनभाष्यम् )

**बहुकुरुचरा मथुरा, प्रियकुरुचरा मथुरा ।**

( प्रदीपः ) इतरोऽमहत्पूर्वेति प्रतिषेधेन तदन्तविधिर्ज्ञापित इति मत्वाऽऽह—**बहुकुरुचरेति** । बहवः कुरुचरा अस्यामिति बहुव्रीहिः । कुरुचरशब्द उपसर्जनमिति ङीब्न भवति ॥

( उद्द्योतः ) **इतरोऽमहत्पूर्वेतीति** । अस्मादेव ज्ञापकात्तदंतविधिरिति वक्ष्यमाण आशय इत्यन्ये ॥ ननु बहूनां कुरूणां समाहारो बहुकुरु, तत्र चरतीत्यर्थे भाव्यमेव ङीपेत्यत आह—**बहव इति** ॥

( प्रत्याक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । कुरुचरशब्दात्प्रत्ययो विधीयते । तत्र कः प्रसङ्गो यद्बहुकुरुचरशब्दात्स्यात् ? नैव प्राप्नोति-नार्थः प्रतिषेधेन ॥**

( प्रदीपः ) **कुरुचरशब्दादिति** । टिड्ढाणमित्यत्र टित्प्रातिपदिकं गृह्यते । तच्च किञ्चित्साक्षाट्टिद्भवति, यथा—नदट्, चोरडिति । किञ्चित्त्ववयवटित्त्वद्वारेण, अवयवे हि यत्र टित्त्वमकिञ्चित्करं तत्र समुदायार्थं तद्विज्ञायते, स चावयवः क्वचिद्धातुष्टिद्भवति, यथा—स्तनन्धयीति । क्वचितद्धितः-ट्युट्युलादिः । क्वचित् कृद्-ल्युडादिः । तत्र यं समुदायं योऽवयवो न व्यभिचरति तदर्थमवयवस्य टित्वमित्यनेनाभिप्रायेणोक्तम्—**कुरुचरशब्दादिति** । न तु कृद्ग्रहणपरिभाषाऽऽश्रयेण, न हि टिदिति कृत एव ग्रहणम् ॥

( उद्द्योतः ) ननु टस्य टित्वात्टितो विधीयमानो ङीप् तत एव प्राप्नोति, तदंतविधावपि चरशब्दात्, सर्वथाऽपि कुरुचरशब्दादित्ययुक्तमत आह—**टिड्ढेति** । प्रातिपदिकाधिकारादिति भावः ॥ **नदडिति** । पचादौ साक्षात्तथा पाठादिति भावः ॥ **स्तनन्धयीति** । स्तनपा तु स्तनंधयीत्यमरः ॥ नन्ववयवटित्वद्वारेण समुदायस्य टित्वे बहुकुरुचरेत्यत्रापि स्यादत आह—**तत्र यमिति** ॥ **न हीति** । 'कृद्ग्रहणे' एव सा परिभाषा, न तु कृदकृद्ग्रहण इति भावः ॥

( समाधानभाष्यम् )

**तदन्तविधिना प्राप्नोति ॥**

**अत उत्तरं पठति—**

( ५१३३ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् ॥ * ॥**

( भाष्यम् ) **अनुपसर्जनग्रहणमनर्थकम् ॥**

**किं कारणम् ?**

**प्रातिपदिकेन तदन्तविधिप्रतिषेधात् । ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥**

(उद्द्योतः) भाष्ये—तदंतविधिप्रतिषेधादिति ॥ 'समासप्रत्ययविधौ प्रतिषेध' इत्यनेनेति भावः । 'ग्रहणवता' इत्यपि 'वर्णग्रहणवर्जम्' इत्येतदर्थानुवाद एवेति बोध्यम् ॥

( ५१३४ सिद्धान्तवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य ॥ * ॥**

( भाष्यम् ) **एवं तर्हि ज्ञापयत्याचार्यः—पूर्वत्र तदन्तविधिप्रतिषेधो न भवतीति ॥**

---

१ क. पुस्तके **'यदवयवकार्यं'** इति पाठः ।

२ गुप गोपन इत्यस्माद्धातोः सन्प्रत्ययस्य नित्यत्वेन केवलस्य धातोरनुदात्तेत्वमचरितार्थं सत् सन्नन्तादप्यात्मनेपदं विधत्ते ॥

३ पण व्यवहारे, स्तुतौ चेत्यस्मादायप्रत्ययस्यार्धधातुके विषये वैकल्पिकत्वेन तत्र चरितार्थमनुदात्तेत्त्वमायप्रत्ययान्तादात्मनेपदन्न विधत्ते ॥

४ ननु पारिभाषिकोपसर्जनस्याप्यपणन्तादेस्तदन्तविधिना—अपणन्तान्तात्स्त्रीप्रत्ययः सुलभस्तद्वारणार्थमनुपसर्जनादित्यावश्यकमित्याशङ्कां वारयितुमाह—**तदन्तविधिश्चेति** ॥

५ प्रथमानिर्दिष्टं समास, एकविभक्ति चापूर्व इति सूत्राभ्यामुपसर्जनसंज्ञा विधीयते, तत्र प्रथमानिर्दिष्टमित्यनेन संज्ञितस्योपसर्जनस्य पूर्वनिपातो भवतीति तस्मात्स्त्रीप्रत्ययस्याप्राप्तिरित्येतदभिप्रायेणाह—**किन्तदिति** ॥

६ प्रथमानिर्दिष्टमित्यनेन विहितस्योपसर्जनसंज्ञकस्यानुपयोगित्वादाह—**आदीति** । एकविभक्तिचापूर्वनिपात इत्यनेनेत्यर्थः ॥

७ ननु कार्यस्य ङीबादिरूपस्य चारितार्थ्यन्तत्तल्लक्ष्येषूपपद्यत एवेत्यनुपपन्नमेतदित्याशयेनाह—**कार्यं प्रयोजकमिति** । कार्यशब्देन कार्यप्रयोजकं निमित्तमेव ग्राह्यम् । तच्च 'अनुदात्तेत्वादि' अचरितार्थमित्यर्थः ॥

८ बहुकुरुचरशब्दैकदेशकुरुचरशब्दस्योपसर्जनत्वेन अमहत्पूर्वेति ज्ञापिततदन्तविधिबलात्प्राप्तस्य स्त्रीप्रत्ययस्य वारणार्थमावश्यकमनुपसर्जनादित्येतदित्यर्थः ॥

९ 'चरेष्टः' इति टप्रत्ययस्य ॥

१० तदन्तविधावपि=प्रत्ययग्रहणे यस्मात्स इति परिभाषया तदन्तविधावपीत्यर्थः ॥

( उद्द्योतः )भाष्ये—ज्ञापकं त्विति । 'अनुपसर्जनात्' इति तदंतविध्यभावसिद्धार्थानुवादः, तेन पूर्वत्र तदंतविधिलाभ इत्याशयः, अत एव 'पूर्वत्र' इत्युक्तम् ॥

( ज्ञापनप्रयोजनभाष्यम् )

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**भवती, अतिभवती, महती, अतिमहतीत्यत्र तदन्तविधिः सिद्धो भवति ॥**

**नैतदस्ति प्रयोजनम् । उक्तमेतत्—वर्णोऽप्युगित्, प्रत्ययोऽप्युगित्, प्रातिपदिकमप्युगिदिति ॥**

( ज्ञापनप्रयोजनभाष्यम् )

**इदं तर्हि—बहुधीवरी, बहुपीवरीति ॥**

**एतदपि नास्ति प्रयोजनम् । अत्राप्युक्तम्—'रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात्' इति ॥**

(प्रदीपः) **बहुधीवरीति** । 'वनो र च' इत्यत्र वन्नन्तस्य प्रातिपदिकस्य ग्रहणादेव तदन्तविधिर्न स्यादिति भावः ॥ उपसंख्यानादत्र सिद्धिं मत्वाऽऽह—**एतदपीति** ॥

( उद्द्योतः ) ननु वनोरच्चेत्यत्र वनिति प्रत्ययग्रहणात् कथं ग्रहणवता प्रातिपदिकेनेति निषेधोऽत आह—**वनो र चेत्यत्रेति** । प्रत्ययग्रहणपरिभाषयेति भावः । तथा च सामर्थ्यगृहीतेन वन्नंतप्रातिपदिकेन प्रातिपदिकाधिकारे विशेष्ये सम्भवन्नपि तदंतविधिः प्रतिषेधान्न स्यात्, अस्मात्तु ज्ञापकाद्भवतीति तात्पर्यम् । एतत्प्रकरणस्थशब्दानामस्त्रीलिंगप्रकृतिकाचारकिबन्तप्रकृतिककर्तृक्विबन्तानां स्त्रीलिंगानामभाव एवेति बोध्यम् ॥

( ज्ञापनप्रयोजनभाष्यम् )

**इदं तर्हि—अतिधीवरी, अतिपीवरी ॥**

( प्रदीपः ) **अतिधीवरीति** । धीवानमतिक्रान्तेति तत्पुरुषः ॥

( उद्द्योतः ) **तत्पुरुष इति** । बहुव्रीहौ तूपसंख्यानेन सिद्धमिति भावः ॥

( ५१३५ उपसर्जनपदार्थबोधकवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ पूर्वसूत्रनिर्देशो वाऽऽपिशलमधीत इति ॥ * ॥

( भाष्यम् ) **पूर्वसूत्रनिर्देशो वा पुनरयं द्रष्टव्यः । पूर्वसूत्रेऽप्रधानस्योपसर्जनमिति संज्ञा क्रियते । यावद् ब्रूयात्प्रधानादुत्पत्तव्यमप्रधानान्नेति, तावदनुपसर्जनादिति ॥**

**किं प्रयोजनम् ?**

**आपिशलमधीते ब्राह्मणी—आपिशला ब्राह्मणी । अणन्तादितीकारो मा भूदिति ॥**

( प्रदीपः ) ननु अमहत्पूर्व इत्यनेनैव ज्ञापितस्तदन्तविधिः । ततश्च नार्थोऽनेन ज्ञापकेनेत्याह—**पूर्वसूत्रनिर्देश इति** । वाशब्दस्तर्ह्यर्थे ॥ अथ वा पूर्वं तदन्तविधेर्ज्ञापितत्वादुपसर्जनेनापि तदन्तविधिः स्यादिति प्रयोजनसमुच्चयार्थो वाशब्दः । पूर्वसूत्रशब्देन पूर्वाचार्यकृतं व्याकरणमुच्यते । आपिशलिना प्रोक्तमिति 'इञश्च' इत्यण् । ततोऽध्येत्र्यां 'तदधीते' इत्यण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । प्रोक्तप्रत्ययस्याणोऽत्रोपसर्जनत्वाद् ङीब्न भवति ॥

( उद्द्योतः ) ननु पारिभाषिकोपसर्जनग्रहणे तदन्तविधिज्ञापनस्य प्रयोजनस्योक्तत्वेन कथं लौकिकोपसर्जनग्रहणं पक्षान्तरत्वेनोपन्यस्तम् ? कृत्रिमाकृत्रिमन्यायबाधस्यानुचितत्वादत आह—**ननु अमहदिति ॥ तर्ह्यर्थे इति** । यदि ज्ञापकस्य नोपयोगस्तर्हीत्यर्थः ॥ ननु तेन तदंतविधिज्ञापने बहुकुरुचरेत्यादि व्यावृत्त्यर्थं अधिकार आवश्यक इति 'तर्ह्यर्थे' इत्ययुक्तमत आह—**अथ वेति ॥ पूर्वमिति** । अमहत्पूर्वेत्यनेनेत्यर्थः । अत्र पक्षे 'इदं तर्हि प्रयोजनम्' इत्यग्रिमभाष्यासारस्यम्, तस्मादमहदिति ज्ञापकं लक्ष्यानुसाराज्ज्ञापकसिद्धस्य काचित्कत्वेन पूर्वविषयमेव । अत एव पूर्ववार्तिके पूर्वत्रेत्युक्तम् । एतत्प्रभृति तदंतविधेः फलं तु अयं न पश्यति इत्यपरे ॥ भाष्ये—**पूर्वसूत्रेति** । सामर्थ्याल्लक्ष्यानुसारिव्याख्यानाच्चात्र कृत्रिमन्यायाप्रवृत्ति-

---

१ 'उगिद्ग्रहणवर्जम्' इति समासप्रत्ययविधौ तदन्तविधिप्रतिषेधस्य निषेधकमिति तदन्तविधिरत्रज्ञापकं विनाऽपि सिद्ध इत्याशयः ॥

२ वनोरच्चेत्यत्र प्रत्ययग्रहणेन तदन्तविधिसत्वेऽपि वन्नन्तस्य धीवन्शब्दस्य ग्रहणं स्यान्नतु तदन्तस्येति पुनस्तदन्तविधिरावश्यक इत्यर्थः ॥

३ बहुधीवरीत्यादिसिद्धये 'रविधाने बहुव्रीहेरुपसंख्यानम्प्रतिषिद्धत्वात्' इति वार्तिककृतोक्तम् ॥

४ अस्य तत्पुरुषत्वेन रविधाने बहुव्रीहेरित्यनेनासिद्धिरिति भावः ॥

५ पूर्वपक्षिणा 'अनुपसर्जन' पदार्थः शास्त्रीय एकविभक्तिचापूर्वे इत्यनेन संज्ञितो गृहीतः । इदानीमप्रधानपदार्थमनुपसर्जनमितिपदमिलेतत्प्रतिपादयति—**पूर्वसूत्रेति** ॥

६ अतिधीवरीत्यादिलक्ष्यममहत्पूर्वेति ज्ञापिततदन्तविधिना सिद्धमिति नैतदनुपसर्जनाधिकारस्य फलमत आह—**ननु अमहदिति** । अतिधीवरीत्यादि लक्ष्यविषये पारिभाषिकोपसर्जनत्वन्धीवन्नित्यादीनामस्त्येव ॥

७ अमहत्पूर्वग्रहणेन तदन्तविधौ ज्ञापितेऽपि बहुकुरुचरेत्यादौ प्राप्तस्य ङीपो वारणार्थमनुपसर्जनादित्यावश्यकमिति प्रयोजनसमुच्चयमाह—**अथवेति** ॥

८ 'आपिशला' इत्यत्र प्रोक्तार्थकप्रत्ययस्याण उपसर्जनत्वान्न ङीप् । अध्येत्रणोऽनुपसर्जनत्वेऽपि तस्य लोपान्न ततो ङीबित्यर्थः ॥

९ कृत्रिमाकृत्रिमन्यायबाधे बीजम्—'आपिशला' इत्यादि लक्ष्याणामसिद्धिरेव । पारिभाषिकस्योपसर्जनस्य ग्रहणे आपिशलेत्यस्य पारिभाषिकोपसर्जनत्वाभावादत्र प्राप्तिः ॥

१० अत्र पक्षे=प्रदीपाश्रित पक्षे, स्त्रीप्रत्ययेषु तदन्तविधिरमहत्पूर्वेत्यनेनैव ज्ञाप्यते, तथा चोपसर्जनेनापि तदन्तविधिः प्राप्नोति, तद्वारणार्थमनुपसर्जनादित्येतदावश्यकमिति पक्ष इत्यर्थः ॥

११ भाष्यकृता हि इदं तर्हि प्रयोजनम्—प्रधानेन तदन्तविधिर्यथा स्यात् इत्यादिना अनुपसर्जनादित्यनेनैव तदन्तविधिर्भवतीति स्वरसतः प्रतीयते । प्रदीपमताश्रयणे हि अस्यानुपसर्जनादित्यधिकारस्य तदन्तविधिज्ञापकत्वाभावेन नैतद्भाष्यं स्वरसतः संगच्छेतेत्यर्थः ॥

१२ पूर्वविषयमेव=अनुपसर्जनाधिकारात्प्राक् तदन्तविधिबोधकमित्यर्थः । अत्रार्थे प्रमाणं 'ज्ञापकं तु पूर्वत्र तदन्तप्रतिषेधस्य' इति वार्तिकस्थपूर्वत्र ग्रहणमेव ॥

रिति भावः ॥ नन्[1]नु डाबुभाभ्यामिति पूर्वसूत्रे नाप्रधानस्योपसर्जनसंज्ञोक्तेत्यत आह—**पूर्वाचार्यैति** ॥ नन्वापिशलिशब्दात्प्रोक्तार्थे छेन भाष्यमत आह—**इञश्चेतीति** ॥

( अन्वयबोधकभाष्यम् )

**अ[2]थानुपसर्जनादित्युच्यमाने कस्मादेवात्र न भवति ?**

**अणन्तं ह्येतदनुपसर्जनम् । नानुपसर्जग्रहणेनाणन्तं विशेष्यते—अणन्तादनुपसर्जनादिति ॥**

**किं तर्हि ? अणेव विशेष्यते । अ[3]ण्योऽनुपसर्जनमिति ॥**

( प्रदीपः ) **अणन्तमिति** । प्रत्यये लुप्ते प्रकृतेरेव तदर्थाभिधानादिति भावः ॥ **अणेवेति** । अत्र च[4] प्रोक्तार्थस्योपसर्जनत्त्वादर्थद्वारेणाण्प्रत्यय उपसर्जनमिति भावः । यस्त्वध्येत्र्यां प्रत्यय उत्पन्नस्तस्य लुप्तत्त्वात्तदाश्रयो ङीन्न भवति । प्रत्य[5]यलक्षणेनापि न भवति–'अण्योऽकार' इति विज्ञानात् ॥

( उद्योतः ) साक्षाच्छब्द[6]स्योपसर्जनत्वासम्भवादाह—**अत्र चेति** ॥ **अण्योऽकार इति** । ए[7]वं च प्राधान्येन वर्णाश्रयत्वात्प्रत्ययलक्षणाभाव इति भावः ॥

( ५१३६ अनुपसर्जनस्य गृह्यमाणविशेषणत्वे दोषवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ जातिशब्देभ्यस्त्वतिप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **जातिशब्देभ्यस्त्वतिप्रसङ्गो भवति—अवन्ती, कुन्ती, गान्धारी ॥**

( प्रदीपः ) **अतिप्रसङ्ग इति** । ते[9]भ्योऽपि प्रतिषेधः प्राप्नोतीत्यर्थः ॥ **अवन्तीति** । अवन्तेरपत्यं स्त्री, 'वृद्धेत्कोसलाजादाञ्ञ्यङ्', तस्य 'स्त्रियामवन्तिकुन्तिकुरुभ्यश्च' इति लुक् ॥ **गान्धारीति** । गान्धारेरपत्यं स्त्री, 'साल्वेयगान्धारीभ्याञ्च' इत्यञ्, तस्य 'अतश्च' इति लुग् । अत्र प्रत्ययार्थं प्रति प्रकृत्यर्थस्योपसर्जनत्वात् 'इतो मनुष्यजातेः' इति ङीष् न प्राप्नोति । तस्य तु दाक्षीत्यादिरवकाशः ॥

( उद्योतः ) भाष्ये—**जातिशब्देभ्यस्त्वति** । उप[11]सर्जनार्थप्रतिपादकत्वादवन्त्यादिशब्दानामिति पूर्वपक्षः । उप[11]सर्जनीभूतजात्यर्थप्रतिपादकादित्यर्थं इत्युत्तरम् । अनन्तरापत्येऽपि गोत्रत्वारोपेणात्र जातित्वम् ।

( ५१३७ दोषाभावोपपादकवार्तिकम् ॥ ५ ॥ )

**॥*॥ सिद्धं तु जातेरनुपसर्जनत्वात् ॥*॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ? अनुपसर्जनादित्युच्यते । न च जातिरुपसर्जनम् ॥**

( प्रदीपः ) **सिद्धं त्विति** । प्रत्यये लुप्ते प्रकृतिरेवापत्यलक्षणां जातिमाह, सा चानुपसर्जनमित्यर्थः ॥

( वार्तिकान्यथासिद्धिभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । स्त्रियामिति वर्तते । तेनाणं विशेषयिष्यामः—स्त्रियां योऽण्विहित इति ॥**

( प्रदीपः ) **एतदपीति** । यदुक्तं पूर्वसूत्रनिर्देशो वेति तद्भाष्यकारः प्रत्याचष्टे ॥ **स्त्रियां योऽणिति** । आपिशलिशब्दात्तु यः प्रोक्तार्थेऽण्प्रत्ययः स स्त्रियां न विहितः ॥

( अभ्युपेत्यवादेन दोषभाष्यम् )

**एवमपि काशकृत्स्निना प्रोक्ता मीमांसा—काशकृत्स्नी, काशकृत्स्नीमधीते—काशकृत्स्ना ब्राह्मणी, अत्र प्राप्नोति ॥**

( उद्योतः ) भाष्ये—**एवमपीति** । अत्र प्रोक्ताया अपि स्त्रीत्वात्स्त्रियामणस्तीति पूर्वपक्षाशयः ॥

( दोषाभावोपपादकभाष्यम् )

**नैष दोषः । अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम् । यश्चात्राध्येत्र्यामभिधेयायामणुक्तः, लुप्तः सः ।**

**यश्च श्रूयते, उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति ॥**

(प्रदीपः) **उत्पन्न इति** । सोऽपि लुक्तद्धितलुकीति लुप्तः ॥

---

१ पूर्वसूत्रपदेन डाबुभाभ्यामित्येतदुपस्थितम्भवति, तत्र च नोपसर्जनग्रहणमित्यनुपपन्नमेतत्स्यादत आह—**ननु डाबुभाभ्यामितीति** ॥

२ क. पुस्तके **'तथाऽनुप'** इति पाठो दृश्यते । अनुपसर्जनादणन्तादित्यर्थकरणे 'आपिशला' इत्यादौ यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायेन प्रोक्तार्थाणन्तस्यैवाध्येत्रर्थकत्वात्तस्य चानुपसर्जनत्वाद्दोष एवेत्याशयेनाह—**अथानुपसर्जनादिति** ॥

३ अनुपसर्जनं योऽणित्युच्यमाने प्रोक्तार्थक अण उपसर्जनत्वान्न दोष इत्यर्थः ॥

४ ननु प्रत्ययस्योपसर्जनत्वं न संभवति किन्तु अर्थस्य, तथा च 'अण्योऽनुपसर्जनम्' इत्यसङ्गतं स्यादित्यत आह—**अत्र चेति** ॥

५ ननु प्रत्ययलक्षणेनाध्येत्रण्णन्तत्वं स्यादिति लुप्तेऽपि तस्मिन् प्रत्यये तस्यानुपसर्जनत्वात्ततो ङीब्भविष्यत्येवेत्याशङ्कां निवारयति—**प्रत्ययलक्षणेनापीति** ॥ वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषणादिति भावः॥

६ शब्दस्य साक्षादुपसर्जनत्वं न सम्भवति किन्तु अर्थद्वारेणेत्यर्थः ॥

७ ननु अण्योकार इत्यर्थानाश्रयणेऽपि अत इत्यनुवर्तनाददन्तादणन्तादित्यर्थाश्रयणेन वर्णाश्रयत्वमस्त्येवेति किमर्थमण्योकार इत्यर्थाश्रयणमित्याशङ्कायामाह—**एवं च प्राधान्येनेति** । यत्र प्राधान्येन वर्णग्रहणन्तत्रैवैयम्प्रवर्तत इति भावः ॥

८ अवन्तिशब्दस्यापत्यप्रत्ययान्तत्वाद्गोत्रं च चरणैः सहेति जातित्वम् । अत्र चानन्तरापत्येऽपि गोत्रत्वारोप इति भावः ॥

९ मुद्रितपुस्तकेषु **'तेन तेभ्योऽपि'** इति पाठः ॥

१० इतो मनुष्यजातेरित्यस्य—इकारान्तादयोपधान्मनुष्यजातिवाचिनोऽनुपसर्जनात्प्रातिपदिकादित्यर्थकरणेऽवन्त्यादिप्रातिपदिकार्थस्यात्रोपसर्जनत्वेन दोष इत्यर्थः ॥

११ उपसर्जनीभूतम्=उपसर्जनार्थप्रतिपादकमेव जात्यर्थं प्रतिपादकन्तस्मादित्यर्थः ॥

**पुनर्नेति** । सं[1]कृत्प्रवृत्तौ शास्त्रस्य चरितार्थत्वात् पुनः प्रवृत्त्यभावः । अकारान्तस्य चाध्येत्र्यां स्त्रियां वृत्त्या टाब् भवति ॥

**(उद्द्योतः)** भाष्ये—उत्तरयति—**नैष इति** ॥ किमध्येत्रीगतस्त्रीत्वे प्रोक्ताणंतादापादयसि, उत प्रोक्तागतस्त्रीत्वे ? नाद्य इत्याह—**अध्येत्र्यामभिधेयायामिति** । एवं चात्र 'शिष्यमाणं लुप्यमानार्थाभिधायि' इति न्यायेनाणन्तस्य तद्गतस्त्रीत्वार्थकत्वेऽपि विद्यमानो योऽण् स न तद्गतस्त्रीत्वार्थक इति भावः ॥ नांत्य इत्याह—**उत्पन्न इति** । एतेनार्थभेदेन लक्ष्यभेदात्प्रोक्तागतस्त्रीत्वे उत्पन्नत्वेऽपि, अध्येत्रीगतस्त्रीत्वे स्यादेव । अतएव चित्रायां जाता चित्रेत्यादौ पुनष्टाबित्यपास्तम् । प्रोक्तागतस्त्रीत्वे पुनरापादितस्य ङीपः 'उत्पन्न' इत्यादिना वारणात् ॥ यद्युत्पन्नः कथं न श्रूयतेऽत आह—**सोऽपीति** । अ[2]ध्येत्रणो लुक् 'भस्याढे' इति पुंवत्वे प्रोक्तार्थकात्परत्वेन सुलभः । लिं[3]गविशिष्टपरिभाषयाऽध्येत्रणो लुगित्यन्ये ॥

( सूत्रप्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—**

**प्रधानेन तदन्तविधिर्यथा स्यात्—कुम्भ[4]कारी, नगरकारी ।**

**अत्र हि प्र[5]त्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति—अवयवादुत्पत्तिः प्राप्नोति ।**

**( प्रदीपः ) इदं तर्हीति** । प्रधानेन तदन्त[6]विधिज्ञापनार्थमिदमित्यर्थः । नन्वमहत्पूर्वेति ज्ञापितोऽसौ । एवं तर्हि ज्ञापकाद्यथा प्रधानेन भवति, एवमुपसर्जनेनापि स्यादिति सर्वथाऽयं योगः कर्तव्यः । भा[7]ष्यकारेण तु सूत्रमेवेदं ज्ञापनायाश्रितम्, गणपठितप्रतिषेधानपेक्षया । सर्वादिर्वा[8]र्तिके तु भाष्यम्[9]-अनुपसर्ज[10]नादित्ययं योगः प्रत्याख्यायते' इत्यादि तद[10]पेक्षया ॥

**(उद्द्योतः) प्रधानेनेति** । उत्त[11]रत्रापीति भावः । एवं चास्य नानुवादतामात्रम्, किंतु व्यावर्तकताऽपीति भावः ॥ **गणपठितेति** । वस्तुतो वार्तिकं तत् । अत[12]एवं वक्तव्यमिति भाष्ये उक्तम् गणस्य तु सूत्रकृदुक्तत्वात्त[13]त्पदप्रयोगासंगतिः । एवं च वार्तिकेन सूत्रप्रत्याख्यानं न युक्तमिति भाष्याशय उन्नितः ॥ **प्रतिषेधानपेक्षयेति** । सूत्र[14]स्यावश्यकर्तव्यत्वादिति भावः ॥ **प्रत्याख्यायत इति** । तद्ग[15]णपठितप्रतिषेधस्य ज्ञापकत्वापेक्षया, स्त्रियामित्यस्य गृह्यमाणविशेषणत्वापेक्षया चेतिशेषः ॥ केचित्तु तत्र[16]त्या 'प्रत्याख्यायते' इत्याद्युक्तिराद्यवार्तिकाभिप्रायेण, 'अत उत्तरं पठति' इति भाष्यकृदवतरणिकाया तस्य वार्तिककृत्सिद्धान्तत्वोक्तेः । उत्तर[17]वाक्यद्वयं तु आचा[18]र्यदेशीयस्य । पूर्वत्र तदंताप्रतिषेधेऽप्युत्तरत्र तदंतविध्यभावेन बहुकुरुचरादावप्राप्त्याऽस्य सार्थक्यानुपपादनात् । 'पूर्वत्र'इत्युक्त्यसंगतेराद्यस्य तदुक्तित्वम्,अंत्यं तु भाष्य एव दूषितम् । तेनाद्यवार्तिकस्यैव वार्तिककृत्सिद्धान्तत्वम् । वार्तिककारीयसंज्ञोपसर्जनप्रतिषेधप्रत्याख्यानाय हि तत्र त[19]दुक्तम्, त्वत्प्रत्याख्यातसूत्रेणै[20]वात्रोपसर्जनप्रतिषेधव्याख्यानसंभवात् अत्र तद्व्यर्थमिति तदाशयः । **इदं तर्हि प्रयोजनं प्रधानेनेत्यादि** तु भाष्यकृतः सूत्रप्रयोजनप्रदर्शनेन[21] वार्तिकप्रत्याख्यानमित्याहुः ॥

---

१ लक्ष्ये लक्षणन्यायेनेत्यर्थः ॥

२ ननु काशकृत्स्नेन प्रोक्ता मीमांसा इत्यर्थे तेन प्रोक्तमित्यनेनाणि तस्माङ्ङीपि च काशकृत्स्नीशब्दात्तदधीते तद्वेद इत्यनेनाध्येत्रर्थेऽणि च प्रोक्ताल्लुक् इत्यनेन प्रोक्तार्थकप्रत्ययात्परस्याध्येत्रणो लोपविधानादत्र च ङीपाव्यवधानाल्लुकोऽप्राप्तिः स्यादत आह—**अध्येत्रणो लुगिति** ॥ भस्याढ इति पुंवत्वे ङीपोऽपहारेण प्रोक्तार्थकप्रत्ययात्परत्वमिति भावः ॥

३ ननु पुंवद्भावेन ङीपोऽपहारेऽपि यस्येति चेत्यनेनाकारस्य लुप्तत्वादणः परत्वं न सम्भवति, निमित्तापाये नैमित्तिकस्येति तु नास्त्येवेत्याशयेनाह—**लिंगविशिष्टेति** । अध्येत्रणो लुकि च लुक् तद्धित लुकीत्यनेन ङीपो लुगित्यर्थः ॥

४ अमहत्पूर्वेत्यनेन ज्ञापितेऽपि तदन्तविधौ स तदन्तविधिः प्रधानेन यथा स्यादुपसर्जनेन मा भूदित्येतत्फलमनुपसर्जनाधिकारस्य । तेन कुम्भकारीत्यत्र योऽण् स अनुपसर्जन इति भवति तत्र तदन्तविधिः ॥

५ अणन्तान्ङीपो विधाने प्रत्ययग्रहणपरिभाषया तदादिनियमे कारशब्दादेव ङीप् प्रत्ययः स्यात्, तथा च कुम्भकारेय इत्याद्यापद्येत, अतस्तदन्तविधिज्ञापनार्थमावश्यकमेतत्सूत्रम् ॥

६ **'तदन्तविधेर्ज्ञापनार्थमित्यर्थः'** इति मुद्रिते पाठः ॥

७ गणपठितप्रतिषेधः शूद्राचामहत्पूर्वा जातिरित्येषः, तदनपेक्षया=अमहत्पूर्वेत्यनेन तदन्तविधिर्ज्ञापयितुं शक्योऽपि तदनपेक्षयैवानेन सूत्रेण तदन्तविधिर्ज्ञाप्यत इत्यर्थः । वस्तुतस्तु शूद्राचामहदित्येतन्न गणसूत्रं किन्तु वार्तिकमेतत् ॥

८ सर्वादि वार्तिके=सर्वादिसूत्रस्थवार्तिक इत्यर्थः ॥

९ नैतदानुपूर्वीकम्भाष्यम्, किन्तु 'नैव प्राप्नोति नार्थः प्रतिषेधेन' इत्येतदनुपसर्जनाधिकारप्रत्याख्यानपरम्भाष्यमित्यर्थः ॥

१० तदपेक्षया=शूद्रा चामहदित्येतदपेक्षया ॥

११ अनुपसर्जनादित्यधिकाराद्युत्तरत्रापीति तात्पर्यम् । तदधिकारात्प्राक् तदन्तविधिस्तु 'अमहत्पूर्वे'त्यनेनापि सिद्ध्येत, तदुत्तरम्प्रधानेन तज्ज्ञापनन्त्वस्यैव फलमित्यर्थः ॥

१२ यद्येतद्गणसूत्रं स्यात्तदा 'शूद्रा चामहदित्युक्तम्' इत्युक्तं स्यात् । यत एतद्वार्तिकमतो वक्तव्यमित्युक्तम् ॥

१३ तत्पदप्रयोगासङ्गतिः=वक्तव्यमिति पदप्रयोगासङ्गतिः ॥

१४ शूद्रा चामहदित्यस्य तदन्तविधिज्ञापकत्वेऽपि प्रधानेन तदन्तविधिर्यथा स्यादित्याद्यनुपसर्जनाधिकारस्य फलमस्त्येव, अनेनैव तदन्तविधिज्ञापनमपि स्यादित्यर्थः ॥

१५ तद्गणपठितप्रतिषेधस्य=शूद्रा चामहत्पूर्वेत्यस्य ॥

१६ तत्रत्या='सर्वादीनिसर्वनामानि' इति सूत्रस्था, भाष्यकृद्भिरनुपसर्जनाधिकारस्य 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इत्यादिभिः प्रत्याख्यानं कृतन्तत् 'अनुपसर्जन ग्रहणमनर्थकम्' इत्यादि वार्तिकाभिप्रायेण, न तु शूद्रा चामहदित्याद्यपेक्षयेति भावः ॥

१७ उत्तरवाक्यद्वयं तु=ज्ञापकं तु पूर्वत्र, रविधाने बहुव्रीहेरुपसंख्यानमित्यादिवार्तिकद्वयमित्यर्थः ॥

१८ आचार्यदेशीयस्य=पूर्वपक्षिण इत्यर्थः । अनुपसर्जनादित्यधिकारात्प्राक् तदन्तविधेरनेन ज्ञापनेऽपि एतदुत्तरं तदन्तविधेरभावेन बहुकुरुचरेत्यादौ ङीपोऽप्राप्त्या तन्निवारणार्थमस्याधिकारस्यानुपयोगान्नैतज्ज्ञापकं युक्तमिति पूर्वपक्षयुक्तित्वमस्येति भावः ॥

१९ संज्ञोपसर्जनेत्यादिवार्तिकप्रत्याख्यानाय भाष्यकृता 'अनुपसर्जनादित्येष योगः प्रत्याख्यायते' इत्यादि सर्वादिसूत्रे उक्तम् ॥

२० त्वत्प्रत्याख्यातसूत्रेणैव=त्वया वार्तिककारेण प्रत्याख्यातं यदनुपसर्जनादिति सूत्रन्तेनैवात्र=सर्वादिसूत्रे उपसर्जप्रतिषेधस्य व्याख्यानसम्भवादत्र=सर्वादिसूत्रे तत्=संज्ञोपसर्जनीभूतेत्यादिव्यर्थमित्याशय इति भावः ॥

२१ **'सूत्रप्रयोजनप्रर्शनवार्तिक'** इति घ. पाठः ॥ भाष्यकृतः=सिद्धान्तिनः सूत्रप्रयोजप्रदर्शनवार्तिकस्य 'ज्ञापकं तु पूर्वत्र' इत्यादेः प्रत्याख्यानार्थमिति भावः ॥ मूलस्थपाठे हि प्रधानेन तदन्तविधिरित्यादिसूत्रप्रयोजनप्रदर्शनेन वार्तिकस्य ज्ञापकं तु पूर्वत्रेत्यस्य प्रत्याख्यानमिति भावः ॥

( प्रयोजनाक्षेपभाष्यम् )

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति—संघातादुत्पत्तिर्भविष्यति ।**

( प्रत्याक्षेपभाष्यम् )

**कृद्ग्रहण इत्युच्यते, न चैतत्कृद्ग्रहणम् ।**

**कृदकृद्ग्रहणमेतत्—कृदप्ययमण्, तद्धितोऽपि ॥**

( सूत्रानुपयोगप्रदर्शकभाष्यम् )

**एवं तर्हि-ईकारान्तेन समासो भविष्यति ।**

( प्रदीपः ) **एवं तर्हीति** । कुम्भस्य कारीशब्देनोपपदलक्षणः समासः करिष्यते । 'स्त्रीभ्यो ढक्'इत्यत्र च ङ्याप्प्रातिपदिकादिति त्रितयाधिकारात् स्त्रीप्रत्ययान्तात्समासप्रातिपदिकाड्ढग्विधास्यते । समासमन्तरेण स्त्रीप्रत्ययान्तस्य प्रातिपदिकस्यासंभवात्समासः स्त्रीप्रत्ययान्तो गृह्यते । ङ्याबन्तेभ्यश्च[1] सुपर्ण्यादिभ्यो ङ्याब्ग्रहणानुवृत्त्या भविष्यतीति भावः ॥

( उद्द्योतः ) ननु स्त्रीप्रत्ययांतेन समासेऽपि समासस्य प्रत्ययग्रहणपरिभाषया स्त्रीप्रत्ययांतत्वाभावात्कथं ततो ढगत आह—**स्त्रीभ्यो ढगिति** । एवं च स्त्रीप्रत्ययान्तप्रातिपदिकात् ढको विधानसामर्थ्येन प्रत्ययग्रहणपरिभाषा बाध्यत इति भावः ॥

नन्वेवं सुपर्ण्यादिभ्यो ङ्यन्तेभ्यो ढक् न स्यात्, उभयत आश्रयणेऽन्तादिवत्वाभावाच्च विनतादिभ्योऽपि न स्यादत आह—**ङ्याबन्तेभ्य इति** । अनुपसर्जनस्त्रीप्रत्यये तदादिनियमाभावादिदं सर्वं चिन्त्यम् । तस्मात्स्त्रीभ्य इति सूत्रे प्रातिपदिकादिति न संबध्यत इत्येव तत्वम् । अन्यथा ङ्याप्ग्रहणस्यैतदर्थमावश्यकत्वेन ङ्याप्सूत्रस्थभाष्यविरोध इति दिक् ॥

( सूत्रोपयोगप्रदर्शकभाष्यम् )

**यद्येवं लभ्येत, कृतं स्यात् । तत्तु न लभ्यते[2] ।**

**किं कारणम् ? अत्र हि गतिकारकोपपदानां कृद्भिः सह समासो भवतीति समास एव तावद्भवति । समासे च कृते, अवयवादुत्पत्तिः प्राप्नोति ॥**

**अवयवादुत्पत्तौ सत्यां को दोषः ?**

**कौम्भकारेयो न सिद्ध्यति-अवयवस्य वृद्धिस्वरौ स्याताम् ।**

**तस्मादनुपसर्जनाधिकारः ॥**

( प्रदीपः ) **अवयवादिति** । अत्र चोदयन्ति—'कृत्तद्धितसमासाश्च'इत्यत्र कृद्ग्रहणपरिभाषया कुम्भकारशब्दस्य प्रातिपदिकत्वात्तत एव ङीब् भविष्यतीति—तदयुक्तम् । अत्रास्याः परिभाषाया अनुपस्थानस्य पुंयोगसूत्रे प्रतिपादनात् ॥ नन्वेवमपि कारशब्दाद् ङीपि विहिते कुम्भकारीशब्दादेव ढक् भविष्यति, स्त्रीप्रत्ययग्रहणे तदादिनियमाभावात् । तथा च परमकारीषगन्धीपुत्र इत्यत्र संप्रसारणं भवति । एवं तर्हि तदादिनियमाभावादनियमः प्रसज्येत । तथा च कदाचित्कारीशब्दात्प्रत्ययः स्यात्, कदाचित् कुम्भकारीशब्दात् । यदा[3] तु कुम्भकारीशब्द एव स्त्रीप्रत्ययान्तो भवति, न तु कारीशब्द इति ततः प्रत्ययो भवति ॥ ननु कदाचिन्नियमाभावात्कारीशब्दोऽपि स्त्रीप्रत्ययान्तो भवतीति ततोऽपि ढक्प्रसङ्गः । नैष दोषः । नियमप्रतिषेधेनाधिकस्य तदन्तस्य कार्यं विधीयते,न तु न्यूनस्य । अथ वा स्त्रीप्रत्यये तदादिनियमाभावमनाश्रित्य कुम्भकारीति प्रयोजनमुक्तम् ॥

( उद्द्योतः ) **तत एवेति** । वस्तुतोऽवयवस्याप्रातिपदिकत्वात्समुदायस्य चाण्णन्तत्वाभावात् ङीपोऽप्राप्तिरेवेति शंकितुमुचितम् ॥ प्रधानेन तदंतविधिज्ञापने तु नानियमप्रसंगदोष इत्याह—**यदात्विति** । 'विधीयते' इत्यनन्तरं 'तदा' इति शेषः ॥ **तत इति** । कुम्भकारीशब्दादित्यर्थः । नञ्पाठे तु कारीशब्दादित्यर्थः ॥ सत्यपि प्रधानेन तदंतविधौ शंकते—**ननु कदाचिदिति** ॥ **नियमप्रतिषेधेनेति** । अयं भावः—नियमेनाधिकस्यैव व्यावृत्तिर्न तु न्यूनस्य, अत एव 'अस्यापत्यं युवा' इत्यर्थे—अशब्दादिञि यस्येति लोपे, इञन्तत्वात्फक्सिद्धिः । 'इयदेवेयन्मात्रम्' इत्यादौ वत्वंतात्स्वार्थे मात्रजादिसिद्धिः । एवं च तन्निषेधे तद्व्यावर्त्यस्यैव संग्रहो न्याय्यो न तु अतद्व्यावर्त्यस्येति ॥

नन्वसत्यपि प्रधानेन तदंतविधौ स्त्रीप्रत्यये तदादिनियमाभावात्कुंभेनैकार्थीभूतस्य निष्कृष्यापत्येनानन्वयाच्च तदंतर्गतकारीशब्दस्य सुबन्तत्वाभावाच्च समुदायादेव ढगादि भविष्यतीत्यत आह—**अथ वेति** । तदाश्रयणे तु व्यर्थमेवेदमिति ध्वनितम् ॥ केचित्तु[4]—कुंभकर्मकोत्पत्त्यनुकूलक्रियाश्रयसंबन्धित्वे[5] विवक्षिते सामान्योत्पत्त्यनुकूलक्रियाश्रयसंबन्धित्वविवक्षाया[6] अप्यनपायेन तस्यापि प्रथमोच्चरितत्वाच्च भवेदेवावयवादुत्पत्तिरेकार्थीभावेऽपि । समुदायार्थे[7]नैकार्थीभावे प्रधानावयवार्थेनापि तस्य दुर्वारत्वात् । ध्वनितं[8] चेदं येन विधिरिति सूत्रे भाष्येऽपीति तत्रैव

१ 'भ्यस्तु सुपः' इति च पाठः ॥

२ 'तत्तु न लभ्यम्' इति क. पाठः ॥

३ 'तु कुम्भकारशब्दाद्ङीब्विधीयते तदा कुम्भकारीशब्द एव स्त्रीप्रत्ययान्तो भवति न तु कारीशब्द इति ततः प्रत्ययो न भवति' इति च पाठः ॥

४ केवलादपि कारीशब्दात्प्रत्ययोत्पत्तिं साधयति—केचित्त्विति ॥

५ यत्र कुम्भकर्मकोत्पत्त्यनुकूलक्रियाऽऽश्रयसम्बन्धित्वमस्ति तत्र सामान्योत्पत्त्यनुकूलक्रियाश्रयत्वसम्बन्धित्वमप्यस्त्येवेति भवेदेव ततोऽपि स्त्रीभ्यो ढगिति ढक् प्रत्ययः ॥

६ ननु सामान्योत्पत्त्यनुकूलक्रियाश्रयसम्बन्धित्वस्य विद्यमानत्वेऽपि कुम्भकर्मकोत्पत्त्यनुकूलक्रियाश्रयसम्बधित्वस्य तत्र सत्त्वेन कुम्भकारीशब्दादेव ढक् प्रत्ययः स्यात्, न केवलकारीशब्दात् । एकार्थीभावस्य विशिष्ट एव सत्त्वादित्यत आह—तस्यापीति । तस्यैवेत्यर्थः ॥

७ ननु कुम्भकारीशब्दार्थेनैकार्थीभावो न तु अवयवार्थेन, इत्यसङ्गतमिदमित्यत आह—समुदायार्थेनैकेति । यत्र समुदायार्थेनैकार्थीभावस्तत्रावयवार्थेनास्त्येवेत्यर्थः ॥

८ समासप्रत्ययविधौ प्रतिषेध इति वार्तिकव्याख्यानावसर इत्यर्थः । तत्र हि एतन्निषेधाभावे कष्टं परमश्रित इत्यादावपि द्वितीयाश्रितेति समासः स्यादित्यापत्तिः प्रदर्शिता । समुदायार्थेनैकार्थीभावे प्रधानावयवार्थेनैकार्थीभावो नेति स्वीकारे कष्टं परमश्रित इत्यादौ श्रितशब्दार्थस्य द्वितीयान्तार्थेनैकार्थीभावो नेति कष्टं परमश्रित इत्यादौ समासापत्तिप्रदर्शकभाष्यमसङ्गतं स्यात् । तथा च तद्भाष्यप्रामाण्येन यत्र समुदायार्थेनैकार्थीभावस्तत्रावयवार्थेनाप्यस्त्येवेत्याश्रयणीयमेवेति तात्पर्यम् ॥

निरूपितम् । सुबन्तत्वं[1] तु न वचनेन निमित्तकोटौ प्रविष्टम्, किन्तु न्यायप्राप्तमिति भाष्याशयः। तत्र[2] वृद्धिदोषः प्रकृतोदाहरणस्येष्ट एव। स्वरदोषस्तु[3] यदा कुंभकरणे नियुक्ता कुभं करोति तदा 'अणि नियुक्ते' इत्यनेन पूर्वपदाद्युदात्तत्वमिति। न च स्त्रियामित्यस्य गृह्यमाणविशेषणतायाः प्रागुक्तत्वेन, अनुपसर्जनादित्येतद्व्यावर्त्यासंभवेन ज्ञापितेऽपि कथं चारितार्थ्यम्? अनेनैव स्त्रियामित्यस्य तदंतविशेषणताया अपि ज्ञापनात्, तस्य[4] ङीप्प्रकृतिविशेषणताया न्याय्यत्वाच्च। स्वप्रकृत्यर्थे एव तदर्थान्वयात्। एवं च बहुकुरुचरेति व्यावर्त्यं प्रसिद्धम्। किञ्चैवं सति 'आपिशला' इत्यप्येतद्व्यावर्त्यमेव। अनुपसर्जनादिति तु गृह्यमाणविशेषणमेवेत्याहुः ॥

( ५१३८ पूर्वपक्षवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ अनुपसर्जनाधिकारे[5] जातेर्ङीष्विधाने सुपर्ण्या उपसंख्यानम् ॥*॥

**( भाष्यम् ) अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुपर्ण्या उपसंख्यानं कर्तव्यम्—सुपर्णी ॥**

( प्रदीपः ) **सुपर्णीति** । शोभनानि पर्णान्यस्या इति बहुव्रीहिः । तत्र पर्णशब्दस्योपसर्जनत्वाद् ङीष् न प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—**जातेर्ङीषिति** । जातेरित्यनुवर्तमाने पाककर्णेति ङीष्विधाने इत्यर्थः । भाष्ये 'तस्य च शब्दस्य जातिवाचकत्वात्' इत्यन्वयः ॥

( ५१३९ सिद्धान्तवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ न वा समासस्यानुपसर्जनत्वाज्जातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् ॥ * ॥

**( भाष्यम् ) न वा एष दोषः ।**

**किं कारणम्? समासस्यानुपसर्जनत्वात् । समासोऽत्रानुपसर्जनम् । स च जातिवाचकः । समासस्यानुपसर्जनत्वात्तस्य च जातिवाचकत्वाच्छब्दस्य सामान्येन ङीष् भविष्यति—'जातेरस्त्रीविषयादयोपधात्' (४।१।६३) इति ॥**

( प्रदीपः ) **न वेति** । सुपर्णशब्दो जातिवाचि प्रातिपदिकं तच्चानुपसर्जनम् । बहुकुक्कुटा नगरीत्यत्र तु जातिवाचिनः कुक्कुटशब्दस्योपसर्जनत्वात्समासस्याजातिवाचित्वाद् ङीषोऽभावः ॥ **जातेरिति** । जातेरित्यनुवर्तमाने[6] 'पाककर्णपर्ण' इत्यनेनेत्यर्थः ॥

( उद्द्योतः ) **जातिवाचीति** । औषधिजातिवाचीत्यर्थः ॥ नन्वेवं जातेरस्त्रीत्यस्यानुपसर्जनाधिकारे पाठो व्यर्थोऽत आह—**बहुकुक्कुटेति** ॥

( वार्तिकोपसंहारभाष्यम् )

**कथं कृत्वा चोदितम्? कथं कृत्वा परिहारः?**
**बहुव्रीहिरिति कृत्वा चोदितम् ।**
**तत्पुरुष इति कृत्वा परिहारः ॥**

**इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥**

( प्रदीपः ) **बहुव्रीहिरिति** । नास्त्युपसर्जनमस्मिन्नित्यनुपसर्जनमित्याश्रीयमाणे पर्णशब्दस्योपसर्जनत्वाद् 'ङीष्'न स्यात् । तत्पुरुषे तु दोषाभावः । समासस्योपसर्जनत्वाभावात् ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे चतुर्थाध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥

( उद्द्योतः ) 'कथंकृत्वा' इति भाष्यस्य उदाहरणविषयत्वभ्रमं निराकरोति—**नास्त्युपेति** ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थाध्यायस्य प्रथमे प्रथममाह्निकम् ॥

———

१ ननु 'स्त्रीप्रत्ययान्तप्रकृतिकसुबन्ताट्ठक्' इति स्त्रीभ्यो ढगित्यस्यार्थः । तथा च केवलकारीशब्दस्य सुबन्तत्वाभावादेव न ततः प्रत्यय इत्याशङ्कायामाह—**सुबन्तत्वमिति** । अत्र सुप्पदं नानुवर्तत इत्यर्थः ॥

२ कुम्भकारेय इत्यादावयवस्य वृद्धौ सत्यामपि न कश्चिद्दोष इत्यर्थः ॥

३ ननु विशिष्टाड्ढक् प्रत्यये 'कितः' इत्यनेनान्तोदात्तत्वम्, निष्कृष्यैकार्थीभावे केवलकारीशब्दादपि ढकि अन्तोदात्तत्वमेवेति कथं 'अवयवस्य वृद्धिस्वरौ स्यातां' इत्याद्यापत्तिः प्रदर्शितेत्यत आह—**स्वरदोषस्त्विति** । कुम्भकार इत्यत्र प्रत्ययस्वरेणान्तोदात्तत्वम्, तत्र विशिष्टात्केवलाद्वा ढकि अन्तोदात्तत्वमेव स्यादिति न स्वरदोषः । यत्र कुम्भकरणक्रियायां नियुज्यते काचन तत्र 'अण्णन्ते परे नियुक्तवाचिनि समासे पूर्वमाद्युदात्तम्' इत्यर्थकेन 'अणिनियुक्ते' इति सूत्रेण कुम्भकारीशब्दे कुम्भशब्द एव आद्युदात्तः स्यात् । ततश्चावयवात्कारीशब्दाड्ढकि प्रत्ययस्वरेणान्तोदात्तत्वे आद्युदात्तस्यान्तोदात्तस्य चेति स्वरद्वयस्य श्रवणं स्यादिति भावः ॥ अनुदात्तम्पदमेकवर्जमिति परिभाषया सति शिष्टस्वरबलीयस्त्वेन चान्तोदात्तत्वमेव स्यादिति तु न वक्तुं शक्यम् । अवयवात्कारीशब्दाड्ढकि तस्यैव तद्धितान्तत्वेन प्रातिपदिकत्वात्सुबन्तत्वमपि कार्येय इत्यस्यैवेति परिभाषया न कोऽपि दोष इत्याहुः ॥

४ ननु स्त्रियामिति विशेषणं गृह्यमाणस्यैवेति स्वीक्रियमाणे बहुकुरुचरेत्यादौ दोषाभावेनानुपसर्जनादित्येतदेव मास्तु, कथं स्वांशे चारितार्थ्याभावात्स्त्रियामिति तदन्तस्यैव विशेषणमिति ज्ञाप्यत इत्यत आह—**तस्य ङीबिति** । ङीबर्थस्य स्त्रीत्वस्य प्रकृत्यर्थ एवान्वयस्य न्याय्यत्वेन स्त्रियामित्येतदपि तदन्तस्यैव विशेषणं न्याय्यमिति भावः ॥

५ अनुपसर्जनादित्येतद्विशेषणं गृह्यमाणस्यैवेति सिद्धान्तितत्वेन पाककर्णेत्यादौ अनुपसर्जनं यत् पाकादि जातिवाचकं तदन्तात्स्त्रीवाचकात्प्रत्यय इत्यर्थस्यावश्यकत्वेन सुपर्णीत्यादौ पर्णस्योपसर्जनत्वादप्राप्तिरिति भावः ॥

६ ननु सुपर्णीशब्दस्य नित्यस्त्रीत्वेन जातेरस्त्रीत्यस्य प्राप्त्यसम्भवादाह—**जातेरित्यनुवर्तमान इति** ॥

( ६२६ ङीप्विधायकसूत्रम् ॥ ४ । १ । २ आ. ९ ॥ )

## १२८९ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ॥ ४ । १ । १५ ॥

( ङीबधिकरणम् )

( ५१४० पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ढग्रहणे सानुबन्धकस्योपसंख्यानम् ॥ * ॥**

( भाष्यम् ) ढग्रहणे सानुबन्धकस्योपसंख्यानं कर्तव्यम्—कारिकेयी, हारिकेयी ॥

किं पुनः कारणं न सिद्ध्यति ?

( ५१४१ पूर्वपक्षसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अननुबन्धकग्रहणे हि न सानुबन्धकस्य ॥ * ॥**

( भाष्यम् ) 'अननुबन्धकग्रहणे हि न सानुबन्धकस्य ग्रहणं भवति' इत्येषा परिभाषा कर्तव्या ।

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

तव्यग्रहणे तव्यद्ग्रहणं मा भूत् ।

दिव्ग्रहणे दिवुग्रहणं मा भूत् ॥

( प्रदीपः ) **तव्यग्रहण इति** । 'पूरणगुण' इति तव्येन समासप्रतिषेध उच्यमानस्तव्यता न भवतीति ब्राह्मणकर्तव्यमिति समासो भवत्येव, तत्र कृत्स्वरेणान्तस्वरितं भवति । तव्येन तु समासे कृत्स्वरेण तशब्दाकार उदात्तः स्यात् ॥ **दिव्ग्रहणे इति** । तेनाक्षद्यूरिति 'दिव औत्' इति न भवति । अक्षद्यूभ्यामिति 'दिव उत्' इति न भवति । अन्यथा 'ऊठि' कृते, एकदेशविकृतस्यानन्यत्वादौत्वोत्वे स्याताम् । परिभाषायां तु सत्यां प्रातिपदिकस्य स्वर्गान्तरिक्षवाचिनो दिव्शब्दस्य ग्रहणम् ॥

( उद्योतः ) **अंतःस्वरितमिति** । तव्यतस्तित्वेन स्वरितांतत्वात् ॥ **तशब्दाकार इति** । प्रत्ययस्वरेण कर्तव्यस्य मध्योदात्तत्वात् ॥ **अक्षद्यूरिति** । धातोः सानुबन्धकत्वात् ॥ **ऊठि कृत इति** । बहिर्भूतविभक्त्यपेक्षत्वापेक्षया क्विबपेक्षत्वादूठंतरंगः ॥ **दिव्शब्दस्येति** । डिविप्रत्ययांतस्य, अव्युत्पन्नस्य वेत्यर्थः ॥

( परिभाषाक्षेपभाष्यम् )

नन्वियमपि कर्तव्या—'तदनुबन्धकग्रहणेऽतदनुबन्धकग्रहणं न' इति ।

कान्येतस्याः परिभाषायाः प्रयोजनानि ?

'यत्'ग्रहणे 'ण्यत्' ग्रहणं मा भूत् ।

'अङ्' ग्रहणे 'चङ्' ग्रहणं मा भूत् ।

'अच्' ग्रहणे 'णच्' ग्रहणं मा भूत् ॥

( प्रदीपः ) प्रसङ्गेन परिभाषाऽन्तरप्रतिपादनायाह—**नन्वियमिति** । स एवानुबन्धो यस्येत्यर्थः । उपात्तानुबन्धव्यतिरिक्तानुबन्धयुक्तस्त्वतदनुबन्धकः ॥ **यत् ग्रहण इति** । 'यतोऽनावः' इत्यादावित्यर्थः ॥ **अङ्ग्रहण इति** । 'ऋदृशोऽङि गुणः' इत्यत्र चङो ग्रहणाभावादङि विधीयमानं 'श्वयतेरः' इत्यत्वं चङि न भवति—अशिश्वियदिति ॥

( उद्योतः ) **प्रसंगेनेति** । न तु प्रकृते ढको ग्रहणानुपपत्तिप्रयोजिका सेत्यर्थः ॥ **स एवेति** । सप्तपर्णादौ वीप्सावदत्र वृत्तावपधारणस्यान्तर्भाव इत्यर्थः ॥ अतदित्यस्य तत्तद्भिन्नेत्यर्थं इत्याह—**उपात्तेति** ॥ **ऋदृशोऽङीति** । अनुवृत्तिप्रदर्शनार्थमेतत् ॥ **चङि नेति** । 'विभाषाधेट्श्व्योः'इति चङ्, 'जृस्तम्भु' इति पक्षेऽङ् ॥

( परिभाषाज्ञापकभाष्यम् )

ते द्वे एते परिभाषे कर्तव्ये ?

न कर्तव्ये ।

आचार्यप्रवृत्तिर्ज्ञापयति भवत एते परिभाषे इति यदयं 'वामदेवाड् ड्यड्ड्यौ' (४।२।९) इति ययतौ डितौ करोति ॥

( प्रदीपः ) **ड्यड्ड्याविति** । यस्येति लोपेन वामदेव्यमिति रूपे सिद्धे डित्करणं 'ययतोश्चातदर्थे' इत्यत्र ड्यड्ड्यतोर्ग्रहणनिवारणार्थम् । एवं चैतद्र्[4] डित्वस्य प्रयोजनं भवति, यद्येते परिभाषे भवतः । तेनावामदेव्यमित्यत्रान्तोदात्तत्वं न भवति, अपि त्वव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वम्[5] ॥

( उद्योतः ) ननु लोपार्थं डित्वमत आह—**यस्येतीति** ॥ 'एवं च' इतिशब्दस्यार्थमाह—**यद्येते** इत्यादि ॥ **अन्तोदात्तत्वं नेति**। 'ययतोश्चातदर्थे' इत्यनेन, नञ उत्तरयोर्ययदंतयोरुत्तरपदयोस्समासस्यान्त उदात्त इति तदर्थः ॥

( प्रथमवार्तिकप्रत्याख्यानभाष्यम् )

तत्तर्ह्युपसंख्यानं कर्तव्यम् ?

न कर्तव्यम् ।

अननुबन्धको ढशब्दः स्त्रियां नास्तीति कृत्वा सानुबन्धकस्य ग्रहणं विज्ञास्यते ।

ननु चायमस्ति 'शिलाया ढः'(५।३।१०२)इति। नैष स्त्रियां वर्तते ।

अयं तर्हि 'सभाया यः' (४।४।१०५) 'ढश्छन्दसि' (४।४।१०६) इति । एषोऽपि न स्त्रियां वर्तते ॥

---

१ 'स्वरितत्वम्' इति क. पाठः ॥

२ प्रत्ययस्वराद्युदात्तत्वेन तकाराकार उदात्त इति कर्तव्य शब्दो मध्योदात्तः ॥

३ ऋदृशोऽङि गुण इत्यस्यात्रोपादानं श्वयते र इत्यत्र तस्मादङ्पदस्यानुवृत्तिरित्येतद्बोधनार्थमित्यर्थः ॥

४ यद्येते परिभाषे भवतस्तदा ड्यड्ड्यतोर्ग्रहणनिवारणरूपं प्रयोजनं डित्वस्य भवतीति भावः ॥

५ तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः ६।२।२ इत्यनेनेत्यर्थः ॥

किं कारणम्? तत्र साधुरिति वर्तते । कथं च स्त्री नाम सभायां साध्वी स्यात्?

( प्रदीपः ) नैष स्त्रियामिति । शिलेव शिलेयमिति नपुंसकलिङ्ग एव शिलेयशब्दः,स्वभावात् ॥ कथं स्त्री नामेति । यज्ञसभायां विदुषामेव पुरुषाणां साधुत्वाधिकारादिति भावः ॥ ननु सभायां साधुरियं ब्राह्मणपङ्क्तिः, परिषद्वेति संभवति स्त्रियाः सभायां साधुत्वम् । एवं तर्हि च्छन्दसि सभेयशब्दस्यैवं विधायां स्त्रियां प्रयोगाभावः[1] ॥

( उद्द्योतः ) यज्ञसभायामिति । यज्ञेति प्रायश्चित्तादेरप्युपलक्षणम् । प्रायश्चित्तादिविमर्शे, याजनादौ वा विदुषामेव साधुत्वेन योग्यतयाऽधिकारादिति भावः ॥ वैदुष्यं च—उपनयनादिमतां पुंसामेवेति तात्पर्यम् ॥

( ५१४२ पूर्वपक्षवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अञ्ग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् ॥ * ॥

( भाष्यम् ) अञ्ग्रहणमनर्थकम् । किं कारणम्? तदन्ताद्धि ङीन्विधानम्-तदन्ताद्ध्यञन्ताद् ङीन् विधीयते—'शार्ङ्गरवाद्यञो ङीन्'(४।१।७३) इति ॥ न चास्ति विशेषः—अञन्ताद् ङीपो वा ङीनो वा, तदेव रूपं स एव स्वरः ॥

(प्रदीपः) अञ्ग्रहणमिति । 'शार्ङ्गरवाद्यञो ङीन्' इत्यनेनाञन्तान्ङीन्विधानाद[2]ञन्तान् ङीब्विधानमनर्थकम् । स्वरे विशेषाभावाद्—अञन्तस्याद्युदात्तत्वान् ङीपि ङीनि चाद्युदात्त[3]स्यैवावस्थानात् ॥

( उद्द्योतः ) ङीन्विधानादिति । भाष्ये हिर्हेतावित्यर्थः ।

( ५१४३ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वा जात्यधिकारात् ॥ * ॥

( भाष्यम् ) न वाऽनर्थकम् । किं कारणम्? जात्यधिकारात् । जातेरिति तत्रानुवर्तते । अजात्यर्थोऽयमारम्भः—औदपानी, औत्सी ॥ तच्चावश्यं जातिग्रहणमनुवर्त्यम् ॥

( प्रदीपः ) औत्सीति । उत्से भवेति भवादावर्थे 'उत्सादिभ्योऽञ्' इत्यञ्विधाने जातिवाचित्वाभावः[4] ॥

( उद्द्योतः ) ननु औत्स्या अपत्यार्थत्वे जातित्वमस्त्येवेत्यत आह—भवेति ॥

( ५१४४ सिद्धान्तसाधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अनधिकारे हि पुंयोगादाख्यायां[5] ङीन्प्रसङ्गः ॥ * ॥

( भाष्यम् ) अननुवर्तमाने हि जातिग्रहणे पुंयोगादाख्यायां ङीन्प्रसज्येत—बैदस्य स्त्री बैदीति ॥

( अञ्ग्रहणद्वयस्य साफल्यबोधकभाष्यम् )

यदि तर्ह्यस्य निबन्धनमस्ति, इदमेव वक्तव्यम् । तन्न वक्तव्यम् ।

तदप्यवश्यं वक्तव्यम् । अ[6]क्रियमाणे हि तस्मिन् बैदस्य भगिनी[7]—बैदी, परत्वाज्जातिलक्षणो ङीष् ङीपं बाधेत । ङीनि पुनः सति परत्वाद् ङीन् ङीषं बाधते ॥

( प्रदीपः ) बैदस्य भगिनीति । अनेन जातिवाचित्वं[8] दर्शयति । या हि बैदस्य भगिनी सा बिदस्यापत्यमिति तस्यां जातिनिमित्त एव बैदशब्दः प्रवर्तते, न पुंयोगनिमित्तः ॥ परत्वादिति । परत्वग्रहणेन बाधकत्वं लक्ष्यत इत्यपवादत्वादित्युक्तम्भवति ॥

( उद्द्योतः ) ननु भगिन्यामपि पुंयोगादेव बैदशब्दस्य वर्तनात्कथं जातित्वमत आह—अनेनेत्यादि ॥ ननु शार्ङ्गरवादिसूत्रे जातिग्रहणानुवृत्तौ निरवकाशत्वात् ङीनः कथं परत्वोक्तिरत आह—परत्वेति ॥

( ५१४५ सूत्रांशपूरकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ ख्युन उपसंख्यानम् ॥ * ॥

( भाष्यम् ) ख्युन उपसंख्यानं कर्तव्यम्—आढ्यङ्करणी, सुभगङ्करणी ।

( सूत्रांशपूरकभाष्यम् )

अ[9]ल्पमिदमुच्यते 'ख्युनः' इति—

नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम् ।

नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानं कर्तव्यम् । नञ्[10]—स्त्रैणी । स्नञ्—पौंस्नी । ईकक्—शा-

---

१ छन्दसि सभेयशब्दस्य 'सभायां साधुः' इत्यर्थे स्त्रियामप्रयोगो नास्तीति ढप्रत्ययः स्त्रियां नास्तीति सम्यगेव ॥ छन्दसि दृष्टानुविधित्वात् ॥

२ च. पुस्तके 'धानादञाऽञन्तात्' इति पाठः ॥

३ 'ङीनि चाऽऽद्युदात्तस्यै' इति च. पाठः ॥

४ अपत्यार्थे गोत्रं च चरणैः सहेति जातित्वम् । भवार्थे जातित्वाभावेन तत्सिध्यर्थमेतदित्यर्थः ॥

५ च. छ. पुस्तकयोः 'पुंयोगादाख्यायाम्' इति पाठः । वार्तिके पुंयोगादाख्यायामिति सूत्रेण ङीन्प्रसज्येतेत्यर्थः । भाष्ये तु पुंयोगाख्यायां सत्यां ङीन् इति तात्पर्यम् ॥

६ 'अनुच्यमाने' इति च. पुस्तके ॥

७ भगिनी बैदीत्यपर' इति च. पुस्तके ॥

८ भगिन्यामर्थे प्रयुज्यमानस्य बैदशब्दस्य जातिवाचकत्वमुपपादयति—या हीति ॥

९ 'अत्यल्प' इति च. छ. पाठः ॥

१० 'नञ्, स्नञ्—स्त्रैणी, पौंस्नी' इति क. पाठः ॥

क्रीकी, याष्टीकी । ख्युन्—आढ्यङ्करणी, सुभगङ्करणी । तरुण, तलुन—तरुणी, तलुनी ॥

( प्रदीपः ) ख्युन इति । सूत्रे ख्युनः[1] पाठोऽनार्षः ॥ नञ्स्नञीति । तरुणतलुनशब्दयोरवयोऽर्थं ग्रहणम्—तरुणी[2] सुरेति । प्राणिधर्मो हि वयः । गौरादिषु तरुणतलुनशब्दयोः पाठान् ङीषपि भवति । स्वरे[3] विशेषः । अथ वा वयोवाचिभ्यामपि गौरादिपाठात्परत्वान् ङीषेव स्यादिति वयोवचनावपि तरुणतलुनशब्दावुपसंख्यानं प्रयोजयतः, तत्र सामर्थ्यात् ङीब्ङीषोर्विकल्पः ॥

( उद्द्योतः ) ननु तरुण[4]तलुनयोः 'वयस्यचरमइति' ङीपः सिद्धेरुपसंख्यानं व्यर्थमत आह—तरुणेत्यादि ॥ स्वरे विशेष इति । उननन्तावाद्युदात्ताविमौ । तत्र ङीप्याद्युदात्तत्वम्, ङीषि त्वंतोदात्तत्वमिति विवेकः ॥ तरुणी सुरेत्याद्यपि वयस आरोपात्प्रयोगः स्यादत आह—अथवेति ॥

—०—

( ६२७ ङीप्विधायकसूत्रम् ॥ ४ । १ । २ आ. १० ॥ )

## १२९० यञश्च ॥ ४ । १ । १६ ॥

( ङीबधिकरणम् )

( ५१४६ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) आपत्यग्रहणं[5] कर्तव्यम्, द्वीपाद्यञः प्रतिषेधार्थम् ।

इह मा भूत्—द्वैप्येति ।

तत्तर्हि वक्तव्यम् ॥

( प्रदीपः ) आपत्यग्रहणमिति । अपत्ये भव आपत्यः[6] ॥ द्वैप्येति । द्वीपे भवेति भवादावर्थे 'द्वीपादनुसमुद्रं यञ्' इति यञ् ॥

( उद्द्योतः ) अपत्ये भव इति । स च[7] प्रतिपदोक्तपरिभाषयाऽपत्याधिकारस्थ एव गृह्यते । अत एव देवाद्यञञाविति यञि दैव्येत्यादौ न ङीप् इति बोध्यम् । अत[8] एव प्रत्याख्यानेन समफलता ॥

( समाधानभाष्यम् )

न वक्तव्यम् । नैवं विज्ञायते—कञ्क्करपो यञश्चेति ।

कथं तर्हि ?

कञ्क्करपोऽयञश्चेति ॥

( प्रदीपः ) कञ्क्करपोऽयञश्चेति । अयं संहिता[9]पाठ आर्षः । तत्र 'गर्गादिभ्यो यञ्' इत्यत्राकारप्रश्लेषादयञ्विधीयते, स एव चेहानुक्रियते । तत्राकारोऽनुनासिक इत्संज्ञकः, इह विशेषणार्थ इति यञो ग्रहणाभावाद् द्वैप्येति टावेव भवति । 'यस्कादिभ्यो गोत्रे, यञञोश्च' इत्यत्राप्यकारप्रश्लेषः ॥

अथवा[10] गोत्रग्रहणानुवृत्त्या 'गर्गादिभ्यो यञ्' इत्यस्यैव लुप्ताकारस्य निर्देशः ॥

( उद्द्योतः ) ननु विच्छिद्य पाठे दोष एवेत्यत आह—आर्ष इति । स[11] तु व्याख्यातृकल्पित इति भावः ॥ ननु अयञोऽभावात्कथं तदन्तान्ङीप्विधिरत आह—तत्रेति ॥ नन्वेवं गार्ग्यो न सिध्यतीत्यत आह—तत्राकार इति ॥ लुग्विधायके[12]ऽकारप्रश्लेषं विनाऽपि सिद्धिं दर्शयति—अथ चेति । एतेन[13] संघांकलक्षणेति व्याख्यातम्, गोत्रचरणादित्यतो गोत्रग्रहणानुवृत्तेः । तदनुबंधकपरिभाषा त्वनित्यत्वेन भाष्यप्रामाण्यान्न प्रवर्तते । गोत्रग्रहणस्य तत्रानुवृत्त्या गोत्रे तदनुबंधकयञोऽभावाच्चेति दिक् । 'अभिजित्'[14] इति यञस्तु अस्त्रियां विधानान्न तद्विषये दोषः ॥

—०—

( ६२८ ष्फविधायकसूत्रम् ॥ ४ । १ । २ आ. ११ ॥ )

## १२९१ प्राचां ष्फ तद्धितः ॥ ४।१।१७ ॥

( तद्धितष्फाधिकरणम् )

( आक्षेपभाष्यम् )

तद्धितवचनं किमर्थम् ?

---

१ वैदिकपाठे ख्युनित्यस्य सूत्रे ग्रहणम्, तत्त्वनार्षमित्यर्थः ॥

२ तरुणी सुरेत्यत्र न वयो गम्यते किन्तु सुरागुणस्य मदस्याधिक्यं बोध्यते ॥

३ ङीपि अन्तानुदात्तत्वम्, ङीषि चान्तोदात्तत्वमिति विशेषः ॥

४ तरुण तलुन शब्दयोः प्रथमवयोवाचकत्वाभावेन वयसि प्रथम इत्यस्याप्राप्त्या वयोवाचकाभ्यामप्याभ्यां सिद्धिर्न स्यादत आह—तरुणतलुनयोर्वयस्यचरम इति ॥

५ 'आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम्' इत्यादेर्वार्तिकत्वेन छ. पुस्तके पाठो न दृश्यते ॥ परंतु बहुषु पुस्तकेषु तथा पाठोपलम्भेनात्र गृहीतम् ॥

६ अपत्येऽर्थे विद्यमानाद्यञ इत्यर्थः । तेन भवादावर्थे विद्यमानाद्यञन्तान्न यञश्चेति विधानमित्यर्थः ॥

७ ननु 'दैव्या' इत्यादावप्यपत्यार्थक एव यञिति कथं न ङीप्—इत्यत आह—स चेति ॥

८ अत एव=आपत्यग्रहणेनापत्याधिकारस्थस्यैव ग्रहणादेव । वार्तिकस्य प्रत्याख्यानेन कञ्क्करपोऽयञश्चेति करणेन न फलभेदः । अन्यथाऽपत्यार्थमात्रस्य यञो ग्रहणे आरम्भप्रत्याख्यानयोः समफलता न स्यादित्यर्थः ॥

९ पाणिनिमहर्षिभिः संहितयैव सूत्राणि पठितानि, अतः स पाठ आर्ष इत्यर्थः ॥

१० यञञोश्चेत्यादौ गोत्रग्रहणानुवृत्तिं विधाय गोत्रे यो यञ इत्यर्थकरणेन भवार्थे विहितस्य यञो न ग्रहणमिति भावः ॥

११ विछिद्य पाठस्तु व्याख्यातृभिः कल्पितो नत्वार्ष इत्यर्थः ॥

१२ लुग्विधायके यञञोश्चेत्यादौ ॥

१३ एतेन=गोत्रग्रहणानुवृत्त्या गोत्रार्थक यञ इत्यर्थकरणेन ॥

१४ ननु यञश्चेत्यनेन आभिजित्यादिभ्यो ङीप् प्रसज्येतेत्यत आह—अभिजिदितीति ॥ आभिजित्यादयः शब्दाः स्त्रियां न वर्तन्त इति ङीपोऽप्राप्तिरेवेति बोध्यम् ॥

( ५१४६ प्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् ॥ * ॥

( भाष्यम् ) तद्धितवचनं क्रियते, षितः प्रातिपदिकादितीकारो[1] यथा स्यात् ॥

नैतदस्ति प्रयोजनम् ।

षित्करणसामर्थ्यादेवात्र–ईकारो भविष्यति ।

यथैव तर्हि षित्करणसामर्थ्यादप्रातिपदिकादीकारो भवति । एवं प्रातिपदिकादित्यस्यानुवर्तनसामर्थ्यादषितोऽपि प्रातिपदिकादीकारः स्यात् ॥

अस्त्यन्यत् प्रातिपदिकादित्यनुवृत्तौ प्रयोजनम् ।

किम् ?

उत्तरार्थम् । अत इञ्–दाक्षिः, प्लाक्षिः ॥

(प्रदीपः) **षित्करणसामर्थ्यादिति** । धातोः–त्रपादेः[2] षित्वमङ्विधौ चरितार्थमिति त्रपा क्षमेत्यादौ ङीष् भवति ॥ **यथैव तर्हीति** । यदि 'षिद्गौरादिभ्यश्च' इत्यत्र षित्–प्रातिपदिकशब्दयोर्विशेषणविशेष्यभावो नास्ति, तदा समुच्चयेन भाव्यमिति भावः ॥ **उत्तरार्थमिति** । अत्र त्व[3]नुवर्तनं नान्तरीयकम् । एतच्च गौरादिग्रहणाद्विज्ञायते ॥ समुच्चये गौरादिभ्यो ङीषः सिद्धत्वात् ॥ **अत इञिति** । अन्यथाऽत इति समर्थविशेषणं स्यादिति भावः ॥

( उद्योतः ) ननु षित्वसामर्थ्यादप्रातिपदिकान्ङीषि धातोरपि स्यादत आह—**धातोरिति** । धात्वर्थस्य स्त्रीत्वेनायोगः । कृदंते तु अवयवे चारितार्थ्येन समुदायोपकारकत्वे मानाभाव इति भावः ॥

**एतच्च**—अत्रानुवृत्तेर्नान्तरीयकत्वं च । यद्यपि गौरादिग्रहणमितरप्रातिपदिकव्यावृत्त्यर्थं तथाऽपि व्याख्यानात्तदसंबन्धेनैवोपपत्तौ तद्धितग्रहणं न कार्यमिति भाष्याशयः ॥ **अन्यथा**—प्रातिपदिकाधिकाराभावे ॥ **समर्थेति** । ततश्च द[4]क्षयोरपत्यमित्यत्र न स्यादिति भावः ॥

---

( ६२९ प्रत्ययविधायसूत्रम् ॥ ४ । १ । २ आ. १२ ॥ )

## १२९२ सर्वत्र लोहितादिकतन्तेभ्यः ॥ ४ । १ । १८ ॥

( 'सर्वत्र' पदकृत्यभाष्यम् )

सर्वत्रग्रहणं किमर्थम् ?

प्राचामेव हि स्यात् ।

नैतदस्ति प्रयोजनम्, सिद्धं प्राचां पूर्वेण ॥

इदं तर्हि प्रयोजनम् । सर्वेषामेव यथा स्यात्—आवट्यायनी, चापं बाधित्वा ष्फो यथा स्यात् ।

(प्रदीपः) **सिद्धमिति** । आर[5]म्भसामर्थ्यात् 'प्राचाम्'इति न संभन्त्स्यत इति भावः ॥ **सर्वेषामिति** । अपवादविषयाणामपीत्यर्थः । इ[6]हानुपयोगात् पूर्वसूत्रेण सर्वत्रग्रहणं संबध्यते । तेनावट्यायनीति प्राचां ष्फः सिद्धो भवति । अन्यथा ह्यावट्याचेति चाप्–उदीचां सावकाशः परत्वात्प्राचां ष्फं बाधेत ॥

( उद्योतः ) **अपवादेति** । बा[7]धकेत्यर्थः । परत्वाद्धि चाप् प्राप्नोति, बाधकविषयेऽपि प्राचां मते ष्फो यथा स्यादित्यर्थः ॥ अत्रत्यसर्वत्रग्रहणेन कथं तल्लाभोऽत आह—**इहेति** । सर्वत्रेत्यस्य बाधकविषयेऽपीति तत्रा[8]र्थः ॥ ननु चा[9]प्यपि लिङ्गविशिष्टपरिभाषया ष्फस्य सिद्धेः सर्वत्रग्रहणं व्यर्थमेवेति चेन्न । अत इत्यधिकारादिति दिक् ॥

( ५१४७ सूत्रांशपूरकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ लोहितादिषु शाकल्यस्योपसंख्यानम् ॥ * ॥

( भाष्यम् ) लोहितादिषु शाकल्यस्योपसंख्यानं कर्तव्यम्—शाकल्यायनी ।

यदि पुनरयं शाकलशब्दो लोहितादिषु पठ्येत ।

नैवं शक्यम् ।

इह हि शाकल्यस्य च्छात्राः शाकलाः 'कण्वादिभ्योगोत्रे' (४।२।११) इत्यण्न स्यात् ।

---

१ 'प्रादिपदिकादीकारो' इति क. च. पाठः । षिद्गौरादिभ्यश्चेत्यत्र प्रातिपदिकादित्यनुवृत्तेः षितः प्रातिपदिकादित्यर्थः स्यात्ततश्च ष्फप्रत्ययान्तस्य तद्धितान्तत्वात्प्रातिपदिकसंज्ञाऽप्यावश्यकी ॥

२ त्रपादेः=त्रपूष् लज्जायामित्यादेः षित्वं 'षिद्भिदादिभ्योऽङ्' इत्यङ् विधानेन चरितार्थमिति कृदन्तात् त्रपशब्दान्न ङीषित्यर्थः । केवलाद्धातोः स्त्रीत्वायोगान्न प्रत्ययः ॥

३ अत्र त्वनुवर्तनम्=षिद्गौरादिभ्यश्चेत्यत्र प्रातिपदिकादित्यस्यानुवृत्तिर्नात्रैवोपयुज्यते किन्तूत्तरार्थमनुवर्तमाना नान्तरीयकत्वात्संसृज्यत इत्यर्थः । यद्यत्र प्रातिपदिकादित्यस्य न विशेषणत्वं किन्तु समुच्चयस्तदा गौरादीनां ग्रहणं व्यर्थमेव स्यात्तस्मात्प्रातिपदिकादित्येतद्विशेषणमेवेति ॥

४ अत इत्येतद्विशेषणं यदि समर्थस्य स्यात्तदाऽकारान्तात्समर्थादित्यर्थः स्यात् । दक्षयोरित्यस्याकारान्तत्वाभावेन न ततः प्रत्ययः स्यादिति भावः ॥

५ सर्वत्रेति सूत्रारम्भ सामर्थ्यादत्र प्राचामिति न सम्बध्यत इति भावः । अन्यथा तेनैव सिद्धे सूत्रमिदं व्यर्थं स्यात् ॥

६ सर्वत्र लोहितेति सूत्रे सर्वत्र ग्रहणाभावेऽपि लक्ष्यदोषाऽसम्भवात्तत्पूर्वसूत्रे प्राचां ष्फ तद्धित इत्यत्र सम्बध्यते । तथा च यञन्तादावट्यशब्दात्परत्वात्प्राप्तमपि चापं बाधित्वा ष्फ एव भवति । सर्वत्रपदसम्बन्धाभावे हि चापा ष्फो बाध्येत ॥

७ तदप्राप्तियोग्येऽचरितार्थत्वरूपापवादकत्वस्वरूपाभावादाह—**बाधकेत्यर्थ** इति ॥

८ तत्रार्थः=पूर्वसूत्रे सम्बद्धस्य सर्वत्रपदस्येत्यर्थः ॥

९ ननु सर्वेषामपि स्त्रीप्रत्ययानान्द्योतकत्वेनानेकप्रत्ययोत्पत्तेरपि दोषाभावात्सर्वत्रेति व्यर्थमत आह—**ननु चाप्यपीति** ॥

( गणपाठनिश्चायकभाष्यम् )

एवं तर्हि—

**कण्वात्तु शकलः पूर्वः**

कण्वशब्दात् शकलशब्दः पूर्वः पठितव्यः ॥

**कतादुत्तर इष्यते ।**

कतशब्दात् शकलशब्द उत्तरः पठितव्यः ॥

**पूर्वोत्तरौ तदन्तादी**

पूर्वोत्तरौ गणौ तदन्तादी द्रष्टव्यौ । ये कण्वादयस्ते शकलादयः । ये कतपर्यन्तास्ते शकलपर्यन्ताः ॥

किं प्रयोजनम् ?

**ष्फाणौ तत्र प्रयोजनम् ।**

तत्रैवं सति ष्फाणौ सिद्धौ भवतः ॥

**कण्वात्तु शकलः पूर्वः**
**कतादुत्तर इष्यते ।**
**पूर्वोत्तरौ तदन्तादी**
**ष्फाणौ तत्र प्रयोजनम् ॥**

( प्रदीपः ) **कण्वात्त्विति** । गर्गादिषु कपिकत, कुरुकत, अनडुह, कण्व, शकल, इत्येवं गणसन्निवेशः । तत्रानडुद्-कुरुकतशब्दावतः स्थानादपकृष्यान्यत्र पठितव्यौ । शकलशब्दस्तु कतकण्वशब्दयोर्मध्ये पठितव्यः । कत-शकल-कण्वेति । तत्र कतस्यान्तः कतन्त इति तत्पुरुषेण शकलशब्द उच्यते । शकन्ध्वादित्वान्निपातनाद्वा पररूपत्वम् । तथा कतोऽन्तो येषां तानि कतन्तानि । तत्र बहुव्रीहितत्पुरुषयोर्बहुव्रीहिः शिष्यते, स्वरभिन्नानां यस्योत्तरस्वरविधिः स शिष्यत इति वचनात् । एवं कण्वादिभ्यो गोत्रे इत्यत्राप्येकशेषः ॥ **ष्फाणाविति** । शाकल्यायनीति क्रियमाणेन ष्फः । शाकल्यस्य छात्रा इति छापवादः 'कण्वादिभ्यो गोत्रे' इति शैषिकोऽण् भवति ॥

( उद्द्योतः ) भाष्ये—**पूर्वोत्तरौ तदंतादीति** । पूर्वो लोहितादिः शकलान्तः । उत्तरः कण्वादिः शकलादिरित्यर्थः ॥ नन्वेवमप्युपसंख्यानमावश्यकं, कतकण्वयोर्मध्ये पठितस्य शकलस्य गणद्वयादपि प्रच्युतत्वादत आह—**तत्र कतस्येति** ॥ अंतशब्दः समीपवाची, पदान्तत्वादतोगुण इत्यस्याप्राप्तेराह—**शकंध्वादीति** ॥ **स्वरभिन्नानामिति** । यद्यपीदं नपुंसकमनपुंसकेनेत्यनेनापि सिध्यति, तथाऽपि कण्वादिभ्य इत्येतत्साधारण्येनेदमेवोपन्यस्तम् ॥ **अत्राप्येकशेष इति** । षष्ठीतत्पुरुषबहुव्रीह्योरितिभावः ॥

( ६३० ष्फविधिसूत्रम् ॥ ४ । १ । २ आ. १३ ॥ )

## १२९३ कौरव्यमाण्डूकाभ्यां च ॥ ४ । १ । १९ ॥

( ५१४८ सूत्रांशपूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **कौरव्यमाण्डूकयोरासुरेरुपसंख्यानं कर्तव्यम्—आसुरायणी ।**

(प्रदीपः) **आसुरायणीति** । 'प्राचां ष्फ तद्धितः' इत्यत्र सूत्रपाठापेक्षया तद्धितग्रहणं प्रत्याख्यातम्[1] । आसुरिशब्दात्तु ष्फस्य तद्धितसंज्ञाप्रयोजनमिकारलोपः, अकारान्तात्तु ष्फे सवर्णदीर्घत्वेनापि रूपं सिध्यति ॥

( उद्द्योतः ) ननु पूर्वत्र तद्धितग्रहणप्रत्याख्यानात्कथमासुरायणीत्यत्र यस्येतिलोपोऽत आह—**सूत्रपाठेति** । एवं च तद्धितग्रहणमेवैतदर्थस्य[2][3] ज्ञापकमित्यर्थः ।

( ५१४९ सूत्रांशपूरकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ छश्च ॥ * ॥**

(भाष्यम्) **छश्चेति वक्तव्यम्—आसुरीयः कल्पः ॥**

( प्रदीपः ) **आसुरीय इति** । आसुरिणा प्रोक्त इति शेषेऽर्थे छापवादे 'इञश्च' इत्यणि प्राप्ते छस्य प्रतिप्रसव इहैव लाघवार्थं क्रियते । अन्यथा द्विरासुरिग्रहणं कर्तव्यं स्यात्[4] ॥

( उद्द्योतः ) **शेषेऽर्थे इति** । इदं[5] च भाष्योदाहरणस्थ 'कल्प' पदाज्ज्ञायते ॥ ननु[6] प्रतिप्रसवस्येह का संगतिरत आह—**इहैवेति** ॥ लाघवमेव दर्शयति—**अन्यथेति** ।

( ६३१ ङीप् विधिसूत्रम् ॥ ४ । १ । २ आ. १४ ॥ )

## १२९४ वयसि प्रथमे ॥ ४ । १ । २० ॥

( ५१५० सूत्रार्थसाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वयस्य[7] चरमे ॥ * ॥**

( भाष्यम् ) **वयस्यचरम इति वक्तव्यम् । इहापि यथा स्यात्—वधूटी, चिरण्टीति ।**

( प्रदीपः ) **वयस्यचरम इति** । ये त्रीणि वयांसीच्छन्ति—कौमारयौवनस्थाविराणि, तन्मतेनेदं वक्तव्यम् । वधूटचिरण्टशब्दयोर्द्वितीयवयोवचनत्वात् । यदा तु द्वे एव वयसी

१ तद्धितग्रहणं उत्तरस्मिन् सूत्रे सम्बन्धार्थमावश्यकमस्मिन् सूत्रे नान्तरीयकत्वादेवान्वेति, न तु तस्यात्रोपयोग इति भावः ॥

२ नान्तरीयकत्वात्सम्बध्यमानं तद्धितग्रहणमासुरिशब्दात्ष्फं ज्ञापयतीत्यर्थः । इकारलोपार्थं तद्धितग्रहणमावश्यकमिति भावः ॥

३ एतदर्थस्य=आसुरिशब्दात्ष्फस्य ॥

४ द्विरासुरिग्रहणमिति । वृद्धाच्छ इत्यत्रास्य चेत्यर्थः ॥

५ ननु 'छश्च' इति वार्तिकस्य आसुरिशब्दात्स्त्रियां छ इत्येवार्थः स्यान्न तु शैषेऽर्थे छ इति कथमेतत्तदाह—इदं चेति ॥

६ ननु 'छश्च' इति वार्तिकं वृद्धाच्छ इत्यत्रैव वक्तव्यं स्त्रीप्रत्ययप्रकरणेऽस्यानुपयोगादत आह—ननु छेति ॥

७ इदानींतन पाठे 'वयस्य चरमे' इत्यस्य वार्तिकत्वेन पाठो नोपलभ्यते । परंतु उद्योतकारस्य वार्तिकसम्मतत्वादित्यादिकथनेन वार्तिकमेतदिति ज्ञायते ॥

उपचय[1]ापचयलक्षणे इति दर्शनम्, तदेतन्न वक्तव्यम् । यौवनस्यापि प्रथमवयोरूपत्वात् ॥

(उद्योतः) ये त्रीणीति । वार्तिक[2]संमतत्वादिदमेव युक्तम् ॥

(अतिव्याप्तिनिरासभाष्यम्)

**इह कस्मान्न भवति—उत्तान[3]शया, लोहितपादिका, द्विवर्षा, त्रिवर्षेति ।**

**नैतानि वयोवाचीनि ॥**

**कथं तर्हि वयो गम्यते ?**

**संबन्धाद् ॥**

(प्रदीपः) **उत्तानशयेति** । एते हि शब्दाः प्रथमवयोविषयाः प्रयुज्यन्त इति भावः ॥ **नैतानीति** । नैषां[4] वयः प्रवृत्तिनिमित्तमित्यर्थः ॥ **संबन्धादिति** । विशेषण[5]विशेष्यभावलक्षणादित्यर्थः । ततश्च बहिरङ्ग[6]त्वाद्वयःप्रतीतेर्ङीप्न भवति ॥

(उद्योतः) ननु वयोविषयत्वेन वयोबोधकतया नैतानि वयोवाचीनि—इत्ययुक्तमत आह—**नैषामिति** । बाल्ययौवनस्थाविररूपं वयो नैषां प्रवृत्तिनिमित्तमिति भावः ॥ एतै[7]च्छब्दप्रतिपाद्यक्रियाकारकादिसम्बन्धाद्वयसोऽप्रतीतेराह—**विशेषणेति** । प्रकारणादिसापेक्षावधारणादिगर्भविशेषणविशेष्यभावादित्यर्थः । सर्वाऽपि कदाचिदुत्ताना शेत इति सामर्थ्यात् उत्तानैव शेत इत्यवधारणमाश्रीयते । तत्र प्रकरणाद्धि वृद्धत्वाभावे निश्चिते बालेति गम्यत इति तात्पर्यम् ॥ नन्वेवं वयोऽवगतौ ङीप् स्यादेवेत्यत आह—**ततश्चेति** ॥

(अव्याप्तिनिरासभाष्यम्)

**यदि तर्हि यत्र सम्बन्धाद्वयो गम्यते तत्र न भवति[8]-इति-इहापि न प्राप्नोति—कुमारीति ॥**

**अत्रापि हि सम्बन्धाद्वयो गम्यते ।**

**कोऽसौ सम्बन्धः ?**

**योऽसौ पुंसा[9] सहासंप्रयोगः ॥**

(प्रदीपः) **कुमारीति** । पुंसा सहासंप्रयोगोऽस्य प्रवृत्तिनिमित्तम्, न तु प्रथमं वयः । तथा च वृद्धकुमारीति प्रयोगः । पाणिगृहीती तु प्रथमवया अपि कुमारीशब्देन नोच्यत इति भावः ॥

(उद्योतः) भाष्ये—अत्रापि हि संबन्धादिति । पुरुषा॰संप्रयोगसंबन्धादिति भावः ॥

(विवरणभाष्यम्)

**सम्बन्धादेवात्र[10] वयो गम्यते ॥**

**इह[11] पुनः सम्बन्धसम्बन्धात् ।**

**इह तावत्—उत्तानशयेति—**

**यदा कर्तृत्वं विशेषितं[12] भवति तत उत्तरकालं वयो गम्यते ॥**

**लोहितपादिकेति—**

**यदा बहुव्रीह्यर्थो[13] विशेषितः तत, उत्तरकालं वयो गम्यते ॥**

**द्विवर्षा त्रिवर्षेति—**

**यदा द्विग्वर्थो[14] विशेषितः, तत उत्तरकालं वयो गम्यते ॥**

(प्रदीपः) **सम्बन्धादेवेति** । औत्पत्तिकाद्वाच्यवाचकभावलक्षणात्संबन्धादित्यर्थः । कुमारशब्दस्य हि प्रथमं वयः प्रवृत्तिनिमित्तम्, साहचर्यात्तु[15] पुंसा सहासंप्रयोगमुपादाय वृद्धायां गौणः कुमारीशब्दः प्रयुज्यते ॥ **सम्बन्धादिति** । कर्तृमात्रादेरभिधेयस्य शब्दसंबन्धस्य प्रमाणान्तरावगतेन[16] विशेषणेन संबन्धादित्यर्थः ॥ **कर्तृत्वमिति** । उत्तानशया-इति शेतिक्रियायाः कर्त्री शब्दार्थः । यदा तु प्रकरणादिवशात्प्रथमवयो-

---

१ यावदुपचयस्तावदेकं वयः, यतश्चापचयस्ततोऽपरमिति व्याख्यायां वधूटचिरण्टयोरपि यौवनवाचकत्वेनोपचयरूपत्वात्प्रथमवयोवाचकत्वमेवेति तत्सिध्यर्थमचरमेति न वक्तव्यमिति भावः ॥

२ 'वयस्य चरम इति वक्तव्यम्' इति वार्तिकसम्मतत्वादिति भावः ॥

३ उत्तानशयादिशब्दैरवस्थाविशेषोबोध्यते, ततश्च वयसः प्रतीतिर्वक्तृतात्पर्यानुरोधात् । तेन च कदाचिदत्यन्तं वृद्धाया अपि बोधः स्यात्, कदाचिच्च बालाया अपीति प्रथमवयो वाचकत्वस्यापि सम्भवेन सूत्रस्य प्राप्तिमाशङ्कते ॥

४ 'नैतेषां' इति ख. घ. ङ. पाठः । उत्तानशयादिशब्दैर्वयो बोध्यते, उत्तानशयत्वस्य बाल्यविषयत्वात्, न तु वयस्तेषाम्प्रवृत्तिनिमित्तमिति भावः ॥

५ उत्तानशयादिशब्दैर्यदि 'उत्तानशया बाला' इत्यादि विशेष्यविशेषणवाचकपदप्रयोगः क्रियते, अथवा विशेष्यविशेषणभावः प्रकरणादिवशाद्विज्ञायते; तदा वयसः प्रतीतिः—इति विशेष्यविशेषणभावरूपात्सम्बन्धात्तज्ज्ञायत इत्यर्थः ॥

६ उत्तानशयादिशब्दैः पूर्वं वयसोऽप्रतीतिरिति वयसि प्रथम इत्यस्याप्राप्तावन्तरङ्गत्वात्पूर्वोपस्थितिकत्वरूपाट्टापि न बहिरङ्गो ङीबित्यर्थः ॥

७ 'उत्ताना शेते, लोहितौ पादौ यस्याः सन्ति' इत्यादि शब्दैः प्रतिपादिताक्रियाकारकादिसम्बन्धाद्वयसोऽप्रतीतिरित्यर्थः ॥

८ 'भवतीहापि न' इति छ. पुस्तके ॥

९ 'पुंसाऽसंप्रयोगः' इति छ. पाठः ॥

१० अत्र=कुमारीशब्दे साक्षात्सम्बन्धाद्वाच्यवाचकभावरूपाद्वयो गम्यत इत्यर्थः ॥

११ इह=उत्तानशयेत्यादौ क्रियाकारकभाव सम्बन्धज्ञानानन्तरम्प्रकरणादिना वयसः प्रतीतिरित्येषां शब्दानां साक्षाद्वाच्यं वयो नास्तीत्यर्थः ॥

१२ प्रतीयमानवयोरूपार्थस्य विशेष्यं कर्तृत्वम्भवतीत्यर्थः ॥

१३ प्रकरणादिना प्रतीयमानोऽर्थो यो वयोरूपस्तस्य विशेष्यम्बहुव्रीहिणा वाच्योऽर्थोऽन्यपदार्थो भवति तदेत्यर्थः ॥

१४ द्विग्वर्थो वर्षद्वयभूतारूपः प्रकरणादिना प्रतीयमानवयोरूपार्थस्यविशेष्यमित्यर्थः ॥

१५ ननु वृद्धायामपि वृद्धकुमारीति शब्दः प्रयुज्यत इति कुमारशब्दस्य न वयोवाचकत्वमित्यत आह—साहचर्यात्त्विति । कुमारीशब्दो वयोवाचक एव, वृद्धायां कुमारीशब्दस्य प्रयोगस्तु सिंहो माणवकेत्यादौ यथा क्रौर्यादिरूपसम्बन्धात्सिंहत्वमारोप्यते माणवके तद्वदत्रापि पुंसाऽसम्प्रयोगरूपसम्बन्धात्कुमारत्वं वृद्धायामारोप्यत इति भावः ॥

१६ उत्तानशयेत्यादौ उत्तानशयनक्रियाकर्त्रीत्वम्प्रथमतो भासते, ततश्च सा कर्त्री बालेति प्रकरणादिना गम्यत इति 'प्रथमवयोविशिष्टा शयनकर्त्री' इत्येवम्प्रकारको बोधः प्रथमवयोरूपार्थविशेषणक इत्यर्थः ॥

विशिष्टा कर्त्री प्रतीयते तदा प्रथमवयोविषयत्वं बहिरङ्गमित्यर्थः ॥ **लोहितपादकेति** । अत्राप्यन्यपदार्थमात्रं शब्दार्थः । विशेषप्रतिपत्तिः प्रकरणायत्ता ॥ **द्विवर्षेति** । द्वे वर्षे भूतेति ठञो 'वर्षाल्लुक्' चित्तवति नित्यम्' इति लुक् । अत्रापि परिमाणमात्रं शब्दार्थः, शालादावपि प्रयोगाद् । वयःप्रतिपत्तिस्तु प्रमाणान्तरनिबन्धना ॥

( उद्योतः ) **औत्पत्तिकादिति** । स्वाभाविकादित्यर्थः । स हि साक्षात्सम्बन्धः ॥ **प्रथमं वय इति** । पुंसि[3] तस्यैव प्रवृत्तिनिमित्तत्वेन स्त्रियामपि तदेवेति भावः ॥ **साहचर्यादिति** । यस्याः प्रथमं वयस्तस्याः पुंसाऽसंप्रयोग इति सम्बन्धादित्यर्थः ॥ **शब्दसंबन्धस्येति** । शब्देन संबन्धो यस्येति बहुव्रीहिः ॥ **प्रमाणान्तरं**=प्रकरणादि ॥ **विशेषणेनेति** । प्रकरणादिना प्रथमवयोविशिष्टायाः कर्त्रीत्वप्रतीतिरिति प्रकरणादिप्राप्तप्रथमवयोरूपेण विशेषणेन सम्बन्धादित्यर्थः ॥ **विशेषेति** । स्वभावत एवास्याः पादौ रक्तौ नालक्तकादिनेत्येवं गृहीतौ तौ, बालेति गम्यत इत्यर्थः ॥ भाष्ये—**यदा कर्तृत्वमित्यादि** । प्रत्ययार्थौ यदोपपदार्थधात्वर्थाभ्यां विशेषितस्तदा तद्विशेषणकप्रत्ययार्थस्य सामान्यतो बोधोत्तरं प्रकरणादितो वयः प्रतीतिरित्यर्थः ॥ उत्तानशयननिरूपितकर्तृत्ववतीति बोधादिति भावः । एवं बहुव्रीह्यर्थोऽन्यपदार्थौ वर्तिपदार्थविशेषणकः प्रथमं बुध्यते, ततोऽनन्तरं प्रकरणादितः स्वाभाविकरक्तपादत्ववती बालेति विशेषप्रतीतिरिति ॥ **द्विगवर्थ** इत्यस्य द्विगुनिमित्तप्रत्ययार्थे इत्यर्थः ॥ **प्रमाणान्तरं**=प्रकरणादि ॥

( अतिव्याप्तिनिरासभाष्यम् )

**यदि तर्हि यत्र सम्बन्धादेव वयो गम्यते तत्र भवति-इति-इहापि प्राप्नोति—कन्येति ।**

**निपातनादेतत्सिद्धम् ॥**

**किं निपातनम् ?**

**'कन्यायाः कनीन च' ( ४।१।११६ ) इति ॥**

( ६३२ ङीप्प्रतिषेधसूत्रम् ॥ ४ । १ । २ आ. १५ )

## १२९४ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ॥ ४।१।२२ ॥

( निषेधाधिकरणम् )

( योगविभागेन सूत्रांशप्रत्याख्यानभाष्यम् )

**ईमौ द्वौ प्रतिषेधावुच्येते, तत्रैकः शक्योऽवक्तुम् । कथम् ?**

**एवं वक्ष्यामि—परिमाणान्तात्तद्धितलुकि ङीब्भवतीति ।**

**तन्नियमार्थं भविष्यति—परिमाणान्तादेव तद्धितलुकि ङीब् भवति, नान्यत इति ॥**

**ततो बिस्ताचितकम्बल्येभ्यो नेति । तद्धितलुकीत्येव ॥**

( प्रदीपः ) **परिमाणान्तादेवेति** । तद्धितलुक्येवेत्येष तु विपरीतनियमो न भवति, लक्ष्यानुसारित्वाल्लक्षणस्य । तेन तद्धितलुकि समाहारे च द्व्याढकीति ङीब् भवति, पञ्चभिरश्वैः क्रीता पञ्चाश्वेत्यादौ न भवति । बिस्तादीनां परिमाणवाचित्वात्प्रतिषेधो विधेयः ॥

( उद्योतः ) **तद्धितलुक्येवेति** । एवं हि समाहारे न स्यादिति भावः । 'आगन्तूनामन्ते निवेशः' इति न्यायेन सैं एवोचित इति तात्पर्यम् ॥ **द्व्याढकीति** । द्वाभ्यामाढकाभ्यां क्रीतेति, द्वयोराढकयोः समाहार इति चार्थः ॥ **परिमाणवाचित्वादिति** । बिस्तादीनां पृथग्ग्रहणादेवात्र परिमाणशब्देनोन्मानमपि गृह्यत इति भावः । बिस्तादयः परिमाणविशेषा अपीत्याशय इत्यन्ये ॥

( ६३३ प्रत्ययविधिसूत्रम् ॥ ४ । १ । २ आ. १६ )

## १२९५ बहुव्रीहेरूधसो ङीष् ॥ ४ । १ । २५ ॥

( ङीषधिकरणम् )

( ५१५१ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ऊधसो नकारो लिङ्गाधिकारे ॥ * ॥**

( भाष्यम् ) **ऊधसो नकारो लिङ्गाधिकारे वक्तव्यः । इह मा भूत्—महोधाः पर्जन्य इति ॥**

( प्रदीपः ) **ऊधस इति** । 'ऊधसोऽनङ्' इति समासान्तप्रकरणे सूत्रमकृत्वा 'बहुव्रीहेरूधसो ङीष् नश्च' इति वक्त-

१ उत्तानशयनकर्त्र्याः प्रथमत उत्तानशयादिशब्दाद्बोधे तत्र स्त्रीत्वस्यापि सत्त्वेनान्तरङ्गत्वाट्टापि पश्चात्प्रतीयमानात्प्रथमवयोविशिष्टरूपार्थात् 'वयसि प्रथमे' इत्यस्य प्राप्तिसम्भावनायामपि अकारान्तत्वाभावान्न ङीप्, स्त्रीत्वोपस्थितिकत्वरूपादन्तरङ्गत्वाट्टापो जायमानत्वात् ॥

२ शब्दार्थः=शब्दशक्यः ॥

३ ननु भाष्यकृता कुमारीशब्दाद्वयसः प्रतिपत्तिरित्युक्तम्, प्रदीपे तु 'कुमार शब्दस्य' इत्यादिना पुंलिंगविषयकमुत्तरमयुक्तम्प्रतिभासत इत्यत आह—पुंसीति ॥

४ शब्दसंबन्ध इत्यत्र तत्पुरुषभ्रमवारणायाह—शब्देनेति । तत्पुरुषसमास आश्रीयमाणे हि कर्तृरूपार्थस्य सम्बन्धत्वप्रतीतिः स्यात्, तच्च नोपपद्यत इत्यतो बहुव्रीहिमाहेत्यर्थः ॥

५ 'प्रकरणात्प्राप्त' इति ख. घ. पुस्तकयोः पाठः ॥

६ विशेषेत्यादि गम्यत इत्यर्थ इत्यन्तो ग्रन्थो ध. पुस्तक एव दृश्यते ॥

७ च. पुस्तके 'तत्र भवितव्यम् । इह' इति पाठः ॥

८ अस्मिन् सूत्रे नञ्द्वयं दृश्यते, तत्रैको नञ् शक्योऽवक्तुमित्यर्थः ॥

९ परिमाणान्तान्ङीप् भवति चेत्तद्धितलुक्येवेति नियमे आश्रिते द्व्याढकीत्यादौ समाहारेऽपीष्टो ङीप् न स्यात्, पञ्चाश्वेत्यादौ च स्यादित्यनिष्टापत्तिनिवरणार्थं लक्ष्यानुरोधात्परिमाणान्तादेव तद्धितलुकीति नियम आश्रयणीय इति भावः ॥

१० आगन्तुत्वेन प्राप्तस्यैवकारस्यान्ते निवेश इति 'परिमाणान्तात्तद्धित लुक्येव' इति नियमो न्यायतः प्राप्तः परंतु लक्ष्यानुरोधात्तथा नाश्रीयत इत्यर्थः ॥

११ विपरीतनियमाश्रयणे द्वयोराढकयोः समाहार इत्यर्थे द्व्याढकीति न स्यात्तदर्थमपि नियमोऽयमाश्रयणीय इत्यर्थः ॥

१२ ननु बिस्तादिशब्दानां ग्रहणं व्यर्थम्, तेषामपरिमाणवाचकत्वाभावेन दोषाभावादित्यत आह—बिस्तादीनामिति ॥

व्यम्। तत्र 'अलोन्त्यस्य' इत्यन्त्यस्य नकारो ङीष्प्रत्ययश्च स्त्रियां भवतीत्यर्थो भवति। 'धनुषोऽनङ्' इति समासान्तेषु पठितव्यम् एवं च महोधाः पर्जन्यः, कुण्डोधो धैनुकमित्यनङ् न भवति ॥

( उद्द्योतः ) ननु लिङ्गाधिकारे नकारे क्रियमाणे 'महोधाः' इत्यादावूधसोऽनङ् दुर्वारोऽत आह—**ऊधसोऽनङिति** ॥ **नश्चेति वक्तव्यमिति** । न चैवमनो लाक्षणिकत्वादल्लोपानापत्तिः । अर्थवत्परिभाषावत्—अनुग्रहणे लक्षणप्रतिपदोक्तपरिभाषाया अप्यप्रवृत्तेः; एतद्भाष्यप्रामाण्यादेव। अनङादे[2]ङित्वं हलन्तेभ्य आचारक्विबभावान्नाचारक्विबन्ते आत्मनेपदप्रयोजकमिति बोध्यम् ॥ ननु अत्रै[3] पाठे 'धनुषश्च' इत्यनङ् न लभ्येतेत्यत आह—**धनुष इति** ॥

( ५१५२ सिद्धान्तवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा समासान्ताधिकारे स्त्रीग्रहणात् ॥ * ॥**

( भाष्यम् ) **न वा लिङ्गाधिकारे नकारः कर्तव्यः ।**

**किं कारणम् ?**

**समासान्ताधिकारे स्त्रीग्रहणात्—समासान्ताधिकार एव स्त्रीग्रहणं कर्तव्यम् ॥**

( प्रदीपः ) **न वेति** । समासान्तप्रकरण एव 'ऊधसोऽनङ् स्त्रियाम्' इति वक्तव्यम् । तत्रै[4]वावश्यं कर्तव्यम्—कप्समासान्तनिवृत्त्यर्थमित्यर्थः ॥

( उद्द्योतः ) कप्समासान्तेति । कप्रूपसमासा[5]न्तेत्यर्थः ॥

( ५१५३ सिद्धान्तसाधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ इतरथा हि कब्विधिप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **इतरथा हि कब्विधिः प्रसज्येत ॥**

**कस्यां पुनरवस्थायां कप्प्राप्नोति ?**

**प्राक् ङीषुत्पत्तेः ॥**

**प्राक्तावन्न प्राप्नोति ।**

**किं कारणम् ?**

**न हि ङीष्विभाषा ॥**

**उत्पन्ने तर्हि ङीषि प्राप्नोति ॥**

**उत्पन्ने चापि न प्राप्नोति ।**

**किं कारणम् ?**

**नद्यन्तानां यो बहुव्रीहिरित्येवं तत् । न चैष नद्यन्तानां बहुव्रीहिः ॥**

**प्रागेव तर्हि प्राप्नोति ।**

**ननु चोक्तं न हि ङीष्विभाषेति ।**

**यद्यपि न ङीष्विभाषा, कप् तु विभाषा ॥**

**कपोऽवकाशः—अन्यो बहुव्रीहिः—अयवकः, अव्रीहिकः ।**

**ङीषोऽवकाशः—विभाषा कब्, यदा न कप् सोऽवकाशः—कुण्डोध्नी, घटोध्नी ।**

**कप्प्रसङ्ग उभयं प्राप्नोति, परत्वात्कप्स्यात् ।**

( प्रदीपः ) **कस्यां पुनरिति** । द्वावप्य[10]त्र कपौ—नदीलक्षणो नित्यः, शेषलक्षणो विकल्पितश्च; तत्र कस्य प्रसङ्ग इति प्रश्नः ॥ **प्रागिति** । शेष[11]लक्षण इत्यर्थः ॥ **न हि ङीषिति** । यद्यत्र कप्स्याद्, ङीष्विधानमनवकाशं स्यादिति भावः । द्वयोस्तु विकल्पे सति परस्परपरिहारेण प्रवर्तनान्नास्ति ङीषोऽनवकाशत्वम् **उत्पन्न इति** । नदीलक्षण इत्यर्थः ॥

( उद्द्योतः ) **द्वावत्रेति** । अवस्थाप्रश्नद्वारेण कप्विशेषविषयः प्रश्न इति भावः ॥ **अनवकाशं स्यादिति** । वाक्यावस्थायां कपः प्रवृत्त्या तदंतस्यैव बहुव्रीहित्वादूधोन्तबहुव्रीहेरभाव इतिभावः ॥ **ननु न हि** सावकाशो ङीषिति वक्तव्ये न हि ङीष्विभाषेति कुत उक्तमत आह—**द्वयोस्त्विति** ॥ **नदीलक्षण इति** । न[12]नु ङीषि कृते तदन्तस्य

---

१ स्त्रियामित्यधिकारे 'बहुव्रीहेरूधसो ङीष् नश्च' इति क्रियमाणे 'ऊधसोऽनङ्' इत्यत्र 'स्त्रियाम्' इति न वक्तव्यम्, तथा च महोधा इत्यादौ दोष इति भावः ॥

२ अनङः प्रत्ययाधिकारपठितत्वेन प्रत्ययत्वं माभूदिति ङित् करणं कृतम्, ततश्च ङित्वसामर्थ्यादयमादेश इति सिद्धम् ॥ अत्र केचित् 'एतद्भाष्यप्रामाण्यादेव' इति हेतुं हलन्तेभ्य आचारक्विबित्यत्रोपयोक्ष्यन्ते । तत्तुच्छम् । हलन्तेभ्य आचारक्विबभावानाश्रयणेऽपि अस्य भाष्यस्य वैयर्थ्यं नापद्येतेति न तद्भाष्यमत्रार्थे प्रमाणं भवितुमर्हतीति भावः । अत्र ख. ग. घ. पुस्तकेषु 'नङादेः' इत्ययमेव पाठ उपलभ्यते, तथापि 'नङ्' रूपस्य क्वाप्यनुक्तत्वेन 'अनङ्' अस्माभिराश्रित इति सुधियोऽत्र विभावयन्तु ॥

३ अत्रैव 'बहुव्रीहे रूधसो ङीष्' इत्यत्रैव नकारस्य पाठे 'ऊधसोऽनङ्' इत्यस्य निष्फलत्वेन त्यागे चेति शेषः । एवञ्चात्र नकारपाठेन 'ऊधसोऽनङ्' 'स्त्रियां च' इत्येतन्न वक्तव्यं भवतीति लाघवमिति भावः ॥

४ 'ऊधसोऽनङ्' इति गुरुतरसूत्रकरणेनापि नकारादेशप्रत्याख्याने बीजमाह—तत्रैवेति । रूपसिद्धावपि समासान्तप्रत्ययेन कपाऽनिष्टापत्तिः स्यात् । समासान्तप्रकरणे क्रियमाणस्य चानङः कप्प्रत्ययबाधकत्वेनेष्टसिद्धिरिति भावः ॥

५ 'समासान्त इत्यर्थः' इति घ. पाठः ॥

६ ननु ऊधोन्ताद्बहुव्रीहेरनङादेशाभावेऽपि नकारादेशसन्नियोगेन ङीष् भवति, ततश्च समासान्तप्रत्ययस्यानुपपत्तिरेव, समासान्तप्रत्ययस्य समाससंज्ञातः प्राक् जायमानत्वात् । यदि च नकारादेशात्प्रागेव समासान्त इति मन्यते तदोधश्शब्दान्तत्वाभावादेव तस्याप्राप्तेः स बाधको भवितुमर्हतीत्येद्विवृणोति—कस्यां पुनरिति ॥

७ 'न भवितव्यम्' इति च. पाठः ॥

८ 'नद्यृतश्च' इत्यस्य नद्यन्तोत्तरपदाद्बहुव्रीहेः कबित्यर्थः । तथा चात्र बहुव्रीहेर्ङीषुत्पत्तेर्नद्यन्तोत्तरपदकत्वस्बहुव्रीहौ न सम्भवतीति नद्यृतश्चेत्यस्याप्राप्तिरिति भावः ॥

९ 'त्येवं सः' इति च. पाठः ॥

१० 'द्वावत्र' इति क. पाठः ॥

११ ङीषुत्पत्तेः प्राक् नद्यृतश्चेत्यस्य प्राप्तिसम्भावनाऽपि नेति शेषाद्विभाषेत्यस्यैव ङीषः प्राक् प्राप्तिरित्यर्थः ॥

१२ ननु 'उत्पन्ने तर्हि ङीषि प्राप्नोति' इति भाष्यस्य—ऊधोन्ताद्बहुव्रीहेर्ङीषि प्रातिपदिकग्रहणपरिभाषया ङीषन्ते बहुव्रीहित्वमाश्रित्य समासान्तप्रत्ययः स्यादित्याशयः । स च नोपपद्यते । समासान्त विधावस्याः परिभाषाया अप्रवृत्तिकथनात् । एवञ्चानुपपन्नमेतदित्याशयेनाह—ननु ङीषि कृत इत्यादि ॥

बहुव्रीहित्वाभावात् बहुव्रीह्यर्थक[1]वाक्यत्वाभावाच्च नैवं[2]तबहुव्रीहेः कवित्यर्थेऽपि कथं तत्प्राप्तिः? न च लिङ्गविशिष्टपरिभाषया तत्प्राप्तिः, तया च परिभाषया स्त्रीप्रत्ययसमभिव्याहारे प्रातिपदिकत्व[3]-तद्व्याप्यधर्माणां लिंगप्रत्ययविशिष्टेऽतिदेशो बोध्यत इति वाच्यम् । समासान्तविधौ लिङ्गविशिष्टपरिभाषा नेति 'ङ्याप्प्रातिपदिकात्' इति सूत्रे भाष्य उक्तत्वेनात्र तदप्राप्तेरिति चेन्न। तदनभ्युपगमेनैव[4] पूर्वपक्षिणा प्राप्त्युद्भावनात् । समासान्त[5]विधाववयवग्रहण एव दोष इत्यत्रैव तद्भाष्यतात्पर्याच्च । समाससमुदायग्रहणे तत्प्रवृत्त्यप्रवृत्त्योः फले विशेषाभावाच्च ॥ भाष्ये—नद्यन्तानामिति । नद्यन्तप्रकृतिकसुबन्तोत्तरपद इति भावः । अत एव करभोरूरित्यत्र न नित्यः कप् ॥ भाष्ये—परत्वादिति । उत्कृष्ट[6]त्वादन्तरङ्गत्वादित्यर्थः ॥

( सिद्धान्तभाष्यम् )

**तस्मात्सुष्ठूच्यते—न वा समासान्ताधिकारे स्त्रीग्रहणादितरथा हि कब्विधिप्रसङ्ग इति ॥**

( ६३४ ङीप्विधिसूत्रम् ॥ ४ । १ । २ आ. १७ ॥ )

## १२९६ दामहायनान्ताच्च ॥ ४।१।२७ ॥

( ङीबधिकरणम् )

( ५१५४ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ दामहायनान्तात्संख्याऽऽदेः ॥ * ॥**

( भाष्यम् ) **दामहायनान्तात्सङ्ख्याऽऽदेरिति वक्तव्यम् ।**

**इह मा भूत्—उद्दामा वडवेति ॥**

( प्रदीपः ) **संख्याऽऽदेरिति** । संख्याऽव्यययोर्द्वन्द्वनिर्देशादेकदेशानुवृत्तिरलैभ्येति भावः ॥

( ५१५५ एकदेशिसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्पुरुषविज्ञानाद्वा सिद्धम् ॥ * ॥**

( भाष्यम् ) **बहुव्रीहेरिति वर्तते । तत्पुरुषश्चायम्—उत्क्रान्ता दाम्न उद्दामेति ॥**

**भवेत्सिद्धम्—यदा तत्पुरुषः ॥**

**यदा तु खलु बहुव्रीहिस्तदा न सिध्यति—उत्क्रान्तं दाम अस्या इति ।**

( एकदेश्याक्षेपसमाधानभाष्यम् )

**ननु चेतनावत एतद्भवति—उत्क्रमणं वाऽपक्रमणं वा, दाम चाचेतनम् ॥**

**अचेतनेष्वपि चेतनवदुपचारो दृश्यते । तद्यथा—स्रस्तान्यस्या बन्धनानि, स्रस्यन्तेऽस्या बन्धनानीति ॥**

( प्रदीपः ) **चेतनावत इति** । लोकव्यवहारे—उत्क्रमणादौ चेतनस्यैव कर्तृत्वेन प्रसिद्धत्वान्न हि घट उत्क्रामतीति प्रसिद्धिरिति भावः ॥ **अचेतनेष्वपीति** । देशान्तरप्राप्तिरचेतनानामपि दृश्यत इत्यर्थः ॥

( उद्योतः ) **न हि घट इति** । फलानुकूलत्वेन कृतेरपि सर्वधात्वर्थत्वादिति भावः ॥ भाष्ये—**अचेतनेष्वपीति** । कृत्यारोपेण प्रयोग इति भावः । एवमेव रथो गच्छतीत्याद्युपपत्तिः ॥

( सिद्धान्तभाष्यम् )

**तर्हि संख्यादेरिति वक्तव्यम् ?**

**न वक्तव्यम्, प्रकृतमनुवर्तते ॥**

**क्व प्रकृतम् ?**

**'संख्याऽव्ययादेर्ङीप्' ( ४।१।२६ ) इति ॥**

**यदि तदनुवर्तते, अव्ययादेरपि प्राप्नोति ।**

**नैष दोषः ।**

**संख्यादेरित्यनुवर्तते, अव्ययादेरितिनिवृत्तम् ॥**

( परिभाषामुखेन सिद्धान्तभाष्यम् )

**कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तते, एकदेशो न ?**

**एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति ।**

**तद्यथा—'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ' (५।२।२४) 'पक्षात्तिः' (२५) इत्यत्र मूल इत्यनुवर्तते, पाक इति निवृत्तम् ॥**

( प्रदीपः ) **एकयोगेति** । शब्दानुमानपक्षे यस्यैव शब्दस्य स्वरितत्त्वं प्रतिज्ञायते, स एवानुवर्तते । अर्थानुमानपक्षे तु द्वन्द्वार्थस्यैकत्वादनुवृत्तिः स्यात् ॥

---

१ ननु समासान्तः प्रत्ययः समासार्थवाक्य एव क्रियत इति ङीबन्तस्य बहुव्रीहित्वाभावेऽपि न दोष इत्यत आह—बहुव्रीह्यर्थक इति ॥

२ नद्यृतश्चेत्यस्य नद्यन्ताद्बहुव्रीहेः कवित्यर्थकरणेऽपि । सिद्धान्ते नद्यन्तोत्तरपदाद्बहुव्रीहेरित्यर्थ आश्रीयत इत्यर्थः ॥

३ प्रातिपदिकत्वव्याप्यो धर्मो बहुव्रीहित्वम्, तस्य च ङीबन्तेऽतिदेशः कर्तुं शक्य इति भावः ॥

४ समासान्तविधौ प्रातिपदिकग्रहणपरिभाषा नोपतिष्ठत इत्येतदनभ्युपगमेनैव ॥

५ ङीबन्तात्समासान्तप्रत्ययोद्भावकभाष्येण समासान्तविधाववयवग्रहण एवेयं परिभाषा न प्रवर्तते, संघातग्रहणे तु प्रवर्तत एवेत्येतदाश्रयणमेव वरम् ॥

६ ननु ङीपो नित्यत्वेन परत्वादित्यसङ्गतं स्यादत आह—उत्कृष्टत्वादिति ॥

७ एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिरिति परिभाषयेति भावः ॥

८ रथो गच्छतीत्यादौ रथस्याचेतनत्वेन कृत्याश्रयत्वाभाव इति कृतिर्न धात्वर्थ इत्युक्तिरयुक्तैवेति भावः ॥

९ क्वचिदेकदेशोऽप्यनुवर्तत इति परिभाषयेति भावः ॥

१० यदा पूर्वसूत्राच्छब्दस्यैवानुवृत्तिः क्रियते तदा यस्मिन् शब्दे स्वरितत्वप्रतिज्ञा तस्यैवानुवृत्तिः स्यादिति क्वचिदेकदेशोऽप्यनुवर्तत इति परिभाषा सिद्धा । यदा चार्थस्यैवान्वय उत्तरत्र क्रियते न तु शब्दानुवृत्तिस्तदा संख्याऽव्ययादेरिति पदवाच्यस्यैकस्यैवार्थस्य सत्त्वेन स सम्पूर्णोऽप्यर्थोऽनुवर्तेतेति एकयोगनिर्दिष्टानां सहेति परिभाषासिद्धिरिति भावः ॥

( उद्द्योतः ) एकयोगनिर्दिष्टानामेकदेशानिवृत्तौ बीजमाह—शब्दानुमानेति ॥

( सिद्धान्तांशकथनभाष्यम् )

अथेह कथं भवितव्यम् द्वौ हायनावस्याः शालायाः ?

द्विहायना, त्रिहायनेति ?

**हायनो वयसि स्मृतः ॥**

वयोवाचिनो हायनशब्दस्य ग्रहणम् । न चैष वयोवाची ।

अथ णत्वं कस्मान्न भवति ?

णत्वमपि वयोवाचिन एव ॥

( प्रदीपः ) हायन इति । वक्तव्यमेतदिति भावः ॥ णत्वमपीति । 'त्रिचतुर्भ्यां हायनस्य' इति विहितम् ॥

( उद्द्योतः ) भाष्ये—शालाया इत्यंतः प्रश्नः । ईदृशेऽर्थे कथं प्रयोगेण भाव्यमिति प्रश्नः, द्विहायनेत्याद्युत्तरम् ॥ वक्तव्यमिति । हायनान्तो यो बहुव्रीहिः स वयसि गम्य एव ङीषः प्रकृतिः शिष्टैः स्मृतेत्यर्थो भाष्यस्य ॥

( ६३४ ङीपूविधिसूत्रम् ॥ ४ । १ । २ आ. १८ ॥ )

## १२९७ केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ॥ ४ । १ । ३० ॥

( ङीबधिकरणम् )

( आक्षेपभाष्यम् )

मामकग्रहणं किमर्थम्, नाणन्तादित्येव सिद्धम्[1] ?

( समाधानभाष्यम् )

नियमार्थोऽयमारम्भः—मामकशब्दात्संज्ञाछन्दसोरेव ॥

( प्रत्युदाहरणभाष्यम् )

क मा भूत् ?

मामिका बुद्धिरिति ॥

( प्रदीपः ) मामिकेति । ममेयमिति—'युष्मदस्मदोरन्यतरस्यां खञ्च'[2] इत्यण् । 'तवकममकावेकवचने' इति ममकादेशः । टाप् । 'मामकनरकयोरुपसंख्यानम्' इतीत्वम् ॥

( ६३५ ङीपूविधिसूत्रम् ॥ ४ । १ । २ आ. १९ )

## १२९८ रात्रेश्चाजसौ ॥ ४ । १ । ३१ ॥

( ङीबधिकरणम् )

( सिद्धान्तभाष्यम् )

अजसादिष्विति वक्तव्यम् । इहापि यथा स्यात्—
रात्रिं रात्रिं स्मरिष्यन्तः[3] ।
रात्रिं रात्रिमजानतः ।
सर्वां रात्रिं सहोषित्वा ।
वृत्यामेकान्तरात्रिम्[4] ॥

( उद्द्योतः ) भाष्ये—'सर्वां रात्रिं सहोषित्वा पत्या एकत्रिरात्रिकाम्' इति पाठः ॥

( ६३६ विधिसूत्रम् ॥ ४ । १ । २ आ. २० )

## १२९९ अन्तर्वत्पतिवतोर्नुक् ॥४।१।३२॥

( नुगधिकरणम् )

( ५१५६ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे ॥ * ॥**

( भाष्यम् ) अन्तर्वत्पतिवदिति गर्भभर्तृसंयोग इति वक्तव्यम् ।

इह मा भूत्—

'प्रथते त्वया पतिमती पृथिवी' इति ॥

( प्रदीपः ) अन्तर्वदिति । अन्तर्वत्नी=गर्भिणी । पतिवत्नी=जीवद्भर्तृकेत्यर्थः ॥

( उद्द्योतः ) जीवदिति । लोकव्यवहारादीदृशस्य संयोगस्य ग्रहणम् । अत एवाग्रे 'जीवपत्यां च' इति भाष्ये उक्तम् । तत्र[5] ङितिह्रस्वश्चेति पाक्षिकनदीत्वम् ॥

( आक्षेपभाष्यम् )

अथान्तःशब्दस्यागर्भसंयोगे किं प्रत्युदाह्रियते ? अन्तरस्यां शालायामस्तीति ॥

किं पुनः कारणं वाक्यमेवोदाह्रियते, न पुनर्मतुप् ?

अस्तिसामानाधिकरण्ये मतुब् विधीयते । न चात्रास्तिसामानाधिकरण्यम्[6] ॥

( प्रदीपः ) किं पुनरिति । अन्तर्वतीति नुगभाव एव प्रत्युदाहार्य इति मन्यते ॥ न चात्रेति । अन्तःशब्दस्याधिकरणप्रधानत्वादिति भावः ॥

---

१ मामकशब्दस्याणप्रत्ययांतत्वादिति भावः ॥
२ मामिकाशब्दस्य सिद्धिमाह—युष्मदेति ॥
३ 'स्वरिष्यते' इति क. पुस्तके ॥
४ 'पत्या चैकान्तरात्रिकम्' इति क. पुस्तके ॥
५ जीवपत्यामिति रूपं साधयति—तत्र ङितीति ॥
६ 'न चात्रास्तिना सामा' इति ङ पाठः, 'न चास्तिना सामा' इति क. पाठः, 'न चास्मिन् विषयेऽस्तिना सामा' इति च. पाठः ॥

(उद्द्योतः) ननु मतुप्युगिल्लक्षणङीपो दुर्वारत्वेन कथं प्रत्युदाहरणत्वमत आह—नुगभाव एवेति ॥

(प्रत्याक्षेपभाष्यम्)

**इहापि तर्हि न प्राप्नोति । अन्तर्वत्नीति ॥**

(सिद्धान्तभाष्यम्)

**एवं तर्हि—**

**अन्तर्वत्पतिवतोस्तु**
**मतुब्वत्वे निपातनात् ।**

**[1]अन्तर्वदिति मतुब् निपात्यते, वत्वं सिद्धम् । पतिवदिति वत्वं निपात्यते, मतुप् सिद्धः ॥**

**किमविशेषेण? नेत्याह—**

**गर्भिण्यां जीवपत्यां च**

**एतस्मिन् विषये ॥**

**[2]वा च च्छन्दसि नुग्भवेत् ॥**

**वा च छन्दसि नुग्वक्तव्यः—**

**साऽन्तर्वती देवानुपैत्, साऽन्तर्वत्नी देवानुपैत्, पतिवती तरुणवत्सा, पतिवत्नी तरुणवत्सा ॥**

(प्रदीपः) वा चेति । मतुब्वत्वे तु नित्यं भवतः ॥

(उद्द्योतः) भाष्ये—उक्तमेव सामान्येनोपसंहरति—एतस्मिन्विषय इति । एतस्मिन् विषयविशेष इत्यर्थः ॥ नुक्पदोच्चारणकृत्यमाह—मतुब्वत्व इति ॥

**अन्तर्वत्पतिवतोस्तु**
**मतुब्वत्वे निपातनात् ।**
**गर्भिण्यां जीवपत्यां च**
**वा च च्छन्दसि नुग्भवेत् ॥**

(६३७ विधिसूत्रम् ॥ ४ । १ । २ आ. २१)

## १३०० पत्युर्नो यज्ञसंयोगे ॥४।१।३३॥

(नादेशाधिकरणम्)

(आक्षेपभाष्यम्)

**यज्ञसंयोग इत्युच्यते, तत्रेदं न सिध्यति—इयमस्य पत्नी[3] ॥**

**क्व तर्हि स्यात्?**

**'पत्नीसंयाजाः' इति यत्र यज्ञसंयोगः ॥**

(प्रदीपः) इयमस्य पत्नीति । यज्ञसंयोग इति पतिशब्दस्य विशेषणं मन्यते । तेन यत्र यज्ञवाचिसमवधाने पतिशब्दः प्रयुज्यते—पत्नीसंयाजा इत्यादौ—तत्रैव नत्वेन भाव्यमिति भावः ॥

(उद्द्योतः) पतिशब्दस्येति । नार्थस्येत्यर्थः, पत्नीसंयाजशब्दो यागविशेषस्य संज्ञा ॥

(समाधानभाष्यम्)

**नैष दोषः । पतिशब्दोऽयमैश्वर्यवाची । सर्वेण च गृहस्थेन पञ्च महायज्ञा निर्वर्त्याः, यच्चादः सायंप्रातर्होमचरुपुरोडाशान्निर्वपति तस्यासावीष्टे ॥**

(प्रदीपः) पतिशब्दोऽयमिति । पतिशब्दार्थस्य यज्ञसंयोग इति विशेषणम् । पत्न्याश्च दम्पत्योः सहाधिकाराद् यज्ञे कर्तृत्वात्तत्फलसंबन्धाद् यज्ञसंयोगः ॥

(उद्द्योतः) पतिशब्दार्थस्येति । तत्प्रवृत्तिनिमित्तस्यैश्वर्यस्येत्यर्थः । सूत्रे 'यस्य च भावेन' इति सप्तमी यज्ञसंयोगे सति यदैश्वर्यम्, प्रत्यासत्त्या तन्निरूपितं[4] तत्र वर्तमानात्पतिशब्दादित्यर्थ इति भावः । यज्ञफलस्वर्गादिभोक्तृत्वाच्च यज्ञस्वामित्वं भार्याया बोध्यम् ॥ सहाधिकारादिति । मदभिलषितसाधनत्वात्[5] 'मदर्थं कर्म'—इत्येवं लक्षणोऽधिकारो भार्याया अप्यस्तीति मीमांसायां स्पष्टम् ॥ कर्तृत्वादिति । यस्याधिकारस्तस्य कर्तृत्वादित्यर्थः ॥

(अव्याप्तिवारकभाष्यम्)

**एवमपि तुषजकस्य[6] पत्नी न सिध्यति ।**
**उपमानात्सिद्धम्—पत्नीव पत्नीति[7] ॥**

(प्रदीपः) तुषजकस्येति । त्रैवर्णिकानामेव सभार्याणां यज्ञेऽधिकारो न तु शूद्रस्य[8] ॥ उपमानादिति । अग्निसाक्षि[9]पूर्वकपाणिग्रहणाश्रयादिति भावः ॥

(उद्द्योतः) न तु शूद्रस्येति । विधाया[10] अभावात्तस्यैवानधिकारे तद्भार्यायाः सुतरामिति भावः । ननु पञ्च[11]महायज्ञेषु शूद्राणामप्यधिकारोऽस्तीति चेन्न । शूद्रस्येत्यस्यासच्छूद्रस्येत्यर्थात् । सच्छूद्राणामेव तेष्वधिकार इति प्रसिद्धं स्मृत्यादिषु ॥ अग्नीति । अग्निसाक्षिकपाणिग्रहणनिमित्तसादृश्यादित्यर्थः । इदमु[12]पलक्षणम्—येषां तदपि नास्ति तेषां सादृश्या[13]न्तरं बोध्यम् ॥

---

१ अन्तर्वदित्यत्राधिकरणप्रधानत्वेनास्तिसामानाधिकरण्याभावेऽपि मतुबित्यर्थः ॥

२ एतस्मिन् विषयविशेषेऽपि नुको विकल्प आश्रयणीय इति भावः ॥

३ अत्र यज्ञसंयोगाभावादिति भावः ॥

४ यज्ञसंयोगनिरूपितं यदैश्वर्यं तत्र वर्तमानादित्यर्थः ॥

५ भार्याया यज्ञसंयोगमुपपादयति—मदभिलषितेति ॥

६ शूद्रस्य नामैतत् ॥

७ 'पत्नीति' इति छ. पाठः ॥

८ दम्पत्योः सहाधिकारित्वेऽपि शूद्रस्याधिकाराभावेन तद्भार्यायाः सुतरामप्राप्तिरिति भावः ॥

९ उपमाने सामान्यधर्ममुपमानोपमेयगतमाह—अग्नीति ॥

१० शूद्रस्य यज्ञाधिकाराभावे बीजमाह—विधाया इति ॥

११ पञ्चमहायज्ञेषु स्मार्तविधिष्वित्यर्थः ॥

१२ नन्वसच्छूद्रेषु विवाहादावग्निसाक्षिकत्वं न भवतीति कथन्तत्र तस्य पत्नीति व्यवहारः स्यादित्यत आह—इदमुपेति ॥

१३ पतिसम्बन्धिद्रव्याधिकारित्वादिकमिति भावः ॥

( ६३८ विधिविकल्पसूत्रम् ॥ ४ । १ । २ आ. २२ )

## १३०१ विभाषा सपूर्वस्य ॥ ४।१।३४ ॥

( विकल्पाधिकरणम् )

( ५१५७ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् ॥ * ॥

**( भाष्यम् ) पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानं कर्तव्यम्—वृद्धपतिः, वृद्धपत्नी, स्थूलपतिः, स्थूलपत्नी ।**

**वचनाद्भविष्यति ॥**

**अस्ति वचने प्रयोजनम् ।**

**किम् ?**

**आशापतिः, आशापत्नी ॥**

( प्रदीपः ) सहशब्दोऽत्र विद्यमानवचनो—विद्यमानपूर्वं सपूर्वम्, न तु सपुत्र आगत इत्यादिवत्तुल्ययोगे सहशब्दः । न हि पूर्वस्य नकारादेश इष्यते । तत्र पतिशब्दविशेषणं सपूर्वग्रहणमिति मत्वाऽऽह—**पत्युरिति** ॥ **उपसर्जनसमास इति** । सर्वोपसर्जने बहुव्रीहावित्यर्थः ॥ **आशापतिरिति** । आशायाः पतिरिति षष्ठीसमासः ॥ **प्रातिपदिकविशेषणत्वादिति** । प्रातिपदिकं पतिशब्देन विशेष्यते, तदेवानुपसर्जनग्रहणेन सपूर्वग्रहणेन च । पूर्वशब्दश्चावयववाची गृह्यते न तु व्यवस्थावाची । शब्देऽवयवस्य प्रत्यासन्नत्वात् । सामर्थ्याच्च पतिशब्देन तदन्तविधिर्भवति । ग्रहणवतेति तदन्तविधिप्रतिषेधबाधनात् ॥

**( उद्द्योतः ) विद्यमानेति** । 'सहैव पुत्रैर्दशभिः' इतिवत् ॥ **नत्विति** । तथा सति पूर्वस्यापि नकारः स्यादिति भावः ॥ तदाह—**नहीति** ॥ **तत्र पतिशब्देति** । प्रत्ययविधौ तदंतविधिप्रतिषेधात् गृह्यमाणविशेषणताया एव सर्वत्र दर्शनात् 'अनुपसर्जनात्' इत्यपि तस्यैव विशेषणमिति भावः ॥ ननु वृद्धपत्नीत्यादावपि समास उपसर्जनं न भवतीत्यत आह—**सर्वोपसर्जनेति** । वस्तुतस्तु उपसर्जनपत्यवयवके समासे इत्यर्थः । अत एवातिपत्नीत्यपि सिध्यति । संकोचे मानाभावाच्च । अत एव प्रत्याख्यानारंभयोः समफलता ॥ **आशायाः पतिरिति** । आशापतित्वं च तत्पूरकत्वेन ॥ **तदेव**=पत्यंतप्रातिपदिकमेव ॥ **सपूर्वग्रहणेन चेति** । विशेष्यत इत्यनुषङ्गः ॥ ननु वृद्धपत्नीत्यादौ समासप्रातिपदिकात्पूर्वस्य कस्यचिदभावात्सपूर्वत्वाभावेन प्रत्ययो न स्यादत आह—**पूर्वशब्दश्चेति** । अत एव वाक्ये नातिप्रसंगः ॥ प्रत्ययविधौ तदंतविधिप्रतिषेधादाह—**सामर्थ्याच्चेति** । सपूर्वस्येति विशेषणसामर्थ्यादित्यर्थः । विद्यमानपूर्वावयवकत्वस्य केवलपतिशब्देऽभावात् । पकाररूपावयवस्तु अव्यभिचारीति तात्पर्यम् । लक्ष्यानुसारिव्याख्यानाच्चानुपसर्जनादित्यपि तदंतविशेषणम्—पत्यंतादनुपसर्जनादिति ॥

( ५१५८ सिद्धान्तवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ॥**

**कथम् ?**

**पत्युः प्रातिपदिकविशेषणत्वात् । नैवं विज्ञायते । अस्त्यस्मात्पतिशब्दात्पूर्वःसोऽयं सपूर्वः, सपूर्वात्पतिशब्दादनुपसर्जनादिति ॥**

**कथं तर्हि ?**

**अस्त्यस्मिन् प्रातिपदिके पूर्वं तदिदं सपूर्वम्, सपूर्वात्प्रातिपदिकात्पत्यन्तादनुपसर्जनादिति ॥**

( ६३९ विधिसूत्रम् ॥ ४ । १ । २ आ. २३ )

## १३०२ पूतक्रतोरै च ॥ ४ । १ । ३६ ॥

( ऐकारादेशाधिकरणम् )

( ५१५९ विधिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् ॥ * ॥

**( भाष्यम् ) पूतक्रत्वादयः पुंयोगप्रकरणे वक्तव्याः—पूतक्रतोः स्त्री पूतक्रतायी ॥**

**यया हि पूताः क्रतवः पूतक्रतुः सा भवति ॥**

( प्रदीपः ) **पूतक्रत्वादीनामिति** । त्रय एते योगा

१ अत्रत्यसहशब्दस्य तुल्ययोगपरकत्वे यथा सपुत्र आगत इत्यादौ पुत्रस्यान्यस्य चागमनक्रियायामन्वयो भवति, तथा नकारादेशस्थानिकत्वं पतिशब्दस्येव तत्पूर्वशब्दस्यापि स्यात्तन्मा भूदित्याह—**सह शब्दोऽत्रेति** ॥

२ प्रातिपदिकाधिकारात्प्रातिपदिकस्य पतिशब्दस्य वा विशेषणं सम्भाव्यते । तत्र पतिशब्दविशेषणं मत्वैतदिति भावः ॥

३ ननूपसर्जनसमासे इत्युच्यमाने बहुव्रीहिसमासस्याप्युपसर्जनत्वाभावेन कथं लक्ष्यसिद्धिः स्यादित्याशयेनाह—**सर्वोपेति** । समासावयवानां सर्वेषां यत्रोपसर्जनत्वं तादृशे बहुव्रीहाविति भावः ॥

४ **तदेव**=पतिशब्दान्तप्रातिपदिकमेव । नन्वेवमनुपसर्जनस्येति विशेषणं गृह्यमाणस्यैवेति सिद्धान्तो व्याकुप्येतेति चेन्न । सपूर्वपदस्य गृह्यमाणस्यैव विशेषणमिति न दोषः ॥

५ सपूर्वमिति विशेषणमभेदसम्बन्धेन प्रातिपदिकविशेषणमिति भावः ॥

६ सपूर्वपदग्रहणसामर्थ्यादित्यर्थः ॥

७ ननु येनविधिरित्यनेन विशेषणमात्रस्य तदन्तबोधनमिति सामर्थ्यकथनमनुपयुक्तं स्यादित्यत आह—**ग्रहणवतेतीति** ॥

८ अत्र सहशब्दस्य विद्यमानवाचकत्वम्, अत एव पुत्राणां भारक्रियायामन्वयाभावेऽपि सहैव पुत्रैरित्याद्युपपद्यत इति भावः ॥

९ **तथा सति**=तुल्ययोगवचनकत्वे इत्यर्थः ॥

१० उपसर्जनसमास इत्युच्यमाने तस्य सर्वोपसर्जनइत्यर्थाश्रयणे च बहुव्रीहावेव स्यात्, अतिपत्नीत्यादौ न स्यात् । तस्य प्रत्याख्यानपक्षे च पतिशब्दान्तप्रातिपदिकत्वमतिपत्नीत्यादावपि सम्भवतीति तत्र प्राप्तिरिति फलभेदः स्पष्टः । तथा च उपसर्जनपत्यवयवकसमास इत्यर्थाश्रयणमेव युक्तमिति भावः ॥

ङीप्सहिताः पुंयोगादाख्यायामित्यत्रानुवर्तयितव्या इत्युक्तं भवति । तेन यदा पुंयोगात् स्त्रियां पूतक्रत्वादयो वर्तन्ते, तदाऽयं विधिर्नान्यदा ॥

( उद्योतः ) अविशेषेण सर्वेषामुत्तरयोगानां ग्रहणमिति भ्रमं निराकरोति—अथ इति । लक्ष्यानुसारिव्याख्यानेनेति भावः ॥

( ५१६० पूर्वपक्षवार्तिकम् ॥ २ ॥ )

॥ * ॥ लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः ॥ * ॥

( भाष्यम् ) लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतं प्राप्नोति—पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्रः, पञ्चाग्निः, दशाग्निः ॥

( प्रदीपः ) लिङ्गसंनियोगेनेति । लिङ्गार्थविहितः प्रत्ययो लिङ्गशब्देनोच्यते । यद्यपि स्त्रीप्रत्ययेन सहागमादेशानां विधानं तथाऽपि विधानोत्तरकालं स्त्रीप्रत्यये लुप्तेऽपि तेषां श्रवणं प्रसज्येत, तन्निवृत्तौ प्रमाणाभावात् । यथा यमलकयोरेकैयोरेकविनाशेऽपि नापरस्य विनाश इति भावः ॥ पञ्चेन्द्राण्य इति । तद्धितार्थे द्विगुः । 'सास्य देवता' इत्यण्, तस्य 'द्विगोर्लुगनपत्ये' इति लुक् । 'लुक्तद्धितलुकि' इति ङीषो लुक् । अत्राऽऽनुको निवृत्तिर्न प्राप्नोति ॥ पञ्चाग्निरिति । पञ्चाग्नाय्यो देवता अस्येति पूर्ववत्सर्वम् । अत्रैकारस्य निवृत्तिर्न प्राप्नोति ॥

(उद्योतः) नन्वर्थधर्मस्य लिंगस्य लुकोऽसम्भवः, आगमादेशैः संनियोगस्य चासम्भवोऽत आह—लिंगार्थे इति ॥ यद्यपीति । सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायादिति भावः ॥ अस्य न्यायस्य व्यभिचरितत्वं दर्शयति—यथेति ॥ अत्रानुक इति । इन्द्रवरुणेति विहितस्येत्यर्थः । ऐकारस्य=वृषाकप्यग्नीति विहितस्य ॥

( पूर्वपक्षसाधकभाष्यम् )

किमुच्यते सर्वत्रेति ? अन्यत्रापि, नावश्यमिहैव ॥ कान्यत्र ?

पञ्चभिर्धीवरीभिः क्रीतः—पञ्चधीवा, दशधीवेति ॥

लिङ्गग्रहणेन नार्थः, सर्वत्रागमादेशानां वचने लुकि तत्कृतप्रसङ्ग इत्येव ॥

इदमपि सिद्धं भवति—पञ्चमेन गृह्णाति पञ्चकः । नैतदस्ति । मयडयं परादिः स डटो ग्रहणेन ग्रहीष्यते ॥

इदं तर्हि प्रयोजनं—षष्ठेन गृह्णाति षट्क इति ॥

( प्रदीपः ) पञ्चभिरिति । आर्हीयष्ठक् । तस्याध्यर्द्धपूर्वेति लुक् । ततो ङीपो लुक्, अत्र रेफस्य निवृत्तेरप्रसङ्गः ॥ पञ्चमेनेति । तावतिथस्य ग्रहणमिति लुग्वेत्यत्र तावतिथेन गृह्णातीति लुक्चेत्युपसंख्यानात्कन् प्रत्ययो डटश्च लुक् ॥ स डट इति । एतेन मट्सहितस्य लुगित्यर्थः ॥ षट्क इति । डटि परतः पूर्वभक्तस्थुगागमो डटि निवृत्तेऽपि न निवर्तेत, प्रत्ययलक्षणेन वा प्रसज्येत । ननु कनि पूर्वस्य पदत्वात्संयोगान्तस्य लोप इति थुको लोपो भवति । एवं तर्हि चतुर्थेन गृह्णाति चतुष्क इत्युदाहरणम् । अत्र हि रात्सस्येति नियमात् थुकः संयोगान्तस्य लोप इति नास्ति ॥

( उद्योतः ) थुगागमः=षट्कतिकतिपयेति विहितः । नन्वन्तरंगानपीति न्यायेन लुग्विषये पूर्वमेवाप्रवृत्तिरत आह—प्रत्ययलक्षणेनेति । स न्यायस्त्वंतरंगनिमित्तविनाशकविधिविषयः । न च प्रकृते तन्नाशः, प्रत्ययलक्षणेन सत्वादिति भावः । षडिति सूत्रे डटित्यनुवृत्तस्य डट्चेदस्तीत्येवार्थः । सप्तम्या विपरिणामे फलाभावादित्याशयः । डटि परेत इत्यपि वस्तुतस्तस्य परत्वादुक्तमिति बोध्यम् ॥ ननु कनीति । डटं प्रत्ययलक्षणेनाश्रित्य भत्वं तु न, न लुमता तस्मिन्निति प्रत्ययलक्षणनिषेधात् । डटेर्वस्थायां पूर्वजातभसंज्ञाया डटि निवृत्तेऽपि निवृत्तौ मानाभावेन पराया भसंज्ञाया विद्यमानत्वेन पदत्वाभावात्तदप्राप्तिः । थुको निवृत्ती तु सुबन्तत्वनिमित्तकपदत्वेनान्तरङ्गेण जस्त्वादीति भाष्याशयमन्ये ॥

---

१ इदानीन्तनेषूपलब्धेषु प्रदीपपुस्तकेषु 'लिङ्गार्थविहितः' इत्येव पाठो दृश्यते । परंतु ख. ग. घ. पुस्तकेषु 'लिङ्गार्थे इति' उद्योते प्रतीकस्य सत्त्वेन 'लिंगार्थे विहितः' इत्यपि पाठोऽनुमीयते ॥

२ 'यमलकयोरेक' इति च. पाठः ॥

३ अन्यत्रापि=पूतक्रतोरै चेतिसूत्रलक्ष्यादन्यत्रापि । एतत्सूत्रलक्ष्येष्वेवास्योपयोग इति न, किन्त्वन्येषु लक्ष्येष्वपीत्यर्थः ॥

४ लिङ्गसन्नियोगेन सर्वत्रागमादेशानामिति वार्तिके लिङ्गसन्नियोगेनेत्येतदपि न वक्तव्यमित्यर्थः ॥

५ क. पुस्तके 'तत्कृते प्रसङ्गः' इति पाठः ।

६ छ. पुस्तके 'ग्राहिष्यते' इति पाठः ।

७ 'लुक् तद्धित लुकि' इत्यनेन ङीपो लुक् । एतद्वार्तिकाभावे पञ्चधीवेत्यत्र रेफस्य निवृत्तिर्न स्यादिति भावः ॥

८ तावतिथेन गृह्णातीति कन् वक्तव्यो लुक् चेत्युपसंख्यानात्कन् प्रत्ययः, लुक् च भवतीत्यर्थः ॥

९ डटो ग्रहणेन मट् प्रत्ययस्यापि ग्रहणात्तेनैव सिद्धे नैतदन्यत्फलमित्यर्थः ॥

१० च. पुस्तके 'प्रत्ययलक्षणेनापि प्र' इति पाठः ।

११ षष्ठशब्दात्कन्प्रत्यये जाते डटश्च लुका विनाशे कन्प्रत्ययनिमित्तिका पूर्वस्य पदसंज्ञेति संयोगान्तलोपेनैव निर्वाह इति भावः ॥

१२ ननु न लुमताङ्गस्येत्यस्य जागरूकत्वेन प्रत्ययलक्षणेन सत्वादित्येतदनुपपन्नमत आह—षडिति सूत्रे इति । 'षट्कतिकतिपयचतुरां थुक्' इति सूत्र इत्यर्थः । षट्कतीति सूत्रेऽनुवृत्तस्य डट्पदस्य फलाभावात्र सप्तम्या विपरिणाम इति न तन्निमित्तकत्वं थुगागमस्येति प्रत्ययलोपेऽपि तल्लक्षणेन थुगागम सुवक इति न लुमताङ्गस्येत्यस्यानवतारः ॥

१३ ननु षट्कतीत्यत्रानुवृत्तस्य डट्पदस्य सप्तम्या विपरिणामाभावे 'डटि परतः पूर्वभक्तथुगागमः' इत्यादि कैयटोक्तमनुपपन्नमतदाह—डटि परत इत्यादि ॥

१४ कैयटे—ननु कनीत्यादिग्रन्थेनान्यथासाधितस्भाष्यस्थं षष्ठेन गृह्णाति षट्क इत्येतदुपपादयति—डटवस्थायामिति ॥

१५ ननु डटि निवृत्तेऽपि पूर्वप्रवृत्तभसंज्ञानिवृत्तौ मानाभाव इति स्वीकारे थुकः संयोगान्तलोपो न स्यादित्यत आह—थुको निवृत्ताविति ॥

( ५१६१ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् ॥ * ॥**

( भाष्यम् ) सिद्धमेतत् । कथम् ?

आगमादेशा[1] य इह स्त्रीप्रकरण उच्यन्ते तेऽङ्गाधिकारे वक्तव्याः ॥

स्त्रीप्रकरणग्रहणेन नार्थः । सिद्धं त्वागमादेशानामङ्गतो वचनादित्येव ।

इदमपि सिद्धं भवति—षष्ठेन गृह्णाति षट्क इति ॥

( प्रदीपः ) सिद्धं त्विति । स्त्रीप्रकरणे य आगमादेशास्ते—अङ्गतः=अङ्गाधिकाधिकारे वक्तव्या इत्यर्थः । तत्र स्त्रीप्रत्यये परतोऽङ्गस्य विधीयमाना आगमादेशास्तत्र लुप्ते 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधान्न भविष्यन्तीति भावः ॥

( उद्द्योतः ) अङ्गाधिकारे इति । अङ्गत इति—आद्यादित्वात्तसिरिति भावः । अङ्गस्येति[2] तत्र तत्र सूत्रे वक्तव्यमिति तात्पर्यम् ॥

( ५१६२ प्रकारान्तरेण सिद्धान्तवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ लिङ्गलुकि वा प्रकृतिप्रत्यापत्तिवचनम् ॥ * ॥**

( भाष्यम् ) अथ वा लिङ्गलुक्येव प्रकृतिप्रत्यापत्तिर्वक्तव्या ॥

लिङ्गग्रहणेन नार्थः । लुकि वा प्रकृतिप्रत्यापत्तिवचनमित्येव ॥

इदमपि सिद्धं भवति—षष्ठेन गृह्णाति षट्क इति ॥

( सिद्धान्तभाष्यम् )

किं पुनरत्र ज्यायः ?

लुकि प्रकृतिप्रत्यापत्तिवचनमित्येव ज्यायः । इदमपि सिद्धं भवति—पञ्चभिः पट्वीभिः क्रीतः—पञ्चपटुः, दशपटुरिति ॥

( प्रदीपः ) पञ्चपटुरिति । यणादेशस्यानाङ्गत्वात्प्रत्ययलक्षणप्रतिषेधाभावः[3] । यद्यपि यणादेशः प्रत्ययलक्षणो न भवति, तथापि स्त्रीप्रत्ययलुको बहिरङ्गत्वादसिद्धत्वाद्यणादेशोऽन्तरङ्गो न निवर्तेतेति प्रत्यापत्तौ त्विष्टं सिध्यतीत्यर्थः ॥

( उद्द्योतः ) प्रत्ययलक्षणो न भवतीति । वार्णत्वादिति भावः ॥ बहिरङ्गत्वादिति । तद्धितलुगपेक्षत्वात्, यण् तु वार्णत्वादंतरङ्ग इति भावः ॥

( परिभाषामुखेन सिद्धान्तभाष्यम् )

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् ।

संनियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ।

तद्यथा—देवदत्तयज्ञदत्ताभ्यामिदं कर्म कर्तव्यम् । देवदत्तापाये यज्ञदत्तोऽपि न करोति ॥

( प्रदीपः ) संनियोगशिष्टानामिति । लौकिकोऽयं न्यायः । ऐकस्मिन्[4] प्रयोजने येषां सहाधिकारस्तत्रान्यतरनिवृत्तावितरनिवृत्तिः । लिङ्गमपि शास्त्रेऽस्ति—'बिल्वकादिभ्यश्छस्य लुक्' इत्यत्र छस्येति स्थानिनिर्देशः । तस्य हि प्रयोजनं छमात्रस्य लुग्यथा स्यात्, कुको निवृत्तिर्मा भूदिति । यदि चैषा परिभाषा नाभविष्यत् तदा कुङ् न न्यवर्त्स्यदिति किं तन्निर्देशेन ? कथं पञ्चपटुरिति ? न हि यणादेशः संनियोगशिष्टः । एवं तर्ह्यन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इत्यकृत एव यणादेशे लुकि सति निमित्ताभावाद्यण् न भवति । न च लुको बहिरङ्गत्वादसिद्धत्वम् । नाजानन्तर्ये इत्यसिद्धत्वनिषेधात्[5] । 'इको यणचि' इत्यत्र हि अचोरानन्तर्यमाश्रितम् ॥

( उद्द्योतः ) लोके क्वचिद्व्यभिचारदर्शनादाह—लिङ्गमपीति । एवं च ज्ञापकाच्छास्त्रेऽङ्गीक्रियते । किं च सहाधिकारविषयोऽयं न्याय इति न व्यभिचार इति तात्पर्यम् ॥ न च लुक इति । अन्तरङ्गानपीति न्यायस्य बहिरङ्गपरिभाषाऽपवादत्वेन लुग्विषये बहिरंगासिद्धत्वाप्रवृत्तेश्चित्यैषा शङ्का ॥ निषेधादिति । अनित्यत्वादपि तदप्रवृत्तिर्वक्तुं शक्या ॥

---

( ६३९ विधिसूत्रम् ॥ ४ । १ । २ आ० २४ )

## १३०३ वर्णादनुदात्तात्तोपधात्तो नः ॥ ४ । १ । ३९ ॥

( ङीप्सन्नियोगशिष्टनकारादेशाधिकरणम् )

( ५१६३ अतिव्याप्तिवारकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ असितपलितयोः प्रतिषेधः ॥ * ॥**

( भाष्यम् ) असितपलितयोः प्रतिषेधो वक्तव्यः । असिता, पलिता[6] ॥

( ५१६४ विधिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ छन्दसि क्नमेके ॥ * ॥**

( भाष्यम् ) छन्दसि क्नमेक इच्छन्ति । असिक्नयस्योषधे, पलिक्नीरिद्युवतयो भवन्ति ।

---

१ क. पुस्तके 'देशाः स्त्रीप्र' इत्येव पाठः ।

२ ननु स्त्रीप्रत्ययानामङ्गाधिकारे पाठे 'प्रत्ययः' 'परश्च' इत्येतावधिकारावपि तत्र पठनीयौ स्याताम्, 'आद्युदात्तश्च' इत्ययमपि तत्रानुवर्त्यः, इत्यादि गौरवं स्यात्तद्वारणायाह—अङ्गस्येति तत्रेति ॥

३ छ. पुस्तके 'ण्यभावः' इति पाठः ।

४ च. पुस्तके 'एकैकस्मिन्' इति पाठः ॥

५ इदानींतनोपलब्धप्रदीपपुस्तकेषु 'सिद्धत्वप्रतिषेधात्' इत्येव पाठः, तथापि—उद्द्योतपुस्तकेषु सर्वत्र 'सिद्धत्वनिषेधात्' इत्यस्य स्वीकारेण सोऽस्माभिः स्थापितः ॥

६ क. पुस्तके 'पलीता' इति दीर्घः पाठः ।

( प्रदीपः ) छन्दसि क्नमिति । तस्य स्थान इति बोद्धव्यम् ॥ अत्र केचित्—छन्दोग्रहणं प्रयोगदर्शनार्थमिच्छन्ति । तेन भाषायामपि क्नादेशो भवति—'गतो गणस्तूर्णमसिक्निकानाम्' इति । भाष्यकारेण त्वेतन्नोपन्यस्तमित्ययुक्तमित्याहुः ॥

( उद्द्योतः ) तस्येति । तशब्दस्येत्यर्थः । नत्वापवादत्वादिति भावः ॥

( ५१६५ अभ्यासिवारकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् ॥ * ॥

( भाष्यम् ) वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानं कर्तव्यम्—पिशङ्गी ॥

( प्रदीपः ) पिशङ्गादिति । उत्तरसूत्रेण ङीषि प्राप्ते ङीब्विधिः । स्वरे विशेषः—पिशङ्गशब्दो 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तत्वादनुदात्तान्तः ॥

( उद्द्योतः ) उत्तरसूत्रेणेति । तोपधापेक्षमेव तत्रान्यत्वम्, वर्णादनुदात्तादिति तत्र वर्तते । तत्रानुदात्तान्तत्वमुपपादयति—लघावन्ते इति ॥ बह्वषः=बह्वचः ॥

( ६४० विधिसूत्रम् ॥ ४ । १ । २ आ. २५ ॥ )

**१३०४ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद्वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ॥ ४ । १ । ४२ ॥**

( ५१६६ नियमवार्तिकम् ॥ १ ॥ )

॥ * ॥ नीलादोषधौ ॥ * ॥

( भाष्यम् ) नीलादोषधाविति वक्तव्यम् । नीली ओषधिः ॥

( प्रदीपः ) नीलादिति । सर्वस्मिन्ननाच्छादने प्राप्नोतीति वचनम् ॥

( उद्द्योतः ) ननु नीलादनाच्छादने ङीषो विधानाद्व्यर्थमेतदत आह—सर्वस्मिन्निति । नियमार्थमिति भावः ॥

( ५१६७ विधिवार्तिकम् ॥ २ ॥ )

॥ * ॥ प्राणिनि च ॥ * ॥

( भाष्यम् ) प्राणिनि चेति वक्तव्यम् । नीली गौः, नीली वडवा ॥

( ५१६८ विकल्पवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वा संज्ञायाम् ॥ * ॥

( भाष्यम् ) वा संज्ञायामिति वक्तव्यम् । नीली, नीला ॥

( ६४१ विकल्पविधिसूत्रम् ॥ ४ । १ । २ आ. २६ )

**१३०५ वोतो गुणवचनात् ॥ ४।१।४४ ॥**

( विकल्पाधिकरणम् )

( जिज्ञासाभाष्यम् )

गुणवचनादित्युच्यते, को गुणो नाम ?

( प्रदीपः ) उत इति वचनाद्वचनग्रहणाच्च अदेङोर्न ग्रहणम् । विशेषणस्यापि तु गुणस्य ग्रहणं प्राप्नोति । यथा 'यस्य गुणस्य हि भावात्' इत्यत्र । ततश्च जात्यादिवचनादपि ङीष् प्राप्नोति—आखुरित्यादाविति पृच्छति—को गुण इति ॥

( उद्द्योतः ) अदेङ्गुण इति परिभाषणात्किम्प्रश्नेनेत्यत आह—उत इतीति ॥ वचनग्रहणाच्चेति । गुणवति द्रव्ये वर्तमानप्रातिपदिकलाभाय हि तत् । न चादेङामेवं प्रकारः सम्भवतीति भावः ॥ नन्वेवं 'संसर्गिभेदकं यद्यत्' इति लक्षितगुणग्रहणमस्त्वित्यत आह—विशेषणस्यापि त्विति । अपि तु विशेषणस्य संसर्गिभेदकमितिलक्षितगुणस्य ग्रहणं प्राप्नोतीत्यन्वयः ॥

( गुणलक्षणभाष्यम् )

सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते ।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः ॥

( प्रदीपः ) सत्त्व इति । द्रव्यमाश्रयते, तत एव च द्रव्यान्निवर्तते, भिन्नजातीयेषु दृश्यते यः स गुणः । एतेन जातेर्गुणत्वं

---

१ प्रायशश्छन्दोविषयकप्रयोगदर्शनाच्छन्दसीत्युच्यते । छन्दोग्रहणं न नियामकमित्याशयः ॥

२ 'ङीषि प्राप्ते विधिः' इति च. पाठः ।

३ ननु 'अन्यतो ङीष्' इति सूत्रस्थान्यतःपदेन वर्णवाचकभिन्नादित्याद्यर्थः स्यात्तदाशंकावारणायाह—तोपधापेक्षमेवेति ॥

४ आच्छादनभिन्नार्थान्नीलशब्दादोषधिवाचकादपि ङीष् सूत्रेणैव प्राप्त इति व्यर्थमेवैतद्वार्तिकमित्याशङ्कावारणायाह—सर्वस्मिन्नित्यादि ॥

५ नियमार्थकनीलादोषधाविति वार्तिकेन निषेधादाह—प्राणिनि चेति ॥

६ पूर्वेण प्राप्तस्यैवायं विकल्पः ॥

७ वोतो गुणवचनादिति सूत्रे गुणपदेन 'अदेङां' ग्रहणं किन्नेत्याशङ्कायामाह—उत इति वचनादित्यादि । अदेङामुदन्तत्वं न सम्भवतीति तत्सामर्थ्यान्न 'अदेङां' ग्रहणमिति भावः ॥

८ ननु गुणपदेन गुणविशिष्टस्य लक्षणं स्यादिति—अदेङ्विशिष्टादुकारान्तादित्याद्यर्थोऽपि संभाव्येतेति—उत इति वचनसामर्थ्यमयुक्तं स्यादत आह—वचनग्रहणाच्चेति ॥

९ गुणपदेन विशेषणस्य ग्रहणादाखुशब्दादपि वोतोगुणवचनादित्यनेन ङीष् प्राप्नुयादतो भाष्यकार आह—को गुणो नामेति ॥ आखुशब्देन हि आखुस्वरूपा जातिर्विशेषणीभूतोच्यत इति गुणवचनोऽयमाखुशब्द इति भावः ॥

निवारितम् । सा हि द्रव्ये निविशमाना द्रव्यं न कदाचिज्जहाति, न च भिन्नजातीयानि द्रव्याण्यभिनिविशते । यद्य[1]पि गवाश्वादिषु प्राणित्वमस्ति तथापि प्राणित्वेन तेषामेकजातीयत्वमेव ॥

क्रियायास्तु पूर्वोक्त[2]लक्षणयोगाद् गुणत्वं प्राप्नोति । साऽपि हि द्रव्ये निविशते कदाचिद् द्रव्यान्निवर्तते । निष्क्रियं हि द्रव्यं कदाचिद् भवति कदाचित्सक्रियम्, भिन्नजातीया[3]नि च द्रव्याण्याश्रयतीत्याह—**आधेय इति**=उत्पाद्यः—यथा घटादेः पाकजो रूपादिः ॥ **अक्रियाजः**=अनुत्पाद्यः—यथाऽऽकाशादेर्महत्त्वादिः । क्रिया तूत्पाद्यैव न नित्येति तस्या द्वैविध्याभावात् गुणत्वाभावः ॥

एवं तु द्रव्यस्यापि गुणत्वं प्राप्नोति । अवयविद्रव्यमवयवद्रव्येषु निविशते, असमवायिकारणसंयोगनिवृत्तौ च विनाशात्ततोऽपैति, भिन्नजातीयेषु च हस्तपादादिषु दृश्यते । द्विविधश्च तन्नित्यानित्यभेदेन । निरवयवस्य द्रव्यस्यात्मपरमाण्वादेर्नित्यत्वादवयविद्रव्यस्यानित्यत्वादित्याह—**असत्त्वप्रकृतिरिति** । अद्रव्यस्वभाव इत्यर्थः । अत्र पृथग्जातिष्वित्यसमासः । समासे हि 'जात्यन्ताच्छबन्धुनि' इति छः प्रसज्येत । तत्र व्यक्तिषु—जात्याधारे[4]षु दृश्यमानः—जातिषु **दृश्यते**—इत्युच्यते ॥

**( उद्द्योतः ) द्रव्यमिति** । सीदन्त्य[5]स्मिन् जातिगुणक्रिया इति व्युत्पत्तेः सदेरौणादिको वप्रत्ययः । त[6]तः पाकादिकारणान्तरवशाद्गुणान्तरोत्पत्तौ स गुणस्ततो द्रव्यान्निवर्तत इत्यर्थः ॥ **भिन्नजातीयेष्विति** । घटपटादिष्वित्यर्थः ॥ **एतेन जातेरिति** । इदमुपलक्षणम्, अनेन संज्ञाया अपि तत्वनिरासात् ॥ **न कदाचिदिति** । नित्यत्वात्तस्या इति भावः ॥ **प्राणित्वमिति** । यद्यपि प्राणित्वं प्राणसंबन्धरूपं न जातिर्नाप्यखण्डोपाधिस्तथापि तस्य जातित्वाङ्गीकारेणेदम् ॥ **इत्याहेति** । इत्यत आहेत्यर्थः ॥ **आधेय इत्यस्यार्थः**—उत्पाद्य इति । एतेन नित्या[7]नित्यवृत्तिजातिमत्त्वं लब्धम् ॥ नैवं क्रियेत्याह—**क्रियात्विति** ॥ **अद्रव्यस्वभाव इति** । द्रव्यभिन्न इत्यर्थः, द्रव्यादन्य इति उत्तरलक्षणे उक्तेः । द्र[8]व्यपदेनात्र गुणाश्रय उ[9]च्यते । अत्रै[10]वं व्याख्याने 'पृथग् जातिषु दृश्यत' इत्यनेन, 'सत्वे निविशते' इत्यादिना वा जातेर्वारणे सिद्धेऽन्यतरवैय्यर्थ्यापत्तिः । किं च[11] क्रियावारकेणैव जातिवारणे सिद्धे उभयोरपि वैय्यर्थ्यम् । किं च पृथ[12]क्जातिष्वित्यनेन जातिवारणमशक्यं भिन्नजातीयेषु घटपटादिषु द्रव्यत्वादिदर्शनात् ॥

( लक्षणान्तरभाष्यम् )

**अपर आह ॥**

**उपैत्यन्यज्जहात्यन्यद् दृष्टो द्रव्यान्तरेष्वपि ।**
**वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः ॥**

**( प्रदीपः )** अयमेवार्थः श्लोकान्तरेणोच्यते—**उपैत्यन्यदिति** । अन्यद्—द्रव्यं शुक्लादिको गुण आगच्छति, **अन्यत्तु** परित्यजति, भिन्नजातीयेषु च द्रव्येषु दृष्टः । सर्वलिङ्गाश्रयगतलिङ्गग्राहित्वात्—**वाचकः सर्वलिङ्गानाम्** । शब्दधर्मस्य वाचकत्वस्यार्थ आरोपाद् **वाचक** इत्युच्यते ॥ **द्रव्यादन्य इति** । यथोक्तलक्षणयुक्तत्वेऽपि यस्य द्रव्यत्वं नास्ति स गुण इत्यर्थः ॥

**( उद्द्योतः ) अन्यद्द्रव्यमिति** । यथा कुसु[13]म्भादिरूपं वस्त्रमायाति कुसुम्भञ्च परित्यजतीत्यर्थः । पटुत्वाद्यपि क्वचिदायाति क्वचिन्नश्यति, कस्यचित्पटोरपटुत्वस्यापटोश्च पटुत्वस्य दर्शनात् । पूर्वल[14]क्षणेऽप्येवमेव व्याख्यातुमुचितम् ॥ **द्रव्येषु दृष्ट इति** । पूर्वार्धेन संज्ञाया जातेश्च तत्वनिरासः ॥ ननु गुणस्य वाचकत्वमनुपपन्नमत आह—**शब्दधर्मस्येति** । अनेनालिङ्गक्रियाया गुणत्वनिरासः । अत्रापि पूर्वलक्षणवद्व्यर्थविशेषणताऽऽपतति । द्रव्या[15]न्यत्वेन भावत्वोपलक्षणादभावनिरासः ॥

अत्र वदन्ति—गुणो नामेति प्रश्ने नामैकदेशग्रहणम्, **गुणवचनः** क इति प्रश्नः । अत एवोत्तरे वाचकः सर्वलिङ्गानामिति यथाश्रुततयैव संगच्छते । येषां च शब्दानामाकडारसूत्रे गुणवचनसंज्ञोक्ता तेषामेवात्र कथनम् । एवं हि द्वयोर्भाष्ययोरेकवाक्यता भवति । तत्र हि समस्तकृदंततद्धितान्तसर्वनामजातिसंख्यासंज्ञाशब्दातिरिक्तशब्दस्य गुणवचनसंज्ञा कृता । तस्मादत्रापि विशेषणैस्तद्व्यावृत्तिरेव युक्ता ॥

तथाहि—तत्राद्य[16]पादेन संज्ञानिरासः । न हि संज्ञाजातिशब्दा द्रव्ये विद्यमान एव रक्तादिशब्दवत्कदाचिद्वाचकत्वेन प्रवर्तन्ते कदा-

---

१ ननु प्राणित्वरूपा जातिर्भिन्नजातीयानि गवाश्वादीनि द्रव्याण्यभिनिविशत एवेति जातावपि गुणलक्षणं प्राप्तमित्याशङ्कायामाह—**यद्यपीति** ॥

२ सत्वे निविशत इत्यादिकारिकार्धोक्तलक्षणयोगात् ॥

३ **'जातीयानि द्रव्याण्या'** इति च. पाठः ।

४ **'धारेषु दृश्यत इत्युच्यते'** इति क. पाठः ।

५ गुणस्य द्रव्याश्रितत्वं दर्शयति—**सीदन्त्यस्मिन्निति** ॥

६ गुणस्य द्रव्यान्निवृत्तिं दर्शयति—**ततः पाकादीति** ॥

७ परिनिष्ठितं गुणलक्षणमाह—**नित्यानित्येत्यादि** ॥

८ **द्रव्यपदेन**=सोऽसत्वप्रकृतिरित्यत्रत्यसत्वपदेनेत्यर्थः ॥

९ 'उच्यते ॥ **इत्युच्यत इति** । जातिशब्दो लक्षणया व्यक्तिवचन इति भावः । अत्रै' इत्यधिकः पाठो दृश्यते ज. पुस्तके ॥

१० एवं कैय्यटोक्तव्याख्यानेऽव्याप्त्यतिव्याप्तिवैय्यर्थ्यरूपा दोषाः सम्भवन्तीत्यर्थः । स्वानुकूलं व्याख्यानम् 'अत्र वदन्ति' इत्यादिनाऽग्रे कथयति ॥

११ ननु जातिपदेन व्यक्तेर्ग्रहणे 'पृथक् जातिषु' इत्यनेन न जातेर्वारणम्, तथा च नान्यतरवैय्यर्थ्यापत्तिरित्यत आह—**किं च क्रियेति** ॥

१२ नन्वाधेयपदेन न—उत्पाद्यरूपार्थस्य ग्रहणम्, किन्त्वाधारे स्थित इत्यर्थस्य ग्रहणम्, तथा 'अक्रियाजः' इति क्रियावारकपदेन जातेर्वारणं न सम्भवति, तस्या अप्यक्रियाजत्वादित्यरुच्याऽऽह—**किं च पृथगिति** ॥

१३ कुसुम्भादिना यत्र वस्त्रं रञ्जयति रङ्गकारस्तत्र कुसुम्भरूपं वस्त्रे समायाति कुसुम्भञ्च तद्रूपं परित्यजतीत्यर्थः ॥

१४ अत्रत्यं तत्त्वं सुधीभिरेवोहनीयम् ॥

१५ द्रव्यादन्यपदेन द्रव्यभेदो विवक्ष्यते—द्रव्यभिन्नो द्रव्यसदृश इति । सादृश्यञ्च भावत्वेन, तेनाभावनिरास इत्यर्थः ॥

१६ आद्यपादेन=सत्वे निविशतेऽपैतीत्यनेन । घटो रक्त इत्यादिव्यवहारस्तु घटस्य विद्यमानत्वदशायामेव भवति, नत्वविद्यमानत्वदशायाम् । संज्ञादिशब्दानां न तथा व्यवहार इति भावः ॥

च्चिन्नेति भवन्ति । 'जातिषु पृथक्क् दृश्यते' इत्यनेन सर्वनामनिरासः । यथा शुक्लादयः शब्दाः समाने शुक्ले गवि शुक्लशब्दः, अश्वे कर्कशब्दः, नैवं सर्वनामशब्दा नियतविषयाः । चार्वादयोऽपि क्वचिच्चारुरिति क्वचिच्चारुतर इति, नैवं क्वचिदपि सर्वतर इति । 'आधेयः' इत्यनेन संख्याशब्दनिरासः । न हि स रक्तादिगुणशब्दवद्द्रव्ये विद्यमाने यत्नाधेयः—यत्नाधेयार्थक इत्यर्थः । अनेनैव जातिशब्दानामपि निरासः । अक्रियाज इत्यस्य क्रियाप्रतिपादकधातुजन्य इत्यर्थः । तेन कृदंतनिरासः । असत्वप्रकृतिरित्यनेन सत्ववाचकप्रकृतिकभिन्नार्थकेन समस्ततद्धितान्तयोर्निरासः । अत एव प्रकृतिग्रहणं चरितार्थम् ॥

उत्तरश्लोकेऽप्याद्यपादेन संज्ञाशब्दनिरासः, दृष्ट इत्यस्य पृथगिति शेषः । तेन सर्वनामनिरासः । तृतीयपादेन जातिनिरासः, न चाद्यपादेन जातिनिरासः । नीचतत्तद्वर्णवृत्त्या सप्तमादौ ब्राह्मणत्वादिनिरासात्, विश्वामित्रादौ तत्सम्बन्धाच्च । आविष्टलिंगा जातिर्यल्लिंगमुपादाय प्रवर्तते—उत्पत्तिप्रभृत्याविनाशात्तल्लिङ्गं न जहातीति विशेषणानां चेति सूत्रे भाष्योक्तेस्तद्वाचकानां न सर्वलिंगवाचकत्वम् । अनेन संख्यानिरासोऽपि, विंशत्यादीनां सर्वलिंगत्वाभावात् । द्रव्यादन्य इत्यस्य द्रव्यवाचकप्रातिपदिकप्रकृतिकादन्य इत्यर्थः । द्रव्यवाचकान्यप्रकृतिक इत्यर्थो वा । तेन समस्ततद्धितांतयोर्निरासः । द्वितीयपादस्थापिना—अधातुजत्वस्य, तेन कृदन्तनिरासः । अत एवोत्तरसूत्रे बहुग्रहणं चरितार्थम् । संख्याशब्दस्यागुणवचनत्वादिति कैय्यटव्याख्यानेऽप्याधेयश्चेत्यादिना संख्यावारणसम्भवात् । वस्तुतोऽत्यलमिदम्भाष्यमेकदेश्युक्तिः, व्याख्यालेशस्याप्यभावात्, उक्तरीत्या सिकताकूपवद्विशीर्णत्वाच्च, आकडारसूत्रे स्वयमुक्तत्वाच्च भगवताऽत्र नोत्तरितमिति भाति ॥

( ५१६९ सिद्धान्तसाधकवार्तिकम् ॥ १ ॥ )

## ॥*॥ गुणवचनान्ङीबाद्युदात्तार्थम् ॥*॥

**( भाष्यम् ) गुणवचनाद् ङीब्वक्तव्यः ।**

**किं प्रयोजनम्? आद्युदात्तार्थः । आद्युदात्ताः प्रयोजयन्ति—वस्वी, पट्वी ॥**

( प्रदीपः ) **वस्वीति** । 'धान्ये नित' इत्यतो निदिति वर्तमाने 'शृस्वृस्निहि' इति वसुशब्द आद्युदात्तो व्युत्पादितः । तस्मात् ङीपि सति ईकारोऽनुदात्तो भवति । ङीषि तूदात्तः स्यात् । अन्तोदात्तात्तु ङीम्ङीषोर्विशेषाभावः—'उदात्तयणो हल्पूर्वात्' इति ङीप उदात्तत्वविधानात् ॥

( उद्योतः ) ननु ङीम्ङीषोः को विशेषोऽत आह—**धान्ये निदितीति** । वसुशब्दः प्राशस्त्यगुणवाची, खरुः=पाणिग्रहणोत्कण्ठावती ॥

( ५१७० अतिव्याप्तिवारकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ खरुसंयोगपधप्रतिषेधश्च ॥ * ॥

**( भाष्यम् ) खरुसंयोगोपधानां च प्रतिषेधो वक्तव्यः—खरुरियं ब्राह्मणी, पाण्डुरियं ब्राह्मणी ॥**

( ६४२ विधिसूत्रम् ॥ ४ । १ । २ आ. २७ )

# १३०६ पुंयोगादाख्यायाम् ॥ ४।१।४८ ॥

( ङीषधिकरणम् )

( ५१७१ अतिव्याप्तिवारकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ गोपालिकादीनां प्रतिषेधः ॥ * ॥

**( भाष्यम् ) गोपालिकादीनां प्रतिषेधो वक्तव्यः—गोपालिका, पशुपालिका ॥**

**किं पुनरिहोदाहरणम्?**

**प्रष्ठी, प्रचरी ॥**

( आक्षेपभाष्यम् )

**कथं पुनरयं प्रष्ठशब्दोऽकारान्तः स्त्रियां वर्तते? ।**

( प्रदीपः ) पुंसा योगः पुंयोगः, तस्माद्धेतोर्यत्प्रातिपदिकं स्त्रियां वर्तते ततो ङीष् भवति । आख्याग्रहणं गुणभूतेनापि पुंसा संबध्यते, अन्येन संबन्धासंभवात् । गणकादयो हि शब्दाः पुंयोगात् स्त्रियां वर्तमाना न पुंयोगस्याख्या भवन्ति । स्त्रियां च पुंयोगमन्तरेण न प्रवर्तन्त इति स्त्रिया अपि नाख्याः । पुंयोगात् स्त्रियां वर्तमानानां स्त्रीं प्रत्याख्यात्वमव्यभिचारान्न विशेषणम् । पुंविशेषणस्य तु प्रयोजनं प्रजाता प्रसूतेत्यादौ ङीन्निवृत्तिः । प्रसूतादयो हि पुंयोगात् स्त्रियां प्रवर्तन्ते पुमांसं तु नाचक्षते ॥ **गोपालिकादीनामिति** । 'सिद्ध्ये' इति वाक्यशेषः ॥ **किं पुनरिति** । यदि प्रष्ठादिशब्दः पुंसि व्युत्पाद्यते ततः स्त्रीवृत्तिर्न स्यात् । अथ तत्समर्थाचरणात् प्रस्थानादिक्रियां प्रति कर्तृत्वमाश्रित्य स्त्रियां व्युत्पाद्यते तदाऽन्तरङ्गत्वाट्टापि कृते सुबुत्पत्तौ सत्यां समासे कृते—अकारान्तत्वाभावान् ङीष् न स्यादिति प्रश्नः ॥

( उद्योतः ) क्लिष्टत्वात्सूत्रार्थं दर्शयति—**पुंसा योग इति** ।

१ सर्वनामशब्दानां नियतविषयत्वं नास्ति यथा कर्कादिशब्दानाम् । जातिवाचकेषु पार्थक्येन नियतविषया गुणशब्दा दृश्यन्ते, न तथा सर्वनामशब्दाः, ते हि सर्वत्रानिर्बन्धम्प्रचरन्ति ॥

२ नामैकदेशग्रहणम्, गुणवचनः क इति प्रश्न इत्यभिप्रायेण 'यत्नाधेयार्थकः शब्दः' इत्ययं ग्रन्थः ॥

३ समासतद्धितयोः प्रायेण सत्त्ववाचकं सुबन्तमेव प्रकृतिरिति असत्त्वप्रकृतिरित्यनेन तयोर्व्युदासः ॥

४ अत एव=सत्त्ववाचकप्रकृतिकयोः समासतद्धितयोर्निरासस्येष्टत्वादेव ॥

५ ख. पुस्तके 'तेन सर्वसर्वनाम' इति पाठः ॥

६ उपैत्यन्यज्जहात्यन्यदित्याद्यपादेन जातिशब्दानां न निरासः, ब्राह्मणाद्युत्तमवर्णेन स्वापेक्षयाऽपकृष्टवर्णवृत्त्या जीवने सप्तमपुरुषादौ ब्राह्मणादेर्निरासो भवति, उत्तमाचरणेन च विश्वामित्रादौ ब्राह्मणत्वदर्शनाच्च जातिरप्युपैत्यन्यज्जहात्यन्यदितिरूपैव वर्तत इति न तेन जातिशब्दादेर्निरास इति भावः ॥

७ जातिशब्दानां सर्वलिङ्गवाचकत्वाभावादेव 'वाचकः सर्वलिङ्गानाम्' इत्युक्तया तेषां गुणत्वनिरासः ॥

८ अस्य संग्रह इति शेषः ।

९ कृदन्तनिरासो यदि न स्यात्तर्हि बहुशब्दस्यापि गुणवचनत्वं स्यादित्यनेनैव बहुशब्दात्ङीप्प्रत्ययसिद्धौ बह्वादिभ्यश्चेति सूत्रे बहुग्रहणं व्यर्थं स्यादिति भावः ॥

१० छ. पुस्तकेऽस्य न वार्तिकत्वेन ग्रहणम् ।

कर्तृकरण इति समासः ॥ **हेतोरिति** । हेतौ पञ्चमीति भावः ॥ ननु प्रधानेन योगेन[1], स्त्रिया वा सम्बन्धः स्यादत आह—**अन्येनेति** ॥ तत्र नाद्य[2] इत्याह—**गणकादय इति** ॥ अन्त्ये स्त्रिया आख्यायामित्यत्र किम्पुंयोगात्प्राक् तदाख्यायामित्यर्थः? उत उत्तरकालमिति? नाद्य इत्याह—**स्त्रियाश्चेति** ॥ नान्त्य इत्याह—**पुंयोगादिति** ॥ **प्रसूतादयो हीति** । पुंयोगहेतु[3]कगर्भाधानोत्तरकालं तन्निःसरणरूपप्रसवप्रवृत्तिनिमित्तत्वादिति भावः ॥ **नाचक्षते इति** । ततो गर्भनिःसरणा[4]भावादिति भावः । गर्भाधाननिमित्तकः प्रसूतशब्दः पुंस्यपि, तथाऽप्युक्तप्रवृत्तिनिमित्तको न पुंस आख्या । नापि गर्भाधाननिमित्तेन प्रसूतशब्दवाच्यपुंयोगमात्रेणास्य स्त्रियां वृत्तिरिति भावः ॥ गोपालिकादीनां प्र[6]तिषेधप्रतियोगित्वासम्भवादाह—**वाक्यशेष इति** । नन्वत्र[7] तृजकाभ्यामिति निषेधात् समासो दुर्लभः, शेषषष्ठ्या समासेऽपि आपः सुपः परत्वादित्वं दुर्लभमिति चेन्न । शेषषष्ठ्या अपि तत्प्रकृत्य[8]र्थस्य क्रियाजनकत्वात् कारकत्वमेवेति तयाऽपि सुबुत्पत्तेः पूर्वं समास इति नापः सुपः परत्वमित्यदोषात् । यथाकथञ्चित्कारकोपादानेऽपि कथञ्चित्कारकत्वमादाय सा प्रवर्तत इति अत्रत्यभाष्यात्, उपपद[9]मिति सूत्रस्थभाष्याच्च ज्ञायते ॥ **पुंसीति** । प्रस्थानादिक्रियायाः पुंधर्मत्वादिति भावः । उदाहरणयोः सुपिस्थः, चरेष्टः—इति कटौ ॥

( समाधानभाष्यम् )

**तस्येदमित्यनेनाभिसंबन्धेन । यथैव ह्यसौ तत्कृतान् स्नानोद्वर्तनपरिषेकान् लभते, एवं प्रष्ठशब्दमपि लभते ॥**

( प्रदीपः ) **तस्येदमित्यनेनेति** । यथा राजामात्यो राजकार्याणि, राजव्यपदेशं च लभते; तथा प्रष्ठभार्याऽपीत्यर्थः । '**स्नान**' शब्दःकरणसाधन इत्यपुनरुक्तः '**परिषेक**' शब्दः ॥

( **उद्योतः** ) भाष्ये—**तस्येदमिति** । सामान्ये नपुंसकम् ॥ **तत्कृतानिति** । तस्येदमित्यभिसम्बन्धकृतानित्यर्थः ॥ **करणसाधन इति** । तथा च स्नानशब्दो गन्धतैलादिवचन इत्यर्थः ॥

( समाधानाक्षेपभाष्यम् )

**यद्येवं,**

( ५१७२ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ पुंयोगादाख्यायां तद्धितलुग्वचनम् ॥ * ॥

( भाष्यम् ) **पुंयोगादाख्यायां तद्धितस्य लुग् वक्तव्यः । 'तस्येदम्' ( ४।३।१२ ) इति प्राप्नोति ॥**

**न तर्हीदानीमिदं भवति—प्राष्ठ्य इमाः, प्राचर्य इमा इति ।**

**भवति च । विभाषा लुग् वक्तव्यः ।**

**यदा लुक् तदा प्रष्ठी, यदा न लुक् तदा प्राष्ठी ॥**

( प्रदीपः ) **तद्धितलुग्वचनमिति** । तस्येदमिति संबन्धस्य भेदनिबन्धत्वाद् भेदाश्रयतद्धितोत्पत्तौ सत्यां तस्य लुग्वक्तव्यः । लुकि च सति प्रकृ[10]तिरेव प्रष्ठशब्दस्तद्धितार्थं स्त्रियमभिधत्त इति प्रष्ठीति ङीष् सिद्ध्यति ॥

( वार्तिकान्यथासिद्धिपरभाष्यम् )

**यद्येवं नार्थो लुका, विभाषा तद्धितोत्पत्तिः ।**

**यदा तद्धितोत्पत्तिः—तदा—प्राष्ठी ।**

**यदा न तद्धितोत्पत्तिः—तदा—प्रष्ठी ॥**

( वार्तिकप्रयोजनबोधकभाष्यम् )

**एवमपि लुग् वक्तव्यः । न ह्यन्तरेण तद्धितस्य लुकं परार्थे शब्दो वर्तते॥**

( प्रदीपः ) **न ह्यन्तरेणेति** । तद्धितस्य विकल्पेनोत्पत्तावपि पक्षे वाक्यमेव भवति—प्रष्ठस्येयमिति । तत्र च प्रष्ठशब्दः पुंस्येव वर्तते न तु स्त्रियाम् । तस्मात् स्त्रीवृत्तित्वमस्येच्छता तद्धितलुग्विधेय इत्यर्थः ॥

( **उद्योतः** ) ननु तद्धितस्य विकल्पे प्रष्ठशब्द एव सम्बन्धमाचष्ट इति किं लुकेत्यत आह—**तद्धितस्येति** । महाविभाषया वाक्यस्यैवाभ्यनुज्ञानादिति भावः । लक्षणया चेद्वृत्तेर्थेऽसाधुत्वम्, तत्सम्बन्धीत्यर्थेऽनुशासनेन प्रत्ययांतस्यैव, तत्सम्बन्धीत्यादिसमा[11]सस्यैव वा साधुत्वनियमनादिति तात्पर्यम् ॥

---

१ **योगेनेति** । सूत्रस्थयोगशब्देनेत्यर्थः ॥

२ योगशब्देनाख्याया न सम्बन्धः, गणकादयो हि शब्दा गणकरूपा पुमाख्या स्त्रियां वर्ततेऽतः स्त्रियाम्प्रवर्तन्ते, न तु पुंयोगस्याख्या वर्तत इति प्रवर्तन्ते ॥

३ पुंयोगादिति सूत्रे पुम्पदाभावे योगादाख्यायामिति सूत्रं स्यात्ततश्च या योगाख्या स्त्रियां वर्तते ततो ङीषित्यर्थः सम्पद्येत, प्रसूतादयो हि शब्दाः पुंयोगाख्यां ज्ञापयन्ति, प्रसूतेः पुंयोगहेतुकगर्भाधानोत्तरभावित्वात् । न तु पुमाख्यां ज्ञापयन्ति—अतः पुम्पदमिति भावः ॥

४ पुंसाम्प्रसूतियोग्यत्वाभावादिति भावः ॥

५ ननु देवो देव्याम्पुत्रम्प्रासूत, प्रसूतो देवदत्तः पुत्रमित्यादिलोकप्रसिद्धेः प्रसूतशब्दः पुंस्यपि—इति सूत्रे पुम्पदग्रहणेऽपि ततो ङीष् प्राप्नुयादेवेत्यत आह—**गर्भाधानेति** । क्रियाप्रधानोऽयं शब्दो न पुंस आख्येति भावः ॥

६ **प्रतिषेधः**=अभावः । तस्य च प्रतियोगित्वन्तेषां न सम्भवतीति '**सिद्ध्ये**' इति शेषः । एवञ्च तेषां रूपाणां सिद्ध्ये ङीषः प्रतिषेध इत्यर्थः ॥

७ वार्तिकोक्तगोपालिकेति रूपं साधयति—नन्वत्रेत्यादिना ॥

८ तत्प्रकृत्यर्थस्य=षष्ठीप्रकृत्यर्थस्य गोशब्दार्थस्य पालनरूपक्रियाजनकत्वात्कारकत्वमित्यर्थः ॥

९ उपपदमतिङिति सूत्रे—कुम्भकार इत्यत्र षष्ठीसमासोऽपि प्राप्तः, उपपदसमासोऽपि । तत्र भाष्यकार आह—न वाऽर्थो विप्रतिषेधेन, किं कारणम्? षष्ठीसमासस्याभावादुपपदसमासो भविष्यति—गतिकारकोपपदानां कृद्भिरिति समासवचनात् । एवञ्च कुम्भस्य कार इत्यादौ कारशब्दात्सुप्रत्ययोत्पत्तेः प्राक् उपपदमिति प्राप्तः । सुबुत्पत्तेः पूर्वं षष्ठी समासो न प्राप्नोतीति तस्याभावो भाष्यकारेणोक्तः । तथा च शेषषष्ठ्यन्तस्य कुम्भशब्दस्य कारकत्वम्भाष्यकृतोक्तमिति सुस्पष्टमेव ॥

१० यः शिष्यते स लुप्यमानार्थाभिधायीति न्यायादिति भावः ॥

११ **तत्सम्बन्धीत्यादि समासस्येति** । प्रष्ठभार्येत्यादि समासस्येत्यर्थः ॥

(प्रत्याक्षेपभाष्यम्)

**यदि पुनस्तस्यामेव प्रष्ठशब्दो वर्तेत ।**

**कथं पुनस्तस्यामेवाप्रतिष्ठमानायां प्रष्ठशब्दो वर्तेत ?**

**यथैव ह्यसावकुर्वती किंचित्पापं भर्तृकृतान् वधबन्धनादिक्लेशान् लभते, एवं प्रष्ठशब्दमपि लभते ॥**

(प्रदीपः) **यदि पुनरिति** । यथा पञ्चभिर्हलैः कृषतीति प्रतिविधानात् कर्तृत्वम्, एवं स्त्रिया अपि प्रस्थानादौ कर्तृत्वं स्यादेवेति भावः ॥ **कथमिति** । साक्षात्तस्याः क्रियाया अकरणादकर्तृत्वं मन्यते ॥ **यथैवेति** । साक्षात्पापमकुर्वत्यपि संविधात्रीत्वात्कर्तृत्वमापद्यत एव । यथा स्वामिदासौ पचत इति स्वामिनः संविधातृत्वात् पक्तृत्वम्, दासस्य तु साक्षात्, तथा स्त्रीपुंसयोः प्रस्थातृत्वमित्यर्थः ॥

(उद्द्योतः) **प्रतिविधानात्**=तत्समर्थाचरणात्, पञ्चभिर्हलैर्भूकर्षणस्यैकेनासम्भवादिति भावः ॥ भाष्ये—**भर्तृकृतानिति** । भर्तृकृतपापकृतानित्यर्थः । तत्कृतानिति पाठेऽप्ययमेवार्थः ॥ "तथा च दाम्पत्यलक्षण एव पुंयोगो भगवतोऽभिमतः । कैकयी, देवकी, रैवतीत्यादौ गौरादित्वान्ङीषिति तदाकूतम्" ॥ **तथेति** । स्वामिदासयोः पाककर्तृत्ववत्स्त्रीपुंसयोः पापकर्तृत्ववच्च तयोः प्रस्थातृत्वमपीत्यर्थः ॥ कथम्पुनरन्यार्थेनान्यार्थाभिधानमत आह—**सम्बन्धादिति** ॥

(५१७३ पूर्वपक्षवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः ॥ * ॥

(भाष्यम्) **सुबन्तसमासवचनाच्चाकारान्तता नोपपद्यते । सुबन्तानां समासस्तत्रान्तरङ्गत्वाट्टाप् । टाप्युत्पन्ने समासः । स्त्रीशब्दः समस्येत । तत्र पुंयोगादाख्यायामकारान्तादितीकारो न प्राप्नोति ॥**

(प्रदीपः) **तत्रान्तरङ्गत्वादिति** । प्रातिपदिकं पूर्वं लिङ्गमभिदधाति, पश्चात्संख्यामिति तन्निमित्तस्य सुपो बहिरङ्गत्वमिति भावः ॥

(५१७४ समाधानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् ॥ * ॥

(भाष्यम्) **सिद्धमेतत् ।**

**कथम् ?**

**स्त्रियाः पुंशब्देनाभिधानात् । स्त्री पुंशब्देनाकारान्तेनाभिधीयते ॥**

(प्रदीपः) **सिद्धं त्विति** । तस्येदमिति संबन्धात् तच्छब्दलाभं मन्यते ॥

(प्रथमवार्तिकोक्ताक्षेपनिरासभाष्यम्)

**ननु चोक्तं पुंयोगादाख्यायां तद्धितलुग् वचनमिति ॥**

**नैष दोषः ।**

**आचार्यप्रवृत्तिर्ज्ञापयति—नातस्तद्धितोत्पत्तिर्भवतीति, यदयं पुंयोगादाख्यायामिति 'ईकारं' शास्ति ॥**

(प्रदीपः) **यदयमिति** । अणि हि ङीप् सिद्धः, न चाणन्तात् ङीपि ङीषि वा विशेषः, उदात्तनिवृत्तिस्वरेण ङीप उदात्तत्वात् ॥

(उद्द्योतः) नन्वणि ङीप्विधानार्थमिदमित्यज्ञापकमत आह—**अणिहीति** ॥

(ज्ञापकाक्षेपभाष्यम्)

**नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यदेतस्य वचने प्रयोजनम् । येऽनीकारास्तद्धितास्तदर्थमेतत्स्यात् ॥**

(प्रदीपः) **येऽनीकारा इति** । यथा भानोरियमिति वृद्धाच्छः—भानवीया । अत्र टाब्बाधनार्थमिदं वचनं स्यात् ॥

(उद्द्योतः) भाष्ये—**अनीकारा इति** । ईकारांप्राप्तियोग्या इत्यर्थः ॥

(ज्ञापकसाधकभाष्यम्)

**यत्तर्ह्याख्याग्रहणं करोति । न हि तद्धितान्तमाख्या भवति ॥**

(प्रदीपः) **न हि तद्धितान्तमिति** । तद्धितान्तस्य शब्दस्य प्रकृत्यर्थे पुंस्यवर्तनादिति भावः । तदेवमाख्याग्रहणं तस्येदमिति भेदविवक्षायामपि तद्धितोत्पत्तिमन्तरेण प्रष्ठशब्दस्य स्त्रियां वृत्तित्वं साधुत्वञ्च ज्ञापयति । 'तेन न केवला प्रकृतिः प्रयोक्तव्या' इति नियमो न प्रवर्तेत इत्युक्तम् ॥

(उद्द्योतः) **प्रकृत्यर्थे पुंसीति** । एवं च पुमाख्यायाः स्त्रियामवृत्तेः सूत्रवैयर्थ्यमेवेति भावः । ननु प्रसूतादौ ङीप्व्यावृत्तये तस्य

१ देवदत्तः पञ्चभिर्हलैः कृषतीत्यत्र यथा पञ्चभिर्हलैः कर्षणमितरेषां साहाय्येन सम्पाद्यते कर्षणकर्तृत्वभाक् च भवति तथा पतिसाहाय्यके प्रस्थानेऽपि कर्तृत्वं स्त्रिया इत्यर्थः ॥

२ 'आपद्यते यथा' इति च. पाठः ।

३ न तु भर्त्रा वधः क्रियते बन्धनं वा । किन्तु भर्तृपापकृतानि वधबन्धनानीति भावः ॥

४ " " एतच्चिन्हांकितो ग्रन्थ अस्मत्सविधे प्रमाणत्वेनाश्रितेषु पुस्तकेषु नोपलभ्यते । तथाप्यस्याध्यायस्य कानिचन पत्राण्यशुद्धप्रायाणि दशद्वादशसंख्याकानि संगृहीतानि तेषूपलम्भादस्य पाठस्य, चिह्नसहितोऽत्र निवेशः॥

५ 'लिङ्गमुपदधाति' इति क. पाठः ।

६ प्रातिपदिकार्थानां स्वार्थ, द्रव्य, लिङ्ग, संख्या, कारकाणां क्रमेणैव बोधस्याभियुक्तैः स्वीकारात् ॥

७ ननु ङीपि सत्यन्तोदात्तत्वम्, ङीपि चान्तानुदात्तत्वमिति विशेष एवेत्यत आह—उदात्तेति । अण्णन्तान्ङीप्यपि अण उदात्तत्वेनोदात्तनिवृत्तिस्वरेण ङीप इकारस्याप्युदात्तत्वमिति भावः ॥

८ छ. पुस्तके 'काराः स्त्रीप्रत्ययास्तदर्थं' इति पाठः ।

९ अनीकारा इत्यत्र ईकारान्तभिन्ना इत्याशङ्कावारणार्थमाह—"ईकारप्राप्तीति ॥

न्चारितार्थ्यात्कथं ज्ञापकत्वमिति चेन्न । व्याख्यानात् पुंयोगादित्यस्य पुंशब्दः [1] स्वार्थयोगात्स्त्रियां वर्तेत इत्यर्थकरणेन तद्वारणात् ॥

( तृतीयपक्षोपस्थापकं भाष्यम् )

**अथ वा[2] पुनरस्तु—तस्येदमित्यनेनाभिसंबन्धेन ।**

**ननु चोक्तम्—पुंयोगादाख्यायां तद्धितलुग्वचनमिति ।**

**नैष दोषः ।**

**नावश्यमयमेवाभिसंबन्धो भवति—तस्येदमिति । अयमप्यभिसंबन्धो भवति—सोऽयमिति ।**

**कथं पुनरतस्मिन् 'सः' इत्येतद्भवति ?**

**चतुर्भिः प्रकारैरतस्मिन् 'सः' इत्येतद्भवति—तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यादिति ।**

**तात्स्थ्यात्तावत्—मञ्चा हसन्ति, गिरिर्दह्यते ॥**

**ताद्धर्म्यात्—जटिनं यान्तं ब्रह्मदत्त इत्याह । ब्रह्मदत्ते यानि कार्याणि जटिन्यपि तानि क्रियन्त इत्यतो जटी ब्रह्मदत्त इत्युच्यते ॥**

**तत्सामीप्याद्—गङ्गायां घोषः, कूपे गर्गकुलम् ॥**

**तत्साहचर्यात्—कुन्तान् प्रवेशय, यष्टीः प्रवेशयेति ॥**

**( प्रदीपः )** अस्मिंस्तु व्याख्याने तद्धितस्य नित्यो बाधः प्राप्नोतीति 'सिद्धं तु स्त्रियाः' इत्येतत्[3]पक्षान्तराश्रयेण व्याचष्टे—**अथ वेति ॥ अनेनाभिसंबन्धेनेति** । एतत्पूर्वकेण सोऽयमिति संबन्धेनेति भावः ॥ इतरो भेद[4]संबन्ध एवाननोक्त इति मत्वाऽऽह—**ननु चेति ॥ अयमपीति** । अभेदाच्च भेद[5]स्य निवृत्तत्वात्तद्धितानुत्पत्तिः । भेद[6]स्य तु विवक्षायां तद्धितो न निवार्यते ॥

**कथं पुनरिति** । भिन्नानामभेदाभावादिति प्रश्नः ॥ **चतुर्भिरिति** । आरोप्यते ताद्रूप्यम्, न तु मुख्यमित्यर्थः ॥ **मञ्चा हसन्तीति** । अत्र बालेषु मञ्चत्वारोपान्मञ्चशब्दप्रवृत्तिर्हसन्तीति पदान्तरप्रयोगाद्विज्ञायते ॥ **जटिनमिति** । ब्रह्मदत्तधर्मलाभात्तद्रूपारोपः । 'सिंहो माणवकः' 'गौर्वाहीकः' इत्यादावपि ताद्धर्म्यात्ताद्रूप्यारोपात्तच्छब्दप्रवृत्तिः । तदुक्तं हरिणा—

**गोत्वानुषङ्गो वाहीके निमित्तात्कैश्चिदिष्यते ।**
**अर्थमात्रं विपर्यस्तं शब्दः स्वार्थे व्यवस्थितः ॥** इति ॥

इह[7] तु साहचर्यात् स्त्रियां प्रष्ठत्वारोपः ॥

**( उद्द्योतः ) नित्यो बाध इति** । तथा च प्राष्ठ्य[8] इमा इत्यसाधु स्यादिति भावः ।

इदं[9] चिन्त्यम्—सर्वथा बाधकल्पनाऽपेक्षया ईदृशे विषये तस्य वैकल्पिकत्वज्ञापनस्यैवौचित्यात् । तच्चेदं ज्ञापकं स्त्रीप्रत्ययङीष्विषयमेवेति नान्यत्रानया रीत्या प्रकृतिमात्रस्य साधुत्वमिति न पक्षयोः फलभेदः । परन्तु-आख्यायामित्यस्योक्तार्थतात्पर्यग्राहकतया चारितार्थ्येन ज्ञापकत्वासम्भव इत्यरुचिर्वक्तुमुचिता ॥ ननु[10] पूर्वव्याख्यानेऽपि तस्येदमिति सम्बन्धस्यैवोक्तेः पक्षभेदोऽनुपपन्न इत्यत आह—**एतत्पूर्वकेणेति** ॥ प्राष्ठी[11]त्यस्य तर्हि कथं साधुत्वमत आह—**भेदस्त्विति ॥ आरोप्यत इति** । आरोपे च हेतवस्तात्स्थ्यादयः । शक्य[12]तावच्छेदकप्रकारक एव लक्ष्यार्थबोध इति भावः । तत्प्रका[13]रकप्रतीतिविशेष्यप्रसिद्धार्थत्वम्—मुख्यत्वम्, तादृशाप्रसिद्धार्थत्वं च गौणत्वम् ॥ **अत्र बालेष्विति** । मुख्यमंचपदार्थस्याचेतनत्वेन हसनकर्तृत्वासम्भवादित्यर्थः ॥ **ताद्धर्म्यादिति** । शौर्या[14]दियोगात् माणवकवाहीकयोः सिंहत्वगोत्वारोप इति भावः ॥ **गोत्वानुषङ्ग इति** ।

१ प्रसूतशब्दो हि पुंसि गर्भाधाननिमित्तक एव, स्त्रियाञ्च गर्भाधानोत्तरकालं तन्निःसरणरूपप्रसवनिमित्तः । यश्च पुंवाचकः प्रसूतशब्दस्तस्य स्त्रियां वृत्तिर्नास्ति, गर्भाधानकर्तृत्वस्य तास्वसम्भवात् ॥

२ अत्र कथम्पुनरयम्प्रष्ठशब्दोऽकारान्तः स्त्रियां वर्तेत इत्याद्याक्षिप्य तस्येदमित्यनेनाभिसम्बन्धेनेति प्रथमपक्षोपस्थापनं कृतम् । तस्मिंश्च पक्षे तद्धितलुक् वक्तव्य इति दोषमुद्भाव्य तस्यामेवम्प्रष्ठशब्दो वर्तते यथा भर्तृकुलान् क्लेशान् लभत एवम्प्रष्ठशब्दमपीति द्वितीयपक्षव्याहृतिः । अयं च पक्षः—अन्तरङ्गत्वाट्टापि समासे ततो विशिष्टस्याकारान्तत्वं नेति दूष्यते । अतश्चाख्याग्रहणसामर्थ्यात्तस्येदमित्यभिसम्बन्धे कृतेऽपि स्त्रीप्रत्ययविषये न तद्धितोत्पत्तिरिति ज्ञापयित्वा प्रथमः पक्षः समर्थ्यते । 'अथवा पुनरस्तु' इत्यनेन च पक्षद्वयाभ्यामप्याभ्यां तृतीयः पक्षः समार्थितो भवति । स च सोऽयमित्यभिसम्बन्धरूपः । तस्येदमित्यभिसम्बन्धे स्वीकृते तद्धितलुक् वक्तव्यो भवति । स च दोषः सोऽयमित्यभिसम्बन्धे स्वीकृते नैवापततीत्यस्य पक्षस्य समाश्रयः ॥

३ इत्यस्माद्भिन्नपक्षान्तराश्रयणेनेत्यर्थः । 'सिद्धं तु स्त्रियाः' इत्यादि वार्तिकोद्भावितपक्षे प्राप्तस्य तद्धितस्य ज्ञापकादिना वारणं कृतम् । स दोषो नात्र । सोऽयमित्यभिन्नार्थे तद्धितप्राप्तेरभावादिति भावः ॥

४ अथवा पुनस्तु तस्येदमित्यादिभाष्येण भेदसम्बन्धस्तस्येदमित्ययमेव व्याख्यातो नान्य इत्याशयकवान्—**ननु चोक्तमित्यादिना** पृच्छति ॥

५ सोऽयमित्यभिसम्बन्धरूपादभेदात्, भेदस्य तस्येदमिति पक्षस्य निवृत्तत्वात्तद्धितो न प्राप्नोतीति भावः ॥

६ तस्येदमित्यभिसम्बन्धस्य स्वीकारे ज्ञापकादिनाऽपि तद्धितो निवारयितुमशक्यः । यत्त्वाचार्योऽऽख्याग्रहणं करोतीत्यादि भाष्यमप्येतदभिप्रायकमेव । अत एव च भगवता पक्षान्तरमुपन्यस्तम्—**अथ वा पुनरित्यादिना** ॥

७ ननु पुंवाचकः प्रष्ठशब्दः कथं स्त्रियां तदाह—**इह तु साहचर्यादिति** ॥

८ प्रष्ठशब्दात्तद्धितप्रत्ययानुत्पत्तेः 'प्राष्ठी' इति रूपं नैव भवति 'प्रष्ठी' इति प्राप्नोति—इत्यस्यासाधुत्वं स्यादिति भावः ॥

९ अत्रेयं चिन्ता—आख्याग्रहणस्य प्रसूतादौ ङीष्व्यावृत्तये—यः पुंशब्दः स्वार्थयोगात्स्त्रियां वर्तेते तस्मात्पुंयोगे ङीष्—एतत्तात्पर्यपरत्वेन ज्ञापकत्वं न सम्भवति ॥

१० पक्षभेदः स्फुटम्प्रतिपादयति—**ननु पूर्वव्याख्यानेऽपीति** ॥

११ एवञ्च सोऽयमिति सम्बन्धे ङीषि प्रष्ठी, तस्येदमिति भेदसम्बन्धस्वीकारे प्राष्ठी—इत्युभयोरपि भिन्नविषयत्वेन नोभयोरनुपपत्तिरिति ज्ञापयितुमवतारयति—**प्राष्ठीत्यस्येति** ॥

१२ सिंहो माणवक इत्यादौ सिंहपदेन सिंहत्वावच्छिन्नमाणवकस्य बोधः, न तु माणवकत्वावच्छिन्नस्येत्यर्थः ॥

१३ सिंहत्वप्रकारकप्रतीतिविशेष्यो यः प्रसिद्धार्थः सिंहरूपस्तत्त्वं मुख्यार्थत्वम् । सिंहत्वप्रकारकप्रतीतिविशेष्यो योऽप्रसिद्धार्थो माणवकरूपस्तत्त्वं गौणत्वमिति समन्वयः ॥

१४ आदिपदेन जाड्यादीनां संग्रहः । माणवके शौर्यगुणस्य सत्त्वेन माणवके सिंहत्वारोपः । जाड्यगुणयोगाच्च वाहीके गोत्वारोप इति भावः ॥

गोत्वसम्बन्ध इत्यर्थः ॥ नन्वन्यधर्मस्यान्यत्र कथं सम्बन्धोऽत आह—**निमित्तादिति** । शौर्यादिरूपादित्यर्थः ॥ **विपर्यस्तमिति** । अन्यत्र विद्यमानमर्थरूपम्, अन्यत्रारोपितमित्यर्थः ॥ **स्वार्थे**=गोत्वे । **कैश्चि**-दित्यस्य पातञ्जलैरित्यर्थः । सामीप्यात् गंगायां घोषः, अत्र तीरे सामीप्यात् गंगात्वारोपः, गंगासम्बन्धितीरे लक्षणायां तु तस्येदमित्यण्णन्तस्यैव तत्रार्थे साधुत्वेनासाधुत्वम् । एवं मत्वर्थादिलक्षणायामपि प्रकृतेरसाधुत्वम् । साहचर्यं च सम्बन्धमात्रोपलक्षणम् ॥

**( द्वितीयवार्तिकखण्डनभाष्यम् )**

**अथ वा पुनरस्तु तस्यामेव प्रष्ठशब्दः ।**

**ननु चोक्तम्—'सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः' इति ।**

**नैष दोषः ॥**

( प्रदीपः ) **अथ वेति** । संविधात्रीत्वात् प्रस्थाने कर्तृत्वं स्त्रियाः, पुरुषगताया वा प्रस्थानक्रियायास्तस्यामारोपादिति भावः ॥

( उद्द्योतः ) अत्र पक्षे पुंयोगहेतुकस्त्रीवृत्तित्वाभावादाह—**पुरुषगताया वेति** । आरोपे निमित्तं च तत्साहचर्यम् ॥

**( ५१७५ परिभाषावार्तिकम् ॥ ५ ॥ )**

## ॥ * ॥ गतिकारकोपपदानां कृद्भिः सह समासवचनम् ॥ * ॥

**( भाष्यम् ) गतिकारकोपपदानां कृद्भिः सह समासो भवतीत्येषा परिभाषा कर्तव्या ॥**

**( परिभाषाप्रयोजनभाष्यम् )**

**कानि पुनरस्याः परिभाषायाः प्रयोजनानि ?**

**( ५१७६ प्रयोजनवार्तिकम् ॥ ६ ॥ )**

## ॥ * ॥ प्रयोजनं क्तादल्पाख्यायाम् ॥ * ॥

**( भाष्यम् ) अभ्रविलिप्ती, सूपविलिप्ती ।**

**सुबन्तानां समासः । तत्रान्तरङ्गत्वाट्टाप् । टाप्युत्पन्ने समासः । विलिप्ताशब्दः समस्येत । तत्र 'क्तादल्पाख्यायाम्, ( ४।१।५१ ) अकारान्तादिति ङीष् न प्राप्नोति ॥**

( प्रदीपः ) **अभ्रविलिप्तीति** । अभ्रशब्दस्य तृतीयान्तस्य विलिप्ताशब्देन 'कर्तृकरणे कृता' इति समासः । ततः करणपूर्वादिति वर्तमाने 'क्तादल्पाख्यायाम्' इति ङीष् न प्राप्नोति । वचनसामर्थ्याट्टाबन्तादपि भविष्यतीति चेदत इत्यधिकारो बाध्येत, परिभाषा चान्यार्थाऽवश्यं कर्तव्या । अथ वा वचनात् प्रातिपदिकाधिकारो बाध्येत, ततश्च वाक्ये ङीष् प्रसज्येत—अभ्रैर्विलिप्ता द्यौरिति ॥

( उद्द्योतः ) **बाध्येतेति** । अबाधेनोपपत्तौ बाधो न न्याय्य इति भावः ॥ ननु तदबाधाय परिभाषाकरणे गौरवमत आह—**परिभाषा चेति** ॥

**( ५१७७ द्वितीयं प्रयोजनवार्तिकम् ॥ ७ ॥ )**

## ॥ * ॥ जातेर्ङीष्विधाने ॥ * ॥

**( भाष्यम् ) जातेर्ङीष्विधाने प्रयोजनम्—व्याघ्री, कच्छपी ।**

**सुबन्तानां समासः । तत्रान्तरङ्गत्वाट्टाप्युत्पन्ने समासः । घ्राशब्दः समस्येत । तत्र 'जातेरस्त्रीविषयादयोपधात्' ( ४।१।६३ ) अकारान्तादिति ङीष् न प्राप्नोति ॥**

( प्रदीपः ) **व्याघ्रीति** । व्याङ्पूर्वाज्जिघ्रतेः 'घ्रः संज्ञायां प्रतिषेधः' इति शस्य प्रतिषेधात् 'आतश्चोपसर्गे' इति कप्रत्ययः । तत्र घ्रशब्दमात्रं जातौ न वर्तत इति टाबेव स्यात् । ङीषस्तु सूकर्यादिरवकाशः ।

( उद्द्योतः ) **शस्य**=पाघ्रेत्यादिना विहितस्य । वस्तुतो जिघ्रादेशस्य तेन प्रतिषेध इति शप्रत्ययांत एव व्याघ्रशब्द इति बोध्यम् ॥ **घ्रशब्दमात्रमिति** । किन्तु व्याघ्रशब्द इति भावः ॥ **सूकर्यादिरिति** । सूतेः करगिति मत इदम् । प्रोष्ठीत्यादिरिति पाठान्तरम् । प्रोष्ठी=सूकरीत्याहुः ॥

**( ५१७८ तृतीयं प्रयोजनवार्तिकम् ॥ ८ ॥ )**

## ॥ * ॥ समासान्तस्य णत्वे ॥ * ॥

**( भाष्यम् ) समासान्तस्य णत्वे प्रयोजनम् । वक्ष्यति—प्रातिपदिकान्तस्य णत्वे समासान्तग्रहणमसमासान्तप्रतिषेधार्थमिति । तस्मिन् क्रियमाणे—माषवापिणी, व्रीहिवापिणी । सुबन्तानां समासः । तत्रान्तरङ्गत्वान्नकारान्तत्वान्ङीप् । ङीप्युत्पन्ने समासः । वापिनीशब्दः समस्येत । तत्र समासान्तस्येति णत्वं न प्राप्नोति ॥**

( प्रदीपः ) **समासान्तग्रहणमिति** । समासस्य प्रातिपदिकस्य योऽन्तो नकारस्तस्य णत्वमिति[10] तत्र माषान् वपत्य-

१ सिंहे विद्यमानमर्थरूपं माणवके आरोपितमित्यर्थः ॥

२ गंगैव तीरमिति सोऽयमित्यभिसम्बन्धेन गंगात्वस्य तीरे आरोपस्तेन च गंगापदेन तीरमुच्यते । गंगासम्बन्धितीर इत्यर्थस्वीकारे 'तस्येदं' इत्यनेन तद्धितप्रत्ययः स्यात्, तथाच तीरे गंगाशब्दप्रयोगस्यासाधुत्वम् ॥

३ तदबाधाय=अत इत्यधिकारस्य बाधाभावाय परिभाषाकरणे गौरवमिति सा न कर्तव्या । तेनात इत्यधिकारस्य बाधो न भवेदत आह—ननु तदबाधायेति ॥

४ 'परिभाषायाः करणे' इति ध. पाठः ।

५ 'निषेधात्' इति क. ।

६ ननु घ्रशब्दमात्रं जातौ नास्तीति ङीषोऽप्राप्तिः । एवं चैतत्परिभाषाऽभावे जातेरस्त्रीत्यस्य चारितार्थ्यमेव न स्यादिति तत्सामर्थ्याद्व्याघ्रादिभ्यो ङीष् स्यादित्याशङ्कायामाह—ङीषस्त्विति ॥

७ घ्रः संज्ञायाम्प्रतिषेध इति वार्तिकेन जिघ्रादेशस्यैव तेन निषेधः क्रियते, शप्रत्ययस्तु भवत्येवेति भावः ॥

८ वार्तिकमेतत्प्रातिपदिकान्त ( ८।४।११ ) इति सूत्रे ।

९ एवञ्च माषवापिणीत्यादिसिद्ध्यर्थं गतिकारकोपपदानामित्यावश्यकमिति भावः ॥

१० 'मित्यर्थः । तत्र' इति छ. ।

भीक्ष्णमिति 'बहुलमाभीक्ष्ण्ये' इति णिनौ कृते 'ऋन्नेभ्यः' इति ङीपि कृते सुबन्तेन यदि समासः स्यात्तदा समासस्यान्त इकारो न तु नकार इति णत्वं न स्यात् । माषवापिण[1] इत्यादा[2]वेव तु स्यात्॥

( उद्योतः ) अभीक्ष्णमिति । तच्[3]छीलस्याप्युपलक्षणम् ॥

( ५१७९ चतुर्थं प्रयोजनवार्तिकम् ॥ ९ ॥ )

**॥ * ॥ कृदन्तात्तद्धिते वृद्धिस्वरौ च ॥ * ॥**

**( भाष्यम् ) कृदन्तात्तद्धिते वृद्धिस्वरौ च प्रयोजनम् । सांकूटिनम्, व्यावक्रोशी । अत्रावयवादुत्पत्तिः प्रसज्येत ।**

**गतिकारकोपपदानां कृद्भिः सह समासो भवतीति न दोषो भवति ॥**

( प्रदीपः ) **सांकूटिनमिति** । 'अभिविधौ भाव इनुण्' इतीनुण्प्रत्ययः । तत्र कूटिन्नित्येतस्माच्छब्दात्समासार्था विभक्तिश्च प्राप्नोति, 'अणिनुणः' इत्यण्प्रत्ययश्च । तत्र स्वार्थिकत्वात्—अन्तरङ्गत्वादण्प्रत्ययः स्यात् । ततश्च कूटिन्नित्यस्यैवाङ्गत्वादादिवृद्धिः स्यात् । प्राक् सुबुत्पत्तेः समासेऽन्तरङ्गत्वात् पूर्वं समासः । अण्प्रत्ययो हि प्रातिपदिकविशेषापेक्षत्वाद् बहिरङ्गः । तत्र संकूटिन्नित्यस्मात्समासप्रातिपदिकादण्प्रत्यये सतीष्टं सिध्यति ॥ **व्यावक्रोशीति** । 'कर्मव्यतिहारे णच् स्त्रियाम्' इति णच् । 'णचः स्त्रियाम्' इत्यञ् ।

( उद्योतः ) **स्वार्थिकत्वादिति** । एवं चात्यन्तस्वार्थिकानां सुबुत्पत्तेः पूर्वमेव प्रवृत्तिरिति भावः । अन्यथा तस्यापि सुबन्तादुत्पत्तौ पूर्वं सुपि, इनुणन्तत्वरूपाधिकपदार्थसापेक्षतया बहिरङ्गाण्प्रत्ययादन्तरङ्गत्वात्पूर्वं समासे ततो विशिष्टादणि रूपसिद्धौ भाष्यमसङ्गतमेव स्यात् । भाष्योक्तः स्वरदोषस्तु व्यावक्रोशीत्यत्र—प्रथमं तद्धिते तदन्तेन समासे[4]—अन्तोदात्तं स्यात् । समासोत्तरमञि तु—आद्युदात्तमिति बोध्यम् ॥ **विशेषापेक्षत्वादिति** । इनुणन्तत्वरूपाधिकपदार्थापेक्षत्वादित्यर्थः ॥

( परिभाषाऽऽक्षेपभाष्यम् )

**सत्यामप्येतस्यां परिभाषायामवयवादुत्पत्तिः प्राप्नोति ।**

**किं कारणम् ?**

**प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणं भवतीति ॥**

( प्रदीपः ) **सत्यामपीति** । 'णचः' 'इनुणः' इति प्रत्ययग्रहणात्—प्रत्ययग्रहणपरिभाषोपस्थानात् कूटि[5]न्नित्यादेरेवावयवात्तद्धितोत्पत्तिप्रसङ्ग इत्यर्थः ॥

( परिभाषान्तरेण समाधानभाष्यम् )

**कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणं भवतीति संघातादुत्पत्तिर्भविष्यति ॥**

( प्रदीपः ) **कृद्ग्रहण इति** । अनया परिभाषया प्रत्ययग्रहणपरिभाषा बाध्यत इत्यर्थः ॥

( उद्योतः ) **बाध्यते इति** । नन्वियं तद[6]प्राप्तविषयसंग्राहिका, अतएवापिना तदर्थस्यापि संग्रहः परिभाषायामिति चेन्न । गत्यादिसमवधाने बाधिकैव तस्या इत्याशयात् । अपिस्तु गत्याद्यभावे तावन्मात्रस्यापि ग्रहणार्थ इति भावः ॥

( परिभाषान्तरेण परिभाषाखण्डनभाष्यम् )

**यदि तर्ह्येषा परिभाषास्ति, नैतदस्याः परिभाषायाः प्रयोजनं भवति, एतयैव सिद्धम् ॥**

( प्रदीपः ) **नैतदस्या इति** । गतिकारकोपपदानामित्यस्याः सांकूटिन[7]मित्यादि न प्रयोजनम् । अकृत एव समासे कृद्ग्रहणपरिभाषया संघातात्तद्धितोत्पत्तिर्भविष्यतीति भावः ॥

( परिभाषोपपादकभाष्यम् )

**न सिध्यति ।**

**किं कारणम् ?**

**अप्रातिपदिकत्वात् ।**

**कृत्त्वात् प्रातिपदिकसंज्ञा भविष्यति ॥**

**ननु चेदानीं प्रातिपदिकसंज्ञायामप्येतया परिभाषया इह शक्यमुपस्थातुम् ।**

**नेत्याह ।**

**इह हि मूलकेनोपदंशं भुङ्क्ते इति वाक्येऽपि लुक् प्रसज्येत ॥**

**स्वरे च दोषः स्यात्—प्रकारकः, प्रकरणम् । गतिकारकोपपदात् कृदन्तमुत्तरपदं प्रकृतिस्वरं भवतीत्येष स्वरो न स्यात् ॥**

**नैष दोषः ।**

**द्वे अत्र प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रयः स्वरो भविष्यति ॥**

( प्रदीपः ) **अप्रातिपदिकत्वादिति** । 'णचः स्त्रियामञ्' 'अणिनुणः' इत्यत्र प्रातिपदिकाधिकाराद्—णजन्तादिनुणन्ताच्च प्रातिपदिकात्तद्धितो विधीयते । तत्र कृद्ग्रहणपरिभाषया णजिनुणन्तत्वं सिध्यति, न तु प्रातिपदिकत्वम् । तत्र समासग्रहणेन

---

१ वचनस्य चारितार्थ्यम्प्रदर्शयति—माषवापिण इति ॥

२ 'इत्यादेरेव तु' इति छ. ।

३ णिनिप्रत्ययविधायके 'सुप्यजातौ णिनिस्ताच्छील्ये' इति सूत्रे जातिभिन्ने सुप्युपपद इत्यर्थेन माषवापीत्यत्र माषपदस्य जातिवाचकत्वेन ताच्छील्ये णिनिर्न प्राप्नोतीति 'बहुलमाभीक्ष्ण्ये' इति णिनिः कृतः प्रदीपकृता । एवञ्च तच्छीलस्याप्युपलक्षणमित्युद्योतोक्तिस्तु चिन्त्या ॥

४ समासस्वरेणान्तोदात्तं स्यादिति भावः । समासोत्तरमञि तु 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तमिति भावः ॥

५ तस्यैव—इनुणन्ततदादित्वादिति भावः । अवयवात्—संकूटिन्—इत्यस्यावयवात् ॥

६ कृद्ग्रहण इति परिभाषाप्रत्ययग्रहणे यस्मादित्यस्या अविषयस्यापि संग्राहिका । अत एवापिशब्देन प्रत्ययग्रहण इत्येतदर्थस्यापि संग्रह इत्यर्थः ॥

७ कृद्ग्रहणपरिभाषास्वीकारेऽपि गतिकारकोपपदानामित्यस्या न सर्वाणि प्रयोजनानि सिध्यन्ति, किन्तु सांकूटिनमित्यादीन्येवेति भावः ॥

नियमार्थेन संघातस्य प्रातिपदिकसंज्ञानिषेधात्संघातात्तद्धितो न स्यादित्यर्थः ॥

**ननु चेति** । 'कृत्तद्धितसमासाश्च' इत्यत्रापि कृद्ग्रहणे कृद्ग्रहणपरिभाषया संकूटिन्नित्यस्य विनाऽपि[1] प्राक् सुबुत्पत्तेः समासेन प्रातिपदिकसंज्ञा भविष्यति, तन्निबन्धनश्च[2] तद्धित इति भावः ॥ **मूलकेनोपदंशमिति** । 'उपदंशस्तृतीयायाम्' इति णमुल् । अत्र यदि सगतिकारकस्य कृदन्तस्य प्रातिपदिकसंज्ञा स्यात्, तदा प्रातिपदिकान्तर्वर्तित्वात्सुब्लुक् प्रसज्येत । यद्येवं 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति विकल्पेन समासविधानस्य किं प्रयोजनम्? इति चेत्—दधि उपदंशं भुङ्क्ते इत्यत्र पक्षे प्रकृतिभावः । अन्यथाऽसत्यस्मिन् विकल्पविधाने 'अमैवाव्ययेन' इति नित्यसमासः स्यात् । ततश्च सिन्नित्यसमासयोः शाकलप्रतिषेधो वक्तव्य इति प्रकृतिभावः प्रतिषिध्येत ॥

**प्रकारक इति** । अत्र समुदायस्य प्रातिपदिकसंज्ञायां सत्यां सुबुत्पत्तौ पदव्यपदेशोऽस्ति, न तूत्तरपदव्यपदेशः; तत्र समुदायस्य कृदन्तव्यपदेशे तदन्तर्भावाद् गतेः तस्मात्[3] कृदन्तमुत्तरपदं न भवतीति कारकशब्दस्य प्रकृतिस्वरो न स्यात् । वचनं किमर्थमिति चेत्, उपपदार्थं स्याद्—अमावास्येत्यादौ । गतिकारकग्रहणं तूत्तरार्थं स्यात् । अथवा वचनस्याप्रतिपादकत्वलक्षणमप्रामाण्यं स्यात् ॥

**द्वे इति** । गतिकारकपूर्वस्यापीत्यत्रापिशब्दात्कारकशब्दस्यापि प्रत्ययान्तस्य प्रातिपदिकसंज्ञा, प्रकारकशब्दस्यापि समुदायस्येत्यर्थः ॥ **तदाश्रय इति** । कारकशब्दस्यापि[4] प्रातिपदिकसंज्ञायां सत्यां गतिकारकोपपदानामित्येतदनाश्रयणे सुप्युत्पन्ने समासे कृते, अपिग्रहणात्कारकशब्दस्यापि कृदन्तत्वात् गतेरुत्तरत्वात् स्वरो भविष्यतीत्यर्थः ॥

**( उद्द्योतः ) न तु प्रातिपदिकत्वमिति** । प्रत्ययग्रहणपरिभाषया कृदन्तत्वाभावादिति भावः ॥ अर्थवत्सूत्रेणापि नेत्याह—**तत्र समासेति** ॥ भाष्ये—इतर आह—**कृत्वादिति** ॥ तदेव विवृणोति—**ननु चेदानीमिति** ॥ **एतया परिभाषया इहेति** । कृद्ग्रहणपरिभाषयेत्यर्थः ॥ **सुब्लुक् प्रसज्येतेति** । तद्व्यावृत्तये समासग्रहणकृतनियमेन परत्वात्कृदंतत्वप्रयुक्तसंज्ञाया अपि बाधोऽवश्यं वाच्यः । एवं च फलाभावात् नैतत्परिभाषोपस्थितिस्तत्रेति भावः ॥ **सिन्नित्यसमासयोरिति** । नित्यग्रहणाभावेऽपि समासे प्रतिषेधः प्राप्नोतीत्यपि बोध्यम् ॥ **प्रतिषिध्येतेति** । स्वरेऽपि विशेषो बोध्यः समासासमासयोः । एवं च प्रकृतिभावः समासप्रयोजनम्, तथा विशेषणानन्वय-संख्याभानाभावावित्यपि बोध्यम् ॥ **पदव्यपदेशोऽस्तीति** । समुदायस्येति शेषः ॥ **नतूत्तरपदेति** । उत्तरखण्डस्येति शेषः, समासाभावादिति भावः ॥ **तस्मादिति** । यत् कृदन्तं तदुत्तरपदं न, यच्च गतेरुत्तरं तत् न कृदन्तम्, नापि पदम्, समुदायस्यैव पदत्वात्, समासाप्राप्तिरपि तत एवेति भावः । अयं भावः—गतिसमवधाने विशिष्टस्यैव कृदन्तत्वमिति ॥ ननूत्तरार्थत्वे तत्रैव कार्यमत आह—**अथवेति** ॥ एकदेश्याह भाष्ये—**नैष दोष इत्यादि** ॥ ननु कृद्ग्रहणपरिभाषायां सत्यां कथमवयवस्य प्रातिपदिकत्वमत आह—**गतिकारकेति** । गतिसमवधानेऽपि—अपिशब्दात्केवलस्येत्यर्थ इत्यभिमानः ॥

( दोषापादकभाष्यम् )

**इहापि तर्हि—सांकूटिनं, व्यावक्रोशीति द्वे अत्रापि प्रातिपदिकसंज्ञे, अवयवस्यापि समुदायस्यापि । तत्रावयवस्य या प्रातिपदिकसंज्ञा तदाश्रया अवयवादुत्पत्तिः प्रसज्येत ॥**

( उद्द्योतः ) तद्दूषयति—**इहापीति** । कृदन्तत्वादवयवस्य प्रातिपदिकत्वम्, ततः सुपि समासे विशिष्टस्यापि प्रातिपदिकत्वमिति द्वे इत्यर्थः । एवं चावयवादुत्पत्तौ सांकूटिन-कौम्भकारेयाद्यसिद्ध्या नैवं परिभाषार्थः, किन्तु प्रागुक्त एव ॥ एवं च समुदायस्याप्रातिपदिकत्वात्सांकूटिनासिद्ध्या तत्सिद्धये एषाऽपि तदर्थमावश्यकीत्याह भाष्ये—तस्मादिति[13] ॥

( आक्षेपभाष्यम् )

**अवयवादुत्पत्तौ सत्यां को दोषः?**

**कौम्भकारेयो न सिध्यति, अवयवस्य वृद्धिस्वरौ स्याताम् ।**

( प्रदीपः ) **कौम्भकारेय इति** । एतच्चोपलक्षणम् ।

१ अत्र सुबुत्पत्तेः प्राक् समासेन विनाऽपि प्रातिपदिकसंज्ञाऽसमस्तस्य संकूटिन्नित्यस्य स्यादित्यन्वयः ॥

२ इनुणन्तत्वनिबन्धनप्रातिपदिकत्वनिबन्धन इत्यर्थः ॥

३ 'गते स्वस्मात्' इति क. ।

४ छ. पुस्तके 'कारकशब्दस्य प्राति' इति पाठः ॥

५ एवं च कृत्तद्धितेत्यत्र कृद्ग्रहणपरिभाषा न प्रवर्तत इत्येतत्प्रतिभाति । सा च यत्र कृद्विशेषग्रहणन्तत्रैवेति स्वीकारेऽत्र नोपस्थीयेत । तच्च न । कृत्सामान्यग्रहणे परिभाषोपस्थानाभावे 'नखनिर्भिन्नः' इत्यत्र समासो न स्यात् । अतः समासग्रहणकृतनियमेनैव विशिष्टस्य प्राप्ता संज्ञा वारणीयेति भावः ॥

६ ननु इकोऽसवर्णेति सूत्रे भाष्ये—नित्यग्रहणेन नार्थः, सित्समासयोः शाकलं न भवतीत्येव । इदमपि सिद्धम्भवति—वाप्यामश्वो वाप्यश्व इत्युक्तम् । एवञ्च तत्र नित्यग्रहणाभावे नायं दोष इत्याशङ्कावारणायाह—नित्यग्रहणाभावेऽपीति ॥

७ एवञ्च तृतीयाप्रभृतीन्यन्यतरस्यामिति समासविकल्पविधानस्य न वैयर्थ्यम्, समासे विशेषणानन्वयो भवति, विशेषणगतसंख्याभानाभावश्चेति; यदा न समासस्तदा नैत इति विकल्पस्य फलमित्यर्थः ॥

८ 'भानाभावे इत्यपि' इति ग. ज. पाठः ।

९ उत्तरपदशब्दो हि समासचरमावयवे रूढः, अतो न यावत्समासस्तावुत्तरखण्डस्योत्तरपदत्वव्यवहारोऽपि नेति भावः ॥

१० कृदन्तं प्रकारक इति, तन्नोत्तरपदम्, तस्मात्पूर्वपदस्याभावात्; यच्च गतेरुत्तरं कारक इति, तत् कृद्ग्रहणइति परिभाषया न कृदन्तम् । नापि पदम्, कृदन्तस्यैव प्रातिपदिकत्वेन तस्मादेव सुबुत्पत्तेर्विशिष्टस्यैव पदत्वम्, समासाप्राप्तिरपि कारकस्य पदत्वाभावादेवेत्यर्थः ॥

११ गतिसमवधाने विशिष्टस्यैव कृदन्तत्वमिति द्वे अत्र प्रातिपदिकसंज्ञे इत्येतद्भाष्यमनुपपन्नम् । विशिष्टस्यैव कृदन्तत्वमिति तु सिद्धान्तस्तदाह—एकदेश्याहेति । अत एवास्यैकदेशित्वम् ॥

१२ अपि शब्दात्—कृद्ग्रहणे गतीत्यादिपरिभाषास्थादपिशब्दादित्यर्थः ॥

१३ नातिदूरे सिद्धान्तभाष्यम्—तस्मात्प्रयोजनमेतदस्या इत्यादि ॥

सांकूटिनं व्यावक्रोशीत्यपि न सिध्यति । समुदायावयवसन्निधाने द्विर्वचनवत्समुदाय एव प्रकृतित्वेनाश्रयिष्यत इति चेत्प्रकारके दोषः स्यात् । समुदायस्य कृदन्तत्वे तदन्तर्भावाद्गतेः—तदाश्रयः स्वरो न स्यात् ॥

किञ्च समुदाये द्विरुक्ते अवयवा अपि द्विरुक्ता भवन्तीति पृथग्द्विर्वचनं न प्रयुज्यते । इह तु समुदायादुत्पत्तौ तस्यैवाङ्गसंज्ञायां तन्निबन्धनानि कार्याणि प्रवर्तन्ते, नावयवानामित्यवयवादपि प्रत्ययोत्पत्तिप्रसङ्गः । तत्र कुम्भकारशब्दे यदि कारशब्दस्यापि प्रातिपदिकसंज्ञा समुदायस्यापि, गतिकारकोपपदानामित्येतच्च नाश्रीयते तदा कारशब्दात्प्रातिपदिकान् ङीपि कृते कारीशब्दस्य स्त्रीप्रत्ययान्तत्वात्तत एव ढकि सति तस्यैवादिवृद्धिः स्यात् ॥

ननु चानुपसर्जनादिति सूत्रं प्रधानेन तदन्तविध्यर्थमित्युक्तम् । तत्र कारशब्दान्तान् ङीब् भविष्यति, तत्कथमुक्तं कौम्भकारेयो न सिध्यतीति? नैष दोषः । गतिकारकोपपदानामित्येतद्वचनमत्र प्रदेशे आक्षिप्तम् । अस्मिंश्चासति-उपपदस्य सुबन्तेन सह समासेन भाव्यम् । तत्रान्तरङ्गत्वात्कारशब्दादेव ङीपि सति सुबुत्पत्तौ सत्यां समासः प्रसज्येत । ततश्च कारीशब्दादेव ढक् स्यात् । यद्यपि स्त्रीप्रत्यये तदादिनियमो नास्ति, तथापि 'स्त्रीभ्यो ढक्' इति समुदायाड्ढकं बाधित्वा 'द्व्यचः' इति परत्वादन्तरङ्गत्वाद्वाऽवयवाड्ढक् प्रसज्येत । तस्मात् स्थितमेतत् 'कृत्तद्धितसमासाश्च' इत्यत्र कृद्ग्रहणपरिभाषा नोपतिष्ठते । यस्मात्—अप्रत्यय इत्यस्य प्रतिषेधस्य बाधनार्थं तत् कृद्ग्रहणम् । परिभाषोपस्थाने तु सति मूलकेनोपदंशं भुङ्क्ते इति वाक्यस्यापि स्यात् । तथा च समासग्रहणाद्यो नियमः स बाध्येत । मध्येऽपवादा इति न्यायाच्च 'अप्रत्ययः' इत्ययं निषेधः कृद्ग्रहणेन बाध्यते, न तु समासग्रहणकृतो नियमः । तत्र परत्वात्समासग्रहणेन गतिकारकपूर्वस्यापि कृदन्तस्य वाक्यस्य प्रातिपदिकसंज्ञाया निवर्तनात् यस्मात् कृद्विहितस्तदादेरेव कृदन्तस्य प्रातिपदिकसंज्ञाऽवतिष्ठते ॥

( उद्द्योतः ) न्यायासम्भवमपि दर्शयति—**किञ्चेति** ॥ **इत्येतच्च नाश्रीयत इति** । तदाश्रयणे ह्यन्तरङ्गत्वात्कारशब्देनैव पूर्वं समासे ततः प्रधानेन तदंतविधिसत्त्वात्समुदायादेव ङीपि समुदायादेव तद्धितः स्यादिति भावः ॥ **कारीशब्दादेवेति** । न तूपपदसहितात् ॥ **तथापीति** । तदादिनियमाभावात्कदाचित्कारीशब्दादपि 'स्त्रीभ्यः' इत्यनेनैव स्यादित्यपि बोध्यम् । यथोक्तं कैयटेनैव 'अनुपसर्जनात्' इत्यत्र **अन्तरंगत्वादिति** । स्त्रीभ्य इत्यत्र स्त्रीप्रत्ययान्तत्वस्याधिकस्यापेक्षणादस्यान्तरङ्गत्वमिति भावः ॥ अनुपस्थितौ प्रमाणान्तरं दर्शयति—**यस्मादित्यादिना** ॥ **अप्रत्यय इत्यस्येति** । अधातुरित्यस्यापीति बोध्यम् ॥ ननु तद्बाधेऽपीष्टापत्तिरत आह—**मध्येऽपवादा इति** ॥

( सिद्धान्तभाष्यम् )

**तस्मात्प्रयोजनमेवैतदस्याः परिभाषायाः, उभाभ्यां तु खलु सिध्यति ॥**

( प्रदीपः ) **तस्मादिति** । गतिकारकोपपदानामित्यस्याः सांकूटिनमित्यादि प्रयोजनमित्यर्थः ॥ **उभाभ्यामिति** । सांकूटिनादि परिभाषाद्वयेन सिध्यति, न केवलया कृद्ग्रहणपरिभाषयेत्यर्थः ॥

ननु च गतिकारकपूर्वस्यापीत्यपिग्रहणात् कूटिन्नित्यस्यापि इनुणन्तत्वादण् प्राप्नोति । नैष दोषः । उभयोरपीनुणन्तत्वे प्रातिपदिकत्वे चार्थविच्छेदाभावादवयवविच्छेदे प्रमाणाभावात्समुदायादेवोत्पत्तिर्भवति । असत्यां त्वेकतरस्यां परिभाषायामवयवस्यैवेनुणन्तत्वात्प्रातिपदिकत्वात्तत एव तद्धितोत्पत्तिः प्रसज्येत । 'गतिकारकोपपदात् कृत्' इत्यत्र तु गतिकारकयोर्भेदेनोपादानात् निमित्तभावाद्यथासंभवं क्वचित् केवलस्य कृदन्तस्य, क्वचित् गतिकारकपूर्वस्य गत्यादिभ्य उत्तरस्य स्वरो भवति । तदेवम्—गतिकारकोपपदानामिति वचनात् प्राक् सुबुत्पत्तेः समासे प्रष्ठशब्दोऽकारान्तः पुंयोगात् प्रस्थानासङ्गात्, पुंस्कर्तृकप्रस्थानक्रियायां संविधात्रीत्वाद्वा कर्तृत्वात् स्त्रियां वर्तते पुंसो वाचकश्च-इति प्रष्ठीत्युदाहरणं भवतीति ॥

( उद्द्योतः ) **परिभाषाद्वयेन**—गतिकारकोपपदानामिति, कृद्ग्रहण इति च । समासे कृते विशिष्टस्यैवेनुणन्तत्वात्, प्रातिपदिकत्वाच्च ॥ **अर्थविच्छेदाभावादिति** । वृत्तावेकार्थीभावेनावयवार्थस्य पृथक् निष्कर्षाभावात्, तन्मात्रगतस्वार्थस्य प्रत्ययेन प्रतिपिपादयिषायाः कर्तुमशक्यत्वात्तत्र प्रत्ययाभाव इति भावः ॥

परे तु शङ्कैवेयमसङ्गता, गतिकारकसमवधाने तत्पूर्वस्यैव ग्रहणन्तदसमवधाने केवलस्यापीत्येव तत्परिभाषाऽर्थात् । उक्तरीत्या भाष्यात्तथैव लाभात् । अनया प्रत्ययग्रहणपरिभाषा बाध्यत इति स्वोक्तेरसङ्गत्यापत्तेश्च । किञ्च सिद्धान्तोऽप्यसङ्गतः, अनुपसर्जनादिति सूत्रस्थ-

---

१ समुदायावयवसन्निधाने समुदाय एव प्रकृतित्वेनाश्रयिष्यत इत्याश्रीयमाणे कौम्भकारेयादौ न दोषः, तत्रावयवादुत्पत्तिरेव न स्यात् । एवं च प्रकारकादौ दोषः । तमेव दोषमभिव्यनक्ति—समुदायस्येत्यादिना ॥

२ छ. पुस्तके 'प्रयुज्यते' इति पाठः ।

३ समुदायद्विर्वचनन्यायस्यात्र न प्रसरः, यतः समुदायस्य द्विर्वचनेऽवयवा अपि द्विरुक्ता भवन्तीति नावयवानाम्पुनर्द्विर्वचनम् । इह कौम्भकारेयादिस्थले समुदायप्रयुक्तकार्येषु सत्स्वप्यवयवप्रयुक्तानि न भवन्तीति-अवयवानामपि पुनः कार्यप्रसङ्ग इति नास्य न्यायस्य विषय इति प्रतिपादयति—इह त्वित्यादिना ॥

४ अवयवानामङ्गसंज्ञानिबन्धानि कार्याणि न क्रियन्तेऽतोऽवयवादपि प्रत्ययोत्पत्तिप्रसङ्ग इत्यर्थः ॥

५ प्रातिपदिकसंज्ञेति शेषः ॥

६ समासापेक्षया पदान्तरसापेक्षत्वरूपबहिरङ्गत्वाभावात्—अत एवान्तरङ्गत्वात्प्रातिपदिकान्ङीपीत्यर्थः ॥

७ प्रधानेन=अण्णन्तेन तदन्तविधावण्णन्तान्तादित्येवमर्थः संपद्येत । ततश्च केवलात्कारशब्दान्ङीप् न स्यादेव । किन्तु कुम्भकारशब्दादेवेत्यनिष्टाशङ्काऽपि नास्तीति शङ्कितुराशयः ॥

८ यान्युद्द्योतपुस्तकान्युपलब्धानि तेषु सर्वेष्वपि 'अन्तरङ्गत्वमिति' इति प्रतीकं दृश्यते, तथापि-अन्तरङ्गत्वमित्यस्य कैयटे दर्शनाभावेनेदं 'अन्तरङ्गत्वादिति' प्रतीकत्वेन गृहीतम् ॥

९ सिद्धान्तः=अर्थविच्छेदाभावादवयवविच्छेदे प्रमाणाभावादित्यादिः । यद्येतत्सिद्धान्तत्वेन स्वीक्रियेत तदा-अत्र हि प्रत्ययग्रहणे यस्मात्स तदादेर्ग्रहणम्भवतीत्यवयवादुत्पत्तिः प्राप्नोतीति भाष्यमनुपपन्नमित्यर्थः ॥

स्यावयवादुत्पत्तिः प्राप्नोतीति भाष्यस्य निर्दलत्वापत्तेः । किञ्च येन-विधिस्तदन्तस्येति सूत्रस्थस्य समर्थः पदविधिरिति सूत्रशेषस्थस्य च भाष्यस्यासङ्गतेरित्याहुः ॥ तत एवेति । सामर्थ्यादिति भावः ॥ नन्वेवं गतिकारकोपपदादिति स्वरविधायके कृद्ग्रहण इत्युपस्थितौ प्रकारके स्वरो न स्यात्, अनुपस्थितौ इध्मप्रव्रश्चने प्रव्रश्चनस्य कृदन्तत्वाभावात्स्वरो न स्यादत आह—गतिकारकेति । एवञ्च तत्सूत्रे गतिकारकयोर्भेदेनोपादानसामर्थ्यात्, तयोरपि निमित्तत्वेन कृद्ग्रहणे गतीत्यस्याः प्रत्ययग्रहणे यस्मादित्यस्याश्चोपस्थितिरिति भावः ॥ पुंयोगात्स्त्रियां वर्तेत इत्यन्वयः कथमित्याह—प्रस्थानासङ्गादिति । साहचर्येण स्त्रियां प्रस्थानारोपादित्यर्थः ॥ संविधात्रीत्वाद्वेति । तदनुकूलसंविधानमपि धात्वर्थ इति भावः ॥

( ५१८० प्रासङ्गिकपूर्वपक्षवार्तिकम् ॥ १० ॥ )

**॥ * ॥ अवदातायां तु ङीप्प्रसङ्गः ॥ * ॥**

**( भाष्यम् ) अवदातायां ङीप् प्राप्नोति । अवदाता ब्राह्मणी । 'वर्णादनुदात्तात्तोपधात्तो नः' ( ४।१।३९ ) इति ॥**

( प्रदीपः ) **अवदातायामिति** । प्राक् सुबुत्पत्तेः समास इत्येतत्प्रसङ्गेनात्रेदमुक्तम्, वर्णादनुदात्तादित्यत्र तु वक्तव्यम् । अवदातशब्दो गौरवाचीति मन्यते ॥

( उद्द्योतः ) अवदातायामित्यस्य प्रकृतसूत्रेऽसंगतेः प्रसङ्गसंगतिं दर्शयति—**प्राक् सुबिति** । अवदातशब्दः 'वर्णानां तणति' इत्याद्युदात्तः, गतिकारकेति सुबुत्पत्तेः पूर्वं समासादकारान्तश्चेति ङीम्नकारयोः प्राप्तिः ॥

( समाधानभाष्यम् )

**नैष वर्णवाची ।**
**किं तर्हि ?**
**विशुद्धवाची । आतश्च विशुद्धवाची ॥**
**एवं ह्याह—**

**त्रीणि यस्यावदातानि**
**विद्या योनिश्च कर्म च ।**
**एतच्छिवं विजानीहि**
**ब्राह्मणाग्र्यस्य लक्षणम् ॥ इति ।**

( प्रदीपः ) **विशुद्धवाचीति** । वर्णान्तरव्यतिकीर्णेऽपि विशुद्धिमुपादाय प्रयुज्यते ॥

( उद्द्योतः ) **वर्णान्तरेति** । वर्णान्तरं गौरातिरिक्तम्, तद्युक्तेऽपि प्रयोगाद्गौरवाचीत्ययुक्तमिति भावः । एवञ्च गौरेऽपि विशुद्धिमादायैव प्रयोग इति तात्पर्यम् ॥

( अतिव्याप्तिपरिहारभाष्यम् )

**सूर्याद्देवतायां चाब् वक्तव्यः—सूर्यस्य स्त्री-सूर्या । देवतायामिति किमर्थम् ?**
**सूरी ॥**

( प्रदीपः ) **सूरीति** । सूर्यतिष्येति यलोपः ॥

---

( ६४३ विधिसूत्रम् ॥ ४ । १ । २ आ. २७ )

## १३०४ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक् ॥ ४ । १ । ४९ ॥

( आनुगधिकरणम् )

( ५१८१ अर्थनियामकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हिमारण्ययोर्महत्त्वे ॥ * ॥**

**( भाष्यम् ) हिमारण्ययोर्महत्त्व इति वक्तव्यम् । महद्धिमं हिमानी, महदरण्यमरण्यानी ॥**

( प्रदीपः ) **महद्धिममिति** । महत्त्वयोगे हिमारण्ययोः स्त्रीत्वम् ॥

( उद्द्योतः ) **महत्त्वयोग इति** । तेन महत्त्वोपाध्यभावेऽप्यत्र टाबिति भ्रमो न कार्य इति भावः ॥

( ५१८२ अर्थनियामकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ यवाद्दोषे ॥ * ॥**

**( भाष्यम् ) यवाद्दोष इति वक्तव्यम् । दुष्टो यवो यवानी ॥**

( प्रदीपः ) **यवानीति** । जात्यन्तरमेवाभिधीयते । दोषस्तु यवत्वजातेरभावे तदाकारानुकृतिमात्रमित्याहुः ॥

( उद्द्योतः ) **जात्यन्तरमेवेति** । न तु यवानामेव केनचित्कारणेन दुष्टत्व एतत्प्रवृत्तिरिति भावः । तर्हि दोष इत्ययुक्तमत आह—**दोषस्त्विति** ॥

( ५१८३ अर्थनियामकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ यवनाल्लिप्याम् ॥ * ॥**

**( भाष्यम् ) यवनाल्लिप्यामिति वक्तव्यम् । यवनानी लिपिः ॥**

(प्रदीपः) **यवनानीति** । 'तस्येदम्' इत्यणो बाधको ङीष् ॥

( उद्द्योतः ) **बाधक इति** । हिमादिसाहचर्यादस्मादपि मु-

---

१ ननु अवदातस्य स्त्रीत्वर्थस्यासम्भवेन नैतदुदाहरणमेतत्सूत्रे धर्तुं युक्तमित्याशङ्कायामाह—प्राक् सुबुत्पत्तेरित्यादि ॥

२ ननु अवदातशब्दस्य वर्णवाचकत्वं न प्रसिद्धम्, किन्तु विशुद्धवाचकत्वमेवेति वर्णादनुदात्तादित्यस्याप्युदाहरणमेतन्न सम्भवतीत्याशङ्कायामाह—अवदातशब्दो गौरेति ॥

३ अवदातशब्दस्याद्युदात्तत्वं प्रसाधयति—अवदात शब्द इति ॥

४ च. पुस्तके एतच्छिवे वि' इति पाठः । स च क्वाचित्कः ।

५ यदा तु सूर्यस्य स्त्री देवता काचन तदा—सूर्या, यदा च तस्य स्त्री मानुषी तदा—सूरी, कुन्तीत्यर्थः ॥

ख्यार्थादेव प्रत्यय इति भावः । "तथा च 'यावनी' इति प्रयोगो लिपावसाधुः । बोधकृतं वैलक्षण्यन्तु भगवतो नाभिमतमिति 'तस्येदमित्यपत्येऽपि' इत्यादिना भाष्य एव स्पष्टम् । भाषायान्तु साधुरेव" ॥

( ५१८४ प्राप्ताप्राप्तविकल्पवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ उपाध्यायमातुलाभ्यां वा ॥ * ॥**

( भाष्यम् ) **उपाध्यायमातुलाभ्यां वेति वक्तव्यम् । उपाध्यायी, उपाध्यायानी, मातुली, मातुलानी ॥**

( प्रदीपः ) **उपाध्यायेति** । उपाध्यायस्याप्राप्ते, मातुलस्य तु नित्यं प्राप्ते, आनुग्विकल्पते ॥

( उद्द्योतः ) **आनुग्विकल्पते इति** । ङीष् तु पुंयोगादिति नित्यमेवेति भावः । इदं च भाष्ये—उपाध्यायीत्युदाहरणाज्ज्ञायते । 'इङश्च' इति सूत्रे या स्वयमध्यापिका तस्यामुपाध्यायी, उपाध्याया, इत्युक्तेरिदं[3] पुंयोग एवेति ज्ञायते ॥

( ५१८५ विधिवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ मुद्गलाच्छन्दसि लिच्च ॥ * ॥**

( भाष्यम् ) **मुद्गलाच्छन्दसि लिच्चेति वक्तव्यम् । रथीरभून्मुद्गलानी ॥**

( प्रदीपः ) **मुद्गलानीति** । ङीषो लित्वादानुगाकारस्य लित्स्वरः ॥

( ५१८६ विधिवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ आचार्यादणत्वं च ॥ * ॥**

( भाष्यम् ) **आचार्यादणत्वं चेति वक्तव्यम् । आचार्यानी ॥**

( ५१८७ विकल्पविधायकवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ अर्यक्षत्रियाभ्यां वा ॥ * ॥**

( भाष्यम् ) **अर्यक्षत्रियाभ्यां वेति वक्तव्यम् । अर्या, अर्याणी, क्षत्रिया, क्षत्रियाणी ॥**

( प्रदीपः ) **अर्येति** । केचित्पुंयोग एवेच्छन्ति । अन्ये तु स्वार्थ एवेच्छन्ति । पुंयोगे तु—अर्यी, क्षत्रियीत्येव भवितव्यम् ॥

( उद्द्योतः ) **स्वार्थ एवेति** । इदमेव युक्तम्, अन्यथोपाध्यायीतिवत्—अर्यीति पक्षे ङीषमेवोदाहरेत् ॥

---

( ६४४ विधिसूत्रम् ॥ ४ । १ । २ आ. २८ ॥ )

## १३०५ क्रीतात् करणपूर्वात् ॥४।१।५०॥

( ङीषधिकरणम् )

( आक्षेपभाष्यम् )

**करणपूर्वादिति किमर्थम् ?**

**गवा क्रीता, अश्वेन क्रीता ।**

**करणपूर्वादित्युच्यमानेऽप्यत्र प्राप्नोति । एषोऽपि क्रीतशब्दः करणपूर्वः ॥**

( प्रदीपः ) **करणपूर्वादिति किमर्थमिति** । क्रियमाणेऽपि करणपूर्वग्रहणे पूर्वशब्दस्य व्यवस्थावाचित्वादनिष्टप्रसङ्ग इति पृच्छति ॥

( एकदेशिसमाधानभाष्यम् )

**विभक्त्या व्यवहितत्वान्न भविष्यति ॥**

( प्रदीपः ) **विभक्त्येति** । कर्मादीनां द्योतिका विभक्तय इति दर्शने इदमुच्यते । अन्यथा विभक्तेः करणाभिधाने व्यवधानाभावः ॥

( उद्द्योतः ) **कर्मादीनामिति** । शक्तीनामित्यर्थः ॥ **विभक्तेरिति** । पञ्चमीयम्, ततः करणबोधे इत्यर्थः । अस्माद्भाष्याद्योतकत्वपक्ष एव सिद्धान्त इति ज्ञायते ॥

( प्रत्याक्षेपभाष्यम् )

**यदि तर्हि विभक्तिरपि व्यवधायिका भविष्यति । 'मनसा क्रीती' इति न सिध्यति ॥**

( प्रदीपः ) **मनसा क्रीतीति** । 'मनसः संज्ञायाम्' इति तृतीयाया अलुक् ॥

( सिद्धान्तभाष्यम् )

**एवं तर्हि नैवं विज्ञायते करणं पूर्वमस्मात् क्रीतशब्दात् सोऽयं करणपूर्वस्तस्मात्करणपूर्वात् क्रीतशब्दादनुपसर्जनादिति ।**

**कथं तर्हि ?**

**करणमस्मिन् प्रातिपदिके पूर्वं तदिदं करणपूर्वम्, तस्मात्करणपूर्वात्प्रातिपदिकात्क्रीतान्तादनुपसर्जनादिति ॥**

( प्रदीपः ) **करणमस्मिन्निति** । पूर्वशब्दोऽवयववचनः, समासप्रातिपदिकं चान्यपदार्थस्तेन वाक्ये ङीष्न भविष्यतीत्यर्थः ॥

( उद्द्योतः ) करणपूर्वादित्यस्य करणत्ववान् योऽर्थस्तद्वाचकपूर्वादि-

---

१ "......" एतच्चिन्हांकितो भागः प्रायशो न दृश्यते । त्रुटितपुस्तकपत्रेषु दृष्ट इत्युद्धृतः ॥

२ 'विकल्प्यत इति' इति प्रतीकपाठः ग. ज. पुस्तकयोः ।

३ तत्र हि सूत्रे—अपादाने स्त्रियामुपसङ्ख्यानन्तदन्ताच्च वा ङीषिति वार्तिकव्याख्यानावसरे 'उपेत्याधीयते तस्या उपाध्यायी, उपाध्या' इति भाष्यकृतोक्तम् । अत्र टाप्प्रत्ययान्तरूपप्रदर्शनेन इदं सूत्रं पुंयोग एवेति ज्ञायत इत्यर्थः ॥

४ मुद्गलाच्छन्दसि लिच्चेत्यनेन मुद्गलान्ङीष्, स च लिद्भवति । तत्र 'लिति'

इत्यनेन प्रत्ययात्पूर्वस्योदात्तत्वं विधीयतेऽत आनुगाकारस्य लित्स्वर इति भावः ॥

५ क. पुस्तके 'दणत्वं वा' इति ।

६ क. पुस्तके 'दणत्वं वा वक्तव्यम्' इति पाठः ।

७ छ. पुस्तके 'केचित्तु पुं' इति पाठः ।

८ विभक्तेर्वाचकत्वपक्षे क्रीतशब्दस्य करणवाचकतृतीयापूर्वकत्वान्न व्यवधानमित्यर्थः ॥

९ कर्मत्वादिशक्तीनामिति भावः ॥

त्यर्थः ॥ समासप्रातिपदिकञ्चेति । अवयवेनावयविन आक्षेपादिति भावः । तत्सामर्थ्यादेव क्रीतान्तादिति तदन्तविधिरिति तात्पर्यम् ॥

---

( ६४५ विधिसूत्रम् ॥ ४ । १ । २ आ. २९ ॥ )

## १३०६ बहुव्रीहेश्चान्तोदात्तात्

## ॥ ४ । १ । ५२ ॥

( ङीषधिकरणम् )

( ५१८८ अतिव्याप्तिवारकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन्तोदात्ते जातप्रतिषेधः ॥ * ॥

( भाष्यम् ) **अन्तोदात्ते जातस्य प्रतिषेधो वक्तव्यः । दन्तजाता, स्तनजाता ॥**

( प्रदीपः ) **दन्तजातेति** । 'वा जाते' इत्यन्तोदात्तत्वं वा भवति ॥

( उद्द्योतः ) ननु दंतजातेतिबहुव्रीहौ पूर्वपदप्रकृतिस्वरप्राप्त्याऽन्तोदात्तत्वाभावादाह—**वा जात इति** ॥

( ५१८९ नियमवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पाणिगृहीत्यादीनां विशेषे ॥ * ॥

( भाष्यम् ) **पाणिगृहीत्यादीनां विशेष इति वक्तव्यम् । पाणिगृहीती भार्या चेत् ।**

**यस्या[2] हि यथाकथंचित्पाणिर्गृह्यते पाणिगृहीता सा भवति ॥**

( प्रदीपः ) **पाणिगृहीतीति** । यस्या अग्निसाक्षिपूर्वकं पाणिग्रहणं कृतं साऽभिधीयते ॥

( उद्द्योतः ) विशेषं दर्शयति—**यस्या इति** । भाष्ये—आदिपदार्थो हस्तगृहीतीत्यादिः ॥

( ५१९० अनियमवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ बहुलं तणि ॥ * ॥

( भाष्यम् ) **बहुलं तणीति वक्तव्यम् ।**

**किमिदं तणीति ?**

**संज्ञाच्छन्दसोर्ग्रहणम् ।**

**किं प्रयोजनम् ?**

( ५१९१ प्रयोजनवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ प्रबद्धविलून्याद्यर्थम्[4] ॥ * ॥

( भाष्यम् ) **प्रबद्धविलूनी, प्रबद्धविलूना ॥**

( प्रदीपः ) **प्रबद्धविलूनीति** । प्रबद्धं विलूनं यस्यामिति बहुव्रीहिः । अपरे तु कर्मधारयं कुर्वन्ति ॥

( उद्द्योतः ) **कर्मधारयमिति** । स च[5] बहुलग्रहणात्प्रकृते सुबुत्पत्तेः पूर्वमेवेति-अन्तरङ्गत्वादापि, अदन्तत्वाभावान् ङीषोऽप्राप्तिरिति न शङ्क्यम् ॥

( ५१९२ अतिव्याप्तिवारकवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ अन्तोदात्ताद्बहुनञ्सुकाल-सुखादिपूर्वात् ॥ * ॥

( भाष्यम् ) **अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वादिति वक्तव्यम् ॥**

**बहु—बहुकृता ।**

**नञ्—अकृता ।**

**सु—सुकृता ।**

**काल—मासजाता, संवत्सरजाता ।**

**सुखादि—सुखजाता, दुःखजाता, क्षिप्रजाता[6] ॥**

( प्रदीपः ) **बहुकृतेति** । बहूनि कृतान्यनयेति बहुव्रीहिः । 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यन्तोदात्तत्वम् । अकृता सुकृतेत्यत्र 'नञ्सुभ्याम्' इति । मासजातेत्यादौ 'जातिकालसुखादिभ्यः' इति । सुखादयः 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङर्थं गणे पठिता इह गृह्यन्ते ॥

( उद्द्योतः ) **बहुकृतादौ[7]** 'अस्वांगपूर्वपदाद्वा' इत्युत्तरसूत्रप्राप्तस्यापि निषेधः ॥

( ५१९३ अन्तोदात्तेतिवार्तिकप्रत्याख्यानवार्तिकम् ॥ ६ ॥ )

### ॥ * ॥ जातिपूर्वाद्वा ॥ * ॥

( भाष्यम् ) **अथ वा जातिपूर्वादिति वक्तव्यम् ॥**

( प्रदीपः ) **अथ वेति** । [8]बहुव्रीहावन्तोदात्तनिमित्तेष्वन्येषु निषिद्धेषु जातिरेवान्तोदात्तनिमित्तं क्तान्तस्यावशिष्यत इति जातिग्रहणमेवात्र कर्तव्यमित्यर्थः ॥

---

१ भार्यारूपविशेषेऽर्थे पाणिगृहीत्यादीनाम्प्रयोगदर्शनमित्यर्थः ॥

२ 'यस्या हि…सा भवति' इत्याद्यन्तो ग्रन्थो न दृश्यते क. पुस्तके ॥

३ उद्द्योते—आदिपदार्थः करगृहीतीत्यादिः ॥

४ प्रबद्धविलून्यादिप्रयोगसिध्यर्थं संज्ञाछन्दसोर्बहुलमिति वक्तव्यमित्यर्थः । अत्र हि बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेनान्तोदात्तत्वाभावादप्राप्तिः । यद्यत्र कर्मधारयः स्वीक्रियेत तदा बहुव्रीह्यभावेऽपि बाहुलकात्प्राप्तिः ॥

५ ननु कर्मधारयसुबुत्पत्तेः प्रागेव टापि अदन्तत्वाभावान्ङीषः प्राप्तिरेव नेत्यत आह—स च बहुलेति ॥

६ नैतदुदाहरणं क. छ. पुस्तकयोर्दृश्यते ।

७ बहुलं तणीति बाहुलकफलमाह—बहुकृतेति । बहुकृतेत्यत्र 'बहोर्नञ्वदुत्तरपदभूम्नि' इत्यनेन नञ्वदुत्तरपदस्य स्वरविधानं क्रियतेऽत अन्तोदात्तत्वेन बहुव्रीहेश्चान्तोदात्त इति प्राप्तो ङीष् बाहुलकाद्बाध्यत इत्यर्थः ॥

८ अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वादिति वार्तिकेन बहुव्रीहावन्तोदात्तनिमित्तकानां सर्वेषां निषेधकरणेन जातिरेवावशिष्यत इति जातिपूर्वादन्तोदात्ताद्बहुव्रीहेर्ङीषित्येव वक्तव्यम्, तेन बहुकृतेत्यादौ ङीषः प्राप्तिरेव नेति न दोष इति भावः ॥

( ६४६ विधिसूत्रम् ॥ ४ । १ । २ आ. ३० ॥ )

## १३०७ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात् ॥ ४ । १ । ५४ ॥

( स्वाङ्गलक्षणाधिकरणम् )

( जिज्ञासाभाष्यम् )

**स्वाङ्गाच्चोपसर्जनादित्युच्यते,**
**किं स्वाङ्गं नाम ? ॥**

( प्रदीपः ) **किं स्वाङ्गमिति** । किं स्वमङ्गं स्वाङ्गमाहोस्विल्लक्षणान्तरप्रयुक्तमिति प्रश्नः ॥

( उद्द्योतः ) [1]ननु लोकत एव स्वांगशब्दः प्रसिद्धोऽतः प्रश्नानुपपत्तिरत आह—**किं स्वमिति** । तदाश्रयणे 'दीर्घनासिक्यर्चा' इत्यादावव्याप्तिः । [2]अङ्गशब्दस्य चेतनशरीरावयवे रूढत्वात् ॥

( स्वाङ्गलक्षणम् )

**अद्रवं मूर्तिमत्स्वाङ्गं**
**प्राणिस्थमविकारजम् ।**
**अतत्स्थं तत्र दृष्टं च**
**तस्य चेत्तत्तथायुतम् ॥**

**अप्राणिनोऽपि स्वाङ्गम् ॥**

( प्रदीपः ) **अद्रवमिति** । द्रवतीति द्रवम् । ततोऽन्यदद्रवम् ॥ **मूर्तिः**—काठिन्यम् । अथ वा—[3]असर्वगतद्रव्यपरिमाणम्, सा यस्यास्ति तत्—मूर्तिमत् ॥ **अविकारजमिति** । विकारो वातादिवैषम्यम्, तस्माद्यन्न जातमित्यर्थः । [4]तथा—अप्राणिस्थमपि संप्रति, यत् पूर्वं प्राणिनि दृष्टं तदपि स्वाङ्गम् । यथा रथ्यापतिताः केशाः ॥ **तस्य चेदिति** । अप्राणिनोऽपि मुखं स्वाङ्गं भवति, यदि यथा प्राणिना तत्संबद्धं तथैवाप्राणिनापि ॥ **अप्राणिनोऽपीति** । तस्य चेत्तत्तथायुतमित्यस्य सामर्थ्यलभ्योऽयमध्याहारः ॥

( उद्द्योतः ) **अद्रवमित्यनेन** रुधिरादिव्यावृत्तिः ॥ नन्वेवमद्रवमिति व्यर्थं स्यादत आह—**अथवेति** ॥ आकाशादेर्मूर्तत्ववारणाय—**असर्वेति** । अविभुद्रव्यपरिमाणमित्यर्थः ॥ **'अविकारजम्'** इत्यनेन शोफादिव्यावृत्तिः ॥ ननु प्राणिनि दृष्टस्य कथमप्राणिस्थत्वमत आह—**सम्प्रतीति** ॥ **अप्राणिनोऽपीति** । **तस्येति** शेषत्वविवक्षायां षष्ठी, तेन=अप्राणिना तथायुतं चेदप्राणिनोऽपि स्वांगमित्यर्थः । तदाह—**अप्राणिनोऽपि स्वाङ्गमिति** ॥ **अध्याहार इति** । अन्त्यलक्षणद्वयप्रदर्शनमाद्यलक्षणे प्राणिस्थपदोपलक्षितार्थविवेचनायेति बोध्यम् ॥

( लक्षणपदकृत्यभाष्यम् )

**अद्रवमिति किमर्थम् ?**
**बहुलोहिता ।**
**नैतदस्ति । बह्वचो[5] नेति प्रतिषेधो भविष्यति ।**
**इदं तर्हि—बहुकफा ॥**
**मूर्तिमदिति किमर्थम् ?**
**बहुबुद्धिः, बहुमनाः ।**
**नैतदस्ति । अत इति वर्तते ।**
**इदं तर्हि—बहुज्ञाना ॥**
**प्राणिस्थमिति किमर्थम् ?**
**श्लक्ष्णमुखा शाला ॥**
**अविकारजमिति किमर्थम् ?**
**बहुगडुः, बहुपिटका ।**
**नैतदस्ति । इह तावद्बहुगडुरिति, अत इत्यनुवर्तते, बहुपिटकेति, बह्वचो नेति प्रतिषेधो भविष्यति ।**
**इदं तर्हि—बहुशोफा ॥**

( प्रदीपः ) **बहुलोहितेति** । लोहितं रुधिरमुच्यते ॥ **नैतदस्तीति** । [6]ङीषभावार्थं लोहितस्यास्वाङ्गत्वप्रतिपादनं नोपयुज्यते, 'स्वाङ्गे ध्रुवे' 'उपसर्गात् स्वाङ्गं ध्रुवमपर्शु' इत्यादिकार्याभावार्थं तूपयुज्यत एव ॥

( उद्द्योतः ) **रुधिरमिति** । न तु[7] रक्तवर्णमात्रमिति भावः ॥ **उपयुज्यत एवेति** । एवमुत्तरत्रापि[8] द्रष्टव्यम् ॥

( द्वितीयं स्वाङ्गलक्षणम् )

**अतत्स्थं तत्र दृष्टं च**

**अप्राणिस्थं प्राणिनि दृष्टं च स्वाङ्गसंज्ञं भवति । दीर्घकेशी रथ्या-इति ॥**

( तृतीयं स्वाङ्गलक्षणम् )

**तस्य चेत्तत्तथायुतम् ॥**

**अप्राणिनोऽपि स्वाङ्गसंज्ञं भवतीति । दीर्घनासिकी—अर्चा, तुङ्गनासिकी—अर्चेति ॥**

---

१ स्वमङ्गं स्वाङ्गमित्यादिप्रश्नोपपत्तिमाह—**नन्वित्यादिना** ॥

२ दीर्घनासिक्यर्चेत्यादौ नासिकायाः स्वांगत्वाभावे बीजमाह—**अङ्गशब्दस्येति** ॥

३ मूर्तेः काठिन्यरूपार्थम्परित्यज्य, असर्वगतद्रव्यपरिमाणमित्यर्थमाह । सर्वगतद्रव्यम्=विभुद्रव्यम्, तद्गतं यत्परिमाणं न भवति तत् । अत एव 'अविभुद्रव्यपरिमाणम्' इत्यर्थमाहोद्द्योते ॥

४ अतत्स्थं तत्र दृष्टञ्चेत्यस्यार्थमाह—**तथा-अप्राणिस्थेत्यादिना** ॥

५ 'न क्रोडादि बह्वचः' इति प्रतिषेध इत्यर्थः ॥

६ ङीषभावस्तु न क्रोडादिबह्वच इत्यनेन सिद्ध एव । लोहितस्य स्वाङ्गत्वाभावफलमाह—**स्वाङ्गे ध्रुवे-इत्यादिना** ॥

७ लोहितपदस्य रुधिररूपार्थकरणे प्रयोजनमाह—**ननु रक्तेत्यादिना** ॥

८ उत्तरत्रापि=बहुबुद्धिः, बहुमनाः, बहुगडुरित्यत्रापि । बुद्ध्यादीनां स्वाङ्गत्वनिराकरणस्य फलं न ङीषभावः, किन्तु स्वाङ्गे ध्रुव इत्यादिकार्याभावरूपमेव ॥

( उपसर्जनपदकृत्यभाष्यम् )

**अथोपसर्जनग्रहणं किमर्थम् ?**

**इह मा भूत्—अशिखा ॥**

( उद्योतः ) भाष्ये—**अशिखेति** । नन्वत्र बहुव्रीहौ उपसर्जनग्रहणे कृतेऽपि दोषः, अन्तरङ्गत्वादापि अदन्तत्वाभावेनोपसर्जनग्रहणाभावेप्यप्राप्तेश्च, अत एव तत्पुरुषोऽपि न, नञ्पूर्वकत्वेन 'सहनञ् विद्यमान' इति निषेधेनाप्राप्तेश्चेति चेन्न । शिखेत्यवयवस्यैव प्रत्युदाहरणत्वे तात्पर्यात् । क्वचित्तु शिखेत्येव पाठः ॥

( ५१९४ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात् ॥ * ॥**

( भाष्यम् ) **उपसर्जनग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**बहुव्रीह्यधिकारात् । बहुव्रीहेरिति प्रकृतमनुवर्तते ।**

**क्व प्रकृतम् ?**

**'बहुव्रीहेश्चान्तोदात्तात्' ( ४।१।५२ ) इति ॥**

( एकदेशिसमाधानभाष्यम् )

**बह्वजर्थं तर्हि उपसर्जनग्रहणं कर्तव्यम् । बह्वचो नेति प्रतिषेधं वक्ष्यति तद्बह्वज्ग्रहणमुपसर्जनविशेषणं यथा विज्ञायेत—बह्वच उपसर्जनान्नेति ॥**

( एकदेश्याक्षेपभाष्यम् )

**अथाक्रियमाणे उपसर्जनग्रहणे कस्य बह्वज्ग्रहणं विशेषणं स्यात् ?**

**बहुव्रीहेरिति वर्तते । बहुव्रीहिविशेषणं विज्ञायेत । अस्ति चेदानीं कश्चिदबह्वज् बहुव्रीहिः, यदर्थो विधिः स्यात्—अस्तीत्याह । स्वडा, स्वडीति ॥**

( प्रदीपः ) **अस्ति चेदानीमिति** । अनेकपदावयवत्वादबह्वच्त्वं बहुव्रीहेर्न संभवति, तत्र विधिसामर्थ्याद्बह्वज्ग्रहणमुत्तरपदविशेषणं भविष्यतीति मत्वा प्रश्नः ॥ **स्वडेति** । अडो वृश्चिकावयवविशेषः ॥

( उद्योतः ) भाष्ये—**अथाक्रियमाण इति** । बह्वच्ग्रहणस्य बहुव्रीहिविशेषणत्वे सुमुखीत्यादावपि निषेधापत्तिः । उपसर्जनविशेषणत्वे उपसर्जनीभूतबह्वजन्तात्प्रातिपदिकान्न[४] ङीषित्यर्थ इति भावः ॥

( ५१९५ एकदेशिसमाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **स्वाङ्गग्रहणं क्रियते, तद्बह्वज्ग्रहणेन विशेषयिष्यामः—स्वाङ्गाद् बह्वचो नेति ॥**

**एवं तर्हि अन्तोदात्तादिति वर्तते । अनन्तोदात्तार्थोऽयमारम्भः ॥**

( प्रदीपः ) **अनन्तोदात्तार्थ इति** । बहुव्रीह्यधिकारात् स्वाङ्गस्योपसर्जनत्वे लब्धे पुनरुपसर्जनग्रहणमुपसर्जनमात्रपरिग्रहार्थमित्यनन्तोदात्तादपि ङीष् भविष्यतीति भावः ॥

( उद्योतः ) कथम्पुनरुपसर्जनग्रहणे सत्यनन्तोदात्तान्ङीष्सिद्धिरत आह—**बहुव्रीहीति** ॥

( ५१९६ उपसर्जनग्रहणस्य निष्फलत्वबोधकं वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अनन्तोदात्तार्थमिति चेत् सहादिकृतत्वात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **यदयम् 'सहनञ्विद्यमानपूर्वाच्च' ( ४।१।५७ ) इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यः—अनन्तोदात्तादपि भवतीति ॥**

( प्रदीपः ) **सहादिकृतत्वादिति** । सहादीनां कृतः सहादिकृतः—प्रतिषेधः, तद्भावः सहादिकृतत्वम्, तस्मादित्यर्थः । सहादिपूर्वस्य हि बहुव्रीहेः पूर्वपदप्रकृतिस्वरे शेषनिघाते च नास्त्यन्तोदात्तत्वमिति प्रतिषेधं न विदध्यादिति भावः ॥

( उद्योतः ) **तस्मादिति** । भावप्रत्ययान्तेन पुनर्धर्मी लक्ष्यते । प्रियतद्धिता दाक्षिणात्या इति तदुच्चारणमिति भावः ॥ **प्रतिषेधं न विदध्यादिति** । तेन 'अन्तोदात्तात्' इत्यस्य निवृत्तिर्ज्ञाप्यत इति भावः ॥

( ५१९७ पूर्वपक्षवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ स्वाङ्गसमुदायप्रतिषेधार्थं तु ॥ * ॥**

( भाष्यम् ) **स्वाङ्गसमुदायप्रतिषेधार्थं तर्ह्युपसर्जनग्रहणं कर्तव्यम् ।**

**स्वाङ्गाद्यथा स्यात्,**

**स्वाङ्गसमुदायान्मा भूत्—कल्याणपाणिपादा ॥**

---

१ भाष्ये(सर्वेषूपलब्धपुस्तकेषु, 'शिखा' इत्येव पाठ उपलभ्यते । परंतु उद्द्योतपुस्तकेषु 'भाष्ये—अशिखेति' इति प्रतीकमुपलभ्यते, तदनुरोधादिमस्पाठमनुमीयास्माभिः स्थापितः ॥ उद्द्योते च क्वचित् 'शिखा' इत्येव पाठ इत्युक्तम्, तदप्यस्यार्थस्यैवोपोद्बलकम् । शेखरकृता चास्मिन् सूत्रे 'यद्यपि भाष्ये 'अशिखा' इति प्रत्युदाहृतम्' इत्युक्तम्, तदप्येतदेवावगमयति ॥

२ चो हेतौ, यत अन्तरङ्गत्वादापि अदन्तत्वाभावेनोपसर्जनग्रहणाभावेप्यप्राप्तिरत उपसर्जनग्रहणे कृतेऽपि दोष इत्यर्थः ॥

३ सूत्रे उपसर्जनग्रहणाभावे शिखेत्यत्रापि ङीष् प्राप्नुयात्तदर्थमुपसर्जनग्रहणमिति भावः ॥

४ उपसर्जनीभूतबह्वजन्तात्प्रातिपदिकादित्यर्थकरणेन सुमुखीत्यादौ न दोष इति भावः ॥

५ ननु सहादिकृतत्वादिति वार्तिके उक्तम्, तत्र भावप्रत्ययस्यार्थविशेषो न ज्ञायते । सहादिकृतात्प्रतिषेधादित्यस्यार्थस्यैव प्रकृत उपयुज्यमानत्वात्तदेतदाह—भावप्रत्ययान्तेनेति । त्वप्रत्ययोच्चारणन्तु वार्तिककृतस्तद्धितप्रियत्वमवगमयति ॥

अथ क्रियमाणेऽप्युपसर्जनग्रहणे कस्मादेवात्र न भवति ? स्वाङ्गं ह्येतदुपसर्जनम् ।

न स्वाङ्गसमुदायः स्वाङ्गग्रहणेन गृह्यते । यथा जनपदसमुदायो जनपदग्रहणेन न गृह्यते—काशिकोशलीया इति, जनपदतदवध्योरिति वुञ् न भवति ॥

एतदपि नास्ति प्रयोजनम् ।

अस्वाङ्गपूर्वादिति वर्तते, तेन स्वाङ्गं विशेषयिष्यामः—अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गं तदन्ताद् बहुव्रीहेरिति ।

यच्चात्रास्वाङ्गपूर्वपदात्परं स्वाङ्गम्, न तदन्तो बहुव्रीहिः ।

यदन्तश्च बहुव्रीहिः, न[1] तदस्वाङ्गपूर्वपदात्परं स्वाङ्गम् ॥

( प्रदीपः ) कल्याणपाणिपादेति । पाणी[2] च पादौ च पाणिपादन्तत्—कल्याणं यस्या इति बहुव्रीहिः । अत्र पाणिपादशब्द उपसर्जनम्, स च स्वाङ्गसमुदायवाची न तु स्वाङ्गवाची । यस्तु स्वाङ्गवाची पादशब्दः स उपसर्जनं न भवतीति ङीष् न भवति । असति तूपसर्जनग्रहणे पादशब्देन[3] स्वाङ्गवाचिना स्वाङ्गान्तो बहुव्रीहिर्भवतीति ङीष् स्यात् ॥ काशिकोशलीया इति । काशयश्च कोशलाश्चेति द्वन्द्वः । तत्र भवा इति 'अवृद्धादपि'[4] इति वुञ् न भवति, वृद्धलक्षणश्छ एव भवति ॥

( उद्द्योतः ) ननु[5] स्वांगसमुदायस्यास्वांगत्वादेव ङीषभावः सिद्धः, किमुपसर्जनपदेनेत्यत आह—असति त्विति । सति[6] तु तस्मिन् समासशास्त्रे प्रथमानिर्दिष्टत्वं समुदायस्येति न पादशब्द उपसर्जनम्, अन्यपदार्थविशेषणं च समुदाय एव; न केवलः पादशब्द इति तात्पर्यम् ॥ 'जनपद[7]तदवध्योश्च' इति प्रकरणोपलक्षणमित्याह—अवृद्धादपीति । जनपदत्वादेः प्रत्येकपर्याप्ततया समुदाये स्वांगत्वजनपदत्वयोरभाव इति दिक् ॥ भाष्ये—अस्वाङ्गपूर्वपदात्परं स्वाङ्गमिति । पाद[8]शब्दस्य व्यवहितत्वम्, पाणिपादेति समुदायस्य तु स्वांगसमुदायत्वान्न स्वांगत्वमिति भावः ॥

( आक्षेपभाष्यम् )

ननु च तत्[9] पूर्वस्मिन् योगे बहुव्रीहिविशेषणम् । नेत्याह ।

पूर्वपदविशेषणं तत्[10] । न स्वाङ्गमस्वाङ्गम्, पूर्वं पदं पूर्वपदम्, अस्वाङ्गं पूर्वपदमस्वाङ्गपूर्वपदम्, अस्वाङ्गपूर्वपदादिति ।

यद्येवं पूर्वस्मिन् योगे बहुव्रीहिरविशेषितो भवति । बहुव्रीहिश्च विशेषितः ।

कथम् ?

क्तादिति वर्तते तेन बहुव्रीहिं विशेषयिष्यामः । अस्वाङ्गात् पूर्वपदात्परं यत् क्तान्तं तदन्ताद् बहुव्रीहेरिति ॥

( प्रदीपः ) न स्वाङ्गमिति । पर्युदासाश्रयेण तत्सदृशं शब्दान्तरमर्थान्तरवाचि गृह्यत इत्यर्थः ॥

( उद्द्योतः ) बहुव्रीहिविशेषणमिति । अस्वाङ्ग[11]पूर्वपदादिति बहुव्रीहिरिति भावः ॥ पूर्वपदविशेषणमिति । कर्मधारय इति भावः ॥ ननु पर्युदासेन स्वाङ्गभिन्नस्य प्राणिस्थवाचकस्यैव ग्रहणं स्यादत आह—शब्दान्तरमिति । शब्दत्वेनैव सादृश्यं गृह्यत इत्यर्थः ॥

( सिद्धान्तभाष्यम् )

इदं तर्हि प्रयोजनम्—

बहुव्रीहेरिति वर्तमान[12] उपसर्जनग्रहणमुपसर्जनमात्राद्यथा स्यात्—निष्केशी यूका, अतिकेशी मालेति ॥

( प्रदीपः ) निष्केशीति । केशेभ्यो[13] निष्क्रान्तेति प्रादिसमासस्तत्पुरुषः ॥

( उद्द्योतः ) भाष्ये—उपसर्जनमात्रादिति । निष्केशीत्यादौ 'एकविभक्ति' इत्युपसर्जनत्वम्, अप्रधानत्वरूपमुपसर्जनत्वञ्चेति भावः ॥ न चैवं[14] कल्याणपाणिपादेत्यत्र[15] दोषः, तत्र स्वाङ्गरूपपादार्थस्य समाहारम्प्रति—अप्रधानत्वेऽपि न तस्य स्त्रीत्वम्, बहुव्रीह्यर्थम्प्रति तु समाहारस्योपसर्जनत्वेऽपि न पादस्य तत्त्वमिति वाच्यम् । यदन्तस्य स्त्रीत्वं तदर्थं प्रत्युपसर्जनस्वाङ्गांतस्यैव तस्य प्रत्यासत्त्या ग्रहणात् । अस्वाङ्गपूर्वपदात्परं यत्स्वाङ्गमित्यर्थेनैव वारणसंभवाच्चेति बोध्यम् ॥

---

१ 'बहुव्रीहिर्नाशेऽस्वाङ्ग' इति क. पाठः ।

२ कल्याणपाणिपादमित्यत्र ङीषभावमुपपादयति—पाणी चेत्यादिना ।

३ 'पादशब्देन स्वाङ्गान्तो' इति क. पाठः । अस्मिन् पुस्तके 'स्वाङ्गवाचिना' इत्यस्य न पाठः ॥

४ अवृद्धादपि बहुवचनविषयादित्यनेन काशिकोशलीया इत्यस्य जनपदवाचित्वाभावेन तस्माद्वुञ् न भवतीत्यर्थः । प्रत्येकस्य जनपदवाचित्वेऽपि समुदायस्य तद्वाचित्वाभावात् ॥

५ ननु स्वाङ्गसमुदायस्य यदि स्वाङ्गवाचित्वं न स्यात्तदा ततो ङीषभावार्थमुपसर्जनग्रहणमपि नावश्यकमित्येतत्प्रतिपादयति—ननु स्वाङ्गेत्यादिना ॥

६ पादशब्दस्य शास्त्रीयमशास्त्रीयञ्चोपसर्जनत्वन्निराकरोति—सति तु तस्मिन्नित्यादिना ॥

७ ननु काशिकोशलीया इत्यत्र जनपदतदवध्योश्चेति सामान्यसूत्रस्यापवादैर्बाधितत्वात्प्राप्तिरेव नास्तीति 'जनपदतदवध्योरिति वुञ् न भवति' इति भाष्यस्यानुपपत्तिं वारयति—जनपदतदवध्योश्चेतीति ॥

८ अस्वाङ्गवाचकात्कल्याणपदादव्यवहितपरत्वम्पादशब्दस्य नास्ति, यस्य च पाणिपादसमुदायस्याव्यवहितत्वं न तस्य स्वाङ्गत्वमिति भावः ॥

९ तत्=अस्वाङ्गपूर्वपदादित्येतत् ॥

१० तत्=अस्वाङ्गमित्येतत् ॥

११ अस्वाङ्गपूर्वपदादित्येतद्यदिबहुव्रीहिविशेषणं स्यात्तदा अस्वाङ्गपूर्वपदादित्ययमपि बहुव्रीहिरवकल्पनीयः, तदेतदाह—अस्वाङ्गपूर्वपदादितीति ॥

१२ 'वर्तत उपसर्जनमात्राद्यथा' इति छ. ।

१३ निष्केशीत्यादौ बहुव्रीहिशङ्कां वारयति—केशेभ्य इति ॥

१४ एवम्=उपसर्जनमात्राद्यथा स्यादित्यर्थ स्वीकारे ॥

१५ यथाकथञ्चिदुपसर्जनस्य ग्रहणे कल्याणपाणिपादेति समुदायार्थम्प्रत्यनुपसर्जनस्यापि पादरूपस्वाङ्गस्य समाहारम्प्रत्युपसर्जनत्वेन ग्रहणम्प्राप्नुयादित्येवंरूपो दोष इत्यर्थः । तदेव विवृणोति—तत्र स्वाङ्गेत्यादिना ॥ परिहरति—यदन्तस्येति । अत्र च पादान्तसमुदायार्थम्प्रति पादस्यानुपसर्जनत्वेन प्राप्तिरेव नेति न दोषः ॥ यदन्तस्येत्यादेरनुपयुक्तत्वञ्च प्रदर्शयति—अस्वाङ्गपूर्वेति ॥

( ६४७ विधिसूत्रम् ॥ ४ । १ । २ आ. ३१ ॥ )

## १३०८ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च ॥ ४ । १ । ५५ ॥

( ङीष्विकल्पाधिकरणम् )

( ५१९८ विधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ नासिकादीनां विभाषायां पुच्छाच्च ॥ * ॥

( भाष्यम् ) नासिकादीनां विभाषायां पुच्छाच्चेति वक्तव्यम् । कल्याणपुच्छी, कल्याणपुच्छा ।

( ५१९९ विधिवार्तिकम् ॥ २ ॥ )

॥*॥ कबरमणिविषशरेभ्यो नित्यम् ॥*॥

( भाष्यम् ) कबरमणिविषशरेभ्यो नित्यमिति वक्तव्यम् । कबरपुच्छी, मणिपुच्छी, विषपुच्छी, शरपुच्छी ॥

( प्रदीपः ) कबरपुच्छीति । कबरशब्देन वर्णविशेषोऽभिधीयते ॥

( उद्द्योतः ) अस्वाङ्गपूर्वपदात्परत्वं व्युत्पादयितुमाह—कबरशब्देनेति । न तु केशपाश इति भावः ॥

( ५२०० विधिवार्तिकम् ॥ ३ ॥ )

॥ * ॥ उपमानात्पक्षाच्च पुच्छाच्च ॥ * ॥

( भाष्यम् ) उपमानात्पक्षात्, पुच्छाच्चेति वक्तव्यम् । उलूकपक्षी शाला, उलूकपुच्छी सेनेति ।

( ५२०१ विधिनिषेधयोर्विप्रतिषेधबोधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो भवति विप्रतिषेधेन ।

नासिकादिभ्यो विभाषाया अवकाशः—कल्याणनासिकी, कल्याणनासिका ।

सहनञ्विद्यमानपूर्वलक्षणस्य प्रतिषेधस्यावकाशः—समुखा, अमुखा, विद्यमानमुखेति ।

इहोभयं प्राप्नोति—सनासिका, अनासिका, विद्यमाननासिकेति ।

सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो भवति विप्रतिषेधेन ।

नैष युक्तो विप्रतिषेधः ।

अयं विधिः ।

स प्रतिषेधः । विधिप्रतिषेधयोश्चायुक्तो विप्रतिषेधः ।

अयमपि विधिः—न मृदूनामिव कार्पासानां कृतः, प्रतिषेधविषय आरभ्यते । स यथैव बह्वज्लक्षणं संयोगोपधलक्षणं च प्रतिषेधं बाधते, एवं हि सहनञ्विद्यमानलक्षणमपि बाधेत ।

का तर्हि गतिः ? ॥

( प्रदीपः ) विधिप्रतिषेधयोरिति । विधिरुत्सर्गः, प्रतिषेधस्त्वपवाद इति तुल्यबलत्वाभावादस्या अप्राप्तेः सहादिलक्षणेनैव प्रतिषेधेन भाव्यमित्यर्थः ॥ न मृदूनामिति । मृदुभिः कार्पासैः कृतः पटो मृदुरेव भवति । अयं तु विधिः प्रतिषेधापवादत्वाद्बलवानित्यर्थः ॥ का तर्हीति । विधेरपि बलवत्त्वे विप्रतिषेधाभाव इति मन्यते ॥

( उद्द्योतः ) अपवाद इति । विध्युन्मूलकत्वादिति भावः ॥ अस्या अप्राप्तेरिति । विप्रतिषेधपरिभाषाया इत्यर्थः ॥ सहादिलक्षणेनैवेति । तल्लक्षणेन प्रतिषेधेनैव भाव्यम्, प्रतिषेधत्वात्, न तु विप्रतिषेधस्यायं विषय इति भावः । 'अस्या अपि प्राप्तेः' इति पाठे 'नासिकोदरौष्ठ' इति प्राप्तेरपि विप्रतिषेधं विनैव तेन प्रतिषेधः सिद्ध इति भावः ॥ मृदुभिरिति । भाष्ये करणस्य शेषत्वविवक्षायां षष्ठीति भावः ॥ प्रतिषेधापवादत्वादिति । बह्वज्लक्षणे संयोगोपधलक्षणे च प्रतिषेधे प्राप्तेऽस्यारम्भादिति भावः ॥ विधेरपि बलवत्त्वे विप्रतिषेधोपपत्तौ तदुपपत्त्याक्षेपो न युक्तोऽत आह—विधेरपीति । सर्वप्रतिषेधकत्वाद्विप्रतिषेधानुपपत्तिरित्यर्थः ॥

( विप्रतिषेधसमर्थकभाष्यम् )

इह तावन्नासिकोदर इति—

बह्वज्लक्षणश्च प्रतिषेधः प्राप्नोति, सहनञ्विद्यमानपूर्वलक्षणश्च ।

'पुरस्तादपवादा अन्तरान् विधीन् बाधन्ते' इत्येवमियं विभाषा बह्वज्लक्षणं प्रतिषेधं बाधिष्यते, सहनञ्विद्यमानलक्षणं न बाधिष्यते ।

ओष्ठजङ्घादन्तकर्णशृङ्गाच्चेति—

संयोगोपधलक्षणश्च प्रतिषेधः प्राप्नोति, सहनञ्विद्यमानपूर्वलक्षणश्च ।

१ 'पक्षाच्च पुच्छा' इति छ. पाठः ॥

२ अपवादबीजं प्रदर्शयति—विध्युन्मूलकत्वादिति ॥

३ 'सहादिलक्षणेनैव प्रतिषेधेन' इत्यस्य कैय्यटस्यार्थप्रदर्शयति—तल्लक्षणेनेति ॥

४ बह्वज्लक्षणे—न क्रोडादिबह्वच इत्येतस्मिन्, संयोगोपधलक्षणे-स्वाङ्गाच्चोपसर्जनादित्येतस्मिन् प्रतिषेध इत्यर्थः ॥

५ तदुपपत्त्याक्षेप इति । विप्रतिषेधोपपत्तिविषयक आक्षेप इत्यर्थः ॥

'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्येवमियं विभाषा संयोगोपधलक्षणं प्रतिषेधं बाधिष्यते, सहनञ्विद्यमानपूर्वलक्षणं न बाधिष्यते ॥

( प्रदीपः ) इदानीं यथा विप्रतिषेधोपपत्तिस्तथा दर्शयति—इह तावदिति ॥

( ६४८ आदेशविधिसूत्रम् ॥ ४ । १ । २ आ. ३२ )

## १३१३ दिक्पूर्वपदान्ङीप् ॥ ४।१।६० ॥

( ङीबादेशाधिकरणम् )

( ५२०२ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥*॥ दिक्पूर्वपदान्ङीषोऽनुदात्तत्वम् ॥*॥

( भाष्यम् ) दिक्पूर्वपदान्ङीषोऽनुदात्तत्वं वक्तव्यम् । प्राङ्मुखी, प्रत्यङ्मुखी ।

( ५२०३ द्वितीयाक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ ङीब्विधाने ह्यन्यत्रापि ङीष्विषयान्ङीप्प्रसङ्गः ॥ * ॥

( भाष्यम् ) ङीब्विधाने हि सति अन्यत्रापि ङीष्विषयान्ङीप् प्राप्नोति । प्राग्गुल्फा, प्रत्यग्ललाटा ।

ननु चैते विशेषा अनुवर्तन्ते—'असंयोगोपधात्' 'बह्वचो न' इति । यद्यप्येते विशेषा अनुवर्तेरन्—संयोगोपधाद्बह्वचो नेति । एवमपि दिक्पूर्वपदात् ङीपा मुक्ते ङीष् प्रसज्येत ।

नैष दोषः ।

उक्तमेतत्—यत्रोत्सर्गापवादं विभाषा तत्रापवादेन मुक्ते उत्सर्गो न भवतीति ॥

( प्रदीपः ) अन्यत्रापीति । यत्रापि प्रतिषिद्धो ङीषित्यर्थः । 'असंयोगोपधात्' इत्यादिकस्तु प्रतिषेधोऽनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ङीष एव भवति, नानेन विधीयमानस्य ङीपो लभ्यत इति भावः ॥ एवमपीति । वेत्यनुवर्तनाद्विकल्पेन ङीब् विधीयते, पक्षे प्राङ्मुखेत्यपि यथा स्यात् । तत्र ङीपा मुक्ते पक्षे ङीष् प्राप्नोतीत्यर्थः ॥ उक्तमिति । 'पारेमध्ये षष्ठ्या वा' इत्यादौ । ततश्च ङीपा मुक्ते टाबेव भविष्यतीति नार्थः सूत्रभङ्गेनेत्यर्थः ॥

( उद्द्योतः ) ङीष एवेति । 'स्वाङ्गाच्चोपसर्जनात्' इति विहित ङीष एवेत्यर्थः ॥ वेत्यनुवर्तनादिति । 'अस्वाङ्गपूर्वपदाद्वा' इत्यतो मण्डूकप्लुत्येति भावः ॥ तथाऽनुवृत्तौ मानमाह—प्राङ्मुखेत्यपीति । अत एवादेशपक्षेण न फलभेदः ॥ भाष्ये—यत्रोत्सर्गापवादमिति । सर्वविशेषानुवृत्तौ हि—अयं तस्यापवादः, तत्रैतदभावे तत्प्रसक्तावपवादत्वमेव भज्येतेति भावः ॥ सूत्रभङ्गेनेति । दिक्पूर्वपदान्ङीषोऽनुदात्तत्वमित्येवंरूपेणेत्यर्थः ॥

( सिद्धान्तभाष्यम् )

अथ वा ङीष आदेशो ङीप् करिष्यते ॥

तत्तर्हि ङीषोऽत्र ग्रहणं कर्तव्यम्?

न कर्तव्यम् ।

प्रकृतमनुवर्तते ।

क्व प्रकृतम्?

अन्यतो ङीषिति ।

तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ।

दिक्पूर्वपदादित्येषा पञ्चमी ङीषिति प्रथमायाः षष्ठीमिह प्रकल्पयिष्यति तस्मादित्युत्तरस्य (१।१।६७) इति ॥

प्रत्ययविधिरयम्, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ।

नायं प्रत्ययविधिः, विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥

( ६४९ विधिसूत्रम् ॥ ४ । १ । २ आ. ३३ )

## १३१४ जातेरस्त्रीविषयादयोपधात् ॥ ४ । १ । ६३ ॥

( जातिलक्षणाधिकरणम् )

( लक्षणभाष्यम् )

जातेरित्युच्यते, का जातिर्नाम?

**आकृतिग्रहणा जाति-**
**र्लिङ्गानां च न सर्वभाक् ।**
**सकृदाख्यातनिर्ग्राह्या**
**गोत्रं च चरणैः सह ॥**

---

१ 'अनुवर्तेरन् संयोगो' इति छ. 'अनुवर्तेरन् असंयोगो' इति च. पाठः ॥

२ यत्रापीति । ङीष्प्रतिषेधविषयेऽपि ङीप्प्राप्नुयादित्यर्थः ॥

३ ननु प्रकरणान्तरस्थङीषोऽसंयोगोपधादित्यादयो निषेधा न भवन्तीति सामान्यतो ङीष एवेति कथनमयुक्तं स्यादत आह—स्वाङ्गाच्चोपेति ॥

४ मध्ये विकल्पानुवृत्तेरसम्बन्धादाह—मण्डूकेति ॥

५ सर्वविशेषानुवृत्तौ हि अयम्=दिक्पूर्वपदादिति ङीप्, तस्य=ङीषोऽपवाद इत्यर्थः । तत्र यदि विकल्पवशात् दिक्पूर्वपदादिति ङीपोऽभावे यदि ङीष् भवेत्तदा तस्य ङीषोऽपवादत्वमेव नङ्क्ष्यतीति भावः ॥

६ ङीषोऽनुदात्तत्वमिति । ङीपोऽप्राप्तिविषये ङीषः प्रसक्तिर्मा भूदित्येतदर्थं ङीष एवानुदात्तत्वं विधीयते, न तु स्वतन्त्रो ङीप्प्रत्यय इत्येवंरूपेणेत्यर्थः ॥

७ 'विहितश्च प्रत्ययः' इति च. पाठः ॥

अपर आह—

**प्रादुर्भावविनाशाभ्यां**
**सत्त्वस्य युगपद् गुणैः ।**
**असर्वलिङ्गां बह्वर्थां**
**तां जातिं कवयो विदुः ॥**

**गोत्रं च चरणानि च ॥**

( प्रदीपः ) **का जातिरिति** । लक्षणविप्रतिपत्त्या **प्रश्नः** ॥ **आकृतिग्रहणेति** । गृह्यते[1]ऽनेनेति ग्रहणमिति करणसामान्ये पदं संस्क्रियते । तत्राकृतिशब्दसंनिधाने स्त्रीत्वप्रतिपत्तेः—बहिरङ्गत्वात् स्त्रीप्रत्ययनिमित्तं न भवति । आकृतिर्ग्रहणं यस्याः सा—**आकृतिग्रहणा**, अवयवसंनिवेशविशेषव्यङ्ग्येत्यर्थः ॥

एतेन[2] गोत्वादिजातिर्लक्षिता । ब्राह्मणत्वादिस्तु न संगृहीता, ब्राह्मणक्षत्रियादीनां संस्थानस्य सदृशत्वादिति तत्संग्रहायाह—**लिङ्गानामिति** । लिङ्गानि सर्वाणि भजतीति सर्वशब्दस्य लिङ्गापेक्षत्वेऽपि गमकत्वात् 'भजो ण्विः' इति ण्विप्रत्ययः । **लिङ्गाना**मिति कर्मणि षष्ठी । अप्रा[3]प्तप्रापणार्थं चेदं वचनमिति तटादेः सर्वलिङ्गत्वेऽप्याकृतिग्रहणत्वाज्जातिरूपोपपत्तिः । उपदेशापेक्षं च 'लिङ्गानाम्' इति जातिलक्षणमिति ब्राह्मणत्वादिरेव लक्ष्यते । तेन देवदत्तत्वस्यसर्वलिङ्गत्वेऽपि जातिलक्षणङीषभावः ॥ **सकृदिति** । 'अयं गौः' इति सकृदुपदिष्टा जातिर्निर्ग्रहीतुम्—निश्चेतुं पिण्डान्तरे शक्येत्यर्थः ॥

**गोत्रमिति** । अपत्यमित्यर्थः । चरणशब्देन शाखाऽध्यायिनो गृह्यन्ते । गोत्रस्य सर्वलिङ्गत्वात् पृथगुपादानम्, 'नाडायनं नपुंसकम्' इति दर्शनात् ॥

**प्रादुर्भावेति** । **सत्त्वस्य**=द्रव्यस्य प्रादुर्भावविनाशाभ्यां या—आविर्भावतिरोभावौ प्राप्नोति । यावद्द्रव्यभाविनीत्यर्थः । गुणैर्युगपद् द्रव्येण संबध्यते, यथा निर्गुणस्य द्रव्यस्योपलम्भो न भवति, एवं जातिरहितस्यापीत्यर्थः ॥ **बह्वर्थामिति** । सर्वव्यक्तिव्यापिनीमित्यर्थः । अर्थशब्दोऽत्र विषयवाची ॥ **चरणानीति** । चरणशब्दोऽध्ययनवचनः, इह तूपचारादध्येतृषु वर्तते ॥

**( उद्द्योतः )** ननु जातेर्लोके तन्त्रे च प्रसिद्धत्वात्प्रश्नानुपपत्तेराह—**लक्षणेति** । जनै[4]नेन प्राप्यत इति लक्षणमेके । जायेते अनया भिन्नेष्वाभिन्नाभिधानप्रत्ययावितीत्यन्ये । नित्यमेकमनेकानुगतं सामान्यमित्यन्ये, इत्येवं विप्रतिपत्त्येत्यर्थः ॥ ननु करणसाधनग्रहणशब्दस्याकृतिसमानाधिकरणतया स्त्रीत्वेन 'आकृतिग्रहणीका' इति प्राप्नोतीत्यत आह—**सामान्य इति** ॥ **स्त्रीप्रत्ययनिमित्तं न भवतीति** । स्त्रीत्वमिति शेषः ॥ नन्वाकृतिरपि जातिरेवेति जातिव्यङ्ग्या जातिरित्युक्तमत आह—**अवयवेति** ॥

ननु 'भजोण्विः' इत्यस्य सुप्युपपदे विधानात् पदविधितयाऽसामर्थ्ये कथं प्राप्तिरत आह—**गमकत्वादिति** । बोधकत्वादित्यर्थः, अबोधकत्वमेव ह्यसामर्थ्ये वृत्त्यप्राप्तौ बीजम् ॥ नन्वेवं तटादेः सर्वलिङ्गत्वाज्जातित्वं न स्यादत आह—**अप्राप्तेति** । पूर्वेण यत्राप्राप्तं जातित्वं तदर्थमिदमित्यर्थः । एतदभावेऽपि पूर्वलक्षणेन सिद्धिरिति भावः ॥ **सर्वलिङ्गत्वेऽपीति** । न च जात्याश्रयो द्रव्यं स[5]लिङ्गं न जातिरिति कथमेतत्तद्विशेषणमिति वाच्यम्, जातिद्रव्ययोरभेदात् । यद्वा—आकृतिग्रहणार्थकः शब्दः, सकृदाख्यातनिर्ग्राह्यासर्वलिङ्गार्थकः शब्दो जातिशब्द इति शब्दलक्षणमेतत् । ध्वनितं चेदमाकडारसूत्रे भाष्ये ॥ नन्वेवमपि देवदत्तत्वादेरसर्वलिङ्गत्वाज्जातित्वापत्तिरत आह—**उपदेशेति** । उपदेशसहायप्रत्यक्षेण एकत्र गृहीतब्राह्मणत्वस्य तद्भ्रातृपित्रादिरूपपिण्डान्तरे ग्रहणवन्न देवदत्तत्वं क्वचित्पिण्डान्तरे प्रतीयते । यद्यपि पिण्डान्तरस्यापि 'देवदत्त' इति संज्ञा, तथापि वाचकसादृश्यमेव न त्वर्थसादृश्यं तत्र प्रतीयत इति ॥ 'सकृदाख्यात' इत्युभयशेष इत्याह—**अयं गौरिति** । अनेन चानेकवृत्तित्वमेकत्वं चोपलक्ष्यत इति भावः । 'लिङ्गानां च न सर्वभाक्' इत्यनेन शुक्लादिव्यावृत्तिः, तेषां त्रिलिङ्गत्वात् । ब्राह्मणादिशब्दास्तु न त्रिलिङ्गा इति बोध्यम् ॥

**अपत्यमित्यर्थ इति** । अपत्याधिकारादन्यत्र लौकिकगोत्रग्रहणादिति भावः । प्रवराध्यायप्रसिद्धगोत्रप्रत्ययान्तमपत्यमित्यस्यार्थः 'एको गोत्रे' 'अणिञोः' इति सूत्रस्थभाष्यस्वरसात् । 'अवन्ति' इत्यादौ तादृशगोत्रत्वारोपाज्जातिकार्यनिर्वाह इत्यन्ये । **शाखाध्यायिन इति**—द्वन्द्वः । तेन कठी शाखेत्यपि सिद्धमिति **केचित्** । कठशाखेत्येव तत्र प्रयोग **इत्यपरे** ॥ शेषं पूरयति—**आविर्भावेत्यादि** । नित्यत्वादुत्पत्तिविनाशासंभवादेवमुक्तम् ॥ नन्वेवमात्मनः प्रादुर्भावविनाशाभावेनात्मत्वादेर्जातित्वं न स्यादत आह—**यावत् द्रव्येत्यादि** । एतदर्थोपलक्षणं तदित्याशयः ॥ **गुणैरिति** । इदमत्र लक्षणे स्वरूपकथनपरमेव । तेन द्रव्यगतजातिरेवात्र लक्ष्येति सूचितम् । **यावद्द्रव्य[6]भावित्वेन** युवत्वादीनां न जातित्वम् ॥ **बह्वर्थामित्यनेन**

---

१ ननु वार्तिकस्थम् 'आकृतिग्रहणा' इति रूपमशुद्धम् । तत्राकृतिसामानाधिकरण्यात् ग्रहणशब्दस्य स्त्रीत्वं समासात्प्रागेवावगतमिति ङीपः प्रसङ्गो दुरुद्धर एवेत्यत आह—**गृह्यतेऽनेनेत्यादिना** । पदान्तरसन्निधाने हि ज्ञायमानं स्त्रीत्वं बहिरङ्गमिति न तन्ङीपो निमित्तम्भवतीति भावः ॥

२ **एतेनेति** । प्रथमलक्षणेनेत्यर्थः ॥

३ ननु तटादिशब्दानां सर्वलिङ्गत्वेन जातित्वानुपपत्तिः । आकृतिग्रहणेत्यादिपूर्वलक्षणेन स्यादिति चेत् लिङ्गानाञ्च न सर्वभागित्यनेन सर्वलिङ्गवतां जातित्वं निषिध्यत इति न तत्पूर्वलक्षणेन स्यादत आह—**अप्राप्तप्रापणार्थमिति** । पूर्वलक्षणेनाप्राप्तस्य विधानमेवानेन क्रियते न तु निषिध्यत इत्यर्थः ॥

४ विप्रतिपत्तिप्रदर्शनाय कतिपयजातिलक्षणान्याह—**जननेनेत्यादिना** ॥ जननेन—उत्पत्त्या मनुष्यत्व—पशुत्व—पक्षित्वादीत्यर्थ इति प्रथमलक्षणस्याभिप्रायः । अनया जात्या भिन्नावपि वृषभौ वृषभरूपमेकमभिधानं लभेते, एकस्य च वृषभस्य ज्ञानात्सर्वेषामपि वृषभाणां ज्ञानम्भवतीति द्वितीयस्याभिप्रायः । तृतीयस्तु प्रसिद्ध एवेत्यादिलक्षणानां विप्रतिपत्तिदर्शनात्प्रश्नविषयेयं जातिरित्यर्थः ॥

५ **द्रव्यं सलिङ्गमिति** । जातिर्लिङ्गसहिता नास्ति किन्तु द्रव्यमेव सलिङ्गमित्यर्थः ॥

६ यावद्द्रव्यभाविपदार्थस्यैव जातिसंज्ञाकरणेन युवत्वादीनां न जातित्वम्, युवत्वादयो हि न यावद्द्रव्यगताः पदार्था इत्यर्थः ॥

'देवदत्त' इति संज्ञाशब्दे न दोषः ॥ **विषयवाचीति** । न प्रयोजनादिवाची । जात्याश्रयत्वाद्व्यक्तीनां विषयत्वोक्तिः । समानकालिकबहुव्यक्तिवृत्तिनीमित्यर्थः । तेन परिमाणभेदेन द्रव्यभेदेऽपि देवदत्तत्वादीनां न जातित्वम् ॥ '[1]चरणानि' इति नपुंसकत्वोपपत्तये आह— **चरणशब्द इति ॥ उपचारात्**—अध्ययनत्वारोपादित्यर्थः ॥

**( जातिलक्षणविशेषदर्शकभाष्यम् )**

**कः पुनरेतयोर्जातिलक्षणयोर्विशेषः ?**

**यथा पूर्वं जातिलक्षणं तथा—'कुमारीभार्यः' इति भवितव्यम् ।**

**[2]यथोत्तरं तथा—'कुमारभार्यः' इति भवितव्यम् ॥**

**( प्रदीपः ) कुमारीभार्य इति** । कौमारम्-अयावद्द्रव्यभावि-अपि-आकृतिग्रहणत्वाज्जातिरिति 'जातेश्च' इति पुंवद्भावप्रतिषेधः । उत्तरे तु लक्षणे कौमारं जातिर्न भवति, अयावद्द्रव्यभावित्वात् । पूर्वोक्तमेव लक्षणं भाष्यकारस्याभिमतम्, 'अपर आह' इत्यभिधानादित्याहुः । तथा च 'युवतितरा' इति ङ्याप्सूत्र उदाहरणं ददौ, 'तसिलादिषु' इति प्राप्तस्य पुंवद्भावस्य 'जातेश्च' इति निषेधात् ॥

**( उद्द्योतः ) आकृतिग्रहणत्वादिति** । बाल्यगतसूक्ष्मावयवसंनिवेशस्य सर्वत्रैकजातीयत्वादिति भावः ॥ नन्वेवं संदेहे कथं साधुत्वव्यवस्थेत्यत आह—**पूर्वोक्तमेवेति** । वस्तुतस्तु लक्षणद्वयप्रणेतृऋषिद्वयप्रामाण्याज्जातिकार्यस्य युवशब्दादौ विकल्पः । अत एव 'युवजानिः' 'युवतितरा' इत्यादौ द्विविधमप्यनुष्ठानं भगवतः । 'वृद्धा' 'स्थविरा' इत्यादौ त्वजादिपाठाट्टाप्-इति तत्त्वम् ॥

परे तु 'आकृतिग्रहणा' इत्येव लक्षणम् । आकृति[3]पदेनोपदेश्यमुपलक्ष्यते । तेन 'आकृत्युपदेशद्वारा साक्षाद्वोपदेशेन गम्या जातिः' इत्येव लक्षणमुभयसाधारणम् । 'लिङ्गानां च न सर्वभाक्' इत्यनेन 'विशेषणानां च' इति सूत्रस्थमाविष्टलिङ्गत्वं जातेरुक्तमनूदितम् । उत्तरलक्षणेऽसर्वलिङ्गामित्यस्य तावन्मात्रफलकत्वात् । 'सकृत्' इत्यनेनैकत्वमनेकवृत्तित्वं चोक्तम् । उत्तरलक्षणे बह्वर्थामित्यनेन तदेवोक्तम् । तत्र—असर्वलिङ्गत्वं प्रायिकम्, भाष्यप्रामाण्याज्जातिशब्दानां त्रिलिङ्गत्वमप्रामाणिकं वा । अत एव भाष्ये—'यथापूर्वं जातिलक्षणम्' इत्येकवचनं प्रयुक्तम् । वस्[4]तुतो भिन्नेष्वभिन्नं छिन्नेष्वच्छिन्नमिति परपशास्थभाष्यबोधितम् 'नित्यत्वे एकत्वे च सति अनेकानुगतत्वम्' एव जातिलक्षणं भाष्यसंमतं ब्राह्मणत्वघटत्वादिसाधारणम् । शुक्लादीनां नित्यत्वैकत्वमतेऽप्यौपाधिकभेदेनानेकत्वव्यवहारादेकत्वव्यवहाराभावाच्च न जातित्वम् । अत[5] एव 'जात्याख्यायाम्' इति सूत्रे 'यत्तद्व्रीहौ व्रीहित्वं गार्ग्ये गार्ग्यत्वं तस्यैकत्वादेकवचनम्' इति भाष्ये । अनेन तत्र जातित्वारोपो दर्शितः, 'गोत्रं च चरणैः सह' इत्यत्रत्यमपि तयोस्तत्त्वारोपबोधकमेव । डित्थत्वादौ तु न तत्त्वारोपः, जातिकार्यादर्शनात् । वयस्यपि जातित्वारोपः कार्यानुसारेण व्यवस्थित इति तद्विषयरू[6]पद्वयसिद्धिः 'अवन्ती' इत्यादौ तत्र गोत्रत्वारोपवत् । अत एवैतयोर्लक्षणयोर्व्याख्यानलेशोऽपि भगवता नाकारीति सांप्रदायिकाः ॥

**( सूत्रार्थबोधकभाष्यम् )**

**अथास्त्रीविषयादिति कथमिदं विज्ञायते—समानायामाकृतौ यदस्त्रीविषयमिति ?**

**आहो स्वित् क्वचिदस्त्रीविषयमिति ?**

**किं चातः ?**

**यदि विज्ञायते समानायामाकृतौ यदस्त्रीविषयमिति—द्रोणी, कुटी, पात्रीति न सिध्यति ॥**

**अथ विज्ञायते क्व चिदस्त्रीविषयमिति—माला, बलाका, अत्रापि प्राप्नोति ।**

**अस्तु क्व चिद्यदस्त्रीविषयमिति ।**

**कथं—माला, बलाकेति ?**

**अजादिषु पाठः करिष्यते ॥**

**( प्रदीपः ) अथेति** । य[7]दा-अस्त्रीविषयोऽस्मिन्नर्थे प्रवृत्तिनिमित्त इत्यन्यपदार्थः प्रवृत्तिनिमित्तमाश्रीयते, तदा—**समानायामाकृतावस्त्रीविषयात्**—इत्येष पक्षो भवति । यदा तु प्रातिपदिकमन्यपदार्थत्वेनाश्रीयते, तदा—**यत्र क्व चिदस्त्रीविषयात्**—इत्येष पक्षः संपद्यते ॥ **द्रोणीति** । द्रोणशब्दः परिमाणविशेषे पुल्लिङ्गः, गवादन्यां तु [8]स्त्रीलिङ्गः ॥ **मालेति** । मलनं माल इति पुल्लिङ्गम्, क्षेत्रविशेषे नपुंसकम् । स्रजि स्त्रीलिङ्गम् । बलमाकायतीति **बलाक**शब्दो यौगिकः पुंसि दृश्यते ॥ **अस्त्वित** । अन्य एव क्रियावाची, जातिशब्दस्त्वन्य एवेति परिहारान्तरमप्यत्र संभवति ॥

**( उद्द्योतः ) गवादन्यां त्विति** । एवं च जातौ नित्यस्त्रीत्वात् ङीषनापत्तिरिति भावः । एवं कुटशब्दो गेहे स्त्रीलिङ्गः, घटे

---

१ 'चरणादीनि' इति ख. ग. ज. पुस्तकेषु पाठो दृश्यते, तेन भाष्ये चरणादीनि-इति पाठेन भाव्यमित्यनुमीयते । इदानींतनस्तथापाठो नेति नात्रानुसृतः ॥

२ 'यथोत्तरं कुमारभार्यः' इति क. पाठः ।

३ ननु 'आकृतिपदमुपदेशोपलक्षणम्' इति एतत्सूत्रव्याख्यानावसरे शेखरादावुक्तम् । अत्र च 'आकृतिपदेनोपदेश्यमुपलक्ष्यते' इत्युच्यते । अत्रत्यं तत्त्वं सुधीभिरालोडनीयम् ॥

४ एतन्मतेनैतल्लक्षणद्वयमपि भाष्यकृतां नाभिमतम्, अत एवैतयोर्लक्षणयोर्व्याख्या भगवता न कृता । परपशास्थम् 'नित्यत्वे एकत्वे च सति अनेकानुगतत्वम्' इत्येव लक्षणं सिद्धान्तसम्मतम् । तदेतदाह—**वस्तुत इत्यादिना** ॥

५ अत एवेति । गोत्वब्राह्मणत्वयोरेकलक्षणेन संग्रहादेवेत्यर्थः ॥

६ रूपद्वयसिद्धिरिति । भाष्यकृदुक्तकुमारीभार्यः, कुमारभार्य इति रूपद्वयसिद्धिरित्यर्थः ॥

७ भाष्योक्तपक्षद्वयमुपपादयति—यदेत्यादिना । यस्य प्रवृत्तिनिमित्तमस्त्रीविषयमित्यर्थः स्वीक्रियते तदा समानायामाकृतावित्येष पक्ष उपपद्यते, येन प्रातिपदिकेनास्त्रीविषय उच्यते इत्यर्थस्य प्रातिपदिकान्यपदार्थस्य स्वीकारस्तदा क्वचिदस्त्रीविषयादित्येतदुपपद्यत इत्यर्थः ॥

८ स्त्रीलिङ्ग इति । तथा च समानायामाकृतावस्त्रीविषयत्वस्य द्रोणशब्देऽभावेन न ततो ङीषित्यर्थः ॥

पुमान् । पात्रशब्दो भाजनसामान्येऽर्धर्चादित्वादुभयलिङ्गः, भाजनविशेषे स्त्री ॥ **बलमाकायतीति** । [1]अर्थप्रदर्शनमेतत् । व्युत्पत्तिस्त्वेवम्—आकायतीति-आकः, बलस्याक इति । अन्यथा बलाकाय- इति स्यात् ॥ **परिहारान्तरमपीति** । द्रोणीत्यादावपि तुल्यन्यायाद्दोषापत्तेरिदं न्चिन्त्यम् । केचित्तु—'समानायामाकृतौ अस्त्रीविषय' इत्यर्थ एवोचितः, [2]अतएव पाककर्णेति चरितार्थम्, तद्धि स्त्रीविषयार्थम्, [3]अन्यथा तेषामपि यौगिकार्थे लिङ्गान्तरसंभवेनास्त्रीविषयत्वात्पूर्वेणैव सिद्धे किं तेन? द्रोणीत्यादयो गौरादिषु पाठ्या इत्याहुः ॥ वस्तुतः—क्वचिद्यदित्येवाश्रित्य पाककर्णेत्यपि न कार्यमिति भाष्यतात्पर्यम् ॥

( पदकृत्यभाष्यम् )

**अयोपधादिति किमर्थम्? इभ्या, क्षत्रिया ।**

**अत्यल्पमिदमुच्यते—अयोपधादिति, [4]अकोपधादित्यपि वक्तव्यम् । इहापि यथा स्यात्—चटका, मूषिकेति ।**

**यद्यकोपधादित्युच्यते—काकी, कोकी, पिकी, शुकी, उलूकीति न सिध्यति ।**

**अस्तु तर्ह्ययोपधादित्येव ।**

**कथं—चटका, मूषिकेति?**

**अजादिषु पाठः कर्तव्यः ॥**

( ५२०४ विध्यंशपूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ॥ * ॥**

( भाष्यम् ) **योपधप्रतिषेधे गवयहयमुकयमनुष्यमत्स्यानामप्रतिषेधो भवतीति वक्तव्यम् । गवय—गवयी । हय—हयी । मुकय— मुकयी । मनुष्य—मनुषी । मत्स्य—मत्सी ॥**

( प्रदीपः ) **गवयीति** । गौरादिष्विदानींतनैर्गवयादयः प्रक्षिप्ता इति वार्तिकारम्भाद्विज्ञायते ॥

( ६५० विधिसूत्रम् ॥ ४ । १ । २ आ. ३४ )

## १३१५ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च ॥ ४ । १ । ६४ ॥

( ङीषधिकरणम् )

( ५२०५ अतिव्याप्तिवारकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात्प्रतिषेधो वक्तव्यः—सत्पुष्पा, प्राक्पुष्पा, प्रत्यक्पुष्पा, काण्डपुष्पा, प्रान्तपुष्पा, शतपुष्पा, एकपुष्पा ॥**

( प्रदीपः ) **सदक्काण्डेति** । अत्राञ्चतिः क्विन्नन्तो गृह्यते । अयमप्यजादिषु पाठ इदानींतनः ॥

( उद्द्योतः ) **अत्राञ्चतिरिति** । 'सत्प्राक्काण्ड' इति पाठस्त्वयुक्त इति भावः ॥ **भस्त्रा फलेति** । जातिशब्दोऽयम्, न संज्ञा—इति ह्रस्वो न कृतः ॥

( ५२०६ अतिव्याप्तिवारकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सम्भस्त्राजिनशणपिण्डेभ्यः फलात् प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **सम्भस्त्राजिनशणपिण्डेभ्यः फलात्प्रतिषेधो वक्तव्यः—सम्—सम्फला—सम् । भस्त्रा—भस्त्राफला—भस्त्रा । अजिन—अजिनफला—अजिन । शण—शणफला—शण । पिण्ड—पिण्डफला ॥**

**श्वेताच्चेति वक्तव्यम् । श्वेतफला ॥**

( ५२०८ अतिव्याप्तिवारकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ त्रेश्च ॥ * ॥**

( भाष्यम् ) **त्रेश्च प्रतिषेधो वक्तव्यः । त्रिफला ॥**

( प्रदीपः ) **त्रिफलेति** । त्रयाणां फलानां समाहार इति द्विगुः । ततो द्विगुलक्षणात् ङीपः परत्वात् ङीष् प्राप्तो निषिध्यते । तन्निषेधसामर्थ्यात्[5] ङीबपि न भवति । तयोर[6]त्र विशेषाभावात् ॥

( उद्द्योतः ) निषेधसामर्थ्यं दर्शयति—**तयोरत्रेति** । द्विगुसमासस्यान्तोदात्तत्वेन ङीप्युदात्तनिवृत्तिस्वरप्राप्तेः, ङीषि प्रत्ययस्वरप्राप्तेश्चेति भावः ॥

( ५२०९ अतिव्याप्तिवारकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ मूलान्नञः ॥ * ॥**

( भाष्यम् ) **मूलान्नञः प्रतिषेधो वक्तव्यः । अमूला ॥**

( ६५७ विधिसूत्रम् ॥ ४ । १ । २ आ. ३५ )

## १३१५ इतो मनुष्यजातेः ॥ ४।१।६५ ॥

( ङीषोऽधिकरणम् )

( जिज्ञासाभाष्यम् )

**जातेरिति वर्तमाने पुनर्जातिग्रहणं किमर्थम्?**

---

१ कैय्यटे—बलमाकायतीति बलाकशब्द इति कथनेन बलाकशब्दस्य बलमाकायतीति व्युत्पत्तिरिति भ्रमं वारयितुमाह—अर्थप्रदर्शनमेतदिति ॥ समानायामाकृतावस्त्रीविषय इत्यस्य प्रवृत्तिनिमित्तैक्ये लिङ्गान्तररहितभिन्न इत्यर्थः ॥

२ अतएव=समानायामाकृताविल्यर्थाश्रयणात्—योगार्थग्रहणेन रूढ्योक्तरीत्या ओदनपाकीत्यादीनां स्त्रीविषयत्वादेव ॥

३ अन्यथा=समानायामाकृताविल्याद्युक्तरीत्या स्त्रीविषयत्वानङ्गीकारे ॥

४ 'अकोपधादिति वक्तव्यम्' इति क. पाठः ।

५ 'सामर्थ्याच्च' इति च. ॥

६ ङीपि ङीपि वा फले ( अन्तोदात्तत्वरूपे ) विशेषाभावादित्यर्थः ॥

अथोपधादिति वर्तते, योपधादपि यथा स्यात् । औदमेयी ॥

(प्रदीपः) औदमेयीति । उदमेयस्यापत्यम्, 'अत इञ्' ॥

( उद्द्योतः ) औदमेयिशब्दस्य [1] मनुष्यजातिवाचित्वं दर्शयति—उदमेयस्येति ॥

( ५२१० विध्यंशपूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ इतो मनुष्यजातेरिञ उपसंख्यानम् ॥ * ॥

( भाष्यम् ) इतो मनुष्यजातेरिञ उपसंख्यानं कर्तव्यम् । सौतङ्गमी, मौनिचिती ॥

( प्रदीपः ) सौतंगमीति । सुतंगमेन निर्वृत्तेति वुञ्छणादिसूत्रेण इञ् ॥

( उद्द्योतः ) सुतंगमेनेति । [2] एवं चोपसंख्यानमजात्यर्थमिति भावः ॥

---

( ६५८ विधिसूत्रम् ॥ ४ । १ । २ आ. ३६ )

## १३१६ ऊङुतः ॥ ४ । १ । ६६ ॥

( ऊङोऽधिकरणम् )

( पदकृत्यभाष्यम् )

[3] किमर्थो ङकारः ?

विशेषणार्थः ।

क्व विशेषणार्थेनार्थः ?

'नोङ्धात्वोः' (६।१।१७५) इति । नो[4]र्धात्वोरित्युच्यमाने—यवाग्वा, यवाग्वै, इत्यत्रापि प्रसज्येत ॥

( प्रदीपः ) यवाग्वेति । [5] वर्णग्रहणेऽर्थवद्ग्रहणपरिभाषा नोपतिष्ठत इति भावः ॥

( उद्द्योतः ) वर्णग्रहणे इति । [6] प्रत्ययग्रहणपरिभाषाऽप्येवमिति बोध्यम् ॥

( पदकृत्यभाष्यम् )

अथ दीर्घोच्चारणं किमर्थम्, न 'उङुतः, इत्येवोच्येत ?

का रूपसिद्धिः—ब्रह्मबन्धूः, वीर[7]बन्धूरिति ?

सवर्णदीर्घत्वेन सिद्धम् ।

न सिध्यति । 'गोस्त्रियोरुपसर्जनस्य' (१।२।४८) इति ह्रस्वत्वं प्रसज्येत ॥

इह च ब्रह्मबन्धूछत्रम्, ब्रह्मबन्धूच्छत्रम्, 'षत्वतुकोरसिद्धः'(६।१।८६)इत्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येत ॥

इह च ब्रह्मबन्धूः,वीरबन्धूः 'नद्यृतश्च' [8] (५।४।१५३) इति कप् प्रसज्येत ॥

नैष दोषः ।

यत्तावदुच्यते—ब्रह्मबन्धूः, वीरबन्धूरिति गोस्त्रियोरुपसर्जनस्येति ह्रस्वत्वं प्रसज्येतेति,

उभयत आश्रयणे नान्तादिवत् [10] ॥

यदप्युच्यते—ब्रह्मबन्धूछत्रम्, ब्रह्मबन्धूच्छत्रम्, षत्वतुकोरसिद्ध इत्येकादेशस्यासिद्धत्वान्नित्यस्तुक् प्रसज्येतेति,

पदान्तपदाद्योरेकादेशोऽसिद्धः । न चैष पदान्तपदाद्योरेकादेशः ॥

यदप्युच्यते—इह च ब्रह्मबन्धूः, वीरबन्धूरिति नद्यृतश्चेति [9] कप्प्रसज्येतेति,

नद्यन्तानां यो बहुव्रीहिरित्येवं तत्, न चैष नद्यन्तानां बहुव्रीहिः ॥

शेषलक्षणस्तर्हि कप् प्राप्नोति । तस्माद्दीर्घोच्चारणं कर्तव्यम् ॥

( प्रदीपः ) गोस्त्रियोरिति । एकादेशस्यान्तवद्भावादुपसर्जनान्तं प्रातिपदिकं स्त्रीप्रत्ययान्तं भवतीति भावः ॥ नद्यृत इति । नद्य[11]न्तो बहुव्रीहिर्भवतीति भावः । [12]दीर्घोच्चारणे तु

---

१ औदमेयिशब्दस्य 'गोत्रञ्च चरणैः सह' इति जातित्वम् ॥

२ वुञ्छणादिसूत्रेणेञन्तस्य सौतङ्गमिशब्दस्य जातिवाचित्वाभावादप्राप्तेरिदं वचनमित्येतदाह—एवञ्चोपेति ॥

३ ऊङि ङित्वप्रयुक्तकार्यविशेषादर्शनादाशङ्कते—किमर्थ इति ॥

४ ननु नोङ्धात्वोरित्यत्र विशेषणार्थमूङि ङकारकरणापेक्षया तस्मिन्नेव सूत्रे ङकारो मास्त्वित्याशङ्कायामाह—नोधात्वोरित्यादि ॥

५ ननु नोधात्वोरित्यत्रार्थवत्परिभाषोपस्थाने—अर्थवदूकाराद्धातोश्च परा शसादिर्विभक्तिर्नोदात्ता-इत्येवं नोधात्वोरित्यस्यार्थः स्यात्, ततश्च यवाग्वेत्यादावूकारस्यार्थवत्त्वाभावादेव न दोष इत्याशङ्कायामाह—वर्णग्रहण इत्यादि । अस्याः परिभाषाया विशिष्टरूपोपादानविषयत्वेन वर्णग्रहणेऽस्या अप्रवृत्तिरिति भावः । विशिष्टरूपोपादानत्वञ्च—आनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेनोपादानत्वम् ॥

६ ननु—अर्थवत्परिभाषाया अनुपस्थितावपि प्रत्ययग्रहणपरिभाषोपस्थानादूकाररूपप्रत्ययान्ततदादेः परा शसादिर्विभक्तिर्नोदात्ता-इत्येवमर्थो नोधात्वोरित्यस्य स्यात्, तथा च यवाग्वेत्यादावदोष एवेत्याशङ्कायामाह—प्रत्ययग्रहणेत्यादि । प्रत्ययग्रहणपरिभाषा च प्रत्ययमात्रग्रहणे एव प्रवर्तते न तु प्रत्ययाप्रत्ययग्रहणे । तच्च निर्यवमतीत्यत्र प्रत्ययग्रहणपरिभाषया 'उगितश्च' इत्यत्र प्रत्ययस्यैवोगितो ग्रहणेन ङीप् न स्यादित्याशङ्क्य, उगित्पदस्य प्रत्ययमात्रबोधकत्वाभावेन नात्रास्या उपस्थितिरित्यादिना दोषम्परिहरता भाष्यकारेण ज्ञापितम् । एवञ्च प्रत्ययग्रहणपरिभाषाऽपि—अर्थवत्परिभाषावन्नोपतिष्ठत इति तात्पर्यम् ॥

७ 'धीवबन्धूः' इति क. छ. पाठः ॥

८ 'नद्यृतः कबिति कप् प्रसज्येत' इति छ. पाठः ॥

९ धीवबन्धूः—'नद्यृतः कबिति कप् प्रसज्येत' इति छ. पाठः ॥

१० 'अन्तादिवद्भा' इति क. ॥

११ एकादेशस्य परादिवद्भावेन नद्यन्तत्वमिति भावः ॥

१२ ननु ऊङि दीर्घे कृतेऽपि परादिवद्भावेन नद्यन्तत्वात्कब्ह्रस्वौ प्राप्नुत एवेत्यत आह—दीर्घोच्चारण इति ॥

तत्सामर्थ्यात्कब्ह्रस्वौ न प्रवर्तेते ॥ **उभयत इति** । एकादेशस्यान्तवत्वेन प्रातिपदिकसंज्ञा संपाद्या, अन्यथाऽप्रत्यय इति प्रतिषेधप्रसङ्गः । आदिवत्त्वेन च स्त्रीप्रत्ययत्वं साध्यमित्येकोऽवयवो युगपद् द्वयोरित्येषा बुद्धिर्विरोधान्न प्रवर्तते । स्त्रीप्रत्ययविशेषणं चोपसर्जनम् । न चात्र स्त्रीप्रत्ययस्योपसर्जनत्वमिति ह्रस्वाऽप्रसङ्गः ॥ **पदान्तेति** । अधीत्येत्यादावेवेत्यर्थः ॥ **तस्मादिति** । उकारद्वयं दीर्घेण निर्दिष्टम्, तत्र द्वितीय उकारः परत्वाद्बाधकस्य शेषलक्षणस्य कपो बाधनार्थं इति भावः ॥

**( उद्योतः )** ननूपसर्जनस्त्रीप्रत्ययांतांतप्रातिपदिकाभावात्कथं ह्रस्वत्वमत आह—**एकादेशस्येति** । उपसर्जनेन स्त्रीप्रत्ययेन च प्रातिपदिकं विशेष्यत इति भावः । तत्रैकादेशस्यांतवद्भावेनोपसर्जनान्तं प्रातिपदिकम्, आदिवद्भावाच्च स्त्रीप्रत्ययान्तमिति बोध्यम् ॥ नन्वुत्तरपदादित्यर्थेऽप्राप्तेराह—**नद्यन्त इति ॥ तत्सामर्थ्यादिति** । प्रश्लेषेण उकारद्वयविधानात् कब्निवृत्तिरिति भावः ॥ स्वयं परिहारान्तरमाह—**स्त्रीप्रत्ययविशेषणं चेति** । स्त्रीप्रत्ययान्तविशेषणमित्यर्थः ॥ भाष्ये—**शेषलक्षणस्तर्हीति** । ऊङः प्रागेवेति शेषः ॥ ननु दीर्घोच्चारणेऽपि परत्वात्कप् प्राप्नोति, कबभावे ऊङ् सावकाशोऽत आह—**उकारद्वयमिति ॥ परत्वादिति** । अन्तरङ्गत्वादित्यर्थः । श्वश्रूशब्दस्तु 'श्वशुरःश्वश्वा' इति निर्देशसिद्धोऽव्युत्पन्नं प्रातिपदिकमिति भावः । ध्वनितं चेदं ङ्याप्सूत्रे भाष्ये ॥

( ५२११ विधिवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् ॥ * ॥

**( भाष्यम् ) ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनामिति वक्तव्यम् । अलाबूः, कर्कन्धूः ।**

**अप्राणिजातेरिति किमर्थम् ?**

**कृकवाकुः ॥**

**अरज्ज्वादीनामिति किमर्थम् ?**

**रज्जुः, हनुः ॥**

**( प्रदीपः ) अलाबूरिति** । ऊङि सति 'नोङ्धात्वोः' इति विभक्तेरुदात्तत्वनिषेधो भवति—अलाब्वेति ॥

**( उद्योतः )** नन्वलाबूशब्दस्य स्वत ऊकारान्तत्वात्किमूङ्विधानेनेत्यत आह—**ऊङि सतीति** । अत्र वार्तिके उत इत्यस्यासंबन्ध इति भावः ॥

---

१ ननु शेषलक्षणस्य कपो वैकल्पिकत्वेन तदभावे सावकाशस्योङो दीर्घकरणं नावश्यकमित्याशङ्कायामाह—उकारद्वयमित्यादि ॥

२ ननु ह्रस्वस्य उङः करणे श्वश्रूशब्दसिद्धिर्न स्यात्तत्र सवर्णदीर्घाप्राप्तेरत आह—श्वश्रूशब्दस्त्विति ॥

३ 'अलाब्वा' इत्यत्र तृतीयैकवचनटाप्रत्ययस्य नोङ्धात्वोरित्यनेनोदात्तनिषेधो भवतीत्यर्थः ॥

( ६५२ विधिसूत्रम् ॥ ४ । १ । २ आ. ३७ )

## १३२० संहितशफलक्षणवामादेश्च ॥ ४ । १ । ७० ॥

( ऊङोऽधिकरणम् )

( पूरकभाष्यम् )

**सहितसहाभ्यां चेति वक्तव्यम् । सहितोरूः, सहोरूः ॥**

**( प्रदीपः ) सहितोरूरिति** । नन्वेकदेशविकृतस्यानन्यत्वात्संहितशब्दग्रहणेन सहितशब्दस्य सिद्धं ग्रहणम् । एवं तर्हि विद्यमानं हितमस्य सहित इति यदा व्युत्पत्तिस्तदर्थं वार्तिकम् ॥ **सहोरूरिति** । सहेते इति सहौ ऊरू इति व्युत्पत्तिः । अथवा विद्यमानावूरू यस्याः सा सहोरूरित्यूर्वतिशयप्रतिपादनार्थः प्रयोगः ॥

**( उद्योतः ) नन्वेकदेशेति** । 'समो वा हिततयोः' इति व्युत्पन्नत्वादिति भावः ॥ ननु सर्वस्या अप्यूरुमत्त्वेनैतत्प्रयोगानर्थक्यमत आह—**सहेते इति** । रतिश्रममिति शेषः ॥

---

( ६५३ विधिसूत्रम् ॥ ४ । १ । २ आ० ३८ )

## १३२१ कद्रुकमण्डल्वोश्छन्दसि ॥ ४ । १ । ७१ ॥

( छन्दस्यूङोऽधिकरणम् )

( सूत्रांशपूरकभाष्यम् )

**अत्यल्पमिदमुच्यते—कद्रुकमण्डल्वोरिति,**

**कद्रुकमण्डलुगुग्गुलुमधुजतुपतयालूनामिति वक्तव्यम् । कद्रूः, कमण्डलूः, गुग्गुलूः, मधूः, जतूः, पतयालूः ॥**

**( प्रदीपः )** गुग्गुलुमधुजतूनां छन्दसि लिङ्गव्यत्ययेन स्त्रीत्वम् । पतयालुशब्दः 'स्पृहिगृहि' इत्यालुजन्तः ॥

**( उद्योतः )** ननु गुग्गुलुमधुजतुनामस्त्रीत्वात्कथं स्त्रियामूङ्विधानमत आह—**गुग्गुल्विति** ॥

---

४ ननु 'ऊङुतः' इत्यस्मिन् सूत्रे—अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानेऽपि अलाबूशब्दादूङ्प्रत्ययस्यासम्भवः, तस्य दीर्घोकारान्तत्वेन 'ऊङुतः' इत्यस्याप्राप्तेरित्याशङ्कायामाह—अत्र वार्तिक इति ॥

५ समो वा हिततयोरित्यनेन व्युत्पन्नस्य संहितार्थकसहितशब्दस्यैकदेशविकृतन्यायेनैव ग्रहणे सिद्धे सहितसहाभ्यां चेत्यादि कथमत आह—एवं तर्हीति ॥

( ६५४ विधिसूत्रम् ॥ ४ । १ । २ आ. ३९ ॥ )

## १३२४ यङश्चाप् ॥ ४ । १ । ७४ ॥

( चापोऽधिकरणम् )

( ५२१२ विध्यंशपूरकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ षाच्च यञश्चाप् ॥ * ॥

( भाष्यम् ) षाच्च यञश्चाब्वक्तव्यः । शार्कराक्ष्या, पौतिमाष्या ।

तत्रायमप्यर्थः—गौकक्ष्यशब्दः क्रौडयादिषु पठ्यते, स न पठितव्यो भवति ।

यदि न पठ्यते, 'गौकक्षीपुत्रः' इति संप्रसारणं न प्राप्नोति ।

इष्टमेवैतत्संगृहीतम्—'गौकक्ष्यापुत्रः' इत्येव भवितव्यम् ।

एवं हि सौनागाः पठन्ति—

ष्यङः संप्रसारणे
गौकक्ष्यायाः प्रतिषेधः । इति ॥

( प्रदीपः ) शार्कराक्ष्येति । गर्गादियञन्ता एते ॥

( ६५५ विधिसूत्रम् ॥ ४ । १ । २ आ. ४० )

## १३२५ आवट्याच्च ॥ ४ । १ । ७५ ॥

( चापोऽधिकरणम् )

( ५२१३ पूर्वविप्रतिषेधवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अन उपधालोपिन ऊधसो ङीष् पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) 'अन उपधालोपिनोऽन्यतरस्याम्' (४।१।२८) इत्येतस्मादूधसो ङीष्भवति पूर्वविप्रतिषेधेन ।

अन उपधालोपिनोऽन्यतरस्यामित्यस्यावकाशः—बहुराज्ञी, बहुतक्ष्णी ।

ऊधसो ङीष्भवतीत्यस्यावकाशः—विभाषा ङीप्, यदा न ङीप् सोऽवकाशः ।

ङीप्प्रसङ्गे उभयं प्राप्नोति, ऊधसो ङीष्भवति पूर्वविप्रतिषेधेन ॥

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।

न वक्तव्यः ।

अन उपधालोपिनोऽन्यतरस्यामित्यत्र 'ऊधसो ङीष्भवति' इत्येतदनुवर्तिष्यते ॥

( प्रदीपः ) अन इति । यद्यपीदमन्यत्र वक्तव्यम्, तथाप्यन्यार्थपूर्वविप्रतिषेधप्रतिपादनप्रसङ्गेनात्रोक्तम् ॥

( ५२१४ पूर्वविप्रतिषेधे द्वितीयं वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ आवट्याद्यञः ष्फश्चापः ॥ * ॥

( भाष्यम् ) आवट्याद्यञः ष्फश्चापो भवति पूर्वविप्रतिषेधेन ।

आवट्याद्यञश्चापोऽवकाशः-उदीचाम्-आवट्या ।

ष्फस्यावकाशः—अन्यानि यञन्तानि—गार्ग्यायणी, वात्स्यायनी ।

आवट्यशब्दात्प्राचामुभयं प्राप्नोति—आवट्यायनी, ष्फो भवति पूर्वविप्रतिषेधेन ॥

( सूत्रन्यासेन सिद्धान्तभाष्यम् )

आवट्यग्रहणेन नार्थः । 'यञः ष्फश्चापः' इत्येव । इदमपि सिद्धं भवति—शार्कराक्ष्यायणी, पौतिमाष्यायणी ॥

यञ्ग्रहणेनापि नार्थः । 'ष्फश्चापः' इत्येव । गौकक्ष्यशब्दः क्रौड्यादिषु पठ्यते, इदमपि सिद्धं भवति—गौकक्ष्यायणी ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् । एवं वक्ष्यामि—'प्राचां ष्फ तद्धितः सर्वत्र' ।

क्व सर्वत्र ?

यत्र ष्फश्चान्यश्च प्राप्नोति, ष्फ एव तत्र भवतीति ॥

ततो लोहितादिकतन्तेभ्यः सर्वत्र ।

क्व सर्वत्र ?

प्राचां चोदीचां च ॥

( प्रदीपः ) गौकक्ष्यायणीति । गौकक्ष्यस्यापत्यं गोत्रं स्त्री । गर्गादित्वाद्यञ्, ततः ष्यङ् । प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणाद्यञन्तात् ष्फो विधीयमानः ष्यङन्तादपि भवतीति प्रक्रियाऽऽश्रयेणेदमुक्तम् ॥

( उद्द्योतः ) प्रक्रियाश्रयेणेति । वस्तुतः स्त्रीप्रत्ययविधौ

---

१ क्रौड्यादिगणे 'क्रौड्यादिभ्यश्च' इत्यनेन स्त्रियां ष्यङ् प्रत्ययार्थस्पाठः क्रियते । अस्मिन् वार्तिके क्रियमाणे गर्गादियञन्तादपि चाप् सिद्ध्यतीति न ष्यङः प्रयोजनमिति भावः ॥

२ अन उपधालोपिन ऊधसो ङीष् पूर्वविप्रतिषिद्धमित्यादिवार्तिकोक्तपूर्वविप्रतिषेधः 'आवट्याद्यञः ष्फ श्चापः' इति पूर्वविप्रतिषेधप्रसङ्गेन स्मारित इति अस्मिन् सूत्र उक्त इति भावः ॥

३ 'ग्रहणेन नार्थः' इति छ. पाठः ।

४ प्रातिपदिकग्रहणपरिभाषया गर्गादियञन्तत्वस्य स्त्रीप्रत्ययष्यङन्ते अतिदेशे इति भावः ॥

नास्याः प्रवृत्तिः फलाभावात्, इति—अनेन ध्वनितम्। ष्फविधावपि भाष्ये ध्वनितमेतत् । भाष्याशयस्तु—'क्रौड्यादिभ्यः' इति तादर्थ्ये चतुर्थी, क्रौड्यादिसिद्धये प्रत्ययस्य ष्यङादेश इत्यर्थः । एवं च स्थानिवत्त्वेन यञन्तत्वात्ष्फो भवतीति ॥ यद्वा 'भस्याढे तद्धिते' 'सिद्धश्च प्रत्ययविधौ' इति पुंवद्भावातिदेशेन यञन्तत्वात्ष्फ इति ॥

( ६५६ आदेशसूत्रम् ॥ ४ । १ । २ आ. ४० ॥ )

## १३२८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे ॥ ४ । १ । ७८ ॥

( तद्धितष्यङधिकरणम् )

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—दाक्षी, प्लाक्षीति ॥**

( प्रदीपः ) **दाक्षीति** । दक्षस्यापत्यं गोत्रं स्त्रीति 'अत इञ्' । उत्तमशब्दमव्युत्पन्नमन्त्यमात्रवचनमाश्रित्य प्रश्नः ॥

( उद्द्योतः ) **अन्त्यमात्रेति** । तेनात्रोपान्त्यस्य गुरुत्वात्ष्यङः प्रसंग इति भावः ॥

( समाधानभाष्यम् )

**आतिशायिकेनायन्तमशब्देन निर्देशः क्रियते, स च त्रिप्रभृतिषु वर्तते, त्रिप्रभृतीनामभावात् ॥**

( प्रदीपः ) **स चेति** । यत्रैकोऽनुद्गतः प्रथमोच्चारितत्वात्, त्रयस्तूद्गता ऊर्ध्वोच्चारितास्तत्रोत्तमशब्दः प्रयुज्यते । एवं च चतुष्प्रभृतिषु प्रयुज्यते । उद्गतापेक्षया च[2] त्रिप्रभृतिष्वित्युक्तम् ॥

( उद्द्योतः ) ननु त्रिप्रभृतिष्वित्युक्तेर्वाराहिशब्देऽचूत्रयसद्भावात् वाराह्यायां ष्यङ् न सिध्यतीति वक्ष्यमाणं चोद्यमनुपपन्नमत आह—**यत्रेति** ॥ उच्छब्द[3] उत्गतार्थे वर्तते । ऊर्ध्वमुच्चारितम्–उद्गतम्[4] । ऊर्ध्वं च प्रथमसापेक्षम्, तदाह—**प्रथम इति** । उद्गतत्वस्यानुद्गतापेक्षत्वाद्बहूनामेकस्य प्रकर्षे तमपो विधानाच्च बहुषूद्गतेषु, अन्त्ये उत्तमशब्दो वर्तत इति भावः[5] ॥

( प्रत्याक्षेपे श्लोकभाष्यम् )

**यद्येवम्—**

**प्रकर्षे चेत्तमं कृत्वा**
**दाक्ष्या नोपोत्तमं गुरु ।**
**आम्विधिः केन ते न**
**स्यात्? प्रकर्षे यद्ययं तमः ॥**

**प्रकर्षे चेत्तमं कृत्वा दाक्ष्या नोपोत्तमं गुर्वित्युच्यते, आम्विधिः केन तव न स्यात्? 'अव्ययघात्' इति प्राप्नोति । 'प्रकर्षे यद्ययं तमः'=यद्ययं तमः प्रकर्षे वर्तते ॥**

( प्रदीपः ) **प्रकर्षे चेति** । च[6]ण् चेदर्थे वर्तते । क्वचित्तु प्रकर्षे चेदिति पाठः । यदि प्रकर्षप्रत्ययं कृत्वा दाक्ष्या गुरूपोत्तमं न भवतीत्युच्यते, तत उच्छब्दात्तमपि सति 'किमेत्तिङव्ययघात्' इत्याम्प्रत्ययप्रसङ्गादुत्तमामिति प्राप्नोति ॥

( उद्द्योतः ) **यदि प्रकर्षेति** । एतेनाव्युत्पन्नोत्तमशब्दाश्रयणे नायं दोष इति ध्वनितम् ॥

( प्रत्याक्षेपनिरासे श्लोकभाष्यम् )

**उद्गतस्य प्रकर्षोऽयं**
**गतशब्दोऽत्र लुप्यते ।**

**उद्गतस्यायं प्रकर्षः । गतशब्दस्यात्र लोपो भवति ।**

**नाव्ययार्थप्रकर्षोऽस्ति**
**धात्वर्थोऽत्र प्रकृष्यते ।**

**नायमव्ययार्थस्य प्रकर्षः ।**
**कस्य तर्हि ?**
**धात्वर्थस्य ॥**

( प्रदीपः ) **उद्गतस्येति** । उच्छब्दोऽत्रायं ससाधनक्रियावचनः । त[7]त्र क्रियाप्रकर्षद्वारको द्रव्यप्रकर्ष इति 'अद्रव्यप्रकर्षे' इति वचनादाम् न भवतीत्यर्थः ॥ **गतशब्दोऽत्रेति** । उच्छब्देन गतार्थस्याभिधानादप्रयोग एव गतशब्दस्यात्र लोपः ॥ **धात्वर्थोऽत्रेति** । धातुशब्देन धात्वर्थोऽत्र क्रियाऽभिधीयते,

१ प्राचां ष्फ तद्धित इति सूत्रे—तद्धितवचनं क्रियते षितः प्रातिपदिकादीकारो यथा स्यात्—इत्युक्तं भगवता । यदि स्त्रीप्रत्ययविधौ लिङ्गविशिष्टपरिभाषा प्रवर्तेत तर्हि प्राचां ष्फेति सूत्रे तद्धितग्रहणाभावेऽपि यञन्तत्वे विद्यमानस्य प्रातिपदिकत्वस्य ष्फप्रत्ययान्तेऽतिदेशात् षितः प्रातिपदिकादीकारो यथा स्यादित्यादि सिद्ध्यत्येवेति तद्धितपदप्रयोजनकथनपरभाष्याल्लिङ्गविशिष्टपरिभाषा स्त्रीप्रत्ययविधौ न प्रवर्तेत इति ध्वन्यते । अत्र च 'यञ् ग्रहणेनापि नार्थः । ष्फश्चाप इत्येव, इदमपि सिद्धम्भवति गौकक्ष्यायणी' इत्युक्तम्भाष्यकृता । यञः ष्फश्चाप इत्यत्र यञ्ग्रहणाभावे गौकक्ष्यायणीति सिध्यति, यञ्ग्रहणसत्वे तु न तत्सिद्ध्येदित्याशयो भगवतः । स्त्रीप्रत्ययविधौ यदि लिङ्गविशिष्टपरिभाषा प्रवर्तेत तदा यञन्तत्वस्य ष्यङन्तेऽतिदेशाद्यञ्ग्रहणसत्वेऽपि गौकक्ष्यायणीति सिद्ध्येत् । तथा च 'इदमपि सिद्धम्भवति' इत्यत्रत्यापिपदस्वारस्यम्भज्येत । एवञ्च ध्वनितोऽयमर्थो भगवता यत्स्त्रीप्रत्ययविधौ लिङ्गविशिष्ट परिभाषा न प्रवर्तेत इति ।

२ 'पेक्षया तु त्रि' इति छ. ।

३ उत्तमशब्दघटकउच्छब्दार्थमाह—उच्छब्द इति ॥

४ उद्गतार्थमाह—ऊर्ध्वमिति । अनन्तरमुच्चरितमित्यर्थः । तत्र च कस्मादनन्तरमित्यपेक्षा भवतीति प्रथमसापेक्षत्वं वर्तत इति भावः ॥

५ यत्र चत्वारो वर्णा अधिका वा वर्तन्ते तत्रैवोत्तमशब्दप्रयोगः । चतुर्षु वर्णेषु हि प्रथमस्यानुद्गतत्व एव तदितरेषामुद्गतत्वम्भवति, बहूनामेकस्य प्रकर्षे च तमपो विधानमिति—उद्गतास्त्रयः प्रथमश्चानुद्गत इति चतुर्षु वर्णेष्वेव सम्भवतीति भावः ॥

६ 'चण् चेदर्थे वर्तते' इति कैय्यटग्रन्थेन 'प्रकर्षे च तमङ्कृत्वा' इति भाष्यपाठोऽनुमीयते । अत्र 'च' इत्येतदव्ययणकारानुबन्धविशिष्टश्चेदर्थे वर्तत इति कैय्यटाशयः । णकारानुबन्धफलन्तु निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण् कच्चिद्यत्र युक्तमित्येव । एतेन 'चोत्तमम्' इति कैय्यटाभिमतः पाठ इति कैश्चिद्यदुक्तन्तत्प्रामादिकमेव ॥

७ ननु उत्तमशब्दादाम् 'अद्रव्यप्रकर्षे' इति निषेधान्न भवतीत्युच्यमाने उच्छब्दस्य द्रव्यवाचित्वमापतेत्, तथा च तस्य निपातसंज्ञा न स्यादत आह—तत्र क्रियाप्रकर्ष इति । क्रियाप्रकर्षेण द्रव्यप्रकर्षो ज्ञायते न तु वास्तविको द्रव्यप्रकर्षः ॥

सोऽर्थः प्रयोजनं विषयो वा यस्य स धात्वर्थः—साधनाधारः पदार्थः, स प्रकृष्यते क्रियाप्रकर्षद्वारेणेत्यर्थः ॥

( उद्द्योतः ) ससाधनेति । क्रियाविशिष्टसाधनवचन इत्यर्थः ॥ क्रियाप्रकर्षद्वारक इति । एवं चाद्रव्यप्रकर्ष इति निषेध इति भावः ॥ ननु धात्वर्थप्रकर्षेऽपि 'अद्रव्यप्रकर्षे' इत्याम् पचतितरामित्यत्रेव स्यादत आह—धातुशब्देनेति ॥ भाष्ये—नाव्ययार्थेत्यस्य—नासत्त्वभूतार्थस्येत्यर्थः ॥ प्रयोजनमिति । क्रियार्थं साधनोपादानात्क्रिया तत्प्रयोजनम् ॥ विषय इति । उद्देश्य इत्यर्थः । साधननिर्वर्त्यत्वात्क्रियायाः साधनानां सा—उद्देश्यतया विषय इति उच्यते ॥ साधनाधार इति । शक्त्याधारो द्रव्यमित्यर्थः ॥

( व्युत्पत्त्या तमप्स्वीकारे दोषश्लोकभाष्यम् )

**उद्गतोऽपेक्षते किं चित्**
**त्रयाणां द्वौ किलोद्गतौ ॥**

अनुद्गतमपेक्ष्योद्गतमित्येतद्भवति । 'त्रयाणां द्वौ किलोद्गतौ' त्रयाणां किल द्वावुद्गतौ भवतः ।

**चतुष्प्रभृतिकर्तव्यो**
**वाराह्यायां न सिध्यति ।**

चतुष्प्रभृतिषु ष्यङ् वक्तव्यः । 'वाराह्यायां न सिध्यति' वाराह्यायां न प्राप्नोति ।

किं कारणम् ?

चतुष्प्रभृतीनामभावात् ॥

( प्रदीपः ) त्रयाणामिति । यत्र त्रयो वर्णास्तत्रैकोऽनुद्गतो द्वावुद्गतौ, द्वयोश्चैकस्य प्रकर्षे तरपा तमपो बाधनादुत्तमशब्दो नास्तीति वाराह्येति ष्यङ् प्राप्नोति । यत्र तु चतुष्प्रभृतयो वर्णास्तत्रैव ष्यङ् स्यादित्यर्थः ॥

( उद्द्योतः ) तमप्प्रत्ययपक्षे आम्रूपदोषोद्धारेऽपि लक्ष्यासिद्धिमाह—भाष्ये—उद्गतोऽपेक्षते इति । 'त्रयाणां द्वौ किलोद्गतौ' इत्येतत् 'चतुःप्रभृतिकर्तव्यः' इत्येतच्च शेषपूरणेन योजयति—यत्रेति ॥

( व्युत्पत्तिपक्षे दूषणान्तरबोधकं श्लोकभाष्यम् )

**भिद्यतेऽस्य स्वरस्तेन**
**विधिश्चामो न लक्ष्यते ।**

भिद्यते खल्वस्य स्वरः, तेनातिशायनिकेन तमशब्देन उत्तमस्य 'विधिश्चामो न लक्ष्यते' विधिश्चामो न क्वचिदपि लक्ष्यते ॥

( प्रदीपः ) भिद्यत इति । तमपः पित्त्वादनुदात्तत्वादुत्तमशब्द आद्युदात्तः प्राप्नोति, अन्तोदात्तश्चेष्यते । एतच्चोञ्छादिषु—'उत्तमशश्वत्तमौ सर्वत्र' इति पाठानपेक्षयोक्तम् ॥

( उद्द्योतः ) भाष्ये—व्युत्पत्तिपक्षे दूषणान्तरमप्याह—भिद्यतेऽस्येति ॥ दूषणान्तरमाह—विधिश्चाम इति ॥

( सिद्धान्ते श्लोकभाष्यम् )

**शब्दान्तरमिदं विद्याद्**
**दृष्टमभ्यन्तरं त्रिषु ।**

एवं तर्हि—अन्योऽयमातिशायनिकेन समानार्थः 'तमः' त्रिप्रभृतिषु वर्तते ॥

( प्रदीपः ) न च क्रियाप्रकर्षेऽपि आमन्तस्य क्वचित्प्रयोगो दृश्यते—इत्यनभिधानादुच्छब्दात्तमबेव नास्ति । अव्युत्पन्न एवोत्तमशब्दः स्वभावात् त्रिप्रभृतीनामन्त्यमाहेत्याह—शब्दान्तरमिति ॥ दृष्टमिति । त्रिग्रहणं बहुत्वोपलक्षणार्थम् । तेन त्रिप्रभृतिषु यत्—अभ्यन्तरम्=अन्तर्भूतं तत्र दृष्टमित्यर्थः ॥ आतिशायनिकेनेति । आतिशायनिकश्चतुःप्रभृतीनामन्त्यमाह । अव्युत्पन्नस्तु त्रिप्रभृतीनाम्, इति-अन्त्यत्वमात्रेण सदृशार्थत्वमिति भावः ॥ तम इति । तमान्तोऽव्युत्पन्नशब्द इत्यर्थः ॥

( उद्द्योतः ) तद्व्याचष्टे—न च क्रियेति । यद्ययं तमप् स्यात्तदा क्रियाप्रकर्षविवक्षायामाम स्यात् । न च तत्रापि स दृश्यतेऽतः—तमबेवात्र नास्तीति भावः । क्रियाप्रकर्षेऽप्यामन्तस्य न क्वचित्प्रयोगो दृश्यत इत्यन्वयः ॥ अभ्यन्तरमित्यन्त्यमेव विवक्षितमित्याह—अन्त्यभूतमिति । अन्तर्भूतमिति पाठेऽन्त्यमिति शेषः ॥ नन्वव्युत्पन्नत्वे तमस्यानर्थक्यात्तमस्त्रिप्रभृतिषु वर्तत इत्युक्तमत आह—तमान्त इति । त्रिप्रभृतिषु वर्तत इति भाष्यस्य तेषु मध्ये यदन्त्यं तत्र वर्तते इत्यर्थः । एते श्लोका भाष्यकृत एव, न वार्तिककृतः, संपुटीकरणाभावात् ॥

( आक्षेपभाष्यम् )

किं पुनरयमणिञोरादेशः, आहोस्विदणिञ्भ्यां परः ?

कश्चात्र विशेषः ?

( प्रदीपः ) किं पुनरिति । प्रत्ययविधावपि 'गापोष्टक्' 'व्रीहिशाल्योर्ढक्' इत्यादौ षष्ठी दृश्यत इति संदेहात्प्रश्नः ॥

( उद्द्योतः ) ननु षष्ठीनिर्देशेनादेशत्वनिश्चयात्प्रश्नानुपपत्तिरत आह—प्रत्ययविधावपीति ॥

१ ननूत्तमशब्दघटक उच्छब्दार्थप्रकर्षेऽव्ययार्थप्रकर्षोऽस्त्येवेति 'नाव्ययार्थप्रकर्षोऽस्ति' इति भाष्यमनुपपन्नमत आह—नासत्त्वेति ॥

२ क्रियायाः साधनप्रयोजनत्वं साधयति—क्रियार्थमिति ॥

३ क्रियाया विषयत्वं साधयति—साधनेति ॥

४ 'तेन त्रिप्रभृतिषु यत्—अभ्यन्तरम्—अन्त्यभूतम्' इति कैयटपाठापेक्षया प्रतीकमिदम् । तादृशः पाठस्त्विदानीम्बहुषु पुस्तकेषु नोपलभ्यते ॥

५ एतेन 'कात्यायनश्लोकवार्तिकान्येतानि' इति वदन्त आधुनिकगौडाः परास्ताः ॥

६ प्रत्ययाधिकारपठितत्वात्प्रत्ययविधायकत्वज्ञानेऽपि प्रत्ययविधिप्रदेशे प्रायः पञ्चमीदर्शनम्, अत्र च षष्ठी—इति सन्देहात्प्रश्नः ॥

( ५२१५ अनादेशे दोषवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ष्यङ्यनादेशे यलोपवचनम् ॥ * ॥**

**( भाष्यम् ) ष्यङि अनादेशे यलोपो वक्तव्यः । औदमेघ्यायाश्छात्रा औदमेघाः ॥**

( प्रदीपः ) **औदमेघ्याया इति** । उदमेघस्यापत्यं गोत्रं । स्त्री, 'अत इञ्' । यद्यत्र इञन्तात्परः स्त्रियां ष्यङ् विधीयते तदाऽपत्ययकारो न भवतीति यलोपो न[1] प्राप्नोति । आदेशपक्षे तु स्थानिवद्भावात् ष्यङ आपत्यत्वमिति यलोपः सिध्यति ॥

( उद्द्योतः ) **स्थानिवद्भावादिति** । अपत्ये[2] विधानेनापत्यार्थकत्वमपि शास्त्रीयमेवेति भावः । व[3]स्तुतः स्थानिवद्भावादित्यस्य स्थानिसदृशत्वादित्यर्थः । स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वात्, आदेशत्वेऽपत्यार्थकत्वरूपमापत्यत्वमिति भावः ॥

( ५२१६ अनादेशे दोषवार्तिकम् ॥ २ ॥ )

**॥ * ॥ द्विरणिवधिः ॥ * ॥**

**( भाष्यम् ) द्विश्चाण्विधेयः । औदमेघ्यायाश्छात्रा औदमेघाः । औदमेघ्यानां संघ औदमेघः । 'इञः' इत्यण् न प्राप्नोति ॥**

( प्रदीपः ) **द्विरिति** । इञश्चेत्यस्यानन्तरं ष्यङश्चेति वक्तव्यम् । तेनेञः परो यः ष्यङ् तदन्तादण् भवतीत्ययमर्थो भवति । 'संघाङ्क'[4] इत्यत्रापि तथैव वक्तव्यम् । आदेशपक्षे तु स्थानिवद्भावात्सिध्यति ॥

( उद्द्योतः ) द्विरणो विधेयतामुपपादयति—**इञश्चेतीति** ॥ **तथैवेति** । इञ[5]ः ष्यङश्चेतीत्यर्थः ॥ ननु 'संघांक' इति सूत्रे ऋषिप्रजनस्यैव गोत्रस्य ग्रहणमिति 'स्त्रीपुंसाभ्याम्' इति सूत्रे भाष्यादिषु प्रसिद्धम्, तदस्यानृषित्वात्कथं तत्प्राप्तिः, ऋषित्वे तु कथं ष्यङः प्राप्तिरिति चेन्न । संघांकेति सूत्रे ऋषिप्रजनस्यैव ग्रहणमिति नियमोऽञ्प्रत्ययमात्रविषय इति न दोषः । ऋषिप्र[6]जनत्वेऽप्यनृषित्वे बाधकाभावाच्च ॥ **स्थानिवद्भावादिति** । अण्त्वमिञ्त्वं चातिदेशादिति भावः ॥

( आदेशपक्षे भाष्यम् )

**अस्तु तर्हि आदेशः ॥**

( ५२१७ आदेशे दोषवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ आदेशेऽन्लोपवचनम् ॥ * ॥**

**( भाष्यम् ) यद्यादेशः, अनो लोपो वक्तव्यः । औडुलोम्या, शारलोम्येति । 'ये चाभावकर्मणोः' ( ६।४।१६८ ) इति प्रकृतिभावः प्रसज्येत ॥**

( प्रदीपः ) **औडुलोम्येति** । उ[8]डुलोम्नोऽपत्यं गोत्रं स्त्री । बाह्वादिषु लोमन्शब्दस्य पाठात् केवलस्यापत्येन योगाभावात् सामर्थ्यात्तदन्तग्रहणादिञ्प्रत्ययः । त[9]त्र यदि तदादेशः ष्यङ् क्रियेत तदा 'ये चाभावकर्मणोः' इति प्रकृतिभावाट्टिलोपो न प्राप्नोति । प्रत्ययपक्षे त्विञा व्यवधानात् प्रकृतिभावाभावः ॥

( उद्द्योतः ) **सामर्थ्यादिति** । अन्यथा प्रत्य[10]यविधौ निषेधात्तदन्तान्न स्यादिति भावः ॥ **टिलोपः**—'नस्तद्धिते'इति विहितः ॥ **इञा व्यवधानादिति** । य[11]स्येति लोपेऽपि स्थानिवत्त्वाद्व्यवधानमेवेति भावः ॥

( ५२१८ आदेशे दोषवारकं वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा ष्यङो लोपनिमित्तत्वात् ॥ * ॥**

**( भाष्यम् ) न वा एष दोषः ।**

**किं कारणम् ?**

**ष्यङो लोपनिमित्तत्वात् । लोपनिमित्तः ष्यङ्, न चाकृते लोपे ष्यङ् प्राप्नोति ।**

**किं कारणम् ?**

**गुरूपोत्तमयोरित्युच्यते, न चाकृते लोपे गुरूपोत्तमता भवति ॥**

( प्रदीपः ) **न वेति** । आनुपूर्व्याश्रयेण दोषं परिहरति ॥

( उद्द्योतः ) भाष्ये—**लोपनिमित्त इति**—ब[12]हुव्रीहिः । इञाद्यन्तस्य हि गुरूपोत्तमत्वमपेक्षितम्, तच्च न लोपं विनेति भावः ॥

( परत्वपक्षे दोषवारकं भाष्यम् )

**अथ वा पुनरस्तु परः । ननु चोक्तं ष्यङ्यनादेशे यलोपवचनम्, द्विरण् विधिरिति ।**

**नैष दोषः ।**

**यत्तावदुच्यते—यलोपवचनमिति, अदोष एषः ।**

**किं कारणम् ?**

१ आपत्यस्य च तद्धितेनाति—इत्यनेन यलोपो न प्राप्नोतीत्यर्थः ॥

२ 'अत इञ्' इत्यनेन विधीयमानस्य इञ् प्रत्ययस्य अपत्याधिकारपठितत्वादपत्यार्थकत्वम्, तथा च—अपत्यार्थकत्वरूपो धर्मः सूत्रप्रतिपादित इति शास्त्रीय एवेत्यर्थः ॥

३ ननु एकपदप्रतिपाद्यो धर्म एव शास्त्रीयः, अपत्यार्थकत्वमिति तु न शास्त्रीयम् । अनेकपदप्रतिपादितत्वादित्यत आह—**वस्तुत इति** ॥

४ 'संघाङ्क' इत्यत्रापि ष्यङश्चेति वक्तव्यम् । तथा च—इञः परोऽण् भवति, इञः परो यः ष्यङ ततश्चाण् भवतीत्यर्थः ॥ आदेशपक्षे तु स्थानिवत्त्वेनेञ्त्वं सुसाधमेव ॥

५ अनार्षे विधीयमानात्ष्यङन्तत्वादनृषित्वम् । एवञ्च—औदमेघ्यानां संघ इत्यर्थे संघाङ्केत्यस्य प्राप्तिरेव नेति भावः ॥

६ क्षत्रियप्रजनत्वेऽपि यथा विदुरादौ न क्षत्रियत्वम्, तद्वदिति भावः ॥

७ 'आदेशे न लोप' इति छ. ।

८ औडुलोम्येति रूपं साधयति—**उडुलोम्नोऽपत्यमिति** ॥

९ आदेशत्वे दोषमुपपादयति—**तत्र यदीति** ॥

१० येन विधिस्तदन्तस्येत्यस्य समासप्रत्ययविधौ प्रतिषेधेन लोमन्—शब्दान्तात्प्रातिपदिकादित्यर्थो न स्यादिति 'उडुलोमन्' शब्दात्प्रत्ययो न स्यादित्यर्थः ॥

११ यस्येति लोपेनापहाराद्व्यवधानमुपपादयति—**यस्येतीति** ॥

१२ लोपस्य निमित्तेति षष्ठी तत्पुरुषे विशेषाभावाद्विशेषमुपपादयति—**बहुव्रीहिरिति** ॥

**पुंवद्भावाद्यजादौ तद्धिते । यजादौ तद्धिते पुंवद्भावो भविष्यति, भस्याढे तद्धिते पुंवद्भवतीति ॥**

**अयं तर्हि दोषः—द्विरण्विधिरिति ।**

**नैष दोषः ।**

**सिद्धश्च प्रत्ययविधौ, स च सिद्धः प्रत्ययविधौ ॥**

( प्रदीपः ) **सिद्धश्चेति** । यद्यपि लिङ्गविशिष्टपरिभाषाऽऽश्रयेण इञन्तात्प्रातिपदिकादण् विधीयमानः ष्यङन्तादपि सिध्यति, तथाऽपि[1] पुंवद्भावस्य न्याय्यत्वात्स एवोक्तः ॥

( उद्द्योतः ) **न्याय्यत्वादिति** । पुंवत्त्वेन ष्यङो निवृत्तौ लिङ्गविशिष्टपरिभाषाया अनुपस्थानादिति[2] भावः ॥

( सिद्धान्तभाष्यम् )

**उभयमिदमुक्तम्—आदेशः, पर इति च ।**

**किमत्र न्याय्यम् ?**

**आदेश इत्येतद् न्याय्यम् ।**

**कुत एतत् ?**

**एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम्, षष्ठ्या च निर्देशः कृतः ।**

**अत एष पक्षो निर्दोषः ॥**

( प्रदीपः ) **षष्ठ्या चेति** । चशब्दो[3] हेतौ । 'अणिञोरनार्षयोः' इति षष्ठीनिर्देश आदेशार्थ एव । प्रत्ययपक्षस्याभिमतत्वे त्वसंदेहाय पञ्चम्येवोच्चार्येत ॥

( उद्द्योतः ) हेत्वन्तरानभिधानाच्चोऽनुपपन्न इत्यत आह—**चो हेताविति** ॥ **असंदेहायेति** । किमानन्तर्ये षष्ठी ? उत स्थानरूपे संबन्धे ? इति संदेहनिवृत्तय इत्यर्थः ॥ भाष्ये—**अत एष पक्षो निर्दोषेति** । नन्वादेशपक्षे हस्तिशिरसोऽपत्यं हास्तिशीर्षिः । बाह्वादित्वादिञ्, अञ्चि शीर्षः, तत इञः ष्यङ्—हास्तिशीर्ष्या । अत्र स्थानिवत्त्वेन शीर्षस्य शिरःशब्दत्वात् 'ये च तद्धिते' इति शीर्षन्नादेशः प्राप्नोति, 'ये चाभावकर्मणोः' इति प्रकृतिभावात् टिलोपो दुर्लभः । प्रत्ययत्वपक्षे त्विकारलोपस्य स्थानिवत्त्वेन व्यवधानान्न दोषः । स्पष्टं चेदं 'ये च तद्धिते' इति सूत्रे भाष्य इति चेन्न । उपजीव्यविरोधेन शीर्षन्नादेशाप्रवृत्तेः, प्रकृतिभावविधायकेऽभावेत्यादिपर्युदासेन प्रत्ययास्थानिकयादेरेव ग्रहणेनादोषाच्च । अत्र चेदं भाष्यं मानमित्याहुः ॥

( प्रत्ययपक्षे दोषप्रदर्शकभाष्यम् )

**ननु च परस्मिन्नपि सति ये दोषास्ते परिहृताः, पुंवद्भावेन यलोपः परिहृतः ।**

**स च पुंवद्भावोऽढे भवति, तत्र ते औदमेधेयो न सिध्यति ॥**

(प्रदीपः) **औदमेधेय इति** । ष्यङन्तात् 'स्त्रीभ्यो ढक्' ॥

( आदेशपक्षे दोषोद्भावकं श्लोकभाष्यम् )

**अनुबन्धौ त्वया कार्यौ**

**यस्यादेशः, अनुबन्धौ तेन कर्तव्यौ । एकः सामान्यग्रहणार्थः, अपरः सामान्यग्रहणाविघातार्थः ॥**

**क्व सामान्यग्रहणार्थेनार्थः ?**

**यङश्चाप् (४।१।७४) इति ॥**

**अथ क्व सामान्यग्रहणाविघातार्थेनार्थः ?**

**अत्रैव ॥**

**किं प्रयोजनम् ?**

**चाबर्थम्**

**चाव्यथा स्यात् ॥**

( प्रदीपः ) इदानीं प्रत्ययवाद्यादेशवादिनो दोषमुद्भावयति—**अनुबन्धाविति** ॥

( उद्द्योतः ) **दोषमुद्भावयतीति** । अस्मत्पक्षे लक्ष्यासिद्धिर्दोषः, त्वन्मते गौरवमिति समतेत्यभिमानः । एवं चानुबन्धावित्यादिर्भाष्ये एकदेशिनोरुक्तिः ॥ भाष्ये—**एकः सामान्येति** । एको ङकारोऽस्य 'यङश्चाप्' इत्यत्र ग्रहणार्थ इत्यर्थः । एकानुबन्धकत्वादस्यैव ग्रहणं स्यान्न तु 'वृद्धेत्' इति ञ्यङ इति द्वितीयोऽपि कार्य इत्यर्थः ॥ **अत्रैवेति** । यङश्चावित्यत्रैवेत्यर्थः ॥ **चाबर्थं** । अत्र, ञ्यङि च चाप्सिद्ध्यर्थमित्यर्थः ॥

---

१ स्त्रीप्रत्ययविधौ लिङ्गविशिष्टपरिभाषा न प्रवर्तत इति प्राचां ष्फ तद्धित इति सूत्रस्थभाष्याज्ज्ञायत इत्यरुच्याऽऽह—तथापीति ॥

२ पुंवत्त्वेन ष्यङो निवृत्तौ लिङ्गविशिष्टपरिभाषाया अत्र विषय एव नास्तीत्यनुपस्थानमिति भावः ॥

३ यतः षष्ठ्या निर्देशः कृतोऽत आचार्येण एवमेव हि सूत्रम्पठितमित्यन्वयः । षष्ठीनिर्देशादादेशविधायकमेतत्सूत्रमित्यर्थः ॥

४ आदेशविधायकमेतत्सूत्रमित्यनुमाने नान्यो हेतुः सम्भवतीति नायं समुच्चयार्थश्चकार इत्यत आह—हेत्वर्थेति ॥

५ प्रत्ययाधिकारपठितत्वादस्य प्रत्ययविधायकत्वम्, उत षष्ठीनिर्देशादादेशविधायकत्वमित्येवंरूपस्तु संदेहो न सम्भवति । 'गापोष्टक्' इत्यादौ षष्ठीनिर्देशस्थलेऽपि प्रत्ययविधायकत्वस्य दृष्टत्वेन षष्ठीनिर्देशस्यादेशविधायकत्वानुमाने हेतुत्वासम्भवात् । अतः सन्देहम्प्रदर्शयति—किमेति ॥

६ आदेशपक्षेऽपि भाष्यानुक्तन्दोषमुपपादयति—नन्वादेशपक्ष इत्यादिना ॥

७ इञन्तस्य गुरूपोत्तमत्वं ष्यङ उपजीव्यम्, तच्च शिरसादेशे हास्तिशिरसिरिति रूपाद्विरुध्येत । तथा चोपजीव्यविरोधाच्छीर्षन्नादेशो न भवतीति तात्पर्यम् ॥

८ ननूपजीव्यविरोधेऽपि ष्यङ्विधायकस्य सन्निपातलक्षणविधित्वं नास्ति, ढेयं इत्यादीनामकारान्ताङ्गं ढे प्रत्ययश्च निमित्तमिति सन्निपातलक्षणविधित्वं सुस्पष्टम् । अणिञोरनार्षयोरित्यस्य च गोत्रे यावणिञौ विहितावनार्षौ तदन्तयोर्गुरूपोत्तमयोः स्त्रियां ष्यङादेश इत्यर्थान्न तत्सम्भवतीति न सन्निपातलक्षणपरिभाषायाः प्रवृत्तिरित्यरुचिबोधनायाह—प्रकृतिभावेति । ये चाभावकर्मणोरित्यत्र भावकर्मार्थकप्रत्ययभिन्ने यादौ प्रत्यये प्रकृतिभाव इत्यर्थस्य सद्भावात्, भावकर्मार्थकप्रत्ययश्च प्रत्ययास्थानिक एव लभ्यत इति तत्सदृशो यादिप्रत्ययोऽपि प्रत्ययास्थानिक एव गृह्यत इति न दोष इति भावः ॥

९ ये चाभावकर्मणोरित्यस्य एवंरूपार्थकरण इदमेव भाष्यम्प्रमाणमित्यर्थः ॥

१० सामान्यग्रहणाविघातार्थकत्वम्प्रदर्शयति—एकानुबन्धेति ॥

११ 'यङश्चाप्' इत्यत्र ष्यङ्ञ्यङोर्ग्रहणार्थमित्यर्थः । तेन हास्तिशीर्ष्या, कौसल्या—इति चाप्प्रत्ययान्तरूपद्वयसिद्धिः ॥

१२ ष्यङन्तात्, ञ्यङन्ताच्च चाप्सिद्ध्यर्थमित्यर्थः ॥

( आदेशवादिन आक्षेपभाष्यम् )

तव कथं चाप् ?

( उद्द्योतः ) तव कथं चाबिति । आदेशवादिनः प्रश्नः ॥

( प्रत्ययवादिनः समाधानश्लोकभाष्यम् )

**टाब्विधिर्मम ।**

**टापा मम सिद्धम् ॥**

( प्रदीपः ) **टापा ममेति** । प्रत्ययवादी प्रत्यये कृते टापं करोतीत्यर्थः ॥

( उद्द्योतः ) टाबिति । प्रत्ययवादिन उत्तरम् ॥

( आदेशवादिनः प्रतिबन्दिभाष्यम् )

**ननु च ममापि टापा सिद्धं स्यात् ॥**

( प्रदीपः ) आदेशवाद्याह—**ममापीति** ॥

( प्रत्ययवादिनः परिहारभाष्यम् )

**न सिध्यति । अण इति, इञ इति चेकारः प्राप्नोति ॥**

( आदेशवादिनः परिहारभाष्यम् )

**नैष दोषः ।**

**नैवं विज्ञायते—अणन्तादकारान्ताद्, इञन्तादिकारान्तादिति ।**

**कथं तर्हि ?**

**अण्योऽकारः, इञ्य इकार इति ॥**

( प्रदीपः ) **अण्य इति** । अकारः प्रधानम्, तद्विशेषणमण् । तत्रानल्विधाविति प्रतिषेधात् स्थानिवद्भावाभावः । अणन्तादकारान्तादिति तु विज्ञायमाने स्वाश्रयमकारान्तत्वं स्थानिवद्भावादणन्तत्वं चेति स्यादेव ङीप्प्रत्ययः । इञादेशस्य तु ष्यङो न स्वाश्रयमिकारान्तत्वम्, नापि स्थानिवद्भावप्रापितम्, अनल्विधाविति प्रतिषेधादिति ततः सिद्ध एव टाप् । यदा चेञ उपसंख्यानमित्यत्रेत इत्यपेक्ष्यते, तदा ष्यङि कृतेऽनिकारान्तत्वात् ङीषोऽप्रसङ्गः ॥

( उद्द्योतः ) इतो मनुष्येत्यस्य प्राप्तिस्तु नेत्याह—**इञादेशस्य त्विति** ॥ ननु सूत्रप्राप्तावपि 'इञ उपसंख्यानम्' इति प्राप्नोति, तत्र च 'इतः' इत्यस्याभावोऽत आह—**यदा चेति** । अत्रैव वारणार्थमित इत्यस्यानुवृत्तिरिति भावः ॥

( प्रत्ययवादिनो दोषभाष्यम् )

**स्वरार्थस्तर्हि त्वया चाब्वक्तव्यः । ञ्नितीत्याद्युदात्तत्वं मा भूत्, चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यादिति ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**स्वरार्थ इति** । इञादेशो यदि ष्यङ् क्रियते, तदन्ताच्च टाप्, तदा वाराह्येत्याद्युदात्तं पदं स्यात्; तस्मादन्तोदात्तार्थस्त्वया चाप् विधेयः ॥

( उद्द्योतः ) **चाप् विधेय इति** । प्रत्ययवादिमते तु प्रत्ययस्वरेणान्तोदात्तं पदं सिध्यति—इत्याशयः ॥

( आदेशवादिनः प्रत्याक्षेपभाष्यम् )

**तवापि तर्हि ष्यङा उक्तत्वात् स्त्रीत्वस्य टाब्न प्राप्नोति ॥**

( प्रदीपः ) आदेशवाद्याह—**तवापीति** । मम तु 'यङश्चाप्' इति वचनाच्चाप् भवतीति मन्यते ॥

( उद्द्योतः ) नन्वादेशपक्षेऽप्युक्तार्थत्वं तुल्यमत आह—**मम त्विति** ॥

( प्रत्ययवादिनः श्लोकभाष्येण समाधानम् )

**नैष दोषः ।**

**उक्तेऽपि हि भवन्त्येते ।**

**उक्तेऽपि तु स्त्रीत्वे भवन्त्येते टाबादय इति । उक्तमेतत्—स्वार्थिकाष्टावादय इति ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**नैष दोष इति** ॥ **उक्त इति** । द्योतित इत्यर्थः । एकस्य स्त्रीत्वद्योतने सामर्थ्याभावात् द्वयोर्द्योतकत्वम् । तच्च प्रयोगदर्शनादवसीयते ॥

( उद्द्योतः ) वाचकत्वपक्षात् द्योतकत्वपक्षे विशेषमाह—**एकस्येति** । अन्धकाराधिक्ये एकस्य प्रदीपस्येवेत्यर्थः । गार्ग्य इत्यादावपि यस्य सत्त्वेन तन्मात्रस्य द्योतने सामर्थ्याभावादिति भावः ॥ **तच्च प्रयोगेति** । अतिप्रसंगो नाशंक्य इति भावः ॥

( आदेशवादिनो दोषवारकं भाष्यम् )

**सानुबन्धकस्यादेशो मम ।**

**ममापि तर्हि सानुबन्धकस्यादेश इत्कार्यं नेति, तेन ञित्न भविष्यति ॥**

( प्रदीपः ) आदेशवाद्याह—**सानुबन्धकस्येति** । इञ एवाकृतञकारेत्संज्ञकस्य यादेशः करिष्यते, तेन ञित्स्वराभावात्प्रत्ययस्वरे टापि कृते 'एकादेश उदात्तेनोदात्तः' इति वाराह्याशब्दोऽन्तोदात्तो भविष्यतीत्यर्थः ॥

( उद्द्योतः ) सानुबन्धकस्यादेशे ञित्कार्याभावमुपपादयति—**इञ एवेति** ॥

---

१ टिड्ढाणञ्द्वयसजित्यनेन ॥

२ इतो मनुष्यजातेः, इतो मनुष्यजातेरिञ उपसङ्ख्यानमिति सूत्रवार्तिकाभ्याम् ॥

३ अकारस्याप्राधान्ये दोषमाह—अणन्तादिति ॥

४ इतो मनुष्यजातेरित्यस्याप्राप्तावपि तत्सूत्रस्थ 'इञ उपसंख्यानम्' इति वार्तिकस्य प्राप्तिरित्यर्थः ॥

५ इञ उपसङ्ख्यानमिति वार्तिके इत इत्यस्यानुवृत्तिरिति भावः ॥

६ प्रत्ययवादिनस्तु ष्यङः प्रत्ययस्वरेणोदात्तत्वम्, ततश्च टापि उदात्तनिवृत्तिस्वरेणाकारस्योदात्तत्वमिति चावभावेऽपि न दोष इति भावः ॥

७ आदेशवादिमते 'यङश्चाप्' इति वचनादुक्तेऽपि स्त्रीत्वे चाप् भविष्यति । तव तु ष्यङा स्त्रीत्वस्योक्तत्वेन उक्तार्थानामप्रयोग इति टाप् न स्यादिति भावः ॥

( प्रत्ययवादिनो दोषदर्शकं श्लोकभाष्यम् )

**अस्थानिवत्त्वे दोषस्ते**
**वृद्धिर्[1]त्र न सिध्यति ।**

**अस्थानिवत्त्वे दोषः—वृद्धिस्ते न प्राप्नोति । औडुलोम्या, शारलोम्येति । न[2] चेदानीमर्द्धजरतीयं लभ्यम्—वृद्धिर्मम भविष्यति, स्वरो नेति ।**
**तद्यथा—अर्धं जरत्याः कामयन्ते, अर्धं नेति ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**अस्थानिवत्त्व इति** ॥ **अर्धजरतीयमिति** । 'समासाच्च तद्विषयात्' इति छप्रत्ययः । मुखं न कामयन्ते, अङ्गान्तरं तु जरत्याः कामयन्ते ॥

( उद्द्योतः ) भाष्ये—**अस्थानिवत्त्व इति** । स्थानिवत्त्वेन ञित्वाभावे इत्यर्थः ॥ **समासाच्चेति** । इवार्थे समा[3]सः, इवार्थे प्रत्यय इति इवार्थद्वयनिर्वाहाय जरतीशब्दोऽर्द्धान्तरे वर्तते, अर्द्धशब्दश्च प्रत्यासत्त्या जरत्या एवार्द्धान्तरे, तौ च कामनाऽकामनालाक्षणिकौ । एवं च तादृशकामनाऽकामनादिसदृशवृद्ध्यादिकामनाऽकामनाप्रयोज्या तज्जन्यप्रवृत्तिसदृशी तव प्रवृत्तिरित्यर्थः । व्यतिरेके च दृष्टान्तः । यथा तत्र विषयभेदात्तादृशकामनादि, तथा प्रवृत्त्यादि वक्तुं शक्यम्; नैवं प्रकृते । एकनिमित्तकत्वात्कार्यद्वयस्येति तात्पर्यम् ॥

( आदेशवादिनः प्रतिबन्दिश्लोकभाष्यम् )

**त्वयाऽप्यत्र विशेषार्थं**
**कर्तव्यं स्याद् विशेषणम् ।**

**त्वयाऽप्यत्र विशेषणार्थोऽनुबन्धः कर्तव्यः ॥**
**क्व विशेषणार्थेनार्थः ?**
**ष्यङः सम्प्रसारणमिति ॥**

( प्रदीपः ) आदेशवाद्याह—**त्वयाऽप्यत्रेति** ॥

( प्रत्ययवादिनो दोषनिवारकं श्लोकभाष्यम् )

**अक्रियैव विशेषोऽत्र**
**सानुबन्धो विशेषवान् ।**

**अक्रियैव मम विशेषः, सानुबन्धस्तु विशेषवान् ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**अक्रियैवेति** । 'यस्य संप्रसारणम्' इति वक्ष्यते । निरनुबन्धकत्वाच्चायमेव ग्रहीष्यते । आम्बष्ठ्यापुत्र इत्यादौ तु ष्यङः सानुबन्धकत्वात्संप्रसारणं न भविष्यतीत्यर्थः ॥

( उद्द्योतः ) ष्यङः—'वृद्धेत्कोशल' इतिविहितस्य ॥

( आदेशवादिनो दोषभाष्यम् )

**पाश्यायां ते कथं न स्यात् ?**

**पाश्यापुत्र इत्यत्र कस्मान्न भवति ?**

( प्रदीपः ) आदेशवाद्याह—**पाश्यायामिति** । यदीह यप्रत्ययं विधाय 'यस्य संप्रसारणम्' इत्युच्यते तदा पाशानां समूहः 'पाशादिभ्यो यः' इति यप्रत्ययस्य पाश्यापतिरित्यादौ संप्रसारणप्रसङ्गः ॥

( प्रत्ययवादिन उत्तरभाष्यम् )

**एको मे स्याद्विशेषणम्**

**एको मम विशेषणार्थः । त्वया पुनर्द्वौ कर्तव्यौ ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**एक इति** ॥

( आदेशवादिन आक्षेपकं श्लोकभाष्यम् )

**अथैकस्मिन्नपि सति कः करिष्यते ?**
**किं चातः ?**

**अन्यस्मिन् सूत्रभेदः स्यात्**

**यद्येताभ्यामन्यः क्रियते, सूत्रभेदः कृतो भवति ।**

**षिति लिङ्गं प्रसज्यते ।**

**अथ षित् क्रियते, षित इतीकारः प्राप्नोति ।**

**ङिति चेक्रीयिते दोषः**

**अथ ङित् क्रियते, चेक्रीयिते दोषो भवति ।**
**लोलूयापुत्रः, लोलूयापतिरिति ॥**

( प्रदीपः ) आदेशवाद्याह—**अथेति** ॥ **चेक्रीयित इति** । 'धातोरेकाचो' इत्यनेन विहिते यङीत्यर्थः । यङः पूर्वाचार्यसंज्ञा चेक्रीयितमिति ॥

( प्रत्ययवादिन उत्तरं श्लोकभाष्यम् )

**व्यवधानान्न दुष्यति ॥**

**अकारेण व्यवहितत्वान्न दोषो भवति ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**व्यवधानादिति** । लोलूयेत्यत्र यङन्तात् 'अप्रत्ययात्' इत्यकारप्रत्यये सति अकारेण व्यवधानादित्यर्थः । 'पुत्रपत्योः' इति सप्तमीनिर्देशादनन्तरस्य यङः संप्रसारणेन भाव्यम् । तत्र वाराह्याशब्दे टापा सहैकादेशस्य पूर्वं प्रत्यन्तवद्भावात् पुत्रपत्योरनन्तरो यङ् भवति ।

---

१ 'वृद्धिस्तत्र न' इति क. ॥

२ अत्र केचित् 'न वाऽर्धजरतीयत्वं स्वरो मे न भविष्यति' इति श्लोकवार्तिकरूपमधिकं ग्रन्थमनुमाय 'इदं पञ्चशत्यापि वर्षाणां लुप्तमासीत्तदस्माभिरुद्धृतम्' इति वदन्ति । तन्न समीचीनम् । कैयटेन अर्धजरतीयरूपसाधनार्थम् 'अर्धजरतीयमिति' इति प्रतीकमुद्धृतम् । यदि ततः पूर्वं 'न वार्धजरतीयत्वम्' इति वार्तिकमभविष्यत्तदा 'अर्धजरतीयत्वमिति' इति प्रतीकम्प्राथम्यादग्रहीष्यत् ॥ रूपानुपपत्तेस्तत्रापि सत्त्वात् । अपि च नैतानि श्लोकवार्तिकानि, भाष्यकाराणामेवैते श्लोका इत्येतदपि उद्द्योततस्तत्र तत्र प्रतीयत इति सुधिय एवात्र प्रमाणम् ॥

३ अस्य प्रघट्टकस्यायमर्थः—अर्धजरतीयमित्यत्र समासोऽपि इवार्थः, प्रत्ययोऽपि तदर्थएव । इवार्थद्वयनिर्वाहाय अर्धशब्द अर्धान्तरे वर्तते तद्वज्जरतीशब्दोऽपि अर्धान्तर एव स्वीकरणीयः । उभयत्रापि जरत्या एवार्धं ग्राह्यम् । तथा च एकमर्धं कामनाविषयम् । अपरं च अकामनाविषयम् । दार्ष्टान्तिकेऽपि वृद्ध्यर्थं स्थानिवद्भावेन ञित्वे समाश्रिते वृद्धिः स्यात्स्वरो नेत्येतादृशमर्धजरतीयं न लभ्यमिति भावः ॥ जरत्या अङ्गभेदेन कामनाऽकामने सम्भवतः । अत्र वृद्धिस्वरयोस्तु ञित्वमेकमेव निमित्तमिति न तथेति द्योतयति—व्यतिरेके इत्यादिना ॥

लोलूयेत्यत्र तु यङन्तात् 'अप्रत्ययात्' इत्यकारप्रत्यये कृते 'अतो लोपः' इति यङोऽकारो लुप्यते । तत्र टापि कृते एकादेशे च पुत्रपत्योरनन्तरो यङ् न भवति, आकारेण व्यवधानादिति संप्रसारणं न भविष्यतीत्यर्थः ॥

( उद्द्योतः ) ननु यदि लोलूयापुत्रेऽकारेण व्यधानं तर्हि वाराहीपुत्रेऽपि टापा व्यवधानान्न प्राप्नोतीत्यत आह—तत्र वाराहीति । न च 'अचः परस्मिन्' इत्येतत् 'कृदतिङ्' इतिसूत्रस्थभाष्यरीत्या सुलभम्, एवं च व्यवधानमेवेति वाच्यम् । 'येन नाव्यवधानम्' इतिन्यायेन तद्व्यवधानेऽपि प्रवृत्तेरित्याशयात् ॥

( आदेशवादिनः श्लोकभाष्यम् )

**योऽनन्तरो न धातुः सः ।**

**धातोरिति वर्तते, यश्चात्रानन्तरो नासौ धातुः ।**

**यो धातुः सोऽननन्तरः**

**यश्च धातुर्नासावनन्तरः ।**

**न चेदुभयतः साम्य-**
**मुभयत्र प्रसज्यते ।**

**न चेदुभयतः साम्यम्, उभयत्र प्राप्नोति ।**

( प्रदीपः ) आदेशवाद्याह—**योऽनन्तर इति** । यदा 'यङः संप्रसारणम्' इति भवता सूत्रं क्रियते तदा 'लिटि धातोः' इत्यतो धातुग्रहणानुवृत्तौ सत्यां धातुना यङ् विशेष्यते । तत्र पुत्रपत्योरनन्तरो यङन्तो धातुर्न संभवतीति सामर्थ्याद्यथाऽधातोरनन्तरस्य वाराहीपुत्र इति संप्रसारणं भवति, एवं लोलूयापुत्र इत्यत्र व्यवहितस्यापि धातोः स्यादित्यर्थः । धातुत्वमानन्तर्यं च विशेषणमाश्रितम् । तत्रैकस्योभयासंभवात्सामर्थ्यादेकतरविशेषणाश्रयणादुभयोरपि संप्रसारणप्रसङ्ग इत्यर्थः ॥ **न चेदिति** । एकस्य यदा धर्मद्वयं न संभवति तदाऽन्यतररूपाश्रयणादुभयोः साम्यात्कार्यप्राप्तिः ॥

( उद्द्योतः ) **आदेशवाद्याहेति** । प्रत्ययवादिना 'यङः संप्रसारणम्' इति सूत्रन्यासेऽतिप्रसंगे परिहृते तं परिहारमादेशवाद्याक्षिपतीत्यर्थः ॥ **धातुग्रहणानुवृत्ताविति** । उत्तरत्र संबन्धावश्यकत्वेन मध्येऽपि संबन्ध इति भावः ॥ **न संभवतीति** । धातुना ताभ्यां समासाभावात् । न च क्विबन्ते संभवः, अलोपयलोपयोः कृतयोः स्थानिन एवाभावादिति भावः ॥

( प्रत्ययवादिनः समर्थकं भाष्यम् )

**यदि पुनर्यङा धातुर्विशेष्येत?**

( प्रदीपः ) प्रत्ययवाद्याह—**यदीति** । तदा किं दोषः स्यान्न वेति पृच्छति ॥

( उद्द्योतः ) **उभयोरपीति** । अधातोरनन्तरस्य, धातोर्व्यवहितस्य चेत्यर्थः ॥ अंगस्यैका वेत्यत्र विशेषण इत्यनुकर्षः ॥

( आदेशवादिभाष्यम् )

**यङा विशेष्येत यदीह धातु-**
**र्यङ् धातुना वा यदि तुल्यमेतत् ।**

**यद्येव यङा धातुर्विशेष्यते, अथापि धातुना यङ्, तुल्यमेतद्भवति ।**

( प्रदीपः ) आदेशवाद्याह—**यङेति** । 'जुसि च' इत्यादावङ्गेनैको विशेषणे, अङ्गस्यैका वा विशेषोऽस्त्येव । यङा तु धातौ विशेष्यमाणे, धातुना वा यङि विशेषो नास्तीत्यर्थः ॥

( उद्द्योतः ) अन्यत्र विशेषणविशेष्यभावव्यत्यासेऽर्थभेदेऽपि प्रकृते नेत्याह—**जुसि चेति** । अङ्गेनैको विशेषणेऽनन्त्यस्यापि गुणः, अन्यथा त्वन्त्यस्येति विशेषः ॥ **यङा त्विति** । उभयथाऽपि प्रत्ययग्रहणपरिभाषया तदन्तविधिसङ्भावाद्धातुरूपयङोऽसम्भवादिति भावः । धातुना वा यङीत्यत्र विशेषेणे इत्यनुकर्षः ॥

( प्रत्ययवादिभाष्यम् )

**उभौ प्रधानं यदि नात्र दोषः ।**

**अथोभौ प्रधानं भवतः, नात्र दोषो भवति ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**उभाविति** । यङ्धात्वोः परस्परेण विशेषणविशेष्यभावो नास्ति । समुच्चयेन तु कार्यं विधीयते पुत्रपत्योरनन्तरस्य यङो धातोश्चेति । तत्र वाराहीपुत्र इत्यादौ भविष्यति न तु लोलूयापतिरित्यादौ, धातोर्व्यवधानात् । ततश्च सामर्थ्याद्धातुग्रहणस्योत्तरार्थैवानुवृत्तिः ॥

( उद्द्योतः ) ननु धातोः कार्याभावे किं तदनुवृत्त्येत्यत आह—**ततश्चेति** ॥

( आदेशवादिभाष्यम् )

**तथा प्रसार्येत तु वाक्पतिस्ते ।**

**तथा सति वाक्पतिः, वाक्पुत्र इत्यत्र सम्प्रसारणं प्राप्नोति ।**

( प्रदीपः ) आदेशवाद्याह—**तथेति** । यदि यङो धातोः समुच्चयः, न तु विशेषणविशेष्यभावः, तदा वाक्पतिशब्दे पत्युरनन्तरस्य यङो धातोश्चेति वचेर्धातोः संप्रसारणप्रसङ्गः ॥

( प्रत्ययवादिभाष्यम् )

**एवं तर्हि ?**

**धातुप्रकरणस्येह**
**न स्थानमिति निश्चयः ।**

१ 'जुसि च' इत्यत्र विशेषणव्यत्यासे—इगन्ताङ्गस्य गुणो जुसि, अङ्गस्यैको गुणो जुसि इति द्विमकारकोऽर्थः सम्भवतीति भावः ॥
२ अन्यत्र—जुसि चेत्यादौ ॥
३ अन्यथा—अङ्गस्य विशेषणत्वाभावे तस्य विशेष्यत्वे चेत्यर्थः ॥
४ 'विशेष्यमाणे' इति झ. पाठः ।
५ 'यङ्धात्वो' इति च. पाठः ।
६ 'एवं तर्हि' इति पाठः क. पुस्तके एव समुपलभ्यते । स च विद्वद्भिदर्शनार्थमत्रारोपितः ॥

धातुप्रकरणस्येह स्थानं नास्तीति कृत्वा एष निश्चयः क्रियते ॥

( प्रदीपः ) प्रत्ययवाद्याह—**धातुप्रकरणस्येति** । धातुग्रहणं नानुवर्तेत इति नास्त्यतिप्रसङ्गः ॥

( उद्द्योतः ) भाष्ये—'धातुप्रकरणस्य' इति प्रकरणपदेनानुवृत्तिरुच्यते ॥ **नास्त्यतिप्रसंग इति** । वाक्यताविल्यर्थः ।

( आदेशवादिभाष्यम् )

**अवश्यमात्वार्थं धातुग्रहणं कर्तव्यम् । इह मा भूत्—गोभ्याम्, गोभिः, नौभ्याम्, नौभिरिति ॥**

( प्रदीपः ) आदेशवाद्याह—**अवश्यमिति** । 'आदेच उपदेशेऽशिति' इत्येतदर्थमवश्यमनुवर्त्यं धातुग्रहणमित्यर्थः ॥

( प्रत्ययवादिभाष्यम् )

**आत्वार्थं यदि कर्तव्यं**
**तत्रैवैतत्करिष्यते ॥**
**उपदेशे यदेजन्तं**
**तस्य चेदात्वमिष्यते ।**
**उद्देशो रूढिशब्दानां**
**तेन गोर्न भविष्यति ॥**

**एवं तर्हि उपदेशे इत्युच्यते । उद्देशश्च प्रातिपदिकानां नोपदेशः ॥**

( प्रदीपः ) प्रत्ययवाद्याह—**आत्वार्थमिति** ॥ **एतदिति** । एतत्प्रयोजनार्थं व्याख्यानमित्यर्थः । उपदेशशब्देन शास्त्रमुच्यते । तेन शास्त्रे ये पठिता एजन्तास्तेषामात्वं विधीयते । प्रातिपदिकानि तु न प्रतिपदं शास्त्रे पठितानि, किं तर्हि? प्रकृत्यादिविभागकल्पनाद्वारेण साधुत्वेन प्रतिपादितानि । ननु 'नौश्चचष्टन्' 'गोश्चचः' इत्यादौ उपदेशे यानि प्रातिपदिकानि पठितानि तेषामात्वप्रसङ्गः । एवं तर्हि 'गोतो णित्' इति णित्त्वातिदेशाज्ज्ञापकात्तेषामात्वाभावः । न ह्यात्वे गोशब्दस्य कृते णित्वस्यास्ति प्रयोजनम् । एवं प्रत्ययपक्षोऽपि निर्दोषः । अत एव 'कौड्यादिभ्यश्च' इति पञ्चमीनिर्देशः । औदमेघेय इत्यादौ तु सिद्धः प्रत्ययपक्षेऽपि यलोपः । ष्यङ आपत्याद्विहितत्वात् स्वार्थिकत्वादापत्यत्वादित्याहुः ॥

( उद्द्योतः ) ननु येनाननुवृत्तिरुक्ता तेनैव कथं तत्करणमुच्यतेऽतो नानेनानुवृत्तिकर्तव्यतोच्यते, किं तर्हि तत्फलसंपत्त्यर्थं व्याख्यानमेवेत्याह—**एतत्प्रयोजनार्थमिति** ॥ **शास्त्रमिति** । करणव्युत्पत्त्येति भावः ॥ **एवं तर्हीति** । वस्तुत उपदेशपदेनाज्ञातज्ञापकमुच्चारणमुच्यते, एजन्तमित्यर्थश्च शब्दरूपं विशेष्यमादाय । शब्दश्च प्रत्यासत्त्योपदेशविषय एवेति—ढौकितेत्यादौ न दोषः । नैवं 'नौश्चचः' इत्यादौ, अनुवादत्वादिति तत्त्वम् । अत एवाग्रे—'प्रातिपदिकानां नोपदेशः' इति भाष्यं संगच्छते ॥ स्वयं प्रौढ्याऽऽह—**एवं प्रत्ययेति** ॥ **अपत्याद्विहितत्वादिति** । अपत्यप्रत्ययान्ताद्विहितत्वादित्यर्थः । यलोपसूत्रे आपत्यशब्दस्य तन्त्रेणार्थद्वयम्—अपत्ये भवस्येति, अपत्यार्थकप्रत्ययोद्देशेन विहितस्येति चेति भावः । द्वितीये 'शेषे' इत्यण् ॥ अस्यार्थस्यापत्यशब्देन स्वरसतोऽलाभादाह—**स्वार्थिकत्वाद्वेति** । ष्यंतस्य स्वार्थश्चापत्यमेवेति भावः । अधिकस्त्रीत्वद्योतकतासत्त्वेऽपि तत्त्वाक्षतेरिति तात्पर्यम् । वस्तुतस्तु स्वार्थिकत्वेऽपि स्त्रियामिति विशिष्योक्तेः स्त्रीत्वार्थकत्वमेवास्य न तु अपत्यार्थकत्वम्, अभिजिच्छब्दाद्गोत्राणन्तादन्यंतस्वार्थिके यञि कस्याप्यर्थस्य विशिष्य द्योत्यताऽनुक्तेरविशेषात्सर्वोऽपि तद्द्योत्य इति यञोऽपत्यार्थकत्वेन ततो 'गोत्रचरणात्' इति वुञि 'आपत्यस्य' इति यलोपसिद्धिरिति भाष्याशयः ॥

( ६५५ ष्यङादेशविधायकसूत्रम् ॥ ४ । १ । २ आ. ३९ )

## १३२७ गोत्रावयवात् ॥ ४।१।७९ ॥

( ष्यङादेशाधिकरणम् )

( सूत्राक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ?**

( प्रदीपः ) अवयवशब्दस्यानेकार्थत्वात् सन्देहात्प्रश्नः—**किमर्थमिति** ॥

( उद्द्योतः ) गोत्रावयवाद्विहितयोरणिञोः ष्यङिति सूत्रार्थः ॥ **अनेकार्थत्वादिति** । पृथग्भूताप्रधानैकदेशार्थत्वादिति भावः ॥

( एकदेशिसमाधानभाष्यम् )

**गोत्रावयवादगोत्रार्थम् । गोत्रावयवादित्युच्यते, अगोत्रार्थोऽयमारम्भः ॥**

( प्रदीपः ) पृथग्भाववाचिनमवयवशब्दमाश्रित्याऽऽह—**गोत्रावयवादिति** । गोत्रावयवो गोत्रात् पृथग्भूतो गोत्रं न भवतीत्यर्थः । सप्तम्यर्थे चेयं पञ्चमी । तेन गोत्रेऽणिञोः ष्यङ् भवतीत्यर्थः ॥

( उद्द्योतः ) नन्वेवमर्थेन पौर्वापर्यासंभवात्पञ्चम्यनुपपन्नेत्यत आह—**सप्तम्यर्थे चेति** ॥

( ५२२० एकदेश्याक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् ॥ * ॥**

( भाष्यम् ) **गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टं प्राप्नोति ।**

---

१ प्रकरणपदेनानुवृत्तिरुच्यत इति । धातुपदानुवृत्तेरत्र न स्थानमिति धातुपदं नात्रानुवर्तनीयमिति भावः ॥

२ 'उपदेशे आत्वमित्यु' इति च. पाठः ॥

३ 'एवं च' इति च. पाठः ॥

**इहापि प्राप्नोति—आहिच्छत्री, कान्यकुब्जीति ॥**

(प्रदीपः) **इहापीति** । पूर्वसूत्रे गोत्रग्रहणानर्थक्यप्रसङ्गादेषोऽर्थ इह नाश्रीयत इति भावः ॥

(उद्योतः) तदनाश्रयणे बीजमप्याह—**पूर्वसूत्रे इति** ॥

(एकदेशिसमाधानभाष्यम्)

**एवं तर्हि गोत्रादेव गोत्रावयवात् ॥**

(प्रदीपः) इदानीमेकदेशवाच्याश्रयेणाह—**एवं तर्हीति** । यथा घृतावयवो घृतम्, एवं गोत्रावयवोऽपि गोत्रमित्यर्थः ॥

(उद्योतः) ननु[1] देवदत्तावयवस्य देवदत्तत्वाभावेन गोत्रादेव गोत्रावयवादित्ययुक्तमत आह—**यथा घृतेति** ॥

(५१२१ सूत्राक्षेपवार्तिकम् ॥ २ ॥)

**॥*॥ गोत्रादिति चेद्वचनानर्थक्यम् ॥*॥**

(भाष्यम्) **गोत्रादिति चेद्वचनमनर्थकं भवति । सिद्धं गोत्रे पूर्वेणैव ॥**

(प्रदीपः) **गोत्रादिति चेदिति** । पौत्रप्रभृत्यपत्यसमुदायस्य गोत्रत्वे तदवयवस्यापि गोत्रत्वात् पूर्वेणैव ष्यङ् सिद्ध इत्यर्थः ॥

(उद्योतः) सूत्रे—'**गोत्रावयवात्**' इति—गोत्रं चासाववयवश्चेति कर्मधारयः । तत्र गोत्रशब्देन यदि पारिभाषिकं गोत्रं तदा दोषमाह—भाष्ये—**वचनमनर्थकमिति** ॥ ननु पूर्वेण गोत्रे विधानमनेन तदवयव इति कथं वचनानर्थक्यमत आह—**पौत्रप्रभृतीति** ॥

(सिद्धान्त्येकदेशिभाष्यम्)

**इदं तर्हि प्रयोजनम्—गुरूपोत्तमयोरित्युच्यते, अगुरूपोत्तमार्थोऽयमारम्भः ॥**

(उद्योतः) भाष्ये—**अगुरूपोत्तमार्थ** इति । कस्मिंश्चिन्महागोत्रे यान्यवान्तरगोत्राणि, यथा—भार्गवस्य च्यवनादीनि, तेष्वगुरूपोत्तमार्थः ॥

(५२२२ सूत्रप्रत्याख्याने वार्तिकम् ॥ ३ ॥)

**॥ * ॥ अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वप्रसङ्गः ॥ * ॥**

(भाष्यम्) **अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वत्र प्राप्नोति । अष्टाशीतिसहस्राण्यूर्ध्वरेतसामृषीणां बभूवुस्तत्रागस्त्याष्टमैर्ऋषिभिः प्रजनोऽभ्युपगतः । तत्रभवतां यदपत्यं तानि गोत्राणि, अतोऽन्ये गोत्रावयवाः, तत उत्पत्तिः प्राप्नोति । तच्चानिष्टम् । तस्मान्नार्थोऽनेन योगेन ॥**

(प्रदीपः) **सर्वप्रसङ्ग इति** । यथा भार्गवगोत्रस्य साधारणस्यावान्तरगोत्राणि च्यवनादीनि, तेषु ऋषिशब्देभ्यः पूर्वसूत्रेऽनार्षयोरिति ष्यङ्प्रतिषेधादनृषिशब्देभ्यो गुरूपोत्तमेभ्य एव ष्यङिष्यते, न त्वगुरूपोत्तमेभ्य इति भावः ॥ **तत्रभवतामिति** । अगस्त्याष्टमानामित्यर्थः ॥

(उद्योतः) (भाष्ये)—**तत्रभवतां यदपत्यमिति** । साक्षाद्यदपत्यमित्यर्थः ॥ **तानि गोत्राणीति** । गोत्रत्वेन लोके प्रसिद्धानीत्यर्थः । एतदेव च तत्र तत्र लौकिकगोत्रपदेनोच्यते ॥ **अतोऽन्ये इति** । तदपत्यसंतानरूपा अवांतरगोत्रपदार्था इत्यर्थः ॥ **तत इति** । अवान्तरगोत्रेभ्योऽगुरूपोत्तमेभ्य इत्यर्थः ॥ तद्व्याचष्टे—**यथा भार्गवेत्यादि** । प्रवराध्यायप्रसिद्धा द्विविधाः—ऋषयोऽनृषयश्च । ऋषिशब्देनात्र मन्त्रद्रष्टारः । तत्रार्षेषु न प्राप्तिरित्याह—**पूर्वसूत्रे इति** ॥ अन्ये आह—**अनृषीति** ॥ **न त्विति** । एवं चागुरूपोत्तमार्थत्वं दुष्टमिति बोध्यम् । 'ये क्रौड्यादयः' इत्यन्तेन ग्रन्थेन सूत्रं प्रत्याख्यातम् ॥

(प्रत्याख्यानसाधकभाष्यम्)

**कथं येभ्योऽगुरूपोत्तमेभ्य इष्यते ?**

(प्रदीपः) **कथं येभ्य इति** । पुणिकमुखरादिभ्यः ॥

(५२२३ प्रत्याख्यानसाधकवार्तिकम् ॥ ४ ॥)

**॥*॥ सिद्धं तु रौढ्यादिषूपसंख्यानात्[2] ॥*॥**

(भाष्यम्) **सिद्धमेतत् ।**

**कथम् ?**

**रौढ्यादिषूपसंख्यानात् । रौढ्यादिषूपसंख्यानं कर्तव्यम् ।**

**के पुना रौढ्यादयः ?**

**ये क्रौड्यादयः ॥**

(प्रदीपः) **ये क्रौड्यादय इति** । पूर्वाचार्यसंज्ञयैवमभिहितमित्यर्थः ॥

(भारद्वाजीयमतेन फलप्रदर्शकभाष्यम्)

**भारद्वाजीयाः पठन्ति—सिद्धं तु कुलाख्याभ्यो लोके गोत्राभिमताभ्य[3] इति ।**

**सिद्धमेतत् ।**

**कथम् ?**

**कुलाख्या लोके गोत्रावयवा इत्युच्यन्ते ॥**

**अथ वा गोत्रावयवः को भवितुमर्हति ?**

**यो गोत्रादवयुतः ।**

**कश्च गोत्रादवयुतः ?**

**योऽनन्तरः—दैवदत्त्या, याज्ञदत्त्येति ॥**

**इति श्रीभगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥**

(प्रदीपः) **कुलाख्याभ्य इति** । अप्रधानवचनोऽव-

---

[1] देवदत्तावयवस्य देवदत्तत्वाभावेऽपि घृतावयवस्य घृतत्व इव गोत्रावयवस्यापि गोत्रत्वं स्यादित्यर्थः ॥

[2] 'रौढ्यादि' इति च. पाठः ।

[3] 'लोके गोत्राभिमता गोत्राव' इति च. छ. पाठः ।

यवशब्द इह गृह्यते । तत्र प्रवराध्यायपठितानां मुख्यं गोत्रत्वम् । ये त्वादिपुरुषाः श्रुतशीलसंपन्ना अपत्यसन्तानप्रसिद्धिहेतवस्तेषामप्रधानं गोत्रत्वम्, तेभ्योऽनेन ष्यङ्विधानम् । पुणिकस्यापत्यं गोत्रं स्त्री—पौणिक्या, भौणिक्या, मौखर्येति ॥ **योऽनन्तर इति** । पृथग्वाच्यवयवशब्दोऽपत्यत्वेन गोत्रसादृश्ये सति पृथग्भावोऽनन्तरत्वादाश्रीयत इति जातादौ ष्यङ् न भवति—आहिच्छत्रीति । तदेवमर्थद्वयमस्य सूत्रस्य भाष्यकारेण व्याख्यातम् । अभिधानलक्षणाश्च कृत्तद्धितसमासा इति सर्वत्रानन्तरापत्ये ष्यङ् न भवति ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे चतुर्थस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

**( उद्योतः )** अथ भारद्वाजीयोक्तं सूत्रप्रयोजनमाह—**भारद्वाजीया इति ॥ अप्रधानवचन इति** । अप्रधानानि गोत्राणि गोत्रावयवशब्देनोच्यन्ते । तत्र प्राधान्याप्राधान्ये कथमत आह—**प्रवराध्यायेति ॥ तेषामप्रधानमिति** । अपत्यसंतानप्रसिद्धिहेतुत्वे न तेषां गौणं गोत्रत्वम् । 'अपत्यं पौत्रप्रभृति' इति गोत्रत्वं चोभयसाधारणमिति भावः । सूत्रे कर्मधारयः, सौत्रः परनिपातः ॥ एवं चात्र 'गुरूपोत्तमयोः' इति नानुवर्तत इत्याह—**पुणिकस्येति** । एवं चागुरूपोत्तमार्थमिदमिति भावः ॥ क्रौड्यादिपाठात्सिद्धेः सूत्रवैयर्थ्यं मनसि निधायाह—भारद्वाजीयः—**अथवेति** । अयं भावः—एतत्सूत्रारम्भसामर्थ्यात् अपत्याधिकारादन्यत्वेऽपि पूर्वसूत्रे गोत्रशब्देन शास्त्रीयं गृहीत्वा तद्भिन्नेऽनन्तरापत्यप्रत्ययान्ते विध्यर्थमिदमिति ॥ तद्ध्वनयन्नुदाहरति—**दैवदत्त्येत्यादि** । गोत्रावयवशब्देन कथमनन्तरापत्यग्रहणमत आह—**पृथग्भावेति** । यथा ब्राह्मणात्पृथग्भूतोऽयमित्युक्ते तत्सदृशे क्षत्रियादौ प्रथमं प्रतीतिरिति भावः । नन्वेवं सत्यतिप्रसंगः स्यादत आह—**अभिधानलक्षण इति** । अत एव युवापत्ये न दोषः । एवञ्चानन्तरापत्ये तत्पठितमुदाहरणद्वयमेव साध्विति भावः । एवं च येभ्योऽनन्तरापत्यप्रत्ययान्तेभ्य इष्यते, तानपि क्रौड्यादिषु पठित्वा इदं सूत्रं त्याज्यमेवेति भाष्यमतमिति भाति ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते चतुर्थस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

—⁂—

**( ६५६ अधिकारसूत्रम् ॥ ४ । २ । ३ आ. ४० ॥ )**

## १३२८ समर्थानां प्रथमाद्वा ॥ ४।१।८२ ॥

**( अधिकाराधिकरणम् )**

**( पदकृत्यभाष्यम् )**

**समर्थवचनं किमर्थम् ?**

**समर्थादुत्पत्तिर्यथा स्यात्—उपगोरपत्यम् । असमर्थान्मा भूदिति—कम्बल उपगोरपत्यं देवदत्तस्येति ॥**

**( प्रदीपः ) समर्थवचनमिति** । 'तस्यापत्यम्' इत्यादौ श्रूयमाणसम्बन्ध्यपेक्षायां विभक्तौ विज्ञायमानायामसामर्थ्ये प्रत्ययप्रसङ्ग एव नास्तीति मत्वा प्रश्नः ॥ **समर्थादिति** । समर्थादेवेत्यवधारणं द्रष्टव्यम् । न 'तस्यापत्यम्' इत्यादौ लक्षणवाक्ये सम्बन्धप्रतिपादनाय विभक्त्युच्चारणम्, इह तस्य प्रयोजनाभावात् । किं तर्हि—षष्ठ्यन्तात्प्रत्ययविध्यर्थं 'तस्य' इति निर्दिष्टम्, अपत्यमिति प्रत्ययार्थत्वेन निर्दिष्टमिति—परस्परसम्बन्धस्याप्रतिपादनादसमर्थादपि प्रत्ययः स्यादिति भावः । ऋद्धस्योपगोरपत्यमित्यादावपि प्रत्ययो न भवति, सापेक्षत्वादसामर्थ्यात् ॥

**( उद्योतः ) संबन्ध्यपेक्षायामिति** । अपत्याद्यर्थनिरूपितसंबन्धार्थिकायामित्यर्थः । तत्संबध्यपत्यमित्यर्थे प्रथमोच्चारितात्प्रत्यय इत्यर्थात् 'वस्त्रमुपगोरपत्यं चैत्रस्य' इत्यादिव्यावृत्तिसिद्धेरिति भावः ॥ ननु न समर्थादुत्पत्त्यर्थं वचनम्, किं त्वसमर्थादनुत्पत्त्यर्थमत आह—**समर्थादेवेति ॥ इह**—लक्षणे ॥ **तस्य**—संबन्धप्रतिपादनस्य ॥ **तस्येतीति** । सर्वविशेषसंग्रहाय च तच्छब्देन सामान्येनोपादानम् । पूर्वोक्तार्थकत्वेऽपि सूत्राणां 'समर्थात्' इत्यावश्यकमित्याह—**ऋद्धस्येति ॥**

**( ५२२४ पूर्वपक्षवार्तिकम् ॥ १ ॥ )**

### ॥ * ॥ समर्थवचनमनर्थकम्, न ह्यसमर्थेनार्थाभिधानम् ॥ * ॥

**( भाष्यम् ) समर्थवचनमनर्थकम् ।**

**किं कारणम् ?**

**नह्यसमर्थेनार्थाभिधानम् । नह्यसमर्थादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ॥**

**( प्रदीपः ) समर्थवचनमिति** । प्रयुक्तानामिदमन्वाख्यानं प्रवृत्तम् । तत्र 'कम्बल उपगोरपत्यं देवदत्तस्य' इति योऽर्थः प्रतीयते नासौ 'कम्बल औपगवो देवदत्तस्य' इति प्रत्यये कृते, इति प्रत्ययो न भविष्यतीत्यर्थः । प्रकृतिप्रत्ययौ च प्रत्ययार्थं सह ब्रूतो न चानन्वितयोः सहाभिधानसम्भवः । **असमर्थ**शब्देनासमर्थादुत्पन्नः प्रत्यय उपचारादभिहितः ॥

**( उद्योतः ) अनभिधानादित्यस्य**—प्रत्ययान्तेन वाक्यप्रतीनिरूपितसम्बन्धबोधकात्प्रत्यय इत्यर्थः स्यात् । तदाश्रयणेऽपि ऋद्धस्योपगोरपत्यमित्यादावपि प्रत्ययप्रसङ्गस्तदेतत्प्रदर्शयति—**पूर्वोक्तार्थकत्वेऽपीति** ॥

१ 'असमर्थान्मा भूत्' इत्येव इतिरहितः पाठः क. च. पुस्तकयोः ॥

२ श्रूयमाणो योऽपत्यादिरूपोऽर्थस्तन्निरूपितसम्बन्धविशिष्टापेक्षायामित्यर्थः ॥

३ समर्थानामित्यस्याभावेऽपि तस्यापत्यमित्यादिसूत्रैरेवासमर्थात्प्रत्ययोत्पत्तिवारणं प्रदर्शयति—तत्सम्बन्ध्यपत्यमिति ॥

४ प्रत्ययविधायकसूत्रस्थानां तस्येत्यादिपदानां षष्ठ्यन्तात्प्रत्ययसिद्ध्यर्थमावश्यकत्वम् समर्थानामित्यधिकाराभावे तस्यापत्यमित्यादीनां अपत्यार्थ-

५ इति—प्रत्ययान्तेनार्थाभिधानाभावाद्धेतोरुपगुशब्दात्प्रत्ययो नेत्यर्थः ॥

६ वाक्येन प्रतीयमानो योऽर्थस्तस्य प्रत्ययान्तेन समुदायेन प्रतीतेरभावादित्यर्थः । कम्बल उपगोरपत्यं चैत्रस्येति वाक्येन प्रतीयमानोऽर्थः, उपगुशब्दात्प्रत्यये कृतेऽपि न ततः प्रतीतो भवतीति न तस्मात्प्रत्ययप्रसङ्ग इति भावः ॥

यमानार्थप्रतीत्यभावादित्यर्थमुक्त्वा प्रकृतिप्रत्यययोः सहाभिधानायोगादित्यर्थान्तरं दर्शयति—प्रकृतिप्रत्ययौ चेति ॥ प्रत्ययार्थमिति । प्रतीयमानमित्यर्थः । क्वचित्तु 'प्रत्येयार्थम्' इति पाठः । ऋद्धस्यौपगव इत्यादिवारणाय पूर्वोक्तार्थ एवावश्यक इति बोध्यम् ॥ नन्वसमर्थेनापि प्रकृत्यादिना स्वार्थाभिधानमस्त्येवेत्यत आह—असमर्थशब्देनेति । तुल्यन्यायात् 'समर्थः पदविधिः' इत्यपि प्रत्याख्यातमिति बोध्यम् ॥

( पदकृत्यभाष्यम् )

**अथ प्रथमवचनं किमर्थम् ?**

**प्रथमवचनं प्रकृतिविशेषणार्थम् । प्रथमात्प्रत्ययोत्पत्तिर्यथा स्यात्, अप्रथमान्मा भूत्—उपगोरपत्यमिति अपत्यशब्दात् ॥**

( प्रदीपः ) **अपत्यशब्दादिति** । अपत्यविशेषवाचिनो देवदत्तादिशब्दादित्यर्थः । तथाहि–यथा-इन्द्रो देवता यस्य तदैन्द्रं हविरिति प्रथमान्तात्प्रत्ययो भवति, एवं देवदत्तोऽपत्यमस्योपगोरिति प्रत्ययप्रसङ्गः । लक्षणवाक्यापेक्षञ्च प्राथम्यं नियतत्वादाश्रीयते न तु विग्रहवाक्यापेक्षमनियतम्, अन्यथा पर्यायेण सर्वस्य प्राथम्यात् प्रथमादित्यनर्थकं स्यात् ॥

( उद्द्योतः ) नन्वपत्यमित्यर्थनिर्देशान्न ततः शब्दात्प्रत्ययप्रसंगः 'स्त्रीभ्यो ढक्' इत्यादेश्चासंगतिः स्यादत आह—**अपत्यविशेषेति** ॥ अपत्यशब्दादितिभाष्यस्यापत्यबोधकशब्दादित्यर्थः ॥ **न त्विति** । उपगोरपत्यम्, अपत्यमुपगोः—इति द्विविधप्रयोगस्यापि लोके दर्शनादिति भावः ॥

( ५२२५ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्रथमवचनमनर्थकं न ह्यप्रथमेनार्थाभिधानम् ॥ * ॥**

( भाष्यम् ) **प्रथमवचनमनर्थकम् ।**

**किं कारणम् ?**

**न ह्यप्रथमेनार्थाभिधानम् । न ह्यप्रथमादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात्, अनभिधानात्तत उत्पत्तिर्न भविष्यति ॥**

( प्रदीपः ) **प्रथमवचनमिति** । दैवदत्तिरित्युक्तेऽपत्यं प्रतीयते, न त्वपत्यवानित्यर्थः ॥

( पदकृत्यभाष्यम् )

**अथ वावचनं किमर्थम् ?**

**वाक्यमपि यथा स्यात्—उपगोरपत्यमिति ॥**

( ५२२६ पूर्वपक्षवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ वावचने चोक्तम् ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ?**

**तत्र तावदुक्तं वावचनानर्थक्यं च, तत्र नित्यत्वात् सन इति ।**

**इहापि वावचनमनर्थकम् ।**

**किं कारणम् ?**

**तत्र नित्यत्वात्प्रत्ययस्य ॥**

( वावचनप्रत्याख्यानसमर्थकभाष्यम् )

**इह द्वौ पक्षौ वृत्तिपक्षश्चावृत्तिपक्षश्च । स्वभावतश्चैतद्भवति—वाक्यं च वृत्तिश्च ।**

**तत्र स्वाभाविके वृत्तिविषये नित्ये प्रत्यये प्राप्ते वावचनेन किमन्यच्छक्यमभिसम्बन्धुमन्यदतः संज्ञायाः, न च संज्ञाया भावाभावाविष्येते ।**

**तस्मान्नार्थो वावचनेन ॥**

( प्रदीपः ) **इहेति** । व्यपेक्षैकार्थीभावयोरत्यन्तभेदाद्भिन्नार्थस्य वाक्यस्य वृत्त्या बाधनं न भविष्यतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—**अन्यदतः संज्ञाया इति** । प्रत्ययतद्धितादिसंज्ञाया इत्यर्थः ॥

( सिद्धान्तभाष्यम् )

**अथैतत्समर्थग्रहणं नैव कर्तव्यम् ।**

**कर्तव्यं च ।**

**किं प्रयोजनम् ?**

**समर्थादुत्पत्तिर्यथा स्यादसमर्थान्मा भूदिति ।**

**किं पुनः समर्थम् ?**

**अर्थाभिधाने यत्समर्थम् ।**

**किं पुनस्तत् ? कृतवर्णानुपूर्वीकं पदम्—सौत्थितिः, वैक्षमाणिरिति ।**

( प्रदीपः ) **कृतवर्णानुपूर्वीकमिति** । तस्यैव लोकेऽर्थप्रतिपादनाय प्रयोगात्समर्थत्वमिति भावः ॥ **सौत्थितिरिति** । विभज्यान्वाख्याने सु उत्थित इत्यस्मादपि प्रत्ययः स्यात्, ततश्च सावुत्थितिरित्यनिष्टप्रसङ्गः, वार्णादाङ्गं बलीय इति वृद्धिप्रसङ्गात् । नन्वन्तरङ्गत्वाद्वार्णेषु कार्येषु कृतेषु प्रत्ययो भविष्यति । एवं तर्ह्येतदनेन समर्थवचनेन ज्ञाप्यते—अस्तीयं परिभाषा 'अकृतव्यूहाः पाणिनीयाः' इति । तेन पपुषः, तस्थुष इत्यादि सिद्धं भवति । अन्तरङ्गत्वात्पूर्वं कृतोऽपीडागम एतत्परिभाषावशान्निवर्तते । तत्र पपा वस् अस् इति स्थिते इट् च आप्नोति, सम्प्रसारणं च । तत्र सम्प्रसारणं बलीयः प्रतिपदविधानादिति । तत्र कृते वलादित्वाभावादिट् नास्तीति सिद्धं—पपुष इति ॥

( उद्द्योतः ) भाष्ये—**अथैतत्समर्थेति** । 'समर्थः पदविधिः'

---

१ ततः शब्दादिति । तस्मादपत्यशब्दादित्यर्थः ॥

२ देवदत्तशब्दात्प्रत्यये कृतेऽपत्यरूपोऽर्थः प्रतीतो भवति, न तथा अपत्यशब्दात्प्रत्यये कृतेऽपि अपत्यरूपार्थस्य प्रतीतिः स्यादिति भावः ॥

३ तत्र=धातोः कर्मणः समान ( ३।१।७ ) इति सूत्र इत्यर्थः ॥

४ व्यपेक्षायामप्रत्ययाभावस्य, एकार्थीभावविवक्षणे च वाक्याभावस्य सिद्धत्वेन वावचनमनर्थकमित्यर्थः ॥

५ 'अत्रान्तरङ्गत्वात्' इति ख. पाठः ।

इत्येव सिद्धेरिति भावः । परिपूर्णस्यैव[1] पदार्थान्तरेण संबन्धात् सुबन्तात्तद्धितोत्पत्त्या पदविधित्वं स्पष्टमेव ॥ भाष्ये—**अर्थाभिधाने यत्समर्थमिति** । अर्थबोधने यच्छक्तमित्यर्थः ॥ **कृतवर्णानुपूर्वीकं पदमिति** । अनेनार्थबोधनसामर्थ्यं विशिष्टपदे एव, न तु सत्यपि शास्त्राद्यप्रकृतिप्रत्ययशक्तिज्ञाने तस्य लोके बोधकत्वमिति । एवं च वर्णस्फोटः शास्त्रव्यवहारमात्रोपयोगीति सूचितम् । एवं च समर्थपदेनापि सुबन्तादुत्पत्तिः सूचिता । तदेव 'कुत्सिते' इति सूत्रे वक्ष्यति ॥ नन्वन्तरङ्गत्वात्सवर्णदीर्घः स्यादत आह—**वार्णादिति** ॥ क्रमेणान्वाख्याने सिध्यतीदमिति शङ्कते—**नन्वन्तरङ्गत्वादिति** । वार्णादाङ्गमिति तु समानकालप्राप्तिविषयमिति भावः । न कृतो विशिष्ट ऊहस्तकौ निमित्तविनाशेऽपि कार्यस्थितिरूपो यथा दण्डनाशेऽपि घटस्थितिः, स यैस्ते इत्यर्थः । तदाह—**पूर्वं कृतोऽपीत्यादि**॥प्रकारान्तरेण पपुष इत्यस्य सिद्धिमाह—**तत्रेत्यादि** ॥ **प्रतिपदविधानादिति** । अनवकाशत्वाभावाद्बाधकत्वाभावेऽपि पूर्वप्रवृत्तौ शीघ्रोपस्थितिकत्वेनेदमपि नियामकमिति भावः । अनेन पदस्य विभज्यान्वाख्यानेऽकृतव्यूहपरिभाषां विनाऽप्येतत्सिद्ध्या तस्या अनावश्यकत्वं सूचितम् । विषुण इत्यादावकृतसंधेः प्रत्ययदर्शनेन सर्वत्र तद्धिते तथेति भ्रमवारणाय सूत्रे न्यायसिद्धार्थानुवाद एव समर्थग्रहणमिति भाष्याशयः । अत एव सौस्थितौ पदस्य विभज्यान्वाख्यानेऽकृतसंधेरपि प्रत्ययः स्यादिति कैयटेनोक्तम् । अत एव विप्रतिषेधसूत्रेऽन्तरङ्गं बलीय इत्यस्य सौस्थितिः, वैक्षमाणिरिति प्रयोजनत्वेनोक्तम् । वार्णपरिभाषात्वनित्यत्वान्न प्रवर्तते इति तदाशयः ॥

( वावचने सिद्धान्तभाष्यम् )

**अथ तद्वावचनं नैव कर्तव्यम् ।**

**कर्तव्यं च ।**

**किं प्रयोजनम् ?**

**नित्याः शब्दाः, नित्येषु शब्देषु वाक्यस्य साधुत्वमनेनान्वाख्यायते ॥**

( प्रदीपः ) **वाक्यस्येति** । वृत्तिवाक्ययोरवान्तरार्थभेदेऽपि प्रधानार्थभेदादैकार्थ्याद्वाक्यस्य वृत्त्या बाधः स्यात् । तथा ह्यौपगवमानयेत्युक्ते योऽर्थ आनीयते स एवोपगोरपत्यमानयेत्युक्ते । तत्र तथा गोशब्देन गावीशब्दो निवर्त्यते सत्यामपि गावीशब्दादधिकस्य स्त्रीत्वस्य प्रतिपत्तौ जातिलक्षणार्थाभेदात्, एवं वाक्यस्यापि वृत्त्या निवृत्तिः स्यादिति तदभ्यनुज्ञानाय वावचनम् ॥

( उद्योतः ) नन्वर्थभेदादेव वृत्त्या वाक्यस्य न बाधोऽत आह—**वृत्तीति** । **अवान्तरार्थभेदः**[2]—पदजन्योपस्थितिकालिकः । वाक्येऽपत्यशब्देनापत्यत्वप्रकारिकोपस्थितिः, वृत्तौ त्वणा-उपगुसंबन्धविशिष्टस्येति भावः ॥ उभयविधार्थाभेद एव बाधकत्वं मन्यमानं प्रत्याह—**तत्र यथेति** । **वाक्यस्य निवृत्तिरित्यस्य** तस्य साधुत्वनिवृत्तिः स्यादित्यर्थः । अनेन समासीयमहाविभाषाऽपि कर्तव्येत्युक्तम्, तुल्यन्यायात् ॥ **अधिकस्य स्त्रीत्वस्येति** । प्रवृत्तिनिमित्तादधिकस्य स्त्रीत्वस्यैवेत्यर्थः । गोशब्दस्तु पुंस्त्वसमानाधिकरणमपि गोत्वमाहेति भावः ॥

---

( ६५७ अधिकारसूत्रम् ॥ ४ । १ । २ आ. ४१ )

## १३२९ प्राग्दीव्यतोऽण् ॥ ४।१।८३ ॥

( अणधिकाराधिकरणम् )

( आक्षेपभाष्यम् )

**अयुक्तोऽयं निर्देशः, न हि तत्र कश्चिद् दीव्यच्छब्दः पठ्यते ।**

**कस्तर्हि ?**

**दीव्यतिशब्दः ।**

**कथं तर्हि निर्देशः कर्तव्यः ?**

**प्राग्दीव्यतेरिति ।**

**स तर्हि तथा निर्देशः कर्तव्यः—प्राग्दीव्यतेरिति ?**

( प्रदीपः ) **अयुक्त इति** । प्रसिद्धं[3] न्यायकरणो युजिः । प्रसिद्धस्य च कदाचिद्विस्पष्टप्रतिपत्त्यर्थः प्रयोगो दृश्यते—न्यायेनायुक्तमिति ॥ **नहीति** । दीव्यतिशब्दवाच्यस्यार्थस्यैवावधिभावो विवक्षितः । अर्थानामेवावधिमत्त्वस्येष्टत्वात् । समानजातीयानामवध्यवधिमद्भावस्य सुप्रसिद्धत्वात् । समुदाये चैकदेशस्य गुणभावादवधित्वानुपपत्तिरिति भावः ॥

( उद्योतः ) केनायुक्त इत्याकाङ्क्षायामाह—**प्रसिद्धेति** । न तु जीवत्यादौ प्राणादिवद्धात्वर्थेऽन्तर्भूतः ॥ तदेव ध्वनयन्नाह—**प्रसिद्धस्य चेति** । ननु तदेकदेशदीव्यच्छब्दमनुकृत्य निर्देशोऽत आह—**दीव्यति शब्देति** ॥ **समानजातीयेति** । अवधिमत्त्वमर्थानामेवेष्टमित्यवधिरप्यर्थ एवेति भावः ॥ नन्वेकदेशदीव्यदर्थस्यैवावधित्वमस्त्वत आह—**समुदाये चेति** । एकदेशस्य समुदायस्वरूपनिष्पादकतया कथमपि नार्थप्रतिपादकत्वमित्यर्थः ॥

( समाधानभाष्यम् )

**न कर्तव्यः ।**

**दीव्यतिशब्दे दीव्यच्छब्दोऽस्ति तस्मादेषा पञ्चमी ॥**

( प्रदीपः ) **दीव्यच्छब्द इति** । एकदेशेन समुदायो निर्दिश्यते । स चार्थप्रधान इत्यर्थस्यावधित्वं सम्पद्यते ॥

( उद्योतः ) **निर्दिश्यत इति** । समुदायार्थो बोध्यत इत्यर्थः, एकदेशविकृतस्यान्यत्वाभावादिति भावः । **स च**—समुदायश्च । **अर्थप्रधान** इत्ययमेकदेशोऽपि अर्थप्रधान इति तात्पर्यम् ॥

( परिभाषाज्ञापकपरभाष्यम् )

**किं पुनः कारणं विकृतनिर्देशः क्रियते ?**

---

१ समर्थः पदविधिरित्यस्याः परिभाषाया अत्र प्रातिस्वं दर्शयति—परिपूर्णस्यैवेति ॥

२ वृत्तिवाक्यार्थयोर्भेदम्प्रपञ्चयति—अवान्तरार्थभेद इति ॥

३ यथा जीवधातुः प्राणनेऽर्थे, तत्र प्राण रूपोऽर्थस्तदन्तर्भूत एव । न तथा युजधात्वर्थे न्यायकरणकत्वस्य प्रवेशः । धात्वर्थे प्रवेशाभावादेव 'न्यायेनायुक्तम्' इत्येवम्प्रकारकः प्रयोगो दृश्यते, न तथा प्राणेन जीवत्येवं रूपः ॥

एतज्ज्ञापयत्याचार्यो भवत्येषा परिभाषा—एकदेशविकृतमनन्यवद्भवतीति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

एकदेशविकृतेषूपसंख्यानं चोदितं तन्न कर्तव्यं भवति ।

अथ वा प्राक्शब्दोऽयं दिक्शब्दः, दिक्शब्दैश्च योगे पञ्चमी भवति । तत्र 'अप्रथमासमानाधिकरणे' इति शता भविष्यति ॥

( प्रदीपः ) तन्नेति । तेन पचत्विलादौ पदसंज्ञा सिद्धा भवति ॥ अथवेति । नैवेदमनुकरणम्, किं तर्हि ? अर्थं एवावधित्वेन निर्दिश्यते । तत्र दिवेर्लटि कृतेऽर्थादित्यनेन गम्यमानार्थत्वादप्रयुक्तेनाप्रथमान्तेन सामानाधिकरण्यात्, प्रथमासमानाधिकरणे निषेधाद्वा लटः शत्रादेशः कृत इत्यर्थः ॥

( उद्योतः ) तदाह भाष्ये—विकृतिनिर्देश इत्यादिना । इकाराभावरूपविकारेण निर्देश इत्यर्थः ॥ भवत्येषेति । एवं चैकदेशविकृतोऽप्यर्थबोधक इति भावः । अनन्यवदित्यस्यान्यवन्नेत्यर्थः । तत्रान्यसादृश्यनिषेधेऽन्यत्वनिषेधः सुतराम् । एतेनैकदेशविकृतन्यायोऽपि स्थानषष्ठीनिर्दिष्ट एवेत्यपास्तम् ॥ भाष्ये—अथवा प्राक्शब्दोऽयमिति । यद्यप्याद्यपक्षेऽपि दिक्शब्द एवायम्, तथापि प्रथमासामानाधिकरण्याभावबोधनायेदम् । अयं हि सूत्रे प्रथमान्तः संभाव्यते । तेन तु न सामानाधिकरण्यमिति भावः । एवं च प्रसज्यप्रतिषेधे शतृसंभवः । पर्युदासस्य न्याय्यत्वादयं पक्ष एकदेशिनः ॥ नैवेदमनुकरणमिति । नैकदेशोच्चारणमित्यर्थः । अनूच्चारितस्य=नान्तरीयकतयोच्चारितस्य करणम्=उच्चारणमित्यक्षरार्थः । शब्दमात्रतात्पर्यकत्वाभावेन मुख्यानुकरणत्वाभावात् ॥ अर्थं एवेति । अविकृतस्वबोधकपदबोध्योऽर्थ एवेत्यर्थः ॥ नन्वप्रथमान्तेन सामानाधिकरण्याभावात्कथं शतेत्यत आह—तन्नेति ॥ निषेधाद्वेति । प्रसज्यप्रतिषेध इति भावः । प्रयुक्तेनैव सामानाधिकरण्यं भवतीत्याद्योऽयुक्त इति बोध्यम् ॥

( पदकृत्यभाष्यम् )

अथ प्राग्वचनं किमर्थम् ?

( प्रदीपः ) अथेति । एकदेशाक्षेपद्वारेण प्राग्दीव्यत इति समुदाय आक्षिप्तः । अणित्येव वक्तव्यमधिकारार्थमिति मत्वा प्रश्नः ॥

( उद्योतः ) नन्वेवं प्रतियोगमणित्यस्य कर्तव्यतया गौरवमत आह—अणित्येवेति ॥

( ५२२७ सिद्धान्तवार्तिकम् ॥ १ ॥ )

॥ * ॥ प्राग्वचनं सकृद्विधानार्थम् ॥ * ॥

( भाष्यम् ) प्राग्वचनं क्रियते, सकृद्विधानार्थम् । सकृद्विहितः प्रत्ययो विहितो यथा स्यात् । योगे योगे तस्य ग्रहणं मा कार्षमिति ॥

( प्रदीपः ) सकृद्विधानार्थमिति । प्राग्दीव्यतो येऽर्थास्तान् सर्वानपेक्ष्यानेनाण्प्रत्ययः सकृद्विधीयत इत्यर्थः ॥ विहितो यथा स्यादिति । सर्वेष्वर्थेषु विहितो यथा स्यादित्यर्थः ॥

( उद्योतः ) अण् प्रत्ययः सकृद्विधीयते इति । सर्वेष्वर्थबोधकवाक्येषु अण्प्रत्ययसंबन्धः सकृद्बोध्यत इत्यर्थः ॥ विहितशब्दपौनरुक्त्यं वारयति—सर्वेष्वर्थेष्विति । सकृदुच्चारितः सर्वेष्वर्थवाक्येषु विहितो यथा स्यादिति भाष्याक्षरार्थः । अन्यथा सर्वत्रार्थबोधकवाक्ये अणित्युच्चार्यं स्यादित्याह—योगे योगे इति ॥

( आक्षेपभाष्यम् )

नैतदस्ति प्रयोजनम् ।

अधिकारादप्येतत् सिद्धम्—अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठते ॥

( ५२२८ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ अधिकारात्सिद्धमिति चेदपवादविषयेऽणप्रसङ्गः ॥ * ॥

( भाष्यम् ) अधिकारात् सिद्धमिति चेदपवादविषयेऽण् प्राप्नोति—'अत इञ्' (४।१।९५) अण्चेत्यणपि प्राप्नोति ॥

( प्रदीपः ) अण् चेति । प्रतियोगमुपस्थाने द्वयोरेकविषयत्वाद्विकल्पः स्यान्न तु बाध्यबाधकभाव इति भावः ॥

---

१ एकदेशविकृतन्यायोदाहरणमाह—तेन पचत्विति ॥

२ 'अथवा प्राक् शब्दोयम्' इत्यादिना भाष्यकृता पक्षान्तरमुपन्यस्तम् । तस्य हि अयमाशयः—प्राक्शब्दस्य दिक्शब्दत्वेन तद्युक्तात्पञ्चमी स्यात् । ततश्च पञ्चम्यन्तेन सामानाधिकरण्यात् लटः शतृ स्यादिति नैकदेशानुकरणमेतदिति । लटः शत्रिति सूत्रे अप्रथमासमानाधिकरण इति पदे च प्रसज्यप्रतिषेध आश्रीयते तेन पञ्चम्यन्तेन सामानाधिकरण्याच्छत्रादेश इति ॥ वाक्यभेदादिगौरवग्रस्ततया पर्युदासस्य न्याय्यत्वेन प्रसज्यप्रतिषेधाश्रयणमेकदेशिन इति तात्पर्यम् ॥

३ एकदेशाक्षेपद्वारेण सम्पूर्णस्य सूत्रस्याक्षेपे सूत्रस्थमण्पदमप्याक्षिप्तमेव स्यादित्याशङ्कायामाह—अणित्येवेति ॥

४ अत्राण्शब्दमात्रस्यैवाधिकारत्वेन सिद्धौ प्राग्दीव्यत इत्यस्योपादानम्प्राग्दीव्यतो येऽर्थास्तेष्वपिविधानार्थम् । तेन 'अश्वपत्यादिभ्यश्च' इत्यादिसूत्रेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यस्य लाभः ॥

५ भाष्ये 'सकृद्विहितः प्रत्ययो विहितो यथा' इत्यत्र पौनरुक्त्याशङ्कां वारयतीत्यर्थः ॥

६ भाष्यस्थप्रथमस्य विहितशब्दस्य उच्चारणरूपोऽर्थ इति भावः ॥

७ 'अधिकारादप्येतत्' इति क. पाठः ॥

८ अण्चेति प्रतीकमेव भाष्यतो गृहीतमित्यस्मिन् विषये विवादः ॥ च. पुस्तके 'अण् चेति ।' प्रतीकं निर्दिश्यते । झ. पुस्तके च नास्य प्रतीकत्वेनोपादानम् । क. पुस्तके च संदेहः । अस्माकन्तु प्रतीकमेवैतदिति भाति ॥

९ 'बाध्यबाधकभावः' इत्येव पाठः च. झ. पुस्तकयोः ॥

( ५२२९ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ तस्मात् प्राग्वचनम् ॥ * ॥**

( भाष्यम् ) तस्मात्प्राग्वचनं कर्तव्यम् ॥

( सूत्रार्थविषये पक्षद्वयबोधकं भाष्यम् )

अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञायते—प्राग्दीव्यतो याः प्रकृतय इति, आहो स्वित्प्राग्दीव्यतो येऽर्था इति ।

किं चातः ?

यदि विज्ञायते प्राग्दीव्यतो याः प्रकृतय इति, स एव दोषः, अपवादविषयेऽणप्रसङ्ग इति ॥

अथ विज्ञायते प्राग्दीव्यतो येऽर्था इति, न दोषो भवति । समानेऽर्थे प्रकृतिविशेषादुत्पद्यमान इञणं बाधते ।

यथा न दोषस्तथाऽस्तु ॥

( प्रदीपः ) **स एव दोष इति** । सर्वाश्चेत्प्रकृतय इहापेक्ष्यन्ते तदैकविषयत्वादणं इञादीनां च बाध्यबाधकभावो न स्यात् ॥ **समानेऽर्थ इति** । अर्थापेक्षणे सत्यर्थेष्विदमणिवधानमिति प्रकृत्यन्तरे सावकाशोऽणप्रत्यय एकस्मिन्नर्थे प्रकृतिविशेषादुत्पद्यमानेनेञादिना तक्रकौण्डिन्यन्यायेन बाध्यत इत्यर्थः ॥

( उद्द्योतः ) **सर्वाश्चेदिति** । प्रागदीव्यतः प्रकृतिष्वणित्येतत्संबध्यत इत्यर्थं इति भावः ॥ भाष्ये-**समानेऽर्थ इति** । समानशब्द एकपर्यायः ॥

( अन्यतरपक्षेऽभिनिवेशभाष्यम् )

प्राग्दीव्यतो येऽर्था इति विज्ञायते ।

कुत एतत्—

तथा ह्ययं प्राधान्येनार्थं प्रतिनिर्दिशति । इतरथा हि बह्व्यस्तत्र प्रकृतयः पठ्यन्ते, ततो यां कां चिदेव निमित्तत्वेनोपाददीत ॥

अथ वा पुनरस्तु प्राग्दीव्यतो याः प्रकृतय इति ।

ननु चोक्तमपवादविषयेऽणप्रसङ्ग इति ॥

(प्रदीपः) **तथा हीति** । यज्जातीयोऽवधिस्तज्जातीयोऽवधिमानिति भावः ॥ **प्राधान्येनेति** । तात्पर्येणेत्यर्थः ॥ **यां कांचिदिति** । 'प्राक्कुलत्थादण्' इति वक्तव्यं स्यादित्यर्थः ॥

( उद्द्योतः ) ननु 'अर्थं प्रतिनिर्दिशति' इत्येव सिद्धे 'प्राधान्येन' इत्यधिकमत आह—**तात्पर्येणेति** । तद्ग्राहकमाह—भाष्ये—**यां काञ्चिदिति** । स्पष्टप्रतिपत्तये इत्याशयः । एवं चावधिजातीय एवावधिमानुचित इति अर्था एवावधिमन्त इति तात्पर्यम् ॥

( ५२३० एकदेशिसमाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा क चिद्वावचनात् ॥ * ॥**

( भाष्यम् ) न वा एष दोषः ।

किं कारणम् ?

क चिद्वावचनात् । यदयं क चिद्वावचनं करोति—पीलाया वा ( ४।१।११८ ), उदश्वितोऽन्यतरस्याम् ( ४।२।१९ ) इति, तज्ज्ञापयत्याचार्यो नापवादविषयेऽणभवतीति ॥

( प्रदीपः ) **पीलाया वेति** । सूत्रमप्येतदनारम्भणीयं स्यात्, 'द्व्यचः' इत्यनेनैव ढकः सिद्धत्वात्, अनेनाप्यणः ॥ **उदश्वित इति** । 'उदश्वितः' इत्येव ठग्विधानाय कर्तव्यं स्यात्, अनेनाणः सिद्धत्वादित्यर्थः ॥

( उद्द्योतः ) **सूत्रमपीति** । न केवलं वा वचनमेवेत्यर्थः ॥

( एकदेशिसिद्धान्तभाष्यम् )

यद्येतज्ज्ञाप्यते नार्थः प्राग्वचनेन । अधिकारात्सिद्धम् ।

ननु चोक्तमधिकारात्सिद्धमिति चेदपवादविषयेऽणप्रसङ्ग इति ।

नैष दोषः ।

परिहृतमेतत्—न वा क चिद्वावचनादिति ॥

किं पुनः कारणमियानवधिर्गृह्यते, न 'प्राक् ठकः' इत्येवोच्येत ?

एतज्ज्ञापयत्यर्थेष्वयंमभवतीति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

प्रकृतिविशेषादुत्पद्यमान इञ्-अणं बाधते ॥

( प्रदीपः ) **न प्राक् ठक इति** । यद्यपीहानेकं ठग्ग्रहणमस्ति तथाऽपि व्याख्यानात् 'प्राग्वहतेष्ठक्' इत्ययमेवावधित्वेन ग्रहीष्यते ॥ **एतदिति** । एवं हि स्पष्टो बाध्यबाधकभावो भवति, ज्ञापकाश्रयणमन्तरेणैवेत्यर्थः ॥

( उद्द्योतः ) मात्रागौरवेऽपि प्रतिपत्तिलाघवाय तथा निर्देश इति भाष्यार्थं इत्याह—**एवं हीति** ॥

———>o<———

१ 'अणिञादीनां बाध्य' इति च. ञ. पुस्तकयोः ॥

२ अणपदस्य प्रतियोगमुपस्थान इत्यर्थः ॥

३ 'चिदेवावधित्वेनो' इति च. झ. पाठः ।

४ तद्ग्राहमिति—तात्पर्यग्राहकमित्यर्थः ॥

५ पीलायावेति सूत्रस्थवाशब्दस्य वैयर्थ्यंस्प्रकटयति—सूत्रमप्येतदित्यादिना ॥

६ अन्यतरस्यामित्यस्य वैयर्थ्यंस्बोधयति—उदश्वित इत्येवेति ॥

७ 'त्यर्थेष्वेतद्भव' इति च. पाठः ॥

८ ननु प्राग्वहतेष्ठगित्यतः प्राक् बहुषु सूत्रेषु ठग्ग्रहणमस्ति, तथा चावधित्वेन कथम्प्राग्वहतेरित्यस्यैव ग्रहणं स्यात्तदाह—यद्यपीहानेकमिति ॥

( ६५८ विधिसूत्रम् ॥ ४ । १ । २ आ. ४२ )

## १३३० दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ॥ ४ । १ । ८५ ॥

( ण्यप्रत्ययाधिकरणम् )

( प्रदीपः ) अणपवादो ण्यः ॥

( उद्योतः ) प्राग्दीव्यतोऽर्थबोधकेष्विदमधिक्रियत[1] इत्यादिप्रकारेणैषामप्यधिकारत्वं बोध्यम् । तेष्वयं भवतीति विधायकत्वमेवेत्यन्ये ॥

( ५२३१ विधिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ (ण्यप्रकरणे)[2] वाङ्मतिपितृमतां छन्दस्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) (ण्यप्रकरणे) वाङ्मतिपितृमतां छन्दस्युपसंख्यानं कर्तव्यम् । वाक्—वाच्यः । वाक्[3] ॥ मति—मात्यः । मति ॥ पितृमत्—पैतृमत्यः ॥

( प्रदीपः ) वाङ्मतीति । कुर्वादिषु मतिपितृमच्छन्दयोरपत्येऽर्थे भाषायामपि ण्यविधानार्थः पाठः । अनेन तु च्छन्दसि सर्वेषु प्राग्दीव्यतीयेषु अर्थेषु ण्यविधिः ॥

( उद्योतः ) ननु सत्युपसंख्याने[4] कुर्वादौ मतिपितृमतोः पाठो व्यर्थः स्यादत आह—कुर्वादिष्विति । नन्वेवमत्र पाठो व्यर्थोऽत आह—अनेन त्विति ।

( ५२३२ विधिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पृथिव्या ञाञौ ॥ * ॥

( भाष्यम् ) पृथिव्या ञाञौ वक्तव्यौ । पार्थिवा, पार्थिवी ॥

( ५२३३ विधिवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ देवस्य यञञौ ॥ * ॥

( भाष्यम् ) देवस्य यञञौ वक्तव्यौ । दैव्यम्, दैवम् ।

( ५२३४ विधिवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ बहिषष्टिलोपश्च यञ् च ॥ * ॥

( भाष्यम् ) बहिषष्टिलोपश्च यञ् च वक्तव्यः । बहिर्भवो बाह्यः ॥

( प्रदीपः ) बहिष इति । टिलोपवचनम् 'अव्ययानां भमात्रे टिलोपः' इत्यस्यानित्यत्वज्ञापनार्थम्, तेनारातीय[6] इत्येवमादि सिद्धं भवति ॥

( उद्योतः ) नन्वव्ययानामित्येव सिद्धेष्टिलोपविधानं व्यर्थमत आह—टिलोपेति । 'आरातीयः' इति प्रयोगः 'अव्ययात्त्यप्' सूत्रे भाष्ये ॥

( ५२३५ विधिवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ ईकक्च ॥ * ॥

( भाष्यम् ) ईकक्च वक्तव्यः । बाहीकः ॥

( ५२३६ विधिवार्तिकम् ॥ ६ ॥ )

### ॥ * ॥ ईकञ् छन्दसि ॥ * ॥

( भाष्यम् ) ईकञ् छन्दसि वक्तव्यः । बाहीकमस्तु भद्रं वः ॥

( ५२३७ विधिवार्तिकम् ॥ ७ ॥ )

### ॥ * ॥ स्थाम्नोऽकारः ॥ * ॥

( भाष्यम् ) स्थाम्नोऽकारो वक्तव्यः । अश्वत्थामः ॥

( प्रदीपः ) स्थाम्न इति । भाष्यकारवचनप्रामाण्यात्तदन्तस्य ग्रहणम्, न केवलस्य ॥ अश्वत्थाम इति । अश्वस्येव स्थाम=बलं यस्येति बहुव्रीहिः, पृषोदरादित्वात्सकारस्य तकारः, अपत्यादावर्थेऽकारप्रत्ययः, नस्तद्धित इति टिलोपः ॥

(उद्योतः) प्रत्ययविधौ तदन्तविधिप्रतिषेधादाह—भाष्येति । यद्यपि[7] बलवाचिनः स्थामशब्दस्यापत्येन न योगः, तथाऽपि जातादिना योगः संभवतीत्येवमुक्तम् । वार्तिके प्रातिपदिकं विशेष्यमादाय तदन्तविधिः । 'ग्रहणवता' इत्यादिनिषेधाप्रवृत्तिर्भाष्योदाहरणात् । 'उगिद्वर्णग्रहणवर्जम्' इत्यत्रेदमप्युपलक्षणमिति भावः ॥

( ५२३८ विधिवार्तिकम् ॥ ८ ॥ )

### ॥ * ॥ लोम्नोऽपत्येषु बहुषु ॥ * ॥

( भाष्यम् ) लोम्नोऽपत्येषु बहुषु अकारो वक्तव्यः । उडुलोमाः, शारलोमाः ।

बहुष्विति किमर्थम्?

औडुलोमिः, शारलोमिः ॥

( प्रदीपः ) उडुलोमा इति । बाह्वादिषु लोमन्शब्दस्य पाठादिञि प्राप्तेऽकारो विधीयते ।

---

1 प्राग्दीव्यत इति सूत्रे प्रागपदसत्त्वे स्पष्टो बाध्यबाधकभावो भवति, अधिकारत्वे तु ज्ञापकादिना स साधनीय इति प्रतिपत्तिगौरवम् । तद्वारणाय प्राग्वचनकरणेन मात्रागौरवमप्याश्रयणीयमिति भाष्याशय इति भावः ॥

2 ( ) चिह्नमध्यपतितोऽशः छ. पुस्तके नास्ति, वार्तिकघटकोऽपि नायमंश इति भाति ॥

3 वाक्, मति—अनयोः क. पुस्तके न पाठः । झ. पुस्तके च पैतृमत्य इत्यस्याग्रे 'पितृमत्' इत्यधिकः पाठः ॥

4 सत्युपसंख्यान इति । 'ण्य प्रकरणे' इति वार्तिकस्येति शेषः ॥

5 नन्वेवमिति । कुर्वादिगणे मतिपितृमतोः पाठादेव ण्यप्रत्ययस्य सिद्धावपीत्यर्थः ॥

6 'अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो भवति पूर्वविप्रतिषेधेन' इत्यनेनाव्ययात्त्यपं बाधित्वा आरादित्यव्ययाच्छप्रत्ययः । अव्ययानाम्भमात्र इत्यस्यानित्यत्वादत्र टिलोपो न ॥

7 ननु केवलस्य स्थामन्शब्दस्यापत्येन योगाभावाद्वचनसामर्थ्यादेव तदन्तविधिः स्यादिति भाष्यकारवचनप्रामाण्यादित्येतदनुपपन्नमित्यत आह—यद्यपि बलवाचिन इति ॥

केचिदाहुः—इञ्यपि कृते तस्य 'बह्वच इञः प्राच्यभरतेषु' इति लुकि प्रत्ययलक्षणेन स्वादिष्विति पदसंज्ञायां नलोपेन सिद्धं रूपम् । भसंज्ञा तु वर्णाश्रयत्वात्प्रत्ययलक्षणेन न भवति, 'न ङिसंबुद्ध्योः' इति ङौ नलोपनिषेधाद्वा । तदेतदयुक्तम् । प्राच्यभरतगोत्रादन्यत्र लुगभावात् । किं चोडुलोमैरुडुलोमेभ्य इत्यादौ सुब्विधौ नलोपस्यासिद्धत्वादैसादि न स्यात्, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाद्वा पदसंज्ञाया अभावः । यथा काश्यपेन प्रोक्तमधीयते काश्यपिन इत्यत्र 'प्रोक्ताल्लुक्' इत्यणो लुकि कृते नलोपो न भवति, एवमिहापि न स्यात् ॥

( उद्द्योतः ) लोमन्शब्दस्येति । अत्र लोम्नोऽपत्येन योगाभावात्सामर्थ्यात्तदन्तविधिः ॥ ननु भत्वेन बाधात्कथं पदत्वमत आह—भसंज्ञा त्विति ॥ ननु यन्निमित्तको नलोपः, प्रत्यासत्त्या तन्निमित्तके सुब्विधावेवासिद्धत्वादित्यादि परिहर्तुं शक्यमत आह—न लुमतेति ॥ अणो लुकीति । न चान्तर्वर्तिविभक्त्या पदत्वान्नलोपो दुर्वारः । तद्विषयताबलात्प्रोक्तार्थकप्रत्ययान्तेभ्यः सुबुत्पत्तेः पूर्वमेवाध्येत्रादिप्रत्ययस्वीकारेणादोषात् । प्रकृते त्वन्तर्वर्तिविभक्त्या पदत्वस्य सत्वेन 'प्राच्यभरतगोत्रादन्यत्र' इति—आद्यसमाधिरेव युक्त इति ध्येयम् ॥

( ५२३९ विधिवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ सर्वत्र गोरजादिप्रसङ्गे यत् ॥ * ॥

**( भाष्यम् ) सर्वत्र गोरजादिप्रसङ्गे यद्वक्तव्यः । गवि भवं गव्यम् । गोः स्वं गव्यम् । गौर्देवताऽस्य स्थालीपाकस्य गव्यः स्थालीपाकः ॥**

( प्रदीपः ) **सर्वत्रेति** । नापत्य एव । यद्वा प्राग्दीव्यतीये, अन्यत्र च । तेन गवा चरति गव्य इति भवतीति केचिदाहुः । अजादिप्रसङ्ग इति किम्? गोभ्यो हेतुभ्य आगतं गोरूप्यम्, गोमयम् ॥

( उद्द्योतः ) प्राग्दीव्यतीयेषु पाठादेव नापत्य एवेति सिद्धमत आह—यद्वेति । तदनुवाद एव सर्वत्रेति—इति तत्त्वम् ॥

( ५२४० सिद्धान्तवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम् ॥ * ॥

**( भाष्यम् ) ण्यादयोऽर्थविशेषलक्षणादणपवादाद्भवन्ति पूर्वविप्रतिषेधेन ।**

**ण्यादीनामवकाशः—दितिर्देवताऽस्य दैत्यः, अदितिर्देवताऽस्य आदित्यः ।**

**अर्थविशेषलक्षणस्याणपवादस्यावकाशः—दुलेरपत्यं दौलेयः, बालेयः ।**

**इहोभयं प्राप्नोति—दितेरपत्यं दैत्यः, अदितेरादित्यः ॥**

**अपरस्यार्थविशेषलक्षणस्याणपवादस्यावकाशः—अचित्तहस्तिधेनोष्ठक् (४।२।४७) आपूपिकम्, शाष्कुलिकम् ।**

**ण्यादीनामवकाशः—बार्हस्पत्यम्, प्राजापत्यम् ।**

**इहोभयं प्राप्नोति—वनस्पतीनां समूहो वानस्पत्यम् ।**

**ण्यादयो भवन्ति पूर्वविप्रतिषेधेन ।**

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।**

**न वक्तव्यः ।**

**इष्टवाची परशब्दः । विप्रतिषेधे परं यदिष्टं तद्भवतीति ।**

**दितिवनस्पतिभ्यामपत्यसमूहयोः ॥**

( प्रदीपः ) **ण्यादय इति** । ण्यादयो येन नाप्राप्तिन्यायेनाण एवापवादाः । ढगादिभिरणपवादैस्तु सह संप्रधारणायां परत्वात्त एव स्युरिति वार्तिकारम्भः । अर्थविशेषो लक्षणं निमित्तं यस्य सोऽर्थ**विशेषलक्षणः** । यस्त्वर्थसामान्यलक्षणोऽणपवादस्स परत्वाद्भवति, उष्ट्रपतिर्नाम पत्रं तस्येदमौष्ट्रपतम् । 'पत्राध्वर्युपरिषदश्च' इत्यञ् भवति, न तु ण्यः ॥

**बार्हस्पत्यमिति** । बृहस्पतिर्देवता अस्येति ण्यः ॥

**दितिवनस्पतिभ्यामिति** । 'इतश्चानिञः' इति दितेर्ढक् न भवति । वनस्पतेः 'अचित्तहस्तिधेनोष्ठक्' इति ठक् न भवति ॥

( उद्द्योतः ) ननु ण्यादीनामितरापवादत्वात्कथं विप्रतिषेधोऽत आह—ण्यादय इति ॥ यस्त्वर्थसामान्येति । 'तस्येदम्' इति सामान्येन विधानादिति भावः । न च 'पत्राद्वाह्ये' इत्युक्तेरयमप्यर्थविशेषलक्षण इति वाच्यम्, सामान्यशब्देनैव तस्य विशेषस्यापि संग्र-

१ लोम्नोऽपत्येष्विति वार्तिकान्यथासिद्धिमाक्षिपति—केचिदाहुरिति ॥
२ वर्णाश्रयेनास्तिप्रत्ययलक्षणमिति प्रत्ययलक्षणाभावान्न भवति भसंज्ञेत्यर्थः ॥
३ 'चोडुलोमेभ्य इ' इति क. पाठः । प्राच्य भरतगोत्रेऽपि रूपासिद्धिं प्रतिपादयति—किं चोडुलोमैरिति ॥
४ 'स्वादैसादि परि' इति झ. पाठः ॥
५ इत्यस्याग्रे 'गोरिदं गव्यम्' इत्यधिकः छ. पाठः ॥
६ 'इत्यपि भव' इति झ. पाठः ॥
७ एतदुदाहरणं छ. पुस्तके न दृश्यते ।
८ एतदपि छ. पुस्तके न दृश्यते ।
९ 'तद्भवति' इति-इतिरहितः पाठः छ. पुस्तकस्य ।
१० उत्सर्गापवादयोर्विप्रतिषेधासम्भवात् तदुपपादयति—ननु ण्यादीनामिति ॥
११ पत्राध्वर्युपरिषदश्चेत्यनेन विधीयमानोऽञ्प्रत्ययः पत्राद्वाह्य इत्यभियुक्तोक्तेर्वाह्य एवार्थे भवतीति 'अर्थविशेषलक्षणः' अयमिति शङ्काशयः ॥
१२ सामान्येन—इदंशब्देनैव वाह्यरूपार्थस्य संग्रहात्रायमर्थविशेषलक्षण इत्याशयः ॥

ह्यात् । विशेषलक्षणत्वं[1] च विशेषशब्देन बोधितार्थकप्रत्ययत्वमिति भावः ॥ इतश्चेति । दितिर्वनस्पतिभ्यामपत्यसंमूहयोर्ण्य[2] एवेष्टः, न तु प्रत्ययान्तरमिति भाष्यार्थ[3] इति भावः । दितिशब्देन भाष्येऽदितिरप्युपलक्षणीयः । एतेन दैतेयादितेयौ भगवतो नेष्टाविति प्रतीयते, ङीषन्ताभ्यामपि लिङ्गविशिष्टपरिभाषया ण्य एवेति भाति[4] ॥

( ६५८ विधिसूत्रम् ॥ ४ । १ । २ आ. ४३ )

## १३३१ उत्सादिभ्योऽञ् ॥ ४ । १ । ८६ ॥

( अञ्प्रत्ययाधिकरणम् )

( ५२४१ सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥*॥ अञ्प्रकरणे ग्रीष्मादच्छन्दसि ॥*॥**

( भाष्यम् ) अञ्प्रकरणे ग्रीष्मादच्छन्दसीति वक्तव्यम् । ग्रैष्मम् ।

अच्छन्दसीति किम् ?

त्रिष्टुब् ग्रैष्मी ॥

( प्रदीपः ) **ग्रीष्मादिति** । छन्दःशब्देनेह वृत्तमुच्यते[5] । तस्मिन्नभिधेयेऽञः प्रतिषेधादणेव भवति ॥ **त्रिष्टुबिति** । ग्रीष्मो देवता अस्या इत्यण् । यदा तु ग्रीष्मे भवेति शेषार्थविवक्षा तदा तु शैषिक ऋत्वण् सिद्ध एव । न चाञा शैषिकस्य बाधप्रसङ्गः, अर्थविशेषलक्षणानां तुल्यकक्ष्याणामेव प्रत्ययानां ण्यादिभिर्बाधनात् । ऋत्वण् तु कक्ष्यान्तरबाधकत्वाद[6]ञो बाधकः । तथा[7] हि—कालाट्ठञ्—अणोपवादः, ठञोऽपि ऋत्वण् ॥

( उद्द्योतः ) **वृत्तमिति** । यस्य गायत्र्यादयो विशेषाः ॥ ननु 'ण्यादयोऽर्थविशेषे' इति पूर्वविप्रतिषेधेन ऋत्वणोऽप्यञ् बाधकः स्यादत आह—**न चाञेति** । अर्थविशेषलक्षणत्वं तुल्यकक्षत्वं च बाधे निमित्तम्, तत्र ऋत्वणः शेषमात्रे विधानादाद्यं नास्ति ॥ द्वितीयमपि नेत्याह—**ऋत्वणिति** ॥

( छन्दःपदार्थविवरणभाष्यम् )

यद्यच्छन्दसीत्युच्यते, ग्रैष्मावेतौ मासौ—अत्र न प्राप्नोति ।

अच्छन्दसीत्युच्यते, नेदं[8] छन्दो विवक्षितम्—काठकं कालापकं मौदकं पैप्पलादकमितिं[9] ।

किं तर्हि ?

प्रत्ययार्थविशेषणमेतद् । न चेच्छन्दः प्रत्ययार्थो भवतीति ॥

( प्रदीपः ) **ग्रैष्मावेताविति** । शेषलक्षणादर्थादन्यत्र बोद्धव्यम् । शेषे तु ऋत्वणा भाव्यमित्युक्तम् ॥

( ६५९ विधिसूत्रम् ॥ ४ । १ । २ आ० ४४ )

## १३३२ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ॥ ४ । १ । ८७ ॥

( नञ्स्नञाधिकरणम् )

( प्रत्ययभेदाक्षेपभाष्यम् )

किमर्थं नञ्स्नञावुच्येते, न नञेवोच्येत ?

का रूपसिद्धिः ?

पौंस्नम् । पुंस् इति सकारान्तः, नञ्शब्दश्च प्रत्ययः ।

न सिध्यति । संयोगान्तस्य लोपः ( ८।२।२३ ) इति लोपः प्राप्नोति ।

एवं तर्हि नैवार्थो नञा, नापि स्नञा । अञ् प्रकृतः सोऽनुवर्तिष्यते, नकारश्चागमो वक्तव्यः ।

अथ नकारागमे सति किं पूर्वान्तः करिष्यते, आहोस्वित्परादिः ?

किं चातः ?

यदि पूर्वान्तः—

स्त्रैणाः, बहुषु लोपः प्राप्नोति ।

स्त्रैणानां सङ्घः, सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ( ४।३।१२७ ) इत्यण् प्राप्नोति ॥

अथ परादिः—पौंस्नम् । स एव दोषः—संयोगान्तलोपः प्राप्नोति ॥

अस्तु पूर्वान्तः ।

कथं स्त्रैणाः, स्त्रैणानां सङ्घ इति ?

उभयत्र लौकिकस्य गोत्रस्य ग्रहणम् । न चेदं लौकिकं गोत्रम् ॥

---

१ पत्राध्वर्युपरिषदश्चेत्यनेन—इदमर्थ एव प्रत्ययस्य विधानमिति न सोऽर्थविशेषलक्षणः । यस्य च प्रत्ययस्यापत्यरूपविशेषशब्देन तदर्थे विधानं सोऽर्थविशेषलक्षण इति ण्यप्रत्ययस्तथेति भावः ॥

२ ननु यद्यर्थविशेषलक्षणणापवादस्य ण्यप्रत्ययः पूर्वविप्रतिषेधेन बाधकः, तर्हि दितिशब्दादपत्येऽर्थे वनस्पतिशब्दाच्च समूहरूपे अचित्तहस्तिधेनोरिति ठकोऽपि बाधः स्यादिति चेदिष्टमेवेत्याह—**दिति वनस्पतिभ्यामिति** ॥

३ पूर्वविप्रतिषेधनिरूपणभाष्यस्यायमर्थ इति भावः ॥

४ ये हि दैतेयादितेयाविति रूपे स्वीकुर्वन्ति ते लिङ्गविशिष्टपरिभाषाया अनित्यत्वादप्रवृत्तौ ङीषन्तदितिशब्दात्—दित्यदित्यादित्येत्यस्याप्राप्ति मत्वा स्त्रीभ्यो ढगिति ढकं कल्पयन्ति त एवं प्रष्टव्याः—ङ्याप् सूत्रे लिङ्गविशिष्टपरिभाषा दोषेषु अस्यानुक्तेर्भगवतो नेतदिष्टम्, दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्त्याऽन्यत्रानित्यत्वे मानाभावाच्चेति ॥

५ 'वृत्तमित्युच्यते' इति क. । छन्दसीत्यस्य न वेदे इत्यर्थः, विशेषाः—गायत्र्यादयो ये वृत्तविशेषास्त इहोच्यन्ते ॥

६ 'कक्ष्यांतरप्राप्तत्वादञो' इति च. झ. पाठः ॥

७ 'तथाहि' इत्यस्य स्थाने 'यथाहि' इति च. झ. पाठः ॥

८ 'नैतच्छन्दः समीक्षितं काठ' इति छ. पाठः, 'नेदं छन्दः समीक्षितं' इति च. पाठः ॥

९ 'पैप्पलादकं वा' इति छ. पाठः ॥

ईकारस्तर्हि प्राप्नोति ।

इष्टमेवैतत्संगृहीतम्—स्त्रैणी, पौंस्नीत्येव भवितव्यम् ।

एवं हि सौनागाः पठन्ति—'नञ्स्नञीकक्ख्युंस्तरुणतलुनानामुपसंख्यानम्' इति ॥

( प्रदीपः ) लोपः प्राप्नोतीति । तत्र कर्तव्ये 'पूर्वत्रासिद्धम्' इत्यनुस्वारस्यासिद्धत्वादनुस्वारस्यापि वा अयोगवाहस्य प्रत्याहारे द्रष्टव्यत्वात्संयोगान्तत्वादिति भावः ॥ अञ् प्रकृत इति । तत्र भत्वात्पदत्वाभावात् संयोगान्तलोपाप्रसङ्गः ॥

बहुषु लोप इति । 'यञञोश्च' इत्यनेन ॥

अथ परादिरिति । परादौ नशब्दः संपद्यत इत्यञ्कार्याभावः ॥ ननु च तद्धक्तस्य तद्ग्रहणेन ग्रहणात्परादावपि नकारेऽङ्कृतं प्राप्नोति । एवं तर्हि अश्वासावञित्याश्रयणाददोष इति मन्यते । पररूपं च शकन्ध्वादित्वात्सौत्रत्वाद्वा निर्देशस्य भवति ॥

उभयत्रेति । 'यञञोश्च' इत्यत्र 'यस्कादिभ्यो गोत्रे' इत्यनुवर्तते । 'सङ्घाङ्क' इत्यत्रापि 'गोत्रचरणाद्वुञ्' इत्यतः । ऋषिप्रजनश्च लोके गोत्रमित्युच्यते । स्त्री च नर्षिर्नापि पुंशब्दवाच्यं सामान्यमिति भावः ॥

( उद्योतः ) नन्वनुस्वारस्याच्त्वात्तस्य संयोगान्तत्वाभावोऽत आह—तत्र कर्तव्य इति ॥ प्रत्याहारे=शर्प्रत्याहारे ॥ 'स एव दोषः' इत्येवकारासंगतिं शङ्कते—ननु चेति ॥ अञ्कृतम्=लोपादि॥ नन्वेवं सवर्णदीर्घः स्यादत आह—पररूपं चेति ॥ ऋषिप्रजन इति । प्रवराध्यायप्रसिद्ध इत्यर्थः ॥ तस्यैव लोके गोत्रत्वेन व्यवहारात् । 'गोत्रावयवात्' इति सूत्रे भाष्ये स्फुटमेतत् ॥ नापि पुंशब्दवाच्यं सामान्यमिति । ऋषिरिति शेषः ॥ भाष्ये—इष्टमेवैतदिति । न च गोत्रापत्यस्त्रियामञन्तत्वे शार्ङ्गरवादि ङीन्, नञाद्यंतत्वे जातिलक्षणङीष्, ङीपः परत्वात्–इति स्वरे विशेष इति वाच्यम्, जातिलक्षणेऽपि ऋषिप्रजनस्यैव गोत्रस्य ग्रहणात् । अवन्तीत्यादौ तु तदारोपेण जातिकार्यमित्यदोषात् । न च द्वयोः स्त्रियोर्भवो द्वैस्त्रीण इत्यादौ द्विगोर्लुगापत्तिः । प्रत्ययविधौ तदन्तविध्यभावेन तादृशप्रयोगस्यैव दुर्लभत्वात् ॥

( प्रयोजनमुखेन समाधानभाष्यम् )

टिलोपस्तर्हि प्राप्नोति ।

नुग्वचनान्न भविष्यति ।

भवेदिह नुग्वचनान्न स्यात्स्त्रैणमिति ।

इह तु खलु पौंस्नमिति, नुग्वचनादेव प्राप्नोति ।

तस्मान्नञ्स्नञौ वक्तव्यौ ॥

( प्रदीपः ) टिलोपस्तर्हीति । 'प्रकृत्यैकाज्' इत्यत्र 'इष्टेमेयःसु' इत्यनुवर्तनात् प्रकृतिभावो नास्ति ॥ इह तु खल्विति । 'यं विधिं प्रति' इति 'यस्य तु विधिः' इति च न्यायाभ्यामित्यर्थः । ननु च स्त्रीशब्दस्यापि नुगेव लोपनिमित्तम् । अन्यथा श्रीर्देवता अस्येति श्रायमित्यादाविव यस्येति लोपात्परत्वाद् वृद्धिः स्यादिति चिन्त्यमेतत् । पौंस्ने दोषप्रसङ्गाद्वा स्त्रैणे नाकारि सूक्ष्मेक्षा ॥

( उद्योतः ) भाष्ये—नुग्वचनादिति । यस्येति लोपेनैव सिद्धे नुग्विधानसामर्थ्यादित्यर्थः ॥

सूक्ष्मेक्षेति । परे तु एतद्भाष्यप्रामाण्याद्वृद्धेः पूर्वविप्रतिषेधेन लोपो बलीयान् । श्रायमिति यदि प्रामाणिकं तदा वर्णव्यत्ययेन साधु, लोके तु 'श्रम्' इत्येव साधु, 'नाग्लोपि' इति सूत्रे गिति प्रत्याहारग्रहणेन सामान्यत एव वृद्धेर्लोपस्य बलवत्त्वज्ञापनाच्च । 'कसोमाट्ट्यण्' इति सिद्धे 'कस्येत्' इतीत्वविधानाच्चेत्याहुः । नन्वकारसहितनगागम एवास्तु, तत्र यस्येति लोपे तस्य स्थानिवत्त्वाट्टिलोपाप्राप्तेरिति चेन्न; असन्देहाय प्रतिपत्तिलाघवाय च तथोक्तेः; तादृशागमस्यादृष्टत्वाच्चेत्याहुः ॥

( जिज्ञासाभाष्यम् )

अथेमौ नञ्स्नञौ प्राग्भवनादिति, आहो स्वित्प्राग्वतेः ?

कश्चात्र विशेषः ?

( ५२४२ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

॥ * ॥ नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधः ॥ * ॥

( भाष्यम् ) नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधो वक्तव्यः—स्त्रीवत्, पुंवदिति ।

किं पुनः कारणं न सिद्ध्यति ?

इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते, तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम् ॥

तर्त्तर्हि वक्तव्यम् ।

न वक्तव्यम् ।

वतेः प्रागिति वक्ष्यामि ॥

( प्रदीपः ) वत्यर्थ इति । प्राक् भवनात्सर्वेष्वर्थेषु नञ्स्नञौ प्रकृतिविशेषाद्विधीयमानौ प्रकृत्यन्तरेषु सावकाशस्य वतेर्बाधकौ प्राप्नुत इति भावः ॥

( ५२४३ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

॥ * ॥ वतेः प्रागिति चेद् भाव उपसंख्यानम् ॥ * ॥

( भाष्यम् ) वतेः प्रागिति चेद् भाव उपसंख्यानं

---

१ 'सौत्रत्वान्निर्दे' इति क. पाठः ॥

२ 'च न्यायादित्य' इति क. पाठः ॥

३ 'भवनात्' इति इतिरहितः पाठः–छ. पुस्तके ॥

४ स बाधो माभूदित्येतदर्थं वत्यर्थे प्रतिषेधो वक्तव्य इति तात्पर्यम् ॥

कर्तव्यम्—स्त्रीभावः स्त्रैणम्, पुंभावः पौंस्नमिति । सूत्रं च भिद्यते ॥

( समाधानभाष्यम् )

यथान्यासमेवास्तु ॥

ननु चोक्तं नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेध इति ।

नैष दोषः ।

आचार्यप्रवृत्तिर्ज्ञापयति—न वत्यर्थे नञ्स्नञौ भवत इति, यदयं स्त्रियाः पुंवदिति निर्देशं करोति ।

एवमपि स्त्रीवदिति न सिध्यति ।

योगापेक्षं ज्ञापकम् ॥

( प्रदीपः ) योगापेक्षमिति । अयं योगो वत्यर्थे न प्रवर्तत इति पुंवदिति निर्देशेन ज्ञाप्यत इत्यर्थः । त्वतलोस्तु नञ्स्नञ्भ्यां समावेशाय 'आ च त्वात्' इत्यत्र यत्नः करिष्यते । तेन स्त्रीत्वं, स्त्रीता, पुंस्त्वं, पुंस्तेत्यपि भवति ॥

( उद्द्योतः ) ननु प्राग्भवनादित्युक्तेर्भावे नञ्स्नञौ सिद्धौ, परं तु ताभ्यां त्वतलोर्बाधात्तौ न स्यातामत आह—त्वतलोस्त्विति ॥

( ६६० विधिसूत्रम् ॥ ४ । १ । २ आ. ४५ )

## १३३३ द्विगोर्लुगनपत्ये ॥ ४।१।८८ ॥

( लुगधिकरणम् )

( सूत्रार्थोपपादकभाष्यम् )

इह कस्मान्न भवति—त्रैविद्यः, पाञ्चनदः, षाट्कुल इति ?

इह तावत्—त्रैविद्य इति—

नैवं विज्ञायते—तिस्रो विद्या अधीते त्रैविद्य इति।

कथं तर्हि ?

त्र्यवयवा विद्या त्रिविद्या, त्रिविद्यामधीते त्रैविद्य इति ।

इहापि पाञ्चनद इति—

नैवं विज्ञायते—पञ्चसु नदीषु भवः पाञ्चनद इति ।

कथं तर्हि ?

पञ्चानां नदीनां समाहारः पञ्चनदम्, पञ्चनदे भवः पाञ्चनद इति ।

षाट्कुल इति—

नैवं विज्ञायते-षट्सु कुलेषु भवः षाट्कुल इति,

कथं तर्हि ?

षण्णां कुलं षट्कुलम्, षट्कुले भवः षाट्कुल इति ॥

( प्रदीपः ) त्रैविद्य इति । द्विगोरत्राण् प्रत्यय इति मन्यते ॥ त्र्यवयवेति । विद्यात्रयरूपस्य समुदायस्य विद्यात्वं विवक्षितमित्यर्थभेदो नास्ति । अव्यविकन्यायाच्च द्विग्वभावः ॥ पञ्चनदमिति । 'नदीभिश्च' इति समाहारेऽव्ययीभावः । 'कृष्णोदक्पाण्डुसंख्यापूर्वायाः' इत्यच् समासान्तः ॥ षण्णामिति । आदिपुरुषाणाम् ॥ कुलमिति । कुलसामान्यस्य विवक्षितत्वाद्य एवार्थः षट्सु कुलेषु भव इति, स एव षण्णां कुले भव इतीति भावः ॥

( उद्द्योतः ) द्विगोरत्रेति । तिस्रो विद्या अधीत इति विग्रह इति भावः ॥ ननु त्र्यवयवेति विग्रहे 'विद्यात्रयमधीते' इत्यर्थासंप्रत्ययादर्थभेदोऽत आह—विद्यात्रयरूपस्येति ॥ नन्वेवमपि यदा तद्धितार्थे द्विगुस्तदा त्रिविद्य इति स्यादत आह—अव्यविकेति ॥ ननु पञ्चनदात्समाहारद्विगोस्तद्धित इति लुक्स्यादत आह—नदीभिश्चेति ॥ संख्यापूर्वाया इतीति । तत्र 'भूमेः' इत्यस्यानुवृत्त्याऽनुवादः, 'अच् प्रत्यन्वव' इति योगविभागसिद्धत्वादिति भावः । योगविभागाभावे तु पृषोदरादित्वादुत्तरपदान्तस्याकारादेशः, पञ्चनाभवदित्यन्ये ॥

कुलपदस्य समूहपरत्वभ्रमवारणाय षण्णामित्यस्य व्याख्या—आदिपुरुषाणामिति । कुलम्=संतानसमूहः ॥ नन्वेवमादिपुरुषभेदेन कुलभेदात्कुलानीति युक्तमत आह—कुलसामान्यस्येति । एवं च विग्रहद्वयेऽपि नार्थभेद इत्याह—य एवेति ॥

---

१ पुंवदिति निर्देशेन पुंशब्दाद्वत्यर्थे स्नञ् नेति विशेषापेक्षं न ज्ञाप्यते किन्तु वत्यर्थे योगो न भवतीत इति तात्पर्यम् ॥

२ आ च त्वादिति चकारकरणमपवादसमावेशार्थमित्यादिरूपो यत्नः । तथा च तस्य फलमप्युक्तम्—स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं चोदितं तन्न वक्तव्यं भवतीति ॥

३ तिस्रो विद्या अधीत इत्यर्थे द्विगोरण् प्रत्यय इति शङ्को मन्यत इत्यर्थः । सिद्धान्तस्तु त्र्यवयवा विद्येत्यादिना द्विगोः परत्वम्प्रत्ययस्य नास्तीत्यादिना मूल एव स्फुटः ॥

४ ननु त्रैविद्यपदात् विद्यात्रयमधीत इत्यर्थः प्रतिपद्यते, न तु त्र्यवयवा विद्येति, समासार्थावबोधकस्यैव विग्रहत्वमिति त्र्यवयवाविद्येत्याद्यनुपपन्नं स्यादत आह—विद्यात्रय रूपस्येति ॥

५ अवेर्मांसमिति विग्रहे अविकशब्दादेव प्रत्यय उत्पद्यते न त्वविशब्दादिति—आविकमित्येव रूपं भवति । द्वयोः शब्दयोः समानार्थयोरेकेनविग्रहः, अपरस्मादुत्पत्तिर्भवति । तथाऽत्रापि त्र्यवयवा विद्या त्रिविद्या त्रिविद्यामधीते त्रैविद्य इत्येव भवति न त्वत्र द्विगुरिति भावः ॥

६ 'द्विगोर्लुगनपत्ये' इत्यनेन तद्धितलुगित्यर्थः ॥

७ कृष्णोदक्पाण्डुसंख्या पूर्वाया भूमेरजिष्यत इति वचने भूमिशब्दस्य पाठेन पञ्चनदमित्यत्राच् दुर्लभ एवेत्याशङ्कायामाह—तत्र भूमेरितीति । भवयुत्याऽनुवाद इति कथनेन अन्येभ्योऽपि अच्प्रत्ययो भवतीति तात्पर्यम् । तत्र प्रमाणमाह—अजिति । कृष्णोदगिति वचनं नापूर्वम्, किन्तु 'अच्' इति योगविभागादेव सिद्धमिति भावः ॥

( सूत्रार्थसंग्राहकभाष्यम् )

अजादिग्रहणं च कर्तव्यम् । इह मा भूत्—पञ्चगर्गरूप्यम्, पञ्चगर्गमयम् ॥

( प्रदीपः ) **पञ्चगर्गरूप्यमिति** । पञ्चभ्यो गर्गेभ्यो हेतुभ्य आगतमिति द्विगुः । ततो रूप्यमयटौ ॥

( उद्द्योतः ) **ततो रूप्येति** । 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' 'मयट् च' इति विहितौ । नन्वजादिग्रहणे 'द्विरथः' इत्यत्र 'तस्येदम्' इत्यधिकारविहितयतोऽपि लुक्—'येन विधिः' 'तदर्हति' इति सूत्रस्थभाष्यसंमतो न सिद्ध्येदिति चेन्न; 'अजादिग्रहणं कर्तव्यम्' इति भाष्यस्य—उत्तरसूत्रादचीत्यपकृष्य वाक्यभेदेन व्याख्येयम्, तेन हलादेरपि कस्य चिल्लुगिति—तात्पर्येणादोषात् ॥[1]

( ५२४४ पूरकवार्तिकम् ॥ १ ॥ )

## ॥*॥ द्विगोर्लुकि तन्निमित्तग्रहणम् ॥*॥

( भाष्यम् ) द्विगोर्लुकि तन्निमित्तग्रहणं कर्तव्यम्, द्विगुनिमित्तं यस्तद्धितः—तस्य लुग्भवतीति वक्तव्यम् ।

इह मा भूत्—पञ्चकपालस्येदं खण्डं पाञ्चकपालमिति ॥

( प्रदीपः ) **द्विगुनिमित्तमिति** । द्विगोर्निमित्तमिति षष्ठीसमासः । क्वचिद् 'द्विगुनिमित्तः' इति पाठः । तत्र द्विगोर्निमित्तं यस्मिंस्तद्धिते तदीयो योऽर्थः स द्विगुनिमित्त इति व्याख्येयम् ॥ **पञ्चकपालस्येति** । पञ्चसु कपालेषु संस्कृत इति तद्धितार्थे द्विगुः, ततोऽण् । तस्यानेन लुक्, पुनः 'तस्येदम्' इत्यण् । तस्य द्विगुं प्रत्यनिमित्तत्वाल्लुगभावः ॥

( उद्द्योतः ) भाष्ये—**द्विगुनिमित्तं य इति** । यद्यप्युत्तरवार्तिके 'अतन्निमित्तात्' इति पञ्चमीदर्शनेन तन्निमित्तग्रहणमपि पञ्चम्यन्तम्, अत एवाग्रे तन्निमित्तपदे समासविकल्पशङ्कापरभाष्ये पञ्चम्यन्तत्वं दृश्यते; तथाऽपि तत्र बहुव्रीहिं सिद्धान्तमभिप्रेत्य फलितार्थकथनमिदम् । तदाह—**षष्ठीसमास इति** । बहुव्रीहौ सर्वस्यापि द्विगोर्विहितस्य द्विगुनिमित्तत्वेन पाञ्चकपालादावपि लुगापत्तेस्तन्निमित्तग्रहणवैयर्थ्यापत्तिर्नपुंसकत्वानापत्तिश्चेति भावः ॥ निमित्तपदार्थमाह—**तदीयो य इति** ॥ **स इति** । तद्धित इत्यर्थः ॥

( ५२४५ पूरकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि ॥ * ॥

( भाष्यम् ) अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति वक्तव्यम् ।

किं प्रयोजनम् ?

पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, पञ्चकपाल्यां संस्कृत इत्यपि विगृह्य पञ्चकपाल इत्येव यथा स्यात् ॥

( प्रदीपः ) **अर्थविशेषासंप्रत्यय इति** । तद्धितहेतुकात् द्विगोर्लुकि योऽर्थः प्रतीयते स एवातद्धितहेतुकादपि यदीत्यर्थः । समाहारद्विगुश्च तद्धितार्थं इति द्विगुना समानार्थ इति तत इदं लुग्विधानम् ॥

(उद्द्योतः) सर्वस्याप्यर्थवत्वादर्थविशेषासंप्रत्यय इत्यनुपपन्नमत आह—**तद्धितहेतुकादिति** ॥ **अतद्धितेति** । समाहारद्विगोरित्यर्थः । 'समाहारद्विगुश्च तद्धितार्थद्विगुना' इति पाठः । समाहारद्विगुप्रकृतिकतद्धितान्तश्च तद्धितार्थद्विगुप्रकृतिकतद्धितान्तेन समानार्थमित्यर्थः ॥

( जिज्ञासाभाष्यम् )

अथ क्रियमाणेऽपि तन्निमित्तग्रहणे कथमिदं विज्ञायते—

तस्य निमित्तं तन्निमित्तं तन्निमित्तादिति,

आहो स्वित् स निमित्तमस्य सोऽयं तन्निमित्तस्तन्निमित्तादिति ।

किं चातः ?

यदि विज्ञायते—तस्य निमित्तं तन्निमित्तं तन्निमित्तादिति,

क्रियमाणेऽपि तन्निमित्तग्रहणेऽत्र प्राप्नोति—पञ्चकपालस्येदं खण्डमिति ॥

अथ विज्ञायते स निमित्तमस्य सोऽयं तन्निमित्तस्तन्निमित्तादिति,

न दोषो भवति ।

यथा न दोषस्तथाऽस्तु ॥

स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति विज्ञायते ।

कुत एतत् ।

यदयमाह—अर्थविशेषाऽसंप्रत्ययेऽतन्निमित्तादपीति ॥

( प्रदीपः ) **तस्येति** । तद्धितस्य ॥ **स निमित्तमिति** । स तद्धितोऽर्थद्वारेण निमित्तं यस्येत्यर्थः ॥ **यदयमिति** । पञ्चकपाल्यां संस्कृत इत्यत्रापि तद्धितस्य निमित्तं द्विगुरिति किं द्वितीयवार्तिकारम्भेण । किं च तन्निमित्तग्रहणमपि व्यावर्त्याभावादनर्थकं स्यात् ॥ **निमित्तमिति** । निमित्तनिमित्तिभावलक्षणस्य संबन्धस्यान्तरङ्गत्वात्स एवाश्रीयते न तु पौर्वापर्यलक्षणः । पौर्वापर्यस्य च पञ्चम्या लाभात् षष्ठ्याश्रयणमनर्थकं स्यात् ॥

[1] अजादिग्रहणञ्च कर्तव्यमित्यस्याश्रयणेन यतोऽजादित्वाभावान्न लुक् प्राप्नोतीति शङ्काशयः । उत्तरसूत्रादचीत्यपकृष्य व्याख्यानेन तस्य काचित्कत्वम्बोध्यत इति हलादावपि लुगिति भावः ॥

**( उद्द्योतः )** तस्येति तच्छब्देन यदि द्विगुः परामृश्यते, तदा द्विगुनिमित्ताद्द्विगोरित्यर्थः स्यात्स चायुक्त इत्यत आह—**तद्धितस्येति** । तस्माद्विधीयमानत्वेन द्विगोस्तद्धितनिमित्तत्वमिति भावः ॥ नन्वानन्तर्यादिनिरूपितस्यापि संबन्धस्य सत्त्वात्कथं तल्लाभोऽत आह—**निमित्तेति** ॥ हेत्वन्तरमप्याह—**पौर्वापर्यस्य चेति** । अयमभ्युच्चयः ॥

( प्रथमवार्तिकान्यथासिद्धिकरणभाष्यम् )

**तत्तर्हि निमित्तग्रहणं कर्तव्यम् ?**

**न कर्तव्यम् ।**

**द्विगोरिति नैषा पञ्चमी,**

**का तर्हि ?**

**संबन्धे[1] षष्ठी—द्विगोस्तद्धितस्य लुग्भवति ।**

**किञ्च द्विगोस्तद्धितः ?**

**निमित्तम् । यस्मिन् द्विगुरित्येतद्भवति ।**

**कस्मिंश्चैतद्भवति ?**

**प्रत्यये ॥**

( द्वितीयवार्तिकान्यथासिद्धिभाष्यम् )

**इदं तर्हि वक्तव्यम्—अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति ।**

**एतच्च न वक्तव्यम् ।**

**इहास्माभिस्त्रैशब्द्यं[2] साध्यं—पञ्चसु कपालेषु संस्कृतः, पञ्चकपाल्यां संस्कृतः, पञ्चकपालः । दशकपाल इति ।**

**तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यत्यव्यविकन्यायेन[3] ।**

**तद्यथा—अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति—आविकमिति ।**

**एवं पञ्चसु कपालेषु संस्कृत इति विगृह्य पञ्चकपाल इति भविष्यति ।**

**पञ्चकपाल्यां संस्कृत इति विगृह्य वाक्यमेव भविष्यति ।**

**त्रैशब्द्यं[4] चेह साध्यम्, तच्चैवं सति सिद्धं भवति ॥**

**( प्रदीपः ) अव्यविकन्यायेनेति ।** अव्यविकशब्दयोर्यो न्यायस्तेनेत्यर्थः । क्वचित्—**अविरविकन्यायेन**-इति पाठः, तत्र[5] च दृष्टान्तत्वेनोपन्यासः । अविः—अविकन्यायेन—तद्द्वारेण यथा प्रत्ययमुत्पादयति न स्वयम्, तथाऽयमपीत्यर्थः ।

अथवाऽविरित्यस्य विभक्त्यन्तस्यानुकरणम**विरिति ।** ततोऽनुकार्येणार्थेनार्थवत्त्वाद्या[6] विभक्तिरुत्पद्यते तस्या द्वन्द्वान्तर्भावाल्लोपः, न तु[7] पूर्वस्याः, अनुकरणत्वात् सुप्त्वाभावात् । यथाऽस्यवामीयमिति षष्ठ्या लुगभावः ।

अथवा भाष्यकारवचनप्रामाण्यादस्य साधुत्वम् ॥ **एवमिति ।** पञ्चकपालीशब्दात्त्वनभिधानात्तद्धितानुत्पत्तिरिति भावः ॥

**( उद्द्योतः ) यो न्याय इति ।** अविशब्देन विग्रह एव । अविकशब्दात्प्रत्ययः, तेन[8] विग्रहश्चेति तयोर्न्यायः ॥ **तद्द्वारेण**=अविकद्वारेण । अयमेव न्यायशब्दार्थ इति भावः ॥

अत्र पक्षे यथातथेत्यध्याहारगौरवमतः पक्षान्तरमाह—**अथवेति ।** अत्रायमर्थः[9]—अविरित्येतत्पदम्, अविक इति च, तयोर्मध्ये विकारादिप्रत्ययः कनन्तादेव, न तु केवलादिति न्यायः—तेनेति । भाष्ये—**विगृह्याविकशब्दादुत्पत्तिरिति** 'परावरयोगे च' इति क्त्वा॥

न्यायस्य प्रथमान्ते पदे न विषय इत्यरुचेराह—**भाष्यकारेति ।** अयं हि भाष्यकारस्यैव प्रयोगः, तद्वचनप्रामाण्यान्मयूरव्यंसकादित्वात्पूर्वपदस्य रेफ[10] आगम इत्याशयः ॥

—०:०:०—

( ६६१ अलुग्विधिसूत्रम् ॥ ४ । १ । २ आ. ४६ ॥ )

## १२३४ गोत्रेऽलुगचि ॥ ४ । १ । ८९ ॥

( अलुगधिकरणम् )

**( प्रदीपः )** 'यस्कादिभ्यो गोत्रे' इति प्रकरणेन प्राप्तस्य लुको विषयविशेषेऽयमपवादः ॥

**( उद्द्योतः )** अत्र गोत्रशब्देन पारिभाषिकं[11] शास्त्रीयमेव, उत्तरसूत्रस्थेन कृत्रिमेण यूना साहचर्यात्[12] । पूर्वसूत्रेण गोत्रप्रत्ययलुकोऽप्राप्तेः प्राप्तिं[13] दर्शयति—**यस्कादिभ्य इति ।** अनेन[14] 'तद्राज' इत्यस्यापि संग्रहः । ततं[15] एवैषु 'बहुषु' इत्यनुवृत्तेस्तस्याप्येतत्प्रकरणस्थत्वात् । 'ण्यक्षत्रिय' इति तु न गृह्यते, यूनो गोत्रसंज्ञाया अभावात्, 'भूम्नि

१ 'सम्बन्धषष्ठी' इति छ. पाठः ॥

२ त्रैशब्द्यमिति । पञ्चसु कपालेषु संस्कृत इत्येकः, पञ्चकपाल्यां संस्कृत इति द्वितीयः, पञ्चकपाल इति तृतीय इति त्रैशब्द्यमित्यर्थः ॥

३ 'अविरविकन्या' इति छ. पाठः ॥

४ 'तत्रैशब्द्यम्' इति झ. पाठः । अयञ्चासार्वत्रिकः पाठ इति तत्राप्युक्तम् ॥

५ तत्र च=अविरविकन्यायेनेति पाठे च, अत्र अस्येति शेषः । दृष्टान्तत्वमेव प्रदर्शयति—अविः—अविकन्यायेनेति ॥

६ अनुकार्येणार्थेनेति । अनुकार्यानुकरणयोर्भेदविवक्षयेति भावः ॥

७ न तु पूर्वस्या इति । प्रथमान्ताविशब्दस्य 'अविस्' इत्यस्यानुकरणङ्क्रियते, तद्घटकीभूतायाः प्रथमाया न लोपः किन्तु ततः परमुत्पन्नायाः प्रथमाया लोपः । पूर्वस्या लोपाभावे हेतुमाह—अनुकरणत्वात्सुप्त्वाभावादिति । लोपाभावे हेतुः सुप्त्वाभावः, तदभावे चानुकरणत्वरूपः ॥

८ तेन=अविशब्देन, तयोः=अव्यविकशब्दयोः ॥

९ 'अविरविकन्यायेन' इति पाठे कैय्यटोक्तं द्वितीयपक्षमुपपादयति—अत्रायमर्थ इति ॥

१० रेफ आगम इति । न तु 'अविर्' पदस्य प्रथमान्तत्वमिति भावः ॥

११ पारिभाषिकम्=शास्त्रकारीयसङ्केतविषयप्रतिपादकम् ॥

१२ यूनि लुगिति सूत्रे युवशब्दो यथा शास्त्रीयार्थस्य प्रकाशकः, तथा तत्सूत्रपूर्ववृत्तिसूत्रघटको गोत्रशब्दोऽपि तादृशार्थस्य प्रकाशक इति भावः ॥

१३ प्राप्तिमिति । 'लुकः' इत्यादिः ॥

१४ अनेन='प्रकरणेन प्राप्तस्य लुकः' इति कैय्यटग्रन्थेन तत्प्रकरणस्थस्य तद्राजस्य बहुषु तेनैवास्त्रियामित्यस्य यस्कादिभ्यो गोत्र इत्यतः प्राक्तनस्यापि संग्रहः ॥

१५ तद्राजस्येत्यस्य यस्कादिभ्यो गोत्र इत्यस्य च एकप्रकरणगोचरत्वं कथयति—तत इति । तत एव=तद्राजस्येति सूत्रादेव ॥

प्राप्तस्य' इति भाष्याच्च ॥ विशेषे=प्राग्दीव्यतीयाजादिप्रत्यये । प्राग्दीव्यतीयत्वोपजीवनायैव च प्रकरणोत्कर्ष इति बोध्यम् ॥

( ५२४६ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः ॥ * ॥**

**( भाष्यम् ) गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः ।**

**का इतरेतराश्रयता ?**

**अलुङ्निमित्तोऽजादिः, अजादिनिमित्तश्चालुक्; तदेतदितरेतराश्रयं भवति ।**

**इतरेतराश्रयाणि च न प्रकल्पन्ते ॥**

( प्रदीपः ) **गोत्रेऽलुगचीति चेदिति** । अस्मिन् सूत्रन्यासे दोषः । यदि तु 'गोत्रेऽलुक्' इत्युक्त्वा 'हलि न' इत्युच्येत तदा न स्याद्दोष इत्यर्थः ॥ **अलुङ्निमित्त इति** । गर्गाणां छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां सत्यलुकि वृद्धत्वाच्छेन भाव्यं नान्यथा, छे च कृते ईयादेशे परतोऽलुगितीतरेतराश्रयत्वम् । व्यक्तिपक्षेऽचीति परसप्तम्याश्रयणेऽयं दोषः । आकृतिपक्षे तु विषयसप्तम्याश्रयणेऽस्य दोषस्यानवतारः ॥

( उद्द्योतः ) 'अलुग्विधाने'[1] इति वक्तव्ये 'गोत्रेऽलुगचीति चेत्' इत्ययुक्तमत आह—**अस्मिन्सूत्रेति** ॥ **यदि त्विति** । प्राग्दीव्यतीयेऽर्थे विवक्षिते गोत्रस्यालुक्, हलादौ तु नेति सूत्रार्थः ॥ यद्यप्यजादिप्रत्ययमात्रस्य नालुङ्निमित्तकता, तथाऽपि तद्विशेषछस्यास्तीत्याह—**गर्गाणामिति** ॥ **परत इति** । ईयादेशे कृते तस्मिन्परत इत्यर्थः । एतेन विषयसप्तम्यां न दोष इति ध्वनितम् ॥ तदाह—**व्यक्तीपक्षे इति** । तत्पक्षे साक्षात्पौर्वापर्यसंभवात् ॥ **आकृतीति** । अत्र हि जातेः पौर्वापर्यासंभवात् विषयसप्तम्येवेत्याशयः । इदम् 'आर्धधातुके' इति सूत्रे द्वितीये स्पष्टम् ॥

( ५२४७ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

**॥*॥ विप्रतिषेधात्तु लुकश्छविधानम् ॥*॥**

**( भाष्यम् ) विप्रतिषेधात्तु लुकः छो भविष्यति ।**

**लुकोऽवकाशः—गर्गाः, वत्साः, बिदाः, उर्वाः ।**

**छस्यावकाशः—शालीयः, मालीयः, गार्गीयः, वात्सीयः ।**

**इहोभयं प्राप्नोति—गर्गाणां छात्राः गार्गीयाः, वात्सीयाः ।**

**छो भवति विप्रतिषेधेन ।**

**नैष युक्तो विप्रतिषेधः ॥**

( प्रदीपः ) **गार्गीया इति** । गार्ग्यस्यायं छात्र इति यदा एकवचनान्ता प्रकृतिस्तदेदं छस्यावकाशप्रदर्शनम् ॥

(उद्द्योतः) ननु गार्गीयस्य विवादस्थानत्वाच्छावकाशत्वमनुपपन्नमत आह—यदेति ॥

( समाधानश्लोकभाष्यम् )

**भूम्नीति च लुक् प्राप्तो**
**बाह्ये चार्थे विधीयतेऽजादिः ।**
**बहिरङ्गमन्तरङ्गाद्**
**विप्रतिषेधादयुक्तं स्यात् ॥**
**भूम्नि प्राप्तस्य लुको**
**यदजादौ तद्धितेऽलुकं शास्ति ।**
**एतद् ब्रवीति कुर्वन्**
**समानकालावलुग्लुक् च ॥**

**यदयं भूम्नि प्राप्तस्य लुकोऽजादौ तद्धितेऽलुकं शास्ति, तज्ज्ञापयत्याचार्यः समानकालावेतावलुग्लुकाविति ॥**

(प्रदीपः) **भूम्नीति चेति** । प्रत्ययार्थबहुत्वमात्रापेक्षो लुगन्तरङ्गः, बाह्यप्राग्दीव्यतीयार्थापेक्षत्वात्तु बहिरङ्गोऽजादिप्रत्ययः । अन्तरङ्गबहिरङ्गयोश्चातुल्यकालत्वादयुक्तो विप्रतिषेधः ॥ तुल्यकालत्वप्रतिपादनायाह—**भूम्नीति** ॥ **समानकालाविति** । यदि पूर्वं लुक् प्रवर्तेत तदाऽभिनिर्वृत्तस्य निवर्तयितुमशक्यत्वादनर्थकमलुग्विधानं स्यात् । तस्मादलुग्विधानान्न तावत्पूर्वं लुक् प्रवर्तेत इति लुकोऽपि सापेक्षत्वादन्तरङ्गत्वाभावादुपपन्नएव विप्रतिषेध इत्यर्थः ॥

( उद्द्योतः ) **अन्तरङ्गः**—पूर्वकालप्राप्तिक[3] इत्यर्थः ॥ लुकोऽपि सापेक्षत्वात्—बाह्यार्थसापेक्षाऽलुक्शास्त्रकृतलक्ष्यसंस्कारापेक्षत्वात्, न केवलं छस्यैव किंतु लुकोऽपीत्यपेरर्थः[4] ॥

( अजादिप्रत्ययस्य बलवत्त्वोपपादकभाष्यम् )

**यदि वा लुकः प्रसङ्गे भवत्यलुक् छस्तथा प्रसिद्धोऽस्य ।**

**यदि वा लुकः प्रसङ्गेऽलुग्भवति तथाऽस्य च्छः प्रसिद्धो भवति ।**

---

१ ननु यदि तद्राजस्येति प्रकरणविहितलुक एवायमलुग्बाधकस्तदा द्वितीयाध्याय एव तस्मिन् लुक्प्रकरणे सूत्रमिदं कर्तव्यमत आह—प्राग्दीव्यतीयत्वोपेति । प्राग्दीव्यतीति विषयलाभार्थं द्वितीयाध्याये न कृतमेतदित्यर्थः ॥

२ भाष्यकृता—अलुग्विधाने—अलुग्विधौ इतरेतराश्रयत्वादप्रसिद्धिरिति वक्तव्यम्, न तु गोत्रेऽलुगित्यादि । तस्मात् 'गोत्रेऽलुगचीति' भाष्यकृत उक्तिर्न्यासे दोषप्रदर्शनार्थमुक्तेत्यर्थः ॥

३ ननु अर्थनिमित्तकस्य बहिरङ्गत्वं नाश्रीयते, अत एव स्त्रीत्वरूपार्थनिमित्तकतिसृपेक्षयाऽन्तरङ्गत्वात्त्रयादेशे 'न तिसृचतसृ' इति निषेधो न व्यर्थः । एवञ्च प्रत्ययार्थबहुत्वमात्रापेक्ष इत्यादि प्रदीपग्रन्थोऽसङ्गतः स्यात्, तदसङ्गतिवारणायाह—पूर्वकाल प्राप्तिक इति ॥

४ बहिरङ्गत्वमिति भावः ॥

**पूर्वं ह्यपवादा[1] अभिनिविशन्ते पश्चादुत्सर्गाः ॥**

(प्रदीपः) **यदि वेति** । अन्तरेणापि[2] विप्रतिषेधं लुगपवादत्वादलुकः, तन्निमित्तमजादिप्रत्ययो बलवत्त्वात्प्रवर्तेत इत्यर्थः ॥ **पूर्वमिति** । निरपवादे विषये उत्सर्गेण प्रवर्तितव्यमिति पश्चादसौ प्रवर्तेत इति भावः ॥

( उद्द्योतः ) भाष्ये—**यदि वेति** । अथ वेत्यर्थः ॥ **तन्निमित्तमिति** । यथाऽपवादो बलवान्, तथा तन्निमित्तमपीत्यर्थः । तदाह—भाष्ये—**पूर्वं हीति** । अपवादशास्त्रकृतलक्ष्यसंस्कारज्ञानोत्तरमुत्सर्गेण स्वलक्ष्यसंस्कारं लक्षणैकचक्षुष्को जानीत इत्यर्थः । द्वितीये[3] त्वपवादविषयपरिहारेण उत्सर्गस्य स्वलक्ष्यसंस्कारकता, ततः प्रागेवेत्यर्थः । अयं[4] लक्ष्यैकचक्षुष्कविषयो न्यायः । एवञ्च लुकाऽलुग्विषयपर्यालोचनात्पूर्वं छ इत्याशयः । एवं भाष्ये प्रकार[5]त्रयोक्त्याऽचीत्यस्य विषयसप्तमीत्वं ध्वनितमित्याहुः ॥

( प्रकारान्तरोपपादकभाष्यम् )

**लुग्वाऽलुकः प्रसङ्गं**
**प्रतीक्षते छेऽलुगस्य तथा ॥**

**लुग्वा पुनरलुकः प्रसङ्गं यदि प्रतीक्षते, तथाऽस्य छेऽलुक् सिद्धो भवति ।**

**प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ॥**

( प्रदीपः ) **प्रकल्प्येति** । अन्यथा निर्विषयोऽपवादः स्यात्, यदि सर्वत्रोत्सर्गः प्रवर्तेतेति भावः ॥

( ५२४८ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ॥ * ॥

**( भाष्यम् ) गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः । विदानामपत्यं माणवको बैदः, बैदौ ।**

**किमर्थमिदम्, नाचीत्येवालुक् सिद्धः ?**

**अचीत्युच्यते, न चात्राजादिम्पश्यामः ।**

**प्रत्ययलक्षणेन ।**

**वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥**

( प्रदीपः ) **गोत्रस्येति** । गोत्रप्रत्ययस्येत्यर्थः ॥ **बहुषु लोपिन इति** । बहुष्वर्थेषु विधीयमानलोपस्येत्यर्थः ॥ **बहुवचनान्तस्येति** । यदा[6] तदर्थान्तरे यूनि संक्रामति तदन्ताद्यूनि यदा प्रत्ययः क्रियत इत्यर्थः ॥ **द्व्येकयोरिति** । द्वित्वैकत्वयोरित्यर्थः । द्वयोर्यूनोरेकस्मिन् वा यूनि यदा प्रत्यय उत्पद्यत इत्युक्तं भवति ॥ **बिदानामिति** । बिदस्यापत्यानि बहूनि । 'अनृष्यानन्तर्ये' इति गोत्रेऽञ् । तदन्ताद्यूनि 'अत इञ्' । तस्य 'ण्यक्षत्रियार्षञितः' इति लुक् । तत्राञो बहुषूत्पन्नत्वाल्लुक् प्राप्तः प्रतिषिध्यते ॥

( उद्द्योतः ) ननु गोत्रसंज्ञकस्यापत्यस्य लुकोऽसंभवादाह—**गोत्रप्रत्ययस्येति** ॥ भाष्ये[7]—**बहुषु लुग्भावी यो** गोत्रप्रत्ययः, **तदन्तस्य**—बहुवचनान्तस्य **प्रवृत्तौ**—अर्थान्तरसंक्रान्तावित्यर्थः । तदेवाह—**यदा तदिति** । बहुवचनान्तम्[8]—गोत्रप्रत्ययान्तमित्यर्थः ॥ **यूनि यदेति** । तस्य च यदा लुगित्यपि बोध्यम् ॥ ननु[9] द्व्येकेषामिति युक्तमत आह—**द्वित्वेति** । अर्थान्तर[10]संक्रान्तस्य द्वित्वैकत्वयोः सतोरित्यर्थः ॥ तत्फलितमाह—**द्वयोरिति** ॥ भाष्ये—**वर्णाश्रये नास्तीति** । प्रत्ययलक्षणसूत्रस्य प्रत्ययस्यासाधारणं रूपं यत्राश्रीयते तदेव कार्यं प्रत्ययलोपे भवतीति नियमार्थत्वे—इदम्[11] । एतेन वर्णप्राधान्याभावादिदं चिन्त्यमित्यपास्तम् ॥

( ५२४९ पूर्वपक्षवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ॥ * ॥

**( भाष्यम् ) एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः । बैदस्यापत्यं बहवो माणवका बिदाः, बैदयो[12]र्बिदाः ।**

---

१ अपवादत्वादलुक्शास्त्रस्य बलवत्त्वेऽपि, अलुक्शास्त्रनिमित्तस्याजादिप्रत्ययस्य बलवत्त्वे प्रमाणमाह—पूर्वं ह्यपवादेति ॥

२ विप्रतिषेधमन्तरेणापि=विप्रतिषेधाभावेऽपि लुगपवादोऽलुग्भवति, अलुङ्निमित्तभूतो योऽजादिप्रत्ययः सोऽपि बलवत्त्वात्प्रवर्तेत इति भावः ॥

३ द्वितीये इति । प्रकल्प्य चापवादमिति पक्षे इत्यर्थः ॥

४ 'अयञ्च लक्ष्यै' इति घ. ङ. पाठः ॥ अयमिति । प्रकल्प्य चापवादविषयमिति न्याय इत्यर्थः ॥

५ बहिरङ्गमन्तरङ्गाद्विप्रतिषेधादयुक्तं स्यात् । पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः । प्रकल्प्य चापवादविषयन्तत उत्सर्गोऽभिनिविशते । इति प्रकारत्रयमित्यर्थः । अचीति परसप्तम्याश्रयणे तु लुगलुकोः समानकालिकत्वाभावेन 'भूम्नीति च लुक् प्राप्तः' इत्यादिनाऽन्तरङ्गत्ववर्णनं न युज्येत । विषयसप्तमीपक्षे तु तद्युज्येतेत्याशयः ॥

६ 'यदा अर्थान्तरे' इति क. पाठः ।

७ भाष्यस्थ 'गोत्रस्य बहुषु' इत्यस्यार्थमाह—भाष्ये बहुष्विति । बहुत्वे यस्य लुग्भवति, एतादृशो यो गोत्रप्रत्ययस्तदन्तस्य बहुवचनान्तस्यार्थान्तरसंक्रान्तावित्यर्थः ॥

८ भाष्यस्थ यदा तदित्यत्रत्य तत्पदार्थमाह—बहुवचनान्तमिति ॥

९ ननु भाष्यकृता द्व्येकयोरित्युक्तम् । तत्र द्वित्वविशिष्टस्यैकत्वविशिष्टस्य च मेलनेन बहुत्वाद्द्व्येकशब्दाद्बहुवचनमेव युज्येत, अत आह—ननु द्व्येकेषामिति । द्वित्वैकत्वयोरित्युच्यमाने धर्मद्वयस्यैव सम्भवेन द्विवचनमेवात्र न्याय्यमिति भावः ॥

१० द्वित्वैकत्वविशिष्टार्थान्तरे संक्रान्तस्य गोत्रप्रत्ययान्तस्य द्वित्वैकत्वयोः सतोरित्यर्थः ॥

११ वस्तुतस्तु नैतत्सिद्धान्तिनो मतम् । अत एवाग्रे भगवता यदि वा कानिचिद्वर्णाश्रयाण्यपीत्याद्युक्त्वा न्यासान्तरमुक्तम् । एवञ्च वर्णप्राधान्याभावेऽपि—इयं परिभाषा यत्र सूत्रस्य नियमार्थत्वेन प्रत्ययलक्षणं नास्ति तत्र प्रवर्तेत इत्यादि कथनन्तदभिप्रायेणैवेति ॥

१२ 'बैदयोर्वा बिदाः' इति च. छ. ज. पुस्तकेषु ।

अञ्यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुङ्न प्राप्नोति ।

मा भूदेवम्—अञ्यो बहुषु यञ्यो बहुष्विति ।

अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति ॥

नैवं शक्यम् ।

इह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपा इति ॥

(प्रदीपः) अञन्तमिति । इञि लुप्ते युवसु बहुष्वञन्तस्य वर्तनाल्लुग्भविष्यतीत्यर्थः ॥ काश्यपा इति । काश्यपस्यापत्यं बिदादित्वादञ् । तत एकस्यैव काश्यपस्य बह्व्यः प्रतिकृतयो यदा विवक्षिता भवन्ति तदा 'इवे प्रतिकृतौ' इति कन्प्रत्ययस्तस्य देवपथादित्वाल्लुप् । 'हरीतक्यादिषु व्यक्तिः' इति वचनाल्लिङ्गमेव युक्तवद्भावेन भवति । वचनं त्वभिधेयगतमेव । यद्वैकशेषः क्रियते, तदाऽञन्तस्य प्रतिकृतिबहुत्वे वर्तमानाल्लुक्प्रसङ्गः ॥

( उद्द्योतः ) हरीतक्यादित्वाभावेऽपि बहुवचनं साधयति—यद्वैकशेष इति ।

( सिद्धान्तभाष्यम् )

नैष दोषः ।

यत्तावदुच्यते—'गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुग्वक्तव्यः' इति ।

न वक्तव्यः ।

अचीत्येवालुक् सिद्धः ।

अचीत्युच्यते, न चात्राजादिं पश्यामः ।

प्रत्ययलक्षणेन ॥

ननु चोक्तं वर्णाश्रये नास्ति प्रत्ययलक्षणमिति ।

यदि वा[3] कानिचिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणेन भवन्ति, तथा चेदमपि भविष्यति ॥

अथ वाऽविशेषेणालुकमुक्त्वा हलि नेति वक्ष्यामि ।

यद्यविशेषेणालुकमुक्त्वा हलि नेत्युच्यते, बिदानामपत्यं बहवो माणवका बिदाः—अत्राप्यलुक् प्राप्नोति ।

अस्तु ।

पुनरस्य युवबहुत्वे वर्तमानस्य लुग्भविष्यति ।

पुनरलुक्कस्मान्न भवति ?

समर्थानां प्रथमस्य गोत्रप्रत्ययान्तस्यालुगुच्यते, न चैतत्समर्थानां प्रथमं गोत्रप्रत्ययान्तम् ।

किं तर्हि ?

द्वितीयमर्थमुपसंक्रान्तम् ।

अवश्यं चैतदेवं विज्ञेयम्—अत्रिभरद्वाजिका, वसिष्ठकश्यपिका, भृग्वङ्गिरसिका, कुत्सकुशिकिका—इत्येवमर्थम् ॥

( प्रदीपः ) यदि वेति । यथैवेत्यर्थः । अतृणेड् इत्यत्र हलादौ पिति सार्वधातुके विधीयमानः 'तृणह इम्' इतीमागमो लुप्तेऽपि सार्वधातुके भवति । तत्र हि हलीत्यनेन सार्वधातुकं विशेष्यते । ततश्च हलादिसार्वधातुकाश्रयत्वादिमागमः प्रत्ययलक्षण इति लुप्तेऽपि प्रत्यये प्रवर्तते । गवे हितं गोहितमित्यादौ त्ववादयोऽज्मात्रे विधीयमाना वर्णरूपतानिमित्ता एव न तु प्रत्ययत्वनिमित्ता इति प्रत्ययलक्षणाभावाल्लोपे न प्रवर्तन्ते । इहाप्यजादौ प्रत्यये लुगुच्यमानः प्रत्ययलक्षणो भवतीति लुप्तेऽपि प्रत्यये प्रवर्तेत इति भावः ॥

अविशेषेणेति । प्राग्दीव्यतीयोऽर्थ एवापेक्ष्यते, न त्वजादिः प्रत्ययविशेष इत्यर्थः ॥ हलि नेति । गर्गेभ्य आगतं गर्गरूप्यम्, गर्गमयमिति हलादावलुङ्न भवति ॥ बिदानामपत्यमिति । अत्रापि प्राग्दीव्यतीयार्थस्य विवक्षितत्वादलुक् प्राप्नोतीत्यर्थः ॥

युवबहुत्व इति । लुग्विधौ गोत्रप्रत्ययमात्रं गृह्यत इति युवबहुत्वेऽपि लुक् प्रवर्तेत इति भावः ॥

प्रथमस्येति । 'प्रथमात्' इत्यनुवृत्तमिहार्थवशात् षष्ठ्यन्तं संपद्यते । प्रथमार्थवृत्तित्वाच्च प्राथम्यम्, गोत्रप्रत्ययस्य द्वितीयार्थवृत्तित्वे त्वलुगभावः ॥

अत्रिभरद्वाजिकेति । अत्रेरपत्यानि बहूनि 'इतश्चानिञः' इति ढक् । तदन्ताद्युवबहुत्वे 'अत इञ्' । तस्य 'ण्यक्षत्रियार्ष' इति लुक् । 'अत्रिभृगु' इति ढको लुक् । भरद्वाजशब्दाद्बिदाद्यञ् । ततो यूनीञ् । पूर्ववल्लुक् । अञोऽपि युवबहुत्वे लुगिष्यते। अनेन प्रथमस्योच्यमानः—अत्रिभरद्वाजानां मैथुनिका—इति प्राग्दीव्यतीयार्थविवक्षायामलुग्न भवति ॥ वसिष्ठकश्यपिकेति । वसिष्ठादृष्यण् । यूनीञो लुक् । अणोऽप्यत्र्यादिसूत्रेण लुक् । कश्यपाद्बिदाद्यञ् । यूनीञो लुक् । अञः 'यञञोश्च' इति लुक् । पूर्ववद्वुन् । भृगोः—ऋष्यण् । यूनीञो लुक् । अणः 'अत्रिभृगु' इति लुक् । एवमङ्गिरसः । कुत्सात्—

---

१ यद्यपि प्रायो वार्तिकोक्तगणानामाकृतिगणत्वेन काश्यपशब्दस्य हरीतक्यादिगणपाठकल्पने न कोऽपि दोषस्तथापि हरीतक्यादिषु व्यक्तिरित्यनेन लिङ्गस्येव वचनस्यापि व्यक्तिः स्यात्तथा च काश्यपशब्दाद्बहुवचनं न स्यात्, केवललिङ्गस्यैव युक्तवद्भावकरणे, वचनस्य च युक्तवद्भावाकरणे प्रमाणाभावादित्यत आह—यद्वैकशेष इति ॥

२ आकृतिगणत्वकल्पनेन हरीतक्यादिगणे काश्यपशब्दस्य पाठकल्पनान्त्यगतिकगतिरिति भावः ॥

३ 'यदि वा कानिचिद्वर्णाश्रयाण्यपि प्रत्ययलक्षणे न भवन्ति तथेदमपि न भविष्यति' इति क. पुस्तके पाठो दृश्यते, सामान्यतो विचार्यमाणे नास्य पाठस्य सङ्गतिमवलोकयामः ॥

ऋष्यण्, तस्माद्यूनि 'अणो द्व्यचः' इति फिञा भाव्यम्, न त्विञेति युवविवक्षा न क्रियते । कुशिकादिदायञ् । यूनीञो लुक् । अञोऽपि लुक् । वुन् ॥

**( उद्योतः )** अनन्वयादाह—**यथैवेति** । विधिपक्षाभिप्रायेणेदम् । वर्णाश्रय इति तु वर्णप्राधान्यविषयकमिति भावः । विषयसप्तमीपक्षेऽपि प्रत्ययलक्षणेन तद्विषयताप्रयुक्तस्यातिदेशो भवत्येव । 'न लुमता' इति निषेधस्तु न, अङ्गसंज्ञकोद्देश्यकत्वाभावादिति भावः ॥

नन्वविशेषेणालुग्वचने गर्गा इत्यादावप्यापत्तिः, प्राग्दीव्यतीये परे इत्यर्थे प्रत्ययलक्षणशास्त्रस्य नियमार्थतया बैद इत्यादावप्यनापत्तिरत आह—**प्राग्दीव्यतीय इति** । प्राग्दीव्यतीयार्थे विवक्षिते इत्यर्थ इति भावः ॥ **हलादावलुगेति** । अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेरिति भावः ॥ भाष्ये—**यद्यविशेषेणेति** । प्रत्ययलक्षणसूत्रे विधिपक्षस्याप्युपलक्षणमिदम् ॥ **अस्त्विति** । युवार्थविवक्षायां गोत्रबहुत्वार्थकस्यालुक्यपि युवबहुत्वे वर्तमानस्य लुगिति भावः ॥ **पुनरलुगिति** । गोत्रातिरिक्तप्राग्दीव्यतीयार्थविषयस्य सत्त्वादिति भावः । लुग्विधौ बहुत्वं गोत्रार्थगतम्, अन्यार्थगतं वेति नाग्रह इति तात्पर्यम् ॥

ननु गोत्रबहुत्वे विधीयमानो 'यञञोश्च' इति लुक् कथं युवबहुत्वे ? अत आह—**लुग्विधाविति** ॥ **गोत्रप्रत्ययमात्रमिति** । गोत्र इत्यस्य लुगाक्षिप्तप्रत्ययेनैवान्वयाद्गोत्रेऽञो लुग्भवति, तदन्तं चेद्बहुत्वे इत्यर्थ इति भावः । अन्यथा 'शिष्यमाणम्' इति न्यायेनाञन्तस्य युवबहुत्वे वृत्तिर्नाञ इति न लुकः प्राप्तिः स्यादिति बोध्यम् ॥

**प्रथमार्थेति** । न तु प्रथमोत्पन्नत्वात्, तेन यत्रार्थे प्रत्यय उत्पन्नस्तत्रार्थे वर्तमानस्यैवालुगिति भावः ॥

**लुगिष्यत इति** । स तु प्रथमस्येत्यनुच्यमानेऽलुका बाधान्न प्राप्नोति, प्रथमस्येत्युक्तौ तु नालुकः प्राप्तिः ॥ तदाह—**अनेनेति** । एतत्प्रयोगसिध्यर्थमेव लुक् द्वितीयमर्थमुपसंक्रान्तस्यापि । तत्र प्रथमस्येत्यस्याभावात् ॥ **पूर्ववद्वुनिति** । वसिष्ठकश्यपानां मैथुनिकेति 'द्वन्द्वाद्वुन्वैरमैथुनिकयोः' इति वुनिति भावः ॥

( ५२५० सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ गर्गभार्गविकाग्रहणं वा नियमार्थम् ॥ * ॥

**( भाष्यम् ) अथ वा गर्गभार्गविकाग्रहणं नियमार्थं भविष्यति ।**

**एतस्यैव गोत्रप्रत्ययान्तस्य द्वितीयमर्थमुपसंक्रान्तस्यालुग्भवति, नान्यस्येति ॥**

( सिद्धान्तभाष्यम् )

**यदप्युच्यते—एकवचनद्विवचनान्तस्य च प्रवृत्तौ बहुषु लोपो यूनि वक्तव्यः, अञ्यो बहुषु यञ्यो बहुष्वित्युच्यमानो लुङ् न प्राप्नोतीति ।**

**मा भूदेवम्—अञ्यो बहुषु यञ्यो बहुष्विति, अञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवं भविष्यति ।**

**ननु चोक्तं नैवं शक्यमिह हि दोषः स्यात्—काश्यपप्रतिकृतयः काश्यपा इति ।**

**नैष दोषः ।**

**लौकिकस्य तत्र गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम् ॥**

**यद्यञन्तं यद्बहुषु यञन्तं यद्बहुष्वित्येवमुच्यते, बिदानामपत्यं माणवको बैदः, बैदौ—अत्रापि प्राप्नोति ॥**

**अलुगत्र लुकं बाधिष्यते । अलुकि च कृते पुनर्लुको निमित्तं नास्तीति कृत्वा पुनर्लुङ्न भविष्यति ॥**

( प्रदीपः ) **गर्गात्**—यञो लुक् । **भृगोः**—ऋष्यण् । यूनीञो लुक् । अणः 'अत्रिभृगु' इति लुक् प्राप्तः 'न गोपवनादिभ्यः' इति प्रतिषिध्यते । स एष प्रतिषेधो नियमार्थं इति बिदा इत्यत्र युवलक्षणेऽर्थेऽलुङ् भवतीत्यर्थः ॥ **लोपो यूनीति** । लोपग्रहणेन लुग् लक्ष्यते । लोपे हि प्रत्ययलक्षणेन [12]वृद्धिस्वरप्रसङ्गः ॥

---

१ पूर्वोक्ते यदि वा लुकः प्रसङ्गेऽलुग्भवतीत्यत्र यदि वा शब्दस्य 'अथवा' अर्थकत्वन्तथाऽत्र न, अथवाऽर्थस्यानन्वयात्, तदाह—अनन्वयादिति ॥

२ ननु वार्तिककृता प्रत्ययलक्षणसूत्रस्य विध्यर्थत्वमेवोक्तम्, न तु नियामकत्वम् । तथा च वर्णाश्रयेऽपि प्रत्ययलक्षणं स्यादिति 'गोत्रस्य बहुषुलोपिनः' इत्येतद्यर्थमेवेत्याशयमाह—विधिपक्षाभिप्रायेणेति ॥

३ वर्णप्राधान्यञ्च वर्णस्येतराविशेषणत्वम्, प्रत्ययनिरूपितविशेष्यतारूपञ्चेति स्पष्टम्परिभाषेन्दुशेखरे । वर्णस्येतराविशेषणत्वञ्च—वर्णावयविप्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वम् । यथा गोहितमित्यादाववादेशाभावः । अत्र हि—एचोऽयवायाव इत्यनेनाजव्यवहितपूर्वत्वविशिष्टस्यैच आदेशविधानेनाचो वर्णावयविप्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वस्य सत्वेन वर्णप्राधान्यमिति नात्रावादेशः ॥ प्रत्ययनिरूपितविशेष्यतारूपत्वञ्च—वर्णावयविनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वम्, तथा च 'चित्रा' इत्यादौ ङीप् न । टिड्ढाणञित्यस्याणो योऽकार इत्यर्थस्य सत्वात् ॥

४ गोत्रेऽलुगचीत्यत्र विषयसप्तमीति भावः ॥

५ प्रत्ययलक्षणशास्त्रस्य नियमार्थत्वपक्षः सिद्धान्त इत्यनेन द्योतितम् ॥

६ यत्र प्रत्ययस्यासाधारणं रूपमाश्रीयते तत्रैव प्रत्ययलक्षणमिति नियमात् प्राग्दीव्यतीये पर इत्युक्तौ प्रत्ययासाधारणरूपानाश्रयणात्प्रत्ययलक्षणाभावेन बैद इत्यादावप्यनापत्तिरिति भावः ॥

७ न त्वत्र प्रत्ययो निमित्तमिति नैतत्प्रत्ययलक्षणं कार्यमिति नात्र प्रत्ययलक्षणमिति भावः ॥

८ 'गोत्रेऽलुक्, हलि न' इति न्यासे हलि नेत्यस्य पूर्वसूत्रापवादत्वेन तद्विषयपरिहारेण पूर्वसूत्रस्य प्रवृत्तिरिति भावः । निषेधशास्त्रस्य वाक्यार्थात्प्राक् विधिशास्त्रस्य वाक्यार्थ एव नेति तदतिरिक्तत्वम्पूर्वशास्त्रस्येति न—इति बोधयितुमाह—अपवादेति ॥

९ ङ. पुस्तके 'बहुत्वे इति भावः' इति पाठः ॥

१० 'हणं कर्तव्यम्, तन्निय' इत्येवम्पाठः—च. पुस्तके । झ. पुस्तके च क्काचित्कमेतदिति निर्दिष्टम् ॥

११ 'गोत्रप्रत्ययान्तस्य' इति पदं छ. पुस्तके न दृश्यते ॥

१२ एकवचनद्विवचनान्तस्येति वार्तिकेन लोपे विधीयमाने बिदशब्दादञो लोपे प्रत्ययलक्षणेन ञित्वादादिवृद्धिः 'ञ्नित्यादिः' इति सूत्रेणाद्युदात्तत्वञ्च प्रसज्येतेत्यर्थः ॥

**लौकिकस्येति** । अपत्यस्येत्यर्थः । काश्यपाः—इत्यन्तं तु प्रतिकृतिबहुत्वे वर्तते नापत्यस्य बहुत्वे ॥ **निमित्तं नास्तीति** । बहुत्वं नास्ति, द्वित्वैकत्वविषयत्वादित्यर्थः ॥

( **उद्योतः** ) नियमार्थत्वमुपपादयति—**गर्गादिति** । अन्यथाऽनेनैवालुकि सिद्धे गर्गभार्गविकाशब्दस्य गोपवनादिषु पाठो व्यर्थः स्यादिति भावः ॥ भाष्ये—**अञन्तमिति** । एवञ्च 'यञञोश्च' इत्यनेनैव सिद्धिरिति भावः ॥ तत्र शङ्कते—**ननु चेत्यादि काश्यपा** इत्यन्तेन ॥

**अपत्यस्येति** । प्रवराध्यायप्रसिद्धापत्यस्येत्यर्थः 'स्त्रीपुंसाभ्याम्' इति सूत्रे स्वयमेव तथोक्तेः ॥ भाष्ये—**बैदाः, बैदावत्रापि प्राप्नोतीति** । अञन्तस्य गोत्रयुवसमुदायगतबहुत्वे वर्तनात् । अञ्यो बहुष्वित्यर्थे तु न दोषः, तत्समुदायगतबहुत्वेऽञोऽवर्तनादित्यभिमानः ॥ उत्तरं तु—गोत्रबहुत्वे प्राप्तस्यालुका बाधः, यूनस्तु बहुत्वमेव न । उभयसमुदायस्तु न समकक्षतया शब्दवाच्य इति ॥ **बहुत्वं नास्तीति** । युवबहुत्वं नास्तीत्यर्थः ॥

( ५२५१ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) **किमुक्तम्?**

**'आपत्यं वा गोत्रम्', 'परमप्रकृतेश्चापत्यः', 'आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः' 'स चास्त्रियाम्' 'एको गोत्रग्रहणानर्थक्यं' च, 'बहुवचनलोपिषु च सिद्धम्' इति ।**

**तत्र विदानामपत्यं माणवक इति विगृह्य विदशब्दाद्व्येकयोरुत्पत्तिर्भविष्यति—बैदः, बैदौ ।**

**बैदस्यापत्यं बहवो माणवक इति विगृह्य बिदशब्दाद्बहुषूत्पत्तिर्भविष्यति—बिदा इति, अविरविकन्यायेन ॥**

( प्रदीपः ) **आपत्यं वेति** । अपत्यस्येदमापत्यम्, पौत्रप्रभृत्यपत्यमित्यर्थः, तद् गोत्रसंज्ञं भवति ॥ **परमप्रकृतेरिति** । गर्गादेरेवापत्यप्रत्ययः कार्यो न त्वनन्तरगोत्रयुवभ्य इत्यर्थः ॥ **आपत्यादिति** । गर्गादेर्यदा पौत्रप्रभृतेरपत्ये चतुर्थादौ जीवद्वंश्ये प्रत्ययः क्रियते तदा स्वार्थे द्वितीयः 'यञिञोश्च' इत्यादिना फगादिः क्रियते, गार्ग्यायण इति ॥ **स चेति** । स्त्रियां द्वितीयप्रत्ययाभावाद् गार्गीत्येव भवति ॥ **एक इति** । 'परमप्रकृतेश्चापत्यः' इत्यनेन तदर्थस्य लाभात् ॥ **बहुवचनलोपिष्विति** । युवबहुत्वे बिदा इत्यादि सिद्धम् । द्वित्वैकत्वयोस्तु बैदः, बैदावित्यादीत्यर्थः ॥ **तत्र बिदानामिति** । 'गोत्रस्य बहुषु लोपिनः' इति वार्तिकप्रयोजनमन्यथा साधयति । परमप्रकृतेरेव यूनि प्रत्ययः । आपत्याज्जीवद्वंश्यादित्यनेन स्वार्थिको द्वितीयः 'ण्यक्षत्रियार्षञितः' इति लुप्यते ॥

**अविरविकन्यायेनेति** । केचिदाहुरग्रन्थोऽयमिति, 'परमप्रकृतेश्चापत्यः' इति वाचनिकत्वादस्यार्थस्य । अन्ये तु वचनस्यैवाव्यविकन्यायमूलत्वप्रतिपादनायैतदुक्तमित्याहुः ॥

( **उद्योतः** ) अन्यत्र स्वयम्पठितवार्तिकैरत्रत्ये वार्तिके प्रत्याचष्टे तेषामावश्यकत्वाभिप्रायेण—**उक्तं वेति** ॥ **अपत्यस्येदमिति** । 'तस्येदम्[3]' इत्यादिवार्तिकविरुद्धमेतत् । शिवादिपाठादणिति युक्तम् ॥ **आपत्याज्जीवद्वंश्यादिति** । जीवद्वंश्यच्चतुर्थादिबोधकाद्गोत्रप्रत्ययान्तात्स्वार्थे द्वितीयः फगादिर्भवति स युवसंज्ञक इत्यर्थः ।

परे तु अपत्यापत्यार्थकस्य आपत्यशब्दस्य तदर्थकप्रत्ययपरता, 'परमप्रकृतेश्च' इति वार्तिके 'आपत्यात्' इत्यत्र च तस्य तत्परत्वावश्यकत्वात् । एवं च—प्रत्ययस्यैव गोत्रसंज्ञा, युवसंज्ञावत् । **कैयटोक्तव्याख्याने** वार्तिकस्य सूत्रसमानार्थकतया 'आपत्यं वा' इति वाशब्दासंगतिः, उद्देश्यानन्तरेण 'वा' शब्देन तद्विकल्पबोधनात् । न्यासविकल्पे तु—'आपत्यं गोत्रमिति वा' इति वदेत् । स चापत्यापत्यबोधकः प्रत्ययः परमप्रकृतेरेव भवति । एवं च—गोत्रत्वयुवत्वादिना बोधविषयताशङ्काऽपि न । 'आपत्यो वा गोत्रम्' इति वार्तिकपाठः 'जीवति' इति सूत्रे भाष्ये क्वचित्पुस्तके दृश्यते, स युक्ततरः; अपत्यान्तानां स्त्रीपुंसयोरेव वृत्तेः, 'गोत्रे[4] लुगचि' इत्यादौ 'यूनि लुक्' इत्यादौ च षष्ठ्यर्थे सप्तमीत्याहुः ॥ **वार्तिकप्रयोजनमिति** । वार्तिकद्वयप्रयोजनमित्यर्थः ॥ **अन्यथेति** । वार्तिककारो वचनं विनैव प्रकारान्तरेण साधयतीत्यर्थः ॥ **यूनि**=युवबहुत्वे, तद्द्वित्वैकत्वयोश्चेत्यर्थः ॥

**वाचनिकत्वादिति** । तत्त्वे न्याय[5]सिद्धत्वकथनमयुक्तमित्यर्थः ॥

---

( ६६२ लुग्विधिसूत्रम् ॥ ४ । १ । २ आ. ४७ ॥ )

## १३३६ यूनि लुक् ॥ ४ । १ । ९० ॥

( लुगधिकरणम् )

( ५२५२ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टं प्राप्नोति । अनिष्टे प्रत्ययेऽवस्थिते लुक् । अनिष्टस्य प्रत्ययस्य श्रवणं प्रसज्येत ॥**

( प्रदीपः ) **यूनि लुगचीति चेदिति** । अस्मिन् सूत्रन्यासे दोषः, न तु न्यासान्तर इत्यर्थः ॥

( **उद्योतः** ) **न्यासान्तरे इति** । 'यूनि लुक्, न हलि' इति न्यासे इत्यर्थः ॥

---

१ एभिरन्यत्रोक्तैर्वार्तिकैरत्रोक्तयोर्वार्तिकयोः प्रत्याख्यानमित्याशयः ॥

२ सर्वेषां वार्तिकानाङ्क्रमेणार्थमाह—अपत्यस्येदमित्यादिना ॥

३ अपत्यस्यापत्यमित्यर्थे शिवादिपाठादण् युक्तः, न तु तत्र तस्येदमित्यनेनाण् । तस्यापत्यमित्यस्य तद्बाधकत्वात् ॥

४ नन्वापत्यं वा गोत्रमित्यत्रत्यापत्यशब्दस्यापत्यार्थकप्रत्ययपरकत्वे गोत्रशब्देनापत्यमत्र एव गृह्येत, ततश्च गोत्रेऽलुगचीत्यादौ सप्तम्या अनुपपत्तिरत आह—गोत्रेऽलुगचीत्यादाविति ॥

५ पूर्वोक्तार्थस्य वाचनिकत्वे, अविरविकन्यायेनेति न्यायशब्दकथनमयुक्तं स्यात्, वाचनिकत्वे न्यायासम्भवादित्याशयः ॥

( ५२५३ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं त्वविशेषेण लुग्वचनं हलि च[1] प्रतिषेधः ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

अविशेषेण लुकमुक्त्वा हलि नेति वक्ष्यामि ।

सिध्यति ।

सूत्रं तर्हि भिद्यते ॥

( वार्तिकान्यथासिद्धिकरणभाष्यम् )

यथान्यासमेवास्तु ।

ननु चोक्तम्—'यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्गः' इति ।

नैष दोषः ।

अचीति नैषा परसप्तमी ।

का तर्हि ?

विषयसप्तमी—अजादौ विषय इति । तत्राचि विषये लुकि कृते यो यतः प्रत्ययः प्राप्नोति स ततो भविष्यति ॥

( प्रयोजनावतरणभाष्यम् )

कानि पुनरस्य योगस्य प्रयोजनानि ?

( ५२५४ प्रयोजनवार्तिकम् ॥ ३ ॥ )

॥ * ॥ प्रयोजनं सौवीरगोत्रेभ्यो णठक्छाः ॥ * ॥

( भाष्यम् ) ण, फाण्टाहृतेरपत्यं माणवकः—फाण्टाहृतः, फाण्टाहृतस्य यूनश्छात्राः—फाण्टाहृताः । ण ॥

ठक्, भागवित्तेरपत्यं माणवको भागवित्तिकः । भागवित्तिकस्य यूनश्छात्राः—भागवित्ताः । ठक् ॥

छ, तैकायनेरपत्यं माणवकस्तैकायनीयः । तैकायनीयस्य यूनश्छात्राः—तैकायनीयाः ॥

( प्रदीपः ) फाण्टाहृतस्यापत्यमिति 'अत इञ्' । तस्यापत्यं युवा 'फाण्टाहृतिमिमताभ्याम्' इति णः । तस्य छात्रा इति प्राग्दीव्यतीयार्थविवक्षायाम् 'इञश्च' इत्यणिष्यते । स च न प्राप्नोति, णान्तत्वात् । ततश्च वृद्धलक्षण एव छे परतो णस्य लुक् स्यादिति छस्य श्रवणप्रसङ्ग इत्यर्थः ॥

भागवित्तेरिति । भागवित्तस्यापत्यमिति 'अत इञ्' । ततो यूनि 'वृद्धाट्ठक् सौवीरेषु बहुलम्' इति ठक् । तस्य छात्रा इत्यर्थे ठको लुकि 'इञश्च' इत्यण् ॥

तैकायनेरिति । तिकस्यापत्यमिति 'तिकादिभ्यः फिञ्' । ततो यूनि 'फेश्छ च' इति च्छः ।

यमुन्दश्च सुयामा च वार्ष्यायणिः फिञः स्मृताः ।

इति परिगणनं भाष्यकारेण 'फेश्छ च' इत्यत्र नाश्रितमिति तैकायनेश्छो भवति । परिगणनाश्रये तु प्राप्नोति । तस्य छात्रा इति च्छे लुप्ते वृद्धलक्षणश्छः ॥

( उद्द्योतः ) अनिष्टप्रत्ययश्रवणमुदाहरणे दर्शयति—फाण्टाहृतेति ॥ अविशेषेणेति—भाष्ये । 'अचि' इत्ययं विशेषो नापेक्ष्यत इत्यर्थः ॥

फेश्छ चेति । तैकायनिः सौवीरगोत्र इति भावः । असौवीरगोत्रोऽप्ययम्[2] । अतएव 'फेश्छ च' इति सूत्रे—सौवीरेति किम् ? तैकायनिः—इति वृत्त्यादिग्रन्थाः संगच्छन्ते ॥ परिगणनाश्रये त्विति । एवं च परिगणनं चिन्त्यमिति भावः ॥ छे लुप्ते इति । यद्यपि तदलुक्यपि छः प्राप्नोति तथापि तैकायनीयीय इति प्राप्नोतीति भावः ॥

( ५२५५ प्रयोजनवार्तिकम् ॥ ४ ॥ )

॥ * ॥ इञण्यौ सर्वत्र ॥ * ॥

( भाष्यम् ) इञण्यौ सर्वत्र प्रयोजनम् । औपगवेर्यूनश्छात्राः—औपगवीयाः । वृद्धवदतिदेशे[3] सति इञो गोत्र इत्यण् प्राप्नोति ॥

नैष दोषः ।

प्रत्याख्यायतेऽसावतिदेशः ।

कथं यानि प्रयोजनानि ?

तानि ज्ञापकेन सिद्धानि ॥

( प्रदीपः ) औपगवेरिति । उपगोरपत्यमित्यण्[4], ततो यूनीञ्, तस्मिन् लुप्ते छः ॥ किं पुनरिञो लुकः प्रयोजनम् ? यदा तस्मिन्नलुप्तेऽपि सिद्धश्छो वृद्धलक्षण इत्याह—वृद्धवदिति । वृद्धशब्दः पूर्वाचार्यसंज्ञा गोत्रस्य । तत्र यूनो वृद्धवदतिदेशादिञो लुक्यसत्यण् स्यात् ॥ कथं पुनर्यानीति । गार्ग्यायणानां समूह इत्यादौ गोत्रलक्षणो वुञिष्यते, स न प्राप्नोति ॥ ज्ञापकेनेति । 'राजन्याद्वुञ् मनुष्याच्च' इति वक्ष्यमाणेन । तदेवमिञो लुका विनाऽप्यौपगवीया इति च्छस्य सिद्धत्वादनुदाहरणमेतत् ॥

---

1 'हलि नेति प्रतिषेधः' इति क. ख. झ. ञ. पाठः ॥

2 तैकायनिशब्दो द्विविधः—सौवीरगोत्रः, असौवीरगोत्रश्चेति भावः ॥

3 प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः कर्तव्य इत्यनेनाग्रिमेण वार्तिकेन वृद्धवदतिदेशे 'इञश्च' ( ४।२।११२ ) इति सूत्रेण इञन्ताद्गोत्रार्थे अण्प्रत्ययः प्राप्नोतीत्यर्थः ॥

4 'उपगोरपत्येऽण्' इति क. पाठः । अपत्यार्थे 'प्राग्दीव्यतोऽण्' ( ४।१।८३ ) इत्यधिकृत अण् । ततः 'अत इञ्' ( ४।१।९५ ) इत्यनेन यूनीञ् । तस्येञ्प्रत्ययस्य 'यूनि लुक्' ( ४।१।९० ) इत्यनेन लुकि सति 'वृद्धाच्छः' ( ४।२।११४ ) इत्यनेन छः प्रत्ययः ॥

5 प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशस्य यानि प्रयोजनानि भाष्योक्तानि गार्ग्यायणानां समूहः, किञ्चित्, भक्तिरित्यादीनि, तानि तदतिदेशस्य प्रत्याख्याने कथं सिद्ध्यन्तीत्यर्थः ॥

(उद्द्योतः) भाष्ये—**सर्वत्रेति** । सौवीरगोत्रेभ्योऽसौवीरगोत्रेभ्यश्चेत्यर्थः ॥ **सिद्ध इति** । 'इञश्च' इत्यण् तु न प्राप्नोति, यूनि इञ उत्पन्नत्वेनागोत्रार्थत्वादिति भावः ॥ **इत्याहेति** । इत्यत आहेत्यर्थः ॥ **वक्ष्यमाणेनेति** । तेन[2] ह्यपत्याधिकारादन्यत्र लौकिकगोत्रग्रहणं ज्ञाप्यत इति भावः ॥ **लुका विनाऽपीति** । 'इञश्च' इत्यस्य तु न तेन ज्ञापकेन प्राप्तिः, तत्र शास्त्रीयगोत्रस्यैव ग्रहणादिति वक्ष्यत इति भावः ॥

(प्रयोजनान्तरभाष्यम्)

**यत्खच्छान्तात्तर्हि—इञः प्रयोजनम् ।**

**यत्—श्वशुरस्यापत्यं श्वशुर्यः, श्वशुर्यस्यापत्यं श्वाशुरिः । श्वाशुरेर्यूनश्छात्राः श्वाशुराः—यत् ॥**

**ख—कुलस्यापत्यं कुलीनः, कुलीनस्यापत्यं कौलीनिः, कौलीनेर्यूनश्छात्राः कौलीनाः—ख ॥**

**छ—स्वसुरपत्यं स्वस्रीयः, स्वस्रीयस्यापत्यं स्वास्रीयिः, स्वास्रीयेर्यूनः छात्राः स्वास्रीयाः ॥**

(प्रदीपः) इदानीमिञ उदाहरणान्तरं दर्शयितुमाह—**यत्खच्छान्तादिति** ॥ **श्वाशुरिरिति** । 'आपत्यस्य च तद्धितेनाति' इति यलोपः । उणादीनामव्युत्पन्नत्वाद् 'न य्वाभ्याम्' इति वृद्धिनिषेध ऐजागमश्च न प्रवर्तते ॥ **कुलीन इति** । 'कुलात्खः' ॥ **स्वस्रीय इति** । 'स्वसुश्छः' ॥

(उद्द्योतः) ननु आश्चर्यके शावुपपदे उरनि श्वशुरस्य सिद्धेः 'न य्वाभ्याम्' इत्यैच्प्राप्नोतीत्यत आह—उणादीनामिति ॥

(प्रयोजनाक्षेपभाष्यम्)

**एतान्यपि हि न सन्ति प्रयोजनानि । अत्रापि यूनि—श्वशुर्यः, कुलीनः, स्वस्रीय इत्येव भवितव्यम् । उक्तमेतत्—'अणिञोर्लुकि अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानम्' इति ।**

**अब्राह्मणगोत्रमात्रादित्युच्यते, न चैतदब्राह्मणगोत्रमात्रम् ।**

**अब्राह्मणगोत्रमात्रादिति नायं पर्युदासः—यदन्यद् ब्राह्मणगोत्रमात्रादिति ।**

**किं तर्हि—**

**प्रसज्य प्रतिषेधोऽयम्—ब्राह्मणगोत्रमात्रान्नेति ।**

**अवश्यं चैतदेवं विज्ञेयम् । मायूरिः, कापोतिः, कांपिञ्जलिरित्येवमर्थम् ॥**

(प्रदीपः) **एतान्यपीति** । लक्षणान्तरेण युवप्रत्ययस्य लुकः सिद्धत्वादित्यर्थः ॥ **न चैतदिति** । अब्राह्मणशब्देन ब्राह्मणसदृशक्षत्रियादिग्रहणात्, श्वशुरादिशब्दैश्च क्षत्रियादेरनभिधानादित्यर्थः ॥ **प्रसज्य प्रतिषेध इति** । युवप्रत्ययमात्रस्य लुकं विधाय ब्राह्मणगोत्रात्परस्य स निषिध्यत इत्यर्थः ॥ **मायूरिरिति** । मयूरस्य पक्षिविशेषस्य गोत्र इञ् । तदन्ताद्यूनि 'यञिञोश्च' इति फक् । तस्य लुक् ॥

(उद्द्योतः) **क्षत्रियादेरिति** । क्षत्रियादेरेवेत्यर्थः । अब्राह्मणगोत्रमात्रादित्यत्र मात्रपदमवधारणार्थकमिति भावः ॥ **ब्राह्मणगोत्रमात्रादन्यदिति**—भाष्ये—अन्यच्छब्देन क्षत्रियादिगोत्रमात्रग्रहणं बोध्यम् । ब्राह्मणगोत्रमात्रे निषेधे तु क्षत्रियादिमात्रगोत्रे, साधारणे च विधिरिति बोध्यम् ॥

(प्रयोजनभाष्यम्)

**एवं तर्हि—अण्ण्यौ सर्वत्र प्रयोजनम् ।**

**अण्—ग्लुचुकायनेरपत्यं माणवको ग्लौचुकायनः, ग्लौचुकायनस्य यूनश्छात्रा ग्लौचुकायनाः ।**

**ण्यश्च कापिञ्जलाद्यर्थम् । कापिञ्जलादेरपत्यं माणवकः कापिञ्जलाद्यः, कापिञ्जलाद्यस्य यूनश्छात्राः कापिञ्जलादाः ॥**

(प्रदीपः) **ग्लुचुकायनेरिति** । ग्लुचुकस्यापत्यं गोत्रमिति 'प्राचामवृद्धात् फिन् बहुलम्' इति फिन्, ततो यून्यण् । तस्य लुक्यणेव भवति । अन्यथा वृद्धत्वाच्छः स्यात् ॥ **कापिञ्जलादेरिति** । कपिञ्जलादस्यापत्यम् 'अत इञ्' । ततो यूनि 'कुर्वादिभ्यो ण्यः' इति ण्यः । तस्य लुकि 'इञश्च' इत्यण् भवति । अन्यथा छः स्यात् ॥

(५२५६ पूर्वपक्षवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः ॥ * ॥

(भाष्यम्) **प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः कर्तव्यः । युवा वृद्धवद्भवतीति वक्तव्यम् ।**

**किं प्रयोजनम् ?**

---

१ ननु इञन्ताच्छो न स्यात् 'इञश्च' इति सूत्रेण विहितस्याणः प्रतिपदोक्तत्वेन बाधकत्वादत आह—इञश्चेत्यण् तु नेति ॥

२ तेन=राजन्याद्वुञ् मनुष्याच्चेति वार्तिकेन ॥

३ ननु राजन्याद्वुञिति वार्तिकेन लौकिकगोत्रग्रहणं ज्ञाप्यते, तथा च औपगवीया इत्यत्र छस्य बाधक इञश्चेत्यण् स्यादत आह—इञश्चेत्यस्येति ॥

४ श्वशुरस्यापत्यमित्यर्थे 'राजश्वशुराद्यत्' (४।१।१३७) इति यत्प्रत्यये ततोऽपत्यार्थे 'अत इञ' इत्यनेनेञि तस्य 'यूनि लुक्' इत्यनेन लुकि 'प्राग्दीव्यतोऽण्' इत्यणि च 'श्वाशुराः' इति सिद्ध्यति ॥

५ कुलस्यापत्यमित्यर्थे 'कुलात्खः' (४।१।१३९) इत्यनेन खप्रत्यये तदन्तात् 'अत इञ्' इतीञ्, ततः 'यूनि लुक्' इत्यनेन लुकि च 'प्राग्दीव्यतोऽण्' इत्यणि 'कौलीनाः' इति ॥

६ 'स्वसुश्छः' इति छप्रत्ययान्तादिञि ततो यून्यणि लुकि च 'स्वास्रीयाः' इति पूर्ववत् ॥

७ 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः' इति सूत्रे वार्तिकमेतत् ॥

८ छ. पुस्तके 'प्रसज्यायमप्रतिषेधः' इति पाठः, च. झ. पुस्तके च 'प्रसज्य प्रतिषेधः' इत्येव पाठः ॥

९ एतानि त्रीण्यपि रूपाणि—इञन्तात्फको लुकि भवन्ति । प्रदीपे च स्पष्टीकृतानि ॥

**गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः । गोत्राश्रयो वुञ् यथा स्यात् ।**

**यदि वृद्धवदतिदेशः क्रियते—औपगवेर्यूनश्छात्रा औपगवीया इतीञो गोत्र इत्यण् प्राप्नोति ॥**

( प्रदीपः ) **प्राग्दीव्यत इति** । प्राग्दीव्यतो येऽर्थास्तेषु विवक्षितेष्वित्यर्थः ॥ **वृद्धवदिति** । गोत्रवदित्यर्थः । अन्यथा गोत्रसंज्ञाया युवसंज्ञया बाधितत्वाद् गोत्राश्रयकार्याप्रसङ्गः ॥ **गार्ग्यायणानामिति** । गर्गस्यापत्यं गोत्रम् 'गर्गादिभ्यो यञ्'। तदन्ताद्यूनि 'यञिञोश्च' इति फक्। तदन्तात्समूहे 'गोत्रोक्षोष्ट्रोरभ्र' इति वुञ्। इदमर्थे 'गोत्रचरणाद्वुञ्' इति वुञ्। सोऽस्य भक्तिरित्यत्रार्थे 'गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्' इति वुञ् ॥ **औपगवेरिति** । सत्यतिदेशे 'यूनि लुक्' इत्यस्य प्रत्याख्यानादिञो लुगभावाद्वृद्धवदतिदेशात् 'इञश्च' इत्यण्प्रसङ्गः ॥

( उद्द्योतः ) **बाधितत्वादिति** । 'जीवति तु' इति तुग्रहणादवधारणार्थादिति भावः ॥ नन्वत्रातिदेशेऽपि स्वाश्रययुवत्वमादायौपगवेरिञोलुकि 'इञश्च' इत्यत्र शकन्ध्वादिपररूपेणेकारप्रश्लेषादिकारेणेञो विशेषणादणोऽप्राप्तेराह—**सत्यतिदेश इति** ॥ **प्रत्याख्यानादिति** । इदं चिन्त्यम् । कार्यातिदेशे तत्प्रत्याख्यानासम्भवः, कापिञ्जलादासिद्धेः । अर्थातिदेशानुतपस्यतिदेशयोर्वक्ष्यमाणत्वेनेदानीं तदभावात् । तस्माल्लुक्यपि प्रत्ययलक्षणेनेञंतत्वादण्प्रसंग इति भाष्याशयः । इकारप्रश्लेषे तु न मानमिति तत्त्वम् ॥

( एकदेशिसमाधानभाष्यम् )

**यदि पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिरतिदिश्येत ।**

**कथं पुनर्युवा वृद्धवदित्यनेनानुत्पत्तिः शक्या निर्देष्टुम् ?**

**वतिनिर्देशोऽयम्, कामचारश्च वतिनिर्देशे वाक्यशेषं समर्थयितुम् । तद्यथा—उशीनरवन्मद्रेषु यवाः,**

**सन्ति—न सन्तीति,**

**मातृवदस्याः कलाः,**

**सन्ति—न सन्तीति ।**

**एवमिहापि युवा वृद्धवद्भवति, वृद्धवन्न भवतीति—एवं वाक्यशेषं समर्थयिष्यामहे । यथा—गोत्रे युवप्रत्ययो न भवति, एवं प्राग्दीव्यतोऽधिकारे यून्यपि न भवतीति ॥**

( प्रदीपः ) एतद्दोषपरिहारायाह—**यदि पुनरिति** । यथा गोत्रे युवप्रत्ययो नोत्पद्यते तथा यून्यपि प्राग्दीव्यतीयार्थविवक्षायां युवप्रत्ययस्यानुत्पादात् 'इञश्च' इत्यण् न भविष्यतीत्यर्थः ॥ **अतिदिश्येतेति** । अतोऽयं दोषो न स्यादिति वाक्यशेषः ॥

**एवं वाक्यशेषमिति** । उभयसंभवे 'न भवति' इत्यध्याहरिष्यत इत्यर्थः । **एवम्**—इत्यनेनानन्तरम्प्रक्रान्तः 'न भवति' इति वाक्यशेषः परामृश्यते ॥

( उद्द्योतः ) उभयथाऽतिदेशस्यानिष्टत्वादाह—**उभयसंभव इति** ॥

( समाधानाक्षेपभाष्यम् )

**तद्वक्तव्यम् ? यद्यप्येतदुच्यते ॥**

( प्रदीपः ) **तद्वक्तव्यमिति** । तर्तिश्च गौरवं स्यादिति भावः ॥

( एकदेशिसमाधानान्तरभाष्यम् )

**अथ वैतर्हि 'यूनि लुक्' इत्येतन्न क्रियते ।**

**कथं तर्हि—फक्फिञोरन्यतरस्याम् ( ४।१।९१ ) इति ?**

**फक्फिञ्वर्ती युवा वा वृद्धवद्भवतीति वक्ष्यामि ॥**

( प्रदीपः ) **अथ वै तर्हीति** । एवं सतीत्यर्थः । एतेन गौरवं परिहृतम् ॥ **कथमिति** । 'यूनि लुक्' इत्यस्मिन्नकृते 'फक्फिञोरन्यतरस्याम्' इत्येतदपि न कर्तव्यम्, विधेयकार्यानिर्देशात् । ततश्च गार्ग्यायणस्य छात्राः—गार्गीयाः, गार्ग्यायणीया इति रूपद्वयं न सिध्यतीति भावः ॥ **फक्फिञ्वर्तीति** । वर्तनं वर्तः, फक्फिञोर्वर्तः—फक्फिञ्वर्तः, स विद्यते

---

१ प्राग्दीव्यतीयाधिकारे वृद्धवदतिदेशस्योपयोगाभावेन लक्ष्ये च तस्यावश्यकत्वेन वार्तिकमसङ्गतं स्यादतस्तदर्थमाह—प्राग्दीव्यत इति ॥

२ गार्ग्यायणो भक्तिरित्यस्मिन्नर्थे इत्यर्थः ॥

३ नन्वासां गोत्रादिसंज्ञानामेकसंज्ञाऽधिकारे पाठाभावेन न तयोः परस्परस्बाध्यबाधकभावः स्यादित्यत आह—जीवतीति ॥

४ इञश्चेत्यत्रेकारप्रश्लेषेण—इकारान्तादिञन्तादित्यर्थः स्यात्, स्वाश्रययुवत्वमादायेञो लोपे प्रत्ययलक्षणेनेञन्तत्वेऽपि—इकारान्तत्वाभावेनाणः प्राप्तिर्नेत्यर्थः ॥

५ कार्यातिदेशे वृद्धवदतिदेशेन वृद्धवत्कार्यस्यातिदेशः, तत्र यदि स्वाश्रययुवत्वप्रयुक्तकार्यस्य प्राप्तिः स्यात्तदपि भविष्यतीति स्वाश्रययुवत्वप्रयुक्तं यूनि लुगित्येतत्प्रवर्तते, स्वाश्रयप्रयुक्तकार्यस्य प्रवृत्तिरतिदेशस्य स्वभावात् । कपिञ्जलादयश्च्दादिञि ततो यूनि फ्यप्रत्यये तस्य लुकीञश्चेति सूत्रेणाणि च कापिञ्जलादस्य सिद्धिः । यदि यूनि लुगित्येतत्प्रत्याख्यायेत तदा फ्यप्रत्ययस्यापहाराभावेनेञश्चेत्यण् नेति न तस्य सिद्धिः । अतो न यूनि लुगित्येतत्प्रत्याख्यायते ॥

६ 'स्यानुत्पादादिञभावादिञश्च' इति झ. पाठः ॥

७ युवा वृद्धवदित्यनेन—यथा गोत्रे युवप्रत्ययो न भवति, एवम्प्राग्दीव्यतोऽधिकारे यून्यपि न भवति, यथा गोत्रे प्रत्ययो भवति तथा प्राग्दीव्यतोऽधिकारे यून्यपि प्रत्ययो भवति । इत्येवमुभयथाऽतिदेशः ॥

८ यूनि लुगित्यस्य स्थाने युवा वृद्धवदिति न्यासेऽपि पदगौरवाभावान्न दुष्यते । तत्र न भवतीति वाक्यशेषकरणे च गौरवमिति भावः ॥

९ 'न भवति' इति वाक्यशेषाश्रयणस्य गौरवपराहतत्वादाह—अथ वै तर्हीति ॥

१० वृद्धवदतिदेशाश्रयणे न भवतीति वाक्यशेषाश्रयणरूपगौरवे सतीति भावः ॥

११ यूनि लुगित्यस्याकरणे फक्फिञोरन्यतरस्यामित्येतदपि न कर्तव्यं स्यात्, ततश्च प्राप्तामनुपपत्तिम्प्रदर्शयति—यूनि लुगित्यस्मिन्निति ॥

यस्मिन् यूनि स वा वृद्धवत्[1] । ततः पक्षे फक्फिञोरुत्पत्तिः, पक्षेऽनुत्पत्तिरिति द्वैरूप्यसिद्धिः ॥

( उद्द्योतः ) ननु स्वसाध्यफलसिद्धये 'फक्फिञोः' इत्येतत्सूत्रमावश्यकमत आह—**यूनि लुगिति** ॥ वर्तः=प्रवृत्तिः ॥

( समाधानाक्षेपभाष्यम् )

**यदा तर्हि न वृद्धवत्, तदा—**
**गार्ग्यायणानां समूहो गार्ग्यायणकम्,**
**गार्ग्यायणानां किंचिद् गार्ग्यायणकम्,**
**गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः,**
**गोत्राश्रयो वुञ् न प्राप्नोति ॥**

( प्रदीपः ) **यदा तर्हीति** । गार्ग्यायणानां समूह इति विवक्षायां यदा वृद्धवदतिदेशात् फकोऽनुत्पत्तिस्तदा गार्ग्यकमिति सिध्यति । यस्मिंस्तु पक्षे वृद्धवदतिदेशाभावात् फक्श्रवणं तत्र गोत्रलक्षणो वुञ्[2] न प्राप्नोति ॥

( उद्द्योतः ) भाष्ये—**यदा तर्हीति** । यदैवातिदेशस्तदैव फकोऽनुत्पत्तिरिति भावः ॥

( प्रकारान्तरेणैकदेशिसमाधानभाष्यम् )

**यदि पुनर्युवा वृद्धवदित्यनेनार्थोऽतिदिश्येत । प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदर्थो भवतीति ॥**

( प्रदीपः ) इदानीमर्थातिदेशनिदर्शनायाह—**यदि पुनरिति** ॥

( समाधानाक्षेपभाष्यम् )

**तद्वक्तव्यम् । यद्यप्येतदुच्यते ॥**

( एकदेशिसमाधानभाष्यम् )

**अथ वैतर्हि 'यूनि लुक्' इत्येतन्न करिष्यते ।**
**कथं फक्फिञोरन्यतरस्यामिति ?**
**फक्फिञ्वर्ती युवार्थो वा वृद्धवद्भवतीति वक्ष्यामि । यदा तर्हि न वृद्धवत्, तदा—**
**गार्ग्यायणानां समूहो गार्ग्यायणकम्,**
**गार्ग्यायणानां किंचिद् गार्ग्यायणकम्,**
**गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः,**
**गोत्राश्रयो वुञ् न प्राप्नोति ॥**

( प्रदीपः ) **यूनि लुगित्येतदिति** । यूनो गोत्रत्वातिदेशाद् युवप्रत्ययस्याभावाल्लुङ् विधेय इत्यर्थः ॥

( उद्द्योतः ) **गोत्रत्वातिदेशादिति** । तत्त्वातिदेशे च गोत्रे एक एवेति नियमेन युवप्रत्ययानुत्पत्तेर्लुङ् विधेयः, अतिदिश्यमान[3]धर्मविरुद्धस्वाश्रयाभावश्चातिदेशस्वभावसिद्ध इति भावः ॥

( सिद्धान्तभाष्यम् )

**एवं तर्हि—**

**राजन्याद् वुञ् मनुष्याच्च**
**ज्ञापकं लौकिकं परम् ॥**

**यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणं करोति तज्ज्ञापयत्याचार्यः—लौकिकं परं गोत्रग्रहणमिति । युवा च लोके गोत्रमित्युपचर्यते ।**
**किं गोत्रोऽसि माणवक ?**
**गार्ग्यायणः ।**
**किं गोत्रोऽसि माणवक ?**
**वात्स्यायनः ॥**

( प्रदीपः ) **यदयमिति** । [4]प्राग्गोत्रसंज्ञायाः 'गोत्रे कुञ्जादिभ्यः' इत्यतो गोत्रग्रहणानुवर्तनाच्छास्त्रीयगोत्राभिधायिनौ राजन्यमनुष्यशब्दौ, ततश्च गोत्रग्रहणेनैव ताभ्यां वुञः सिद्धत्वात् किं तयोर्ग्रहणेन । गृहीतौ तु ज्ञापयतः—गोत्रग्रहणं लौकिक[5]गोत्रपरमिति । राजन्यमनुष्यशब्दौ च लौकिके प्रयोगे जातिविशेषवाचित्वाल्लौकिकगोत्राभिधायिनौ न भवत इति कर्तव्यं तयोर्ग्रहणम् । लौकिकं च गोत्रमपत्यमात्रम् ॥ **परमिति** । अपत्याधिकारादुत्तरमित्यर्थः ॥ **उपचर्यत इति** । व्यवह्रियत इत्यर्थः ॥

( उद्द्योतः ) ननु 'राजश्वशुराद्यत्' 'मनोर्जातावञ्यतौ' इत्याभ्यामनन्तरापत्येऽपि प्रत्ययेन तस्य गोत्र[6]त्वाभावात्तत्र वुञोऽप्राप्तौ तत्प्रापकत्वेन तस्य चारितार्थ्यात्कथं ज्ञापकत्वमत आह—**प्राग्गोत्रेति** । न चात्र[7] पक्षेऽनन्तरापत्ये 'गाङ्गेयः' 'श्वशुर्यः' इत्यसिद्धिः[8] । द्रौणायनिवदुपचारेण सिद्धेः । न च गार्गीप्रभृतिभ्यो यूनि ढञ स्यात्, गोत्रत्वा[9]रोपे 'एको गोत्रे' इति नियमात्, तदन[10]ारोपे तु गोत्रत्वाभावा-

१ यस्मिन्यून्यर्थे फक्फिञौ प्रवर्तेते स युवाऽर्थो वा वृद्धवद्भवतीत्यर्थः ॥

२ एवञ्च गार्ग्यायणकमिति रूपं न सिद्ध्येदिति भावः । तत्र युवप्रत्ययान्तस्य गोत्रार्थकत्वाभावेन गोत्रवाचकत्वाभावात् गोत्रचरणाद्वुञित्यादि वुञ् न प्राप्नोतीति भावः ॥

३ नन्वतिदेशेन वृद्धत्वप्रयुक्तकार्यस्य प्राप्तावपि स्वाश्रययुवत्वप्रयुक्तप्रत्ययोऽपि स्यादित्याशङ्कायामाह—**अतिदिश्यमानेति** ॥

४ भाष्योक्तम् 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ्' इति सूत्रस्थराजन्यमनुष्यशब्दयोर्ज्ञापकत्वमुपपादयति—**प्राग्गोत्रसंज्ञायामिति** । एवञ्च 'राजश्वशुराद्यत्' 'मनोर्जातावञ्यतौ षुक् च' इत्यत्र गोत्रग्रहणानुवृत्तेराभ्यामनन्तरापत्ये प्रत्यय एव नेति राजन्यमनुष्यशब्दयोर्गोत्रग्रहणेनैव सिद्धेः पृथग्ग्रहणं ज्ञापकमिति भावः ॥

५ **गोत्रग्रहणम्**=गोत्रोक्षोष्ट्रोरभ्रेति सूत्रस्थङ्गोत्रग्रहणं लौकिकगोत्रस्यैव वाचकन्न तु शास्त्रीयगोत्रस्य वाचकमिति ॥

६ **गोत्रत्वाभावादिति** । शास्त्रीयगोत्रत्वाभावादित्यर्थः ॥

७ **अत्र पक्ष इति** । गोत्रे कुञ्जादिभ्य इत्यतो गोत्रग्रहणानुवर्तनपक्ष इत्यर्थः ॥

८ सर्वत्र 'अपत्यम्पौत्रप्रभृति' इति पारिभाषिकगोत्रग्रहणे गङ्गाशब्दाच्छ्वशुरशब्दाच्चानन्तरापत्ये प्रत्ययो नेति गाङ्गेयश्वशुर्यशब्दयोरनुपपत्तिरिति ॥

९ **गोत्रत्वारोप इति** । ज्ञापकाद्गोत्रशब्देन लौकिकगोत्रग्रहणे यूनोऽपि गोत्रत्वमेवेत्ययमारोपः ॥

१० गार्गीत्यत्रैकस्य गोत्रप्रत्ययस्य यञ उत्पन्नत्वेन पुनरपर यूनोऽपि गोत्रत्वारोपेण एको गोत्र इति नियमाद्युवार्थे प्रत्ययो न । ज्ञापकानाश्रयणे यूनि गोत्रत्वारोपो न । गोत्रे कुञ्जादिभ्य इत्यतः स्त्रीभ्यो ढगित्यत्र गोत्रपदानुवृत्तेर्ढक् प्रत्ययो नेति भावः ॥

दिति वाच्यम् । 'उदीचां वृद्धात्' इति सूत्रे 'अगोत्रात्' इत्युक्तिसामर्थ्येन गोत्रप्रत्ययान्तप्रकृतिभ्योऽप्येषां विशिष्य विधानसामर्थ्यात् 'यञिञोश्च' इत्यादिवत् यून्युत्पत्तिसिद्धेः ॥ शास्त्रीयेति । यद्यपि लोके राजन्यमनुष्यशब्दौ नापत्यार्थकत्वेन प्रसिद्धौ, किन्तु जातिबोधकत्वेनैव प्रसिद्धौ; तथाऽपि गोत्राधिकारात्पौत्रप्रभृत्यपत्ये प्रत्ययविधानाच्छास्त्रवासनया[1] तदभिधायिनाविव्यर्थः[2] । शास्त्रप्रक्रियायाञ्च शास्त्रकल्पित आरोपितोऽप्यर्थो निमित्तम् । अत एव मनुषीशब्दात्कुत्सितमपत्यमित्यर्थे मानुषो जाल्म इति भवत्येव । राजन्यशब्दाच्च 'उदीचां वृद्धात्' इति फिञ् । 'राजश्वशुरात्' 'मनोर्जातौ' इत्यनयोर्गोत्राधिकारे पाठात्त्योरपि शास्त्रीयगोत्रत्वात् । एवं च शास्त्रीयगोत्रैग्रहणे तद्वैयर्थ्यं[3] स्पष्टमेव । 'शिवादिभ्यः' इत्यत्रैव 'गोत्रे' इति निवृत्तमिति वृत्त्यादिग्रन्थास्तु चिन्त्या एव, उक्तप्रयोगासिद्ध्यापत्तेः ॥ लौकिकमित्यस्य च—लोकेऽपत्यत्वेन बोधजनकमपत्याधिकारविहितप्रत्ययान्तमित्यर्थः । अत[4] एव राजन्यमनुष्याभ्यां शैषिकः 'गोत्रचरणात्' इति वुञ्, लौकिकगोत्रत्वाभावात् ॥ न चैतत्तथेत्याह—राजन्येत्यादि । लोके—अपत्यत्वप्रकारकप्रतीतिजनकत्वरूपस्य तस्याभावः, जातिप्रकारेण बोधजननात्, इत्यर्थः । गार्ग्यादिभ्योऽप्यपत्यत्वेन गोत्रस्य पौत्रप्रभृतेर्बोध इति बोध्यम् । इदं[5] च यत्र शास्त्रीयग्रहणे गमकाभावस्तद्विषयम् । यत्र तु गमकं तत्र तस्यैव । यथा 'गोत्रेऽलुक्' इति सूत्रे उत्तरसूत्रस्थयुवसाहचर्याच्छास्त्रीयस्यैव[6] ग्रहणम् । अत एव[7] 'वाऽन्यस्मिन्' इति सूत्रभाष्ये गोत्रयुवसंज्ञयोः समावेशे एतद्विषये[8] फलं दत्तम् ॥ भाष्ये—युवा च लोके इति । अनन्तरापत्यस्याप्युपलक्षणमिदम् ॥ उत्तरमिति । अन्यत्रेत्यर्थ[9] इति केचित् ॥ इदमेव युक्तम्, अत एव 'यञञोश्च' इत्यत्र लौकिकगोत्रग्रहणं भाष्ये उक्तम् ।

अत्र वदन्ति—एतत्सूत्रस्थभाष्यस्वारस्येन, 'अणिञोः' 'गोत्रावयवात्' इति सूत्रस्थभाष्येण च ऋष्यपत्यमात्रं गोत्रं लौकिकमिति लभ्यते । जातिलक्षणे चैवमेव । 'अनुपसर्जनात्' इति सूत्रे कुन्ती—अवन्ती—गान्धारीषु तत्त्वारोपेण 'इतो मनुष्यजातेः' इत्यस्योदाहरणत्वोक्तिः, 'गोत्रोक्ष' इतिसूत्रे च । 'खण्डिकादि' सूत्रे क्षुद्रकमालवशब्दे 'जनपदशब्दात्क्षत्रियात्' इत्यधिकारस्थप्रत्ययान्ते 'गोत्रोक्ष' इति सूत्रेण वुञो भाष्ये करणं तु तद्वदारोपेणैव । अपत्याधिकारे तु युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम् । तदर्थकत्वञ्चारोपितं वास्तवं वेत्यन्यदिति ॥

( आक्षेपवारकभाष्यम् )

**यद्येतज् ज्ञाप्यते—**

**औपगवेर्यूनश्छात्रा औपगवीयाः, गोत्राश्रय इञो गोत्र इत्यण्प्राप्नोति ।**

**सामूहिकेषु ज्ञापकम् ।**

**यदि सामूहिकेषु ज्ञापकम्, गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः, गोत्राश्रयो वुञ् प्राप्नोति[11] ।**

**वुञ्विधौ ज्ञापकम् ।**

**यदि वुञ्विधौ ज्ञापकम्, शालङ्केर्यूनश्छात्राः शालङ्काः । इञो गोत्र इत्यण्न प्राप्नोति ।**

**अस्तु तर्ह्यविशेषेण ।**

**कथमौपगवेर्यूनश्छात्रा औपगवीयाः ?**

**गोत्रेणेञं विशेषयिष्यामः—'गोत्रे य इञ् विहितः' इति ॥**

( प्रदीपः ) **शालङ्केरिति** । शलङ्कोरपत्यमिति बाह्वादेराकृतिगणत्वादिञ् । पैलादिषु शालङ्किशब्दपाठान्निपातनाच्छलङ्कादेशः । अत एव[12] च निपातनाद् गोत्रेऽपि नडादिफक्—इञ् न बाध्यते । ततो यूनि फक् । तस्य पैलादित्वाल्लुकि कृते—इञन्तं यूनि वर्तत इति गोत्राश्रयः 'इञश्च' इत्यण् न प्राप्नोति ॥

**गोत्रेणेञमिति** । कण्वादिभ्यो 'गोत्रे' इत्यत्र गोत्रग्रहणेन पौत्र[13]प्रभृति गोत्रं गृह्यते । गोत्रप्रत्ययानुवादेन ह्यत्राण्विधीयते—'कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तेभ्योऽण् भवति' इति । कण्वादयश्च गर्गादिषु पठितास्तत्र च गोत्र इति वर्तते । अपत्याधिकारे च गोत्रग्रहणादेव[14] शास्त्रीयं गोत्रं गृह्यते । तदेव च 'कण्वादिभ्यो गोत्रे' इत्यत्रानूद्यते । तदेव 'इञश्च' इत्यत्रानुवर्तते । तेन[15] गोत्रे य इञ् विहितस्तदन्तादण् विधीयमानः शालङ्केर्भविष्यति[16] न त्वौपगवेरित्यर्थः । नन्वौपगविशब्देऽनेन सूत्रेणेञो लुका भाव्यम् । नैष दोषः । पूर्वमेवास्योदाहरणस्य प्रत्याख्यानात्—अन्यथासिद्धत्वादित्यभिप्रायेणेदमुक्तम्[17] ॥

१ 'विधानाच्छास्त्रीय वासनया' इति घ. ङ. पाठः ॥

२ तदभिधायिनौ=गोत्रार्थाभिधायिनौ ॥

३ तद्वैयर्थ्यम्=गोत्रोक्षोष्ट्रोरभ्रेतिसूत्रे राजन्यमनुष्यशब्दयोर्वैयर्थ्यम् ॥

४ गोत्रचरणादित्यत्रापि लौकिकगोत्रग्रहणादेव राजन्यमनुष्यशब्दयोर्लोके जातिवाचकत्वेन गोत्रार्थकत्वाभावेन च वुञ्नेत्यर्थः ॥

५ इदञ्च=गोत्रशब्देन लौकिकगोत्रग्रहणरूपं ज्ञापकञ्च ॥

६ यूनि लुगित्यत्र युवत्वं शास्त्रीयमेव गृह्यते तत्साहचर्याद्गोत्रेऽलुगचीत्यत्रापि गोत्रशब्देन शास्त्रीयगोत्रमेव गृह्यते ॥

७ अत एव=सति गमके शास्त्रीयगोत्रग्रहणादेव ॥

८ एतद्विषये=शास्त्रीयगोत्रविषये ॥

९ अपत्याधिकारादन्यत्रेति वक्तव्यम्, न त्वपत्याधिकारादुत्तरमिति । तेन अपत्याधिकारात्प्रागपि यञञोः ( २।४।६४ ) इत्यत्र लौकिकगोत्रग्रहणसिद्धिः ॥

१० अत एव द्रौणायनिः, गाङ्गेय इत्यादिसिद्धिः ॥

११ 'प्राप्नोति । एवन्तर्हि वुञ्विधौ' इति ङ. च. पाठः ॥

१२ अत एव च निपातनादिति । पैलादिषु इञन्तस्य शालङ्किशब्दस्य निपातनान्नडादिगणपाठात्प्राप्तः फक्-इञं न बाधत इत्यर्थः ॥

१३ पौत्रप्रभृतीति । शास्त्रीयमित्यर्थः ॥

१४ गोत्रग्रहणादेवेति । अपत्याधिकार एव गोत्रं गृह्यते, नत्वत्र कण्वादिभ्यो गोत्र इत्यत्रैव गोत्रमनूद्यत इति शास्त्रीयस्यैवात्र ग्रहणमिति भावः ॥

१५ तेन=इञश्चेत्यत्रापि कण्वादिभ्यो गोत्र इत्यस्माच्छास्त्रीयगोत्ररूपार्थबोधकस्य गोत्रशब्दस्यानुवर्तनेनेत्यर्थः ॥

१६ शलङ्कुशब्दाद्गोत्र एवेञ प्रत्यय इतीञोगोत्रार्थकत्वेन ततोऽण् भविष्यति, औपगवेरित्यत्र च युवार्थे-इञ् प्रत्यय इति गोत्रार्थकत्वाभावेन न ततोऽणित्यर्थः ॥

१७ नैतद्भाष्यकाराणामभिमेतमुदाहरणमित्यर्थः ॥

( उद्योतः ) **अत एव चेति** । अन्यथा नडादिषु शलङ्कु शलङ्कञ्चेति पाठात् गोत्रे फगेव स्यात् । निपातनात्त्विञपि भवतीत्यर्थः ॥

नन्वविशेषेणे ज्ञापने कथं 'कण्वादिभ्यो गोत्रे' इत्यत्र शास्त्रीयगोत्रग्रहणमित्यत आह—**गोत्रप्रत्ययेति** । गोत्राधिकारविहितप्रत्ययानुवादेनेत्यर्थः । तत्र च गोत्र इति स्वर्यत इति भावः ॥ **तदेव चेति** । शास्त्रीयं गोत्रमित्यर्थः । तच्च युवत्वानाक्रान्तपौत्रप्रभृत्यपत्यरूपम् ॥ **न त्विति** । यूनीञो विधानादित्यर्थः ॥ **इञो लुका भाव्यमिति** । ननु लुक्यपि प्रत्ययलक्षणं सुलभम्, न चेकाररूप इञित्यर्थान्न तत्, मानाभावात्—इति चिन्त्यमिदम् ॥

---

( ६६३ विधिसूत्रम् ॥ ४ । १ । २ आ. ४८ )

## १३३८ तस्यापत्यम् ॥ ४ । १ । ९२ ॥

( अपत्यार्थाधिकरणम् )

( आक्षेपकं श्लोकवार्तिकम् )

### तस्येदमित्यपत्येऽपि

( भाष्यम् ) **तस्येदम् (४।३।१२०) इत्यपत्येऽपि—अण् सिद्धः । तस्येदंविशेषा ह्येते—अपत्यम्, समूहः, विकारः, निवास इति ।**

**किमर्थं तर्हीदमुच्यते ?**

(प्रदीपः) **तस्येदमिति** । इदमिति संबन्धिसामान्ये सर्वविशेषान्तर्भावादपत्यस्याप्यन्तर्भूतत्वादित्यर्थः ॥

(उद्योतः) **सर्वविशेषेति** । सामर्थ्यादिति भावः । एतच्च 'तस्य' पदविचारे भाष्य एव स्फुटम् ॥

( समाधाने श्लोकवार्तिकम् )

### बाधनार्थं कृतं भवेत् ।

( भाष्यम् ) **ये तस्य बाधकास्तद्बाधनार्थम् ॥**

( प्रदीपः ) **बाधका इति** । जातौ बहुवचनम् । 'तस्येदम्' इत्यनेन विधीयमानस्याणो बाधकश्छस्तस्य बाधनार्थमिदं सूत्रमित्यर्थः ॥

( उद्योतः ) ननु उदाहरणे एकस्य छस्यैवोपादानात् बहुवचनमनुपपन्नमत आह—**जाताविति** । प्रयोगबाहुल्याभिप्रायेणेति वक्तुं युक्तम् । जातौ बहुवचनस्य भाष्ये प्रत्याख्यानात् ॥

( प्रत्याक्षेपभाष्यम् )

**कथं पुनरशैषिकः शैषिकं बाधेत ?**

( प्रदीपः ) **कथं पुनरिति** । एकस्मिन्नर्थे प्राप्तौ सत्यां बाध्यबाधकभावो भवति । तत्र शेषेऽर्थे विधीयमानश्छः, अण् त्वनेनापत्य इति भिन्नार्थत्वादनयोः कथं बाध्यबाधकभाव **इति प्रश्नः ॥**

( उद्योतः ) **भिन्नार्थत्वादिति** । न हि ब्राह्मणेभ्यो भोक्तुं दधि दीयताम्, कौण्डिन्याय तैलं स्नानायेत्यत्र बाध्यबाधकभावोऽस्तीति भावः ॥

( प्रत्याक्षेपसमाधाने श्लोकवार्तिकम् )

### उत्सर्गः शेष एवासौ

( भाष्यम् ) **यो ह्युत्सर्गः सोऽपि शेष एव ॥**

( प्रदीपः ) **उत्सर्ग इति** । यदि योगविभागमकृत्वा 'तस्यापत्यमत इञ्' इत्युच्येत तदा प्रकृतिविशेषसम्बद्धस्यैवापत्यार्थस्योपयोगात् प्रकृतिसामान्यसम्बद्धोऽपत्यार्थः शेष एव स्यादिति स्यादेव वृद्धादपत्ये छः । पृथग्योगे तु अपत्यार्थस्याणादिविधावुपयोगाच्छेषत्वाभावाच्छस्याप्राप्तिरिति सैव बाधा कथ्यते । **उत्सर्ग** इति प्रकृतिसामान्यसंबद्धः सामान्यभूतोऽपत्यार्थ उक्तः । **अथ वा**—इदमिति सामान्यभूतोऽर्थ उत्सर्गः, तदन्तर्भावादपत्यस्मिन् पृथग्योगेऽपत्यार्थ उत्सर्गः शेष एव भवति, अनुपयुक्तत्वादित्यर्थः ॥

(उद्योतः) यद्येवम् 'उत्सर्गः शेष एव' इत्यनुपपन्नमत आह—**यदीति** । भाष्ये—**उत्सर्ग** इत्युक्तिस्तु प्रकृतिविशेषासंबद्धत्वमात्रेण बोध्या ॥ **सामान्यसंबद्ध इति** । उक्तप्रकृतिविशेषातिरिक्तप्रकृतिसंबद्ध इत्यर्थः । कथं पुनरशैषिकः शैषिकं बाधेतेति भाष्ये न 'तस्येदमित्यपत्येऽपि' इति वदतः पूर्वपक्षः, 'तस्येदम्' इत्यपत्ये सिद्ध्यभावात्,

---

१ अपत्याधिकारादन्यत्र लौकिकमेव गोत्रमिति ज्ञापने इत्यर्थः ॥

२ तत्=प्रत्ययलक्षणमित्यर्थः । एवंरूपार्थकरणे प्रमाणाभावः । एवञ्च प्रत्ययलक्षणेनेञन्तत्वादण् प्राप्नोतीत्येतदर्थं गोत्रे य इञ्विहित इत्यादिर्भाष्योक्तः समाधिः सुललित इति कैय्यटोक्तश्चिन्त्यमित्यर्थः ॥

३ इदं विशेषा इति । सामान्यस्येदमर्थस्य विशेषा अपत्यादय इत्यर्थः ॥

४ इदमिति पदं सम्बन्धिसामान्येऽर्थे वर्तते, तस्मिंश्च सामान्यरूपेऽर्थे सर्वविशेषाणामर्थानामपत्यसमूहादिरूपाणामन्तर्भावादपत्यरूपोऽप्यर्थोऽन्तर्भवतीति भावः ॥

५ सामान्यवाचकत्वस्य लक्ष्ये उपयोगाभावेन इदमिति विधानसामर्थ्यात्तस्य विशेषवाचकत्वमिति भावः ॥

६ ननु 'तस्यापत्यमत इञ्' इत्येकयोगकरणे सामान्यरूपोऽपत्यार्थ उक्त एव नेति—उत्सर्गः शेष एवेति कथमुपपद्येतेत्यत आह—**अथ वेति** ॥

७ शैषिकातिरिक्तप्रत्ययविधावत इञित्यादावुपयुक्तस्यापत्यार्थस्य शेषत्वाभावेऽपि इदमर्थसंगृहीतस्य सामान्यरूपापत्यार्थस्य सामान्यप्रत्ययविधावनुपयोगाच्छेषत्वमिति भावः ॥

८ अस्मिन्सूत्रे तस्येदमित्यपत्येऽपीति पूर्वपक्षः, तदुत्तरम्बाधनार्थमिति । तत्र चाशङ्क्यते पूर्वपक्षिणा—**कथम्पुनरशैषिक** इति, तस्य चोत्तरमुत्सर्गः शेष इत्यादिना, इत्येवमापाततः प्रतीयते । न चैतत्तथेत्याह—**कथम्पुनरशैषिक** इत्यादिना । तस्येदमित्यपत्येऽपीति वदतो न—कथम्पुनरशैषिक इत्यादिः पूर्वपक्षः । कथम्पुनरिति वदता तस्येदमिति वक्तुमप्यशक्यम् । एवमाशङ्कावतोऽपत्ये तस्येदमित्यस्य सिद्ध्यभावात् । कथम्पुनरित्याशङ्कासमये तस्येदमित्याशङ्काया निवर्तनाच्च । तस्मात्ताभ्यामन्यस्य तृतीयस्य पूर्वोक्तशङ्कासमाधानयोरनुपपत्तिप्रदर्शनार्थमाशङ्का—**कथम्पुनरिति** । यद्यशैषिकः शैषिकं न बाधेत तर्हि तस्येदमित्यपत्येऽपि न प्राप्नुयात्, अशैषिकेऽपत्यरूपेऽर्थे तस्येदमित्यस्याप्रवर्तनात् । तदाशङ्कायाम्बाधनार्थमित्यस्यायुक्ततरत्वं सुस्पष्टमेव । अत एव च—उत्सर्गः शेष इति समाधानमप्युपपद्यते । यदि च बाधनार्थमित्यस्यैवायङ्कथम्पुनरित्याक्षेपः स्यात्तदा शैषिकस्याशैषिकेण बाधस्तु—अशैषिकविषये शैषिकस्याप्राप्तिरेव बाध इत्येवोत्तरन्दद्यात् । तस्मादुत्सर्गः शेष इत्याद्युत्तरयतो भगवतोऽयमेवाशयः । एवञ्च पूर्वपक्षोपपादनयोर्बाधकत्वाभावशङ्कायाश्च सर्वस्याप्येतदुत्तरम्—**उत्सर्गः शेष एवेति** ॥

तत्पूर्वपक्षस्यापि गलनात्, तस्मात् तृतीयस्योभयानुपपत्त्युद्भाविका शङ्का । अत एव 'उत्सर्गः शेष एवासौ' इति समाधिः । बाधकत्वाभावमात्रशङ्कायां त्वप्राप्तिरेव बाध इत्येवोत्तरं दद्यात् । तस्मात्पूर्वपक्षोपपादनपूर्वकं बाधकत्वाभावशङ्काया अपीदमुत्तरम् । [१]व्याख्यातं च तथैवोपाध्यायैः ॥ अपत्यार्थे उत्सर्ग इति । उत्सर्गभूतसामान्यशब्देनोपादानादिति भावः ॥

( सूत्रफलजिज्ञासाभाष्यम् )

**अथैतस्मिन् बाधकबाधना[२]र्थे सति किं प्रयोजनम् ?**

( प्रयोजने श्लोकवार्तिकम् )

## वृद्धान्यस्य प्रयोजनम् ॥

( भाष्यम् ) **वृद्धानि प्रयोजयन्ति—भानोरपत्यं भानवः, श्यामगोरपत्यं श्यामगव इति ॥**

( आक्षेपभाष्यम् )

**कथं पुनरिच्छताऽपि—अपवादः प्राप्नुवन् शक्यो बाधितुम् ?**

( प्रदीपः ) **कथं पुनरिति** । प्रकृतिसामान्याद्विधानादणेवोत्सर्गः । प्रकृतिविशेषात्तु विधानाच्छोऽपवाद इति मत्वा प्रश्नः ॥

( उद्द्योतः ) ननु योगविभागेऽपत्ये छस्याप्राप्त्या बाधाया उक्तेः 'कथं पुनर्' इति प्रश्नोऽ[३]नुपपन्नोऽत आह—**प्रकृतिसामान्यादिति** ॥

( समाधानभाष्यम् )

**तस्य ग्रहणसामर्थ्यात् ॥**

( प्रदीपः ) **तस्य ग्रहणसामर्थ्यादिति** । [४]एकदेशेन सूत्रं लक्ष्यते । तेन पृथक्सूत्रारम्भादित्यर्थः । पृथक्सूत्रे हि—अपत्यार्थस्य शेषत्वाभावाच्छस्याभावः ॥

( उद्द्योतः ) ननु 'तस्य' ग्रहणमपि 'अत इञ्' [५]इत्याद्यर्थमत आह—**एकदेशेनेति** ॥

( प्रत्याक्षेपभाष्यम् )

**किमिदं भवानध्यारुह्य तस्य ग्रहणस्य प्रयोजनमाह, न पुनः सर्वस्यैव योगस्य ।**

**अवश्यमुत्तरार्थमर्थनिर्देशः कर्तव्यः ।**

**समर्थविभक्तिरपि तर्हि अवश्यमुत्तरार्था प्रतिनिर्देष्टव्या ॥**

( प्रदीपः ) इतरोऽज्ञाताभिप्राय आह—**किमिदमिति** ॥ **अध्यारुह्येति** । तत्रैव तात्पर्यं कृत्वेत्यर्थः ॥

( उद्द्योतः ) [६]गतिविशेषरूपस्याध्यारोहणस्य कथं शब्दविषयत्वमत आह—**तत्रैवेति** ॥

( समाधानभाष्यम् )

**एवं तर्हि योगविभागकरणसामर्थ्यात् ।**

**इतरथा हि तस्यापत्यमत इञ् भवतीत्येव ब्रूयात् ॥**

( प्रदीपः ) सिद्धान्तवादी स्वाभिप्रायं दर्शयितुमाह—**एवं तर्हीति** ॥

( आक्षेपभाष्यम् )

**पुँल्लिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च ।**

**तेन पुँल्लिङ्गादेवोत्पत्तिः स्यात्, एकवचनान्ताच्च ।**

**स्त्रीनपुंसकलिङ्गाद्, द्विवचनबहुवचनान्ताच्चेदं न स्यात् ॥**

( प्रदीपः ) **पुँल्लिङ्गेनेति** । यद्यपि नपुंसकेऽपि तस्येति[७]रूपं भवति, तथाऽपि पुंनपुंसकयोर्युगपन्निर्देशस्य कर्तुमशक्यत्वात् [८]कामाचारादेवमुक्तम् ॥ **स्त्रीनपुंसकलिङ्गादिति** । सुमातुरपत्यं सौमात्रः, क्षत्रस्यापत्यं क्षात्रिरित्यादावित्यर्थः ॥

( उद्द्योतः ) **कामचारादिति** । एवं क्लीबनिर्देशे स्त्रीपुंसयोर्न स्यादिति बोध्यम् । [९]यद्यपि 'नपुंसकमनपुंसके' इति—एकशेषेणाप्येतत्सिध्यति, तथाऽपि वास्तवमेव समाधिं वक्तुं तन्नादृतं[१०] ॥ **क्षत्रस्येति** । एतेन नपुंसकस्यार्थस्यापत्येन[११] योगासंभव इत्यपास्तम् ॥

( ५२५७ समाधानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात् ॥ * ॥

( भाष्यम् ) **तद्धितार्थ[१२]निर्देशे लिङ्गवचनमप्रमाणम् ।**

**किं कारणम् ?**

**तस्याविवक्षितत्वाद् । नात्र निर्देशस्तन्त्रम् ।**

---

१ अथ वेत्यादि व्याख्यानङ्कुर्वद्भिरुपाध्यायैरिति भावः ॥

२ 'बाधने सति' इति छ. पाठः ॥

३ तस्यापत्यमिति योगविभागेऽपत्यरूपेऽर्थे छो न प्राप्नोति । एवञ्चाप्राप्तिरूपा छस्य बाधा—उक्तैवेति कथम्पुनरिति प्रश्नोऽनुपपन्न इति भावः ॥

४ ननु तस्य पदोपादानं षष्ठ्यन्तात्प्रत्ययोत्पत्त्यर्थमावश्यकमिति न तस्येति पदं व्यर्थमत आह—एकदेशेनेति । तस्यापत्यमिति सूत्रकरणसामर्थ्यादिति हि तस्य ग्रहणसामर्थ्यात्—इत्यस्यार्थ इति भावः ॥

५ केवलन्तस्येत्यस्यैवोपादाने पृथक् सूत्रकरणमयुक्तम्, तत्र विधेयाभावात् । किन्तु तदुत्तरार्थमेवाधिकाररूपार्थं स्यादित्यर्थः ॥

६ अत्रारोहणाधिकरणन्तस्येति पदन्न भविष्यतीत्याशयेनाह—गतिविशेषेति ॥

७ 'तस्येति रूपम्' इत्येव च. झ. पाठः ॥

८ एकेनैव तस्येतिपदेन पुंनपुंसकयोः निर्देशस्याशक्यत्वेन नपुंसकलिङ्गेनापि निर्देश इत्युक्तेरपि शक्यत्वात्पुंल्लिङ्गेनायमित्युक्तिः कामचार इत्यर्थः ॥

९ नन्वेकशेषेणोभयनिर्देशः कर्तुं शक्यस्तदाह—यद्यपीति ॥

१० पुंनपुंसकलिङ्गेनायन्निर्देशः क्रियत इत्युच्यमानेऽपि स्त्रीलिङ्गान्नस्यादित्याक्षेपस्य सत्त्वात्तस्योत्तरन्देयमेवेत्येकशेषस्योपेक्षणमिति भावः ॥

११ नननासामर्थ्यादिति भावः ॥

१२ 'तार्थवचने लिङ्ग' इति क. पाठः ॥

**कथं पुनस्तेनैव च नामनिर्देशः क्रियते, तच्चातन्त्रं स्यात् । तत्कारी च भवांस्तद्द्वेषी च ।**

**नान्तरीयकत्वादत्र[1] पुँल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च । अवश्यं कयाचिद्विभक्त्या केनचिद्वचनेन निर्देशः कर्तव्यः ।**

**तद्यथा—कश्चिदन्नार्थी[2] शालिकलापं सतुषं सपलालमाहरति, नान्तरीयकत्वात् । स यावदादेयं तावदादाय तुषपलालान्युत्सृजति[3] ।**

**तथा—कश्चिन्मांसार्थी मत्स्यान् सशकलान् सकण्टकानाहरति, नान्तरीयकत्वात् । स यावदादेयं तावदादाय शकलकण्टकान्युत्सृजति[4] ।**

**एवमिहापि नान्तरीयकत्वात्पुँल्लिङ्गेन निर्देशः क्रियते, एकवचनान्तेन च । न ह्यत्र निर्देशस्तन्त्रम् ॥**

( प्रदीपः ) **तद्धितार्थनिर्देश इति** । तद्धितप्रकरणादेवमुक्तम् । सर्वत्रैव हि शास्त्रेऽस्मिन्नान्तरीयकत्वादुपात्तं लिङ्गसंख्यं न विवक्ष्यते । क्वचित्संख्या तु विवक्ष्यते । यथा—सुप्सुपेति ॥ **अप्रमाणमिति** । तद्वशात्कार्यस्य विधिनिषेधौ न भवत इत्यर्थः । **भावसूत्रे** ( ३।३।१८ ) विस्तरेण भाष्यमेतद् व्याख्यातमिति तत एवावधार्यम् ॥

( उद्द्योतः ) **तद्धितार्थेति**—भाष्ये । तत्संबन्ध्यपत्यमित्यर्थे[5] प्रत्यय इति सूत्रार्थादेवमुक्तम् । यद्वा तद्धितप्रयोजनकनिर्देशे इत्यर्थः ॥ **सर्वत्रैवेति** । 'भावे' इत्यादावपि ॥ **क्वचित्संख्येति** । लिङ्गं तु सर्वत्राविवक्षितमेव, संख्या तु लक्ष्यानुसारात् क्वचिद्विवक्ष्यते, क्वचिन्नेत्यर्थः । विधेयविषये संख्याविवक्षोदाहर्तुमुचिता ॥ **तद्वशादिति** । अप्रमाणमित्यस्य[6] विधिनिषेधप्रमाऽजनकमित्यर्थ[7] इति भावः ॥

( ५२५८ आक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सर्वनामनिर्देशे विशेषाऽसंप्रत्ययः सामान्यनिर्देशात् ॥ * ॥

( भाष्यम् ) **सर्वनामनिर्देशे विशेषासंप्रत्ययः ।**

**किं कारणम् ?**

**सामान्यनिर्देशात् । सर्वनाम्नाऽयं निर्देशः क्रियते । सर्वनाम च सामान्यवाचि । तेन सामान्यवाचिन एवोत्पत्तिः स्याद्, विशेषवाचिनो न स्यात् ॥**

( प्रदीपः ) **सामान्यनिर्देशादिति** । 'तस्य' इति निर्देशात्तच्छब्दादेव[8] सामान्यवाचिनः प्रत्ययः स्यान्नोपग्वादिभ्य इत्यर्थः ॥

( उद्द्योतः ) सामान्यवाचिनस्तच्छब्दादेवेत्यन्वयः, उपस्थितत्वादिति[9] भावः । सामान्यवाचित्वं च परोक्षत्वेन[10] सकलपरोक्षव्यक्तिबोधकत्वम् ॥

( ५२५९ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सामान्यचोदनास्तु विशेषेषु ॥ * ॥

( भाष्यम् ) **सामान्यचोदनास्तु विशेषेष्ववतिष्ठन्ते ।**

**तद्यथा-गौरनुबन्ध्योऽजोऽग्नीषोमीय इति । आकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते ।**

**विषम उपन्यासः ।**

**अस्ति कारणं येनैतदेवं भवति ।**

**किं कारणम् ?**

**असंभवात् । आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा-आकृतिसहचरिते द्रव्ये आरम्भणालम्भनविशसनादीनि क्रियन्ते ।**

**इदमप्येवंजातीयकमेव ।**

**असंभवात् सामान्यवाचिन उत्पत्तौ विशेषवाचिन उत्पत्तिर्भविष्यति ॥**

( प्रदीपः ) **सामान्यचोदना इति** । विशेषाणामेव[11] कार्यसिद्ध्यर्थं सामान्यमुपादीयते न तु स्वार्थमित्यर्थः ॥

**इदमपीति** । 'अपत्यम्' इत्यनेनैव सम्बन्धिशब्दत्वादपत्यवन्मात्रस्याक्षेपात्सामान्येनापत्यस्य विशेषणविशेष्यभावायो-

---

१ 'नान्तरीयकत्वात्' इति वार्तिकमेतदिति गौडाः । तादृशपाठस्य साम्प्रतमनुपलम्भान्नैतन्निर्धारयितुं शक्यते । न चानेन किञ्चिद्विधीयत इति वार्तिकत्वे प्रमाणाभाव एवेति प्रतिभाति ॥

२ 'कश्चिद्धान्यार्थी' इति च. पाठः ॥

३ 'तुषपलालानुत्सृजति' इति च. पाठः ॥

४ 'कण्टकानुत्सृजति' इति च. पाठः ॥

५ ननूद्देश्यगतसङ्ख्याया अविवक्षणेऽपि विधेयगतसङ्ख्यायाः सर्वत्र विवक्षणात्सर्वत्रैव हि शास्त्र इत्यादि प्रदीपोक्तिर्नोपपद्येतेत्यत आह—तत्सम्बन्ध्यपत्यमिति । अत्रोद्देश्यगतलिंगसङ्ख्याया एवाविवक्षणमुक्तमिति भावः । तदेव स्पष्टयति—यद्वेति ॥

६ ननु 'अप्रमाणम्' इति भाष्यस्य प्रदीपोक्तः 'तद्वशात्कार्यस्य' इत्याद्यर्थोऽनुपपन्नः, तादृशार्थस्य शब्दमर्यादयाऽलाभादित्यत आह—अप्रमाणमित्यस्येति ॥

७ 'विधिनिषेधे प्रमाऽजन' इति घ. झ. पाठः ॥

८ 'तच्छब्दादेव सामान्यवाचिनः' इत्युच्यमाने तच्छब्दस्य विशेषवाचित्वमप्यस्ति, ततश्च विशेषवाचिनः स्यादेव प्रत्यय इत्याशङ्कां वारयितुमाह—सामान्यवाचिन इति ॥

९ ननु सामान्यवाचिभ्य इदमादिशब्देभ्योऽपि प्रत्ययः स्यादिति तच्छब्दादेवेति निर्धारणङ्कथं सङ्गच्छेतेत्यत आह—उपस्थितत्वादिति ॥

१० तद्व्यक्तिवृत्तिव्यापकधर्मावच्छेदेनेति 'परोक्षत्वेन' इत्यस्यार्थः । यथा घटरूपव्यक्तेर्घटत्वेन न बोधः किन्तु तत्त्वेन तच्छब्दादिति भावः । तच्छब्दस्यैव सामान्यवाचित्वस्य लक्षणमुक्तम् । अत एवेदमादिशब्दानामप्रत्यक्षव्यक्तिबोधकत्वेऽपि न सामान्यवाचित्वस्य हानिः ॥ वस्तुतस्तु परोक्षत्वेन सकलव्यक्तिबोधकत्वमेव लक्षणमुचितम् ॥

११ यतस्तस्मिन्निति निर्दिष्टे पूर्वस्येत्यत्रत्यतच्छब्देन अचीत्यादिसप्तमीनिर्देशविशेषा एव गृह्यन्तेऽतो विशेषाणामेव कार्यार्थं सामान्यमुपादीयते न तु तच्छब्दात्प्रत्ययोत्पत्त्यर्थमित्यर्थः ॥

गादिहापि सामान्येन विशेषा एव गृह्यन्ते । यदा तु प्रकरणवशाद्विशेषे सर्वनाम वर्तते तदा तस्मादपि प्रत्ययो भवति—तादायनिरिति ॥

(उद्योतः) विशेषाणामेवेति । यथा 'तसिन्निति निर्दिष्टे' 'तस्मादित्युत्तरस्य' इत्यादौ ॥ ननु 'गौरनुबन्ध्यः' इत्यादावाकृतावसंभवात् द्रव्योपलक्षणत्वेऽपीहोपलक्षणत्वे प्रमाणाभावोऽतआह—अपत्यमित्यनेनेति ॥

विशेषणविशेष्यभावायोगादिति । फलाभावाच्चेत्यपि बोध्यम् ॥ नन्वेवं सामान्यवाचिनः प्रत्ययो न स्यादेवेत्यत आह—यदा त्विति । यदा तच्छब्दः परोक्षत्वेन व्यक्तिविशेषं वक्तृबुद्धिस्थं प्रकरणाद्बोधयति तदेत्यर्थः । तादायनौ 'त्यदादीनि' इति वृद्धत्वात् 'उदीचां वृद्धात्' इति फिञ् । एवमेव त्वैणाः, पौत्त्रा इत्यत्रापत्ये प्रत्ययो बोध्यः ॥

(५२६० आक्षेपवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ अपत्याभिधाने स्त्रीपुँल्लिङ्गस्याप्रसिद्धिर्नपुंसकत्वात् ॥ * ॥

(भाष्यम्) अपत्याभिधाने स्त्रीपुँल्लिङ्गस्याप्रसिद्धिः ।

किं कारणम् ?

नपुंसकलिङ्गत्वात्[1] । अपत्यं नपुंसकलिङ्गम् । तेन नपुंसकलिङ्गस्यैवाभिधानं[2] स्यात्, स्त्रीपुँल्लिङ्गस्य न स्यात्[3] ।

ननु चेदं पुरस्तादेव चोदितं परिहृतं च ।

उत्पत्तिस्तत्र चोद्यते ।

इह पुनरुत्पन्नेनाभिधानं चोद्यते ॥

(प्रदीपः) नपुंसकलिङ्गस्येति । औपगवमित्यनेनैवापत्यस्याभिधानं स्यात् । औपगवः, औपगवीत्येवं न स्यादित्यर्थः ॥

(उद्योतः) उत्पत्तिस्तत्रेति—भाष्ये । तत्र यथा पुंलिङ्गादेवोत्पत्तिश्चोदिता तथा प्रकृते नपुंसके वाच्य एवोत्पत्तिः स्यादिति न चोद्यते, किंतु नपुंसकत्ववैशिष्ट्येनैव सर्वापत्याभिधानं स्यान्न तु पुंस्त्वादिवैशिष्ट्येनापीति चोद्यत इत्यर्थः ॥

(५२६१ समाधानवार्तिकम् ॥ ५ ॥)

## ॥*॥ सिद्धं तु प्रजनस्य विवक्षितत्वात् ॥*॥

(भाष्यम्) सिद्धमेतत् ।

कथम् ?

प्रजनस्य विवक्षितत्वात् । प्रजनोऽत्र विवक्षितः । स च सर्वलिङ्गः ।

(प्रदीपः) प्रजन इति । प्रसवमात्रं विवक्षितं न तु लिङ्गसंख्ये अपीत्यर्थः ॥ स चेति । सन्ततिः, अपत्यम्, प्रसव इति सर्वलिङ्गस्य शब्दैरभिधीयमानस्य दर्शनादित्यर्थः ॥

(प्रजनशब्दस्य सर्वलिङ्गकाक्षेपे भाष्यम्)

किं पुनः कारणं समानायामप्रवृत्तौ—अपत्यं नपुंसकलिङ्गम्, प्रजनः सर्वलिङ्गः ॥

(प्रदीपः) समानायामिति । एकस्मिन्नर्थ इत्यर्थः ॥ अपत्यमिति । अपत्यशब्दप्रत्याय्यमानमित्यर्थः ॥ प्रजन इति । सर्वलिङ्गैः प्रत्याय्यमानत्वात्सर्वलिङ्ग इत्युच्यते ॥

(उद्योतः) 'अपत्यं नपुंसकम्' इत्ययुक्तम्, तस्यैव शब्दान्तरेणाभिधाने लिङ्गान्तरयोगादत आह—अपत्यशब्देति ॥ प्रजनशब्दप्रत्याय्यस्य पुंलिङ्गत्वात् प्रजनः सर्वलिङ्ग इत्ययुक्तमत आह—सर्वलिङ्गैरिति । प्रजन इत्यर्थ एव विवक्षितः, सूत्रे तच्छब्दाभावादिति भावः ॥

(५२६२ समाधानसाधकवार्तिकम् ॥ ६ ॥)

## ॥ * ॥ एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम् ॥ * ॥

(भाष्यम्) एकार्थे[4] शब्दान्यत्वाल्लिङ्गान्यत्वं दृश्यते ।

तद्यथा—पुष्यः, तारका, नक्षत्रम्; गेहम्, कुटी, मठ इति ।

(प्रदीपः) एकार्थ इति । एकैकोऽर्थः सर्वलिङ्गः, स च केन चिच्छब्देन प्रत्याय्यमानः केन चिदेव लिङ्गेन युक्तः प्रतीयते ॥

(उद्योतः) नन्वेकस्यार्थस्य तत्तच्छब्दप्रतिपाद्यस्यैकमेव लिङ्गं लोके दृष्टं प्रायः[5], इति कथं सर्वलिङ्गत्वमत आह—भाष्ये—एकार्थ इति । एकस्मिन्नर्थेऽपीत्यर्थः ॥ तद्व्याचष्टे—एक इति । 'स्त्रियाम्' इति सूत्रे निरूपितमेतत् ॥

(५२६३ समाधानसाधकद्वितीयवार्तिकम् ॥ ७ ॥)

## ॥ * ॥ अवयवान्यत्वाच्च ॥ * ॥

(भाष्यम्) अवयवान्यत्वाच्च लिङ्गान्यत्वं दृश्यते ।

तद्यथा—कुटी—कुटीरः, शमी—शमीरः, शुण्डा—शुण्डारः ।

अवयवान्यत्वात्किल लिङ्गान्यत्वं स्यात्, किं पुनर्यत्र शब्दान्यत्वमपि ?

(प्रदीपः) अवयवान्यत्वादिति । स्वार्थिकस्यापि प्रत्ययस्योत्पत्तौ भिन्नावयवत्वात्=भिन्नशब्दप्रत्याय्यमानत्वादेकस्यैवार्थस्य लिङ्गभेदोऽवगम्यते । किं पुनरत्यन्तभिन्नशब्दप्रत्याय्यमानस्य लिङ्गभेदावगतिर्न स्यात् ? इत्यर्थः ॥

(उद्योतः) कैमुतिकन्यायप्रदर्शनाय भाष्ये—अवयवान्यत्वाच्चेति ॥ तद्व्याचष्टे[6]—स्वार्थिकस्येति । भिन्नावयवत्वेऽपि भिन्न-

१ 'नपुंसकलिङ्गत्वात्' इति च. झ. पाठः ॥
२ 'लिङ्गस्यैवापत्यस्याभिधानं' इति झ., 'स्यैवापत्याभि' इति च. पाठः ॥
३ क. पुस्तके 'स्त्रीपुँल्लिङ्गस्य न स्यात्' इति पाठो न दृश्यते ॥
४ 'एकार्थत्वेऽपि' इति च. झ. पाठः ॥

५ नन्वेकस्यापि शब्दस्यैकार्थस्यानेकलिङ्गत्वन्दृश्यत इति 'तत्तच्छब्दप्रतिपाद्यस्यैकमेव लिङ्गम्' इत्युक्तिरसङ्गता स्यादत आह—प्राय इति ॥
६ तद्व्याचष्टे=भाष्यस्य कैमुतिकत्वं व्याचष्ट इत्यर्थः ॥

शब्दत्वमेवेति 'किं पुनर्यत्र' इति न युक्तमत आह—**अत्यन्तेति** । यत्किञ्चिदवयवानामपि साम्याभावे इत्यर्थः ॥

( ६६४ नियमसूत्रम् ॥ ४ । १ । २ आ. ४९ )

## १३३९ एको गोत्रे ॥ ४ । १ । ९३ ॥

( प्रत्ययनियमाधिकरणम् )

**( प्रदीपः )** एकशब्दोऽयमन्यप्रधानासहायसंख्याप्रथमसमानवाची, इह तु संख्यावाची प्रथमवाची वा गृह्यत इत्येव निर्णयः, अर्थान्तरासम्भवात् ॥

**( उद्योतः )** **एकशब्दोऽयमिति** । '[२]एके मन्यन्ते' 'एकः पार्थो धनुष्मताम्' 'आद्यन्तवदेकस्मिन्' 'ह्येकयोः' 'एकेऽल्पप्राणाः' 'तेनैकदिक्' इतिक्रमेणोदाहरणानि ॥ **असंभवादिति** । इष्टानुगुणासंभवादित्यर्थः ॥

( आक्षेपभाष्यम् )

**किमर्थमिदमुच्यते ?**

**( प्रदीपः )** **किमर्थमिति** । क्रिय[३]माणेऽपि सूत्रद्वये सर्वमिष्टं न सिध्यतीति प्रश्नः । इह पौत्रप्रभृतावपत्ये विवक्षिते मूलप्रकृतेरेव गर्गादेः प्रत्यय इष्यते । न त्वनन्तरापत्यवाचिनो गार्गिप्रभृतेः, नापि गोत्रप्रत्ययान्ताद् गार्ग्यप्रभृतेः । यूनि तु गोत्रप्रत्ययान्तादेवेष्यते, न तु मूलप्रकृत्यन[४]न्तरयुवभ्यः । स्त्रियां तु युवकार्यं नेष्यते, अपि तु गोत्रकार्यमेव । एतत्सर्वमेतस्मात्सूत्रद्वयाद्यथा न सिध्यति तथा क्रमेण वक्ष्यते ॥

**( उद्योतः )** **सूत्रद्वये**—'गोत्राद्यूनि' 'एको गोत्रे' इति च ॥

( ५२६४ प्रयोजनवार्तिकम् ॥ १ ॥ )

## ॥*॥ उत्पादयितारं प्रत्यपत्ययोगात् तस्य च विवक्षितत्वादेकवचनं गोत्रे ॥ * ॥

**( भाष्यम् )** **उत्पादयितोत्पादयिताऽपत्येन युज्यते । तस्य च विवक्षितत्वात् । उत्पादयितुः स चाभिसम्बन्धो विवक्षितः । उत्पादयितारं प्रत्यपत्ययोगात्तस्य चाभिसम्बन्धस्य विवक्षितत्वात् उत्पादयितुरुत्पादयितुरपत्याभिधानेऽनेकः प्रत्ययः प्राप्नोति । इष्यते चैक एव स्यादिति, तच्चान्तरेण यत्नं न सिध्यतीत्येकवचनं गोत्रे ।**

**एवमर्थमिदमुच्यते ॥**

**( प्रदीपः )** वार्तिककारः प्रयोजनं तावदस्य सूत्रस्य कथयितुमाह—**उत्पादयितारमिति** । प्रतिशब्दो लक्षणे वाक्यकारेण प्रयुक्तः । उ[६]त्पादयितृसामान्यवि[७]वक्षायां च द्विवचनं नाकारि । भाष्यकारेण तु भेदवि[८]वक्षायां वीप्सामाश्रित्य द्विर्वचनं कृतम् ॥ **अपत्ययोगादिति** । अपत्यस्य योग इति कर्तृषष्ठीसमासः । उत्पादयिता चात्र कर्मत्वेन न विवक्षितः, किं तर्हि ? प्रतिशब्दयोगविवक्षायां 'कर्मप्रवचनीययुक्ते द्वितीया' इति द्वितीयया निर्दिष्टः । अन्यथा 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति कर्मणि कृद्योग[९]लक्षणा षष्ठी स्यात् ॥ **तस्य चेति** । सत्यप्यर्थो यदा लोके न विवक्ष्यते तदा नासौ शब्दसंस्कारनिमित्तं भवति । अपत्येन योगस्तु लोके उत्पादयितुरेव विवक्षित इति तन्निमित्तानेकप्रत्ययप्रसङ्ग इत्यर्थः ॥ **एकवचनमिति** । एकस्य प्रत्ययस्य प्रतिपादनमित्यर्थः । यावन्त्यपत्यानि तावतां प्रत्ययानां प्रसङ्गे सति—एक एव प्रत्ययो यथा स्यादित्येवमर्थमित्यर्थः । गोत्र इति च जात्यपेक्षयैकवचनम्, तेन गोत्रसमुदाये प्रत्ययसमुदायो निवार्यते ॥

**( उद्योतः )** **प्रयोजनं तावदिति** । प्रयोजनज्ञानोत्तरं दोषोक्तेरवसर इति प्रथमं तत्प्रतिपादयतीत्यर्थः ॥ ननु भाष्ये—उत्पादयितोत्पादयितेत्युक्तेर्वीप्सायां प्रतिशब्द इत्यवगमात् द्विर्वचनं दुर्वारमत आह—**प्रतिशब्द इति** । उत्पादयितारं लक्षीकृत्यापत्ययोगव्यवहारादित्यर्थः ॥ **भाष्यकारेण त्विति** । वार्तिकं सामान्यविवक्षयेति दर्शयितुमेव तथोक्तमिति भावः ॥ **कर्मत्वेन नेति** । किंतु शेषत्वेनेत्यर्थः । त[१०]था सति 'उभयप्राप्तौ' इति नियमात्कर्तरि षष्ठी न स्यादिति भावः ॥ **प्रतिशब्दयोगविवक्षायामिति** । प्रतिश[११]ब्दद्योत्यलक्ष्यलक्षणभावसंबन्धविवक्षायामित्यर्थः ॥ **अन्यथा**—कर्मत्वेन विवक्षायाम् ॥ ननु 'तस्य च विवक्षितत्वात्' इति हेतुकथनमयुक्तम्, सतो विवक्षाया एव युक्तत्वादत आह—**सत्यपीति** । यथा मातुः स्मरतीत्यादौ कर्मत्वम् ॥ द्वितीयायाः पारिभाषिकैकवचनस्यानन्वयादाह—**एकस्येति** ॥ नन्वेकत्र गोत्रे एकस्यैव प्रत्ययस्य प्रसंगात् नियमानुपपत्तिरत आह—**जात्यपेक्षयेति** । गोत्रपदं गोत्रसमुदायपरमिति वक्तुं युक्तम् ॥

( वार्तिकार्थसमर्थकभाष्यम् )

**कथं पुनर्ज्ञायते—उत्पादयितोत्पादयिताऽपत्येन युज्यते इति ।**

**एवं हि दृश्यते लोके—पितामहस्योत्सङ्गे दारक-**

---

१ कुटी-कुटीरशब्दयोः प्रायोऽवयवसाम्यम्, पुष्य-तारकाशब्दयोश्चात्यन्तमसाम्यम् ॥

२ एकशब्दस्य प्रधानाद्यर्थकत्वमुदाहरणैः साधयति—**एके इत्यादिना** ॥

३ ननु नियमार्थमस्य सूत्रस्यावश्यकत्वेन 'किमर्थम्' इति भाष्यकारीयप्रश्नोऽनुपपन्नः स्यादिति तदाशयं विवृणोति—**क्रियमाणेऽपीति** ॥

४ **मूलप्रकृत्यनन्तरयुवभ्य इति** । मूलप्रकृतेः—गर्गशब्दात्, अनन्तरात्—अनन्तरापत्यप्रत्ययान्ताद्गार्गिशब्दात्, युवप्रत्ययान्तात्—गार्ग्यायणशब्दाद्युवप्रत्ययो न भवतीत्यर्थः ॥

५ '**तस्य चाभिसम्बन्धस्य विव**' इति झ. पाठः ॥

६ ननूत्पादयितृत्वं मातापित्रोरिति वार्तिके द्विर्वचनमावश्यकमित्यत आह—उत्पादयित्रिति ॥

७ 'सामान्यविवक्षया च' इति च. झ. ञ. पाठः ।

८ 'भेदविवक्षया च' इति च. झ. ञ. पाठः ॥

९ '**कृद्योगषष्ठी**' इति झ. पाठः ॥

१० तथा सति—कर्मत्वेन विवक्षायाम् । अपत्यस्येति कर्तरि षष्ठी न स्यादित्यर्थः ॥

११ ननु लक्षणेत्थमिति सूत्रेण न केवलप्रतिशब्दयोगे द्वितीयोच्यते, किन्तु तद्द्योत्ये लक्ष्यलक्षणयोगे; तदाह—**प्रतिशब्देति** ॥

**मासीनं कश्चित्पृच्छति कस्यायं दारक इति । स आह—देवदत्तस्य यज्ञदत्तस्य वेति ।**

**उत्पादयितारं व्यपदिशति नात्मानम् ॥**

( प्रदीपः ) **कथमिति ।** एकमप्यपत्यं पितृपितामहादीनां सर्वेषां सम्बन्धि भवति । तथा च 'अपत्यं पौत्रप्रभृति गोत्रम्' इति सूत्रकारेण सामानाधिकरण्येन निर्देशः कृत इति प्रश्नः ॥ **एवं हि दृश्यत इति ।** शब्दार्थसम्बन्धे लोकव्यवहार एव प्रमाणं नान्यत् । तत्र च प्रष्टृप्रतिवक्त्रोरुत्पादयितृविषये एव प्रश्नप्रतिवचने इति तत एतदवधार्यत इत्यर्थः । 'अपत्यं पौत्रप्रभृति' इति सामानाधिकरण्यं तु गौणमाश्रयिष्यते ॥

( उद्द्योतः ) ननूत्पादयितुरपत्येन संबन्धस्य प्रसिद्धतया किं प्रश्नेनेत्यत आह—**एकमपीति ॥ गौणमिति ।** अपतनहेतुत्वरूपगुणयोगादित्यर्थः ॥

**( प्रयोजनान्तरप्रस्तावकभाष्यम् )**

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ?**

**( ५२६५ सूत्राक्षेपवार्तिकम् ॥ २ ॥ )**

**॥ * ॥ तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् ॥ * ॥**

( भाष्यम् ) **तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो वक्तव्यः । औपगवस्यापत्यमिति ।**

**किं कारणम् ?**

**गोत्रे नियतत्वात् । गोत्रे ह्ययं नियमः क्रियते । तेन यश्चासौ यथाजातीयकश्च गोत्रे प्रत्ययः प्राप्नोति स एकः स्यात् ।**

**कश्च प्राप्नोति ?**

**यः प्रत्ययान्तात् ॥**

( प्रदीपः ) **तत्रेति ।** अनन्तरोक्ते प्रयोजनेऽभिमते सूत्रस्यासामर्थ्यात् 'नापत्यात्' इति वक्तव्यम्, अपत्यप्रत्ययान्तादपत्ये प्रत्ययाभावार्थम् ॥ **गोत्र इति ।** यदा 'एको गोत्रे' इति गोत्रशब्दोपादानेन नियमः कृतः, तदाऽयं प्रतिषेधो वक्तव्यः । यदि तु 'एकोऽपत्ये' इति उच्यते तदाऽपत्यप्रत्ययान्तादपत्ये नैवापरः प्रत्ययः स्यादपत्यजातावेकस्यैव विधानात् । 'एको गोत्रे' इति तूच्यमाने अनन्तरापत्यप्रत्ययान्ताद् गोत्रे प्रत्ययः स्यादेव । तुल्यजातीयापेक्षो हि नियमः, तेन गोत्रप्रत्यय एवापरो निवार्यते । ततश्च गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो मा भूत् । अनन्तरापत्यप्रत्ययान्तात्तु गोत्रे प्रत्ययः स्यादेवेति भावः ॥

**अथवा** यदोत्पादयितैवापत्येन युज्यते न तु पितामहादिः, 'एको गोत्रे' इत्येतच्च नियमार्थम्, तदा यतोऽनेकप्रत्ययप्रसङ्गो गोत्राकृतौ विवक्षितायां तस्मादेक एवेति नियम्यते । अपत्यप्रत्ययान्तादेवं च क्रमेणापत्यपरम्पराविवक्षायामनेकप्रत्ययप्रसङ्गात्तत एवैकाभ्यनुज्ञानद्वारेणानेकनिवारणं स्यादिति भावः ॥ **यश्चासौ यथाजातीयकश्चेति ।** यत्प्रकृतिरित्यर्थः । उभयोपादानं सर्वविशेषयोगप्रतिपत्त्यर्थम् ॥

( उद्द्योतः ) तत्रेत्यस्यार्थमाह—**अनन्तरोक्त इति ।** अनन्तरोक्तेऽभिमते प्रयोजने तत्प्रयोजनसिद्धौ सूत्रस्यासामर्थ्यादित्यन्वयः ॥ 'प्रत्ययान्तात्प्रतिषेधः' इति व्याचष्टे—**नापत्यादिति ।** अपत्यभवप्रत्ययान्तात्रेत्यर्थः ॥ **तेन गोत्रप्रत्यय एवेति ।** गोत्रसामान्ये एक एव प्रत्यय इत्युक्ते तत्रैव नानेक इति वचनव्यक्तेरिति भावः ॥

ननु गोत्रे यदपत्यलक्षणं सामान्यं तदपेक्षे नियमे नायं दोष इत्यरुचेराह—**अथवेति ॥ नियमार्थमिति ।** न तु परमप्रकृतेस्तृतीयादावपत्ये विध्यर्थमिति भावः ॥ ननु विध्यर्थत्वे संभवति कथं नियमार्थत्वमिति चेत्सत्यम्, पराभ्युपगमेनैवमुक्तेः ॥ **यतः**—यस्माच्छब्दात् ॥ **अपत्यप्रत्ययान्तादेव चेति ।** न ह्युपगोस्तृतीयेन संबन्धः, किं त्वौपगवस्यैवेति भावः ॥ युगपदसंभवादाह—**क्रमेणेति ॥ तत एव**—प्रत्ययान्तादौपगवादेरेव । एवं च तृतीये औपगविरिति स्यादेवेति भावः ॥

'यथाजातीयक'शब्दार्थमाह—**यत्प्रकृतिरिति ॥ सर्वविशेषेति ।** 'गर्गादिभ्यो यञ्' इत्यादिविशेषसूत्रविषयप्रतिपत्त्यर्थमित्यर्थः ॥

**( ५२६६ सूत्राक्षेपवार्तिकम् ॥ ३ ॥ )**

**॥ * ॥ परमप्रकृतेश्चोत्पत्तिः ॥ * ॥**

( भाष्यम् ) **परमप्रकृतेश्चोत्पत्तिर्वक्तव्या । अयोगाद्धि न प्राप्नोति ॥**

( प्रदीपः ) **परमप्रकृतेरिति ।** गर्गादेरित्यर्थः ॥ **अयोगादिति ।** उत्पादयितर्यपत्ययुक्ते गर्गस्य पौत्रादिनाऽपत्यापत्यवत्संबन्धाभावात्प्रत्ययो न प्राप्नोति । यद्यपि 'गर्गादिभ्यो यञ्' इति विधानसामर्थ्याद् गर्गादिभ्यो गोत्रप्रत्ययाः सिध्यन्ति तथाऽपि येऽणादयोऽनन्तरापत्ये सावकाशास्ते परमप्रकृतेरुपग्वादेर्गोत्रे न प्राप्नुवन्तीति विवक्षितम् ।

**अथोच्यते**—'एको गोत्रे' इत्येतत्परमप्रकृतेर्विध्यर्थं भवि-

१ 'कश्चित्कंचित्पृच्छति' इति क. च. झ. ञ. पाठः ॥

२ 'तत्र प्रष्टृ' इत्येव पाठः क. पुस्तके ॥

३ 'तत एवावधा' इति क. पाठः ॥

४ अपतनहेतुत्वरूपगुणयोगात्पौत्रादावपि अपत्यशब्दव्यवहारो लक्षणयेति भावः ॥ पङ्क्तिविंशतीति सूत्रे भाष्ये 'अपतनादपत्यम्' इत्युक्तम् । अपत्यशब्दस्य पौत्रादौ व्यवहारस्वीकारादेव 'अपत्यंपौत्रप्रभृति गोत्रम्' इति सूत्रं स्वरसतः सङ्गच्छते ॥

५ 'गोत्रेष्वयं' इति क. पाठः ॥

६ 'गोत्रप्रत्ययः' इति छ. पाठः ॥

७ अनन्तरोक्ते प्रयोजने—अनेकः प्रत्ययः प्राप्नोति, इष्यते चैक एव स्यादित्येतत्प्रयोजनम् ॥

८ 'विवक्षायां' इति क. ॥

९ 'देव क्रमे' इति क. ॥

१० 'गर्गादिरित्यर्थः' इति क. ॥

११ 'इति सामर्थ्यात्' इति क. ॥

ष्यति—इति, नियमस्तर्हि न प्रकल्प्येत । ततश्चापत्यमालायां प्रत्ययमालाप्रसङ्गः ॥

ननु परमप्रकृतेः प्रत्ययोत्पत्तावुच्यमानायामपि प्रकृतिप्रत्ययार्थयोः परम्परायोगस्तदवस्थ एवेति प्रयोगो नैव स्यात्[2] । नैष दोषः । पारम्पर्येण संबन्धसद्भावात्प्रयोगो भविष्यति । साक्षात्संबन्धे तु प्रत्ययस्य चरितार्थत्वाद् गौणसंबन्धाश्रयेणोत्पत्तिर्न स्यादिति वक्तव्या ॥

( उद्द्योतः ) परमप्रकृतिशब्देनापत्यप्रत्ययरहित उच्यते ॥ विध्यर्थमिति । [3]एकशब्दः प्रथमवाची, प्रथमः=प्रकृतिभूतः शब्दो गोत्रे प्रत्ययमुत्पादयतीत्यर्थ इति भावः ॥ नन्वेवमेव प्रत्ययोऽपि [4]वचनं विना भविष्यतीत्यत आह—साक्षात्संबन्धे त्विति ॥

( द्वितीयतृतीयपञ्चमवार्तिकाक्षेपभाष्यम् )

**एतयोश्चैवं[5] परिहारः, 'पठिष्यति ह्याचार्यः—यूनि चान्तर्हितेऽप्राप्तिरिति' तस्य च—**

**यथा तत्प्रत्ययान्तम् ।**

**यथा तदेव विकारावयवप्रत्ययान्तं द्वितीयं च तृतीयं च विकारं संक्रामति, एवमिहापि तदेवापत्यप्रत्ययान्तं द्वितीयं च तृतीयं चापत्यं संक्रमिष्यति ॥**

( प्रदीपः ) इदानीमेतद्दोषद्वयं वक्ष्यमाणेन दोषेण सह परिहर्तुमाह—**एतयोश्चेति** । चशब्दो वक्ष्यमाणापेक्षया समुच्चयार्थः ॥ **तत्प्रत्ययान्तमिति** । 'ञितश्च तत्प्रत्ययात्' इत्येतत्सूत्रं प्रत्याख्यायते । यो हि कपोतस्य तदवयवस्य तद्विकारस्य वाऽवयवो विकारो वा सोऽभेदोपचारात् कापोतस्याप्यवयवो विकारश्च भवतीति कापोत एव भविष्यतीति नार्थो मयड्बाधनार्थेन 'ञितश्च तत्प्रत्ययात्' इत्यनेन सूत्रेण । तत्र यथा कपोतस्य, विकारावयवाभ्यामभेदोपचारात् कापोतस्य वेत्युभयथेष्टं सिध्यति, तथेहाप्युपग्वौपगवयोरौपगवतदपत्ययोर्वाऽभेदोपचारात्पौत्रप्रभृतिरौपगवशब्देनाभिधास्यते । गार्ग्यायणापत्यं च गार्ग्यायणशब्देनेति दोषत्रयमपि परिहृतम् ॥

( उद्द्योतः ) **वक्ष्यमाणेति** । 'यूनि चान्तर्हितेऽप्राप्तिः' इति । एतयोः पूर्वपक्षयोः, यच्च पठिष्यत्याचार्यो यूनि चान्तर्हितेऽप्राप्तिरिति तस्य च परिहारो **यथा तत्प्रत्ययान्तमिति** भाष्येऽन्वयः ॥ ननु 'ञितश्च' इत्यनेन प्रत्ययान्तरविधानेऽपि रूपभेदाभावात् युक्तं यत्—तदेव द्वितीयाद्युपसंक्रामतीति, इह तु रूपाभेदसाधकप्रत्ययान्तराभावात्कथं तदुपपद्यत इति तत्प्रत्याख्यानाभिप्रायेणाह—**ञितश्चेति** ॥ तृतीयदोषपरिहारप्रकारमाह—**गार्ग्यायणापत्यं चेति** । तयोर्भेदविवक्षा त्वनभिधानान्नेति नानिष्टम् ॥

( प्रत्याक्षेपभाष्यम् )

**भवेत्सिद्धम्—औपगवस्यापत्यमौपगवः[6], यत्र स एवानन्तर इष्यते स एव गोत्रे ॥**

**इदं तु खलु न सिध्यति—गर्गस्यापत्यं गार्ग्य इति । अत्र ह्यन्योऽनन्तर इष्यते, अन्यो गोत्रे ॥**

( प्रदीपः ) अस्य परिहारस्याव्याप्तिं दर्शयितुमाह—**भवेदिति** ॥ **अत्र ह्यन्य इति** । यदि गार्गौ गर्गत्वमारोप्यते तदा गार्गिरेव भेदसंबन्धस्य निवृत्तत्वाद्गर्गशब्दवाच्य इति गार्गेरपत्यं गार्गिरेव स्यात्, गार्ग्यश्चेष्यते । अथ गार्गितदपत्ययोरभेदाध्यवसायः, तथाऽपि गार्गेरपत्यं गार्गिः प्राप्नोति । यद्यपि 'गर्गादिभ्यो यञ्' इति वचनसामर्थ्याद् गार्ग्यः स्यात्, तथाऽपि गार्गिरपि स्यात् । तस्मादपत्यविषये दोषवानभेदोपचार इति भेद एवाश्रयणीयः । तथा च प्रत्ययान्तात्प्रतिषेधः, परमप्रकृतेश्चोत्पत्तिर्वक्तव्येति स्थितमेतत् ॥

( उद्द्योतः ) **गार्गिरपि स्यादिति** । भेदविवक्षायां यथेष्टं सिद्धेऽप्यभेदोपचारादनिष्टमपि प्राप्नोतीत्यर्थः ॥

( ५२६७ सूत्राक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ स्त्रियां चानियमः ॥ * ॥**

( भाष्यम् ) **स्त्रियां च युवत्यां नियमो न प्राप्नोति—औपगवी माणविका[7] ।**

**नियमाद्धि स्त्री पर्युदस्यते, 'एको गोत्रे' 'गोत्राद्यून्यस्त्रियाम्' इति ॥**

( प्रदीपः ) **स्त्रियां चेति** । चशब्दो दोषसमुच्चयार्थः । [8]तत्रानन्तरापत्यस्त्रियां गोत्रस्त्रियां चानियमप्रसङ्गाभावात्सामर्थ्यात्पौत्रप्रभृतेरपत्यं [9]स्त्री गृह्यते । युवसंज्ञया गोत्रसंज्ञाया एकसंज्ञाधिकारे [10]'वृद्धं युवा' इति वचनात्[11]तुशब्दाद्वा नियमार्थाद्बाधितत्वात् स्त्रियाः पौत्रप्रभृतेरपत्य[12]स्य गोत्रसंज्ञा नास्तीति 'एको गोत्रे' इत्येष नियमो [13]नास्ति । अस्त्रियामिति निषेधाद् 'गोत्राद्यूनि'

---

1 'परस्परायोगः' इति च. ञ. पाठः । स च स्पष्टार्थः ॥ परम्परायोग इत्यस्य च प्रकृतिप्रत्ययार्थयोः साक्षाद्योग एव नास्ति किन्तु परम्परयैव योग इति प्रत्यय एव न स्यादित्यर्थः । वस्तुतस्तु पूर्वोत्तरग्रन्थविमर्शे तु 'परस्परायोगः' इत्येव पाठो ग्रन्थकृतामिति प्रतीयते । अत एव साक्षात्सम्बन्धाभावेऽपि पारम्पर्येण सम्बन्धसद्भावात्प्रत्ययः स्यादित्युत्तरितम् ॥

२ 'न स्यात्' इत्येव झ. पाठः ॥

३ 'एको गोत्रे' इति सूत्रस्य विध्यर्थत्वे तस्यार्थमाह—एकशब्दः प्रथमवाचीति ॥

४ 'वचनेन विना' इति ख. घ. ग. झ. पुस्तकेषु पाठः ॥

५ 'श्चैष प' इति क. झ. पाठः ॥

६ अत्र हि औपगवस्यापत्यमित्यर्थे औपगवशब्दान्न प्रत्ययः किन्तु अभेदोपचारादुपगोरनन्तरापत्ये गोत्रे वा समानमेव रूपम् । अत उपगोरर्थद्वयेऽपि अणेव प्राप्नोति । गर्गशब्दात्तु गर्गादिभ्यो यञित्यस्य गोत्रे विहितत्वेनानन्तरापत्ये इञ्, गोत्रे च यञ्—इति रूपभेद इत्याशयः ॥

७ 'औपगीयं माणविका' इति क. पाठः ॥

८ नियमाभावमुपपादयति—तत्रेति । गोत्रस्त्रियां नियमसत्वेन युवत्यामेवानियमप्राप्तिरिति भावः ॥

९ युवसंज्ञावदपत्यं स्त्रीरूपं गृह्यत इति शेषः ॥

१० एकसंज्ञाधिकारे=आकडारसूत्रे अपत्यं वृद्धं युवसंज्ञा बाधते इत्यर्थकाद् 'अपत्यं वृद्धं युवा' इति वार्तिकवचनादित्यर्थः ॥

११ ननु सिद्धान्ते गोत्रयुवसंज्ञयोरेकसंज्ञाधिकारे पाठाभावेन नायम्बाधकत्वे हेतुर्युज्यते—इत्यत आह—तु शब्दाद्वेति ॥

१२ युवसंज्ञकस्यापत्यस्येति शेषः ॥

१३ पौत्रप्रभृतेः स्त्रीरूपापत्यस्य युवसंज्ञावतः गोत्रसंज्ञाभावेन एको गोत्र इत्यस्य च गोत्र एव नियमकरणात्स्त्रियां युवत्यां नियमो न प्राप्नोतीति भावः ॥

इत्यपि नास्ति नियमः, तथा च स्त्रियां विवक्षितायामनेकप्रत्ययप्रसङ्गः । औपगवस्यापत्यं स्त्रीति 'अत इञ्' इतीञ् प्राप्नोति । 'इतो मनुष्यजातेः' इति ङीष्–अत इञन्तान्न प्राप्नोति । 'गोत्रं च चरणैः सह' इत्यत्र शास्त्रीयस्य गोत्रस्य ग्रहणात्, स्त्रियाश्चास्या गोत्रसंज्ञाया अभावात् । एतच्च 'इञ उपसंख्यानमजात्यर्थम्' इत्येतदनपेक्ष्यैवोदाहृतम् । गोत्रलक्षणश्च यञादिः पौत्र्यामेव स्यात् । अजीवद्वंश्यायां च स्त्रियां पौत्रप्रभृतेरपत्ये । जीवद्वंश्यायां तु न स्यात् । अपत्यसामान्यलक्षण एव तु स्यात् ॥ **नियमादिति** । सामान्यापेक्षमेकवचनम्, नियमद्वयादित्यर्थः ॥

( उद्द्योतः ) **चशब्द इति** । पूर्वोक्तस्य[3] दोषद्वयस्य स्थितत्वादिति भावः ॥ ननु वार्तिके 'स्त्रियां च' इति सामान्योक्तेर्भाष्ये 'स्त्रियां युवत्याम्' इति विशेषकथनं निर्बीजमत आह—**तत्रानन्तरेति** । अनन्तरापत्यस्यैकत्वात्तत्रानियमप्रसंगाभावः, गोत्रस्त्रियां तु 'एको गोत्रे' इति नियमात्तदभाव इत्यर्थः ॥ ननु 'अनन्तरस्य' इति न्यायेन 'अस्त्रियाम्' इति 'गोत्राद्यूनि' इत्यस्यैव निषेधे इति भाष्ये 'एको गोत्रे' इत्यभिधानमयुक्तमत आह—**युवसंज्ञयेति** ॥ **तुशब्दाद्वेति** । 'जीवति तु' इत्यत्र तुरवधारणार्थः । युवैव, न गोत्रमित्यर्थ इति भावः ॥ नन्विञ्यपि 'इतो मनुष्य' इति ङीषि–औपगवी माणविकेति सिध्यति, स्वरे च नास्ति विशेषः–अणन्तान्ङीपि, इञन्तान्ङीषि वेत्यत आह—**इतो मनुष्येति** ॥ **अत इञन्तादिति** । युवापत्यवाचकादस्मादिञन्तादित्यर्थः ॥ नन्वजात्यर्थमुपसंख्यानमस्त्येवेत्यत आह—**एतच्चेति** ॥ दोषान्तरमाह—**गोत्रलक्षण इति** । एवञ्च तदपेक्षायामपि न दोष इत्यर्थः ॥ **पौत्र्यामेवेति** । वचनसामर्थ्याद्गोत्रे गर्गादिभ्यो भवन्यञादिः स्त्रीत्वे पौत्र्यामेव स्यात् । एवं च तत्र सावकाशोऽयमित्यर्थः ॥ अवकाशान्तरमप्याह—**अजीवद्वंश्यायाञ्चेति** । पौत्रप्रभृत्यपत्यभूतायामजीवद्वंश्यायाम्–अत एव गोत्रभूतायां स्त्रियामित्यर्थः ॥ **जीवद्वंश्यायां त्विति** । युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः । सिद्धान्ते तु स्त्रियां युवसंज्ञाया अभावात्स एवेष्यत इति तात्पर्यम् ॥ **सामान्यलक्षणः**=इञादिः ॥

**( पक्षविशेषेण दोषोपपादकं भाष्यम् )**

**कतरस्मिन् पक्षेऽयं दोषः ?**

**उत्पादयितर्यपत्ययुक्ते ॥**

**उत्पादयितरि तावत् अपत्ययुक्ते न दोषः । उत्पादयितरि ह्यपत्ययुक्ते न सर्वेत उत्पत्त्या भवितव्यम् । तत्र नियमो नोपपद्यते । असति नियमे नैष दोषः ॥**

**सर्वेषु तर्ह्यपत्ययुक्तेष्वयं दोषः ।**

**सर्वेषु तर्ह्यपत्ययुक्तेषु सर्वेत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति च नियम एष दोषः ॥**

( प्रदीपः ) **कतरस्मिन्निति** । येनोद्भावितो दोषस्तदीयोऽयं न प्रश्नः, विरोधात् । किन्तर्हि ? पक्षविभागदर्शनेन भाष्यकारोऽनन्तरोक्तमेवार्थं प्रश्नपूर्वकं विवृणोति—**उत्पादयितरि तावदिति** ॥ 'अनियमः' इति यदुक्तं तत्र वाक्छलमुद्भावयति । यदोत्पादयितुरेवापत्येन योगो नान्यस्य, तस्मिंश्च विवक्षिते एकस्या एव प्रकृतेरेक एव प्रत्ययः प्राप्नोति न त्वनेकस्तदा सूत्रद्वयं नैव नियमार्थम्, किं तर्हि ? विध्यर्थमिति–किमुच्यते स्त्रियां चानियम इति । प्रत्ययमालाप्रसङ्गदोषस्तु गोत्रलक्षणप्रत्ययाप्रसङ्गदोषश्च स्थित एव ॥ **सर्वेष्विति** । वक्ष्यमाणेन न्यायेन सर्वेऽपत्येन युज्यन्त इति पक्षोपपत्तिः ॥

( उद्द्योतः ) **विरोधादिति**[11] । 'पितुरेवापत्यम्' इति पक्षमुपक्षिप्य तत्रैव दोषमभिधाय तस्यैव प्रश्नो व्याहत इत्यर्थः ॥ **अनन्तरोक्तमेवेति** । स्त्रियां नियमद्वयाप्रवृत्तेरनेकप्रत्ययप्रसंगरूपानियमः, गोत्रलक्षणश्च यञादिरिति चोक्तम्–अर्थमित्यर्थः[12] ॥ **वाक्छलमिति** । [13]सामान्येनोक्तेऽर्थे वक्त्रभिप्रेतादर्थादर्थान्तरकल्पनया बाधोक्तिः–**वाक्छलम्** । प्रकृते च नियमेन स्त्रिया गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीत्येवंरूपस्य वक्तुर्विवक्षिताऽनियमशब्दार्थस्य 'एको गोत्रे' 'गोत्राद्यूनि' इति नियमशास्त्राप्राप्तिरित्यन्यथाकरणेन दोषोद्भावनं क्रियत इत्यर्थः ॥ **विध्यर्थमिति** । उपगुशब्दात्तृतीयादावपत्ये प्रत्ययाप्राप्तेः 'एको गोत्रे' इति विध्यर्थम् । एवं गोत्रान्तात्पञ्चमादौ यूनि विध्यर्थं [14]परं सूत्रम् ॥ **किमुच्यत इति** । नियमस्यैवाभावात् 'स्त्रियां नियमो न प्राप्नोति' इति किमुच्यत इति भावः ॥ ननु तर्हि विधिपक्ष एवाश्रीयतामत आह—**प्रत्ययमालेति** । [15]अयं दोषस्तु स्थित एव, गोत्रलक्षणेत्यादिदोषश्च स्थित एवेत्यन्वयः ॥

---

१ गोत्रञ्च चरणैः सहेत्यत्र शास्त्रीयगोत्रस्यैव ग्रहणेन औपगवस्यापत्यं स्त्रीति विवक्षायामिञि प्रत्यये तस्य युवसंज्ञकस्यापेक्षितत्वेन गोत्रसंज्ञाभावाच्छास्त्रीयगोत्रत्वाभावेन जातित्वाभावादिञन्तान्न ङीषित्यर्थः ॥

२ स्त्रियाश्चास्या' इति क. पाठः ॥

३ 'च शब्दो दोषसमुच्चयार्थः' इत्यत्र कैः सह समुच्चय इत्यपेक्षायामाह—पूर्वोक्तस्येति ॥

४ एकस्मिन्नपत्यरूपेऽर्थेऽनेकप्रत्ययस्याविधानादनियमप्रसङ्गाभाव इति भावः ॥

५ गोत्राद्यूनीति सूत्रे–अस्त्रियामिति योगविभागेन स्त्रियां युवसंज्ञाया निषेधः क्रियते । स च निषेधोऽनन्तरस्येति न्यायेन गोत्रादित्यस्यैवेति भावः ॥

६ 'अत इञन्तात्' इति कैय्यटस्थातःशब्दार्थमाह—युवेति ॥

७ 'स्त्रियां युव' इति झ. ख. पाठः ॥

८ 'उत्पादयितर्यपत्ययुक्ते तावन्न दोषः' इत्येवं शब्दवैपरीत्येन पाठः क-पुस्तके ॥

९ 'पक्षप्रविभाग' इति च. झ. ञ. पाठः ॥

१० 'पत्येन गोत्रयोग' इति क. पाठः ॥

११ विरोधमुपपादयति—पितुरेवेति । पितुरेवापत्यमिति पक्षमुद्भावयितुर्नायम्प्रश्नः सम्भवति, तेनैव तत्पक्षस्य दोषदानेन पराहतत्वादिति भावः ॥

१२ प्रदीपकृताऽनन्तरमेवोक्तमर्थमित्यर्थः ॥

१३ वाक्छलस्य स्वरूपमाह—सामान्येनेति ॥

१४ परं=गोत्राद्यूनीति द्वितीयं सूत्रमित्यर्थः ॥

१५ 'प्रत्ययमालाप्रसङ्गदोषस्तु गोत्रलक्षणप्रत्ययाप्रसङ्गदोषश्च' इत्येवं कैयटग्रन्थ उपलभ्यते । एतादृशे पाठे तुशब्दस्यानुपपत्तिस्तद्वारणाय ग्रन्थसङ्गतिमाह—अयन्दोषस्त्विति ॥

( उत्पादयितर्यपत्ययुक्ते दोषान्तरबोधकम्भाष्यम् )

**उत्पादयितरि चापत्ययुक्ते स्त्रिया युवत्या अभिधानं न प्राप्नोति ।**

**किं कारणम् ?**

**गोत्रसंज्ञां[1] युवसंज्ञा बाधते । गोत्राद् यूनि चास्त्रियां प्रत्ययो विधीयते ॥**

( प्रदीपः ) इदानीं वाक्छलं परिहरति—**उत्पादयितरि चेति** । चशब्दो न केवलं पक्षान्तरे, यावदस्मिन्नपीत्यस्यार्थस्य द्योतनार्थः ॥ **अभिधानं न प्राप्नोतीति** । गोत्रविषयेण यञादिप्रत्ययेनेत्यर्थः । अयमेवात्रानियमो विवक्षितः । 'एको गोत्रे' इत्येतन्नियमपूर्वकं स्त्रिया गोत्रप्रत्ययेनाभिधानं न प्राप्नोतीत्येषोऽर्थोऽत्र विवक्षित इत्यर्थः ॥

(उद्द्योतः) **इदानीं वाक्छलमिति** । स्वाभिप्रायप्रकाशनद्वारेत्यर्थः ॥ ननु स्त्र्यादिशब्दैर्युवत्या अभिधानसंभवादाह—**गोत्रविषयेणेति** ॥ **अयमेवात्रेति** । न तु नियमशास्त्राप्राप्तिरूप इति भावः ॥ **नियमपूर्वकमिति** । नियमोऽपि न सिध्यति, अभिधानं चेत्यर्थः ॥ भाष्ये—**अभिधानं न प्राप्नोति**—इत्यस्य तयोः शास्त्रयोर्नियमत्वपूर्वकं गोत्रविहितयञाऽभिधानं न प्राप्नोतीत्यर्थः । अनयोर्विधित्वेऽपि गोत्रसंज्ञायां बाधादभिधानाप्राप्तिरिति भावः । तथा गार्ग्यप्रकृतिकफकाऽपि स्त्रिया युवत्या अभिधानं न प्राप्नोति । तदाह—भाष्ये—**गोत्राद्यूनि चास्त्रियां प्रत्ययो विधीयते**—इति ॥

( ५२६८ सूत्राक्षेपवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ यूनि चान्तर्हितेऽप्राप्तिः ॥ * ॥

( भाष्यम् ) **यूनि चान्तर्हिते नियमस्याप्राप्तिः । गार्ग्यायणस्यापत्यमिति ॥**

( प्रदीपः ) **यूनि चेति** । चतुर्थादिना व्यवहिते पञ्चमादावित्यर्थः ॥

( उद्द्योतः ) **नियमस्याप्राप्तिरिति** । नियमपूर्वकं गोत्रप्रकृतिकयुवप्रत्ययेनाभिधानाप्राप्तिरित्यर्थः ॥

( पक्षविशेषाश्रयेण दोषोपपादकं भाष्यम् )

**कतरस्मिन् पक्षेऽयं दोषः ?**

**सर्वेष्वपत्ययुक्तेषु । सर्वेषु अपत्ययुक्तेषु तावन्न दोषः । सर्वेषु ह्यपत्ययुक्तेषु सर्वत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः ॥**

**उत्पादयितरि तर्ह्य[2]पत्ययुक्तेऽयं दोषः । उत्पादयितरि तर्ह्यपत्ययुक्ते परमप्रकृतेरनन्तराद् गोत्राच्चायोगान्न प्राप्नोति ॥**

( प्रदीपः ) अत्रापि पूर्ववत्प्रश्नपूर्वकं पक्ष[3]विभागेन विवरणं कर्तुमाह—**कतरस्मिन्निति** ॥ **तत्र नियम इति** । गोत्रादेव यूनीति भावः ॥ **परमप्रकृतेरिति** । पञ्चमस्य[4] त्रिभिरपत्यापत्यवत्सम्बन्धाभावादित्यर्थः ॥

( उद्द्योतः ) **पक्षविभागेनेति** । पितुरेवापत्यमिति पक्षे वार्तिकप्रवृत्तिं वक्तुमित्यर्थः ॥ भाष्ये—**सर्वत इति** । मूलप्रकृत्यनन्तरापत्यप्रत्ययगोत्रप्रत्यययुवप्रत्ययान्तादित्यर्थः ॥ तत्र[5] 'एको गोत्रे' इति नियम उपपन्न इति भ्रान्तिं व्युदस्यति—**गोत्रादेवेति** ॥ ननु पञ्चमस्य गर्गादिनैकदेशावस्थानादिरूपसंबन्धसद्भावादाह—**पञ्चमस्य त्रिभिरिति** । **यूनि चान्तर्हितेऽप्राप्तिरि**त्यस्य नियमाप्राप्तिरिति नार्थः, किंतु प्रत्ययाप्राप्तिरित्यर्थ इति तात्पर्यम् ॥

( दोषसमुच्चायकम्भाष्यम् )

**यूनश्च न प्राप्नोति ।**

**किं कारणम् ?**

**गोत्रादिति नियमात् ॥**

( प्रदीपः ) **यूनश्चेति** । चतुर्थादित्यर्थः ॥ **गोत्रादिति** । चतुर्थस्य युवत्वाद्गोत्रसंज्ञाया अभावः[6] ।

**ननू**त्पादयितर्यपत्ययुक्ते नियन्तव्यस्याभावाद् 'गोत्राद्यूनि' इति विध्यर्थं भविष्यति । तत्रानन्तरे यूनि[7] गोत्रात्सिद्ध एव प्रत्यय इति व्यवहिते[8] यूनि गोत्रेण तस्यायोगादप्राप्तः प्रत्ययो विधास्यते । तत्किमुच्यते—'यूनि चान्तर्हितेऽप्राप्तिः प्रत्ययस्य' इति ?

**उच्यते**—उत्पादयितर्यपत्ययुक्ते गोत्रसमुदाये प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थम् 'एको गोत्रे' इति सूत्रं यथा नियमार्थम्, एवं युवसमुदाये युवसामान्ये वा युवशब्देनोच्यमाने गोत्रादगोत्राच्च प्रत्ययप्रसङ्गे–गोत्रादेव यूनि–इति नियमे क्रियमाणे विध्यर्थत्वाभावाद्युक्तमुक्तम्—'यूनि चान्तर्हिते' इति ॥

( उद्द्योतः ) **नियन्तव्यस्येति** । नियमेन व्युदस्यस्येत्यर्थः । एक[10]स्मादेकस्यैव प्रत्ययस्य प्रसंगादगोत्रात्परमप्रकृत्यनंतरापत्यरूपाद्यूनि [9]भावः ॥

१ 'गोत्रसंज्ञाया युवसंज्ञया बाधा' इति ख. ग. घ. झ. पाठः ॥

२ 'उत्पादयितरि ह्यपत्ययुक्ते' इति छ. ॥

३ 'पक्षप्रविभाग' इति च. झ. ञ. पाठः ॥

४ पञ्चमस्य चतुर्थेनापत्यापत्यवत्सम्बन्धो न तु प्रथमैस्त्रिभिरिति भावः ॥

५ 'तत्र नियम उपपन्नो भवति' इति भाष्ये नियमपदेन 'एको गोत्रे' इत्यस्य न ग्रहणम्, किन्तु 'गोत्राद्यून्यस्त्रियाम्' इत्यस्य ग्रहणम् । सर्वत उत्पत्त्या 'एको गोत्रे' इति नियम उपपद्येतापि, यूनि चान्तर्हितेऽप्राप्तिरिति दोषोऽपि तदवस्थः स्थीयेतात आह—तत्रेति ॥

६ 'अभावात्' इति क. पाठः ॥

७ गोत्रप्रत्ययान्तादनन्तरे यूनीति शेषः ॥

८ गोत्रप्रत्ययान्तादनन्तरापत्यप्रत्यये कृते तस्माद्यूनि प्रत्ययो व्यवहित इति भावः ॥

९ एकस्यैव प्रत्ययस्य प्राप्तेर्नियमेन व्युदस्यः कोऽप्यन्यो नास्तीत्यर्थः ॥

१० एकस्मादिति । उत्पादयितर्यपत्ययुक्ते इति भावः । गोत्राद्यूनीति सूत्रस्य नियन्तव्यमाक्षिप्य परिहरति—एकस्मादित्यादिना । अस्मिन् पक्षे उत्पादयितुरेवापत्यप्रत्ययेन योगात्सर्वस्मादेकस्यैव प्रत्ययस्य प्रसङ्गः । अतो गोत्रप्रत्ययान्तभिन्नाद्युवप्रत्ययस्याप्रकृतिभूतादनन्तरापत्यप्रत्ययान्तात्तृतीयस्य युवसंज्ञाभावेन तस्माद्यूनि प्रत्ययो न प्राप्नोति तथाऽपि अनन्तरापत्यप्रत्ययान्ताद्गोत्रप्रत्ययभिन्नेऽपत्यप्रत्यये कृते तस्माच्चतुर्थे वाच्येऽगोत्राद्युवप्रत्ययः स्यात् । स च गोत्राद्यूनीति सूत्रेण नियन्तव्य इत्यपि न । उत्पादयितर्यपत्ययुक्ते पक्षे गोत्रागोत्राभ्यामपत्यप्रत्ययो न प्राप्नोति किन्तु अगोत्रप्रत्ययान्तादेव प्राप्नोतीति न नियमार्थकत्वम्, 'गोत्राद्यूनि' इति सूत्रस्येत्याशयः ॥

प्रत्ययाप्राप्तेर्यद्यपि युवाऽपत्यप्रत्ययान्तात्प्राप्नोति, तथाऽपि तस्यां व्यक्तौ गोत्रागोत्राभ्यामप्राप्त्या नियमानुपपत्तिरिति भावः ॥ यथा नियमार्थमिति । परेण स्वीकृतमित्यर्थः । तदभ्युपगमानुसारेण दूषणदानमिति तात्पर्यम् । प्रत्ययविधित्वे तु युवप्रत्ययान्तादपि युवप्रत्ययप्रसंगो दोष इति बोध्यम् ॥ युवसमुदाय इति । तदभिप्रायमेव सूत्रे एकवचनमिति भावः ॥ युवसामान्ये वेति । जातावेकवचनमिति भावः ॥ अगोत्रादिति । युवप्रत्ययान्तरूपादित्यर्थः ॥

( द्वितीयपक्षोपपादकभाष्यम् )

**सन्तु तर्हि सर्वेऽपत्ययुक्ता इति ।**

**कथं पुनर्ज्ञायते सर्वेऽपत्ययुक्ता इति ?**

**एवं हि याज्ञिकाः पठन्ति—दशपुरुषानूकं यस्य गृहे शूद्रा न विद्येरन् स सोमं पिबेदिति ।**

**यदि च सर्वेऽपत्ययुक्ता भवन्ति, तत एतदुपपन्नं भवति ॥**

( प्रदीपः ) सन्तु तर्हीति । तेन व्यवहितेऽपि यूनि गोत्रादेवेति वचनाद् गोत्रप्रत्ययो भविष्यतीति नास्त्ययं दोषः—'यूनि चान्तर्हिते' इति ॥ दशपुरुषानूकमिति । अनुपूर्वात्कायतेः—अनूकानमनुक इति 'घञर्थे कविधानम्' इति कः । 'अन्येषामपि' इति दीर्घत्वम् । दशपुरुषा अस्मिन्ननूके इति बहुव्रीहिः । दशपुरुषोऽनूकोऽस्मिन्निति पुनर्बहुव्रीहिः । दशपुरुषानुसंशब्दनम्, दशसु पुरुषेष्विति यावत् ॥ शूद्रा इति । विवाहिताः ।

शूद्रा वेदी पतत्यधः ।

इति वचनात्पातहेतुः शूद्रा । एकस्मिंश्च पतिते सर्वेषां पात इत्येतद्दशपुरुषानूकशब्देनोक्तं भवति । ततश्चार्थादेकस्यैव सर्वान् प्रत्यपातहेतुत्वादपत्यत्वमित्युक्तं भवति ॥

नन्वेकस्यैवापत्योत्पत्तौ व्यापारात्कथं तेनान्येषां सम्बन्धः ? क्रियागर्भो हि सर्वत्र सम्बन्धो नान्यथेति—उद्घुष्यते ।

नैष दोषः । पुत्रोत्पादनमेव पौत्राद्युत्पत्तौ व्यापारः, तदन्तरेण तस्यासम्भवात् । 'अपत्यं पौत्रप्रभृति' इति मुख्यं सामानाधिकरण्यमस्मिन् पक्ष उपपद्यते । पूर्वत्र तु पक्षे गौणं सामानाधिकरण्यं स्यात्, अपत्यापत्यस्यापत्यत्वोपचारात् ॥

( उद्द्योतः ) सर्वेष्वपत्ययुक्तेषु यथाऽनन्तरोक्तदोषाभावस्तथाऽऽह—तेनेति । परमप्रकृतेश्चोत्पत्तिर्वक्तव्येत्ययमपि दोषो नास्तीत्यपि बोध्यम् ॥ अनूकानं—शब्दः ॥ अनूकेऽस्मिन्निति । शब्दोऽन्यपदार्थः ॥ अनूकोऽस्मिन्निति । वाचकत्वेनेत्यर्थः । दशपुरुषसमुदायोऽन्यपदार्थः ॥ तत्फलितमाह—दशपुरुषानुसंशब्दनमिति ॥ भाष्ये—दशपुरुषानूकमिति—यावद्योगे द्वितीया, ननु दासीत्वेन शूद्रायां सत्यामपि सोमपानदर्शनादाह—विवाहिता इति ॥ ननु चातुर्वर्ण्यविवाहस्मरणान्न दोषोऽत आह—शूद्रावेदीति । शूद्राप्रथमवोढेत्यर्थः । 'पतत्यत्र' इति पाठे 'अत्र' इत्यस्य नरकविशेष इत्यर्थः ॥ भाष्ये—यस्य गृह इति । कुले इत्यर्थः । तत्र षष्ठ्यर्थोऽपत्यापत्यवत्संबन्धः । अनेन सर्वान्प्रत्यपत्यत्वं बोधितम् । दशपुरुषाणां मध्ये कस्य चित् पातेन चास्य पात उक्तः । स च दशपुरुषाणामस्य संबन्धे सत्येव, संबन्धश्चापत्यापत्यवद्भाव एव, नान्यः; असंभवादित्यपि बोध्यम् ॥ नन्वेवमपि सर्वेऽपत्ययुक्ता इत्यर्थस्य कथं सिद्धिरत आह—एकस्मिंश्चेति ॥ क्रियागर्भेति । जन्यजनकभावाद्युपयोगिक्रियाकृत इत्यर्थः ॥

( पूर्वपक्षोक्तदोषनिरासभाष्यम् )

**कथम्—यदुक्तम्—'पितामहस्योत्सङ्गे दारकमासीनं कश्चित्पृच्छति कस्यायमिति, स आह देवदत्तस्य यज्ञदत्तस्य वेति, उत्पादयितारं व्यपदिशति नात्मानम्' इति ।**

**उत्पत्तिस्तस्य विवक्षिता ।**

**सर्वेषां न इदमपत्यम्, देवदत्तस्त्वस्योत्पादयितेति ॥**

( प्रदीपः ) उत्पत्तिस्तस्येति । सामान्यशब्दस्यापि क्वचिद्विशेषे वृत्तिदर्शनात् । यथा गोमण्डले व्यवस्थितं गोपालकं कश्चित्पृच्छति गां पश्यसीति ॥ सर्वेषामिति । यदा गर्गस्य पौत्रप्रभृति सर्वेषां गर्गगार्गिगार्ग्याणामपत्यं भवति तदा गार्गिगार्ग्याभ्यां प्रत्ययो मा भूद् गर्गशब्दादेव यथा स्यादिति—एवमर्थम् 'एको गोत्रे' इत्येतदित्यर्थः ॥

( उद्द्योतः ) ननु सामान्यशब्देन प्रश्नात्कथमुत्पत्तिर्विवक्षिता ? तत्राह—सामान्येति । सर्वेषामपत्ययोगे इष्टसिद्धिराह—यदा गर्गस्येति ॥

( द्वितीयपक्षे सूत्रप्रयोजनावतरणभाष्यम् )

**अथ सर्वेष्वपत्ययुक्तेषु किमनेन क्रियते एको गोत्र इति ?**

( ५२६९ प्रयोजनवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ सर्वेषामपत्ययोगात् प्रत्ययान्ताद् गोत्रे प्रतिषेधार्थमेको गोत्रे ॥ * ॥**

( भाष्यम् ) **सर्वेषामप्यपत्ययोगात् प्रत्ययान्ताद्गोत्रे प्रतिषेधार्थमेको गोत्र इत्युच्यते ॥**

( सूत्रप्रयोजनाभावोपपादकभाष्यम् )

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ?**

**तत्र न ज्ञायते क एको भवति, यो वा परमप्रकृतेर्यो वाऽनन्तरादिति ॥**

१ गोत्रसमुदाये प्रत्ययमालाप्रसङ्गनिवृत्त्यर्थमेको गोत्र इत्यस्य नियमार्थत्वमित्येतदभ्युपगम्य वार्तिककर्तुर्यूनि चान्तर्हिते इति दूषणदानमिति भावः ॥
२ एको गोत्र इत्यादेर्विधायकत्वपक्षे इत्यर्थः ॥
३ 'सर्वेषाञ्च पातः' इति च. झ. ज. पाठः ॥
४ 'तर्हीति न तु ज्ञायते' इति च. छ. पाठः ॥
५ 'भवतीति । यो वा' इति क. पाठः ॥

(प्रदीपः) **न तु ज्ञायत इति** । 'एकः' इति सामान्येनोपादानाद्विशेषस्यानवगम इत्यप्रतिपादकत्वात्सन्देहलक्षणमप्रामाण्यं प्रसक्तमित्यर्थः । उत्पादयितरि त्वपत्ययुक्ते क्रमेण सम्बन्धविवक्षायां गोत्रसमुदाये प्रत्ययमालाप्रसङ्गे एक एव भवतीत्युच्यमाने य एव परमप्रकृतेः प्राप्नोति स एव भवतीति नास्ति तत्रैकविशेषाज्ञानलक्षणो दोषः ॥

(उद्योतः) ननु पक्षान्तरसाधारणेऽस्मिन्दोषे न तद्वादिनाऽयम्पर्यनुयोक्तव्योऽत आह—**उत्पादयितरि त्विति** ॥

(५२७० नियामकत्वाभावबोधकवार्तिकम् ॥ ७ ॥)

## ॥ * ॥ नियमानुपपत्तिश्च ॥ * ॥

**(भाष्यम्) नियमश्च नोपपद्यते ।**

**किं कारणम् ?**

(५२७१ नियामकत्वाभावसाधकवार्तिकम् ॥ ८ ॥)

## ॥ * ॥ न ह्येकस्मिन्नपत्येऽनेकप्रत्ययप्राप्तिः ॥ * ॥

**(भाष्यम्) न ह्येकस्मिन्नपत्येऽनेकः प्रत्ययः प्राप्नोति ।**

**किं तर्हि ?**

(प्रदीपः) **न ह्येकस्मिन्निति** । एकेनैव तस्यार्थस्योक्तत्वाद्यस्मिन्नपत्य एकः प्रत्ययः क्रियते तस्मिन्नेव नास्त्यपरस्य प्रत्ययस्य प्रसङ्ग इति तन्निवारणमनर्थकमेवेत्यर्थः ॥

(उद्योतः) **एकेनैवेति** । 'एको गोत्रे' इत्यत्र गोत्रपदेन गोत्रत्वविशिष्टस्यैकस्यैवोपस्थितेरिति भावः ॥

(५२७२ नियामकत्वाभावे दोषसाधकवार्तिकम् ॥ ९ ॥)

## ॥ * ॥ अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तरप्राप्तिः ॥ * ॥

**(भाष्यम्) अपत्यान्तरेऽपत्यान्तरे शब्दान्तराच्छब्दान्तरात् प्रत्ययान्तरम्प्रत्ययान्तरं प्राप्नोति । फगन्तादिञ्, इञन्तात्फगिति फगिञोर्दाशतयी प्रत्ययमाला प्राप्नोति ॥**

(प्रदीपः) **अपत्यान्तर इति** । सामान्यापेक्षं वार्तिके एकवचनम्[1] ॥ भाष्यकारस्तु[2] भेदं वीप्सां च साकल्यप्रतिपादनायाश्रित्य विवृणोति ॥ **दाशतयीति** । दशावयवा यस्य संघस्य[3] स दशतयः संघः, तत्र भवा दाशतयी । अनेकप्रत्यय[4]प्रसङ्गप्रतिपादनपरं चैतत् । नत्वत्र दशार्थो विवक्षितः । अतोऽनन्तरमेव क्वचित्पुस्तके 'अपत्यं समुदायश्चेत्' इति पठ्यते । अन्यत्र तु प्रत्ययमालाप्रसङ्गग्रन्थानन्तरम् 'कतरस्मिन्' इत्यादि सर्वं पूर्वोक्तं पठ्यते । तत्पुनरुक्तत्वादग्रन्थत्वादन्यैरुपेक्षितम् ॥

(उद्योतः) ननु दाशतयीत्युक्तेर्विंशत्यपत्येष्वपि किं तावत्येव प्रत्ययमाला ? नेत्याह—**अनेकेति** ॥

(पक्षविशेषाश्रयेण दोषोपपादकभाष्यम्)

**कतरस्मिन् पक्षेऽयं दोषः ?**[5]

**सर्वेष्वपत्ययुक्तेषु ।**

**सर्वेष्वपत्ययुक्तेषु तावन्न दोषः । सर्वेषु ह्यपत्ययुक्तेषु सर्वैत उत्पत्त्या भवितव्यम् । तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः ॥**

**उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः । उत्पादयितरि तर्ह्यपत्ययुक्ते न सर्वैत उत्पत्त्या भवितव्यम् । तत्र नियमो नोपपद्यते । असति नियमे एष दोषः ॥**

(प्रदीपः) **अन्ये त्वेवं पठन्ति**–"कतरस्मिन् पक्ष एष दोषः ? सर्वेष्वपत्ययुक्तेषु । सर्वेष्वपत्ययुक्तेषु तावन्न दोषः । सर्वेषु ह्यपत्ययुक्तेषु सर्वैत उत्पत्त्या भवितव्यम्, तत्र नियम उपपन्नो भवति । सति नियमे नैष दोषः । उत्पादयितरि तर्ह्यपत्ययुक्तेऽयं दोषः । उत्पादयितरि ह्यपत्ययुक्ते न सर्वैत उत्पत्त्या भवितव्यम् । तत्र नियमो नोपपद्यते । असति नियमे एष दोषः । उत्पादयितरि चापत्ययुक्ते न दोषः । कथम् । अपत्यं समुदायश्चेत्" इति । अयं ग्रन्थ एव, पक्षपरिहारेण दोषपरिहारात् ।

**अस्यायमर्थः**—यदा सर्वेऽपत्येन युज्यन्ते तदैकस्मिन्नेव गोत्रापत्ये गर्गगार्ग्यगार्ग्यायणेभ्यः पर्यायेणापत्यापत्यवत्सम्बन्धविवक्षायां प्रत्ययप्रसङ्गः । तत्र यदा गर्गशब्दात् प्रत्यय उत्पद्यते तदैक एव गोत्रापत्ये प्रत्ययो भवति । यदि तु गार्ग्यगार्ग्यायणशब्दाभ्यामुत्पद्यते तदा पूर्वस्मिन् स्थिते परस्योत्पादनादनेकः प्रत्ययः कृतः स्यात् । तस्मादनेकप्रत्ययनिवारणाय 'एको गोत्रे' इति नियमः क्रियते । तेन गर्गशब्दादेवोत्पत्तिरनुज्ञाता भवति । यदा तूत्पादयितैवापत्येन[6] युज्यत इति पक्षः, गोत्रशब्देन चैकमेवापत्यमुच्यते तदोत्पादयितुरेक एव प्रत्ययः प्राप्नोतीति नियन्तव्याभावान्नियमो नोपपद्यत इत्यपत्यपरम्पराविवक्षायां प्रत्ययमालाप्रसङ्गदोष आपतत्येव ॥

(दोषनिरासभाष्यम्)

**उत्पादयितरि चापत्ययुक्ते नायं दोषः ।**

**कथम् ?**

(उद्योतः) **तेन गर्गशब्दादेवेति** । अनेन न ज्ञायते क एक इति, नियमानुपपत्तिश्चेत्युक्तदोषद्वयनिरासो दर्शितः ॥ भाष्ये—

---

१ 'अपत्यान्तरे' इत्यत्रैकवचनमित्यर्थः ॥

२ ननु वार्तिकव्याख्यानावसरे 'अपत्यान्तरे–अपत्यान्तरे' इति द्विर्वचनमनुपपन्नमत आह—भाष्यकारस्त्विति ॥

३ 'संघातस्य' इति च. झ. ञ. पाठः ॥

४ ननु अपत्यान्तरेऽपत्यान्तरे प्रत्ययान्तरं प्राप्नोतीत्युच्यमाने यावन्ति अपत्यानि तावन्तः प्रत्ययाः प्राप्नुवन्ति–इति दाशतयीत्युक्तिरसङ्गता स्यादत आह—अनेकेति ॥

५ 'पक्ष प्रविभागेन' इति च. झ. ञ. पाठः ॥

६ पक्षान्तरे दोषाभावमाह—यदा तूत्पादेति ॥

उत्पादयितरि चेति[1] । येन 'सर्वेष्वपत्ययुक्तेषु' इति पक्षे तु नैव दोषः, अत्रापि पक्षे न दोष इत्यर्थः ॥

( दोषनिरासे श्लोकभाष्यम् )

**अपत्यं समुदायश्चे-**
**न्नियमोऽत्र समीक्षितः ।**
**तस्मिन्सुबहवः प्राप्ता**
**नियमोऽस्य भविष्यति ॥**

**अपत्यमित्यनेन सर्वमुपग्वादिपितृकमपत्यं समीक्षितम् । तस्मिंस्तु बहवः प्रत्ययाः प्राप्ताः । नियमोऽस्य भविष्यति—एको गोत्र इति ।**

( प्रदीपः ) अत्रापि पक्षे परिहारोऽभिधीयते—**अपत्यं समुदायश्चेदिति** । अपत्यशब्देनापत्यसामान्यवाचिनाऽपि[2] प्रकरणवशाद् गोत्रापत्यमेवोच्यते, तेनायमर्थः । गोत्रशब्देन गोत्रसमुदायोऽभिधीयते, अवयवधर्मेण समुदायस्य गोत्रव्यपदेशात् ।

अन्ये त्वाहुः—'अपत्यं पौत्रप्रभृति गोत्रम्' इत्यत्रापत्यशब्देन क्रियाशब्देन समुदायोऽभिधीयत इति तस्यैव गोत्रसंज्ञा क्रियते । क्वचित्तु अवयवमात्रेऽपि गोत्रशब्दो वर्तते । समुदायेषु प्रवृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति न्यायात् । ततश्च 'एको गोत्रे' इत्यस्यायमर्थः—'पौत्रप्रभृत्यपत्यपरम्पराविवक्षायां प्रत्ययमालाप्रसङ्गे एक एव कर्तव्यो नानेकः' इति । तेन परमप्रकृतेरेव सम्बन्धाश्रयेणापत्यापत्यवत्सम्बन्धविवक्षायां[3] प्रत्ययः कर्तव्य इत्युक्तं भवति ॥ **तस्मिन्निति** । समुदाय इत्यर्थः ॥

**(उद्द्योतः)** ननु सूत्रे गोत्रपदोपादानात् 'अपत्यं समुदायश्चेत्' इत्यनुपपन्नमत आह—**अपत्यशब्देनेति** ॥

ननु[4] मुख्ये संभवति गौणगोत्रस्य समुदायस्य ग्रहणं न युक्तमत आह—**अन्ये त्विति** । वार्तिकस्थापत्यशब्देन[5] गोत्रसंज्ञासूत्रस्थमपत्यमिति गृह्यत इति भावः ॥ **क्रियाशब्देनेति** । उत्पादनक्रिया-[6]ऽधीनं पतनाजनकत्वं ह्यपत्यत्वम् ॥ **तस्यैव**—अपत्यसमुदायस्यैव ॥ **क्वचित्**—गोत्रेऽलुगचीत्यादौ ॥

**अत्राहुः**—व्याख्याद्वयेऽपि गोत्रशब्देनाऽपत्यगोत्रसमुदायो लक्ष्यत इति युक्तम् । इदमेव ध्वनयितुं भाष्ये—अपत्यपदं प्रयुक्तम्, 'सर्वमुपग्वादिपितृकमपत्यं समीक्षितम्' इति चोक्तम् । अत एव कैयटोऽपि वक्ष्यति—**परमप्रकृतेरेवेति** । किं चैवं सति गोत्रसमुदायेऽनेकप्रत्ययवारणेऽपि तृतीये वाच्ये प्रत्ययद्वयं न निवारितं स्यादिति बोध्यम् । ननु मूलप्रकृतेरप्राप्ताण्विध्यर्थमेव स्यादत्र पक्षे, न तु नियमार्थमिति चेन्न । विधित्वे एकग्रहणवैयर्थ्यापत्तेः । 'गोत्रे' इत्युक्त्यैव 'प्रथमात्' इत्यनुवृत्त्योपग्वादिभ्योऽणादिविधानेन त्वदिष्टसिद्धेः । एकग्रहणसामर्थ्यान्नियमेनैकाभ्यनुज्ञाद्वारा परमप्रकृतेर्विधिरपि परम्परापत्यापत्यवत्सम्बन्धे प्रवर्तत इत्यनुमीयत इति न दोष इति दिक् ॥

( चतुर्थवार्तिकोक्तदोषनिरासभाष्यम् )

**यदप्युच्यते 'स्त्रियां चानियमः' इति ।**

**एवं वक्ष्यामि—गोत्राद्यूनि प्रत्ययो भवति, स्त्रियां नेति ॥**

( प्रत्याक्षेपभाष्यम् )

**एवमपि स्त्रिया युवत्या अभिधानं न प्राप्नोति ॥**

( प्रदीपः ) **एवमपीति** । अस्त्रियामिति योगविभागे[7] कृतेऽपि यदि[8] नाम गोत्रादेव यूनीत्यस्य नियमस्य निषेधो न भवति तथाऽपि[9] प्राधान्याद्युवप्रत्ययस्यैव निषेधः प्राप्नोति, न तु युवसंज्ञायाः[10] । ततश्च गोत्रलक्षणः प्रत्ययो न प्राप्नोति, अपत्यसामान्यलक्षण एव तु प्रत्ययः स्यादित्यर्थः । ततश्च गार्ग्यस्यापत्यं स्त्रीति गार्ग्यशब्दाद्यञ्न स्यात् । तदभावात् 'यञश्च' 'प्राचां ष्फ तद्धितः' इति ङीष्फौ न स्याताम्—गार्गी गार्ग्यायणीति ॥

**( उद्द्योतः )** ननु योगविभागेन स्त्रियां युवत्वनिषेधात् गोत्रप्रत्ययान्तगार्ग्यशब्देन युवत्याः स्त्रिया अभिधानं भविष्यति, इत्यत आह—**यदि नामेत्यादि** । यद्यपीत्यर्थः ॥ **निषेधो न भवतीति** । योगविभागसामर्थ्यात् 'अस्त्रियाम्' इत्येष इति भावः ॥ **न प्राप्नोतीति** । युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः ॥ **यञ्न स्यादिति** । किन्तु इञेव स्यादित्यर्थः ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**एवं तर्हि—एवं वक्ष्यामि—गोत्राद्यूनि प्रत्ययो भवति, ततः—स्त्रियां लुक्[11] ॥**

( प्रदीपः ) **स्त्रियां लुगिति** । गार्ग्यशब्दात्[12] फको लुकि कृते यञाश्रयं रूपद्वयं सिध्यति ॥

---

१ भाष्ये 'उत्पादयितरि च' इति चकारेणास्मिन्नेव पक्षे दोषाभावः पूर्वस्मिन्पक्षे च दोषोऽस्त्येवेति भ्रमनिवारणायाह—येन सर्वेष्विति ॥

२ अपत्यं समुदायश्चेदित्यत्रत्यापत्यशब्दस्य गोत्रापत्यत्वे व्यवस्थापयति—अपत्यशब्देनेति । प्रकरणवशात् सामान्यवाचिनाऽपत्यशब्देनापि गोत्रापत्यमेवोच्यत इति भावः ॥

३ 'रेव सम्बन्धिसम्ब' इति झ. ञ. च. पाठः ॥

४ एको गोत्र इत्यस्य द्वितीयार्थकरणे हेतुमाह—ननु मुख्ये इति ॥

५ पूर्वस्मिन् पक्षे अपत्यशब्देन गोत्रापत्यमित्युच्यते, अस्मिन् पक्षे च अपत्यशब्देन अपत्यं पौत्रप्रभृतीति सूत्रस्थमपत्यं गृह्यत इत्यर्थः ॥

६ अपत्यशब्दस्य क्रियाशब्दत्वं स्पष्टयति—उत्पादनेति ॥

७ 'विभागेऽपि कृते यदि' इति च. झ. ञ. पाठः ॥

८ यदि नाम अस्त्रियामिति योगविभागेऽपि कृते (योगविभागसामर्थ्यात्) गोत्रादेव यूनीति नियमस्य निषेधो न भवतीत्यन्वयः । योगविभागाभावे गोत्राद्यून्यस्त्रियामिति सूत्रस्य स्त्रीलिङ्गभिन्ने यून्यपत्ये गोत्रप्रत्ययान्तादेव प्रत्ययः स्यादित्यर्थः कर्तुं शक्यः, योगविभागे तु तत्सामर्थ्यान्नायमर्थ इति नियमस्य निषेधो न भवतीत्यर्थः ॥

९ ननु अस्त्रियामित्यनेन नियमस्य निषेधाभावे सञ्ज्ञाया एव निषेधोऽस्तु, ततश्चेष्टमेव सम्पद्येतेत्यत आह—तथापीति ।

१० स्त्रियां युवसंज्ञाया निषेधाभावेन गोत्रसंज्ञायाः परत्वाद्युवसंज्ञया बाध इत्याशयः ॥

११ 'भवति, स्त्रियां लुक्' इति छ. पाठः ॥

१२ अस्त्रियामित्यस्य स्थाने स्त्रियां लुगिति न्यासे गार्गी गार्ग्यायणीति रूपे साधयति—गार्ग्यशब्दात्फक इति ।

( पक्षद्वयदोषसंकलनभाष्यम् )

इहोत्पादयितर्यपत्ययुक्ते प्रत्ययान्तात्प्रतिषेधो वक्तव्यः, परमप्रकृतेश्चोत्पत्तिर्वक्तव्या ।

सर्वेष्वपत्ययुक्तेषु प्रत्ययान्तात्प्रतिषेधो वक्तव्यः ॥

( प्रदीपः ) इदानीं पक्षद्वयोक्तदोषपरिहाराय तत्संकीर्तनं करोति—**इहेति** ॥ **सर्वेष्विति** । ननु नायं दोषः पूर्वमुक्तः । नैतदस्ति । न[1] ज्ञायते क एको भवतीत्यभि[2]धानादर्थत उक्त एवायं दोषः ॥

( उद्द्योतः ) **पक्षद्वयोक्तेति** । सू[3]त्रन्यासे तु—उत्पादयितर्य[4]पत्ययुक्ते नैतयोः परिहारः, विधित्वसम्भवेन[5] नियमानुपपत्तेः । 'प्रथमात्' इत्यनुवृत्त्यैव विधौ सिद्धे 'एकग्रहणसामर्थ्यान्नियमः' इत्यपि न युक्तम्, त[6]स्य सूत्रे प्रथमोच्चारितादित्यर्थकत्वात् । किञ्च निय[7]मत्वे परम्परासंबन्धे प्रत्ययविध्यनुपपत्तिः । न च सोऽपि तेनैवानु[8]मीयते, एवंविधस्य वचनव्यापारस्यान्यत्र क्वाप्यदृष्टत्वादिति । अन्त्ये[9]ऽपि नियमासंभवः, एकस्मिन्नपत्येऽनेकप्रत्ययाप्राप्तेः । अप[10]त्यसमुदायलक्षणायाञ्च न मानमिति शब्दमर्यादया सर्वेष्टासिद्धिरिति भावः ॥ अत्र दोषे उक्तत्वाभावमाशङ्कते—**नन्विति** ॥ **अर्थत इति** । क ए[11]को भवति यो वा परमप्रकृतेर्यो वाऽनन्तरादित्यनेनानियम उक्तस्तत्परिहाराय प्रत्ययान्तान्निषेधो वक्तव्य इत्युक्त एवायमर्थ इति भावः ॥

( ५२७३ दोषवारणवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ तस्मात्प्रतिषेधः ॥ * ॥

( भाष्यम् ) तस्मात्प्रतिषेधो वक्तव्यः ॥

( प्रदीपः ) **तस्मादिति** । ना[12]पत्यादित्येव वक्तव्यम् । तेनापत्यप्रत्ययान्तादप[13]त्ये प्रत्ययो न भवतीत्ययमर्थः संपद्यते ॥

( उद्द्योतः ) **नापत्यादिति** । अपत्यसम्बन्धिप्रत्यय आपत्यः, तदन्तादित्यर्थः ॥

( ५२७४ प्रकारान्तरेण दोषवारणे द्वितीयवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः ॥ * ॥

( भाष्यम् ) अथवा संज्ञाकारिभ्यः प्रत्ययोत्पत्तिर्वक्तव्या ॥

( प्रदीपः ) **संज्ञाकारिभ्य इति** । कुलव्यपदेशहेतव आदिपुरुषाः **संज्ञाकारिण** उच्यन्ते ॥

( उद्द्योतः ) कुलव्यपदेशहेतवः—स्व[14]घटितशब्देन स्वापत्यानां व्यवहारहेतवः ॥ आदिपुरुषाः—गर्गादय इत्यर्थः ॥

( प्रत्याक्षेपसमाधाने दोषभाष्यम् )

एवमप्यौपगवी माणविका, अनुपसर्जनादितीकारो न प्राप्नोति । मा भूदेवम्—अण्योऽनुपसर्जनमिति ।

अणन्तादनुपसर्जनादित्येवं भविष्यति ।

नैवं शक्यम् ।

इह हि दोषः स्यात्—काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी[15], तामधीते काशकृत्स्ना ब्राह्मणी[16] । अणन्तादितीकारः प्रसज्येत ।

नैष दोषः ।

अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम् । यश्चात्राध्येत्र्यामभिधेयायामण्, लुप्तः सः । यश्च श्रूयते, उत्पन्नस्तस्मादीकार इति कृत्वा पुनर्न भविष्यति ॥

इह तर्हि—औपगवी माणविका भार्याऽस्य औपगवीभार्यः, जातिलक्षणः पुंवद्भावप्रतिषेधो न प्राप्नोति ।

मा भूदेवम्, 'वृद्धिनिमित्तस्य' इत्येवं भविष्यति । यस्तर्हि न वृद्धिनिमित्त[17]म्—ग्लुचुकायनी माणविका भार्याऽस्य ग्लुचुकायनीभार्यः ॥

---

१ 'न तु ज्ञायते' इति झ. पाठः ॥

२ इत्यभिधानात्=इत्युक्तत्वात् ॥

३ भगवता सिद्धान्ते 'एको गोत्रे' इति सूत्रस्थं गोत्रपदमत्याख्यातम्, दोषाश्च निराकृताः—तदाह—**सूत्रन्यासे तु इति** । तु नाऽरुचिः सूचिता, एवंविधन्यासाश्रयणेऽपि दोषाः सन्त्येवेति ॥

४ उत्पादयितर्यपत्येति । भाष्योक्तप्रथमपक्षे इत्यर्थः ॥

५ पितुरेवापत्यमिति पक्षे उपगोस्तृतीये विवक्षिते तस्यापत्यत्वाभावेन प्रत्ययाप्राप्तेरस्य सूत्रस्याणप्रत्ययविधायकत्वसम्भवेन नियमानुपपत्तिरिति भावः ॥

६ तस्य=प्रथमादिति पदस्य ॥

७ 'नियमपरत्वे' इति ख. झ. पाठः ॥

८ एवंविधस्य वचनव्यापारस्यान्यत्र दर्शनाभावेन दृष्टान्ताभावादनुमानमशक्यमिति भावः । अत्र हि गोत्रशब्दस्य गोत्रागोत्रसमुदाये लक्षणायाम्पुत्रे एकः, पौत्रे परः, प्रपौत्रे चापर इति गोत्रे एक इति कथनेऽपि अनेकेषाम्प्रत्ययानाम्परम्परा प्राप्नोतीति व्यर्थं सत्सूत्रं नियमार्थमित्येकाभ्यनुज्ञानद्वारा परमप्रकृतेर्विधिरपि परम्परापत्यापत्यवत्सम्बन्धे प्रवर्तत इत्यनुमानसम्भवः । दृष्टान्ताभावान्नानुमानम्, गोत्रशब्दस्य तादृशलक्षणायाञ्च न मानमित्यनुमानासम्भव इत्यर्थः ॥

९ अन्त्येऽपीति । सर्वेष्वपत्ययुक्तेष्विति द्वितीयपक्षे इत्यर्थः ॥

१० ननु पक्षद्वयेऽपि गोत्रपदस्य गोत्रागोत्रसमुदाये लक्षणामाश्रित्य नियमत्वसम्भव इत्याशङ्कायामाह—**अपत्यसमुदायेति** ॥

११ दोषस्यार्थत उक्तत्वप्रकारमाह—**क एको भवतीति** ॥

१२ तस्मात्प्रतिषेध इति वार्तिकार्थमाह—**नापत्यादित्येवेति** । एको गोत्रे इत्यस्य स्थाने नापत्यादित्येव सूत्रमाश्रयणीयम्, अपत्यसम्बन्धिप्रत्ययान्तात्प्रत्ययो न—इत्येतदर्थकमिति भावः ॥

१३ 'अपत्यप्रत्य' इति क. पाठः ॥

१४ ननु कुलवाचकगर्गादिशब्दस्य व्यवहारहेतवः सर्वेऽपि तदपत्यादय इति आदिपुरुषा इत्येतदनुपपन्नं स्यादत आह—**स्वघटितशब्देनेति** ॥

१५ 'कृत्स्नी काशकृत्स्नीमधी' इति च. झ. ञ. पाठः ॥

१६ 'ब्राह्मणीति' इति च. झ. ञ. पाठः ॥

१७ 'वृद्धिनिमित्तः' इति च. छ. झ. ञ. पाठः ॥

(प्रदीपः) **एवमपीति** । औपगवस्यापत्यं स्त्रीत्यत इञो लुकि कृतेऽनुपसर्जनाधिकारादणश्चार्थद्वारेणोपसर्जनत्वात्तदर्थस्य प्रत्ययार्थम्प्रतिविशेषणत्वादण्लक्षण ईकारो न प्राप्नोतीत्यर्थः ॥ **अणन्तादिति** । प्रत्यये लुप्ते प्रकृतिरेव प्रत्ययार्थमाहेत्यणन्तस्याप्युपसर्जनत्वमिति भावः ॥ **काशकृत्स्निनेति** । 'इञश्च' इत्यण्, तदन्तादध्येत्र्यामण्, तस्य 'प्रोक्ताल्लुक्' इति लुक् । 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । अत्राणन्तस्याध्येत्र्यां संक्रान्तत्वादनुपसर्जनत्वादीकारस्य प्रसङ्गः ॥ **पुनर्न भविष्यतीति** । शास्त्रस्य सकृत्प्रवृत्त्या चरितार्थत्वादिति भावः । टाप् तु पूर्वमनुत्पन्न इति उत्पद्यते । अपवादस्याप्रवृत्तावुत्सर्गस्यानिवारणात् ।

नन्वेवमापिशलिना प्रोक्तमापिशलम्, तदधीते—आपिशला ब्राह्मणीति ङीप् प्राप्नोति । तस्मादण एवानुपसर्जनग्रहणं विशेषणमित्यौपगवी माणविकेति न सिध्यति । एवं तर्हि वक्ष्यमाणादोषादिष्टसिद्ध्यभावादेतद्भाष्यकारेण सुष्ठु न निरूपितम् ॥

**जातिलक्षण इति** । गोत्रसंज्ञाया अभावे जातिरूपाभावात् । यदा तु 'गोत्रं च चरणैः सह' इत्यत्र गोत्रशब्देनापत्यमात्रं गृह्यते तदौपगवीभार्य इत्यत्र जातिलक्षणङीष्पुंवद्भावप्रतिषेधौ सिध्यत एव ॥ **ग्लुचुकायनीति** । ग्लुचुकस्यापत्यमिति 'प्राचामवृद्धात्' इति फिन्प्रत्ययः, तदन्तादणो लुकि क्रियमाणे 'इतो मनुष्यजातेः' इति ङीष् न प्राप्नोति । जातित्वाभावात् 'सर्वतोऽक्तिन्नर्थात्' इति ङीष् क्रियते । तथाऽपि पुंवद्भावप्रतिषेधो न प्राप्नोति, लुक्चाधिको विधेयः ॥

(उद्योतः) उपसर्जनत्वे हेतुः—**तदर्थस्येति** ॥ **प्रत्ययार्थम्**—इञर्थम् ॥ नन्वणर्थद्वाराऽणन्तमप्युपसर्जनमत आह—**प्रत्यय इति** । इञर्थ एव प्राधान्येनोच्यत इति नोपसर्जनत्वमित्यर्थः ॥ ननु स्त्रीप्रत्ययत्वसाम्याट्टावपि न स्यादत आह—**टाबिति** ॥ ननु ङीपा बाधितष्टाप् कथं स्यादत आह—**अपवादस्येति** ॥

**तस्मादण एवेति** । किञ्च तदन्तविशेषणत्वे तदन्तान्तस्यापि विशेषणापत्तावनुपसर्जनाधिकारवैयर्थ्यापत्तिः, 'स्त्रियाम्' इत्यस्याविशेषणत्वेनाप्यत्र परिहारः सुकर इति चेत्तदपि 'औपगवी' इत्यत्र तुल्यम् ॥ **वक्ष्यमाणादोषात्**—पुंवत्त्वप्रतिषेधाप्राप्तिरूपात् ॥ **सुष्ठु न निरूपितमिति** । काशकृत्स्निनेत्यादिसिद्धान्त्युक्तिः 'आपिशलेः' अप्युपलक्षणम् । तदाशयानभिज्ञपूर्वपक्षिणः 'नैष दोषः' इत्युक्तिः । सिद्धान्ती स्वाशयमप्रकाश्यैव दोषान्तरेण तं निरस्यतीति भावः ॥

**जातिरूपाभावादिति** । जातित्वाभावादित्यर्थः । युवसंज्ञया गोत्रसंज्ञाया बाधादिति भावः ॥ **यदात्विति** । अत एव कुन्तीत्यनन्तरापत्ये जातिलक्षणो ङीषिति—'अनुपसर्जनात्' इति सूत्रस्थं भाष्यं संगच्छते । यदा त्विति तुनाऽरुचिर्बोधिता—एतद्भाष्यविरोधरूपा । तस्मात् एतद्भाष्यात्, फांटाहृताभार्य इति भाष्याच्च जातिलक्षणे गोत्रं शास्त्रीयमेव । अत एवापत्यमिति नोक्तम् । कुन्तीत्यादौ द्रौणायनिवद्गोत्रत्वारोपो भाष्यप्रामाण्यात्, यूनि तु न गोत्रत्वारोपस्तत्र तत्संज्ञानिषेधात्, ग्लुचुकायनीत्यत्र ङीष् तु सिद्धान्ते जातित्वात् 'इतो मनुष्य' इत्येवेत्याहुः ॥ **अणो लुकीति** । यून्युत्पन्नस्य 'स्त्रियाँ लुक्' इत्यनेनेति भावः ॥ **पुंवद्भावप्रतिषेध इति** । गोत्रस्य यूनश्चापत्यत्वेनैव बोधात्समानायामाकृतौ भाषितपुंस्कत्वनिर्वाहो बोध्यः ॥

(सिद्धान्तभाष्यम्)

**तस्मात्स्त्रिया युवत्या युवसंज्ञैव पर्युदसितव्या । तस्यां च पर्युदस्तायां गोत्रप्रत्ययान्तमेतद्यूनि वर्तते ॥**

(प्रदीपः) **तस्मादिति** । 'अस्त्रियाम्' इति योगविभागे सति यूनीति वर्तते । परिभाषा चेयम् । तेन युवसंज्ञायाम् 'अस्त्रियाम्' इत्युपतिष्ठते । तदुपस्थानेन स्त्रियां युवसंज्ञा निवार्यत इति गोत्रसंज्ञा प्रवर्तते ॥ **यूनि वर्तत इति** । युवसंज्ञाया अभावेऽपि युवत्वेन पौत्रप्रभृतेरपत्यस्योपलक्ष्यत इति यूनीत्युक्तम् ॥

(उद्योतः) ननु 'अस्त्रियाम्' इति निषेधः प्रत्ययस्यैव स्यात् न तु युवत्वस्य, अप्राधान्यादत आह—**अस्त्रियामिति** ॥ **परिभाषेति** । यत्र युवशब्दस्तत्रास्त्रियामित्युपतिष्ठत इत्यर्थः । व्यवहितेनापि संबन्धाय परिभाषात्वमुक्तम् ॥ ननु स्त्रियां युवत्वाभावाद्यूनीत्ययुक्तमत आह—**युवसंज्ञाया इति** ॥

(आक्षेपभाष्यम्)

**यदि संज्ञाकारिभ्यः प्रत्ययोत्पत्तिरुच्यते, कथं गार्ग्यायणः, वात्स्यायन इति ?**

(५२७५ समाधानवार्तिकम् ॥ १२ ॥)

**॥ * ॥ गोत्राद्यूनीति च ॥ * ॥**

(भाष्यम्) **गोत्राद्यूनीत्येतद्वक्तव्यम् ॥**

(५२७६ दोषवारणद्वितीयवार्तिकोपष्टम्भकवार्तिकम् ॥ १३ ॥)

**॥ * ॥ तच्च जात्यादिनिवृत्त्यर्थम् ॥ * ॥**

(भाष्यम्) **तच्चावश्यं संज्ञाकारिग्रहणं कर्तव्यम् ।**

---

१ 'स्त्रत इञ्, तस्य लुकि' इति च. झ. ञ. पाठः ॥
२ 'कारप्रसङ्गः' इति क. पाठः ॥
३ लक्ष्ये लक्षणन्यायेनेति तात्पर्यम् ॥
४ 'नन्वेवमप्यापिश' इति झ. पाठः । नन्वेवं=अनुपसर्जनपदं विशिष्टस्य विशेषणमिति स्वीकारे ।
५ 'ब्राह्मणीति ङीप्प्राप्नोति' इति झ. पाठः, तत्र 'ङीष्' अनुपपन्नः, ङीबेव प्राप्नोतीति ङीष्पाठश्चिन्त्यः ॥
६ यदि स्त्रीत्वरूपार्थकस्य प्रत्ययस्य ङीपोऽनुत्पत्तौ 'उक्तार्थानामप्रयोगः' इति हेतुस्तदा तुल्यन्यायाट्टावपि न स्यादित्यर्थः ॥
७ स्त्रियां लुगित्यर्थकेन 'अस्त्रियाम्' इति विभक्तसूत्रेणेत्यर्थः ॥
८ 'गोत्रस्य यूनोश्च' इति ख. ञ. पाठः ॥
९ 'तस्यां च' इत्यस्य स्थाने 'युवसंज्ञायां' इति च. ञ. पाठः ॥
१० अस्त्रियामिति योगविभागेऽपि गोत्राद्यूनीति पूर्वसूत्रेण प्रत्ययस्यैव विधानादस्त्रियामित्यनेनापि प्रत्ययस्यैव निषेधः स्यात्संज्ञापर्युदासो न स्यात्, अतः संज्ञापर्युदासमुपपादयति—परिभाषेति ॥
११ संज्ञाकारिभ्यः प्रत्ययोत्पत्तिर्गोत्रादावर्थे भवतीति वक्तव्यम्, अन्यथा जातिशब्देभ्यः संख्याशब्देभ्यः सर्वनामशब्देभ्यश्च प्रत्ययोत्पत्तिः स्यादित्यर्थः ॥

किं प्रयोजनम् ?

जात्यादिनिवृत्त्यर्थम् । जात्यादिभ्य उत्पत्तिर्मा भूदिति ॥

( उपष्टम्भसाधकभाष्यम् )

जातिर्न वर्तते, संख्या न वर्तते, सर्वनाम न वर्तते ।

जातिर्न वर्तते—काकस्यापत्यम्, कुररस्यापत्यमिति ।

संख्या न वर्तते—नवानामपत्यम्, दशानामपत्यमिति ।

सर्वनाम न वर्तते—सर्वेषामपत्यम्, विश्वेषामपत्यमिति ॥

( प्रदीपः ) जातिर्नेति । [1]प्रत्ययं नोत्पादयतीत्यर्थः । परार्थाभिधानं हि वृत्तिः । सति च प्रत्यये प्रकृ[2]तिः प्रत्ययार्थे वर्तते, तत्र जात्यादिवृत्तिः संज्ञाकारिग्रहणेन निवार्यते ॥

( उद्द्योतः ) सत्तानिषेधभ्रमं वारयति—प्रत्ययमिति ॥ 'न वर्तते' इत्यनेन प्रत्ययानुत्पत्तिः कथं लभ्येत्यत आह—परार्थेति । संज्ञाकारिग्रहणं कर्तव्यमित्यस्योपपादनाय 'जातिर्न वर्तते' इत्यादिग्रन्थ इति बोध्यम् ॥

( संज्ञाकारिग्रहणप्रत्याख्यानभाष्यम् )

यत्तावदुच्यते—

जातिर्न वर्तते—काकस्यापत्यम्, कुररस्यापत्यमिति ।

येनैव हेतुना एकः काकस्तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यति ॥

यदप्युच्यते—

संख्या न वर्तते—नवानामपत्यम्, दशानामपत्यमिति ।

संख्येयमपेक्ष्य संख्या प्रवर्तते । तत् सापेक्षम् । सापेक्षं चासमर्थं भवतीति—असामर्थ्यान्न भविष्यति ॥

यदप्युच्यते—

सर्वनाम न वर्तते—सर्वेषामपत्यम्, विश्वेषामपत्यमिति ।

निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते । तत्सापेक्षम् । सापेक्षमसमर्थं भवतीति—असमर्थत्वान्न भविष्यति ॥

( प्रदीपः ) येनैवेति । अपत्यविशेषप्रतिपत्तये प्रकृत्यर्थो विशेषणमुपादीयते । स च विशेषो जातिसंबन्धावगमेनैवावगम्यत इत्यपत्यापत्यवत्संबन्धविवक्षाया एवात्राभाव इत्यर्थः ॥ संख्येयमिति । ब्राह्म[3]णादिकमवश्यमपेक्षणीयम्, निराधारस्य गुणस्याभावादित्यर्थः ॥ निर्देश्यमिति । पूर्वप्रकृतमित्यर्थः ॥

( उद्द्योतः ) संज्ञाकारिग्रहणं प्रत्याचष्टे—भाष्ये—यत्तावदिति ॥ ननु जन्यजनकयोर्जातिसाम्येऽप्यपत्यविशेषप्रतिपत्त्यर्थं प्रत्ययः स्यादत आह—अपत्यविशेषेति ॥ निराधारस्येति । नवादीनां शब्दानां संख्येयपरत्वेऽपि संख्येयविशेषापेक्षयाऽसामर्थ्यम् ॥ भाष्ये संख्येयमित्यस्य–संख्येयविशेषमित्यर्थ इति तत्त्वम् ॥ पूर्वप्रकृतमिति । सर्वनाम्नां प्रकृतपरामर्शकत्वादिति भावः ॥ सर्वेषामित्यादेः—केषामिति नियताकाङ्क्षोदयात् निर्देश्यं विशेषमपेक्ष्य सर्वनाम्नां निर्देशः प्रवर्तत इति भाष्याक्षरार्थः । निर्देश्यञ्च क्वचित्प्रसिद्धम्, क्वचित्प्रकृतम्, क्वचिदनुभूतमित्यन्यत् ॥

( निराकरणप्रतीकारभाष्यम् )

यत्तावदुच्यते—

येनैव हेतुना एकः काकस्तेनैव हेतुना द्वितीयश्च तृतीयश्च काको भविष्यतीति ।

नैतद्विवदामहे—काको न काक इति ।

किं तर्हि ?

येनैव हेतुना एतद्वाक्यं भवति काकस्यापत्यम्, कुररस्यापत्यमिति, तेनैव हेतुना वृत्तिरपि प्राप्नोति ॥

यदप्युच्यते—

संख्येयमपेक्ष्य संख्या प्रवर्तते तत्सापेक्षम्, सापेक्षं चासमर्थं भवतीति ।

भवति वै कस्य चिदर्थात् प्रकरणाद्वा अपेक्ष्यं निर्ज्ञातम्, यदा निर्ज्ञातम्, तदा वृत्तिः प्राप्नोति ।

यदप्युच्यते—

सर्वेषामपत्यम्, विश्वेषामपत्यमिति निर्देश्यमपेक्ष्य निर्देशः प्रवर्तते, तत्सापेक्षम्, सापेक्षं चासमर्थं भवतीति ।

भवति वै कस्य चिदर्थात् प्रकरणाद्वा अपेक्ष्यं निर्ज्ञातम्, यदा निर्ज्ञातम्, तदा वृत्तिः प्राप्नोति ॥

( प्रदीपः ) वृत्तिरपीति । यदा जात्युपव्यञ्जनानि नाभिव्यक्तानि तदा पितृसंबन्ध एव विशेषावगमायोपादीयते तत्र वाक्यवद्वृत्तिप्रसङ्ग इत्यर्थः ॥ भवतीति । ततश्च संख्याशब्द एव विशिष्टसंख्येयवाचीति सापेक्षत्वाभावाद्व[4]र्ततैवेत्यर्थः ॥

( उद्द्योतः ) जात्यैव विशेषप्रतीतिमुक्तां निरस्यति—यदेति । अखण्डाद्यवस्थायामित्यर्थः ॥ ततश्चेति । संख्यामात्रवृत्तित्वे सापेक्ष-

१ जातिर्न वर्तत इति भाष्यस्यार्थमाह—प्रत्ययमिति ॥

२ प्रकृतेः प्रत्ययार्थे वर्तमानत्वाज्जात्यादिवृत्तिः प्रकृतिः संज्ञाकारिग्रहणेन पर्युदस्यत इत्यर्थः ॥

३ संख्याश्रयत्वेनेति भावः, संख्याया गुणत्वात् ॥

४ 'द्वर्तत एव' इति ह. पु. ।

त्वम्, प्रकारान्तरेण संख्येयवृत्तित्वनिश्चये संख्येयविशेषपरत्वनिश्चये वा न तत्त्वमित्यर्थः ॥

( प्रतीकारपरिहारभाष्यम् )

एवं तर्हि—अनभिधानाज्जात्यादिभ्य उत्पत्तिर्न भविष्यति ।

तच्चावश्यमनभिधानमाश्रयितव्यम् ।

क्रियमाणेऽपि[1] हि संज्ञाकारिग्रहणे यत्र जात्यादिभ्य उत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं भवति, भवति तत्र उत्पत्तिः । तद्यथा—

कुतश्चरति मायूरिः
केन कापिञ्जलिः कृशः ।
आहेयेन च दष्टस्य
पाञ्चिः सुतसमो मतः ॥

तादायनिः, यादायनिः, कैमायनिरिति ॥

( प्रदीपः ) आहेयेनेति । अहेरपत्यम्, 'इतश्चानिञः' इति ढक् ॥ पाञ्चिरिति । बाह्वादित्वादिञ् ॥ तादायनिरिति । 'उदीचां वृद्धात्' इति फिञ् ॥

( सिद्धान्तभाष्यम् )

तदेतदनन्यार्थं संज्ञाकारिग्रहणं कर्तव्यम्, प्रत्ययान्ताद्वा प्रतिषेधो वक्तव्यः ।

उभयं न कर्तव्यम् ।

गोत्रग्रहणं न करिष्यते । एकोऽपत्ये प्रत्ययो भवतीत्येव ॥

यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्यान्नैकोऽपत्ये प्रत्ययः कृतः स्यात् ॥

यदि गोत्रग्रहणं न क्रियते, कथं गार्ग्यायणः, वात्स्यायन इति ?

वक्तव्यमेवैतत्[2]—गोत्राद्यून्यस्त्रियामिति ॥

अथापि गोत्रग्रहणं क्रियते ।

एवमपि न दोषः । नैकग्रहणेन प्रत्ययोऽभिसम्बध्यते—एको गोत्रे प्रत्ययो भवतीति ।

किं तर्हि ?

प्रकृतिरभिसम्बध्यते । एका प्रकृतिर्गोत्रप्रत्ययमुत्पादयतीति ।

यदि चेदानीं प्रत्ययान्तादपि प्रत्ययः स्याद्, नैका प्रकृतिर्गोत्रे प्रत्ययमुत्पादयेत् ।

अथ वा अस्थानेऽयं यत्नः क्रियते । न हीदं लोकाद्भिद्यते । लोके हि संख्यां प्रवर्तमानामुपाचरन्ति एक इति वा प्रथम इति वा ।

यावद् ब्रूयात् प्रथमो गोत्रे[3] प्रत्ययमुत्पादयतीति तावदेको गोत्रे इति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-
महाभाष्ये चतुर्थस्याध्यायस्य प्रथमे
पादे तृतीयमाह्निकम् ॥

( प्रदीपः ) एका प्रकृतिरिति । एकशब्दः संख्यावाचीति केचिदाहुः । प्रथमातिक्रमे च कारणाभावात् परमप्रकृतिरेवैकशब्देन गृह्यते । शब्दापेक्षया चैक इति पुंलिङ्गेन निर्देशः । अन्ये तु साधारणे—एक इत्याहुः । परमप्रकृतिश्च सर्वप्रत्ययसाधारणीति तत एवोत्पत्तिर्भवति । 'सर्वेऽपत्येन युज्यन्ते' इत्ययं च पक्षः प्रमाणोपपन्नत्वात् स्थितः ॥ न हीदमिति । लोके योऽर्थ एकशब्दस्य दृश्यते स एवेहाश्रीयते । लोके च प्रथमशब्दसमानार्थ एकशब्दो दृश्यते इतीहापि प्रथमार्थ एवाश्रीयते । शास्त्रेऽपि प्रथमार्थ एकशब्दो दृश्यते—एकेऽल्पप्राणा इत्यत्र प्रथमेऽल्पप्राणा इति गम्यते ॥ उपाचरन्तीति । व्यवहरन्तीत्यर्थः । अस्यां पङ्क्तावेकमानयेत्यादौ त्वनियतस्यैकस्यावगमात्संख्यावाच्येकशब्दो न प्रथमवाची ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते महाभाष्यप्रदीपे चतुर्थस्याध्यायस्य प्रथमे पादे तृतीयमाह्निकम् ॥

( उद्द्योतः ) भाष्ये—एकोऽपत्ये प्रत्ययो भवतीति । प्रातिपदिकादेकोऽपत्ये प्रत्यय इत्यर्थः । प्रातिपदिकादपत्ये प्रत्ययश्चेदेक एव, अर्थादपत्यसमुदायविवक्षायामिति यावत् ॥ तदेवाह—यदि चेदानीमिति । गोत्रग्रहणे कृते तु अनुपपत्तिरुक्तैव ॥ ननु गार्ग्यायणसिद्धये 'गोत्राद्यूनि' इति विध्यर्थमेव स्यात्, एवञ्चोपगोर्युवापत्यमित्यर्थे—औपगव इत्यस्य दुर्वारत्वापत्तिरत आह—भाष्ये—अथापि गोत्रग्रहणमिति । एवं च गार्ग्यायणस्य सिद्ध्या 'गोत्राद्यूनि' इति नियमार्थमेव वाच्यम्, तथा च नोक्तदोष इति भावः । तत्र 'पितुरेवापत्यम्' इति पक्षेऽस्य नियमत्वं तु 'एको गोत्रे' इति साहचर्याद्बोध्यम् । युवपदञ्च युवसमुदायपरम् । विद्ध्यभ्यनुज्ञानञ्च प्राग्वदेव । 'सर्वेऽपत्येन युज्यन्ते' इति पक्षे तु स्पष्टमेव नियमत्वम् । अयमेव पक्षः सूत्रभाष्यसंमत इत्युक्तमेव । 'एको गोत्रे' इत्यत्र गोत्रपदेन युवापत्यं न गृह्यते, एतदर्थमेव गोत्रग्रहणमिति बोध्यम् ॥ नन्वेका प्रकृतिरित्युक्ते द्वितीया तृतीया वैकाऽस्तु, प्रथमा कथं लभ्यतेऽत

१ 'पि च संज्ञा' इति च. । 'पि संज्ञा' इति क. ॥
२ 'कर्तव्यमेवैतत्' इति क. ।
३ 'प्रथमोऽपत्ये प्रत्यय' इति छ. ।
४ इदञ्चिन्त्यम्—यूनीत्यस्य गोत्राद्यूनीत्यत्र योगविभागेन विधायकत्वेन गार्ग्यायणसिद्धौ गोत्रादित्यनेन योगेन गोत्रादेव यूनीत्यर्थकेन उपगोर्युवाऽपत्यमित्यर्थे औपगव इत्यस्य वारणमित्याशयात् । न च यूनीति सूत्रस्परमप्रकृतेरेव यूनि विधायकमिति गार्ग्यायण इत्यस्यासिद्धिरिति वाच्यम् । परमप्रकृतेर्यून्युत्सर्गेणैव प्रत्ययस्य सिद्धेः सामर्थ्याद्गोत्रादेव प्रवृत्तेः । न चानन्तरापत्यप्रत्ययान्तादेव विध्यर्थमस्त्विति वाच्यम् । विनिगमनाविरहेणानन्तरापत्यप्रत्ययान्ताद्गोत्रप्रत्ययान्ताच्च प्रवृत्तेर्वक्तुं शक्यत्वात् । इदमेव युक्तम्, इतरथा व्याख्याने 'अथापि' 'एवमपि' इति भाष्यस्वारस्यभङ्गापत्तेरिति केचित् । योगविभागे गौरवाद्विदमेव चिन्त्यमित्यन्ये ॥

आह—**प्रथमातिक्रम इति** । इदं चिन्त्यम्—'निजां त्रयाणां' इत्यत्र त्रयाणामित्युक्तेरस्य न्यायस्यात्र शास्त्रेऽनाश्रयणात् । तस्मादयमर्थः—गोत्रे प्रत्ययस्य सिद्धत्वादिदं नियमार्थम् । गोत्रे बोधनीये प्रत्ययप्रकृतिरेकैव, नानेका ॥ तदाह—भाष्ये—**यदि चेदानीमित्यादिना** ॥ प्रकृतिपरत्वे पुंलिङ्गानुपपत्तेराह—**शब्दापेक्षयेति** ॥ **प्रमाणोपपन्नत्वादिति** । दशपुरुषानूकम्—अपत्यं पौत्रप्रभृति । जरत्कार्वाद्युपाख्यानञ्च तत्र प्रमाणम् । पक्षान्तरे त्वौपचारिकसंबन्धाश्रयेण प्रत्ययोत्पत्तिर्वाच्या भवति, विधित्वसंभवेन नियमालाभश्चेति बोध्यम् ॥ भाष्ये—**अयं यत्नः**=संज्ञाकारिग्रहणमित्यादिः, किं तर्हि प्रकृतिरित्याद्यन्तः ॥ भाष्ये—**संख्याप्रवर्तमानामिति** । प्रवर्तमानां सङ्ख्याम्—आरम्भविषयां सङ्ख्याम्—एकशब्देन प्रथमशब्देन च व्यवहरन्तीत्यर्थः । एको द्वावित्यादिवत्प्रथमद्वितीयेत्याद्यपि गणनादर्शनादेकशब्दो लक्षणया प्रथमवाच्यपीति भावः । 'उपाचरन्ति' इत्यन्तेन लक्षणाबीजसंबन्धप्रदर्शनम् । एकशब्दार्थे प्रथमशब्ददर्शनादन्यत्रापि प्रथमार्थे एकत्वमारोप्यैकपदप्रयोग इति तात्पर्यम् ॥ तद्ध्वनयन्नाह—**अस्यां पङ्क्ताविति** । क्वचिदेवैकशब्दस्य विवक्षाप्रकरणादिवशाल्लक्षणया प्रथमपरत्वम्, न सर्वत्रेत्यर्थः । प्रकृतसूत्रे च लक्ष्यानुरोधात्प्रथमपरत्वमिति भावः । 'पितुरेवापत्यम्' इति पक्षे, एकशब्दस्य संख्यावाचित्वपक्षे च गुरुभूतानेकक्लिष्टकल्पनाभिया 'सर्वेषामपत्यम्' इति पक्षः, प्रथमवाची एकशब्द इति च न्याय्यमित्याशयः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थस्याद्ये पादे तृतीयमाह्निकम् ॥

---

( ६६५ विधिसूत्रम् ॥ ४ । १ । २ आ. ५० )

## १३४१ अत इञ् ॥ ४ । १ । ९५ ॥

( इञ्प्रत्ययाधिकरणम् )

( ५२७७ सिद्धान्तसाधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इञो वृद्धावृद्धाभ्यां फिञ्फिनौ विप्रतिषेधेन ॥ * ॥

**( भाष्यम् ) इञो वृद्धावृद्धाभ्यां फिञ्फिनौ भवतो विप्रतिषेधेन ।**

**इञोऽवकाशः—दाक्षिः, प्लाक्षिः ।**

**फिञोऽवकाशः—तादायनिः, यादायनिः ।**

**इहोभयं प्राप्नोति—तापसायनिः, सांमितिकायनिः ।**

**फिनोऽवकाशः—त्वचायनिः, स्रुचायनिः ।**

**इञः स एव ।**

**इहोभयं प्राप्नोति—ग्लुचुकायनिः, म्लुंचुकायनिः[1] ।**

**फिञ्फिनौ भवतो विप्रतिषेधेन ॥**

( प्रदीपः ) **दाक्षिरिति** । 'वा नामधेयस्य' इति यदा वृद्धसंज्ञा नास्ति तदाऽयमिञोऽवकाशः ॥ **इञः स एवेति** । 'प्राचामवृद्धात् फिन् बहुलम्' इति प्राचां मतेन फिनो विधानात्, उदीचां मतेन तदभावादिञोऽवकाश इति भावः ॥

( उद्द्योतः ) ननु दक्षस्य प्लक्षस्य च नामधेयत्वाद्वृद्धत्वेन 'उदीचां वृद्धात्' इति फिञ्प्राप्तेः कथमिञोऽवकाशोऽत आह—**यदा वृद्धसञ्ज्ञा नास्तीति** । वैकल्पिकत्वादिति भावः ॥ **तदाऽयमिञ इति** । उदीचाम्मतेनेति भावः । ननु च वृद्धत्वाभावेऽपि अवृद्धत्वात्फिन्प्राप्तेः कथमिञः स एवेत्युच्यतेऽत आह—**प्राचामिति** ॥

( आक्षेपभाष्यम् )

**इह कस्मान्न भवति—दाक्षिः, प्लाक्षिः ॥**

( प्रदीपः ) **इह कस्मादिति** । प्राचां मतेनावृद्धात् फिन् प्राप्नोतीति भावः ॥

( समाधानभाष्यम् )

**बहुलवचनात्[2] ॥**

( उद्द्योतः ) भाष्ये—**बहुलवचनादिति** । 'प्राचामवृद्धात्' इत्यत्र पठितादित्यर्थः ॥

( ५२७८ द्वितीयं सिद्धान्तसाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तद्राजश्च ॥ * ॥

**( भाष्यम् ) तद्राजश्चेञो भवति विप्रतिषेधेन ।**

**तद्राजस्यावकाशः—ऐक्ष्वाकः ।**

**इञः स एव ।**

**इहोभयं प्राप्नोति—पाञ्चालः, वैदेहः, वैदर्भः, तद्राजो भवति विप्रतिषेधेन ॥**

( प्रदीपः ) **ऐक्ष्वाक इति** । इक्ष्वाकोरपत्यमिति 'जनपदशब्दात् क्षत्रियादञ्' इत्यञ् । दाण्डिनायनादिसूत्रेणोकारलोपो निपात्यते ॥ **पाञ्चाल इति** । पाञ्चालविदेहविदर्भेभ्योऽञ् ॥

---

( ६६६ विधिसूत्रम् ॥ ४ । १ । २ आ. ५१ ॥ )

## १३४२ बाह्वादिभ्यश्च ॥ ४ । १ । ९६ ॥

( इञ्प्रत्ययाधिकरणम् )

( ५२७९ सिद्धान्तबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः ॥ * ॥

**( भाष्यम् ) बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधो वक्तव्यः ।**

---

१ 'म्लुंचुकायनिः' इत्यस्य क. पुस्तके पाठो नास्ति ॥

२ प्राचामवृद्धात्फिन् बहुलमिति बहुलवचनादिति भावः ॥

बाहोरपत्यं बाहविः । यो हि बाहुर्नाम बाहवस्तस्य भवति ॥

नडस्यापत्यं नाडायनः । यो हि नडो नाम नाडिस्तस्य भवति ॥

( प्रदीपः ) बाह्वादिप्रभृतिष्विति । प्रभृतिग्रहणेन वक्ष्यमाणानां कुञ्जादिनडादीनां ग्रहणम् ॥ लौकिक इति । लोके विदित इत्यर्थः ॥ गोत्रभाव इति । संज्ञाकारित्वे—आदिपुरुषत्व इत्यर्थः । एतच्च स्मृतिशास्त्रस्यार्थतोऽनादित्वादनाद्यर्थाभिधायिग्रहणस्य न्याय्यत्वाल्लभ्यते । यत्तु कार्यं विशिष्टशब्दस्वरूपोपादानेन न विधीयते, किन्तु प्रकारान्तरेण, यथा—'अत इञ्' इति, तत्—इदानीन्तनार्थाभिधायिनोऽपि भवति—दैवदत्तिरिति ॥

( उद्योतः ) ननु बाह्वादीत्यनेनैव गणसंग्रहे 'प्रभृति'ग्रहणं मुधेत्यत आह—प्रभृतीति ॥ लोके इति । लोकेविदिते आदिपुरुषत्ववति येषां दर्शनमिति भाष्यार्थः । गोत्रभावे—इति प्रकृताभिप्रायम् ॥ अर्थत इति । शब्दतस्तु सादीत्यर्थः । 'अनाद्यर्थाभिधायित्वं बाह्वादिग्रहणस्य न्याय्यत्वाल्लभ्यते' इति पाठः ॥ नन्वेवं नाडिरित्यादावपि न स्यादत आह—यत्त्विति । यत्र शब्दादर्थोपस्थितिस्तत्रैव प्रसिद्धार्थानां ग्रहणं न त्वन्यत्रापीति भावः ॥ बाहुर्नाम ऋषिः, 'जानन्ति बाहवि' इत्याश्वलायनसूत्रात् ॥

( ५२८० सिद्धान्तबोधकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधः ॥ * ॥

( भाष्यम् ) सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधो वक्तव्यः । श्वशुरस्यापत्यं श्वशुर्यः । यो हि श्वशुरो नाम श्वाशुरिस्तस्य भवति ॥

( प्रदीपः ) सम्बन्धिशब्देति । अयमपि न्यायानुवादः । आदिमत्त्वात् संज्ञायाः, श्वशुरस्य संबन्धोपाधिकस्य त्वनादित्वात्तद्ग्रहणस्यैव न्याय्यत्वात् ॥

( उद्योतः ) श्वशुरादीनां गोत्रभावे दर्शनाभावात्पूर्वेणासिद्धेर्वचनान्तरम् ॥ सम्बन्धिशब्देति । अनेन चार्थतुल्याऽनुवादेन पूर्ववार्तिके 'गोत्रभावः' इत्यस्योपलक्षणत्वं सूच्यते ॥

( वार्तिकांशप्रत्याख्यानसाधकभाष्यम् )

प्रत्ययग्रहणेन नार्थः । सम्बन्धिशब्दानां तत्सदृशात्प्रतिषेध इत्येव ।

इदमपि सिद्धं भवति—'मातृपितृभ्यां स्वसा' (८।३।८४) मातृष्वसा, पितृष्वसा । अन्या मातृस्वसेति ॥

( प्रदीपः ) मातृस्वसेति । मातृशब्दोऽत्र क्रियावाची, न जननीवाचीति 'मातृपितृभ्यां स्वसा' इति षत्वं न भवति । यद्यपि क्रियाशब्दार्थोऽपि नित्यस्तथापि प्रसिद्धतरः संबन्धिलक्षणोऽर्थ इति तस्यैव ग्रहणं युक्तम् । उक्तं च हरिणा—

अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।
शास्त्रार्थस्तेषु कर्तव्यः शब्देषु न तदुक्तिषु ॥ इति ॥

( उद्योतः ) क्रियावाचीति । क्रियाप्रवृत्तिनिमित्तक इत्यर्थः ॥ क्रियाशब्दार्थ इति । क्रियाप्रवृत्तिनिमित्तकशब्दस्यार्थ इत्यर्थः ॥ अभिव्यक्तेत्यनेनानाद्यर्थाभिधायित्वमुक्तम्, तेनाधुनानिकसंज्ञानिरासः । तत्र तत्रासंज्ञायामित्युक्तेः, अत्रैव भाष्ये उक्तत्वाच्च पदकार्यविषयोऽयम् । तत्रापि विशिष्टरूपोपादान एव ॥ स्वतन्त्रा इत्यनेन गौणनिरासः । स हि संबन्धात्प्रवर्तते ॥ लोकविश्रुता इत्यनेनाप्रयुक्तत्वं निरस्तम् ॥ तदुक्तिषु इति । तत्सदृशेष्वित्यर्थः ॥

( ६६७ विधिसूत्रम् ॥ ४ । १ । २ आ. ५२ ॥ )

## १३४३ सुधातुरकङ् च ॥ ४ । १ । ९७ ॥

( ५२८१ एकदेशिवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सुधातृव्यासयोः ॥ * ॥

( भाष्यम् ) सुधातृव्यासयोरिति वक्तव्यम् । सौधातकिः, वैयासकिः शुकः ।

अत्यल्पमिदमुच्यते ।

सुधातृव्यासवरुडनिषादचण्डालबिम्बानामिति वक्तव्यम् । सौधातकिः, वैयासकिः शुकः, वारुडकिः, नैषादकिः, चाण्डालकिः, बैम्बकिः ॥

( सिद्धान्तभाष्यम् )

तर्हि वक्तव्यम् ?

---

१ वार्तिककृता येषाम्बाह्वादिगणपठितशब्दानाङ्गोत्रभावे लौकिके दर्शनन्ततोऽन्यत्र प्रतिषेधकरणाद्यो हि बाहुर्नामा कश्चन ( गोत्रभावे लौकिकेऽप्रसिद्धः ) तस्मादिञ् न स्यात्, किन्त्वौत्सर्गिकोऽण् तदाह—बाहुर्नामेत्यादि ॥

२ वार्तिकोक्तप्रभृतिग्रहणस्य फलमाह—नडस्यापत्यमिति ॥

३ यद्धि कार्यमानुपूर्व्यवच्छिन्नोद्देश्यताकन्न, किन्तु 'अत इञ्' इत्यादिवद्वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकम्, तत्—कार्यमिदानीन्तनार्थाभिधायिनो देवदत्तशब्दादपि भवतीत्यर्थः ॥

४ 'लोकविदितेष्वादि पुरुषत्ववत्सु येषां' इति झ. पाठः ॥

५ एवञ्च यत्र विशिष्टरूपोपादानन्तत्रैव प्रसिद्धार्थानां ग्रहणमित्यर्थः ॥

६ श्वशुरादिशब्दानां सामान्यवाचित्वेन संज्ञाकारित्वं न सम्भवतीति तात्पर्यम् ॥

७ अनेन पृथग्वार्तिककरणेन पूर्वस्मिन् वार्तिके गोत्रभाव इत्येतद्व्यर्थमित्यर्थः । अन्यथा श्वशुरादीनां गोत्रभावत्वमेव नास्तीति व्यर्थमेतत्स्यात् ॥

८ च. पुस्तके 'अन्या तु मातृ' इति पाठः । झ. पुस्तके 'अन्या हि मातृ' इति पाठः ॥

९ क्रियाशब्दस्यार्थ इति भ्रमं वारयितुमाह—क्रिया प्रवृत्तीति ॥

१० गौणो हि सम्बन्धात्प्रवर्तत इति न स्वतन्त्र इति भावः ॥

११ स्वतन्त्रशब्दसदृशशब्देष्वित्यर्थः ॥

न वक्तव्यम् ।

प्रकृत्यन्तराण्येवैतानि ॥

( प्रदीपः ) प्रकृत्यन्तराणीति । स्वार्थिककन्प्रत्ययान्तत्वादिति भावः । अव्यविकन्यायेन च कन्रहितैर्वाक्यमेव भवति । व्यासकशब्दाच्च कन्नन्तादृषिवाचिनोऽपि बाह्वादेराकृतिगणत्वादिञ् भवति, न तु ऋष्यणिति भावः ॥

( उद्योतः ) स्वार्थिकेति । [1]व्यासादिविषयमिदम् । [2]अत एव वैयासकी संहितेत्यस्य सिद्धिः । [3]अत एव वैयासक्यां संहितायामिति पुराणेषु पठ्यते । वैयासिक्यामिति त्वपपाठः ॥ ननु व्यासादिभ्यः प्रत्ययेऽनिष्टरूपापत्तिरत आह—अव्यविकेति ॥

( ६६८ विधिसूत्रम् ॥ ४ । १ । २ आ० ५३ )

## १३४४ गोत्रे कुञ्जादिभ्यश्च्फञ् ॥ ४ । १ । ९८ ॥

( च्फञोऽधिकरणम् )

( प्रत्ययानुबन्धानां फलदर्शकं भाष्यम् )

किमर्थश्चकारः ?

स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥

अथ ञकारः किमर्थः ?

ञकारो वृद्ध्यर्थः । ञ्णितीति वृद्धिर्यथा स्यात् ॥

एकेन ककारेणोभयं सिद्धम् ।

अवश्यमत्र विशेषणार्थोऽन्योऽनुबन्धः कर्तव्यः ।

क्व विशेषणार्थेनार्थः ? 'व्रातच्फञोरस्त्रियाम्' (५।३।११३) इति । फक इति ह्युच्यमाने नाडायनः, अत्रापि प्रसज्येत ।

अथापि फञ इत्युच्यते । एवमप्याश्वायनः, अत्रापि प्रसज्येत ।

तस्माच्चकार एव कर्तव्यः, अन्तोदात्तत्वमपि यथा स्यात् । चकारे चेदानीं विशेषणार्थे क्रियमाणेऽवश्यं वृद्ध्यर्थोऽन्योऽनुबन्धः कर्तव्यः । स च ञकार एव कर्तव्यः, सूत्रभेदो मा भूदिति ॥

( प्रदीपः ) अथापि फञ इति । सर्वथा सामान्यग्रहणं प्राप्नोतीत्येवम्परमेतत् । फञिति क्रियमाणे कौञ्जायना इति ञित्स्वरप्रसङ्गः ॥ सूत्रभेद इति । च्फक्यपि सिध्यति । सूत्रभेदस्तु स्यादिति भावः ॥

( उद्योतः ) भाष्ये—फक इत्युच्यमाने इति । क्फप्रत्यये कस्येत्संज्ञा दुर्लभेति भावः ॥ फञिति क्रियमाण इति । 'अत्र सूत्रे' इत्यादिः ॥ कानुबन्धेनापि वृद्धिः सिध्यतीत्याह—च्फक्यपि सिद्ध्यतीति ॥

( स्वरार्थानुबन्धाक्षेपभाष्यम् )

अथ क्रियमाणेऽपि वै चकारे—अन्तोदात्तत्वं न प्राप्नोति ।

किं कारणम् ?

परत्वात् 'ञ्निति' इत्याद्युदात्तत्वं प्राप्नोति ।

चित्करणसामर्थ्यादन्तोदात्तत्वम्भविष्यति ।

ञित्करणसामर्थ्यादाद्युदात्तत्वम्प्राप्नोति ।

अस्त्यन्यञ्ञित्करणे प्रयोजनम् ।

किम् ?

वृद्ध्यर्थो ञकारः ।

चित्करणेऽपि तर्हि अन्यत्प्रयोजनम् ।

किम् ?

विशेषणार्थश्चकारः ।

शक्योऽत्र विशेषणार्थोऽन्योऽनुबन्ध आसङ्क्तुम्, तत्र चकारानुरोधादन्तोदात्तत्वम्भवति ।

वृद्ध्यर्थोऽपि तर्हि अन्यः शक्योऽनुबन्ध आसङ्क्तुम् । तत्र ञकारानुरोधादाद्युदात्तत्वम्प्राप्नोति ॥

( समाधानभाष्यम् )

एवं तर्हि स्वरे योगविभागः करिष्यते । इदमस्ति—'चितः' ( ६।१।१६३ )—चितोऽन्त उदात्तो भवतीति । ततः—तद्धितस्य—तद्धितस्य च चितोऽन्तउदात्तो भवतीति ।

किमर्थमिदम् ?

परत्वात् 'ञ्निति' इत्याद्युदात्तत्वं प्राप्नोति, तद्बाधनार्थम् ।

ततः—कितः—कितस्तद्धितस्यान्त उदात्तो भवतीति ॥

( प्रदीपः ) एवं तर्हीति । चकारस्य विशेषणे चरितार्थत्वात्, वृद्धौ च ञकारस्य परत्वाञ्ञित्स्वरप्राप्तावित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

किं पुनरत्र स्वरार्थेन चकारेणानुबन्धेन ? यावता च्फञन्ताञ्ञ्यो विधीयते, तत्र ञ्नितीत्याद्युदात्तत्वेन भवितव्यम् ॥

( प्रदीपः ) तत्र ञ्नितीति । सति शिष्टस्वरस्य बलीयस्त्वादिति भावः ॥

( समाधानभाष्यम् )

नैतदस्ति ।

---

१ प्रकृत्यन्तराणीत्यनेन व्यासशब्दादन्योऽयं व्यासकशब्द इति भ्रमवारणायाह—व्यासादीति ॥

२ अत एव=व्यासकशब्दस्य व्यासशब्दात्कन्प्रत्ययान्तत्वेन सिद्धत्वादेव ॥

३ असिद्धेर्थे आर्षप्रमाणमप्याह—अत एवेति ॥

बहुषु लोपे कृते अन्तोदात्तत्वं यथा स्यात्—कौञ्जायना इति ॥

( प्राचीनवैय्याकरणमतखण्डनभाष्यम् )

इह केचित्—द्व्येकयोः फ्यञं विदधति, बहुषु च फकम्, केचित्—च्फञन्ताञ्ञ्यम् ।

किमत्र न्याय्यम् ?

ञ्यवचनमेव न्याय्यम् । द्व्येकयोर्हि फ्यञि सति बहुषु च फकि कौञ्जायनानामपत्यं माणवकः—कौञ्जायन्यः, कौञ्जायन्यौ, केन यशब्दः श्रूयेत ? द्व्येकयोरित्युच्यमानो न प्राप्नोति ।

इह कौञ्जायन्यस्यापत्यं बहवो माणवकाः कौञ्जायनाः । केन यशब्दो न श्रूयेत । द्व्येकयोरित्युच्यमानः प्राप्नोति ॥

( प्रदीपः ) इहेति । पूर्वे वैयाकरणाः । केन यशब्द इति । यशब्दस्य बहुत्वे प्रागभावात् । यदा तु ञ्यः क्रियते तदा 'गोत्रेऽलुगचि' इति लुकि प्रतिषिद्धे यशब्दः श्रूयते । कौञ्जायन्यस्यापत्यानि बहूनीत्यत्र इञः 'ण्यक्षत्रियार्ष' इति लुकि तद्राजान्तस्य बहुषु वर्तमानाञ्ञ्यस्य लुक् सिध्यति ॥

( उद्योतः ) यशब्दस्य बहुत्वे प्रागभावादिति । बहुत्वे युवप्रत्ययोत्पत्तेः प्राक् यशब्दस्याभावादित्यर्थः । क्वचित्तु—'प्रयोगाभावात्' इति पाठः ॥ लुकि प्रतिषिद्धे इति । युवप्रत्ययस्य तु 'ण्यक्षत्रिय' इति लुगिति बोध्यम् । न च लुका विषयापहारे कथमत्रालुक् ? प्रत्ययलक्षणेन सत्त्वात् । 'न लुमत' इति निषेधस्तु न, अस्य प्रत्ययोद्देश्यकत्वेऽप्यङ्गोद्देश्यकत्वाभावादित्याहुः । फगन्ताद्युवप्रत्ययस्य लुक् तु पैलादित्वात्, ऋषित्वाद्वा । 'आर्ष' इत्यत्र लक्षणप्रतिपदोक्तपरिभाषा तु न प्रवर्तते, अत एव 'आत्रेय'शब्दाद्यूनि इञो लुगुक्तोऽनेन भाष्य इत्याहुः ॥ तद्राजान्तस्य बहुष्विति । तत अजादिप्राग्दीव्यतीयविवक्षाभावान्नात्रालुकः प्राप्तिरिति भावः ॥

( पाणिनिमतपुरस्करणभाष्यम् )

तदेतत्कथं कृत्वा ञ्यवचनं ज्यायो भवति ?

यदि तन्नास्ति—आपत्यं वा गोत्रम्, परमप्रकृतेश्चापत्यः, आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः, स चास्त्रियाम्, एको गोत्रग्रहणानर्थक्यं च, बहुवचनलोपिषु च सिद्धमिति ॥

( प्रदीपः ) आपत्यश्चेति । 'गोत्रेऽलुगचि' इत्यत्रैतद्व्याख्यातम् । कुञ्जशब्दादेव यूनि फ्यञि फकि च कृते स्वार्थिकस्य चेञो लुकि कृते सर्वेष्टसिद्धिः ॥

( उद्योतः ) यूनि फ्यञि फकि चेति । युवद्व्येकयोः फ्यञ्, तद्बहुत्वे फगिति भावः ॥

( प्राचीनवैय्याकरणमतखण्डननिराकरणभाष्यम् )

सति हि तस्मिन्—द्व्येकयोरपि फ्यञि सति बहुषु च फकि सति न दोषो भवति ॥

तत्र कौञ्जायनानामपत्यं माणवक इति विगृह्य कुञ्जशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति—कौञ्जायन्यः, कौञ्जायन्यौ ।

कौञ्जायन्यस्यापत्यं माणवका इति विगृह्य कुञ्जशब्दाद्बहुषूत्पत्तिर्भविष्यति—कौञ्जायना इति ॥

( ६७४ विधिसूत्रम् ॥ ४ । १ । २ आ. ५९ )

## १३५० अनृष्यानन्तर्ये बिदादिभ्योऽञ् ॥ ४ । १ । १०४ ॥

( अञोऽधिकरणम् )

( आक्षेपभाष्यम् )

अनृष्यानन्तर्य इत्युच्यते तत्रेदं न सिध्यति—कौशिको विश्वामित्र इति ।

किं कारणम् ?

विश्वामित्रस्तपस्तेपे नानृषिः स्यामिति ।

तत्रभवानृषिः संपन्नः ।

स पुनस्तपस्तेपे नानृषेः पुत्रः स्यामिति ।

तत्रभवान् गाधिरपि ऋषिः संपन्नः ।

स पुनस्तपस्तेपे नानृषेः पौत्रः स्यामिति ।

तत्रभवान् कुशिकोऽपि ऋषिः संपन्नः ।

तदेतदृष्यानन्तर्यं भवति । तत्रानृष्यानन्तर्य इति प्रतिषेधः प्राप्नोति ॥

( प्रदीपः ) अनृष्यानन्तर्य इत्यस्यार्थद्वयं सम्भवति—ऋषीणामानन्तर्ये—अव्यवधाने न भवति । यद्वा—अनन्तरमेवानन्तर्यम्, तेन ऋषिभ्योऽनन्तरापत्ये प्रत्ययो न भवतीति । उभयत्राप्यसमर्थसमासः, भवतिना नञः सम्बन्धात् । तत्राद्यपक्षाश्रयेण पूर्वः पक्षः, द्वितीयपक्षाश्रयेणोत्तरम् ॥

( उद्योतः ) तेन ऋषिभ्योऽनन्तरेति । भाष्ये—'कथं तर्हि—ऋषावनन्तरे न' इत्यत्र 'ऋषौ' इत्यवधेरेवाधिकरणत्वविवक्षायां सप्तमीति भावः । अत्र 'विश्वामित्रस्तपस्तेपे' इति गाथया—अन्यत्र ऋष्यानन्तर्याभावं सूचयति । अनृषिपुत्राणामपि ऋषित्वात्, ऋषिपुत्राणामप्यनृषित्वाच्चेति बोध्यम् ॥

( एकदेशिसमाधानभाष्यम् )

नैष दोषः ।

नैवं विज्ञायते—ऋष्यानन्तर्ये न भवतीति ।

कथं तर्हि ?

ऋषावनन्तरे नेति ॥

( प्रत्याक्षेपभाष्यम् )

यद्येवम्—

( ५२८२ प्रत्याक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ अनृष्यानन्तर्यवचनमनर्थकं संज्ञागोत्राधिकारात् ॥ * ॥

( भाष्यम् ) अनृष्यानन्तर्यवचनमनर्थकम् ।

किं कारणम् ?

संज्ञागोत्राधिकारात् । संज्ञागोत्र इति वर्तते, कः प्रसङ्गो यदनन्तरे स्यात् ।

नैव प्राप्नोति, नार्थः प्रतिषेधेन ॥

( प्रदीपः ) संज्ञागोत्राधिकारादिति । संज्ञया यद् गोत्रं पौत्रप्रभृति तदेवाधिकृतम्, न त्वपत्यमात्रमित्यर्थः ॥

( उद्योतः ) ननु गोत्रग्रहणमेव प्रकृतम्, न संज्ञागोत्रं नाम किञ्चिदत आह—संज्ञयेति । संज्ञया प्रतिपाद्यं यत् गोत्रम्, पौत्रप्रभृतीत्यर्थः । गोत्रसंज्ञया प्रत्याय्यं यत्पौत्रप्रभृति तस्यैवाधिकारोऽत्रेति फलितम् ॥

( सिद्धान्तभाष्यम् )

एवं तर्हि सिद्धे सति यदनृष्यानन्तर्य इति प्रतिषेधं शास्ति तज्ज्ञापयत्याचार्यो बिदादिषु येऽनृषयः पठ्यन्ते तेषामनन्तरेऽपि वृत्तिर्भवतीति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

नानान्द्रः, पौत्रः, दौहित्र इत्येतत् सिद्धम्भवति ॥

( प्रदीपः ) तेषामनन्तर इति । अन्यथा-आनन्तर्यप्रतिषेधोऽनर्थकः स्यात् । तत्र ऋषिभ्यो गोत्र एव प्रत्ययः । अनृषिभ्यस्त्वनन्तरापत्य एवेत्येष विषयविभागः ॥ नन्वस्माज्ज्ञापकादनृषिभ्योऽपत्यमात्रे प्रत्ययः प्राप्नोति । नैष दोषः । विशेषविषयस्यानुमानस्याश्रयणात् ॥

(उद्योतः) अन्यथेति । प्राप्तिपूर्वकत्वात्प्रतिषेधस्येति भावः ॥ गोत्र एवेति । अनन्तरे निषेधादिति भावः ॥ विशेषविषयस्येति । 'ऋषिभ्योऽनन्तरे न भवति' इति प्रतिषेधेन 'अनृषिभ्योऽनन्तरे भवति' इति शेषोऽनुमीयते । स च तक्रकौण्डिन्यन्यायाद्गोत्रेऽञो बाधक इति भावः । भाष्ये—तेषामनन्तरेऽपि वृत्तिरित्यपिशब्द एवकारार्थः, अपिरहित एव पाठ इति वाऽऽशयः । अत्र मानं चिन्त्यम् । किं च ऋषिभ्योऽनन्तरे नेति प्रसज्यप्रतिषेधेन व्याख्यानं विफलम्, अनृषिभ्योऽनन्तर इत्येव युक्तत्वात् । न च 'गोत्रे' इत्यधिकारादनन्तरेऽप्राप्त्या निषेधो व्यर्थः । तत्सामर्थ्येनात्र सूत्रे 'गोत्रे' इत्यस्यासंबन्धात् । युवापत्ये तु न; 'गोत्राद्यूनि' इति नियमात्, तस्मादनृषिभ्योऽनन्तरे गोत्रे च प्रत्यय इत्येव भाष्याल्लभ्यते इति दिक् ॥

( ६७८ विधिसूत्रम् ॥ ४ । १ । २ आ. ६३ )

## १३५४ वतण्डाच्च ॥ ४ । १ । १०८ ॥

( यञोऽधिकरणम् )

( सूत्रफलप्रदर्शकभाष्यम् )

किमर्थमिदमुच्यते ?

न गर्गादिभ्यो यञ् ( ४।१।१०५ ) इत्येव सिद्धम् । 'लुक् स्त्रियाम्' (१०९) इति वक्ष्यामीति ॥

( प्रदीपः ) लुक् स्त्रियामिति वक्ष्यामीति । तत्र च वतण्डशब्दानुवृत्त्यर्थमेतदित्यर्थः ॥

( उद्योतः ) भाष्ये—न गर्गादिभ्यो यञित्येव सिद्धमिति । न च शिवादिष्वप्यस्य पाठादाङ्गिरसेऽण्बाधनार्थमिदमिति वाच्यम् । गणद्वयपाठसामर्थ्येनाभिधानस्वाभाव्यादाङ्गिरसे यञ्, अन्यत्राणिति व्यवस्थासंभवादित्यभिमानः ॥

( आक्षेपभाष्यम् )

यदि पुनस्तत्रैवोच्येत ॥

( प्रदीपः ) यदीति । गर्गादिगण एव वतण्डशब्दानन्तरं 'लुक् स्त्रियाम्' इति पठितव्यमिति भावः ॥

( उद्योतः ) 'तत्र'शब्दार्थमाह—गण एवेति ॥ नन्वेवमन्येभ्योऽपि गर्गादिभ्यो यञः स्त्रियां लुक्स्यादत आह—वतण्डशब्दानन्तरमिति । तथा च तत्र वतण्डग्रहणमनुवर्तत इति भावः ॥

( समाधानभाष्यम् )

नैवं शक्यम्, आङ्गिरसग्रहणं हि विच्छिद्येत ॥

( प्रदीपः ) आङ्गिरसग्रहणमिति । तथा च सर्वत्र लुक् स्यात् । योगविभागस्तर्हि किमर्थः, न 'वतण्डाल्लुक् स्त्रियाम्' इत्येकयोग एवोच्येत ? आङ्गिरसे शिवाद्यण्बाधनार्थो योगविभागः । वतण्डो नाम ऋषिः, तेन[2] ऋषित्वादेवाणि सिद्धे शिवादिषु तस्य पाठो गोत्रे गर्गादियञा समावेशार्थः । अनेन तु योगेनाङ्गिरसेऽण्प्रसङ्गे यञ्विधानादण् बाध्यते । अन्यत्र तु गोत्रे यञणौ द्वावपि भवतः । ऋषित्वादेव च वातण्डीत्यत्र ष्यङ् न भवति ॥

( उद्योतः ) सर्वत्र—आङ्गिरसे, तद्भिन्ने च । एवं चाङ्गिरसे वतण्डी, अन्यत्र वातण्ड्यायनीति भावः ॥ अण्बाधनार्थं इति । गणद्वयपाठसामर्थ्येन विष्टा व्यवस्था न लभ्यत इति भावः । परे तु विध्यर्थं इत्येवोचितम्, 'न गर्गादिभ्यः' इति प्रश्नस्य गर्गादिष्वेव पठनीयः, किमनेन पृथक्सूत्रेण ? कप्यादिष्विव विशेषानुक्तेः । कपिबोधाभ्यां योगविभागेन 'आङ्गिरसे' इत्यस्यासंबन्ध इत्याशयः ॥ उत्तरयति—लुगिति । 'यदि पुनस्तत्रैवोच्येत' इत्यस्य कैयटोक्त एवार्थः ॥ नैवमित्यादि । तद्विच्छेदे हि सर्वत्र यञ् स्यादित्यर्थः । तस्मादाङ्गिरस एव गोत्रेऽस्मायञ् इति भावः । गर्गादिपाठस्तु नास्त्येव । अत एव भगवता योगविभागफलं न विचारितम् । एवञ्च योगविभागेन कपिबोधयोरिव वतण्डस्यापि गर्गादिगणे पाठाभाव एवानुमीयते । एवञ्चानाङ्गिरसे 'वातण्ड्यायनी' इत्यसाध्वेवेति भाष्यार्थमाहुः ॥

१ अपत्यं पौत्रप्रभृति गोत्रमित्यनेन संज्ञापितम्पौत्रप्रभृतिरूपं गोत्रमित्यर्थः ॥

२ 'तत्र ऋषि' इति क. पाठः ॥

( ६८२ विधिसूत्रम् ॥ ४ । १ । २ आ. ६७ ॥ )

## १३५८ शिवादिभ्योऽण् ॥ ४ । १ । ११२ ॥

( अणोऽधिकरणम् )

( अण्प्रयोजनभाष्यम् )

**किमर्थं शिवादिभ्योऽण् विधीयते, न यथाविहितमित्येवोच्येत ?**

**शिवादिभ्यो यथा विहितमितीयत्युच्यमाने— इञ् प्रसज्येत । इञ्—अतो यथाविहितः ।**

**पुनर्वचनमिदानीं किमर्थं स्यात् ?**

**ये तस्य बाधकास्तद्बाधनार्थम् ॥**

( प्रदीपः ) गोत्र इति निवृत्तम्, अपत्यमित्येवानुवर्तते ॥

( उद्द्योतः ) भाष्ये—न यथाविहितमिति । फलन्तु व्याख्यानादेव नानुवृत्तिरिति भावः ॥

( अण्प्रयोजनखण्डनभाष्यम् )

**स वै नास्ति यस्तं बाधेत, तत्रारम्भसामर्थ्यात्— यो विहितः, न च प्राप्नोति, स भविष्यति ।**

**कश्चासौ ?**

**अणेव ॥**

( उद्द्योतः ) स वै नास्तीति । न चैभ्यः 'प्राचामवृद्धात्' इत्यस्य प्राप्तत्वेन कथं तदभावः ? बहुलग्रहणात्तस्येदृशे विषयेऽप्रवृत्तिरित्याशयात् ॥ कश्चासावणेवेति । नन्विदमसंगतम्, शिवादिभ्यो गोत्र एवेञ् नान्यत्रेति नियमेन चारितार्थ्यात्कथमण्ग्रहणं विनाऽण्विधिरत आह—गोत्रे इति निवृत्तमिति[1] । अन्ये तु विध्यर्थत्वस्य युक्तत्वाद्विधित्वायाण एव विधिस्तेनेति भाष्याशयः । अत एव 'यूनि लुक्' सूत्रादिस्थभाष्येणाविरोध इत्याहुः ॥

( अण्प्रयोजनभाष्यम् )

**उत्तरार्थमेव तर्हि । 'अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः' ( ४।१।११३ ) इति । अत्र यथाविहितमितीयत्युच्यमाने—ढक् प्रसज्येत, ढक्— अतो यथाविहितः ।**

**पुनर्वचनमिदानीं किमर्थं स्यात् ?**

**ये तस्य बाधकास्तद्बाधनार्थम् ॥**

( प्रदीपः ) **ढगत इति** । ननु मातृशब्दस्यास्त्रीप्रत्ययान्तत्वात्कथं ढग्विहितः ? एवं तर्हि परिहारान्तराभिधानान्न विचारितमेतद्भाष्यकारेण ॥

( उद्द्योतः ) परिहारान्तरेति । 'स्त्रीभ्यः' इत्यर्थग्रहणं मत्वा पूर्वपक्षिणोभयसाधारण्येन ढगित्युक्ते उभयसाधारण्येन परिहारान्तरमेवोक्तम्, न तु वस्तुतत्वं निरूपितम् । तच्च 'स्त्रीभ्यः' इति सूत्रे निरूपयिष्यते इति भावः ॥

( अणूप्रयोजनखण्डनभाष्यम् )

**स वै नास्ति यस्तं बाधेत, तत्रारम्भसामर्थ्याद्यो विहितः, न च प्राप्नोति, स भविष्यति ।**

**कः पुनरसौ ?**

**अणेव ॥**

( अण्प्रयोजनभाष्यम् )

**उत्तरार्थमेव हि तर्हि । 'ऋष्यन्धकवृष्णिकुरुभ्यश्च (११४)' इति । अत्र यथाविहितमितीयत्युच्यमाने— इञ् प्रसज्येत । इञ्—अतो यथाविहितः ।**

**पुनर्वचनमिदानीं किमर्थं स्यात् ?**

**ये तस्य बाधकास्तद्बाधनार्थम् ॥**

( खण्डनभाष्यम् )

**स वै नास्ति यस्तं बाधेत, तत्रारम्भसामर्थ्याद्यो विहितः, न प्राप्नोति, स भविष्यति ।**

**कश्चासौ ?**

**अणेव ॥**

( अण्प्रयोजनभाष्यम् )

**उत्तरार्थमेव तर्हि । 'मातुरुत्संख्यासंभद्रपूर्वायाः, कन्यायाः कनीन च' (११५,११६) इति । अत्र यथाविहितमितीयत्युच्यमाने—ढक् प्रसज्येत । ढक्— अतो यथाविहितः ।**

**पुनर्वचनमिदानीं किमर्थं स्यात् ?**

**मातुरुकारं वक्ष्यामि, कन्यायाः कनीनभावमिति ॥**

( आक्षेपभाष्यम् )

**यद्येतावत्प्रयोजनं स्यात्—तत्रैवायम्ब्रूयात्—'स्त्रीभ्यो ढक्' ( १२० ) मातुरुकारः, कन्यायाश्च कनीन इति ॥**

( सिद्धान्तभाष्यम् )

**इदं तर्हि प्रयोजनम्—अयमृष्टिषेणशब्दः शिवादिषु पठ्यते । अत्र यथाविहितमितीयत्युच्यमाने— इञ् प्रसज्येत । तं परत्वात्सेनान्ताण्ण्यो बाधेत । तत्रारम्भसामर्थ्यात्—इञ् प्रसज्येत । पुनरण्ग्रहणादणेव भवति ॥**

( प्रदीपः ) **तम्परत्वादिति** । पैरत्वग्रहणेन[2] बाधकत्वं लक्ष्यते, तेनापवादत्वादित्यर्थः ॥

( उद्द्योतः ) ननु ण्यस्यानवकाशत्वात्परत्वादित्ययुक्तमत आह—परत्वग्रहणेनेति । न च प्राग्दीव्यतीयाधिकारेणैवाण्ग्रहणे सिद्धेऽणिति व्यर्थमेव, अर्थस्यावधित्वाश्रयणेनार्थबोधकवाक्ये एव तदुपस्थितेः ॥

---

१ नन्विदमित्यादि 'कश्चासावणेव' इति भाष्यस्य व्याख्यानम्, न तु 'गोत्रे इति निवृत्तम्' इति प्रदीपस्य व्याख्यानम् ॥

२ 'परग्रहणेन' इति क. पाठः ॥

( ६५६ विधिसूत्रम् ॥ ४ । १ । २ आ. ६९ ॥ )

## १३६० ऋष्यन्धकवृष्णिकुरुभ्यश्च ॥ ४ । १ । ११४ ॥

( अणोऽधिकरणम् )

( ५२८३ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ऋषिरुयणो ढग्ढ्कौ विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) ऋष्यणरुयणश्च ढग्ढ्कौ भवतो विप्रतिषेधेन ।

ऋष्यणोऽवकाशः—वासिष्ठः, वैश्वामित्रः । ढकोऽवकाशः—दुलि—दौलेयः । बलि—बालेयः ।

इहोभयं प्राप्नोति—अत्रि—आत्रेयः ।

रुयणोऽवकाशः—मकन्दिका—माकन्दिकः । ढ्कोऽवकाशः—काणिकेरः ।

इहोभयं प्राप्नोति—पौणिकेरः, मौद्गलिकेरः ।

ढग्ढ्कौ भवतो विप्रतिषेधेन ॥

( प्रदीपः ) ऋषिरुयण इति । 'अवृद्धाभ्यो नदीमानुषीभ्यः' इति मानुषीलक्षणोऽण् रुयणशब्देनोक्तः । अत्र च यथासङ्ख्यं सम्बन्धः ॥ दौलेय इति । दुलेरनृषित्वाड्ढकोऽयमवकाशः ॥ काणिकेर इति । काणैव—काणिका ॥ पौणिकेर इति । पुणिका तन्नामिका क्षुद्रा च ॥

(उद्द्योतः) ननु रुयणप्रसिद्धोऽत आह—अवृद्धाभ्य इति ॥ अनृषित्वादिति । मन्त्रद्रष्टृत्वाभावादिति भावः ॥ काणैवेति । वृद्धत्वात् तन्नामकत्वाभावाच्च ढ्कोऽयमवकाश इति भावः ॥

( ५२८४ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ द्व्यचो ढको ढ्रग्ढञौ ॥ * ॥

( भाष्यम् ) द्व्यचो ढग्भवतीत्येतस्माड्ढ्ग्ढञौ भवतो विप्रतिषेधेन । द्व्यचो ढग्भवतीत्यस्यावकाशः—दात्तेयः, गौप्तेयः । ढ्कः स एव । इहोभयं प्राप्नोति—नटी—नाटेरः, दासी—दासेरः ।

ढञोऽवकाशः—कामण्डलेयः, हैरण्यवाहेयः । माद्रवाहेयः । ढकः स एव । इहोभयं प्राप्नोति—जम्बू—जाम्बेयः । ढ्रग्ढञौ भवतो विप्रतिषेधेन ॥

( प्रदीपः ) जाम्बेय इति । चतुष्पाल्लक्षणो ढञ्, 'ढे लोपोऽकद्र्वाः' इत्यूकारलोपः । जम्बूशब्दस्यास्त्रीप्रत्ययान्तत्वात् ढक्प्राप्तिश्चिन्त्या ॥

( उद्द्योतः ) जम्बूशब्दस्येति । अस्य दीर्घोकारान्तत्वादूङभावः । 'द्व्यचः' इत्यत्रापि 'स्त्रीभ्यः' इति वर्तते । तच्च स्वर्यते । तेन तदधिकारविहितप्रत्ययग्रहणम् । तत्र 'अप्राणिजातेश्च' इति वार्तिके 'उतः' इत्यस्यासंबन्धेऽपि प्राणिजातित्वात्तदभाव इति भावः । अन्ये तु—

तस्या जम्बोः फलरसो नदीभूय प्रवर्तते ।

इति प्रयोगाज्जम्बुह्रस्वान्तोऽपि । स च वृक्षशृगालोभयवचनः । एतद्भाष्यप्रामाण्यात्तस्मादूङि दीर्घान्तोऽपि उभयवचनः । यद्वा 'स्त्रीभ्यः' इत्यत्रार्थग्रहणमेव, इडविडादयः शिवादिषु पाठ्याः, शिवादिराकृतिगण इति गणरत्ने स्पष्टम् । अनभिधानाद्वा तेभ्यो ढगभाव इति भाष्याशय इत्याहुः ॥

( ५२८५ पूर्वपक्षाक्षेपवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ न वष्र्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) न वा एष युक्तो विप्रतिषेधः, योऽयमृष्यणो ढकश्च ।

किं कारणम् ?

ऋष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् । सिद्धोऽत्राणुत्सर्गेणैव, तस्य पुनर्वचने एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैव तदपवादमिञं बाधते, एवं ढकमपि बाधेत ॥

( प्रदीपः ) न वेति । प्राप्तिमात्रं बाध्यं मन्यते ॥

( उद्द्योतः ) ननु ऋष्यण् मध्येऽपवादन्यायेन इञ एव बाधको न तु ढकोऽत आह—प्राप्तीति ॥

( ५२८६ एकदेशिसमाधानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ तस्मादृषिभ्योऽण्विधानेऽत्र्यादिप्रतिषेधः ॥ * ॥

( भाष्यम् ) तस्मादृषिभ्योऽण्विधानेऽत्र्यादिभ्यः प्रतिषेधो वक्तव्यः ॥

( समाधानान्यथासिद्धिभाष्यम् )

न वक्तव्यः ।

'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्येवमृष्यण्—इञं तदपवादं बाधिष्यते, ढकं न बाधिष्यते ॥

( पूर्वपक्षाक्षेपभाष्यम् )

अयं चाप्ययुक्तो विप्रतिषेधो योऽयं ढकः—ढ्रग्ढञोश्च ।

किं कारणम् ? ॥

( ५२८७ आक्षेपवार्तिकम् ॥ ५ ॥ )

### ॥*॥ ढकः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥*॥

( भाष्यम् ) सिद्धोऽत्र ढक् 'स्त्रीभ्यो ढक्' (४।१।१२०) इत्येव । तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैव तदपवादन्तन्नामिकाणं बाधते, एवं ढ्रग्ढञावपि बाधेत ॥

( ५२८८ एकदेशिसमाधानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ तस्मात्तन्नामिकाण्यञ्चचः ॥ * ॥

( भाष्यम् ) तस्मात्तन्नामिकाणि—अञ्च इति वक्तव्यम् ।

( उद्योतः ) भाष्ये—तन्नामिकाण्यञ्च इति । एवं च द्व्यचोऽपि 'स्त्रीभ्यो ढक्' इत्येव ढगिति 'द्व्यचः' इति सूत्रं पृथङ्न कर्तव्यमित्यर्थः ॥

( समाधानान्यथासिद्धिभाष्यम् )

न वक्तव्यम् ।

'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते' इत्येवमयं ढक् तन्नामिकाणं तदपवादं बाधिष्यते, ढूग्ढञौ न बाधिष्यते ॥

(प्रदीपः) मध्येऽपवादा इति । पूर्वस्य निर्ज्ञातस्वरूपत्वाद्बाध्यत्वम्, न तूत्तरस्यानिर्ज्ञातस्वरूपस्येति भावः ॥ अथाऽऽहुः—कथं पुनर्नित्यानां शब्दानामनित्यान्धकादिवंशाश्रयेणान्वाख्यानं युज्यते । अत्र समाधिः—'त्रिपुरुषानूकं नाम कुर्यात्' इति न्यायेनान्धकादिवंशा अपि नित्या एव । अथ वाऽनित्योपायाश्रयेणापि नित्यान्वाख्यानं दृश्यते । यथा शकाश्रयणेन कालस्य ॥

( उद्योतः ) यथा शकेति । प्रसिद्धमेतज्ज्योतिर्विदाम् ॥

( ५२८९ सिद्धान्तसामान्यवार्तिकम् ॥ ७ ॥ )

॥ * ॥ ऋष्यन्धकवृष्णिकुरुभ्यः सेनान्ताण्ण्यः ॥ * ॥

(भाष्यम्) ऋष्यन्धकवृष्णिकुरुभ्यः सेनान्ताण्ण्यो भवति विप्रतिषेधेन ।

ऋष्यणोऽवकाशः—वासिष्ठः, वैश्वामित्रः ।

ण्यस्यावकाशः—पारिषेण्यः, वारिषेण्यः ।

जातसेनो नाम ऋषिस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन । जातसेन्यः ॥

अन्धकाणोऽवकाशः—श्वाफल्कः, चैत्रकः, रान्धसः[1] ।

ण्यस्य स एव ।

उग्रसेनो नामान्धकस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन । औग्रसेन्यः ॥

वृष्ण्यणोऽवकाशः—वासुदेवः, बालदेवः ।

ण्यस्य स एव ।

विश्वक्सेनो नाम वृष्णिस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन । वैष्वक्सेन्यः ॥

कुर्वणोऽवकाशः—नाकुलः, साहदेवः ।

ण्यस्य स एव ।

भीमसेनो नाम कुरुस्तस्मादुभयं प्राप्नोति, ण्यो भवति विप्रतिषेधेन । भैमसेन्यः ॥

( सामान्यवार्तिकस्य विशेषे संकोचकभाष्यम् )

सेनान्ताण्ण्यो भवति विप्रतिषेधेन जातोग्रविष्वग्भीमेभ्य इति वक्तव्यम्[2] ॥

( उद्योतः ) जातादिभ्यः परो यः सेनाशब्दस्तदन्ताण्ण्यो विप्रतिषेधेनेति वक्तव्यमिति भाष्येऽन्वयः ॥

( ६५७ विधिसूत्रम् ॥ ४ । १ । २ आ. ७० )

## १३६१ मातुरुत्संख्यासम्भद्रपूर्वायाः ॥ ४ । १ । ११५ ॥

( प्रदीपः ) अणि सिद्धे तत्सन्नियोगेनोत्वार्थं वचनम् ॥

( उद्योतः ) अणि सिद्धे इति । 'तस्यापत्यम्' इत्यनेन ॥

( स्त्रीलिंगनिर्देशसमर्थकभाष्यम् )

किमर्थं स्त्रीलिङ्गेन निर्देशः क्रियते, न संख्यासंभद्रपूर्वस्येत्येवमुच्यते ?

स्त्रीलिङ्गो यो मातृशब्दस्तस्माद्यथा स्यात् ।

इह मा भूत्—संमिमीते संमाता—संमातुरपत्यं सांमात्र इति ॥

( प्रदीपः ) स्त्रीलिङ्ग इति । अर्थधर्मं स्त्रीत्वं शब्दे समारोप्य क्रियाशब्दनिवृत्त्यर्थः स्त्रीलिङ्गनिर्देशः कृतः[3] । न्यायानुवादश्चायं स्त्रीलिङ्गनिर्देशः । सम्बन्धिशब्दस्य प्रसिद्धतरत्वात् तस्यैव ग्रहणस्य सिद्धत्वात् । एतच्च 'बाह्वादिभ्यश्च' इत्यत्रोक्तम् ॥

( उद्योतः ) भाष्ये—स्त्रीलिङ्गो य इति । नित्यं स्त्रीलिङ्ग इत्यर्थः ॥ संबन्धिशब्दस्येति । श्वशुरादिवदित्यर्थः ॥

( ६५८ विधिसूत्रम् ॥ ४ । १ । २ आ. ७१ )

## १३६२ कन्यायाः कनीन च ॥ ४ । १ । ११६ ॥

( आक्षेपभाष्यम् )

इदं विप्रतिषिद्धम् ।

को विप्रतिषेधः ?

अपत्यमिति वर्तते । यदि च कन्या, नापत्यम् ।

---

१ 'रान्धसः' इत्ययम्पाठश्छ. पुस्तके नास्ति ॥

२ सेनान्ताण्ण्यो भवति विप्रतिषेधेनेति भाष्यस्य जातादिभ्यः परो यः सेनान्तः शब्द इति भ्रमवारणायाह—जातादिभ्य इति ॥

३ शब्देऽसतः स्त्रीत्वस्य तत्रारोपेण निर्दिश्यमानवाचिमातृशब्दस्याग्रहणमित्यर्थः । 'अभिव्यक्तपदार्था ये' इति न्यायस्यानुवाद इति भावः ॥

अथापत्यम्, न कन्या ।
कन्या चापत्यं चेति विप्रतिषिद्धम् ॥

( प्रदीपः ) यदीति । अक्षतयोनिः कन्या, सा कथमपत्येन सम्बध्येतेति भावः ॥

( उद्द्योतः ) ननु प्रथमं वयः कन्याशब्दप्रवृत्तिनिमित्तम्, दैवात्प्रथमे वयस्यप्यपत्यसंबन्धसंभवात्को विरोधोऽत आह—अक्षतेति ॥

( समाधानभाष्यम् )

नैतद्विप्रतिषिद्धम् ।
कथम् ?
कन्याशब्दोऽयं पुंसाऽभिसम्बन्धपूर्वके संप्रयोगे निवर्तते ।
या चेदानीं प्रागभिसम्बन्धात् पुंसा सह संप्रयोगं गच्छति तस्यां कन्याशब्दो वर्तत एव ।
कन्यायाः कन्योक्तायाः कन्याभिमतायाः सुदर्शनाया यदपत्यं स कानीन इति ॥

( प्रदीपः ) अभिसम्बन्धपूर्वक इति । शास्त्रोक्तो विवाहोऽभिसम्बन्धस्तत्पूर्वके पुरुषसंयोगे कन्याशब्दो निवर्तते । या तु शास्त्रोक्तेन विवाहसंस्कारेण विना पुरुषं युनक्ति सा कन्यात्वं न जहाति ॥ कन्योक्ताया इति । कन्यैवासावुक्ता ॥ तदेव व्याचष्टे—कन्याभिमताया इति । कन्यैव साऽभिमता स्मृतिकाराणामित्यर्थः ॥ सुदर्शनाया इति । प्रकटदर्शनायाः, अगुप्तत्वादित्यर्थः । अन्ये त्वाहुः । मुनिदेवतामाहात्म्याद्या पुंयोगेऽप्यक्षतयोनिर्भवति । यथा कुन्ती मन्त्राहूतदिनकरोत्पादितकर्णाख्यपुत्रापि पुनः कन्यैवाऽभूत् । तदपत्यं कानीनशब्दाभिधेयम् ॥

( उद्द्योतः ) नन्वभिसंबन्धपूर्वके संप्रयोग इति पुनरुक्तमत आह—शास्त्रोक्त इति ॥ पुरुषं युनक्तीति । पुरुषमात्मनि योजयति, पुरुषेणात्मानं योजयतीति यावत् ॥ कन्याऽभिमतत्वे हेतुः—सुदर्शनाया इति । अगुप्तत्वाद्धेतोः प्रकटदर्शनाया इत्यन्वयः । मन्त्राहूतेन दिनकरेणोत्पादितः कर्णाख्यः पुत्रो यस्या इति बहुव्रीहिः, सुदर्शनाया इति भाष्येणेदमेव बोध्यते इत्यन्ये ॥

( ६६२ लुग्विधिसूत्रम् ॥ ४ । १ । २ आ. ७५ )

## १३६६ स्त्रीभ्यो ढक् ॥ ४ । १ । १२० ॥

( ढगधिकरणम् )

( स्त्रीशब्दार्थप्रत्यायकभाष्यम् )

इदं सर्वेष्वेव स्त्रीग्रहणेषु विचार्यते—स्त्रीग्रहणे स्त्रीप्रत्ययग्रहणं वा स्यात्, स्त्रीशब्दग्रहणं वा, स्त्र्यर्थग्रहणं वा ॥
किं चातः ?
यदि स्त्रीशब्दग्रहणमर्थग्रहणं वा—इडबिड्—ऐडबिडः । पृथ्—पार्थः । उशिक्—औशिजः । दरद्—दारदः ।
अत्रापि प्राप्नोति ।
अथ प्रत्ययग्रहणम्—लैखाभ्रेयः, वैमात्रेयः, इति न सिध्यति ॥
अस्तु प्रत्ययग्रहणम् ।
कथं लैखाभ्रेयः, वैमात्रेय इति ?
शुभ्रादिषु पाठः करिष्यते ॥

( प्रदीपः ) बहुवचननिर्देशात् स्वरूपग्रहणे निरस्ते पक्षत्रयसम्भावनापूर्वकं प्रत्ययग्रहणमिह व्यवस्थाप्यते—इदं सर्वेष्विति । तत्र क्वचित्कश्चित्पक्ष आश्रीयते । इह तु स्वरितत्वप्रतिज्ञानात् 'स्वरितेनाधिकारः' इत्यस्य स्वरितेनाधिकारावगतिर्भवतीत्यस्यार्थस्याश्रयणाट्टाबादिप्रत्ययग्रहणम् । 'स्त्रियां क्तिन्' इत्येतत्प्रकरणविहितास्तु प्रत्यया व्यवधानान्न गृह्यन्ते ॥ स्त्रीशब्दग्रहणमिति । स्त्रीलिङ्गानां शब्दानां ग्रहणमित्यर्थः ॥ स्त्र्यर्थग्रहणमिति । अर्थे कार्यासम्भवे तु तदभिधायिशब्दग्रहणमेव सम्बध्यते । इडबिडादयः शब्दाः स्त्रीवृत्तयो न तु स्त्रीप्रत्ययान्ता इति तेभ्योऽणेव भवति ॥

(उद्द्योतः) ननु स्वरूपग्रहणपक्षः कुतो न शंकितोऽत आह—बहुवचनेति ॥ ननु सर्वेषु एकजातीयसिद्धान्ताभावादाह—तत्र क्वचिदिति । यथा 'यू स्त्र्याख्यौ' इत्यत्र स्त्रीलिङ्गशब्दग्रहणम्, 'स्त्रियाम्' इत्यादौ चार्थाभिधानमिति भावः ॥ प्रकृतसूत्रस्थसिद्धान्तपक्षे बीजमाह—इह त्विति ॥ नन्वेवं क्तिनादीनामपि ग्रहणं स्यादत आह—स्त्रियां क्तिनिति ॥ व्यवधानात्—अतिदूरत्वादित्यर्थः ॥ ननु बहुवचनात्स्वरूपग्रहणनिरासेन स्त्रीशब्दग्रहणमित्यनुपपन्नमत आह—स्त्रीलिङ्गनामिति ॥ ननु शब्दस्यार्थस्य वा ग्रहणे एकजातीयदोषकथनमयुक्तमत आह—अर्थे इति । एवञ्चात्र सूत्रे स्त्रीशब्दग्रहणम्, स्त्र्यर्थग्रहणमितिपक्षयोरविशेषेऽपि संभवमात्रेणोपन्यस्तौ । 'स्त्रियाः पुंवत्' इत्यादौ त्वनयोर्विशेषो बोध्यः । केचित्तु स्त्रीलिङ्गार्थबोधकशब्दग्रहणमेवात्र, इडबिडादीनां शिवादिषु पाठः, अनभिधानाद्वा तेभ्यो ढगभावः, एको गोत्रसूत्रोक्तरीतेः । यथा केभ्यश्चिदपत्यप्रत्ययसामान्याभावः, तत्रापि केषाञ्चित् शुभ्रादिपाठ आवश्यकः, स्त्रीशब्दे स्वरितत्वप्रतिज्ञानञ्चाधिकमितीदं भाष्यमेकदेश्युक्ति-

१ 'कन्यैवासावभिमता' इति क. पाठः ॥
२ 'योजयति, सम्बध्नाति, पुरुषेणा' इति झ. पाठः ॥
३ 'स्याप्यर्थं' इति च. झ. पाठः ।
४ 'सम्भवे तदभि' इति तु रहितः पाठः च. झ. पुस्तकयोः ॥

५ स्त्रीशब्दस्य एकत्वेन स्वरूपग्रहणपक्षे बहुवचनमनुपपन्नं स्यादतः स्वरूपग्रहणपक्षस्त्यक्तः ॥
६ भाष्ये स्त्रीशब्दग्रहणेऽर्थग्रहणे वा एक एव दोष उक्तः 'यदि स्त्री शब्दग्रहणमर्थग्रहणं वा, इडबिड्-ऐडबिडः' इत्यादिना तदेतदनुपपन्नमित्यर्थः ॥

रित्याहुः। अत्र प्रातिपदिकादिति न संबध्यते, विरोधादिति बोध्यम्। सम्बन्धेऽपि लिङ्गविशिष्टपरिभाषया न दोष इत्यन्ये ॥

( अर्थविशेषे प्रत्ययबोधकभाष्यवार्तिकम् )

**वडवाया वृषे वाच्ये ।**

**वडवाया वृषे वाच्ये ढग् वक्तव्यः—वडवाया वृषो वाडवेयः ॥**

( प्रदीपः ) वडवाया इति । वृषः—बीजाश्वः । तेन[2] विशेषविहितेनापत्यलक्षणोऽर्थो ढको बाध्यते । तेनापत्ये वाडव इति भवति ॥

( उद्द्योतः ) वाडव इतीति । न च[3] चतुष्पाद्दाचित्वाङ्ढञः प्राप्तिः, स्वरे च विशेष इति वाच्यम् । देवताविशेषस्य सूर्यस्त्रीरूपस्य गृहीताश्वारूपस्य वाचकवडवाशब्दस्यैवात्र ग्रहणात् । बीजाश्वशब्देनापि गृहीताश्वाकारस्तत्पुमान्सूर्य एव । एवञ्च तस्य चतुष्पाज्जातिवाचित्वाभावान्न दोषः । अत एव 'वाडवो वडवानलः' इत्यमरः । न चार्थस्यानुवाद्यत्वेन विशेषविहितेनार्थेनापत्यार्थो न बाध्यत इति वाच्यम् । अर्थस्यापि विधेयतायाः कार्यशब्दवादे सत्वेनादोषादिति केचित्, तन्न; 'चतुष्पादो गर्भिण्या' इत्यत्र 'जातिरिति वक्तव्यम्' इति वदता वार्तिककृताऽत्र चतुष्पाद्दाचिमात्रग्रहणस्य बोधनात् । ब्राह्मणीवाचिवडवाशब्दात्तु ढकोऽपवादे 'अवृद्धाभ्यः' इत्यणि ब्राह्मणवाची वाडवः साधुः । अश्वावाचिनस्तु ढञि वाडवेय इत्येव । वाडव इत्यस्यापीष्टत्वे 'दाशरथाय' इतिवत्साधुरिति बोध्यम् ॥

( ढक्बाधकप्रत्ययबोधकभाष्यवार्तिकम् )

**अण् क्रुञ्चाकोकिलात्स्मृतः ।**

**क्रौञ्चः, कौकिल इति ॥**

( प्रदीपः ) क्रौञ्च इति । अपत्य एवायं ढगपवादः ॥

( उद्द्योतः ) वार्तिके—क्रुञ्चाकोकिलादिति—समाहारद्वन्द्वनिर्देशः । एवं च शिवादिगणे क्रुञ्चाकोकिलपाठोऽनार्ष इति बोध्यम् ॥

( ढक्बाधकप्रत्ययबोधकभाष्यवार्तिकम् )

**आरक् पुंसि ततोऽन्यत्र ।**

**ततोऽन्यत्र आरक्पुंसि वक्तव्यः । मूषिकाया अपत्यं पुमान् मौषिकारः, मृग्याः पुमान्मार्गारः ॥**

( उद्द्योतः ) ततोऽन्यत्रेति । गोधातोऽन्यत्रेत्यर्थः । गोधाया ढ्रग्विधावपि पुंसीत्यर्थः स्मृतः । बाधस्तु न युक्तः, नित्यशब्दवादेऽर्थस्याविधेयत्वात् । अत एव 'मूषिकाया अपत्यं पुमान्' इति विग्रहप्रदर्शनम् भाष्ये । वाडवेयेऽपि वडवाया अपत्यं वृष इत्येव विग्रह इत्युचितम् । एवं गोधाया अपत्यं पुमान् गौधेरः । अत एव 'त्रयो गौधारगौधेरगौधेया गोधिकात्मजे' इति कोशः ॥

१ ननु स्त्रीलिङ्गार्थबोधकशब्दानां स्त्रीप्रत्ययान्तत्वेन प्रातिपदिकत्वाभावादधिकृतस्य प्रातिपदिकादित्यस्य कथमत्रान्वय इत्याकाङ्क्षायामाह—अत्र प्रातिपदिकादितीति ॥
२ 'तेन चार्थेन विशेष' इति च. छ. पाठः ॥

( ढ्रकि पुमर्थविधायकभाष्यवार्तिकम् )

**गोधाया ढ्रक्विधौ स्मृतः ॥**

**गोधायाः पुमान् गौधेरः ॥**

---

( ६७० विधिसूत्रम् ॥ ४ । १ । २ आ. ८३ ॥ )

## १३७४ चटकाया ऐरक् ॥ ४।१।१२८ ॥

( ऐरगधिकरणम् )

( ५२९० सूत्रे स्त्रीलिंगनिर्देशस्याविवक्षितत्वबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ चटकायाः पुँल्लिङ्गनिर्देशः ॥ * ॥**

( भाष्यम् ) **चटकायाः पुँल्लिङ्गेन निर्देशः कर्तव्यः । इहापि यथा स्यात्—चटकस्यापत्यं चाटकैरः ।**

**यदि पुँल्लिङ्गेन निर्देशः क्रियते, चटकाया अपत्यं चाटकैर इति न सिध्यति ।**

**प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीत्येवं भविष्यति ॥**

( प्रदीपः ) पुँल्लिङ्गेनेति । अन्यथा पुँल्लिङ्गादिन् प्रसज्येत ॥

( ५२९१ वार्तिकम् ॥ २ ॥ )

**॥ * ॥ स्त्रियामपत्ये लुग्वक्तव्यः ॥ * ॥**

( भाष्यम् ) **चटकाया आपत्यं चटका ॥**

( उद्द्योतः ) स्त्रियामपत्य इति । स्त्रीरूपेऽपत्य इत्यर्थः । चटकाया अपत्यं स्त्री चटकेत्यत्र 'लुक्तद्धित' इत्यनेन टापो लुक्यर्थभेदेन लक्ष्यभेदात्पुनष्टाप् । अजादिषु चटकशब्दपाठाच्च न जातिलक्षणो ङीष् ॥

---

( ६७२ विधिसूत्रम् ॥ ४ । १ । २ आ. ८५ )

## १३७६ आरगुदीचाम् ॥ ४।१।१३० ॥

( ५२९२ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आरग्वचनमनर्थकं रका सिद्धत्वात् ॥ * ॥**

( भाष्यम् ) **आरग्वचनमनर्थकम् ।**

**किं कारणम् ?**

**रका सिद्धत्वात् । गोधा—आकारान्ता रक् च प्रत्ययः ॥**

३ ननु वडवाया अपत्यमित्यर्थे ढकोऽपवादे 'चतुष्पाद्भ्यो ढञ्' इत्यनेन ढञि वाडवेय इति स्यान्न तु वाडव इत्येतत्समाधत्ते—न च चतुष्पादिति ॥
४ अपत्यस्य इदमर्थत्वेन तस्येदमित्यणि 'दाशरथाय' इति साधुः ॥

( उद्द्योतः ) भाष्ये—गोधा आकारान्तेति । गोधाशब्द आकारान्त इत्यर्थः । अर्थधर्मस्य स्त्रीत्वस्य शब्दे आरोपः ॥

( समाधानभाष्यम् )

**एवं तर्हि सिद्धे सति यदारकं शास्ति तज्ज्ञापयत्याचार्योऽन्येभ्योऽप्ययं भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**मौण्डारः, जाण्डारः, पाण्डार—इत्येतत्सिद्धं भवति ॥**

( उद्द्योतः ) अन्येभ्योऽपीति । न चाख्यानण्यन्तात्किपि गोधाशब्दस्यैवानाकारान्तत्वसंभवेनान्यतः प्रवृत्तौ न मानम्, भाष्यप्रामाण्येनाख्यानण्यंतात्किपोऽनुत्पत्तेः । 'अभिव्यक्त' इतिन्यायेन तस्यात्राग्रहणाच्चेति दिक् ॥

( ६७३ विधिसूत्रम् ॥ ४ । १ । २ आ. ८६ ॥ )

## १३७७ क्षुद्राभ्यो वा ॥ ४ । १ । १३१ ॥

( क्षुद्राशब्दार्थबोधकभाष्यम् )

**क्षुद्राभ्य इत्युच्यते,**

**का क्षुद्रा नाम ?**

**अनियतपुंस्का, अङ्गहीना वा ॥**

( प्रदीपः ) अङ्गहीना वेति । वाशब्दश्चार्थे ॥

( ६७५ विधिसूत्रम् ॥ ४ । १ । २ आ. ८८ ॥ )

## १३७९ ढकि लोपः ॥ ४।१।१३३ ॥

( ढक्समर्थकभाष्यम् )

**केन विहिते पितृष्वसुः–ढकि लोप इत्युच्यते ? एतदेव ज्ञापयति पितृष्वसुर्ढगिति, यदयं ढकि लोपं शास्ति ॥**

( उद्द्योतः ) भाष्ये—एतदेवेति । शुभ्रादिषु तत्पाठः कल्पनीय इति भावः । 'ऋष्यन्धक' इति सूत्रोक्तमतान्तररीत्या 'स्त्रीभ्यः' इति वा । अनेन ज्ञापकेन 'स्त्रीभ्य इत्यर्थग्रहणम्' इत्येव ज्ञाप्यत इति बोध्यम् ॥

( ६७६ विधिसूत्रम् ॥ ४ । १ । २ आ० ८९ )

## १३८० मातृष्वसुश्च ॥ ४ । १ । १३४ ॥

( छण्साधकभाष्यम् )

**ढकि लोप इत्युच्यते तत्रेदं न सिध्यति—मातृष्वस्रीयः ।**

**नैष दोषः ।**

**एवं वक्ष्यामि—पितृष्वसुश्छण्, ढकि लोपः । ततो मातृष्वसुश्च ।**

**पितृष्वसुर्यदुक्तं तन्मातृष्वसुर्भवतीति ।**

**किं पुनस्तत् ?**

**छण् ढकि लोपश्च ॥**

( प्रदीपः ) तत्रेदमिति । अनन्तरस्य विधिं मन्यते ॥ एवं वक्ष्यामीति । व्याख्यास्यामीत्यर्थः । चकारेण पितृष्वसुरित्यनुकृष्यत इति कार्यद्वयलाभः ॥

( उद्द्योतः ) नन्वेवमेव पाठाद्वक्ष्यामीत्यसंगतमत आह—एवं व्याख्यास्यामीति । वस्तुतः 'च'रहितः सूत्रपाठ इति वक्ष्यामीति यथाश्रुतमेवेत्यन्ये ॥

( ६७९ विधिसूत्रम् ॥ ४ । १ । २ आ. ९१ )

## १३८३ राजश्वशुराद्यत् ॥ ४।१।१३७ ॥

( यतोऽधिकरणम् )

( प्रदीपः ) राजशब्दः क्षत्रियशब्दपर्यायः ॥

( उद्द्योतः ) ननु राजशब्द ऐश्वर्यविशेषयोगनिमित्तक इति कथं ततः प्रत्ययेन जातिप्रतीतिरत आह—राजशब्द इति ॥

( ५२९३ अर्थविशेषे प्रत्ययनियामकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ राज्ञोऽपत्ये जातिग्रहणम् ॥ * ॥

( भाष्यम् ) **राज्ञोऽपत्ये जातिग्रहणं कर्तव्यम् । राजन्यो नाम जातिः ।**

**क्व मा भूत् ?**

**राजन इति ॥**

( प्रदीपः ) जातिग्रहणमिति । यदा प्रकृतिप्रत्ययसमुदायेन जातिर्गम्यते तदा प्रत्ययो नान्यदा । तेन क्षत्रियजातौ प्रतिपिपादयिषितायां राजन्यशब्दस्य प्रयोगः, वैश्ये शूद्रे वा राजापत्ये राजनशब्दप्रयोगः ॥

( उद्द्योतः ) भाष्ये—राज्ञोऽपत्य इति ॥ अपत्य इति प्रकृते इत्यर्थः । जातिश्चेद्वाच्या तदाऽपत्ये यत्, अत एव राजन्यमनुष्यग्रहणस्यापत्याधिकारादन्यत्र लौकिकगोत्रग्रहणज्ञापकता प्रागुक्ता संगच्छते ॥

---

१ च. छ. ज. पुस्तकेषु 'जाडारः' इति पाठो दृश्यते ॥

२ स्त्रीभ्यो ढगित्यत्र स्त्रीभ्यः पदेन स्त्र्यर्थग्रहणरूपमतान्तररीत्येत्यर्थः ॥

३ 'एतदेव ज्ञापयति पितृष्वसुर्ढक्' इति भाष्यस्य 'स्त्रीभ्यः' इति पदं स्त्र्यर्थग्रहणपरमित्येव तात्पर्यमिति भावः ॥

४ ननु सूत्रे चकारसत्त्वे तेनैवैतद्व्याख्यातमिति 'वक्ष्यामि' इति भाष्योक्तमनुपपन्नं स्यात्तद्योजयति—व्याख्यास्यामीत्यर्थ इति ॥ चकारार्थमेवङ्करोमीत्यर्थः ॥

५ सूत्रे चकाराभावे वक्ष्यामीति भाष्यं यथाश्रुतमित्यर्थः । एतद्भाष्येण च सूत्रे चकारो नास्तीत्यनुमीयते ॥

६ तस्यापत्यमित्यतोऽनुवृत्तमित्यर्थः ॥

( ६८० विधिसूत्रम् ॥ ४ । १ । २ आ. ९२ ॥ )

## १३८४ व्यन्सपत्ने ॥ ४ । १ । १४५ ॥

( व्यन्प्रत्ययाधिकरणम् )

( ५२९४ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् ॥ * ॥

( भाष्यम् ) व्यन्वचनमनर्थकम् ।

किं कारणम् ?

प्रत्ययार्थाभावात् ।

किमिदं प्रत्ययार्थाभावादिति ?

अपत्यार्थाभावात् । अपत्यमिति वर्तते, अनपत्ये चापि सपत्ने भ्रातृव्यशब्दो वर्तते—पाप्मना भ्रातृव्येणेति ॥

( प्रदीपः ) प्रत्ययार्थाभावादिति । [1]भ्रातृव्यशब्दः सर्वस्मिन् सपत्न इष्यते । न हि सर्वः सपत्नो भ्रातुरपत्यमित्यपत्यलक्षणस्य प्रत्ययार्थस्याभाव इत्यर्थः ॥

( उद्द्योतः ) ननु शत्रुरूपप्रत्ययार्थप्रतीतेस्तदभावादित्ययुक्तमत आह—भ्रातृव्येति ॥

( समाधानभाष्यम् )

अस्तु तावद्यदपत्यं सपत्नश्च तत्र—भ्रातृव्य इति ।

कथं पाप्मना भ्रातृव्येणेति ?

उपमानात्सिद्धम्, भ्रातृव्य इव भ्रातृव्य इति ॥

( प्रदीपः ) अस्तु तावदिति । विरोधाभावात्सपत्नेनापत्यार्थो न बाध्यते । न[2] समुदायार्थः सपत्नः, प्रकृतिप्रत्ययार्थयोस्त्यागप्रसङ्गात् । न च गत्यन्तरसम्भवे तत्त्यागो युक्त इति भावः ॥

( उद्द्योतः ) भाष्ये—अस्तु तावद्यदपत्यमिति । अनुवर्तितामपत्यमितीत्यर्थः ॥ ननु विशेषविहितेन सामान्यविहितस्य बाध उचितोऽत आह—विरोधाभावादिति । वस्तुतो बाधप्रसंग एवात्र नेत्युक्तम् ॥ न च समुदायार्थ इति । शुद्धरूढ एव, अपत्यार्थस्तु नास्त्येवेति शंकाशयः ॥

—————

( ६८९ विधिसूत्रम् ॥ ४ । १ । २ आ. १०१ ॥ )

## १३९३ गोत्रस्त्रियाः कुत्सने ण च ॥ ४ । १ । १४७ ॥

( ण ठक् प्रत्ययाधिकरणम् )

( णित्वाक्षेपे भाष्यम् )

किमर्थो णकारः ?

वृद्ध्यर्थः, ञ्णितीति वृद्धिर्यथा स्यात्, गार्गो जाल्मः ॥

( ५२९५ णित्वाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ * ॥

( भाष्यम् ) गोत्रस्त्रियाः प्रत्ययस्य णित्करणमनर्थकम् ।

किं कारणम् ?

वृद्धत्वात्प्रातिपदिकस्य । वृद्धमेवेदं प्रातिपदिकम् ॥

( प्रदीपः ) बहूनां गोत्रप्रत्ययानां वृद्धिमत्त्वदर्शनाद्विचारः—गोत्रस्त्रिया इति ॥

( उद्द्योतः ) फिञन्तस्यावृद्धस्यापि सत्त्वादाह—बहूनामिति ॥

( णित्वफलप्रदर्शकभाष्यम् )

लुगर्थं तर्हि णकारः कर्तव्यः । यल्लुगन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्—वातण्डो जाल्मः ॥

( प्रदीपः ) वातण्ड इति । वतण्डस्यापत्यं गोत्रं स्त्री । 'वतण्डाच्च' इति यञ्, तस्य 'लुक् स्त्रियाम्' इति लुक्, शार्ङ्गरवादित्वान् ङीन् । वतण्ड्या अपत्यमिति णः ॥

( ५२९६ फले आक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ लुगर्थमिति चेन्न लुक्प्रतिषेधात् ॥ * ॥

( भाष्यम् ) लुगर्थमिति चेत्तन्न ।

किं कारणम् ?

लुक्प्रतिषेधात्, प्रतिषिध्यते तत्र लुक्—गोत्रेऽलुगचि ( ४।१।८९ ) इति ॥

( उद्द्योतः ) भाष्ये—गोत्रेऽलुगिति । यद्यपि भून्नि प्राप्तस्य लुकोऽलुगिति तत्सूत्रभाष्योक्तेरत्रालुकोऽप्राप्तिः, तथापि पुंवद्भावेन सिद्धेः फलाभावादेव तदप्रवृत्तेर्वक्ष्यमाणतया नात्र सुष्ठु आदरः कृतः । 'व्यव[3]हितत्वात्' इति वा भून्यप्राप्तत्वस्याप्युपलक्षणम् ॥

( प्रत्याक्षेपे भाष्यम् )

व्यवहितत्वादप्रतिषेधः । ईकारेण व्यवहितत्वात्प्रतिषेधो न प्राप्नोति ॥

( प्रदीपः ) व्यवहितत्वादिति । 'अचि' इति परसप्तमी मन्यते । विषयसप्तम्यां तु न दोषः । अथ वा यतो गोत्रप्रत्ययादव्यवहितोऽजादिरुत्पद्यते तस्यालुगिति वि[4]ज्ञानाद्विषयसप्तम्यामपि दोषाय व्यवधानम् ॥

---

१ प्रत्ययार्थाभावमुपपादयति—भ्रातृव्येति ॥

२ 'न समु' इति छ. पाठः ॥

३ 'व्यवहितत्वादि वा' इति ग. पाठः ॥

४ 'विज्ञापनात्' इति क. पाठः ॥

( ५२९७ प्रत्याक्षेपनिरासवार्तिकम् ॥ ३ ॥ )

॥ * ॥ व्यवहितत्वादप्रतिषेध इति चेन्न पुंवद्भावात् ॥ * ॥

( भाष्यम् ) व्यवहितत्वादप्रतिषेध इति चेत्तन्न । किं कारणम् ?

पुंवद्भावात्, पुंवद्भावोऽत्र भवति—भस्याढे तद्धिते पुंवद्भावो भवतीति ॥

( प्रदीपः ) पुंवद्भावादिति । पुंवद्भावेन रूपातिदेशाद्वातण्ड्यशब्दात् स्त्रीवृत्तेर्णप्रत्यय इति भावः ॥

( उद्द्योतः ) तद्भुनयन्नाह—वातण्ड्यशब्दात् इति । पुंवद्भावेन ङीन इव लुकोऽपि निवृत्तिरिति अलुको नोपयोग इति भाष्यार्थ इति भावः ॥ स्त्रीवृत्तेरिति । भूतपूर्वस्त्रीवृत्तेरित्यर्थः । पुंवद्भावेनार्थस्य निवृत्तेः । अत एव 'वातण्ड्ययुवतिः' इत्यादौ यञो लुक् न ॥ भाष्ये—पुंवद्भावोऽत्र भवतीति । पुंवद्भावेनैव लुकः प्रतिषेधसिद्धिरिति भावः ॥

( ५२९८ णित्वफलप्रदर्शकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ फिनर्थं तु ॥ * ॥

( भाष्यम् ) फिनर्थं तु णकारः कर्तव्यः । यत्फिन्नन्तमवृद्धं तत्र वृद्धिर्यथा स्यात्—ग्लौचुकायनो जाल्म इति ॥

( प्रदीपः ) ग्लौचुकायन इति । ग्लुचुकस्यापत्यं स्त्री, 'प्राचाम्' इति फिन्प्रत्ययः । 'इतो मनुष्यजातेः' इति ङीष्, पुंवद्भावे कृते णः ॥

( उद्द्योतः ) न्याय्यत्वादाह—पुंवद्भावे कृत इति ॥

( ५२९९ णित्वफलसंग्राहकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ पुंवद्भावप्रतिषेधार्थं च ॥ * ॥

( भाष्यम् ) पुंवद्भावप्रतिषेधार्थं च णकारः कर्तव्यः । गार्गी भार्या अस्य गार्गीभार्यः । वृद्धिनिमित्तस्येति पुंवद्भावप्रतिषेधो यथा स्यात् ॥

(५३०० पुंवद्भावप्रतिषेधार्थरूपफलखण्डनवार्तिकम् ॥६॥)

॥ * ॥ गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम् ॥ * ॥

( भाष्यम् ) गोत्राद्यून्यस्त्रियाम् ( ४।१।९४ ) इति वचनादप्रयोजनमेतद्भवति । नास्ति गार्गी ॥

( प्रदीपः ) नास्ति गार्गीति । गार्ग्या अपत्यं स्त्रीत्यत्रार्थे नास्ति प्रत्ययः । 'अस्त्रियाम्' इति युवसंज्ञानिषेधाद् गोत्रसंज्ञाऽवस्थानात् 'एको गोत्रे' इति नियमाद् गोत्रप्रत्ययान्तादपरगोत्रप्रत्ययानुत्पादात् ॥

( उद्द्योतः ) ननु, 'नास्ति गार्गी' इत्यस्य 'गार्ग्या अपत्यं स्त्री नास्ति' इति नार्थः, मानाभावादत आह—गार्ग्या इति । गार्गीशब्दो नास्तीति भाष्यार्थ इति भावः ॥

( ५३०१ मतान्तरप्रदर्शकवार्तिकम् ॥ ७ ॥ )

॥*॥ अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् ॥*॥

( भाष्यम् ) अवंश्यत्वाद्वा स्त्रियाः प्रयोजनमेतद्भवति । न च[5] स्त्री वंश्या । अस्ति गार्गी स्त्री ॥

( प्रदीपः ) अवंश्यत्वाद्वेति । गार्ग्या अपत्यं या स्त्री तस्या न युवसंज्ञा नापि गोत्र[6]संज्ञा, न हि सा गर्गस्यापत्यम् । पौत्रप्रभृतेश्चापत्यस्य गोत्रसंज्ञा विधीयते, तदभावात् 'एको गोत्रे' इति नियमाभावाण्णस्य भावादस्ति गार्गीत्यर्थः ॥ न च स्त्री वंश्येति । पितृपितामहादिर्वंशः, न मातृमातामहादिरित्यर्थः । तस्मात् पुंवद्भावप्रतिषेधार्थो णकारः । न च 'जातेश्च' इति प्रतिषेधः सिध्यति । गोत्रत्वाभावे जातित्वाभावात् । यदा च गोत्रं च चरणैः सहेत्यत्रापत्यमात्रं गोत्रं गृह्यते तदा जातित्वमस्त्येव । फिनर्थस्तु कर्तव्य एव णकारो वृद्धये ॥

( उद्द्योतः ) भाष्ये—अवंश्यत्वादिति । गोत्रभूतस्यापत्यस्त्रिया मूलपुरुषायतनहेतुत्वाभावेन तद्वंश्यत्वाभावात् तदनपत्यत्वेन न गोत्रत्वम्, नापि युवत्वमित्यर्थः ॥ तदाह—गार्ग्या अपत्यमिति ।

यत्तु 'सामान्यत एव न स्त्रीवंश्येत्यर्थः' इति तन्न । 'गोत्रस्त्रियाः' 'यञश्च' इत्यादीनामसंगत्यापत्तेः ॥

यदपि गोत्रस्यापत्यभूतस्त्रिया न वंश्यत्वमिति, तदपि न, 'स्त्रियां न युवसंज्ञा' इति निषेधवैयर्थ्यापत्तेः ।

मम तु गोत्रभूतपुरुषापत्यभूतस्त्रियास्तत्त्वनिषेधेन चारितार्थ्यं स्पष्टमेव ॥ णस्य भावादिति । 'एको गोत्रे' इति नियमेन गोत्रस्त्रिया गोत्रे विधानासंभवात् 'गोत्रे' इत्यस्यासंबन्धेनापत्यसामान्ये एतद्विधानादिति भावः ॥ यदा चेति । वस्तुत इदमयुक्तम्, 'गार्गी' इत्यत्र भाष्ये ङीषोऽकरणादित्याहुः ॥

( मतान्तरप्रदर्शकभाष्यम् )

अपर आह—

द्वावेव वंशौ । मातृवंशः, पितृवंशश्च । यावता मातृवंशोऽप्यस्ति, नास्ति गार्गी ॥

( प्रदीपः ) मातृवंश इति । गार्ग्या अपत्यं या स्त्री सा मातृवंशेन गर्गकुला भवत्येवेति गर्गापेक्षया तस्य गोत्रत्वात् 'एको गोत्रे' इति नियमात्प्रत्ययान्तराभावान्नास्ति गार्गी । पौत्रप्रभृतिग्रहणं तु व्यवहितापत्योपलक्षणम् । तस्मात् फिनर्थ[8] एव णकारः ॥

---

१ 'वातण्ड्य' इति क. पाठः स च लेखकप्रमादादिति प्रतीयते ॥

२ पुंवद्भावेन पुंवद्रूपातिदेश इव पुमर्थोऽपि लभ्यते, न तु स्त्र्यर्थः ॥

३ अत एवञ्चार्थस्य स्त्रीत्वरूपस्य निवर्तनादेव वातण्ड्ययुवतिरित्यत्र 'लुक् स्त्रियाम्' इति लुङ् न ॥

४ पुंवद्भावेन स्त्रीत्वाभावाल्लुकः प्रतिषेध इति भावः ॥

५ छ. पुस्तके 'इति' शब्दो नात्र ॥

६ छ. पुस्तके 'च' शब्दो न ॥

७ अवंश्यत्वात्स्त्रिया न गोत्रसंज्ञेत्यर्थः ॥

८ 'फिनर्थो णकारः' इति एवरहितः पाठः—च-झ. पुस्तकयोः ॥

( उद्योतः ) भाष्ये—द्वावेवेति । द्वावपीत्यर्थः ॥ ननु पौत्रप्रभृतीत्यत्र पुंस्त्वस्य विवक्षितत्वात् न गोत्रत्वमत आह—पौत्रप्रभृतीति ॥

( ६९० विधिसूत्रम् ॥ ४ । १ । ४ आ. १०२ )

## १३९४ वृद्धट्ठक् सौवीरेषु बहुलम् ॥ ४ । १ । १४८ ॥

( विषयविभागप्रदर्शकभाष्यम् )

**गोत्रस्त्रियाः, वृद्धाट्ठक्, फेश्छश्च, फाण्टाहृति ( १४७-१५० ) इमे चत्वारो योगाः ।**

**तत्र त्रयः कुत्सने, त्रयः सौवीरगोत्रे ।**

**आद्यो योगः कुत्सन एव, अन्त्यः सौवीरगोत्र एव ॥**

( प्रदीपः ) **गोत्रस्त्रिया इति** । विषयविभागकथनार्थोऽत्रोपक्षेपः । कुत्सनग्रहणस्य सौवीरग्रहणस्य च सूत्रद्वय एवानुवर्तनाद्यथोक्तविषयविभागलाभः ॥

( उद्योतः ) भाष्ये—अन्त्यः सौवीरगोत्र एवेति । इदं च फाण्टाहृत्यभिप्रायकम्, न तु मिमताभिप्रायम्, असंभवात् ॥ कथमयं विषयविभागो लभ्यतेऽत आह—कुत्सनग्रहणस्येति ॥

( ६९२ विधिसूत्रम् ॥ ४ । १ । ४ आ. १०३ )

## १३९६ फाण्टाहृतिमिमताभ्यां णफिञौ ॥ ४ । १ । १५० ॥

( णित्वाक्षेपे भाष्यम् )

**किमर्थो णकारः ?**

**वृद्ध्यर्थः । ञ्णितीति वृद्धिर्यथा स्यात्—फाण्टाहृतः ॥**

( ५३०२ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ * ॥**

( भाष्यम् ) **फाण्टाहृतेः प्रत्ययस्य णित्करणमनर्थकम् ।**

**किं कारणम् ?**

**वृद्धत्वात् प्रातिपदिकस्य । वृद्धमेवैतत्प्रातिपदिकम् ॥**

( प्रदीपः ) **फाण्टाहृतेरिति** । यथासंख्यसंबन्धस्येष्टत्वान्न मिमतशब्दार्थं णित्वम् । पूर्वनिपातव्यवस्था तु शास्त्रे नावश्यं सर्वत्राश्रीयत[3] इति तदनाश्रयणमपि न यथासंख्याभावं सूचयितुमलम् । शिष्टं भाष्यं पूर्ववद्व्याख्येयम् ॥

( उद्योतः ) नन्वल्पाच्तरत्वान्मिमतस्य पूर्वनिपाते कर्तव्ये तदकरणं यथासंख्यप्रवृत्त्यभावबोधनद्वारा मिमतात् णार्थमिति वृथ्यर्थो णकारोऽत आह—यथासंख्येति ॥

( ५३०३ णित्वफलवार्तिकम् ॥ २ ॥ )

**॥ * ॥ पुंवद्भावप्रतिषेधार्थं तु ॥ * ॥**

( भाष्यम् ) **पुंवद्भावस्य प्रतिषेधार्थो णकारः कर्तव्यः । फाण्टाहृता भार्या अस्य फाण्टाहृताभार्यः । 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधो यथा स्यात्—इति ॥**

( उद्योतः ) भाष्ये—फाण्टाहृता भार्येति । नन्वत्र जातित्वान्ङीपुचितः, किं च स्त्रियां युवसंज्ञानिषेधेन 'एको गोत्रे' इति नियमेन णोऽपि दुर्लभ इति चेन्न । अन्त्यदोषस्याग्रे वक्ष्यमाणत्वेनादोषत्वात् । आद्योऽपि न, शास्त्रीयगोत्रस्यैव जातिलक्षणे ग्रहणात् । एतेन 'जातेश्च' इति पुंवत्वनिषेधसिद्धेरिदमप्रयोजनमित्यपास्तम् ॥

( ५३०४ णित्वप्रयोजनाप्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ?**

**गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम्, अवश्यत्वाद्वा स्त्रियाः प्रयोजनमिति ॥**

(उद्योतः) अवश्यत्वाद्वेति । इदमपि पूर्वोक्तापर आहेत्यादिरीत्या प्रत्याख्येयमिति तात्पर्यम् ॥

---

१ मिमतस्य गोत्रत्वाभावात् 'अन्त्यः सौवीर गोत्र एव' इत्येतन्मिमतेन सह न सम्बध्यते, असम्भवादित्यर्थः ॥

२ फाण्टाहृतेर्णः, मिमताच्च फिञ् इत्येवं यथासंख्यसम्बन्धादित्यर्थः ॥

३ गोत्रस्त्रियाः कुत्सने ण चेति सूत्रस्थभाष्यवद्व्याख्येयमित्यर्थः । तत्र हि पुंवद्भावप्रतिषेधार्थश्च, गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम्, अवश्यत्वाद्वा स्त्रियाः प्रयोजनम्—इति वार्तिकत्रयव्याख्यानावसरेऽयमेवार्थस्तत्र भाष्यकृतोक्तः ॥

४ 'वृद्ध्यर्थोऽत्र णकारो' इति ङ. पाठः ॥

५ गोत्रस्त्रिया इति सूत्रे वार्तिके एते उक्ते, फाण्टाहृताभार्यत्यत्र पुंवद्भावप्रतिषेधार्थं प्रत्ययस्य णित्करणं नैवावश्यकम्, अस्त्रियामिति स्त्रियां युवसंज्ञानिषेधेन फाण्टाहृतेरपत्यं स्त्रीत्यर्थे फाण्टाहृतिशब्दाण्णप्रत्यय एव दुर्लभः, गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो नेति एको गोत्रे इत्यनेन प्रतिषेधात् । फाण्टाहृतस्यापत्यं फाण्टाहृतिरितीञन्तादपरो गोत्रप्रत्ययः स्त्रियां न स्यात् । युवप्रत्ययस्तु स्यादेव स च स्त्रियां न भवति—इति णित्करणं फाण्टाहृताभार्य इत्येतदर्थमनावश्यकमिति भावः ॥

६ पितृपितामहादिर्वंशो न तु मातृमातामहादिः । फाण्टाहृतेः स्त्र्यपत्यस्य न युवसंज्ञा, न गोत्रसंज्ञेति 'एको गोत्रे' इति नियमाभावाद्भवति फाण्टाहृताभार्य इति तत्र पुंवद्भावप्रतिषेधार्थमावश्यकं णित्करणमिति भावः ॥

७ गोत्रस्त्रियाः कुत्सन इति भाष्ये मातृमातामहादिरपि वंशस्तथा च फाण्टाहृतेः स्त्र्यपत्यस्य गोत्रत्वेन नियमाण्णप्रत्ययप्राप्तिर्नेति नैतण्णित्वप्रयोजनमित्याद्यपर आहेत्यनेनोक्तम् ॥

( ६९३ विधिसूत्रम् ॥ ४ । १ । ४ आ. १०४ )

## १३९७ कुर्वादिभ्यो ण्यः ॥ ४।१।१५१ ॥

( ण्यप्रत्ययाधिकरणम् )

( ५३०५ अतिदेशविधिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ * ॥

( भाष्यम् ) वामरथस्य कण्वादिवद्भावो वक्तव्यः ।

किमविशेषेण ?

नेत्याह—

स्वरवर्जम्, स्वरं वर्जयित्वा ।

किं प्रयोजनम् ?

वामरथ्यस्य च्छात्रा वामरथाः । 'कण्वादिभ्यो गोत्रे' ( ४।२।१११ ) इत्यण्यथा स्यात् ॥

( प्रदीपः ) वामरथस्येति । प्रकरणाण्ण्यप्रत्ययान्तस्येति विज्ञेयम् । कण्वादीनां यञन्तानां यत्कार्यं तदतिदेशः । केवलानां तेषां कार्यस्य कस्य चिदविधानात् ॥ वामरथा इति । छे प्राप्तेऽण्विधिः । 'आपत्यस्य' इति यलोपः ॥

( उद्द्योतः ) ननु 'वामरथस्य कण्वादिवत्' इत्युक्त्वा वामरथ्यस्य छात्रा इत्युदाहरणमयुक्तमत आह—प्रकरणादिति ॥ ननु 'काण्व्यादिवत्' इति वक्तव्ये 'कण्वादिवत्' इत्ययुक्तमत आह—कण्वादीनामिति ॥

( पक्षद्वयेऽप्याक्षेपकभाष्यम् )

यदि कण्वादिवदित्युच्यते, प्रत्ययाश्रयमनतिदिष्टं भवति ।

तत्र को दोषः ?

वामरथाः, बहुषु लोपो न प्राप्नोति । वामरथानां संघः—वामरथः—'संघाङ्कलक्षणेष्वञ्यञिञामण्' ( ४।३।१२७ ) इत्यण् न प्राप्नोति ।

यदि पुनर्यञ्वदित्युच्यते । एवमपि प्रकृत्याश्रितमनतिदिष्टं[1] भवति ।

तत्र को दोषः ?

वामरथ्यस्य च्छात्रा वामरथाः । 'कण्वादिभ्यो गोत्रे' इत्यण् न प्राप्नोति ॥

( प्रदीपः ) यदीति । कण्वादिवदिति वचनात्कण्वादीनामाहत्य यत्कार्यं विहितं 'कण्वादिभ्यो गोत्रे' इति तस्यैवातिदेशः प्राप्नोति, न तु यञन्तमात्रनिबन्धनस्येति भावः ॥ एवमपीति । सामान्यातिदेशे विशेषानतिदेशात् ॥

( उद्द्योतः ) ननु कण्वादिशब्दस्य तत्प्रकृतिकयञन्तलाक्षणिकत्वात्कुतः प्रत्ययाश्रयाप्राप्तिरत आह—कण्वादिवदिति ॥ ननु यञ्वदित्यस्य यञन्तवदित्यर्थात् कथं प्रकृत्याश्रया प्राप्तिरत आह—सामान्येति ॥

( समाधानभाष्यम् )

अस्तु तर्हि कण्वादिवदित्येव ।

कथं वामरथाः, वामरथानां संघ इति च ?

यदयं स्वरवर्जमित्याह तज्ज्ञापयत्याचार्यः प्रत्ययाश्रयमप्यतिदिष्टं भवतीति ॥

( प्रदीपः ) यदयमिति । लिङ्गा[2]दाहत्यानाहत्य च कण्वादीनां यञन्तानां यत्कार्यं विधीयते तदतिदिश्यते ॥

( उद्द्योतः ) स्वरस्याहत्य विधानाभावादाह—लिङ्गादिति ॥

( ६९५ विधिसूत्रम् ॥ ४ । १ । ४ आ. १०५ )

## १३९९ उदीचामिञ् ॥ ४ । १ । १५३ ॥

( इञोऽधिकरणम् )

( ५३०६ वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ उदीचामिञ्विधौ तक्ष्णोऽण्वचनम् ॥ * ॥

( भाष्यम् ) उदीचामिञ्विधौ तक्ष्णोऽण् वक्तव्यः—ताक्ष्णः ॥

( प्रदीपः ) उदीचामिति । इञ्बाधनायाण्विध्यर्थं वचनम् ॥ ताक्ष्ण इति । 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः ॥

(उद्द्योतः) इञ्बाधनायेति । 'उदीचां मते' इत्यादिः । 'अन्' इति प्रकृतिभावप्राप्तेराह—षपूर्वेति । इदञ्च प्रकृतिभावापवादकमिति भावः ॥

( लाघवप्रदर्शकभाष्यम् )

यदि पुनरयं तक्षन्शब्दः शिवादिषु पठ्येत ॥

( प्रदीपः ) यदीति । विशेषविहितेनाणा बाधितत्वादिञ् न भविष्यतीति भावः ॥

( उद्द्योतः ) ननु शिवादिपाठः प्राचां मते चरितार्थोऽत आह—विशेषेति । तत्रा[3]पि ण्यप्राप्तेर्बाध्यसामान्यचिन्तयेति भावः ॥

( ५३०७ लाघवाभावबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ शिवादिरिति चेण्ण्यविधिः ॥ * ॥

( भाष्यम् ) शिवादिरिति चेद् ण्यो विधेयः । ताक्षण्य इति ॥

( प्रदीपः ) ण्यविधिरिति । यद्यणा कार्यमात्रं बाध्यते तदा द्वयोरपि ण्येञोर्बाधः स्यात् । अथ विशेषचिन्ता, तदा पुरस्तादपवादा इति न्यायाद् ण्यस्यैव बा[4]धः प्राप्नोति नेञः ॥

---

१ छ. पुस्तके 'प्रत्ययाश्रितम' इति पाठः ॥

२ स्वरवर्जमिति ज्ञापकात्प्रातिस्विकमप्रातिस्विकमपि यत्कार्यं विधीयते, तस्यातिदेश इत्यर्थः ॥

३ तत्रापि=प्राचां मतेऽपि सेनान्तलक्षणकारिभ्य इत्यनेन ण्यप्राप्तेर्बाध्यसामान्यचिन्तया तयोरुभयोरपि बाधः स्यादित्यर्थः ॥

४ एवञ्च ण्यो विधेय इति भावः ॥

( ५३०८ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

**॥*॥ सिद्धं तूदीचां वा ण्यवचनात् ॥*॥**

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

उदीचां वा ण्यवचनात् । उदीचां वा ण्यो भवतीति वक्तव्यम् । ण्येन मुक्ते यो यतः प्राप्नोति स ततो भविष्यति ॥

( प्रदीपः ) सिद्धं त्विति । विकल्पितण्यमुक्ते पक्षे तक्षन्शब्दात् 'प्राग्दीव्यतोऽण् इत्यण् भवति । ननु जातसेनोग्रसेनविष्वक्सेनभीमसेनेभ्यो ण्येन मुक्ते, पक्षेऽण् ऋष्यादिलक्षणः प्राप्नोति । यथान्यासे तु तेभ्यो ण्येञौ भवतः । एवं तर्हि बाह्वादेराकृतिगणत्वादेतेभ्यो ण्येन मुक्ते इञ् भविष्यतीत्यदोषः ॥

( उद्योतः ) भाष्ये—उदीचां वा ण्येति । पूर्वसूत्रे उदीचां ग्रहणमपकृष्य विकल्पार्थतया व्याख्येयम्, इदं च सूत्रं न कार्यमिति भावः । स्वमतप्रच्युतिमङ्गीकृत्येदम् ॥

( ६९७ फिञ्विधिसूत्रम् ॥ ४ । १ । ४ आ. १०६ )

## १४०१ कौसल्यकार्मार्याभ्यां च ॥ ४ । १ । १५५ ॥

( फिञोऽधिकरणम् )

( विकृतनिर्देशस्य विवक्षितत्वबोधकभाष्यम् )

किमिदं कौसल्यकार्मार्ययोर्विकृतयोर्ग्रहणं क्रियते ?

एवं विकृताभ्यां यथा स्यात् ।

अत्यल्पमिदमुच्यते—कौसल्यकार्मार्याभ्यां चेति ॥

( प्रदीपः ) किमिदमिति । कोसलस्यापत्यम्, 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' इति ञ्यङ् । कर्मारस्यापत्यम्, कारिलक्षणो ण्य इत्येवं यौ कौसल्यकार्मार्यशब्दौ तयोर्ग्रहणं नेष्यत इति प्रश्नः । उत्तरं तु—प्रत्ययसंनियोगेनैवंभूतप्रकृत्यादेशविधानार्थ एव निर्देशः ॥

( उद्योतः ) ननु ञ्यण्यान्तयोः प्रकृतित्वायैवं निर्देशोऽत आह—कोसलस्येति ॥ उत्तरं त्विति । कौसल्यायन्यादिप्रयोगे श्रूयमाणप्रकृतिभागस्येदमनुकरणमित्यर्थः ॥

( ५३०९ सूत्रांशपूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् च ॥ * ॥**

( भाष्यम् ) फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् चेति वक्तव्यम् । दगु—दागव्यायनिः । कोसल—कौसल्यायनिः । कर्मार—कार्मार्यायणिः । छाग—छाग्यायनिः । वृष—वार्ष्यायणिः ।

( आक्षेपभाष्यम् )

यदि युट् क्रियते युटि कृतेऽनादित्वादादेशो न प्राप्नोति ।

इदमिह संप्रधार्यम्—आदेशः क्रियतां युडिति किमत्र कर्तव्यम् ?

परत्वादादेशः ।

नित्यो युट्—कृतेऽप्यादेशे प्राप्नोति, अकृतेऽपि ।

युडप्यनित्यः—अन्यस्य कृत आदेशे प्राप्नोति, अन्यस्याकृते । शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ।

अन्तरङ्गस्तर्हि युट् ।

काऽन्तरङ्गता ?

उत्पत्तिसंनियोगेन युडुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्याङ्गस्यादेश उच्यते ।

आदेशोऽप्यन्तरङ्गः ।

कथम् ?

वक्ष्यत्येतत्—आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति ।

अनवकाशस्तर्हि युट् ॥

एवं तर्हि पूर्वान्तः करिष्यते ।

यदि पूर्वान्तः क्रियते—दागव्यायनिः, ओर्गुणो न प्राप्नोति ॥

( प्रदीपः ) अङ्गस्यादेश इति । अङ्गनिमित्तप्रत्ययावयवस्येत्यर्थः ॥ चेनेति ॥ तेन युगपदागमादेशौ भवतः ॥

(उद्योतः) ननु प्रत्ययावयवस्यैते आदेशा इति 'अंगस्यादेशाः' इत्ययुक्तमत आह—अंगनिमित्तेति ॥ भाष्ये—ओर्गुणो न प्राप्नोतीति । कोशलादावतो लोपानापत्तिरित्यपि बोध्यम् ॥

१ एतत्सूत्राभावे उदीचां ग्रहणं सेनान्तलक्षणेत्यत्रैव कार्यं नत्वपकर्ष इत्याशयः ॥

२ यथान्यासे जातसेनादिशब्देभ्यः प्राचां मते ण्य एव न त्विञ्, उदीचां मते इञेव । एतत्सूत्राभावे तु प्राचामुदीचामित्यादिभेदो न स्यादियं स्वमतप्रच्युतिः ॥

३ ञ्यण्यान्ताभ्यां कौसल्यकार्मार्याभ्यामेवायं फिञ् भवत्वित्येतदर्थमयं निर्देश इत्यर्थः ॥

४ ञ्यण्यान्ताभ्यां नायम्फिञ्, किन्तु कोसलकर्मारशब्दाभ्याम्फिञ् भवति, तत्सन्नियोगेन च प्रकृतेः कौसल्यकार्मार्यं शब्दावादेशौ भवत इत्येवाश्रयणीयम् । ञ्यण्यान्ताभ्यां फिञः स्वीकारे गोत्रप्रत्ययान्ताद्युवार्थे एवायम्फिञ् स्यात्, इष्यते च गोत्रे ॥

५ 'युट् क्रियतामादेश इति' इति छ. पाठः ॥

६ 'आयन्नादिषु' इति च. ञ. पाठः ॥

( समाधानभाष्यम् )

अस्तु तर्हि परादिरेव ।

ननु चोक्तम्—युटि कृतेऽनादित्वादादेशो न प्राप्नोतीति ।

नैष दोषः ।

सिद्धं त्वादिष्टस्य युग्वचनात्, सिद्धमेतत् ।

कथम् ?

आदिष्टस्य युग्वचनात् । युगादिष्टस्येति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् । चेन संनियोगः करिष्यते—युट् च । किं च ?

यच्चान्यत्प्राप्नोति ।

किं चान्यत् प्राप्नोति ?

आदेश इति ॥

( ७०० विधिसूत्रम् ॥ ४ । १ । ४ आ. १०७ )

## १४०४ वाकिनादीनां कुक् च ॥ ४ । १ । १५८ ॥

( लाघवमूलं भाष्यम् )

यदि पुनरयं कुट् परादिः क्रियते ॥

( प्रदीपः ) क्रियत इति । गणसूत्रमेवैवं पठ्यत इत्यर्थः । यद्यपि 'वाकिनादीनां कुड्' इति सूत्रपाठे लाघवं भवति, 'नलोपश्च' इति गणसूत्रैकदेशस्याकरणात्, तथापि गणपाठस्य पश्चात् सूत्रप्रणयनाद् गणपाठदर्शनात् कुक्चेत्युक्तमिति भावः । लिङ्गविशिष्टपरिभाषया चर्मिणीवर्मिणीभ्यां प्रत्ययविधानाड्ढस्याढ इति पुंवद्भावः सिद्ध्यति । कुटि तु भत्वाभावात् पुंवद्भावो न स्यात् ॥

( उद्योतः ) नन्वष्टाध्याय्यामस्यादर्शनात् 'क्रियते—न्यास एव' इत्ययुक्तमत आह—गणेति ॥ स्वयं फलान्तरमाह—लिङ्गविशिष्टेति । स्त्रीप्रत्ययान्ताभ्यामाभ्यां प्रत्ययेनार्थाभिधाने दृढं मानं चिन्त्यमिति कश्चित् ॥

( ५३१० कुडागमाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ॥ * ॥

( भाष्यम् ) कुटि सति प्रत्ययादेरादेशो नोपपद्यते ।

किं कारणम् ?

अनादित्वात्, कुटि कृतेऽनादित्वादादेशो न प्राप्नोति ॥

एवं तर्हि पूर्वान्तः करिष्यते ॥

( ५३११ कुगागमेऽप्याक्षेपवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पूर्वान्ते नलोपवचनम् ॥ * ॥

( भाष्यम् ) यदि पूर्वान्तः क्रियते, नलोपो वक्तव्यः—चार्मिकायणिः, वार्मिकायणिः । 'नलोपः प्रातिपदिकान्तस्य' इति नलोपो न प्राप्नोति । परादौ तु पुनः सति 'नलोपः प्रातिपदिकान्तस्य' इति नलोपः सिध्यति ॥

अस्तु तर्हि परादिरेव ।

ननु चोक्तम्—कुटि कृतेऽनादित्वादादेशो न प्राप्नोतीति ॥

( ५३१२ कुडागमसमर्थकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ सिद्धं त्वादिष्टस्य कुड्वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

कुडादिष्टस्येति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम्, चेन संनियोगः करिष्यते—कुड्, किं च[4]? यच्चान्यत् प्राप्नोति ।

किं चान्यत्प्राप्नोति ?

आदेशः ।

सिध्यति, सूत्रं तर्हि भिद्यते ॥

( कुगागमसमर्थकभाष्यम् )

यथान्यासमेवास्तु ।

ननु चोक्तं पूर्वान्ते नलोपवचनमिति ।

नैष दोषः ।

क्रियते एतन्न्यास एव 'चर्मिवर्मिणोर्नलोपश्च[5]' इति ॥

( ५३१३ विप्रतिषेधबोधकवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ कारिभ्य इञोऽगोत्रात्फिञ् विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) कारिभ्य इञ् भवतीत्येतस्मादगोत्रात् फिञ् भवति विप्रतिषेधेन । कारिभ्य इञ् भवतीत्यस्यावकाशः—अयस्कारिः, लौहकारिः । फिञोऽवकाशः—तापसायनिः, साम्मितिकायनिः ।

---

१ सूत्रप्रणयनात्पश्चाद्गणपाठस्य सत्वेन गणपाठदर्शनात्कुक्चेत्यन्वयः ॥

२ च. पुस्तके 'करिष्यते' इति पाठ उपलभ्यते ॥

३ चर्मिन्—वर्मिञ्छब्दाभ्यामपत्ये फिञ्, कुगागमश्च । कुगागमे कृते चर्मिवर्मिणोर्नलोपश्चेति गणसूत्रं न कार्यमिति भावः ॥

४ सूत्रे चकारकरणात्कुडागमकाल एव फकारादेश आयनेयीति सूत्रेण क्रियत इत्यर्थः ॥

५ वाकिनादिगणसूत्रमेतत् ( ४।१।१५८ )

इहोभयं प्राप्नोति—नापितायनिः । फिञ्भवति विप्रतिषेधेन ॥

( ७०३ विधिसूत्रम् ॥ ४ । १ । ४ आ. १०८ )

## १४०७ मनोर्जातावञ्यतौ षुक् च ॥ ४ । १ । १६१ ॥

( अञ्यतोरधिकरणम् )

( माणवशब्दसिध्यर्थं भाष्यवार्तिकम् )

**अपत्ये कुत्सिते मूढे**
**मनोरौत्सर्गिकः स्मृतः ।**
**नकारस्य च मूर्धन्य-**
**स्तेन सिध्यति माणवः ॥**

( प्रदीपः ) अपत्य इति । णत्वविधानार्थमिदम्, अणः सिद्धत्वात् । न च 'न दण्डमाणवान्तेवासिषु' इति निपातनाण्णत्वस्य सिद्धत्वाद्वचनमनारम्भणीयम् । निपातनादर्थविशेषस्यानिश्चयात् । अनधीतविद्यत्वान्मूढत्वं, विहिताकरणान्निषिद्धाचरणाच्च कुत्सितत्वम् ॥

( उद्द्योतः ) अनिश्चयादिति । निपातनसिद्धार्थं एव स्फुटत्वाय कथित इति तत्त्वम् ॥

( षुकः पूर्वान्तत्वे आक्षेपभाष्यम् )

**यदि षुक् पूर्वान्तः क्रियते—मानुषाः, बहुषु लोपः प्राप्नोति । मानुषाणां संघः "संघाङ्कलक्षणेष्वञ्यञिञामण्" ( ४।३।१२७ ) इत्यण् प्राप्नोति ॥**

( प्रदीपः ) मानुषा इति । अपत्याधिकारादपत्ये प्रत्ययो विधीयते । जातिग्रहणं तु प्रकृतिप्रत्ययविशेषणं न तु जातिः प्रत्ययार्थ इति 'यञञोश्च' इति लुक्प्रसङ्गः । परादौ तु षञ् भवतीत्यञिति लुगभावः । ननु तद्गुणकस्तद्ग्रहणेन गृह्यत इति परादावप्यञ् कृत्प्रसङ्गः । एवं तर्हि अकारप्रश्लेषादकारमात्रस्याञोऽत्र ग्रहणात्परादावञ्कार्याभावः ॥

( उद्द्योतः ) प्रकृतिप्रत्ययविशेषणमिति । समुदायार्थविशेषणमित्यर्थः । समुदायगम्येति यावत् । एवं 'राजन्य' इत्यत्रापि बोध्यम् ॥ अकारप्रश्लेषादिति । शकन्ध्वादित्वात्—'यञञोश्च' 'संघाङ्क' इत्यत्रेति भावः ॥

( परादित्वे आक्षेपभाष्यम् )

**अस्तु तर्हि परादिः ।**

**यदि परादिः क्रियते—मानुषी, अञन्तादितीकारो न प्राप्नोति ॥**

( प्रदीपः ) ईकार इति । 'शार्ङ्गरवाद्यञो ङीन्' इत्यनेनेति भावः ॥

( उद्द्योतः ) शार्ङ्गरवादीति । 'अतः' इत्यधिकारादकाररूपस्यैवाञस्तत्र ग्रहणमिति भावः ॥

( पूर्वान्तत्वस्थापकभाष्यम् )

**अस्तु तर्हि पूर्वान्त एव ।**

**कथं मानुषाः, मानुषाणां संघ इति ?**

**उभयत्र लौकिकस्य गोत्रस्य ग्रहणम्, न चैतल्लौकिकं गोत्रम् ।**

**किं तर्हि ?**

**जातिः ॥**

**इह तर्हि मानुष्यकमिति 'हलस्तद्धितस्य' इति यलोपः प्राप्नोति ।**

**परादावप्येष दोषः ।**

**यदि तद्धलस्तद्धितस्येति हल्ग्रहणं न तदङ्गविशेषणं शक्यं विज्ञातुम् ।**

**इह हि दोषः स्यात्—"वृकाट्टेण्यण्" (५।३।११५) वार्केणीति ।**

**तस्मादुभाभ्यामेव तद्वक्तव्यम्—प्रकृत्याऽके राजन्यमनुष्ययुवान इति ॥**

( प्रदीपः ) न चैतदिति । अपत्ये व्युत्पादितस्यापि मानुषशब्दस्य ब्राह्मणशब्दस्येव जातिवाचित्वादपत्यवाचित्वाभावादित्यर्थः ॥ इह तर्हीति । हलन्तादङ्गात्परस्य तद्धितयकारस्य लोप इति मन्यते, 'हलस्तद्धितस्य' इति वर्तमाने 'आपत्यस्य च तद्धितेनाति' इति लोपोऽत्र प्राप्नोति । 'हलस्तद्धितस्य' इत्यत्र तु—ईतीति वर्तते ॥ वार्केणीति । वृकशब्दादायुधजीविसंघविशेषवचनात् स्वार्थे टेण्यण्प्रत्ययः ॥

( उद्द्योतः ) अपत्यवाचित्वाभावादिति । शास्त्रेण विधानेऽपि लोकेऽपत्यबोधकत्वाभावादिति भावः । अपत्यत्वेन बोधकं प्रवराध्यायप्रसिद्धं हि गोत्रम् । तत्प्रसिद्धत्वाभावाच्चेत्यपि बोध्यम् ॥

---

१ उदीचां वृद्धादगोत्रादित्यनेन ॥

२ कुत्सिते मूढे चार्थे माणवशब्दसाधनमपत्ये कुत्सित इत्यादिभाष्येण क्रियते । दण्डमाणवेत्यादिनिपातनात्तु अविशेषेण माणवशब्दसिद्धिः स्यात्तदर्थमेतद्भाष्यमित्यर्थः ॥

३ नन्न न दण्डमाणवान्तेवासिष्विति सूत्राद्दण्डप्रधाना माणवा दण्डयोग्या एव ग्रहीतुं शक्यास्ते च मूढाः कुत्सिता एवेति अपत्ये कुत्सिते मूढेत्यादिभाष्यमपुनरुक्तमेव, तदाह—निपातनसिद्धार्थ इति ॥

४ ननु तद्गुणकस्तद्ग्रहणेन गृह्यत इति न्यायात्परादावपि अञ्त्वं सुकरमित्यत आह—अत इत्यधिकारादिति ॥

५ 'किं तर्हि ? जातिः' अयम्पाठः छ. पुस्तके नास्ति ॥

( ७०४ संज्ञासूत्रम् ॥ ४ । १ । ४ आ. १०९ )

## १४०८ अपत्यं पौत्रप्रभृति गोत्रम् ॥ ४ । १ । १६२ ॥

( गोत्रसंज्ञाधिकरणम् )

( ५३१४ सूत्रस्य न्यूनताक्षेपे वार्तिकम् ॥ १ ॥ )

**॥ * ॥ पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृतिसंज्ञाकरणम् ॥ * ॥**

**( भाष्यम् ) पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यविवक्षा तस्य पौत्रप्रभृतेर्गोत्रसंज्ञा भवतीति वक्तव्यम् । गर्गोऽपि हि कंचित्प्रति पौत्रः, कुशिकोऽपि, तत्र मा भूदिति ॥**

( प्रदीपः ) **पौत्रप्रभृतेरिति ।** नन्वपत्यमात्रस्य लोके गोत्रत्वादपत्यविशेषे गोत्रशब्दस्य नियमात्परिभाषेयं न्याय्या न तु संज्ञा । नैष दोषः । लिङ्गवती परिभाषा भवति, विध्यन्तरशेषभूता वा । न चेयं तथा । यथा च वृद्ध्यादयः सर्वार्थप्रत्यायनयोग्या अपि संज्ञिविशेषे शक्त्यवच्छेदकरणात् संज्ञा उच्यन्ते तथेयमपि । उक्तं च हरिणा—

**व्यवहाराय नियमः संज्ञानां संज्ञिनि क्वचित् ।**
**नित्य एव तु संबन्धो डित्थादिषु गवादिवत् ॥**
**वृद्ध्यादीनां च शास्त्रेऽस्मिञ्छक्त्यवच्छेदलक्षणः ।**
**अकृत्रिमो हि संबन्धो विशेषणविशेष्यवदित् ॥** इति ।

**गर्गोऽपीति ।** वस्तुस्थित्या तस्यापि पौत्रत्वमवश्यं भावि । सत्यां च गोत्रसंज्ञायां गोत्राद्यूनीति वचनाद्यूनि प्रत्ययप्रसङ्गः, गार्ग्यादेव च यूनीष्यते ॥

( उद्योतः ) **अपत्यमात्रस्येति ।** ननु प्रवराध्यायप्रसिद्धापत्यस्यैव लोके गोत्रत्वेन तदतिरिक्तपौत्रप्रभृतेरपि संज्ञार्थमिदं चरितार्थमिति चेत्—**चिन्त्यमेवेदम् ॥ नियमादिति ।** अनियमे नियमकारिणी परिभाषेति भावः ॥ **लिङ्गवतीति ।** यथा 'इको गुणवृद्धी' इति ॥ **विध्यन्तरेति ।** यथा 'विप्रतिषेधे परम्' इति । विध्यन्तरशेष भूतत्वं च विध्यन्तरनियामकत्वरूपं विवक्षितम्, अतः संज्ञानां कार्यार्थत्वेऽपि न क्षतिः ॥ युक्त्यन्तरमप्याह—**यथा चेति ।** उपस्थाप्यस्योपस्थापकेन वृत्त्या बोधनादिति भावः ॥ **करणादिति ।** स्थापनादित्यर्थः ॥ **व्यवहारायेति ।** क्वचित्संज्ञिनि संज्ञानां नियमो व्यवहारायेत्यन्वयः ॥ ननु विधिरेव किं न स्यादत आह—**नित्य एव त्विति ।** डित्थादिषु डित्थादिपदानां नित्य एव संबन्धः, यथा गवादिपदानां गवाद्यर्थे इत्यर्थः ॥ **अस्मिन्शास्त्रे**—व्याकरणे वृद्ध्यादीनां शब्दानां शक्तिसंकोचलक्षणो नियमो व्यवहारायेत्यन्वयः ॥ तत्र हेतुः—**अकृत्रिम इति ।** कृत्रिमत्वम्—आधुनिकत्वमिति भावः । यथा गुणद्रव्ययोर्गुणे विशेषणत्वम्, द्रव्ये विशेष्यत्वमकृत्रिममनादिसिद्धमेव, न त्वाधुनिकम्, तद्वत्सञ्ज्ञासञ्ज्ञिसंबन्धोऽकृत्रिम एवेत्यर्थः ॥

परे तु—कारिकायां **नियमः**—शक्तिबोधनम्, शक्तिस्तु नित्येत्याह—**नित्य एवेति ।** एवञ्च गोत्रशब्दस्याप्यनेकेष्वर्थेषु शक्तिरस्त्येव, तद्बोधनफलकं शास्त्रम्, अज्ञातशक्तिबोधकत्वात् । कैयटोक्तनियमत्वानुपपत्तेः—वृद्ध्यादिष्वप्येवमेवेत्याह—**वृध्यादीनां चेतीत्यर्थ**माहुः । अत्र यद्वक्तव्यं तद्वृद्धिसूत्रे शब्देन्दुशेखरे, शक्तिवादे मंजूषायां च विस्तरेण निरूपितम् ॥

भाष्ये—**पौत्रप्रभृतेरिति ।** तद्रूपापत्यस्येत्यर्थः ॥ **यस्यापत्येति ।** यत्संबन्ध्यपत्यविवक्षा तत्संबन्धिपौत्रप्रभृतीत्यर्थः ॥ गर्गस्य गोत्रत्वे दोषमाह—**सत्याञ्चेति ॥**

( वार्तिकान्यथासिद्धिपरं भाष्यम् )

**तत्तर्हि वक्तव्यम् ।**

**न वक्तव्यम् । "समर्थानां प्रथमाद्वा" (४।१।८२) इति वर्तते । समर्थानां प्रथमस्य यदपत्यं पौत्रप्रभृतीति विज्ञायते ॥**

( प्रदीपः ) **समर्थानामिति ।** यद्यप्यपत्यशब्दस्य संबन्धिशब्दत्वेन चोद्यमेतत्परिह्रियते । न हि गर्गशब्दस्यापत्यत्वं सदपि वस्तुस्थित्याऽर्थ इति । तथापि परिहारान्तरसद्भावाद्भाष्यकारेणैतन्नोक्तम् ॥

( उद्योतः ) **न हि गर्गशब्दस्येति ।** वस्तुस्थित्या सदप्यपत्यत्वं न गर्गशब्दस्यार्थ इत्यन्वयः । सूत्रे—अपत्यशब्देनापत्यत्वेन बोधविषय उच्यत इत्याशयः ॥

**परे तु**—संबन्धिशब्दत्वेऽपि 'यस्यापत्यं तं प्रति गोत्रम्' इत्यर्थलाभेऽपि गर्गस्य गोत्रसंज्ञा दुष्परिहरा । 'अपत्यत्वप्रकारकबोधविषयम्' इत्यर्थेन वारणे तु 'संबन्धिशब्दत्वेन' इति निष्फलम् । **किञ्च** यदाऽपत्यशब्दः प्रकरणादिना पौत्रादिपरस्तदा ततो यूनि प्रत्ययप्रसंगः, तस्माद्भाष्योक्तमेव युक्तम् । 'समर्थानां प्रथमात्' **इत्यनुवृत्त्यर्थमेवात्र** पठितम्, न तु प्रथमे । तेन ह्यपत्यप्रत्ययान्तवाच्यस्य गोत्रसंज्ञेति फलति । **किञ्च** यस्यापत्यं विवक्षितम्—यस्यापत्यमित्यर्थे प्रत्ययो विवक्षितः—यतः प्रत्ययो विवक्षित इति यावत्, तस्य पौत्रप्रभृति

१ सर्वे सर्वार्थवाचका इत्यभ्युपगमेन वृद्ध्यादयः शब्दाः सर्वार्थप्रत्यायनयोग्या इत्यर्थः ॥

२ गर्गस्य कंचित्प्रति पौत्रत्वेन पौत्रमात्रस्य गोत्रत्वेऽस्यापि गोत्रसंज्ञायां तस्माद्यूनि प्रत्ययः स्यात्, इष्यते च गार्ग्यादित्यर्थः ॥

३ 'गोत्राद्यूनि वचनाद्यूनि' इत्येव पाठः क. पुस्तके ॥

४ एवञ्चास्य सूत्रस्यानियमे नियमकारित्वाभावान्न परिभाषात्वमिति कैयटोक्तशङ्कासमाधानं निर्मूलमिति भावः ॥

५ ननु विध्यन्तरशेषभूतत्वं=विध्यन्तरविशेषणत्वम्, तच्च वृद्ध्यादीनामपीत्यत आह—विद्ध्यन्तर शेषभूतत्वञ्चेति ॥

६ उपस्थाप्यस्य=आदैचू रूपार्थस्य उपस्थापकेन वृद्ध्यादिपदेन वृत्त्या=शक्त्या बोधनादित्यर्थः ॥

७ 'यद्यपत्यशब्दस्य' इति क. ॥

८ 'न हि गर्गस्यापत्यत्वं' इति क. ॥

गोत्रमित्यर्थः । न ह्येतावानर्थः संबन्धिशब्देनापि वाच्यवृत्त्या लभ्यत इत्याहुः ॥

( ५३१५ सिद्धान्तवार्तिकम् ॥ २ ॥ )

॥ * ॥ जीवद्वंश्यश्च कुत्सितम् ॥ * ॥

( भाष्यम् ) जीवद्वंश्यं च कुत्सितं गोत्रसंज्ञं भवतीति वक्तव्यम् । गार्ग्यस्त्वमसि जाल्म, वात्स्यस्त्वमसि जाल्म इति ।

का पुनरिह कुत्सा ?

पितृतो लोके व्यपदेशवताऽस्वतन्त्रेण भवितव्यम् ।

य इदानीं पितृमान् स्वतन्त्रो भवति स उच्यते गार्ग्यस्त्वमसि जाल्म, वात्स्यस्त्वमसि जाल्म । न त्वं पितृतो व्यपदेशमर्हसीति ॥

( प्रदीपः ) जीवद्वंश्यमिति । 'यूनश्च कुत्सायाम्' इति सूत्रमनार्षमिति वचनम् ॥ न त्वं पितृत इति । पितृतो व्यपदेशे हि गार्ग्यायण इति भाव्यम् ॥

( उद्द्योतः ) पितृत इति । वृत्तौ त्वीदृशे विषये 'वा गोत्रसंज्ञा' इत्युक्तम्, तच्चिन्त्यमिति भावः । केचित्तु—अनेन युवैवेति नियमादप्राप्तं गोत्रत्वं विधीयते, तेन पर्यायेण साऽपि, अयमेव वृत्त्याशय इत्याहुः । परं त्विदं 'न त्वं पितृतः' इति भाष्यविरुद्धम् । पितृतो लोके व्यपदेशवतेत्यस्य पितृमतेत्यर्थः, पितृमतेति शेषो वा ॥

( ७०५ संज्ञासूत्रम् ॥ ४ । १ । ४ आ. ११० )

## १४०९ जीवति तु वंश्ये युवा ॥ ४ । १ । १६३ ॥

( युवसंज्ञाधिकरणम् )

( ५३१६ अनुवृत्तिसूचकवार्तिकम् ॥ १ ॥ )

॥ * ॥ जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं च ॥ * ॥

( भाष्यम् ) जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं चेति वक्तव्यम् ॥

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम्, पौत्रप्रभृतीति वर्तते ।

एवं तर्हि अन्वाचष्टे पौत्रप्रभृतीति वर्तत इति ।

किमेतस्यान्वाख्याने प्रयोजनम् ?

( प्रदीपः ) अभिजनप्रबन्धो वंशः, तत्र भवो वंश्यः पित्रादिः, तस्मिन् जीवति यस्य संज्ञेष्यते न स निर्दिष्ट इत्यपत्यमात्रस्य युवसंज्ञा प्राप्नोतीति मत्वाऽऽह—पौत्रप्रभृत्यपेक्षं चेति । 'इदं संज्ञाविधानम्' इति शेषः । पौत्रप्रभृतीति व्यधिकरणं विशेषणमपत्यस्यापेक्ष्य युवसंज्ञा विधीयते । पौत्रप्रभृतेर्यदपत्यं तद्युवसंज्ञमित्यर्थः ॥

( उद्द्योतः ) अभिजनः=उत्पादकः ॥ तत्प्रबन्धः—तत्परम्परा ॥ तत्र भव इति । दिगादित्वाद्यत् । तेन पितृव्यमातुलादीनां न वंश्यत्वम् ॥ पौत्रप्रभृत्यपेक्षपदस्य बहुव्रीहित्वेनान्यपदार्थमाह—इदं संज्ञेति ॥ नन्वेवं पौत्रस्यापि युवसंज्ञा स्यादत आह—व्यधिकरणमिति ॥

( ५३१७ अनुवृत्तिफलप्रदर्शकवार्तिकम् ॥ २ ॥ )

॥ * ॥ तच दैवदत्त्यर्थम् ॥ * ॥

( भाष्यम् ) देवदत्तस्यापत्यं दैवदत्तिरिति, अनन्तरं यदपत्यं तत्र युवसंज्ञा मा भूदिति ।

( प्रदीपः ) अनन्तरमिति । अनन्तरस्य च युवसंज्ञायां 'ण्यक्षत्रियार्ष' इति लुक्प्रसङ्गः ॥

( उद्द्योतः ) अनन्तरस्य युवत्वे दोषमाह—अनन्तरस्य चेति । 'गोत्राद्यूनि' इति नियमाद्देवदत्तशब्दात्प्रत्ययो न स्यादित्यपि बोध्यम् ॥

( अनुवृत्तौ दोषनिरासभाष्यम् )

देवदत्तस्य तर्हि पौत्रे युवसंज्ञा प्राप्नोति, एतदपि पौत्रप्रभृति भवति ।

न पौत्रप्रभृतीत्यनेनापत्यमभिसंबध्यते—पौत्रप्रभृति यदपत्यमिति ।

किं तर्हि ?

वंश्योऽभिसंबध्यते—पौत्रप्रभृति वंश्ये जीवति यदपत्यमिति ।

एवमपि देवदत्तस्य द्वौ पुत्रौ, तयोः कनीयसि युवसंज्ञा प्राप्नोति—"भ्रातरि च ज्यायसि" (४।१।१६४) इति ।

---

१ जीवद्वंश्यश्च कुत्सितमिति वचनदर्शनात् यूनश्च कुत्सायामिति वचनमनार्षमिति ज्ञायते ॥

२ पितृव्यस्य मातुलस्य वा उत्पादकपरम्परागतत्वाभावात् । देवदत्तस्य पितृव्यो मातुलो वा न देवदत्तोत्पादकानां या परम्परा तत्पतित इति न तयोर्वंश्यत्वमिति भावः ॥

३ पौत्रप्रभृतेरपेक्षा यस्येति बहुव्रीहावन्यपदार्थमाह—इदं संज्ञाविधानमितीत्यर्थः ॥

४ पौत्रप्रभृतिरपेक्ष्यं यस्येति सामानाधिकरण्ये विवक्षिते पौत्रादेरपि युवसंज्ञा स्यात्, व्यधिकरणविवक्षया पौत्रप्रभृतेरपत्यस्यापेक्ष्यं यत्तस्य युवसंज्ञा भवति न तु पौत्रप्रभृतेरिति भावः ॥

५ 'देवदत्तस्य पौत्रस्य तर्हि' इति उद्द्योतदृष्टः क्वचित्पाठः । साम्प्रतमयं नोपलभ्यते । तत्र देवदत्ताभिन्नस्य पौत्रस्येति नार्थः किन्तु देवदत्तस्य यः पौत्रस्तस्येत्यर्थः ॥

एवं तर्ह्यपत्यमेवाभिसंबध्यते न तु पौत्रप्रभृतिसमानाधिकरणमपत्यम् ।

नैवं विज्ञायते—पौत्रप्रभृति यदपत्यमिति ।

कथं तर्हि ?

पौत्रप्रभृतेर्यदपत्यमिति ॥

( प्रदीपः ) इतरः पौत्रप्रभृति यदपत्यमिति सामानाधिकरण्येन संबन्धं मत्वाऽऽह-देवदत्तस्येति ॥ आचार्यदेशीय आह-न पौत्रप्रभृतीति ॥ चोदक आह—एवमपीति । भ्रातरीत्यनेन वंश्यस्य निवर्तितत्वात्तद्विशेषणस्यापि पौत्रप्रभृतिग्रहणस्य निवृत्तौ ज्यायसि भ्रातरि जीवत्यनन्तरापत्यस्यापि कनीयसो युवसंज्ञाप्रसङ्ग इत्यर्थः ॥ कथं तर्हीति । एतच्चेहार्थादपत्यग्रहणाल्लभ्यते । अन्यथा पौत्रप्रभृतेरपत्यत्वाव्यभिचारादनर्थकमेवापत्यग्रहणं स्यात् ॥

( उद्द्योतः ) भाष्ये—देवदत्तस्य पौत्रस्येति पाठे व्यधिकरणे षष्ठ्यौ ॥ पौत्रप्रभृतिर्वंश्ये इति । एवञ्चापत्यमपि यस्य पौत्रप्रभृतिर्वंश्यस्तच्चतुर्थादेवेति भावः ॥ ननु तस्य पौत्रप्रभृतिवंश्यकत्वाभावात्कथं संज्ञाऽऽपादनमत आह—भ्रातरीत्यनेनेति । 'भ्रातरि च ज्यायसि' इति सूत्र इति भावः ॥ वंश्यस्य—वंश्यपदस्य ॥ अन्यथेति । तृतीयपरगर्गापत्यादिशब्दाद्यूनिप्रत्ययवारणाय कृतया 'प्रथमात्' इत्यनुवृत्त्यैव समर्थानां प्रथमस्य यत्पौत्रप्रभृतीत्यनेनैव गर्गादिवारणेनास्य फलाभाव इति भावः । न चापत्यग्रहणानुवृत्त्यैवास्यार्थस्य सिद्धौ पुनरपत्यग्रहणं व्यर्थमेवेति वाच्यम् । तस्य समर्थविभक्तिसंबद्धत्वेनेहासम्बन्धात् । न चात्र करणम् 'ते तद्राजाः' इत्यत्राआदीनामेव परामर्शार्थम् । 'तद्राजाः' इति महासंज्ञया तेषामेव संबन्धात् ॥

( ५३१८ युवसंज्ञाविधिवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वृद्धस्य च पूजायाम् ॥ * ॥

( भाष्यम् ) वृद्धस्य च पूजायां युवसंज्ञा वक्तव्या । तत्र भवन्तो गार्ग्यायणाः, तत्रभवन्तो वात्स्यायनाः ।

का पुनरिह पूजा ?

युवत्वं लोके ईप्सितं पूजेत्युपचर्यते । तत्रभवन्तश्च युवत्वेनोपचर्यमाणाः पूजिता भवन्ति ॥

( प्रदीपः ) वृद्धस्येति । सूत्रेषु तु 'वृद्धस्य च पूजायाम्' इति कैश्चिद् वार्तिकदर्शनात्प्रक्षिप्तम् ॥ गार्ग्यायणा इति । युवसंज्ञाविधानसामर्थ्यात् स्वार्थे युवप्रत्ययः ॥ युवत्वमिति । ननु युवशब्दोऽनपेक्षितप्रवृत्तिनिमित्त एव संज्ञेति कथमेतदुच्यते ? प्रायेणाल्पवयसो जीवद्वंश्यत्वं संभवतीति तदध्यारोपः पूजेत्यदोषः ॥

( उद्द्योतः ) युवसंज्ञेति । अत्रापि वृत्त्युक्तो विकल्पश्चिन्त्यः ॥ तदध्यारोप इति । तदध्यारोपमूलतत्सहचरितवयसोऽध्यारोप ईप्सितत्वेन पूजेत्यर्थः ॥

( ५३१९ पूर्ववार्तिकप्रत्याख्याने वार्तिकम् ॥ ४ ॥ )

॥ * ॥ आपत्यो वा गोत्रम् ॥ * ॥

( भाष्यम् ) अथवा—आपत्यो गोत्रसंज्ञो भवतीति वक्तव्यम् ॥

( प्रदीपः ) आपत्यो वेति । 'गोत्रेऽलुगचि' इत्यत्र व्याख्यातम् ॥

( ५३२० प्रत्याख्यानोपयोगिवार्तिकम् ॥ ५ ॥ )

॥ * ॥ परमप्रकृतेश्चापत्यः ॥ * ॥

( भाष्यम् ) परमप्रकृतेश्चापत्यो भवतीति वक्तव्यम् ।

( ५३२१ प्रत्याख्यानोपयोगिवार्तिकम् ॥ ६ ॥ )

॥ * ॥ आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः ॥ * ॥

( भाष्यम् ) आपत्याज्जीवद्वंश्यात्स्वार्थे द्वितीयः प्रत्ययः स च युवसंज्ञो भवतीति वक्तव्यम् ॥

( ५३२२ प्रत्याख्यानोपयोगिवार्तिकम् ॥ ६ ॥ )

॥ * ॥ स चास्त्रियाम् ॥ * ॥

( भाष्यम् ) स चास्त्रियां भवतीति वक्तव्यम् ॥

( ५३२३ लाघवबोधकवार्तिकम् ॥ ७ ॥ )

॥ * ॥ एको गोत्रग्रहणानर्थक्यं च ॥ * ॥

( भाष्यम् ) एवं च कृत्वा एको गोत्रग्रहणमनर्थकं भवति ॥

( ५३२४ प्रत्याख्यानेनेष्टसाधकं वार्तिकम् ॥ ८ ॥ )

॥ * ॥ बहुवचनलोपिषु च सिद्धम् ॥ * ॥

( भाष्यम् ) बहुवचनलोपिषु च सिद्धं भवति । तत्र विदानामपत्यं माणवक इति विगृह्य बिदशब्दाद् द्व्येकयोरुत्पत्तिर्भविष्यति—बैदः, बैदौ ॥

बैदस्यापत्यानि बहवो माणवका इति विगृह्य बिदशब्दाद्बहुषूत्पत्तिर्भविष्यति—बिदा इति ॥

( ७०७ संज्ञासूत्रम् ॥ ४ । १ । २ आ. १८२ )

## १४११ वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति ॥ ४ । १ । १६५ ॥

( पदकृत्यभाष्यम् )

अन्यग्रहणं किमर्थम् ?

भ्रातरीति वर्तते, सपिण्डमात्रे यथा स्यात् ।

अथ स्थविरतरग्रहणं किमर्थम् ?

उभयतो विशिष्टे यथा स्यात्, स्थानतो वयस्तश्च ।

---

१ 'प्रत्ययो वक्तव्यो युवसंज्ञश्च भव' इति छ. झ. पाठः ॥

अथ जीवतीति वर्तमाने पुनर्जीवतिग्रहणं किमर्थम्?

जीवतो जीवति यथा स्यात्, मृते मा भूत्। मृते हि 'गार्ग्यो मृतः' इत्येव भवितव्यम् ॥

(प्रदीपः) सपिण्डमात्र इति । अन्यथा पूर्वेण नित्यायां युवसंज्ञायां प्राप्तायामियं विभाषा स्यात् ॥ उभयत इति । ज्यायसीत्यनुवृत्त्या वयःप्रकर्षे लब्धे स्थविरतर इति वचनसामर्थ्यादुभयनिमित्तः प्रकर्ष आश्रीयते ॥ जीवत इति । जीवतीत्याख्यातपदं संज्ञिविशेषणार्थमिहोपात्तमित्यर्थः ॥ मृते हीति । संज्ञिनि सपिण्डे चेति भावः ॥

(उद्द्योतः) भाष्ये—अन्यग्रहणं किमर्थमिति । अन्यस्मिन् सपिण्ड इति किमर्थमिति प्रश्नः। वर्तते इति भाष्यस्य—संनिहितं वर्तेत इत्यर्थः। तथा च तदनुवृत्तिः स्यादिति भावः। स्थविरतरग्रहणं विद्यादिकृतोत्कर्षलाभार्थं स्यादित्याशयः । अत्र 'भ्रातुरन्यस्मिन्' इति पर्युदासान्मातृसापिण्ड्यं न गृह्यते इति वृत्तिस्वरसः । अविशेषात्तदपि गृह्यत इत्यन्ये ॥ पूर्वेणेति । भ्रातरीत्यनेनेत्यर्थः । पूर्वसूत्रं त्वस्थविरार्थम्, मृतस्य संज्ञार्थञ्च स्यादिति भावः ॥

केचित्तु—अन्यग्रहणं किमर्थमिति । सपिण्डग्रहणसामर्थ्यात् भ्रातरीत्यस्य निवृत्तिर्भविष्यति । न च तन्निवृत्तावपि भ्रातृरूपसपिण्डे जीवति जीवतः परत्वाद्विकल्प एव स्यात्, पूर्वसूत्रं तु मृतस्य संज्ञार्थमिति तद्व्यावृत्तयेऽन्यग्रहणमिति वाच्यम्, स्थानवयोभ्यामुत्कृष्ट इत्यर्थकस्थविरतरपदेनैव वारणात्। न हि भ्राता स्थानत उत्कृष्टः, किं तु वयसैवेति प्रश्नाशयः। उत्तरस्य तु—केवलस्थविरतरसपिण्डमात्रे यथा स्यात्, न तु भ्रातृसहितान्यसपिण्डेऽपि जीवतीत्यर्थं इत्याशयः। तेन तत्र पूर्वेण नित्यमेव ॥ भ्रातरीति वर्तेत इत्यस्य 'भ्रातरि च ज्यायसि' इति सूत्रं वर्तेत इत्यर्थः; तद्विषये मा भूत् इति शेषः ॥ सपिण्डमात्र इत्यस्य तद्रहितसपिण्डमात्रे इत्यर्थं इत्याहुः ॥

यत्तु वृत्तौ–पितृव्ये, पितामहे, भ्रातरि वा वयसाऽधिके जीवति गार्ग्यायणः, गार्ग्यो वेत्युक्तम् । तच्चिन्त्यम् । भ्रातरि केवलेऽन्यसहिते वा जीवति जीवतोऽपि नित्यसंज्ञाया एव स्वीकारात् । तत्र भ्रातृपदेन पितामहभ्रातेत्यर्थं इत्यन्ये ॥ सामर्थ्यमुपपादयति—ज्यायसीत्यनुवृत्त्येति ॥ स्थानम्—पितृव्यत्वादि । पितृव्यादयो हि कनिष्ठा अपि स्थानतो ज्येष्ठाः ॥ नन्वेवमपि स्थविरग्रहणसामर्थ्यादेवोभयतो विशिष्टलाभे तरनिर्देशो व्यर्थं इति चेन्न, 'ज्यायसि' इतिवत् स्वार्थे तरबित्याशयात् ॥ ननु सप्तम्यन्तजीवतिपदेन संज्ञिनो विशेषणासंभवात् कथं मृतस्य संज्ञानिवृत्तिरत आह—आख्यातेति ॥ संज्ञिनीति । संज्ञिनि मृतेऽवंश्ये पितृव्यमातुलादौ जीवतीत्यर्थः। वंश्ये जीवति मृतस्यापि नित्ययुवसंज्ञाया इष्टत्वात् इति बोध्यम् ॥ सपिण्डे चेति । 'मृते हि गार्ग्यो मृत इत्येव' इति भाष्ये पाठ इति भावः ॥

(गोत्रयुवसंज्ञयोः समावेशे दोषापादकभाष्यम्)

अथ गोत्रयूनोः समावेशो भवति, उताहो न।

किं च प्राप्नोति?

बाढं प्राप्नोति, न ह्ययमेकसंज्ञाधिकारः।

किं चातः?

(प्रदीपः) अथेति । एकसंज्ञाधिकारादन्यत्र समावेशस्य दर्शनादर्शनाभ्यां प्रश्नः ॥

(उद्द्योतः) समावेशस्येति । कृत्कृत्यप्रत्ययसंज्ञानां समावेशदर्शनम् । सार्वधातुकार्धधातुकयोश्च समावेशादर्शनमित्यर्थः ॥ भाष्ये—किंच प्राप्नोतीत्यस्य–समावेशः किं प्राप्नोतीत्यर्थः ॥

(दोषे श्लोकवार्तिकम्)

**गोत्रयूनोः समावेशे**
**को दोषस्तत्कृतं भवेत् ॥**

(भाष्यम्) गोत्रयूनोः समावेशे को दोषः?

तत्कृतं प्राप्नोति, गोत्राश्रया विधयो यून्यपि प्राप्नुवन्ति—यास्कायनयः, लाह्यायनयः। "यस्कादिभ्यो गोत्रे" (२।४।६३) इति लुक् प्राप्नोति ॥

(प्रदीपः) यास्कायनय इति । यस्कस्यापत्यं गोत्रमिति शिवाद्यण् । तदन्ताद्यूनि "अणो द्व्यचः" इति फिञ्, एकदेशविकृतस्यानन्यत्वाद्बुद्धौ 'यस्' इति लोपे च यास्केतिशब्दो यस्कशब्द एवेति लुक् प्राप्नोति ॥

(उद्द्योतः) ननु यास्कादयं परो न तु यस्कादत आह—एकदेशेति ॥

(एकदेशे दोषवारकं श्लोकवार्तिकम्)

**यस्कादिषु न दोषोऽस्ति**
**न यूनीत्यनुवर्तनात् ।**

(भाष्यम्) यस्कादिषु न दोषः।

किं कारणम्?

न यूनीत्यनुवर्तनात्, न यूनीति तत्रानुवर्तते।

क्व प्रकृतम्? "न तौल्वलिभ्यः" (२।४।६१) इति ॥

(प्रदीपः) न यूनीति । तत्र वाक्यभेदेन संबन्धो यस्कादिभ्यः परस्य गोत्रप्रत्ययस्य बहुषु लुग् भवति, यूनि तु न भवतीति ॥

१ 'मृते हि मा भूत्' इति क. ङ. पाठः ॥

२ ननु सूत्रेऽन्यग्रहणाभावेऽपि सोऽर्थोऽप्युपपद्यत एव, यतो जीवति वंश्ये नित्या संज्ञा, सपिण्डे स्थविरतरे जीवति च विकल्पेनेति विषयभेदो न स्यादित्यन्यग्रहणं किमर्थमिति भाष्यमनुपपन्नमत आह—अन्यस्मिन्सपिण्ड इति । अन्यस्मिन् सपिण्डे इति ग्रहणं किमर्थमिति भाष्याशयः ॥

३ अन्यस्मिन् सपिण्ड इत्यस्याभावे सन्निहितं भ्रातरीति ग्रहणमत्रानुवर्तेत । ततश्च भ्रातरि स्थविरतरे जीवति वा संज्ञेत्यर्थः स्यात् । ननु 'भ्रातरि च ज्यायसि' इति नित्या संज्ञा स्थविरतरे भ्रातरि विकल्प इति पूर्ववद्विरोधो दुष्परिहरः स्यादित्यत आह—स्थविरतरग्रहणमिति । ज्यायसि भ्रातरि नित्या, विद्यादिगुणसम्पन्ने कनिष्ठे भ्रातरि विकल्पेनेति विषयविभागः कर्तुं शक्य इति भावः ॥

( दोषापादकं श्लोकवार्तिकम् )

**दोषोऽत्रिबिदपञ्चाला**
**न यूनीत्यनुवर्तनात् ॥**

( भाष्यम् ) यदि न यूनीत्यनुवर्तते—अत्रयः, बिदाः, पञ्चाला, माणवका इति न सिध्यति ।

नैष दोषः ।

संबन्धमनुवर्तिष्यते । 'न तौल्वलिभ्यः' 'तद्राजस्य बहुषु तेनैवास्त्रियां' लुग् भवति, तौल्वलिभ्यो यूनि न । 'यस्कादिभ्यो गोत्रे' लुग् भवति, यूनि न । तौल्वलिभ्य इति निवृत्तम् ।

'यञञोश्च' 'अत्रिभृगुकुत्सवसिष्ठगोतमाङ्गिरोभ्यश्च' लुग् भवति । यूनि नेत्यपि निवृत्तम् ।

इह तर्हि-काण्व्यायनस्य छात्राः काण्व्यायनीयाः । "कण्वादिभ्यो गोत्रे"(४।२।१११) इत्यण् प्राप्नोति ॥

( प्रदीपः ) **अत्रय इति** । अत्रेर्गोत्रे 'इतश्चानिञः' इति ढक् । बिदादञ् । पञ्चालात् 'जनपदशब्दात्' इत्यञ् । ततो बहुषु युवसु-अत इञ् । तस्य 'ण्यक्षत्रियार्ष' इति लुकि कृते ढगञोर्लुगिष्यते, स 'न यूनि' इत्यनुवर्तनान्न प्राप्नोति ॥ **संबन्धमिति** । तेन 'यस्कादिभ्यो गोत्रे' इत्यत्रैव 'न यूनि' इति संबध्यते नान्यत्रेत्यर्थः ॥ **इह तर्हीति** । व्यवहितेऽपि परशब्दस्य वृत्तिदर्शनात्कण्वशब्दात्परः फग् भवतीति गोत्रसंज्ञाया मणूप्रसङ्गः ॥

( उद्द्योतः ) **न प्राप्नोतीति** । 'श्लिष्यमाणं लुप्यमानार्थाभिधायि' इति न्यायेन ढगाद्यन्तानां यूनि वृत्तेरिति भावः । 'अत्रिभृगु' इति 'यञञोश्च' इति च ढगञोर्लुक् ॥ ननु कण्वादिभ्यः परो यो गोत्रप्रत्यय इति तदर्थः, अयं च न कण्वादिभ्यः परः, किं तु काण्व्यादत आह—**व्यवहितेऽपीति** । प्रत्ययानां परेषामेव विधानात् झटिति परशब्दस्यैवाक्षेप इति भावः ॥

( दोषोद्धारकं श्लोकवार्तिकम् )

**कण्वादिषु न दोषोऽस्ति**
**न[1] यूर्न्यस्ति ततः परम् ॥**

( भाष्यम् ) कण्वादिषु दोषो नास्ति ।

किं कारणम् ?

न यूर्न्यस्ति ततः परम् । कण्वादिभ्यो यो विहितस्तदन्तात्प्रातिपदिकादित्युच्यते । यश्चात्र कण्वादिभ्यो विहितः, न तदन्तं प्रातिपदिकम् । यदन्तं च प्रातिपदिकम्, नासौ कण्वादिभ्यः[2] ॥

(प्रदीपः) विहितविशेषणपक्षाश्रयेण परिहारमाह—**कण्वादिष्विति** । कण्वादिभ्यो गोत्रे यः प्रत्ययो विहितस्तदन्तात्प्रातिपदिकाच्छेषेऽर्थेऽण्प्रत्यय इति सूत्रार्थाश्रयणा[3]त्तद्दोषाभावः ॥

( उद्द्योतः ) **विहितेति** । 'तस्मात्' इति परिभाषया अव्यवहितपरत्वलाभेन दोषवारणसंभवेऽपि लाघवादिदमेवादृतम् । विहितविशेषणस्यापि तत्रैव तात्पर्यमिति **परे** । 'न यूर्न्यस्ति ततः परम्' इति भाष्यपाठे—यत् युवरूपे गोत्रेऽस्ति फग्रूपं न तत् कण्वादिभ्यो विहितं परमित्यर्थः ॥ **विहिताद्धि ततः परमिति** । ततः कण्वादिभ्यो विहितात्—विहितप्रत्ययान्तात्—परं—परदेशेऽण्विधानमित्यर्थः ॥ भाष्ये—**न तदन्तम्प्रातिपदिकमिति** । 'शैषिकप्रकृतिभूतम्' इति शेषः ॥ भाष्ये—**तदन्तादिति** । अणन्तादित्यर्थः ॥

( दोषापादकभाष्यम् )

इह तर्ह्यौपगवस्यापत्य[4]मौपगविरिति "एको गोत्रे" (४।१।९३) इत्येतस्मान्नियमात्प्रत्ययो[5] न प्राप्नोति ॥

( दोषोद्धारकं श्लोकवार्तिकम् )

**एको गोत्रे प्रतिपदम् ।**

( भाष्यम् ) प्रतिपदमत्र[6] प्रत्यया विधीयन्ते । "गोत्राद्यून्यस्त्रियाम्" ( ४।१।९४ ) इति ॥

( प्रदीपः ) **प्रतिपदमिति** । 'एको गोत्रे' इति नियमादप्राप्तो यून्यपरः प्रत्ययो विधीयत इत्यर्थः ॥

( दोषापादकं भाष्यम् )

तदन्तात्तर्ह्यनेकः प्रत्ययः प्राप्नोति ॥

( प्रदीपः ) **तदन्तात्तर्हीति** । यदि 'एको गोत्रे' इति नियमो बाध्यते तदौपगवेर्यूनोऽपत्यमित्यत्रापि यूनो गोत्रत्वे सति 'यञिञोश्च' इति फक्प्रसङ्गः ॥

( दोषोद्धारकं श्लोकवार्तिकम् )

**गोत्राद्यूनि च त[7]त्स्मरेत् ।**

( भाष्यम् ) "गोत्राद्यून्यस्त्रियाम्" इति तत् स्मरेत् ।

किम् ?

एक इत्येव ॥

---

1 'न यून्यस्ति' इत्यस्य स्थाने 'विहिताद्धि ततः परम्' इति पाठ उद्द्योतसम्मत इत्यवगम्यते । एतावांश्च पाठो न इदानीन्तनभाष्यपुस्तकेषूपलभ्यते ॥

2 'कण्वादिभ्यः परः' इति च. झ. पाठः ॥

3 'श्रयणाद्दोषाभावः' इति क. ॥

4 गोत्रयुवसंज्ञयोः समावेशे युवसंज्ञकस्यापि गोत्रसंज्ञकत्वेन 'एको गोत्रे' इति नियमादौपगवेत्यणणान्तादिञ्प्रत्ययो न स्यादित्यर्थः ॥

5 गोत्रयुवसंज्ञयोः समावेशे, एको गोत्र इत्यस्य नियमार्थत्वे च गोत्राद्यूनीत्यस्य नियमार्थत्वं न सम्भवति किन्तु गोत्रप्रत्ययान्ताद्युवार्थेऽप्राप्तस्य प्रत्ययस्य विधायकत्वमेवेति गोत्रे यूनि च प्रत्ययौ भविष्यत इत्यर्थः ॥

6 गोत्राद्यूनीति सूत्रेण गोत्रप्रत्ययान्तादपरो गोत्रप्रत्ययो न, युवप्रत्ययस्तु भवत्येवेति युवप्रत्ययविषये नियमाभावाद्युवप्रत्ययान्तादौपगविशब्दाद्युवार्थे गोत्रप्रत्ययः फक् स्यात्, गोत्रयूनोः समावेशादिति भावः ॥

7 एको गोत्र इत्यत्र यो नियमो गोत्रप्रत्यय एक एवेति गोत्राद्यूनीत्यत्रापि युवप्रत्यय एक एवेति नियमं स्मरेदित्यर्थः ॥

(प्रदीपः) **गोत्रादिति** । 'गोत्राद्यूनि' इत्यत्रैकग्रहणमनुवर्तते, तेनैकस्यैव युवप्रत्ययस्यानुज्ञानादनेकः प्रत्ययो न भविष्यतीत्यर्थः । यद्यप्याद्यस्य युवप्रत्ययस्य 'यूनि लुक्' इति लुकि कृत इष्टं सिध्यति, तथापि परिहारान्तरसंभवादेतन्नाश्रितम् ॥

(उद्योतः) **यद्यपीति** । प्राग्दीव्यतीयाजादिप्रत्यये विषयभूते लुग्विधानादिञ एव प्राप्त्येष्टसिद्धिरिति भावः । अत्रेदं चिन्त्यम्—लुक्यपि प्रत्ययलक्षणेनेञन्तत्वात्फक् प्राप्नोत्येवेति भाष्योक्त एव समाधिरिति ॥

(संज्ञयोः समावेशे दोषापादनभाष्यम्)

**गोत्रे तर्ह्यलुगुक्तः स यून्यपि प्राप्नोति ।**

**अस्तु ।**

**पुनर्यूनि[3] लुग् भविष्यति ।**

**नैवं शक्यम् ।**

**फक्फिञोर्दोषः[4] स्यात्—शालङ्केर्यूनश्छात्राः शालङ्काः, पैलस्य पैलीयाः । "फक्फिञोरन्यतरस्याम्" (४।१।९१) इत्यन्यतरस्यां श्रवणं प्रसज्येत ॥**

(प्रदीपः) **स यून्यपीति** । अत्रीणां यूनां छात्रा इत्यादावित्यर्थः ॥ **पुनरिति** । परत्वादलुकं बाधित्वा लुग् भविष्यतीत्यर्थः ॥ **शालङ्केरिति** । शलङ्कोरपत्यं गोत्रमिति बह्वादेराकृतिगणत्वादिञ् । पैलादिषु शालङ्किशब्दपाठान्निपातनाद्वेञ्प्रत्ययः शलङ्कादेशश्च । ततः शालङ्केरपत्यं युवेति 'यञिञोश्च' इति फक् । तस्य 'पैलादिभ्यश्च' इति लुक् । ततः शालङ्केर्यूनश्छात्रा इति प्राग्दीव्यतीयार्थविवक्षायां यूनो गोत्रसंज्ञायां सत्यां पैलादिषु लुको 'गोत्रेऽलुगचि' इत्यलुग् बाधकः स्यात् । तस्यापि 'यूनि लुक्' इति परत्वाल्लुग् बाधकः, तस्यापि 'फक्फिञोरन्यतरस्याम्' इति विकल्प इति पक्षे तु फकः श्रवणप्रसङ्गः । यदा तु यूनो गोत्रसंज्ञा नास्ति तदा 'गोत्रेऽलुगचि' इत्यस्याप्रवृत्तौ 'पैलादिभ्यश्च' इति लुग् भवत्येव, ततः कण्वादिभ्यो गोत्रे 'इञश्च' इत्यणि सति शालङ्का इति भवति । 'फक्फिञोरन्यतरस्याम्' इत्ययं च विकल्पोऽनन्तरस्य 'यूनि लुक्' इत्यस्यैव बाधको न तु पैलादिलुको व्यवहितस्यान्तरङ्गस्य च ॥ **पैलीया इति** । पीलाया अपत्यं गोत्रं 'पीलाया वा' इत्यण्, ततो यूनि 'अणो द्व्यचः' इति फिञ्, तस्य 'पैलादिभ्यश्च' इति लुक्, ततो वृद्धाच्छः ॥

(उद्योतः) **अत्रीणामिति** । अत्रिशब्दात् 'द्व्यचः' इति ढकि तदन्ताद्युववहुत्वेऽत इञितस्य 'ण्य क्षत्रिय' इति लुकि 'एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि' इति 'अत्रि भृगु' इति सूत्रेण ठको लुकि अत्रीणामिति भवति । अत्र प्राग्दीव्यतीयाजादिविवक्षायामलुगिञः प्रसज्येत, एवं च ढगन्तस्य बहुत्वेऽवर्तनाड्ढको लुगभावे 'इञश्च' इत्यणि 'आत्रेयाः' इति स्यात् । इञो लुकि तु ढकोऽपि लुकि प्रत्ययलक्षणेनेञन्तत्वादणि 'आत्राः' इति रूपमिति भावः ॥ **परत्वादिति** । अस्त्विति भाष्यस्य प्राप्नोत्वित्यर्थ इति भावः ॥ नन्वेवं नन्तरत्वात् 'फक्फिञोः' इति लुकः पैलादिलुगपवादत्वाभावेऽपि परत्वेन बाधकत्वं स्यादत आह—**अन्तरङ्गस्य चेति** । प्राग्दीव्यतीयाजादिप्रत्ययनिरपेक्षत्वात्पैलादिलुकोऽन्तरङ्गत्वम् । 'गोत्रेऽलुगचि' इत्यत्र भूम्नि प्राप्तस्य लुकोऽलुगिति कथनमेतन्मूलकमेवेति न तद्विरोधः । 'गोत्रेऽलुगचि' इत्यत्र हि शास्त्रीयगोत्रग्रहणमित्युक्तम् । शेषभाष्यं तु 'यूनि लुक्' इत्यत्र व्याख्यातं तत एवावधार्यम् ॥

(प्रकारान्तरेण दोषनिवारकभाष्यम्)

**तस्माद्युवसंज्ञायां गोत्रसंज्ञायाः प्रतिषेधो वक्तव्यः ॥**

**न वक्तव्यः ।**

**तुर्नियामकः, तुः क्रियते स नियामको भविष्यति—जीवति[6] वंश्ये अपत्यं युवसंज्ञमेव भवतीति ॥**

(प्रदीपः) **तुर्नियामक इति** । अनेकार्थत्वान्निपातानामवधारणार्थत्वात्तुशब्दस्य ॥

(पूर्वोक्तदोषनिवारणेऽप्यन्यदोषापादकं भाष्यम्)

**यदि तर्हि युवसंज्ञायां गोत्रसंज्ञा न भवति, य इष्यन्ते यूनि गोत्राश्रया विधयस्ते न सिध्यन्ति—गार्ग्यायणानां समूहो गार्ग्यायणकम्, गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः । गोत्राश्रयो वुञ् प्राप्नोति ॥**

**एवं तर्हि—**

(दोषोद्धारकं श्लोकवार्तिकम्)

**राजन्याद्वुञ् मनुष्याच्च**

**ज्ञापकं लौकिकं परम् ।**

(भाष्यम्) **यदयं वुञ्विधौ राजन्यमनुष्ययोर्ग्रहणं करोति, तज् ज्ञापयत्याचार्यः—लौकिकं परं गोत्रग्रहणमिति ।**

**युवा च लोके गोत्रमित्युपचर्यते—किं गोत्रोऽसि माणवक ? गार्ग्यायणः । किं गोत्रोऽसि माणवक ? वात्स्यायनः ॥**

---

१ एको गोत्र इत्यत एकपदानुवृत्तेर्गोत्रप्रत्ययान्ताद्युवप्रत्ययोऽप्येक एव भवतीति भावः ॥

२ 'इष्टं सिद्ध्यति' इति प्रदीप उक्तन्तत्कथं तदाह—प्राग्दीव्यतीयेति । अजादौ प्राग्दीव्यतीये विवक्षिते यूनि लुगित्यनेन लुग्विधानादौपगविशब्दात्प्रत्यये विवक्षिते इञो लुकि-इगन्तत्वाभावाद्यञिञोश्चेति फकोऽप्राप्त्याऽदन्तत्वेनेञ् एवस्यादितीष्टसिद्धिरित्याशयः । फकि त्विष्टसिद्धिर्न स्यादिति तु सुस्पष्टमेव । परन्त्वत्र न लुमताङ्गस्येत्यनेन अङ्गकार्याभावात्प्रत्ययलक्षणनिषेधाभावात्प्राप्त्या फगेव स्यादिति दोष एवेति चिन्त्यमित्यर्थः ॥

३ 'यूनि लुगित्येवं लुक्' इति च. झ. पाठः ॥

४ 'फिञोस्तर्हि दो' इति क. पाठः ॥

५ अत्र यूनि लुक् (४।१।९०) फक्फिञोरन्यतरस्याम् (४।१।९१) पैलादिभ्यश्च (२।४।५९) एवं सूत्रक्रमः । फक्फिञोरिति लुगनन्तरस्य विधिर्वा भवति प्रतिषेधो वेतिन्यायाद्यूनि लुगित्यस्यैव बाधको न तु पैलादिभ्यश्चेत्यस्य । एवञ्च परत्वात्पैलादिभ्यश्चेत्यस्य फक्फिञोरित्यनेन बाधे को दोष? इति भावः । अत्र 'नन्वन्तरङ्गत्वात्फक्फिञोः' इति केचित्पठन्ति स तेषाम्प्रमाद एव ॥

६ 'जीवति तु वंश्ये' इति क. झ. पाठः ॥

( सूत्रार्थोपसंहारभाष्यम् )

यद्येतज्ज्ञाप्यते-औपगवेर्यूनश्छात्रा औपगवीयाः। इञो गोत्र इत्यण् प्राप्नोति ।

सामूहिकेषु ज्ञापकम् ।

यदि सामूहिकेषु ज्ञापकम्—गार्ग्यायणानां किंचिद् गार्ग्यायणकम्, गार्ग्यायणो भक्तिरस्य गार्ग्यायणकः, गोत्राश्रयो वुञ्न प्राप्नोति ।

वुञ्विधौ ज्ञापकम् ।

वुञ्विधावेतज्ज्ञापकम् ।

यदि वुञ्विधौ ज्ञापकम्-शालङ्केर्यूनश्छात्राः शालङ्काः ।

इञो गोत्र इत्यण्न प्राप्नोति ।

अस्तु तर्ह्यविशेषेण ।

कथमौपगवेर्यूनश्छात्रा औपगवीयाः, इञो गोत्र इत्यण् प्राप्नोति ?

नैष दोषः । गोत्रेणात्रेञं विशेषयिष्यामः—गोत्रे य इञ्विहित इति ॥

( ७१० विधिसूत्रम् ॥ ४ । १ । ४ आ० ११२ )

## १४१४ जनपदशब्दात् क्षत्रियादञ् ॥ ४ । १ । १६८ ॥

( अञोऽधिकरणम् )

( ५३२५ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ क्षत्रियादेकराजात्सङ्घप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) क्षत्रियादेकराजादिति वक्तव्यम् ।

किं प्रयोजनम् ?

सङ्घप्रतिषेधार्थम् । सङ्घान्मा भूत्—पञ्चालानामपत्यम्, विदेहानामपत्यमिति ।

तत्तर्हि वक्तव्यम् ॥

( प्रदीपः ) एकराजादिति । एकश्चासौ राजा[1]=क्षत्रिय एकराजः । तेनैकक्षत्रियवाचिन एव प्रत्ययो भवति, न तु बहुत्वसंख्यायुक्तक्षत्रियवाचिन इत्यर्थः । यथैवैकः क्षत्रियः पञ्चालस्तथैव बहवः क्षत्रियाः पञ्चाला इति प्रत्ययप्रसङ्गे वचनमिदम् ॥

( उद्द्योतः ) ननु पञ्चालशब्दादञि बहुषु 'यञञोश्च' इति 'तद्राजस्य' इति वा लुकि पंचाला इति भवति, ततोऽपत्यविवक्षायाम् 'एको गोत्रे' इति नियमान्न गोत्रे प्रत्ययप्राप्तिः; यूनि तु अजादि प्राग्दीव्यतीयविषये गोत्रप्रत्ययस्यालुकि पांचालशब्दे संपन्ने जनपदसमानशब्दत्वाभावान्नैव प्राप्तिरत आह—यथैवेति । न बहुषु पंचालशब्दो यौगिकः, किन्तु एकस्मिन्निव रूढ एवेति भावः । उत्तरस्य तु-एकस्मिन्नेव रूढिः, न बहुषु, मानाभावादिति भावः ॥

( समाधानभाष्यम् )

न वक्तव्यम् । न ह्यन्तरेण बहुषु लुकं पञ्चाला[2] इत्येतद्भवति ।

यस्तस्मादुत्पद्यते युवप्रत्ययः स स्यात् । युवप्रत्ययश्चेत्तस्य लुक्, तस्मिंश्चालुग् भविष्यति ॥

इदं तर्हि—क्षौद्रकाणामपत्यम्, मालवानामपत्यमिति ।

अत्रापि क्षौद्रक्यो मालव्य इति नैतत्तेषां दासे वा भवति कर्मकरे वा ।

किं तर्हि ?

तेषामेव कस्मिंश्चित् । यावता तेषामेव कस्मिंश्चित्, यस्तस्मादुत्पद्यते स युवप्रत्ययः स्यात् । युवप्रत्ययश्चेत्तस्य लुक्, तस्मिंश्चालुग्भविष्यति ॥

( प्रदीपः ) न ह्यन्तरेणेति । पञ्चालापत्येषु यौगिकः पञ्चालशब्दः, तद्राजस्याञो बहुषु लुप्तत्वात् ॥ तस्य लुगिति । 'ण्यक्षत्रियार्षञितः' इत्यनेन ॥ तस्मिंश्चेति । 'गोत्रेऽलुगचि' इत्यनेन । यद्येवं पाञ्चाल इति सर्वथा भवितव्यमिति किं वार्तिकारम्भेण ? ॥

तत्र वार्तिककारस्याभिप्रायमाहुः—असति वार्तिकारम्भे बहुवचनान्तादेव प्रत्ययः स्यात्, नैकवचनान्तात् । जनपदे हि बहुवचनान्तः पञ्चालशब्दो वर्तत इति तस्यैव जनपदसमानशब्दत्वम्, क्षत्रियवृत्तित्वं च ॥

भाष्यकारस्तु मन्यते प्रातिपदिकस्य जनपदसमानशब्दत्वं ग्राह्यं न सुबन्तस्येत्येकवचनान्तात् प्रत्ययः केन निवार्येत इति ॥

इदं तर्हीति । क्षौद्रकस्य राज्ञो भृत्या अपि क्षत्रियाः क्षौद्रका उच्यन्ते । ततश्चापत्यापत्यवत्सम्बन्धाभावाद् गोत्रयुवाश्रयकार्याभावादनिष्यमाणोऽपि तद्राजो ञ्यङ् प्राप्नोतीत्यर्थः ॥ नैतदिति । मुख्यया वृत्त्या दासेषु वृत्त्यभावादुपचरितार्थात्प्रत्ययादर्शनात् तदेवोत्तरमित्यर्थः ॥

( उद्द्योतः ) ण्यक्षत्रियेति । अजादिप्राग्दीव्यतीयविषये 'गोत्रेऽलुक्' इत्यलुकि पांचालशब्दत्वाज्जातस्येञो 'ण्यक्षत्रिय' इति लुगिति भावः ॥ यद्येवमिति । बहुवचनान्तप्रकृतिके पांचालस्य दुर्वारत्वात् वार्तिकस्योक्तिसंभवो नास्तीत्यर्थः ॥ केन वार्येत इति । एवञ्च पंचालानामपत्यं पांचाल इति मा भूदित्येवमर्थं वार्तिकमिति वाच्यम् । तच्च दुर्निवारमिष्टं चेति व्यावर्तयितुमशक्यमित्याशयेन प्रत्याख्यातं वार्तिकमिति भावः ॥ नन्विदमपि पूर्वोदाहृतेन सममत आह—क्षौद्रकस्येति ॥ भाष्ये—तस्मिंश्चालुगिति । अत्र 'तद्राजस्य बहुषु' इति लुकः प्राप्तिः ॥

( क्षत्रियपदाक्षेपभाष्यम् )

अथ क्षत्रियग्रहणं किमर्थम् ?

---

[1] 'राजा चेति क्षत्रिय' इति च. छ. पाठः ॥

[2] 'पञ्चालानामित्येतत्' इति च. पाठः ॥

इह मा भूत्—विदेहो नाम ब्राह्मणस्तस्यापत्यं वैदेहिः ॥

( ५३२६ क्षत्रियपदप्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ क्षत्रियग्रहणानर्थक्यं चोक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

एकं तावदुक्तम्—बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेध इति ।

अपरमुक्तम्—अनभिधानादिति ॥

( ५३२७ अतिदेशवार्तिकम् ॥ ३ ॥ )

॥ * ॥ क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ॥ * ॥

( भाष्यम् ) क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत्प्रत्यया भवन्तीति वक्तव्यम् । पञ्चालानां राजा पाञ्चालः ॥

पूरोरण् वक्तव्यः—पौरवः ॥

पाण्डोर्ड्यण् वक्तव्यः—पाण्ड्यः ॥

( प्रदीपः ) पूरोरिति । सिद्धे प्राग्दीव्यतीयेऽणि तद्राजसंज्ञार्थमिदं वचनम् । पुरुशब्दो न जनपदवाची । अन्यथा 'द्व्यञ्मगध' इत्यणः सिद्धत्वाद्वचनमनर्थकं स्यात् ॥ पाण्डोरिति । बाह्वादिप्रभृतिषु येषां दर्शनं लौकिके गोत्रभाव इति वचनाद् युधिष्ठिरादिपितुः पाण्डोरग्रहणात्तद्वाचिनः पाण्डव इत्येव भवति ॥

( उद्योतः ) युधिष्ठिरादिपितुरिति । संज्ञाशब्दत्वेन जनपदस्वामित्वेन तत्समानशब्दक्षत्रियजातिविशेषवाचिपाण्डुशब्दापेक्षयाऽस्य पाण्डुत्वगुणयोगनिमित्तकत्वेनाप्रसिद्धत्वादिति भावः ॥

---

( ७१२ विधिसूत्रम् ॥ ४ । १ । ४ आ. ११३ )

## १४१६ द्व्यञ्मगधकलिङ्गसूरमसादण् ॥ ४ । १ । १७० ॥

( अणोऽधिकरणम् )

( ५३२८ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

॥ * ॥ अणो ञ्यङ्ण्येञो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) अणो ञ्यङ्—ण्य—इञ्—इत्येते भवन्ति विप्रतिषेधेन ।

अणोऽवकाशः—आङ्गः, वाङ्गः ।

ञ्यङोऽवकाशः—आम्बष्ठ्यः, सौवीर्यः ।

इहोभयं प्राप्नोति—दार्व्यः ॥

ण्यस्यावकाशः—निचक—नैचक्यः ।

अणः स एव ।

इहोभयं प्राप्नोति—नीप—नैप्यः ॥

इञोऽवकाशः—आजमीढिः, आजक्रन्दिः ।

अणः स एव ।

इहोभयं प्राप्नोति—बुध—बौधिः ।

ञ्यङ्ण्येञो भवन्ति विप्रतिषेधेन ॥

( प्रदीपः ) दार्व्य इति । दार्व्यस्यापत्यमिति ञ्यङ् ॥ बौधिरिति । साल्वावयवलक्षण इञ् ॥

( उद्योतः ) साल्वावयवेति । वृत्त्यनुक्ता अपि बुधाजमीढाजक्रन्दा भाष्यप्रामाण्यात्साल्वावयवा बोध्याः ॥

( ५३२९ विप्रतिषेधे द्वितीयवार्तिकम् ॥ २ ॥ )

॥ * ॥ ञ्यङः कुरुनादिभ्यो ण्यः ॥ * ॥

( भाष्यम् ) ञ्यङः कुरुनादिभ्यो ण्यो भवति विप्रतिषेधेन । ञ्यङोऽवकाशः—आवन्त्यः, कौन्त्यः ।

ण्यस्य स एव ।

नैशो नाम जनपदस्तस्मादुभयं प्राप्नोति ।

ण्यो भवति विप्रतिषेधेन—नैश्यः ॥

---

( ७१७ लुग्विधिसूत्रम् ॥ ४ । १ । ४ आ. ११४ ॥ )

## १४२१ कम्बोजाल्लुक् ॥ ४ । १ । १७५ ॥

( लुगधिकरणम् )

( ५३३० सूत्रपूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ कम्बोजादिभ्यो लुग्वचनं चोडाद्यर्थम् ॥ * ॥

( भाष्यम् ) कम्बोजादिभ्यो लुग्वक्तव्यः ।

किं प्रयोजनम् ?

चोडाद्यर्थम्—चोडः[1], कडेरः, केरलः ॥

---

( ७१९ लुग्विधिसूत्रम् ॥ ४ । १ । ४ आ. ११५ )

## १४२३ अतश्च ॥ ४ । १ । १७७ ॥

( उद्योतः ) स्त्रियां तद्राजस्याकारप्रत्ययस्य लुगित्यर्थः ॥

( अलक्ष्यवारणपरभाष्यम् )

इह कस्मान्न भवति—आम्बष्ठ्या, सौवीर्या ?

अत इत्युच्यते, नैषोऽकारः ।

तदन्तविधिना प्राप्नोति ।

अत उत्तरं पठति—

---

१ युधिष्ठिरादेः पितुः पाण्डोः पाण्डुशब्दस्य गुणादागतत्वेन गौणत्वाद्गौणमुख्ययोरिति न्यायेन नास्मिन् पाण्डोर्ड्यणित्यस्य प्रवृत्तिः, किन्तु क्षत्रियजातिविशेषवाचिनः पाण्डुशब्दे एव प्रवृत्तिः ॥

१ 'चोलः शकः, केरलः यवनः' इति च. छ. पाठः ॥

२ स्त्रियामवन्तिकुन्तिकुरुभ्यश्चेति सूत्रात्स्त्रियामित्यनुवृत्तिप्रदर्शनपूर्वकं सूत्रार्थमाह—स्त्रियां तद्राजेति ॥

( उद्द्योतः ) तत्रादन्तस्येत्यर्थं मत्वा पृच्छति—इह कस्मादिति ॥

( ५३३१ तदन्ताग्रहणवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अत इति तदन्ताग्रहणमवन्त्यादिभ्यो लुग्वचनात् ॥ * ॥**

**( भाष्यम् ) अत इति तदन्तस्याग्रहणम् ।**

**किं कारणम् ?**

**अवन्त्यादिभ्यो लुग्वचनात् । यदयमवन्त्यादिभ्यो लुकं शास्ति, तज्ज्ञापयत्याचार्यः—नात्र तदन्तविधिर्भवतीति ॥**

( उद्द्योतः ) अवन्तीति । तेन हि ञ्यङ्ण्ययोर्लुक् ॥

( सूत्रांशपूरकभाष्यम् )

**पर्श्वादिभ्यो लुग्वक्तव्यः । पर्शूः, रक्षाः, असुरी ॥**

**( प्रदीपः ) पर्शूरिति ।** पर्शोरपत्यं स्त्री 'द्व्यञ्मगध' इत्यण्, तस्य 'अतश्च' इति लुक् । 'पर्श्वादियौधेयादिभ्योऽणञौ' इति स्वार्थेऽण् । तस्य भिन्नप्रकरणत्वाल्लुगप्राप्तो वचनेन विधीयते । ततः 'ऊङुतः' इत्यूङ् ॥ **रक्षा इति ।** रक्षसः क्षत्रियविशेषस्यापत्यं स्त्रीति पूर्ववदस्य लुकि कृते स्त्रिया अभिधायकात्सुलोपे दीर्घत्वे च रक्षा इति भवति । रक्ष इत्ययुक्तः पाठः ॥ **असुरीति ।** असुरशब्दात् स्त्रियामपत्येऽञो लुक्, ततोऽण्, तस्यापि लुक्, जातिलक्षणो ङीष् ॥

**( उद्द्योतः ) रक्षस इति ।** अस्मात् 'द्व्यञ्मगध' इत्यणः 'अतश्च' इति लुकि ततः पर्श्वाद्यणः 'पर्श्वादिभ्यः' इति लुक् ॥

१ 'पूर्ववदण्द्वयस्य' इति झ. पाठः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थाध्यायस्य प्रथमे पादे **चतुर्थमाह्निकम्** ॥

पादश्च समाप्तः ॥

( ५३३२ अन्यथासिद्धिसाधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः ॥ * ॥**

**( भाष्यम् ) यदयं "न प्राच्यभर्गादियौधेयादिभ्यः" ( ४।१।१७८ ) इति प्रतिषेधं शास्ति, तज्ज्ञापयत्याचार्यः—भवति पर्श्वादिभ्यो लुगिति ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम् ॥**

**पादश्च समाप्तः ॥**

**( प्रदीपः ) यौधेयादिप्रतिषेध इति ॥** यदि पाञ्चमिकस्यापि तद्राजस्य 'अतश्च' इति लुङ् स्यात्तदा यौधेयादिभ्यो विहितस्याञो लुक्प्रतिषेधविधानमनर्थकमेव स्यादित्यर्थः । युधाया अपत्यं स्त्री 'द्व्यचः' इति ढक् । ततः स्वार्थेऽञ् । तस्य लुकि प्रतिषिद्धेऽञन्तलक्षणे ङीनि कृते यौधेयीति भवति । यदि त्वञो लुक् स्यात्तदा ढलक्षणे ङीपि सति उदात्तनिवृत्तिस्वरः स्यात् ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते **भाष्यप्रदीपे चतुर्थस्याध्यायस्य प्रथमे पादे चतुर्थमाह्निकम्** ॥

पादश्चायं समाप्तः ॥

| | सूत्रवार्तिकसंख्या | | | | | | |
|---|---|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निके ३ | आह्निके ४ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ६१७ | ८ | ३५ | १० | ३३ | ८६ | ७०३ |
| अव्याख्यातसूत्राणि | ६६१ | ६ | ३२ | ३ | ४९ | ९० | ७५१ |
| समुदितसूत्राणि | १२७८ | १४ | ६७ | १३ | ८२ | १७६ | १४५४ |
| वार्तिकानि | ५०९३ | ४६ | ७९ | ५३ | ५६ | २३४ | ५३२७ |

## चतुर्थाध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥

( ७०४ अर्थविधायकसूत्रम् ॥ ४ । २ । १ आ. १ ॥ )

### १४२४ तेन रक्तं रागात् ॥ ४ । २ । १ ॥

( रक्तार्थाधिकरणम् )

( पदकृत्यभाष्यम् )

रागादिति किमर्थम् ?

देवदत्तेन रक्तं वस्त्रम् ॥

( ५३२८ 'रागात्'पदानर्थक्यबोधकं वार्तिकम् ॥ १ ॥ )

**॥ * ॥ रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् ॥ * ॥**

( भाष्यम् ) रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाधिग्रहणमनर्थकम् । न ह्यरागादुत्पद्यमानेन प्रत्ययेनार्थाभिधानं स्यात् ।

अनभिधानात्तत उत्पत्तिर्न भविष्यति ॥

( प्रदीपः ) रक्तादीनामिति । रक्तादीनां शब्दानां योऽर्थः स एव यदि लौकिके प्रयोगे प्रत्ययेनाभिधीयते तदा प्रत्ययो भवति नान्यथा । प्रयुक्तानां शब्दानां साध्वसाधुविवेकाय शास्त्रारम्भाद्देवदत्तेन रक्तं वस्त्रमिति वाक्याद्योऽर्थोऽवगम्यते नासौ–दैवदत्तं वस्त्रमित्यतोऽवगम्यते, स्वस्वामिसम्बन्धस्यैवातः सम्प्रत्ययात् । अत एवानभिधानात्–कोपेन रक्तं मुखं, रूपेण कान्तायां रक्त इत्यादौ वर्णाभिष्वङ्गयोर्न भविष्यति प्रत्ययः ॥

( उद्द्योतः ) ननु रक्तादीनामर्थानामभिधान इत्यर्थे समासोऽनुपपन्नः, सविशेषणत्वेनासामर्थ्यादत आह—रक्तादीनां शब्दानामिति । शब्दपरत्वे च 'देवदत्तस्य गुरुकुलम्' इतिवत्समास इति भावः ॥ रागादित्युक्तेऽप्यनभिधानमावश्यकमित्याह—अत एवेति । अभिष्वङ्गः–प्रीतिः ॥

( ७०५ विधिसूत्रम् ॥ ४ । २ । १ आ. २ )

### १४२५ लाक्षारोचनाट्ठक् ॥ ४ । २ । २ ॥

( ठगधिकरणम् )

( ५३२९ सूत्रांशपूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानं कर्तव्यम् । शाकलिकम्, कार्दमिकम् ॥

( प्रदीपः ) ठक्प्रकरण इति । शकलकर्दमयोः सूत्रे पाठोऽनार्षः ॥

( ५३३० बाधकप्रत्ययोपपादकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ नील्या अन् ॥ * ॥**

( भाष्यम् ) नील्या अन् वक्तव्यः । नील्या रक्तं नीलम् ॥

( प्रदीपः ) नील्या इति । ओषधिविशेषो नीली । अण्बाधनार्थं वचनम् । नीलशब्दस्तु गुणगुणिनोरभेदोपचारान्मतुब्लोपाद्वा नील्या रक्ते वस्त्रे सिध्यति ॥

( उद्द्योतः ) प्राण्यादिरूपनील्या रागकरणत्वासंभवादाह—औषधीति ॥ अण्बाधनेति । न तु नैलमिति रूपसिद्ध्य इत्यर्थः । तदुपपादयति—नीलशब्दस्त्विति ॥

( ५३३१ बाधकप्रत्ययोपपादकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ पीतात्कन् ॥ * ॥**

( भाष्यम् ) पीतात्कन्वक्तव्यः । पीतेन रक्तं पीतकम् ।

पीतकशब्दो वा प्रकृत्यन्तरम्, तस्माल्लुग्वक्तव्यः ॥

( प्रदीपः ) पीतादिति । रागविशेषवाची पीतशब्दः ॥ प्रकृत्यन्तरमिति । स्वार्थिककन्प्रत्ययान्तमित्यर्थः ॥

( उद्द्योतः ) स्वार्थिकेति । पूर्वमते तु अस्मादनभिधानान्न प्रत्यय इति बोध्यम् । अत्र मते पीतशब्दादनभिधानं बोध्यम् ॥

( ५३३२ बाधकप्रत्ययोपपादकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ हरिद्रामहारजनाभ्यामञ् ॥ * ॥**

( भाष्यम् ) हरिद्रामहारजनाभ्यामञ् वक्तव्यः । हारिद्रम्, माहारजनम् ।

( प्रयोगसाधकभाष्यम् )

रागादित्युच्यते, तत्रेदं न सिध्यति—हारिद्रौ कुक्कुटस्य पादौ, काषायौ गर्दभस्य कर्णाविति ।

उपमानात्सिद्धम् । हारिद्राविव हारिद्रौ, काषायाविव काषायौ ॥

( प्रदीपः ) उपमानादिति । रूपसादृश्यनिमित्तादित्यर्थः ॥

---

१ केचिल्लाक्षारोचनाशकलकर्दमाट्ठगिति सूत्रम्पठन्ति, स पाठोऽनार्ष इति भावः ॥

२ अणप्रत्ययेन नैलमितिरूपबाधनार्थमिति भावः ॥

३ तत्=नीलरूपसिद्धिम् ॥

४ 'रक्तं वस्त्र पीतकम्' इति च. श. पाठः ॥

५ पीतकशब्दस्योभयथा सिद्धिः–पीतात्कनिति, पीतकशब्दः प्रकृत्यन्तरं तस्माल्लुगिति । तत्र पूर्वमते–पीतात्कनितिमते पीतकशब्दादनभिधानात्प्रत्ययो न । पीतकशब्दः प्रकृत्यन्तरमितिमते पीतशब्दात्प्रत्ययानभिधानं बोध्यमिति भावः ॥

( ७०६ अर्थविधायकसूत्रम् ॥ ४ । २ । १ आ. ३ )

## १४२६ नक्षत्रेण युक्तः कालः ॥४।२।३॥

( युक्तार्थाधिकरणम् )

( आक्षेपभाष्यम् )

**अयुक्तोऽयं निर्देशः । योगो हि नाम[१] स भवति ययोः संनिकर्षविप्रकर्षौ स्तः । न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः, नित्ये हि कालनक्षत्रे ।**

**कथं तर्हि निर्देशः कर्तव्यः ?**

( प्रदीपः ) **योगो हीति** । अप्राप्तिपूर्विका प्राप्तिर्योगः, स कालनक्षत्रयोर्नास्ति द्वयोरपि नित्यत्वात् । न च चन्द्रमसैव योगः पुष्यादीनां नक्षत्रता । सर्वदा तेषां लोके नक्षत्रव्यवहारदर्शनात् । अथापि सम्बन्धमात्रं योगः, स च नित्यानामपि प्रधानपुरुषवदविरुद्धः । तथापि कालविशेषावगमार्थः पौषादिशब्दप्रयोगः । एवं सति—असत्यां कालविशेषावगतौ न स्यात् ॥

( उद्योतः ) ननु प्रधानपुरुषयोरिव नित्यः कालर्क्षयोर्योगः स्यादत आह—**अप्राप्तीति** ॥ तदुक्तं भाष्ये—**ययोः संनिकर्षविप्रकर्षाविति** ॥ **न चेति** । चन्द्रमो योग एव तेषां नक्षत्रत्वम्, न तु तदभावे इत्यर्थः ॥ **एवं सतीति** । सर्वस्य कालस्य पुष्यसंबद्धतया कालविशेषावगतावसत्यां तदवगमार्थः प्रयोगो न स्यादिति भावः । यद्यपि क्षणरूपः कालोऽनित्यस्तथाऽपि तद्धारारूपः कालपदव्यवहार्यः, स व्यवहारनित्य इति बोध्यम् ॥

( ५३३३ आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानम् ॥ * ॥

( भाष्यम् ) **नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानं भवतीति वक्तव्यम् । पुष्येण युक्तः पुष्ययुक्तः, पुष्ययुक्तश्चन्द्रमा अस्मिन् काले पौषमहः, पौषी रात्रिः ॥**

( प्रदीपः ) **तद्युक्तादिति** । नक्षत्रयुक्तचन्द्रवाचिनः कालेऽभिधेये प्रत्ययो विधेय इत्यर्थः । चन्द्रनक्षत्रयोश्चाविभुत्वादस्ति कादाचित्को योगः । कालस्तु नित्यो व्यापी चेति योगाभावः ॥

( उद्योतः ) ननु नक्षत्रयुक्तचन्द्रलक्षणादर्थान्न प्रत्ययो विधातुं शक्यः, नापि तद्वाचिनः काले वृत्तिरत आह—**नक्षत्रयुक्तेति** । **तद्युक्तादित्यस्य**—तद्युक्तचन्द्रवाचिनः पुष्ययुक्तादिशब्दादित्यर्थः । पुष्ययुक्तादिशब्दस्य चन्द्रवाचकत्वे हेतुकथनम्—**नक्षत्रेण चन्द्रमसो योगादिति** ॥ **काले**—तद्युक्तकाले ॥ नन्वेवमपि तयोः सार्वदिकत्वात्कथम्प्रागुक्तो योगोऽत आह—**चन्द्रेति** ॥

( ५३३४ आक्षेपसाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तत्रोत्तरपदलोपः ॥ * ॥

( भाष्यम् ) **तत्रैवं सति उत्तरपदलोपो वक्तव्यः । पुष्ययुक्तशब्दाद्धि प्रत्ययो विधीयते ॥**

( ५३३५ आक्षेपसाधकवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ लिङ्गवचनानुपपत्तिश्च ॥ * ॥

( भाष्यम् ) **लिङ्गवचनयोश्चानुपपत्तिः । चन्द्रमसो यल्लिङ्गं वचनं च तद्युक्तवद्भावेन प्राप्नोति ॥**

( प्रदीपः ) **लिङ्गेति** । मघायुक्तशब्दात्प्रत्यये क्रियमाणे तस्य च लुपि सति मघा इति स्त्रीत्वबहुत्वे न सिध्यत इत्यर्थः ॥

( उद्योतः ) 'अद्य पुष्यः' इत्यादौ युक्तवद्भावेऽपि न दोषोऽत आह—**मघायुक्तेति** । 'मघा'शब्दो नित्यबहुवचनान्तो नित्यस्त्रीलिङ्गश्च ॥

( ५३३६ समाधानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ कालयोगात्सिद्धम् ॥ * ॥

( भाष्यम् ) **कालयोगात्सिद्धमेतत्[२] ॥**

**अस्तु नक्षत्रेण युक्तः काल इत्येव ॥**

( प्रदीपः ) **कालयोगादिति** । कालस्यैव पुष्यादिसमीपस्थेन चन्द्रमसा योग आश्रीयत इत्यर्थः ॥

( उद्योतः ) **कालस्यैवेति** । चन्द्रगौणनक्षत्रवाचकेनैव **कालयोगात्सिद्धमिति** वार्तिकार्थ इति भावः ॥ कैयटे—**पुष्यादिसमीपस्थेनेत्यस्य** पुष्यादिपदबोध्येनेत्यादिः ॥

( समाधानाक्षेपभाष्यम् )

**ननु चोक्तम्—अयुक्तोऽयं निर्देशः, योगो हि नाम स भवति ययोः संनिकर्षविप्रकर्षौ स्तः, न च कालनक्षत्रयोः संनिकर्षविप्रकर्षौ स्तः, नित्ये हि कालनक्षत्रे इति ।**

**नैष दोषः ।**

**पुष्यसमीपगते चन्द्रमसि पुष्यशब्दो वर्तते, तेन तत्संज्ञकेन कालो विशेष्यते ॥**

( प्रदीपः ) **पुष्यसमीपगत इति** । मुख्यार्थासम्भवे गौणस्याश्रयणादिति भावः । मघादयः शब्दा अपरित्यक्तस्वलिङ्गसङ्ख्या एव चन्द्रमसि वर्तन्ते । यथा मञ्चादयः—मञ्चान् स्त्रियः पश्येति । तेन युक्तवद्भावेऽपि दोषाभावः ॥

( उद्योतः ) नन्वेवमपि युक्तवद्भावविषये दोषोऽत आह—**मघादय इति** । लक्षणास्थले[३] स्वलिङ्गत्यागाभावादिति भावः ॥

१ 'नाम भवति' इति छ. झ. पाठः ॥

२ 'कालयोगात्सिद्धमेतत्' अयम्भाष्यपाठः क. छ. पुस्तकयोर्न दृश्यते, तयोः पुस्तकयोः कुण्डलनारहितमेव वार्तिकम् ॥

३ यथा गङ्गायां घोष इत्यादौ गङ्गाशब्दस्य तीरे लक्षणायामपि न स्वलिङ्गस्य त्यागस्तीरलिङ्गग्रहणञ्च, तद्वदिति भावः ॥

( ५३३७ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ तथा च संप्रत्ययः ॥ * ॥**

( भाष्यम् ) एवं च कृत्वा लोके संप्रत्ययो भवति । पुष्यसमीपगते चन्द्रमसि वक्तारो भवन्ति—पुष्येणाद्य, मघाभिरद्येति ॥

( उद्द्योतः ) 'पुष्येणाद्य' इत्यादिभाष्यस्य 'भाष्यम्' इति शेषः ॥

( ७०७ लुब्विधिसूत्रम् ॥ ४ । २ । १ आ. ४ )

## १४२७ लुबविशेषे ॥ ४।२।४ ॥

( लुबधिकरणम् )

( पूर्वसूत्रानुवृत्तौ दोषदर्शकभाष्यम् )

इह कस्मान्न भवति—पौषी रात्रिः, पौषमहः ?

अविशेष इत्युच्यते, विशेषश्चात्र गम्यते—रात्रिरित्युक्तेऽहर्नेति गम्यते, अहरित्युक्ते रात्रिर्नेति गम्यते ।

इहापि तर्हि न प्राप्नोति—अद्य पुष्य इति । अत्रापि हि विशेषो गम्यते—अद्येत्युक्ते न ह्यो न श्व इति गम्यते ।

यद्यप्यत्र विशेषो गम्यते, अविशेषोऽपि[1] तु गम्यते ॥ अद्येत्युक्ते न ज्ञायते रात्रौ दिवा वेति । यतोऽविशेषस्तदाश्रयो लुब्भविष्यति ॥

इहापि तर्हि—यद्यपि विशेषो गम्यते, अविशेषोऽपि तु गम्यते । रात्रिरित्युक्ते न ज्ञायते कदेति । दिवेत्युक्ते न ज्ञायते कदेति । यतोऽविशेषस्तदाश्रयो लुप्प्राप्नोति ।

(प्रदीपः) अविशेषस्वरूपदर्शनाय प्रश्नप्रतिवचने—इहेति[2] । पौषमहरित्यहर्विशेषानवगमादस्त्यविशेष इति लुप्प्रसङ्गः ॥

( उद्द्योतः ) दर्शनाय=ज्ञापनाय । इदं प्रश्नसंबन्धे प्रतिवचनसम्बन्धे ज्ञापनायेत्यर्थः ॥ अहोरूपविशेषावगतेः[3] कथमत्र लुप् ? अत आह—अहर्विशेषेति । षष्ठीसमासः । 'अविशेष इत्युच्यते'[4] इति भाष्यं प्रसज्यप्रतिषेधमाश्रित्य । 'यद्यप्यत्र' इत्यादि तु पर्युदासं समाश्रित्येति बोध्यम् ॥ अद्य पुष्य इति । यद्यपि 'अद्य वस्त्रं देयम्' इत्यादावद्येत्यधिकरणशक्तिप्रधानम्, तथाऽप्यत्र भाष्यप्रामाण्याच्छक्तिमत्प्रधानं बोध्यम् । 'राहोः शिरः' इतिवत्कल्पितभेदनिबन्धन आधाराधेयभावः । अत एव 'अद्यतनमहोरात्रम्' इत्यादेरुपपत्तिरित्यन्ये ॥

( सिद्धान्तभाष्यम् )

एवं तर्हि—'नक्षत्रेण युक्तः कालः' इत्यनुवर्तते, नक्षत्रेण युक्तस्य कालस्याविशेषे ।

कः पुनः कालो नक्षत्रेण युज्यते ?

अहोरात्रः ॥

( प्रदीपः ) अहोरात्र इति । तेनाहोरात्रस्य यदाऽवान्तररात्र्याद्यवयवविशेषाविवक्षा तदा लुप् । विशेषविवक्षायां तु श्रवणम् । पौषोऽहोरात्र इत्यत्रापि विशेषस्य शब्देनाश्रितत्वाल्लुबभावः ॥

( उद्द्योतः ) श्रवणमिति । पौषी रात्रिरित्यादौ प्रत्ययस्य ॥ विशेषस्य शब्देनेति । समुदायप्रतीतावप्यवयवद्वयरूपविशेषस्येत्यर्थः ॥ अविशेष[5] इति प्रसज्यप्रतिषेध इति भावः ॥

( ७०८ लुब्विधिसूत्रम् ॥ ४ । २ । १ आ. ५ )

## १४२८ संज्ञायां श्रवणाश्वत्थाभ्याम् ॥ ४ । २ । ५ ॥

( श्रवणाशब्दसाधकं भाष्यम् )

इह कस्मान्न युक्तवद्भावो भवति—श्रवणा रात्रिः ?

निपातनादेतत्सिद्धम् ।

किं निपातनम् ?

"विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः" ( ४।२।२३ ) इति ॥

( उद्द्योतः ) भाष्ये—निपातनादिति । निर्देशेन श्रवणश[6]ब्दात्प्रत्ययलुपि युक्तवद्भावाभावो ज्ञाप्यत इति भावः । यद्यपि तत्रैव फाल्गुनीत्यादिनिर्देशात् पूर्णिमायां न लुप्प्राप्तस्तथापि श्रवणेतिनिर्देशेन पूर्णिमालुब्निषेधेऽनित्यत्वस्य बोधनान्न दोषः ॥

( ७०९ विधिसूत्रम् ॥ ४ । २ । १ आ. ६ )

## १४३० दृष्टं साम ॥ ४ । २ । ७ ॥

( अर्थाधिकरणम् )

( ५३३८ कलिशब्दविषयं वार्तिकम् ॥ १ ॥ )

**॥ * ॥ दृष्टं साम कलेर्ढक् ॥ * ॥**

( भाष्यम् ) दृष्टं सामेत्यत्र कलेर्ढग्वक्तव्यः । कलिना दृष्टं साम कालेयं साम गीयते ॥

---

१ 'पि गम्यते' इति छ. झ. पाठः ॥

२ 'अविशेषस्वरूपदर्शनाय प्रश्नप्रतिवचने' इत्यस्यान्वयमाह—इहप्रश्नसम्बन्ध इत्यादिना ॥

३ अह्नो रूपस्य विशेषावगतेरित्यर्थः ॥

४ पौषी रात्रिरित्यादौ 'लुबविशेषे' इति सूत्रस्य विशेषे गम्यमाने लुब्नेत्यर्थाश्रयणेन दोषाभाव उक्तः, अद्य पुष्य इत्यादौ पर्युदासं अविशेषे गम्यमाने लुब्नित्यर्थमाश्रित्य दोषवारणमिति भाष्यकृता पर्युदासप्रसज्यप्रतिषेधावाश्रितौ ॥

५ सूत्रेऽविशेषपदघटको नञ् प्रसज्यप्रतिषेधार्थक इति भावः ॥

६ विभाषा फाल्गुनीति सूत्रे 'श्रवणा' इति निर्देशेन श्रवणशब्दाद्युक्ता पौर्णमासीत्यर्थे प्रत्यये तस्य च लुपि लुपि युक्तवदित्यनेन प्राप्तो युक्तवद्भावो न भवतीति ज्ञाप्यत इत्यर्थः ॥

अपर आह—

( प्रदीपः ) कलिना दृष्टमिति । यस्य साम्नो विशिष्टकार्यविषयो विनियोगो ज्ञानातिशयसम्पत्त्या कलिनाऽज्ञायि तत्तेन दृष्टमित्युच्यते ॥

( उद्द्योतः ) ननु ऋग्विषयसाम्नो नित्यत्वात्कलिना दृष्टमित्यनुपपन्नमत आह—यस्य साम्न इति । ज्ञापित इत्यस्य 'प्रथमतः' इत्यादिः । अज्ञायीति क्वचित्पाठः ॥

( ५३३९ व्यापकवार्तिकम् ॥ २ ॥ )

॥ * ॥ सर्वत्राग्निकलिभ्यां ढक् ॥ * ॥

( भाष्यम् ) सर्वत्राग्निकलिभ्यां ढग्वक्तव्यः । अग्निना दृष्टं सामाग्नेयम्, अग्नौ भवमाग्नेयम्, अग्नेरागतमाग्नेयम्, अग्नेः स्वमाग्नेयम्, अग्निर्देवताऽस्याग्नेयः । कलिना दृष्टं कालेयम्, कलौ भवं कालेयम्, कलेरागतं कालेयम्, कलेः स्वं कालेयम्, कलिर्देवताऽस्य कालेयश्चरुः ॥

( प्रदीपः ) सर्वत्रेति । सर्वेषु प्राग्दीव्यतीयेष्वर्थेष्वित्यर्थः ॥

( विधायकं श्लोकवार्तिकम् ॥ )

दृष्टे सामनि जाते

चाप्यण् डिद्द्विर्वा विधीयते ॥

( भाष्यम् ) दृष्टे सामनि जाते चाप्यण् डिद्द्विर्वा वक्तव्यः । उशनसा दृष्टं साम औशनम्, औशनसम् । शतभिषजि जातः शातभिषजः, शातभिषः ॥

( प्रदीपः ) जाते चेति । जातेऽर्थे यो द्विरण् विधीयते पूर्वं विहितो बाधकेन निवर्तितः पुनर्विधीयत इत्यर्थः, स वा डिद्भवति ॥ शतभिषजीति । शतभिषजयुक्तः काल इत्यण् । तस्य लुक् । ततो जातेऽर्थे 'प्राग्दीव्यतोऽण्' इत्यण् विहितः 'कालाट्ठञ्' इति ठञा बाधितः पुनः 'सन्धिवेला' इत्यादिसूत्रेण विधीयते ॥

( उद्द्योतः ) द्विरणित्यनेन योग्यतया 'जाते च' इत्येवान्वेतीत्याशयेनाह—जातेऽर्थे इति । 'दृष्टे सामनि' इत्येतत्तु अणैव सम्बध्यत इति भावः ॥

( विधायकं श्लोकवार्तिकम् ॥ )

तीयादीकक् ॥

( भाष्यम् ) तीयादीकक् वक्तव्यः । द्वैतीयीकः, तार्त्तीयीकः ॥

(प्रदीः) तीयादीकगिति । अर्थानिर्देशात् स्वार्थ एवेति ज्ञेयम् ॥ न विद्याया इति । विद्यावाचिनो न भवतीत्यर्थः ॥

( उद्द्योतः ) विद्याशब्दादीकको ऽप्राप्तेराह—विद्यावाचिन इति ॥

( निषेधे श्लोकवार्तिकम् ॥ )

न विद्यायाः ॥

( भाष्यम् ) विद्याया न भवतीति वक्तव्यम् । द्वितीया विद्या, तृतीया विद्येत्येव ॥

( अतिदेशे श्लोकवार्तिकम् ॥ )

गोत्रादङ्कवदिष्यते ॥

( भाष्यम् ) औपगवकम्, कापटवकम् ॥

दृष्टे सामनि जाते

चाप्यण् डिद्द्विर्वा विधीयते ।

तीयादीकग्न विद्याया

गोत्रादङ्कवदिष्यते ॥

( प्रदीपः ) गोत्रादिति । यथाङ्के गोत्रप्रत्ययान्तात्प्रत्ययः, एवं दृष्टे सामनीत्यर्थः ॥ औपगवकमिति ॥ 'गोत्रचरणाद्वुञ्' इति वुञ् ॥

( उद्द्योतः ) वुञिति । अङ्के यो दृष्टस्तस्य सर्वस्यैवातिदेशः, न त्वङ्के आहत्यैव विहितस्येति भावः ॥

( ७१० विधिसूत्रम् ॥ ४ । २ । १ आ. ७ )

१४३२ वामदेवाड्ड्यड्ड्यौ ॥ ४।२।९ ॥

( ड्यड्ड्ययोरधिकरणम् )

( उद्द्योतः ) अत्रत्यम्भाष्यं 'टिड्ढा' इतिसूत्रे व्याख्यातम् ॥

( डित्त्वफलबोधकभाष्यम् )

किमर्थो डकारः ?

डितीति लोपो यथा स्यात् ।

नैतदस्ति प्रयोजनम् । यस्येति लोपेनाप्येतत्सिद्धम् ।

एवं तर्हि सिद्धे सति यद्यतौ डितौ करोति तज्ज्ञापयत्याचार्यः—भवत एते परिभाषे—अननुबन्धकग्रहणे न सानुबन्धकस्य ग्रहणम्, तदनुबन्धकग्रहणे नातदनुबन्धकस्य ग्रहणमिति ॥

( ज्ञापनफलबोधकभाष्यम् )

किमेतस्य ज्ञापने प्रयोजनम् ?

अवामदेव्यमित्येतत्सिद्धं भवति ।

सिद्धे यस्येति लोपेन

किमर्थं यद्यतौ डितौ ।

ग्रहणं माऽतदर्थे भू-

द्वामदेव्यस्य नञ्स्वरे ॥

१ 'कलिना ज्ञापितस्तत्तेन' इत्युद्द्योतदर्शनात्पाठोऽनुमीयते । इदानीतनप्रदीपपुस्तकेषु न तादृशः पाठ उपलभ्यते ॥

२ 'सन्धिवेलादिसूत्रेण' इति क. पाठः ॥

( प्रदीपः ) अवामदेव्यमिति । अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमित्यर्थः । अन्यथा 'ययतोश्चातदर्थे' इत्यनेनान्तोदात्तत्वं स्यात् ॥ ग्रहणमिति । अतदर्थग्रहणेन सूत्रं लक्ष्यते ॥ नञ्स्वर इति । नञाश्रयेऽन्तोदात्तत्वे विधीयमान इत्यर्थः ॥

( ७११ विशिष्टार्थे प्रत्ययविधिसूत्रम् ॥ ४।२।१ आ. ८ ॥ )

## १४३३ परिवृतो रथः ॥ ४ । २ । १० ॥

( अर्थाधिकरणम् )

( ५३४० परिवृतपदार्थबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ परिवृतो रथ इति तदेकान्तग्रहणम् ॥ * ॥

( भाष्यम् ) परिवृतो रथ इत्यत्र तदेकान्तग्रहणं कर्तव्यम् । येन परिवृतो रथो रथैकान्तश्चेत् स भवतीति वक्तव्यम् ।

इह मा भूत्-पुत्रैः परिवृतो रथः, छात्रैः परिवृतो रथ इति ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् ।

कस्मान्न भवति-पुत्रैः परिवृतो रथः, छात्रैः परिवृतो रथ इति ।

अनभिधानात् ॥

( प्रदीपः ) तदेकान्तग्रहणमिति । रथस्य[१] चर्मवस्त्रादयोऽवयवा इति तद्वाचिभ्य एव प्रत्ययो भवतीत्यर्थः ॥ अनभिधानादिति । पौत्रो रथ[२] इत्यादावभिधानस्याभावादित्यर्थः ॥

( उद्द्योतः ) अवयवा इति । अवयवा इवेत्यर्थः । संयुक्त[३]चक्रादिवदत्राप्यवयवत्वबुद्धिरिति भावः ॥

( ७१२ विधिसूत्रम् ॥ ४ । २ । १ आ. ९ )

## १४३४ पाण्डुकम्बलादिनिः ॥४।२।११॥

( इनिप्रत्ययाधिकरणम् )

( फलाभावबोधकभाष्यम् )

अयं योगः शक्योऽवक्तुम् ।

कथम्—पाण्डुकम्बली, पाण्डुकम्बलिनौ, पाण्डुकम्बलिन इति ।

इनिनैतन्मत्वर्थीयेन सिद्धम् । पाण्डुकम्बलोऽस्यास्तीति—पाण्डुकम्बली ॥

( प्रदीपः ) इनिनैतदिति । अण्त्वनभिधानान्न भवतीति तद्बाधनार्थमपीदं न वाच्यमिति भावः ॥

( उद्द्योतः ) नन्वसति सूत्रे पाण्डुकम्बलेन परिवृत इत्यर्थे पूर्वेणाण् स्यादत आह—अण्त्विति ॥

( ७१३ निपातनसूत्रम् ॥ ४ । २ । १ आ. १० ॥ )

## १४३६ कौमारापूर्ववचने ॥ ४।२।१३ ॥

( निपातनाधिकरणम् )

( ५३४१ अपूर्ववचनार्थबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे ॥ * ॥

( भाष्यम् ) कौमारापूर्ववचन इत्यत्रोभयतः स्त्रिया अपूर्वत्व इति वक्तव्यम् । अपूर्वपतिं कुमारीमुपपन्नः कौमारो भर्ता । कुमारी—अपूर्वपतिः—पतिमुपपन्ना कौमारी भार्या ॥

( भाष्यवार्तिकम् )

कौमारापूर्ववचने
कुमार्या अण्विधीयते ।
अपूर्वत्वं यदा तस्याः
कुमार्या भवतीति वा ॥

( भाष्यम् ) अथ वा कुमार्या भवः कौमारः ॥ यद्येवं कौमारीभार्येति न सिध्यति ॥

( प्रदीपः ) उभयत इति । उभयस्मिन्नुभयर्थतः[४] । यदि कौमारीति स्त्रियां प्रयोगः, अथ कौमारः पतिरिति पुंसि, उभयत्रापि स्त्रियाः पाणिग्रहणस्यापूर्वत्वे प्रयोगः कार्य इत्यर्थः । एतच्च निपातनसामर्थ्याल्लभ्यमेव वार्तिककृता प्रकाशितम् ॥ अपूर्वपतिमिति । अविद्यमानः पूर्वः पतिर्यस्यास्तां प्राप्त इत्यर्थः । द्वितीयासमर्थात्कुमारीशब्दादुपयन्तरि—अण्प्रत्ययः । स्त्रियां तु स्वार्थे प्रत्ययः ॥ कुमार्या भव इति । रोगादिषु[५] तु यत्राभिधानं नास्ति तदाऽनभिधानात्प्रत्ययाभावः ॥

( उद्द्योतः ) उभयत इत्यस्य—स्त्रियाः पुंसश्चेति नार्थः, स्त्रिया इति वाक्यशेषात्, उदाहरणविरोधाच्चात आह—उभयस्मिन्निति ॥ तद्विवृणोति—यदीत्यादि ॥ पाणिग्रहणस्येति । निपातनबललब्धमेतत् ॥ तद्ध्वनयन्वक्ष्यति—एतच्चेति ॥ सौत्रापूर्वशब्दो भावप्रधान इत्याह—अपूर्वत्व इति ॥ उपयन्तरि—विवोढरि । स्वार्थे—उपयमनविशिष्टे स्वार्थे इत्यर्थः ॥ 'कुमार्या भवतीति वा' इति वार्तिकव्याख्यानम्—कुमार्याम्भव इति । तस्यां प्राप्त इत्यर्थः । तस्यां संबद्ध इति यावत् ॥ यत्राभिधानमिति । इदं च सूत्रारंभेऽप्यावश्यकम्, अन्यथा तवापि स दुर्वारः ॥

१ चर्मवस्त्रादिभिः परिवृतस्य रथस्य चर्मवस्त्रादयोऽवयवा इवेति भावः ॥
२ पौत्रो रथ इत्यस्मात्पुत्रैः परिवृतोरथ-इत्यर्थस्यानभिधानादिति भावः ॥
३ रथसंयुक्तचक्रादौ यथाऽवयवत्वबुद्धिस्तद्वदित्यर्थः ॥

४ उभयस्मिन्—कौमारीशब्दे, कौमारशब्दे च स्त्रिया अपूर्वत्वे तयोः प्रयोग इति भावः ॥
५ कुमार्याम्भवो रोग इत्यर्थे कौमारशब्दस्याभिधायकत्वं नास्तीति भावः ॥

( ५३४२ अन्यथासिद्धिसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ पुंयोगात् स्त्र्यभिधानम् ॥ * ॥

( भाष्यम् ) पुंयोगात् स्त्र्यभिधानं भविष्यति । कौमारस्य भार्या कौमारीति[1] ॥

( प्रदीपः ) कौमारस्य भार्येति । प्रत्यासत्त्या यैव तस्य कौमारव्यपदेशनिबन्धनं सैवाभिधीयते, नान्या ॥

( उद्योतः ) नन्वेवमन्यस्या अप्यभिधानं स्यादत आह—प्रत्यासत्त्येति । (प्रक्लृप्तैकदेशवाच्यत्वादिति भावः)।[2] इदं च सूत्रारम्भेऽप्यावश्यकम्, अन्यथा भवार्थमादायातिप्रसंगो दुर्वार इति बोध्यम् ॥

( ७१४ विशिष्टार्थे प्रत्ययविधिसूत्रम् ॥ ४।२।१ आ० ११ )

## १४४४ सास्मिन् पौर्णमासीति ॥ ४ । २ । २१ ॥

( अर्थबोधनाधिकरणम् )

( ५३४३ उपसङ्ख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ सास्मिन् पौर्णमासीति संज्ञाग्रहणम् ॥ * ॥

( भाष्यम् ) सास्मिन् पौर्णमासीत्यत्र संज्ञाग्रहणं कर्तव्यम् ॥

( प्रदीपः ) संज्ञाग्रहणं सूत्रेऽनार्षमिति वार्तिकमारब्धम् ॥

( ५३४४ उपसङ्ख्यानाभावे गौरवबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ असंज्ञायां हि[3] गरीयानुपसंयोगः ॥ * ॥

( भाष्यम् ) अक्रियमाणे हि संज्ञाग्रहणे गरीयानुपसंयोगः कर्तव्यः स्यात्—मासार्धमासयोरिति वक्तव्यं स्यात् ।

इह मा भूत्—पौषी पौर्णमास्यस्मिन्-पञ्चदशरात्रे, दशरात्र[4] इति ।

संवत्सरपर्वणीति च वक्तव्यं स्यात् । भृतकमासे मा भूदिति ॥

( प्रदीपः ) उपसंयोग इति । उपसंयुज्यत इत्युपसंयोगः—उपाधिरुच्यते । अनेक उपाधिर्निर्देष्टव्यः स्यादित्यर्थः ॥ संवत्सरपर्वणीति । संवत्सरस्य द्वादश पर्वाणि मासान्तास्तत्र पर्वविशिष्टे मासे[5] यथा स्यात् । भृतकमासे[6]—पौष्या पौर्णमास्याऽतद्वति मासादिव्यपदेशभाजि पौषशब्दो मा भूदित्येवमर्थमित्यर्थः ॥

( उद्योतः ) भाष्ये—पञ्चरात्रे[7] दशरात्रे इति पाठः । मासार्धमासयोरिति च वार्तिकपाठः ॥ संवत्सरस्येति । पूर्णिमान्तमानेन द्वादशमासात्मकस्य द्वादशपर्वाणि मासान्ता इत्यर्थः ॥ पर्वविशिष्टे—पर्वपरिच्छिन्न इत्यर्थः ॥ माघाद्यव्यपदेशभाजीति पाठः, पौषमाघादिव्यवहाररहिते इत्यर्थः । क्वचित्तु—मासादिव्यपदेशभाजीति पाठः, आदिनाऽर्धमासः ॥

( उपसङ्ख्यानान्यथासिद्धिभाष्यम् )

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम् । इतिकरणः क्रियते, ततश्चेद्विवक्षा ॥

( उद्योतः ) भाष्ये—ततश्चेद्विवक्षेति । ततः—प्रत्ययान्तादीदृशार्थविवक्षा चेत्तदा प्रत्यय इत्यर्थः ॥

( ७१५ प्रत्ययसन्नियोगेनादेशविधिसूत्रम् ॥ ४।२।१ आ. १२ )

## १४४८ कस्येत् ॥ ४ । २ । २५ ॥

( आदेशाधिकरणम् )

( भाष्यम् )

यस्येति लोपः कस्मान्न भवति ?

इकारोच्चारणसामर्थ्यात् ।

अथ यत्कायं हविः, कथं तस्य संप्रैषः कर्तव्यः ?

यदि तावत्किमः कादेशः, कस्मा अनुब्रूहीति भवितव्यम् ।

अथ न किमः, कायानुब्रूहीति भवितव्यम् ।

यद्यपि किमः, अथापि न किमः, उभयथा कस्मा अनुब्रूहीति भवितव्यम् । सर्वस्य हि सर्वनामसंज्ञा क्रियते, सर्वश्च प्रजापतिः, प्रजापतिश्च कः ॥

अपर आह—

१ 'कौमारी' इति-इतिशब्दरहितः पाठः क. पुस्तके ॥

२ (   ) एतच्चिह्नस्थो भागो घ. पुस्तके दृश्यते, नान्यत्र ॥

३ 'ज्ञायां गरी' इति हि शब्दरहितः पाठः छ. पुस्तके ॥

४ 'पञ्चदशरात्र इति' इत्येव पाठः क. पुस्तके । च. झ. पुस्तकयोस्तु 'रात्रे दशरात्रे वेति' इति पाठः ॥

५ प्रदीपे—'पर्वविशिष्टे मासे' इत्यत्र 'पर्वविशिष्टे माघाद्यव्यपदेशभाजि मासे' इति, 'पर्वविशिष्टे मासादिव्यपदेशभाजि मासे' इत्येवं वा पाठो भट्टाचार्यदृष्टः ॥

६ भृतकमासः=पूर्णमासीरहितो मासः, सावन इत्यर्थः । पौष्या पौर्णमास्याऽतद्वति=पौर्णमासीरहिते मासादिव्यवहारभाजि—इत्यर्थः । इदानीन्तनोपलब्धपुस्तकेषु 'पौर्णमास्या तद्वति' इत्येवम्पाठ उपलभ्यते, एकस्मिंश्च लिखितपुस्तके 'पौर्णमास्यातद्वति' इत्येवं सन्दिग्धमिव, सङ्गच्छते चायम्पाठ इत्यत्र तथा स्थापितः, अत्रत्यं तत्त्वं सुधियो विदाङ्कुर्वन्तु ॥

७ अस्मादुद्द्योताद्भाष्ये 'पञ्चदशरात्रे' इत्यस्य स्थाने पञ्चरात्र इति पाठः, 'असंज्ञायां हि गरीयानुपसंयोगो मासार्द्धमासयोः' इत्येवं च वार्तिकपाठो भट्टाचार्यदृष्टः ॥

८ 'अयम्पाठोऽद्य यावल्लुप्त आसीदत्यन्तमावश्यकश्चेति गौडैरुद्धृतः' इति कैश्चिद्व्याहृतम्, तदीशवीये १९०६ मुद्रापितपुस्तकानवलोकनमूलमित्युपेक्षणीयम् ॥

यद्येव किमः,

अथापि न किमः,

उभयथा कायानुब्रूहीति भवितव्यम् । संज्ञोपसर्जनयोर्हि सर्वनामसंज्ञा प्रतिषिध्यते, संज्ञा चैषा तत्र भवतः ॥

(प्रदीपः) इकारोच्चारणसामर्थ्यादिति । यदा कशब्दस्येकारादेशस्तदाऽयं परिहारः । यदा तु किमो मकारस्येकारस्तदा लोपेऽपि कायमिति सिध्यति । यद्यपि कशब्दस्येत्वे कृते परत्वाद्वृद्ध्या लोपो बाध्यते, यथा श्रीर्देवताऽस्य श्रायमिति । तथापि परिहारान्तरसद्भावादेतद्भाष्यकृता नोक्तम् ॥ अथेति—कल्पकारविप्रतिपत्त्या संशयः । अध्वर्युणा होतुः संप्रैषः क्रियते ॥ यदि तावदिति । किमो विभक्तौ कादेशं कृत्वा कस्य—इति । यदि निर्देशः कृत इत्यर्थः । किंशब्दश्च प्रश्नाक्षेपयोरिव प्रजापतौ वर्तते ॥ अथ नेति । यदा कशब्दस्यैव कस्य—इति निर्देश इत्यर्थः ॥ सर्वस्येति । सर्वार्थवाचिन इत्यर्थः ॥ सर्वेश्चेति । कार्यकारणयोरभेदादिति भावः ॥ प्रजापतिश्च क इति । सर्वादिषु कशब्दस्यापाठेऽपि अन्वर्थसंज्ञाविज्ञानात्सर्वनामसंज्ञा भवति । गणपाठस्तु प्रपञ्चार्थः । येषां तु सकलं कृत्स्नमित्यादीनां सर्वनामसंज्ञा नेष्यते तेषां 'न बहुव्रीहौ' इत्यत्र नेति योगविभागात्तदभावः । यागसंप्रदानं देवता । मन्त्रस्तुत्यश्चार्थः ॥ संज्ञा चैषेति । यद्येवं कादेशाभावात्कायेति किमो न सिध्यति । एवं तर्हि कस्य—इत्यत एव निपातनात्कादेशो भविष्यतीत्यदोषः ॥

(उद्द्योतः) तदा लोपेऽपीति । 'वार्णादाङ्गम्' इति न्यायेन दीर्घात्पूर्वं लोप इति भावः । पुनर्यस्येति लोपस्तु न, पूर्वलोपस्यासिद्धत्वात्, स्थानिवत्त्वाद्वा ॥ वृद्ध्या लोप इति । वृद्ध्युत्तरं तु तस्य प्राप्तिरेव नेति भावः । वृद्धेर्लोपस्य बलवत्त्वाश्रयेण भाष्यम्, अत एव किमः कायमिति सिध्यति—इत्यन्ये ॥ कल्पकारेति । श्रुतिविप्रतिपत्त्या संशय इत्यन्ये ॥ ननु विभक्तौ विहितस्य कादेशस्य तद्धिते कथं प्राप्तिः? अत आह—किमो विभक्ताविति ॥ ननु किंशब्देन कथं प्रजापतिरुच्यते? अत आह—किंशब्दश्चेति ॥ यदा कशब्दस्यैवेति । अत्र 'न किमः' इत्युक्त्या पूर्वपक्षिणा किमोऽपि निर्देशो दोषाभावस्य सूचितत्वेन सिद्धान्तिना नोक्तमेतत् । एतदुत्तरभाष्यं द्वयोरेकदेशिनोः प्रौढोक्तिपरम् । अत एव 'सर्वादि'सूत्रस्थभाष्यविरोधो न, 'विश्वेषां देवानाम्' इति प्रयोगविरोधश्च नेति बोध्यम् ॥ ननु सर्वशब्दस्य संज्ञायामपि कथं 'क' शब्दस्येत्यत आह—सर्वार्थेति ॥ भाष्ये—सर्वश्च प्रजापतिः, प्रजापतिश्च क इति । अत एव—'सर्वं समाप्नोषि ततोऽसि सर्वः' इति गीतायामुक्तम् ॥ ननु ब्राह्मणः पूजायामविनियोगात्कथं देवतात्वमत आह—यागसंप्रेति ॥ कादेशाभावादिति । 'किमः कः' इत्यत्र त्यदादीनामित्यनुवृत्तेरिति भावः ॥ एवं तर्हीति । एवं च 'अपर आह' इत्यस्य प्रौढित्वं सूचितम् ॥

---

१ सर्वशब्दस्य सर्वनामसंज्ञायामपि कःशब्दस्य कथं सर्वनामतेति भावः ॥

२ 'नप्त्रियं च हविः' इति क., 'नप्त्रियं वा हविः' इति ख. पाठः ॥

(७१६ विधिसूत्रम् ॥ ४ । २ । १ आ. १३)

## १४५० अपोनप्त्रपांनप्तृभ्यां घः ॥ ४ । २ । २७ ॥

(घप्रत्ययाधिकरणम्)

(प्रैषविचारकभाष्यम्)

अथ यदपोनप्त्रियम्, अपांनप्त्रियं हविः, कथं तस्य संप्रैषः कर्तव्यः?

अपोनपातेऽनुब्रूहि, अपांनपातेऽनुब्रूहि ।

अपोनप्त्रपांनप्तृभावः कस्मान्न भवति?

प्रत्ययसंनियोगेन ऋकारान्तत्वमुच्यते, तेनासति प्रत्यये न भवितव्यम् ॥

(प्रदीपः) अथेति । वेदे क्वचित्—अपोनप्त्रे स्वाहेति ऋकारान्तः प्रयोगो दृश्यते । क्वचिदपोनपादपांनपादिति तकारान्तः प्रयोग इति प्रश्नः ॥ प्रत्ययसंनियोगेनेति । वेदे तु च्छान्दसत्वात् क्वचिदृकारान्तप्रयोगः ॥

(७१७ विधिसूत्रम् ॥ ४ । २ । १ आ. १४)

## १४५१ छ च ॥ ४ । २ । २८ ॥

(छाधिकरणम्)

(५३४५ सिद्धान्तवार्तिकम् ॥ १ ॥)

॥ * ॥ छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् ॥ * ॥

(भाष्यम्) छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानं कर्तव्यम् । पैङ्गाक्षीपुत्रीयम्, तार्णबिन्दवीयम् ॥

(५३४६ सिद्धान्तवार्तिकम् ॥ २ ॥)

॥ * ॥ शतरुद्राद् घ च ॥ * ॥

(भाष्यम्) शतरुद्राद् घप्रत्ययो वक्तव्यः, छश्च वक्तव्यः । शतरुद्रियम्, शतरुद्रीयम् ॥

(उद्द्योतः) शतरुद्रिये शतशब्दोऽनन्तवाची ॥

(७१८ अतिदेशसूत्रम् ॥ ४ । २ । १ आ. १५)

## १४५७ कालेभ्यो भववत् ॥ ४।२।३४ ॥

(अतिदेशाधिकरणम्)

(सूत्रार्थबोधकभाष्यम्)

कथमिदं विज्ञायते—

---

१ 'तस्य प्रैषः' इति क. पाठः ॥

भवे ये प्रत्यया विहितास्ते भवन्ति कालेभ्यः साऽस्य देवतेत्यस्मिन्नर्थे इति,

आहोस्वित्कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति साऽस्य देवतेत्यस्मिन्नर्थे इति ।

कश्चात्र विशेषः ?

(प्रदीपः) कथमिति । कालेभ्य इति सकृच्छ्रवणात् 'भवेन' वाऽभिसंबन्धः स्यात् 'साऽस्य देवता' इत्यनेन वेति प्रश्नः ॥

( उद्द्योतः ) सकृदिति । आवृत्त्योभयान्वयेऽपि ऋत्वादिभ्यो विहितोऽण् मुहूर्तादिभ्योऽपि स्यादित्यपि बोध्यम् ॥

( ५३४७ प्रथमपक्षे दोषोद्भावकवार्तिकम् ॥ १ ॥ )

॥ * ॥ कालेभ्यो भवे[1] प्रत्ययमात्र-प्रसङ्गः ॥ * ॥

( भाष्यम् ) यदि विज्ञायते भवे ये प्रत्यया विहितास्ते भवन्ति कालेभ्यः साऽस्य देवतेत्यस्मिन्नर्थे इति, प्रत्ययमात्रं प्राप्नोति ॥

( प्रदीपः ) प्रत्ययमात्रमिति । 'दिगादिभ्यो यत्' इति यत्प्रत्ययो भवे विहितः स कालवाचिभ्यः प्राप्नोतीत्यर्थः ।

( ५३४८ द्वितीयपक्षे दोषोद्भावकवार्तिकम् ॥ २ ॥ )

॥ * ॥ यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रात्प्रसङ्गः ॥ * ॥

( भाष्यम् ) अथ विज्ञायते कालेभ्यो भवे ये प्रत्यया विहितास्ते भवन्ति साऽस्य देवतेत्यस्मिन्नर्थे इति, प्रातिपदिकमात्रात् प्राप्नुवन्ति ॥

( प्रदीपः ) प्रातिपदिकमात्रादिति । 'कालाट्ठञ्' इति ठञिन्द्रादेरपि प्राप्नोति ॥

( ५३४९ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

॥ * ॥ सिद्धं तूभयनिर्देशात्[2] ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

उभयनिर्देशात् । उभयनिर्देशः कर्तव्यः । कालेभ्यो भववत् कालेभ्य इति ॥

स तर्ह्युभयनिर्देशः कर्तव्यः ।

न कर्तव्यः ।

भववदिति वतिना निर्देशोऽयम्[3] ॥

( प्रदीपः ) सिद्धं त्विति । वतिरतिदेशमात्रे चरितार्थ इति न सर्वसादृश्यं लभ्यत इति वार्तिककारो मन्यते ॥ वतिनिर्देशोऽयमिति । 'कालेभ्यो भवे' इत्येव भवार्थे विहिताः प्रत्ययाः सिध्यन्तीति वतिनिर्देशः सर्वसादृश्यपरिग्रहार्थः कृतः ॥

( उद्द्योतः ) इत्येवेति । 'भवे' इति सप्तम्यन्तम् । भवे ये प्रत्यया विहितास्ते कालवाचकेभ्य इत्यर्थः ॥

( वतिनिर्देशलब्धार्थबोधकभाष्यम् )

यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन भवे प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेन विशेषणेन साऽस्य देवतेत्यस्मिन्नर्थे भवन्ति, ततोऽमी भववत्कृताः स्युः ।

अथ हि प्रकृतिमात्राद्वा स्युः, प्रत्ययमात्रं वा स्यात्, नामी भववत्कृताः स्युः ॥

( ७१९ विधिसूत्रम् ॥ ४ । २ । १ आ. १६ ॥ )

## १४५८ महाराजप्रोष्ठपदाट्ठञ् ॥ ४ । २ । ३५ ॥

( ठञोऽधिकरणम् )

( ५३५० सिद्धान्तवार्तिकम् ॥ १ ॥ )

॥ * ॥ ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् ॥ * ॥

( भाष्यम् ) ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानं कर्तव्यम् । नवयज्ञो वर्ततेऽस्मिन् काले—नावयज्ञिकः, पाकयज्ञिकः ॥

( ५३५१ सिद्धान्तवार्तिकम् ॥ २ ॥ )

॥ * ॥ पूर्णमासादण् ॥ * ॥

( भाष्यम् ) पूर्णमासादण्वक्तव्यः । पूर्णमासो वर्ततेऽस्मिन् काले—पौर्णमासी तिथिः ॥

(७२० निपातनबोधकं सूत्रम् ॥ ४ । २ । १ आ. १७)

## १४५९ पितृव्यमातुलमातामह-पितामहाः ॥ ४ । २ । ३६ ॥

( निपातनाधिकरणम् )

( निपातनव्युत्पादकं भाष्यम् )

पितृव्यमातुलेति किं निपात्यते ?

1 'भवे चेत्प्रत्यय' इति क. झ. पाठः ॥

2 'तूभयनिर्देशात् कालेभ्यो भववत्कालेभ्य इति' एतादृशं वार्तिकमित्युपयुक्तं कैश्चित्संशोधितम् ॥

3 'वतिनिर्देशोऽयम्' इति क. च. झ. पाठः ॥

( ५३५२ व्युत्पादकवार्तिकम् ॥ १ ॥ )

॥ * ॥ पितृमातृभ्यां भ्रातरि व्यड्डुलचौ ॥ * ॥

( भाष्यम् ) पितृमातृभ्यां भ्रातरि व्यड्डुलचौ प्रत्ययौ निपात्येते । पितुर्भ्राता—पितृव्यः, मातुर्भ्राता—मातुलः ।

मातामहपितामहेति किं निपात्यते ?

( उद्योतः ) भाष्ये—व्यनिति नित्, निरनुबन्धकः, तिद्वेति बहुदर्शिभिर्विचार्यम् ॥

( ५३५३ व्युत्पादकवार्तिकम् ॥ २ ॥ )

॥*॥ मातृपितृभ्यां पितरि डामहच् ॥*॥

( भाष्यम् ) मातृपितृभ्यां पितरि डामहच्प्रत्ययो निपात्यते । मातुः पिता—मातामहः, पितुः पिता—पितामहः ॥

( ५३५४ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

॥ * ॥ मातरि षिच्च ॥ * ॥

( भाष्यम् ) षिच्च वक्तव्यः । पितामही, मातामही ॥

( उद्योतः ) षिच्चेति । गौरादिगणे मातामहीशब्दपाठोऽनार्ष इति भावः ।

( ५३५५ अवग्रहे रूपसाधकं वार्तिकम् ॥ ४ ॥ )

॥ * ॥ महो वा छन्दस्यानङोऽवग्रहदर्शनात् ॥ * ॥

( भाष्यम् ) महो वा पुनरेष भविष्यति, छन्दस्यानङोऽवग्रहदर्शनात् । छन्दस्यानङोऽवग्रहो दृश्यते—पिता—मह इति ॥

( प्रदीपः ) महो वेति । पितृशब्दस्यानङादेशो निपात्यते महच्च प्रत्ययः । तेन पदसंज्ञायां सत्यां पितेत्यवग्रहो भवति । डामहचि तु न स्यात् ॥

( उद्योतः ) डामहच्चि त्विति । तत्र भत्वादिति भावः ॥

( ५३५६ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

॥ * ॥ अवेर्दुग्धे सोढदूसमरीसचः ॥ * ॥

( भाष्यम् ) अवेर्दुग्धे सोढदूसमरीसच इत्येते प्रत्यया वक्तव्याः । अविसोढम्, अविदूसम्, अविमरीसम् ॥

( प्रदीपः ) अविसोढमिति । षत्वं सकारोच्चारणसामर्थ्यान्न भवति । अन्यथा षोढप्रत्ययं प्रक्रियालाघवार्थं कुर्यात् । एवं दूसमरीसयोरपि षत्वाभावः सकारस्य ॥

( उद्योतः ) एवं दूसेति । न च ण्यन्तात्क्विपि 'अविदूर' इत्यादौ सकारस्य चारितार्थ्यम् । तेषामभिधाने दृढतरमानाभावादिति भावः ॥

( ५३५७ सिद्धान्तवार्तिकम् ॥ ६ ॥ )

॥ * ॥ तिलान्निष्फलात्पिञ्जपेजौ ॥ * ॥

( भाष्यम् ) तिलान्निष्फलात्पिञ्जपेजौ वक्तव्यौ । तिलपिञ्जः, तिलपेजः ॥

( प्रदीपः ) तिलपिञ्ज इति । तिलो धान्यविशेषः । फलरहित इत्यर्थः ॥

( उद्योतः ) फलरहित इति । फलकाले फलरहित इत्यर्थः ॥

( ५३५८ सिद्धान्तवार्तिकम् ॥ ७ ॥ )

॥ * ॥ पिञ्जश्छन्दसि डिच्च ॥ * ॥

( भाष्यम् ) पिञ्जश्छन्दसि डिच्च वक्तव्यः । तिल्पिञ्जं दण्डानतम् ॥

( ७२१ विधिसूत्रम् ॥ ४ । २ । १ आ. १८ )

## १४६१ भिक्षादिभ्योऽण् ॥ ४ । २ । ३८ ॥

( अणोऽधिकरणम् )

( युवतिशब्दपाठफलबोधकं भाष्यम् )

किमर्थं भिक्षादिषु युवतिशब्दः पठ्यते, न "तस्य समूहः" ( ४।२।३७ ) इत्येव सिद्धम् ।

न सिद्ध्यति ।

अनुदात्तादिलक्षणोऽञ्प्राप्तः, तद्बाधनार्थम् ।

अत उत्तरं पठति—

( ५३५९ युवतिपाठानर्थक्यबोधकं वार्तिकम् ॥ १ ॥ )

॥ * ॥ भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् ॥ * ॥

( भाष्यम् ) भिक्षादिषु युवतिग्रहणमनर्थकम् । किं कारणम् ?

पुंवद्भावस्य सिद्धत्वात् । प्रत्ययविधौ पुंवद्भावोऽत्र भविष्यति । 'भस्याढे तद्धिते' पुंवद्भवतीति ॥

---

१ 'व्यड्डुलचौ' इति क. च. पाठः ॥
२ 'अथ मातामह' इति क. च. झ. पाठः ॥
३ अत्र 'दृश्यते—मातामहः, पितामहः' इत्येवम्पाठो दृश्यते, मातामहशब्देऽप्यवग्रहो दृश्येत तर्हि तथा पाठः कल्पनीयः ॥
४ 'मरीसयोः षत्वा' इति क. पाठः ॥
५ यदा हि तिलः फलकाले फलरहितः स्यात्तदा तस्मिन्वाच्ये पिञ्जपेजौ भवतावित्यर्थः ॥
६ 'लक्षणोऽञ्प्राप्नोति तद्बा' इति च. झ. पाठः ॥

**सिद्धश्च प्रत्ययविधौ । स च सिद्धः प्रत्ययविधौ ॥**

( प्रदीपः ) पुंवद्भावोऽत्रेति । पुंवद्भावे सत्याद्युदात्तत्वादण् सिद्ध इत्यर्थः ॥ सिद्धश्चेति । पूर्वं पुंवद्भावः, पश्चात्प्रत्यय इत्यर्थः ॥

( उद्द्योतः ) पुंवद्भावे सतीति । कनिन्प्रत्ययान्तत्वादिति भावः ॥ ननु प्रत्यये सति तन्निमित्तं भत्वमिति कथमण्प्रत्ययोऽत आह—भाष्ये—सिद्धश्चेति ॥

( ७२२ विधिसूत्रम् ॥ ४ । २ । १ आ. १९ )

## १४६२ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ॥ ४।२।३९ ॥

( वुञोऽधिकरणम् )

( ५३६० पूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वृद्धाच्च ॥ * ॥**

( भाष्यम् ) **वृद्धाच्चेति वक्तव्यम् । वृद्धानां समूहो वार्द्धकम् ॥**

( ५३६१ एकदेशिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अञो वुञ्पूर्वविप्रतिषिद्धम् ॥ * ॥**

( भाष्यम् ) **अञो वुञ्भवति पूर्वविप्रतिषेधेन । अञोऽवकाशः—कपोत—कापोतम् । वुञोऽवकाशः—ग्लुचकायनि—ग्लौचुकायनकम् ।**

**इहोभयं प्राप्नोति—औपगवकम्, कापटवकम् ।**

**वुञ्भवति पूर्वविप्रतिषेधेन ॥**

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।**

**न वक्तव्यः ।**

**वक्ष्यत्येतत्—पूर्वोऽपि वुञ् परमञं बाधत इति ॥**

**अथ वा—इष्टवाची परशब्दः, विप्रतिषेधे परं यदिष्टं तद्भवतीति ॥**

( प्रदीपः ) कापोतमिति । 'लघावन्ते द्वयोश्च बह्वषो गुरुः' इति मध्योदात्तत्वादनुदात्तादिः कपोतशब्दः ॥

( ५३६२ विप्रतिषेधबोधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ ठक्कु विप्रतिषेधात् ॥ * ॥**

( भाष्यम् ) **ठक्कु भवति विप्रतिषेधेन ।**

**ठकोऽवकाशः—सक्तु—साक्तुकम् ।**

**अञः स एव ।**

**इहोभयं प्राप्नोति—आपूपिकम्, शाष्कुलिकम्, मौदकिकम् । ठग्भवति विप्रतिषेधेन ॥**

( प्रदीपः ) सक्तुशब्दस्तुन्प्रत्ययान्तत्वादाद्युदात्तः । शष्कुलीशब्दो ङीषन्तोऽन्तोदात्तत्वादनुदात्तादिः ॥

( उद्द्योतः ) आद्युदात्त इति । अत एव 'अचित्त' इति ठकोऽयमवकाश इति भावः ॥

( ७२३ विधिसूत्रम् ॥ ४ । २ । १ आ. २० ॥ )

## १४६३ केदाराद्यञ्च ॥ ४ । २ । ४० ॥

( ५३६३ पूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ गणिकायाश्च ॥ * ॥**

( भाष्यम् ) **गणिकायाश्चेति वक्तव्यम् । गणिकानां समूहो गाणिक्यम् ॥**

( ७२४ विधिसूत्रम् ॥ ४ । २ । १ आ. २१ )

## १४६५ ब्राह्मणमाणववाडवाद्यन् ॥ ४ । २ । ४२ ॥

( यन्प्रत्ययाधिकरणम् )

( लित्वफलबोधकं भाष्यम् )

**किमर्थं ब्राह्मणादिभ्यो यन्विधीयते, न यञ्प्रकृतस्सोनुवर्तिष्यते ?**

**न ह्यस्ति विशेषो ब्राह्मणादिभ्यो यनो वा यञो वा, तदेव रूपं स एव स्वरः ।**

**एवं तर्हि सिद्धे सति यद् ब्राह्मणादिभ्यो यनं शास्ति तज्ज्ञापयत्याचार्यः—अन्येभ्योऽप्ययं भवतीति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**यन्प्रकरणे पृष्ठादुपसंख्यानमिति चोदयिष्यति तन्न कर्तव्यं भवति ॥**

( उद्द्योतः ) भाष्ये—तदेव रूपमिति । नपुंसकत्वात्, 'यञश्च' इत्यत्रापत्यग्रहणाच्च न स्त्रियां विशेषः, वृद्धत्वाच्च न वृद्धिकृतो विशेषः । योगविभागसामर्थ्याच्च ठञो न संबन्धः, चानुकृष्टत्वाच्च न वुञ् इति भावः ॥

---

१ 'सिद्धश्च प्रत्ययविधौ' वार्तिकमेतदिति कैश्चिदुच्यते, तत् 'आह—भाष्ये–सिद्धश्चेति' इत्येवमुद्द्योतप्रतीकदर्शनान्निर्मूलम् ॥

२ युवतिशब्दे तिप्रत्ययस्योदात्तत्वेनादिरनुदात्त इति—अनुदात्तादिलक्षणोऽञ् प्राप्त इत्यभिप्रायेणाशङ्क्य पुंवद्भावेन समाहितम्भाष्ये । पुंवद्भावे हि तिप्रत्ययस्यापगमात्कनिन्प्रत्ययस्य नित्वादाद्युदात्तो युवन्शब्द इति—अनुदात्तादिलक्षणोऽञ् न प्राप्नोतीति भावः ॥

३ ननु युवतिशब्दस्यानुदात्तादित्वादनुदात्तलक्षणेऽञि कृते भत्वात्पुंवद्भावेनाद्युदात्तत्वेऽपि जातस्याञो निवृत्त्यभावात्स एव श्रूयेत, अकृतव्यूहपरिभाषा अभावादित्याशयेन शङ्कते—ननु प्रत्यय इति ॥ अकृतव्यूहपरिभाषानाश्रयणे इदमपि भाष्यस्मानमिति भावः ॥

४ अस्य वार्तिकस्य छ. पुस्तके न पाठः ॥

५ 'ग्लौचुकायनकम्' इत्यधिकः पाठश्छ. पुस्तके ॥

६ अस्यापि वार्तिकत्वेनोल्लेखः क. च. झ. पुस्तकेषु । छ. पुस्तके नैतद्वार्तिकम् ॥

७ 'न वुञ् इति' ज. पाठः ॥

( ५३६४ सिद्धार्थकथनपरं वार्तिकम् ॥ १ ॥ )

॥*॥ यन्प्रकरणे पृष्ठादुपसंख्यानम् ॥*॥

( भाष्यम् ) यन्प्रकरणे पृष्ठादुपसंख्यानं कर्तव्यम् । पृष्ठानां समूहः—पृष्ठ्यः-षडहः ॥

( ७२५ विधिसूत्रम् ॥ ४ । २ । १ आ. २२ ॥ )

## १४६६ ग्रामजनबन्धुभ्यस्तल् ॥ ४ । २ । ४३ ॥

( तल्प्रत्ययाधिकरणम् )

( ५३६५ सिद्धान्तवार्तिकम् ॥ १ ॥ )

॥ * ॥ गजसहायाभ्यां च ॥ * ॥[1]

( भाष्यम् ) गजसहायाभ्यां चेति वक्तव्यम् । गजता, सहायता ॥

( ५३६६ सिद्धान्तवार्तिकम् ॥ २ ॥ )

॥ * ॥ अह्नः खः ॥ * ॥

( भाष्यम् ) खो वक्तव्यः । अह्नां समूहोऽहीनः ॥[2]

( ५३६७ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

॥ * ॥ क्रतौ ॥ * ॥

( भाष्यम् ) क्रताविति वक्तव्यम् ।

इह मा भूत्—

आह्नाय धूतपाप्मानो भास्कराजितमृत्यवः ॥

( प्रदीपः ) आह्नायेति । खण्डिकादिषु दर्शनादहः-शब्दादञ्, तदन्ताच्चतुर्थी ॥

( उद्योतः ) क्रताविति । क्रतुवृत्तेरहन्शब्दादित्यर्थः । एवञ्च सुत्यासमूहे रूढोऽहीनशब्द इति भावः ॥

( ५३६८ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

॥ * ॥ पर्श्वाः सण् ॥ * ॥

( भाष्यम् ) पर्श्वाः सण् वक्तव्यः । पर्शूनां समूहः पार्श्वम् ।

यदि सण् क्रियते, इत्संज्ञा न प्राप्नोति ॥

एवं तर्हि णस्वक्तव्यः ।

( ६२६ विधिसूत्रम् ॥ ४ । २ । १ आ. २३ ॥ )

## १४६८ खण्डिकादिभ्यश्च ॥ ४।२।४५ ॥

( अञोऽधिकरणम् )

( गणे उलूकशब्दपाठप्रयोजनभाष्यम् )

खण्डिकशुकोलूक । किमर्थं खण्डिकादिषूलूक-शब्दः पठ्यते, न 'अनुदात्तादेः' इत्येव सिद्धम् ? न सिध्यति ।

चाषोलूकयोश्छन्दस्याद्युदात्तः प्रयोगो दृश्यते—चाषेण किकिदीविना, यदुलूको वदति ।

नैतयोश्छन्दसि सामूहिको दृश्यते । यत्र च दृश्यते, तत्रैतावनुदात्तादी ॥

इदं तर्हि प्रयोजनम्—अयमौलूक्यो गोत्रम्, तत्र गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम् ।

एतदपि नास्ति प्रयोजनम् ।

बहुवचनान्तानां हि सामूहिकः, बहुषु च लुक् । तत्र लुकि कृते 'अनुदात्तादेः' इत्येव सिद्धम् ।

न सिध्यति ।

"गोत्रेऽलुगचि" (४।१।८९) इत्यलुक् प्राप्नोति ॥

( प्रदीपः ) तत्रैताविति । चाषशब्दः-चषेर्ण्यन्तादच्यन्तोदात्तः । उलूकशब्दः 'लघावन्ते द्वयोश्च' इति मध्योदात्तः । औलूक्यशब्दो गर्गादियञन्तः ॥ बहुवचनान्तानामिति । द्वयोस्तु समूहव्यवहारो लोके प्रायो नास्तीति भावः ॥ बहुषु चेति । 'यञञोश्च' इत्यनेन ॥ लुकि कृत इति । ननु लुक्यपि कृते प्रत्ययलक्षणेन गोत्रलक्षणो वुञ् पूर्वविप्रतिषेधेन प्राप्नोत्येव । एवं तर्हि परीहारान्तराभिधानान्नोक्तम् । सामर्थ्यादौलूक्यशब्दार्थं उलूकशब्दस्य यञ्लुगन्तस्य पाठः । कृतयञ्लुक उलूकशब्दस्यानुकरणो गणे निर्दिष्टः ॥

( उद्योतः ) प्रत्ययलक्षणेनेति । इदमुपलक्षणम्, गोत्रार्थकादित्यर्थे लुक्यपि गोत्रार्थकत्वमक्षतमेवेत्यपि बोध्यम् ॥ पूर्वविप्रतिषेधेनेति । वक्ष्यमाणेनेत्यर्थः । अथापि पूर्वविप्रतिषेधाज्ञानात्परिहारान्तरमुक्तमिति भावः ॥ भाष्ये—अलुगिति ॥ तत्रौलूक्यशब्दादणि 'आपत्यस्य' इति यलोपः ॥ नन्वत्रोलूकग्रहणम्, तत्कथमौलूक्यशब्दादस्य प्राप्तिरत आह—सामर्थ्यादिति ॥ औलूक्यशब्दार्थ इति । प्रयोजनवाचि—अर्थान्तं प्रथमान्तम् ॥ उक्तमेव विवृणोति—कृतेति ॥ अनुकरण इति । अनुकरणभूतः शब्द इत्यर्थः ॥

( क्षुद्रकमालवपाठप्रयोजने भाष्यवार्तिकम् )

### अञ्सिद्धिरनुदात्तादेः कोऽर्थः क्षुद्रकमालवात् ।

( भाष्यम् ) 'अनुदात्तादेः' इत्येवाञ्सिद्धः, किमर्थं क्षुद्रकमालवशब्दः खण्डिकादिषु पठ्यते ।

गोत्राश्रयो वुञ्प्राप्तस्तद्बाधनार्थम् ॥

( प्रदीपः ) अञ्सिद्धिरिति । क्षुद्रकस्यापत्यामीति 'जनपदशब्दात्' इति विहितस्य तद्राजस्य लुक् । मालवात्तु वृद्धलक्षणस्य ञ्यङः । ततो द्वन्द्वः, ततः समासान्तोदात्तत्वेनानु-

१ 'गजसहायाभ्याञ्च' इत्यस्य वार्तिकत्वेन छ. पुस्तकादौ पाठो न दृश्यते, तथापि तत्त्वबोधिनीकारेण ग्रामजनेति सूत्रे 'वृत्तिकृता तु वार्तिकस्थ—सहायशब्दोऽपि सूत्रे प्रक्षिप्तः' इत्युक्तम् । तेन वार्तिकमेतदिति ज्ञायते ॥ भाष्यमेवैतत्, न वार्तिकमिति क. छ. पुस्तकयोः । च. झ. पुस्तकयोश्च वार्तिकमेतदिति दृश्यते ॥

२ 'अह्नः खो' इति छ. झ. पाठः ॥

दात्तादित्वमिति भावः । अत्र च 'गोत्रेऽलुगचि' इति ञ्यङो लुक्प्रतिषेधात्' 'आपत्यस्य' इति यलोपः ॥

( उद्द्योतः ) ञ्यङो लुक्प्रतिषेधादिति । क्षुद्रकादिहिताञ्यस्तु नालुक्, अजादौ प्राग्दीव्यतीये विवक्षिते तदव्यवहितस्यैवालुग्विधानादिति भावः ॥

( पाठप्रयोजनखण्डने भाष्यवार्तिकम् )

**गोत्राद्वुञ् न च तद्गोत्रम् ॥**

( भाष्यम् ) **गोत्राद् वुञ् भवतीत्युच्यते, न च क्षुद्रकमालवशब्दो गोत्रम्—न च गोत्रसमुदायो गोत्रग्रहणेन गृह्यते । तद्यथा—जनपदसमुदायो जनपदशब्देन न गृह्यते, काशिकोसलीया इति वुञ् भवति ॥**

( प्रदीपः ) **न चेति** । चशब्दो ह्यर्थे । न हीत्यर्थः ॥ **वुञ् भवतीति** । 'अवृद्धादपि' इत्यनेन ॥

( उद्द्योतः ) समुच्चयाद्यर्थस्यासंभवादाह—ह्यर्थं इति । यद्यपि क्षुद्रकमालवो न लौकिकं गोत्रम् , तथाऽपि तत्त्वारोपो बोध्यः ॥

( प्रयोजनसमर्थकं भाष्यम् )

**तदन्तविधिना प्राप्नोति ॥**

( तदन्तविधिखण्डने भाष्यवार्तिकम् )

**तदन्तान्न स सर्वतः ॥**

( भाष्यम् ) **परिगणितेषु कार्येषु तदन्तविधिः । न चेदं तत्र परिगण्यते ॥**

( प्रदीपः ) **तदन्तादिति** । तदन्ताद्वुञ् प्राप्नोतीति यदुच्यते, तन्न; यस्मात्स तदन्तविधिः सर्वत्र न भवति—उगिद्वर्णग्रहण एव प्रत्ययविधौ तदन्तविधेरिष्टत्वात् ॥

( उद्द्योतः ) **तदन्तादिति** । गोत्रान्तादित्यर्थः ॥ **उगिद्वर्णग्रहण एवेति** । इदं तत्सूत्रस्थ 'रोणी' इत्यादिवार्तिकानामुपलक्षणम् ॥

( तदन्तविधिसाधनेन फलसमर्थने भाष्यवार्तिकम् )

**ज्ञापकं स्यात्तदन्तत्वे**

( भाष्यम् ) **एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति ॥**

( प्रदीपः ) **भवतीहेति** । समूहप्रकरण इत्यर्थः ॥

( तदन्तविधिज्ञापनेन इष्टबोधकभाष्यवार्तिकम् )

**तथा चापिशलेर्विधिः ।**

( भाष्यम् ) **एवञ्च कृत्वाऽऽपिशलेराचार्यस्य विधिरुपपन्नो भवति—धेनुरनञि कमुत्पादयति—धेनूनां समूहो धैनुकम् ॥**

**अनञीति किमर्थम्?**

**अधेनूनां समूहः—आधेनवम् ॥**

( प्रदीपः ) **एवं चेति** । तदन्तविध्यभावे ह्यनञिति प्रतिषेधोऽनर्थकः स्यादित्यर्थः ॥ **आधेनवमिति** । 'तत्पुरुषे तुल्यार्थ–' इति पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वादण् । अन्ये त्वाहुः—उत्सादित्वादञ् । तत्र हि 'बष्कयाऽसे' इति समासनिषेधात्तदन्तविधिरस्ति । 'जङ्गलधेनु' इत्युत्तरपदस्य वा वृद्धिः ॥

( उद्द्योतः ) बष्कयासे इति । बष्कयशब्दोऽसमासेऽञमुत्पादयतीत्यर्थः । न चानञिति निषेधो न कार्यः, तदन्तविधिश्च मास्त्विति वाच्यम् । गौधेनुकमित्याद्यसिद्धेः ॥

( सिद्धान्तख्यापकं भाष्यवार्तिकम् )

**सेनायां नियमार्थं वा**

( भाष्यम् ) **अथवा नियमार्थोऽयमारम्भः—क्षुद्रकमालवशब्दात्सेनायामेव ।**

**क्व मा भूत्?**

**क्षौद्रकमालवकमन्यदिति ॥**

( प्रदीपः ) **नियमार्थं वेति** । वाशब्दः समुच्चये । एवमथवेत्ययमपि । यदा सेनारूपः समूहः, तदाऽञ् प्रत्ययः, अन्यदा तु वुञेवेत्यर्थः ॥

( उद्द्योतः ) ननु नियमार्थत्वे तदन्तविधेरज्ञापितत्वात् 'क्षौद्रकमालवकमन्यत्' इति वुञ् कथमत आह—**वा शब्द इति** । योगविभागेनोभयं सिध्यतीत्यर्थः ॥

( मतान्तरेण सिद्धान्तभाष्यवार्तिकम् )

**यथा बाध्येत वाऽञ् वुञा ॥**

( भाष्यम् ) **अथवा ज्ञापयत्याचार्यः पूर्वोऽपि वुञ् परमञं बाधत इति ॥**

( अनुपपत्तिपरिहारभाष्यम् )

**ननु चोक्तं गोत्राद् वुञ् न च तद्गोत्रमिति ।**

**तदन्तविधिना प्राप्नोति ।**

**ननु चोक्तम्—**

**'तदन्तान्न स सर्वतः' इति ।**

**'ज्ञापकं स्यात्तदन्तत्वे' ।**

**एवं तर्हि ज्ञापयत्याचार्यो भवतीह तदन्तविधिरिति ॥**

**कथं पुनरेतदुभयं शक्यं ज्ञापयितुम्—भवति च तदन्तविधिः, पूर्वश्च वुञ् परमञं बाधत इति ।**

**उभयं ज्ञाप्यते ॥**

( प्रदीपः ) **ननु चेति** । 'ज्ञापकं स्यात्' इत्युक्तमपि चोद्यपरिहारायानूदितम् ॥ **उभयमिति** । अन्यथाऽनुपपत्त्या ज्ञापकत्वं भवति, उभयेन च विना क्षुद्रकमालवादञ्विधानं नोपपद्यत इत्युभयस्यापि ज्ञापकत्वमित्यर्थः ॥

( उद्द्योतः ) **चोद्यपरिहारायेति**—षष्ठीसमासः । अन्यतर-

ज्ञापनेनैव चारितार्थ्यमिति चोद्यम् ॥ उभयस्यापि ज्ञापकत्वमिति । उभयनिरूपितं ज्ञापकत्वमञ्विधानस्येत्यर्थः, 'त्व'रहितपाठस्तु युक्त एव ॥

( ५३६९ सिद्धार्थकं वार्तिकम् ॥ १ ॥ )

॥ * ॥ अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् ॥ * ॥

( भाष्यम् ) अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायामिति वक्तव्यम् । क्षौद्रकमालवी सेना चेत् ।

क मा भूत् ?

क्षौद्रकमालवकमन्यदिति ॥

( प्रदीपः ) अञ्प्रकरण इति । यद्यपि गण एवैतत्पठ्यते तथापि क्षुद्रकमालवादिति योगविभागेनार्थद्वयं ज्ञाप्यम्, ततः सेनासंज्ञायामिति नियमः कर्तव्य इति दर्शयितुं वार्त्तिकारम्भः ॥

( उद्द्योतः ) यद्यपि गणे एवेति । गणे क्षुद्रकमालवेत्येव पाठो वार्तिकबलादिति सांप्रदायिकाः ॥

( ७२७ विधिसूत्रम् ॥ ४ । २ । १ आ. २४ )

## १४७२ पाशादिभ्यो यः ॥ ४।२।४९ ॥

( यप्रत्ययाधिकरणम् )

( गणपठितशब्देभ्यः समूहार्थे प्रत्ययोपपादकभाष्यम् )

पाशतृणधूमवात ।

( ५३७० गणे वातशब्दपाठाक्षेपे वार्तिकम् ॥ १ ॥ )

॥ * ॥ पृथग्वातादर्शनादसमूहः ॥ * ॥

(भाष्यम्) पृथग्वातादर्शनादयुक्तोऽयं वातशब्दस्य सामूहिके पाठः । न हि पृथग्वाता दृश्यन्ते ।

न तर्हीदानीमिदं भवति—वात्येति ?

भवति ॥

( प्रदीपः ) पृथगिति । वातपरमाणूनामनेकत्वेऽपि वातसंज्ञकस्यावयविन एकत्वादनेकत्वाश्रयरूपसमूहानुपपत्तिरित्यर्थः ॥

( उद्द्योतः ) ननु वायुत्वस्यावयवावयविसाधारण्यादनेकत्वमस्त्येवेत्यत आह—वातेति ॥

( ५३७१ गणे वातशब्दपाठोपपादकं वार्तिकम् ॥ २ ॥ )

॥ * ॥ शीघ्रत्वे तु ॥ * ॥

( भाष्यम् ) शीघ्रो वातो वात्या ।

अथ वा पृथग्वाता अपि दृश्यन्ते ।

तद्यथा—पूर्वो वातः, उत्तरो वातः, सर्वतो वातः, वाता वान्तु दिशो दश ॥

( प्रदीपः ) शीघ्रत्वे त्विति । ततश्च 'वाताच्छैघ्र्ये' इति पृथग्वक्तव्यमित्यर्थः ॥ अथ वेति । एकस्यापि वातस्य दिग्भेदनिमित्तभेदप्रतिभासादनेकाश्रयसमूहोपपत्तिः । यथैकाऽपि दिक् सूर्योदयास्तमयाद्युपाधिभेदादनेका व्यपदिश्यते, तथा दश दिश इति लोके व्यवहारः । यद्वा भिन्ना एव वाताः, अवयविनः पृथगुपलम्भात् ॥

( उद्द्योतः ) अनेकेति । पूर्वपश्चिमोत्तरदक्षिणभेदेनेत्यर्थः ॥ तथेति । औपाधिक एव 'दश' इत्यपि व्यवहार इत्यर्थः ॥ भिन्ना एवेति । पूर्वादिवाताः स्वत एव भिन्ना इत्यर्थः ॥ पृथगुपलम्भादिति । 'वात्यासमये' इति शेषः ॥

( ७२८ विधिसूत्रम् ॥ ४ । २ । १ आ. २५ )

## १४७३ खलगोरथात्[३] ॥ ४ । २ । ५० ॥

( ७२९ विधिसूत्रम् ॥ ४ । २ । १ आ. २६ )

## १४७४ इनित्रकट्यचश्च ॥ ४ । २ । ५१ ॥

( ५३७२ यथासङ्ख्यबोधकं वार्तिकम् ॥ १ ॥ )

॥ * ॥ खलादिभ्य इनिः ॥ * ॥

( भाष्यम् ) खलादिभ्य इनिर्वक्तव्यः । खलिनी[४], डाकिनी, कुन्दुमिनी, कुटुम्बिनीति ॥

( ७३० विधिसूत्रम् ॥ ४ । २ । १ आ. २७ )

## १४७५ विषयो देशे ॥ ४ । २ । ५२ ॥

( अर्थाधिकरणम् )

( ५३७३ एकदेशिवार्तिकम् ॥ १ ॥ )

॥ * ॥ विषयाभिधाने जनपदे लुब् बहुवचनविषयात् ॥ * ॥

( भाष्यम् ) विषयाभिधाने जनपदे लुब् बहु-

---

१ अस्य वार्तिकत्वे सन्देहः । क. पुस्तकेऽस्य वार्तिकत्वेन नोल्लेखः । कैयटदर्शनादपि अस्य वार्तिकत्वे सन्दिह्यते चेतः । तत्त्वविद्भिस्तत्त्वमूह्यम् ॥

२ वातशब्दस्य पाशादिगणे पाठेऽपि तस्मात्समूहार्थे प्रत्ययासम्भवात् 'वात्या' इति रूपसिद्ध्यर्थं गणे वातशब्दस्थाने 'वाताच्छैघ्र्ये' इति गणसूत्रं वक्तव्यमित्यर्थः ॥

३ वस्तुतस्त्वेकमेव सूत्रम् । यप्रत्ययानुवृत्तिबोधनार्थम्, इनित्रकट्यच्प्रत्ययानां यथासंख्यबोधनार्थञ्च योगविभागः । योगविभागाभावेऽत्र प्रत्ययोपादानेन पूर्वसूत्रस्थस्य यप्रत्ययस्य निवृत्तिरपि कल्प्येत । ननु इनित्रेतिसूत्रे चकारकरणरूपाज्ज्ञाप्यानाप्रत्ययानुवृत्तिः कल्पयितुं शक्येति चेन्न । इनित्रकट्यच्प्रत्ययानां समुच्चयबोधनेनापि चकारकरणस्य सार्थक्यात्, इष्टार्थस्यासम्भवाच्च । योगविभागे तु खलगोरथादित्यत्र यप्रत्ययमनुवर्त्य सर्वेभ्योऽपि तस्य विधानम्, इनित्रकट्यच्प्रत्ययानाञ्च यथासंख्यबोधनम् । ननु सूत्रे चकारकरणात्समुच्चय एवैतेषांप्रत्ययानां स्यादिति चेन्न, समुच्चये योगविभागवैयर्थ्यापत्तेः । एकयोगे चकारकरणेन व्याख्यानेन च समुच्चयस्य सिद्धेः । तस्मात्—इनित्रकट्यच्प्रत्ययानां यथासङ्ख्यम्, यप्रत्ययश्च सर्वेभ्य इति तात्पर्यम् ।

४ आसन् गणे डाकिनी—डूकिनी, कुटुम्बिनी—कुदुम्बिनी—कुन्दुमिनी, इत्येवं पाठभेदः—छ. च. ज्ञ. पुस्तकेषु दृश्यते ॥

वचनविषयाद्वक्तव्यः । अङ्गानां विषयो देशः—अङ्गाः, वङ्गाः, सुह्माः, पुण्ड्राः ॥

( प्रदीपः ) विषयाभिधान इति । अङ्गानां निवासो जनपद इत्यतः स्वस्वामिभावो न प्रतीयते । अङ्गानां विषय इत्यत्र तु स्वस्वामिभावः प्रतीयते, न तु निवासार्थ[1] इति 'जनपदे लुप्' इति चातुरर्थिकस्य लुब् विधीयमानो विषये न प्राप्नोतीति वचनम् ॥ बहुवचनविषयादिति । बहुवचनान्ताच्छब्दात्परस्य प्रत्ययस्येत्यर्थः ॥

( उद्द्योतः ) ननु चातुरर्थिकलुपाऽपि 'अंगाः' इत्यादि—विषये[2] सेत्स्यति, अर्थाभेदादत आह—अङ्गानामिति । वृत्तौ[3] त्वङ्गत्वेनैवानेकव्यक्तिभानं बोध्यम् ॥

( ५३७४ एकदेशिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ गान्धार्यादिभ्यो वा ॥ * ॥

( भाष्यम् ) गान्धार्यादिभ्यो वेति वक्तव्यम् । गान्धारः, गान्धारयः । वासातः, वसातयः । शैबः, शिबयः ॥

( प्रदीपः ) गान्धार इति । गान्धारस्यापत्यं गान्धारिः । तस्यापत्यानि 'साल्वेयगान्धारिभ्यां च' इत्यञ् । लुक् । ततो गान्धारीणां विषय इत्यण् । ततस्तस्य वा लुप् । 'लुपि युक्तवत्' इति लिङ्गसंख्यातिदेशः ॥

( उद्द्योतः ) 'गांधारिभ्याञ्चेत्यञ्' इत्येतदुत्तरं 'लुक्' ततो गान्धारीणाम्—इत्येव कैयटे पाठः । मध्ये—"तद्राजत्वादञो लुक्, तस्य 'गोत्रेऽलुगचि' इत्यलुक्" इत्यपपाठः । एवम् 'ततस्तस्य वा लुप्' इत्युत्तरम् 'लुपि युक्तवत्' इत्येव पाठः । मध्ये—"ततस्तद्राजान्तत्वादञो लुक्"इत्यपपाठः । एतेन 'एको गोत्रे' इति नियमादयमञ्-यूनि वाच्यः, एवञ्च ततोऽपि परत्वात् 'यूनि लुक्' प्राप्नोति, अवश्यञ्च स एवेष्टव्यः । अन्यथा वैषयिकाणो लुप्यपि प्रत्ययलक्षणेन 'गोत्रेऽलुक्' इत्यस्य दुर्वारतया 'गान्धारयः' इत्यस्यासिद्धिरेव स्यादिति परास्तम्, लुक्शब्देन तस्यैव[4] ग्रहणात् । क्वचित्तु 'चेत्यञ्' ततः 'गान्धारीणाम्' इत्येव पाठः । 'वा लुप्' 'लुपि युक्तवत्' इत्येव[5] च पाठः ॥

( ५२७५ एकदेशिवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ राजन्यादिभ्यो वा वुञ् ॥ * ॥

( भाष्यम् ) राजन्यादिभ्यो वा वुञ् वक्तव्यः । राजन्यकः, राजन्याः । दैवयातवकः, दैवयातवाः ॥

( प्रदीपः ) राजन्या इति । औत्सर्गिकस्याणो विषयाभिधान इति लुप् । वुञ्पक्षे तु तद्विधानसामर्थ्याल्लुबभावः ॥

( ५३७६ एकदेशिवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ बैल्ववनादिभ्यो नित्यम् ॥ * ॥

( भाष्यम् ) बैल्ववनादिभ्यो वुञ् नित्यमिति वक्तव्यम् । बैल्ववनकः, आम्बरीषपुत्रकः, आत्मकामेयकः ।

तत्तर्हीदं बहु वक्तव्यम् ॥

( ५३७७ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ न वाऽभिधेयस्य निवासविषयत्वाद् निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम्? अभिधेयस्य निवासविषयत्वात् । यदभिधेयं स निवासश्च विषयश्च । अभिधेयस्य निवासविषयत्वान्निवासविवक्षायां लुप्, विषयविवक्षायां प्रत्ययो भविष्यति ॥

इदं तर्हि प्रयोजनम्—एतज्ज्ञास्यामि-इह नित्यो विधिः, इह विभाषेति ।

एतदपि नास्ति प्रयोजनम् ।

यावता यदभिधेयं स निवासश्च विषयश्च । अभिधेयस्य निवासविषयत्वात् निवासविवक्षायां लुप्, विषयविवक्षायां प्रत्यय इत्येव ॥

( प्रदीपः ) न वेति । जनपदलक्षणस्याभिधेयस्याङ्गादिसंबन्धिनो निवासरूपत्वं विषयरूपत्वं चास्ति । यद्यपि विषयनिवासयोः परस्परव्यभिचारस्तथाप्यङ्गादीनां य एव स्वो विषयः स एव तेषां निवास इति स्मर्यते । तत्रैकस्योभयरूपत्वात्प्रयोगदर्शनवशादङ्गादौ निवासविवक्षैव, गान्धार्यादिषु राजन्यादिषु तु[6] पर्यायेणोभयविवक्षा, बैल्ववनादिषु विषयविवक्षैवाश्रीयत इति नार्थो लुब्विधिना[7], न तद्विकल्पेन[8], न वुञ्विकल्पेन वा, नापि विकल्पबाधनार्थेन नित्यवचनेनेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—अभिधेयस्य निवासविषयत्वादिति । निवासत्वाद्विषयत्वाच्चेत्यर्थः ॥ नन्वत्र विषयस्यैवाभिधेयत्वादभिधेयस्योभयरूपत्वमसङ्गत आह—जनपदेति ॥ नन्वेवम् 'आङ्गाः'[9] इत्यपि

१ निवासार्थ इति । प्रतीयत इति शेषः ॥

२ अङ्गानां निवासो जनपदः—अङ्गाः, स च देवदत्तस्य विषय इति विषये अङ्गा इति सेत्स्यत्येव, विषयार्थकत्वेऽपि जनपदरूपार्थाभेदाभावात् । तथापि जनपदे लुबित्यनेन 'तस्य निवासः' इति सूत्रेण विहितप्रत्ययस्य लुप् विधीयते न तु 'विषयो देशे' इत्यनेन विहितस्येति लुब्न प्राप्नोतीति भावः ॥

३ वृत्तौ संख्याविशेषानवगमान्निवासार्थस्य विषयार्थस्य च व्यक्तेरङ्गत्वेनैव भानमिति भावः ॥

४ तस्यैव=यूनि लुगित्यस्यैव ॥

५ 'इत्येव' इत्ययम्पाठः छ. पुस्तके न दृश्यते ॥

६ राजन्यादिषु च पर्यायेण' इति च. झ. पुस्तकयोः ॥

७ लुब्विधिनेति—विषयाभिधाने जनपदे लुबित्यादि-वार्तिकेन नार्थ इति भावः ॥

८ तद्विकल्पेनेत्यादि । गान्धार्यादिभ्यो वेत्यादिवार्तिकैरपि नार्थ इति भावः ॥

९ 'आङ्गाः' इत्येतदपि अङ्गानां विषय इत्यर्थे स्यादित्यर्थः ॥

कदाचित्स्यादत आह—तत्रैकस्येति । भाष्येऽपि—'निवासविवक्षायाम्' इत्यादिना विवक्षानैयत्यमेव प्रतिपाद्यत इति बोध्यम् ॥

( ७३१ विधिसूत्रम् ॥ ४ । २ । १ आ. २८ )

## १४७८ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ॥ ४ । २ । ५५ ॥

( अर्थाधिकरणम् )

( ५३७८ सिद्धान्तसाधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानम् ॥ * ॥**

( भाष्यम् ) छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थ उपसंख्यानं कर्तव्यम् । त्रिष्टुबेव त्रैष्टुभम्, अनुष्टुबेवानुष्टुभम्, जगत्येव जागतम् ॥

( प्रदीपः ) छन्दस इति । छन्दःशब्देनाक्षरेयत्ताविशेषवाचिनो गायत्र्यादेः शब्दस्य ग्रहणम् ॥ नपुंसकादिति । नपुंसकार्थाभिधायिन इत्यर्थः । नपुंसकार्थाभिधायित्वं च त्रिष्टुबादीनां स्वार्थिकाण्प्रत्ययान्तानामेवेति नपुंसके स्वार्थ इत्युक्तं भवति ॥

( उद्योतः ) ननु त्रिष्टुबादीनां नपुंसकत्वाभावात्, नपुंसकात्[1] इत्यसंगतमत आह—नपुंसकार्थेति ॥ ननु केवलं त्रिष्टुबादीनां तत्त्वमपि नास्तीत्यत आह—नपुंसकेति ॥ फलितमाह—नपुंसके स्वार्थ इति । कुंटी-कुटीर[2] इतिवत्स्वभावाद्विन्नलिङ्गत्वम् ॥

( ७३२ विधिसूत्रम् ॥ ४ । २ । १ आ. २९ )

## १४८२ तदधीते तद्वेद ॥ ४।२।५९॥

( अर्थाधिकरणम् )

( अर्थद्वयकथनप्रयोजनभाष्यम् )

**किमर्थमिमावुभावप्यर्थौ निर्दिश्येते, न योऽधीते वेत्त्यप्यसौ, यस्तु वेत्त्यधीतेऽप्यसौ ।**

**नैतयोरावश्यकः समावेशः ।**

**भवति हि कश्चित्संपाठं पठति, न च वेत्ति; कश्चिच्च वेत्ति, न च संपाठं पठति ॥**

( प्रदीपः ) न य इति । यो हि यं ग्रन्थमधीते स तं स्वरूपतोऽवश्यं वेत्ति । यश्च स्वरूपतो वेत्ति सोऽवश्यमधीत इति भावः ॥ नैतयोरिति । अर्थावबोधो वेदनमभिप्रेतम्, न तु स्वरूपमात्रवेदनम् । तत्र परस्परव्यभिचारदर्शनादुभयोपादाने इत्यर्थः ॥ संपाठमिति । अर्थनिरपेक्षं स्वाध्यायं पठतीत्यर्थः ॥

( उद्योतः ) यो हीति । वेदनम्—अधीयमानग्रन्थविषयमेव—इति चोद्याभिप्राय इति भावः ॥ भाष्ये—न य इत्यत्र नञि काकुः ॥ यश्चेति । अध्ययनं विना स्वरूपतो वेदनासंभवादिति भावः ॥ सम्पाठशब्दः कर्मणि घञन्त इत्याशयेनाह—स्वाध्यायमिति । स्वाध्यायः—वेदः ॥

( ७३३ विधिसूत्रम् ॥ ४ । २ । १ आ. ३० )

## १४८३ ऋतूक्थादिसूत्रान्ताट्ठक् ॥ ४ । २ । ६० ॥

( ठकोऽधिकरणम् )

( सूत्रार्थबोधकभाष्यम् )

**उक्थादीत्युच्यते, कानि पुनरुक्थानि ?**

**सामानि । यद्येवं सामगमात्रे औक्थिक इति प्राप्नोति ।**

**नैष दोषः ।**

**तादर्थ्यात्ताच्छब्द्यं भविष्यति । उक्थार्थमुक्थम् ।**

**इह—उक्थान्यधीते-औक्थिकः, यज्ञमधीते-याज्ञिकः ।**

**य इदानीमौक्थिक्यं याज्ञिक्यं चाधीते, कथं तत्र भवितव्यम् ?**

**औक्थिकः, याज्ञिक इत्येव भवितव्यम् ।**

**कथम् ?**

( ५३७९ एकदेशिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तस्येदम्प्रत्ययाल्लुक्[3] ॥ * ॥**

( भाष्यम् ) तस्येदम्प्रत्ययाल्लुग्वक्तव्यः, तस्येदं प्रत्ययस्य च ॥

**स तर्हि वक्तव्यः ।**

**न वक्तव्यः ।**

**इहास्माभिस्त्रैशब्द्यं साध्यम्—उक्थान्यधीते, औक्थिक्यमधीते, औक्थिक इति । तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति-अविरविकन्यायेन ।**

**तद्यथा—अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवति-आविकमिति । एवमुक्थान्यधीत इति विगृह्य औक्थिक इति भविष्यति, औक्थिक्यमिति विगृह्य वाक्यमेव ॥**

( प्रदीपः ) कानीति । उक्थशब्दो येषु सामसु रूढस्तान्यधीयाने प्रत्ययो नेष्यते । यदधीयाने प्रत्यय इष्यते, तत्रोक्थशब्दो न रूढ इति प्रश्नः ॥ उक्थार्थमिति । सामलक्षणं प्रातिशाख्यं शास्त्रमित्यर्थः । मुख्यार्थाभिधायिनस्तूक्थशब्दात्प्रत्ययो नेष्यते । तत्र वाक्यमेव भवति-उक्थान्यधीते वेद वेति ॥ इहेति । उक्थशब्देन गौण्या वृत्त्या सामलक्षणमौक्थिक्य-

---

[1] नपुंसकात्स्वार्थ इति भाष्यस्य 'नपुंसके स्वार्थे' इत्यर्थ इति भावः ॥

[2] ननु नपुंसकार्थाभिधायिनां त्रिष्टुबादिशब्दानां कुतो न नपुंसकत्वमत आह—कुटी कुटीर इति ॥

[3] षष्ठ्यर्थे पञ्चमी बोध्या ॥

मुच्यते ॥ **य इदानीमिति** । औक्थिकानामाम्नाय इतीदमर्थे 'छन्दोगौक्थिक' इति ञ्यः ॥ **तस्येदंप्रत्ययादिति** । अध्येतृवेदित्रोरुत्पन्नस्याणो लुक्, आम्नाये विहितस्य ञ्यस्य चेत्यर्थः ॥

**( उद्द्योतः ) नेष्यत इति** । अनभिधानादिति भावः ॥ भाष्ये—**सामगमात्रे**-इत्यस्य प्रातिशाख्यानध्येतरि सामगे इत्यर्थः ॥ **यदधीयान इति** । प्रातिशाख्यमधीयाने इत्यर्थः । असामगेऽपीति शेषः ॥ **सामलक्षणमिति**—षष्ठीतत्पुरुषः ॥ भाष्ये—**य इदानीमिति** । औक्थिक्यमधीते इति विग्रहं करोति ॥ **तत्र**—तादृशविग्रहे, कथं भवितव्यमित्यर्थः ॥ **औक्थिकानामिति** । **औक्थिकाः**—प्रातिशाख्यविदः, तेषामाम्नायः—प्रातिशाख्यमेव ॥ भाष्ये—**तस्येदंप्रत्ययादिति** । वार्तिके षष्ठ्यर्थे पञ्चमी ॥ **तस्ये**त्यस्याध्येत्राद्यर्थकप्रत्ययस्येत्यर्थः, तदाह—**अध्येत्रित्यादि** ॥ **एकेन विग्रह इति** । विग्रह एवेत्यर्थः ॥ **अपरस्मादुत्पत्तिरिति** । उत्पत्तिरपीत्यर्थः ॥ **अविकशब्दादिति** । तस्मादेवेत्यर्थः ॥ **औक्थिक इति** । इत्यपि भविष्यति, वाक्यञ्चेत्यर्थः ॥ तदाह—**वाक्यमेवेति** । 'उक्थान्यधीत इति विगृह्य औक्थिक इत्यपि भविष्यति' इति पाठः ॥

( इकग्विधायकं भाष्यम् )

## विद्यालक्षणकल्पसूत्रान्तादकल्पादेरिकक् स्मृतः ॥

**विद्या—वायसविद्यिकः, सार्पविद्यिकः । विद्या । लक्षणः—गौलक्षणिकः, आश्वलक्षणिकः । लक्षण । कल्पः—पाराशरकल्पिकः । पारकल्पिकः । कल्प । सूत्रः—वार्तिकसूत्रिकः, सांग्रहसूत्रिकः ॥**

**( प्रदीपः ) विद्येति । इकगिति**—ठगित्यर्थः । अकल्पादेरित्येतत्—आनन्तर्यात् सूत्रान्तस्यैव कल्पादेर्निषेधं करोति । तथा च भाष्ये काल्पसूत्र इति प्रत्युदाहृतम् । **अन्ये तु**—सर्वेषामेव निषेधमिच्छन्तः काल्पविद्य इत्यादि भाष्यमित्याहुः । तत्तु प्रथमातिक्रमे कारणादर्शनाद्भाष्यविरुद्धमिति लक्ष्यते ॥

**( उद्द्योतः )** अत्र शास्त्रे इककोऽभावात्, स्त्रियां ङीबभावापत्तेः, 'आनुसुकः' इत्यसिद्धेश्चाह—**ठगितीति** ॥ ननु 'अकल्पादेः' इत्यस्य प्रथमोपस्थितविद्यान्ताद्यपहाय सूत्रान्तोदाहरणदाने बीजाभावोऽत आह—**अकल्पादेरित्येतदिति** ॥ **प्रथमातिक्रमे इति** ।—'विद्या चानङ्ग' इत्यत्र 'त्रिपूर्वापि' इत्यनुक्त्या विद्यायामकल्पादेरित्यस्यासम्बन्धबोधनादिति वक्तुं युक्तम् ॥

( पदकृत्यभाष्यम् )

**अकल्पादेरिति किमर्थम् ?**

**काल्पसूत्रः ।**

( ईकक्संकोचकभाष्यम् )

## विद्याचानङ्गक्षत्रधर्मत्रिपूर्वा ।

**विद्याचानङ्गक्षत्रधर्मत्रिपूर्वेति वक्तव्यम् । आङ्गविद्यः, क्षात्रविद्यः, धार्मविद्यः, त्रैविद्यः ।**

**( प्रदीपः ) त्रैविद्य इति** । त्र्यवयवा विद्या त्रिविद्या, तामधीत इति प्रत्ययः कार्यः । तिस्रो विद्या अधीत इति क्रियमाणे 'द्विगोर्लुक्' इति लुक्प्रसङ्गः ॥

( ठग्विधायकं भाष्यम् )

## आख्यानाख्यायिकेतिहासपुराणेभ्यश्च ठञ्वक्तव्यः ।

**यावक्रीतिकः, प्रैयङ्गविकः, यायातिकः, आख्यान ॥**

**आख्यायिका—वासवदत्तिकः, सौमनोत्तरिकः ॥**

**ऐतिहासिकः ॥ पौराणिकः ॥**

(प्रदीपः) **आख्यानेति** । द्वयोरर्थग्रहणम्, द्वयोः स्वरूपग्रहणम् ॥ **यावक्रीतिक इति** । यावक्रीताधिकारेण कृतमाख्यानमुपचाराद् यावक्रीतशब्देनोच्यते । तदधीते वेद वा यावक्रीतिकः । एवं प्रैयङ्गवाधिकारकृताख्यानाध्यायी प्रैयङ्गविकः ॥ **वासवदत्तिक इति** । वासवदत्तामधिकृत्य कृताऽऽख्यायिका अधिकृत्य कृते ग्रन्थ इत्यत्रार्थे वृद्धाच्छः । तस्य 'लुबाख्यायिकाभ्यो बहुलम्' इति लुप् । ततोऽनेन ठक् । एवं सौमनोत्तरिक इति ॥ **ऐतिहासिक इति** । इतिहशब्द उपदेशपारम्पर्ये वर्तते । इति हास्यतेऽस्मिन्निति-इतिहासः 'हलश्च' इति घञ् । मयूरव्यंसकादित्वात्समासस्ततष्ठक् ॥

**( उद्द्योतः ) द्वयोरर्थेति** । व्याख्यानात्, तथैव भाष्ये उदाहरणाच्चेति भावः ॥ ननु यावक्रीतादयो नाख्याननामानीत्यत आह—**यावक्रीतेति** ॥ **उपचारादिति** । यवक्रीतापत्यत्वारोपादित्यर्थः । तदधिकारकृतत्वेन बोधे तु 'अधिकृत्य कृते' इत्यनेन छः स्यादिति बोध्यम् ॥ **लुबिति** । वासवदत्ताधिकारकृतत्वेन बोधादिति भावः ॥ **आख्यायिकाभ्य इति** । आख्यायिका अभिधातुं कृतस्य प्रत्ययस्य लुबित्यर्थः । बहुलग्रहणादाख्यानेऽपि लुबित्यन्ये ॥ **इति हास्यत इति** । उपदेशपारम्पर्येणास्यते—निश्चयबुद्ध्या स्थीयतेऽस्मिन्नित्यर्थः । उपदेशपरम्परया आख्यानादीन्यस्मिन्ते स्थाप्यन्तेऽत्रेत्यर्थं **कश्चित्** ॥

( लुग्विधिभाष्यम् )

## सर्वसादेर्द्विगोश्च लः ।

**सर्वसादेर्द्विगोश्च लो वक्तव्यः । सर्ववेदः, सर्वतन्त्रः । सवार्तिकः, ससंग्रहः । पञ्चकल्पः, द्वितन्त्रः, द्विवेदः ॥**

(प्रदीपः) **सर्वसादेरिति** । सशब्दोऽर्थवान् गृह्यत इति सर्वशब्दः पृथङ्निर्दिष्टः । द्विगोश्चेत्यनेन 'द्विगोर्लुक्'इति स्मारितम् ॥ **सर्ववेद इति** । सर्ववेदानधीत इत्यणो लुक् ॥ **सवार्तिक इति** । वृत्तौ साधु वार्तिकम् । 'कथादिभ्यष्ठक्'इति ठक् । वार्तिकान्तमधीत इति—अन्तवचने सहस्याव्ययीभावः । 'अव्ययीभावे चाकाले' इति सभावः । ततोऽणो लुक् ॥ **पञ्चकल्प इति** । पञ्चकल्पानधीत इति द्विगुः । ततः 'विद्यालक्षण' इति ठक् । तस्य लुक् ॥

१ अयं पाठः क. छ. पुस्तकयोर्न दृश्यते ॥

(उद्योतः) ननु 'सादेः' इत्येव सिद्धे सर्वग्रहणं व्यर्थमत आह—सशब्द इति ॥ ततोऽणो लुगिति । तत्र सत्यव्ययीभावार्थस्योपसर्जनत्वान्नाव्ययत्वमिति बोध्यम् ॥

(संग्रहभाष्यम्)

**अनुसूर्लक्ष्यलक्षणे**
**सर्वसादेर्द्विगोश्च लः ।**
**इकन्पदोत्तरपदात्**
**शतषष्टेः षिकन्पथः ॥**

(प्रदीपः) **अनुसूरिति** । अनुसूशब्दो ग्रन्थविशेषवाची, स ठकमुत्पादयति । लक्ष्यलक्षणशब्दौ चेत्यर्थः । अनुसूमधीत इति ठक् । 'इसुसुक्तान्तात्' इति कादेशः, 'केऽणः' इति ह्रस्वो वृद्धिश्च । तत आनुसुक इति भवति । लक्ष्यमधीते-लाक्षिकः । लक्षणमधीते लाक्षणिकः ॥ **इकन्निति** । पूर्वपदमधीते-पूर्वपदिकः । शतपथमधीते-शतपथिकः, शतपथिकी । षष्टिपथिकः, षष्टिपथिकी ॥

(उद्योतः) परस्परमनन्वयादाह—**अनुसूशब्द** इत्यादि ॥ **अनुसूमिति** । 'अनुसूः' इत्यव्युत्पन्नमिति यणभावः । क्वचित्तु 'अनुसूम्' इति पाठः । तदाऽनुपूर्वात्सूतेः क्विबिति बोध्यम् ॥ **लाक्षिक इति**—यकारसहितपाठः ॥ षिकनः षित्वं ङीषर्थम्, तदाह—**षष्टिपथिकीति** ॥

(७३४ विधिसूत्रम् ॥ ४ । २ । १ आ. ३१)

## १४८५ अनुब्राह्मणादिनिः ॥ ४ । २ । ६२ ॥

(इनिप्रत्ययाधिकरणम्)

(प्रत्याख्यानभाष्यम्)

**अयं योगः शक्योऽवक्तुम् ।**

**कथमनुब्राह्मणी, अनुब्राह्मणिनौ, अनुब्राह्मणिन इति ?**

**इनिनैतन्मत्वर्थीयेन सिद्धम्[1] ॥**

(प्रदीपः) **अयमिति** । अध्येतृवेदित्रोरनभिधानादण्न भविष्यतीति तद्बाधनार्थमपि सूत्रं न कर्तव्यम् ॥

(७३५ विधिसूत्रम् ॥ ४ । २ । १ आ. ३२)

## १४८६ वसन्तादिभ्यष्ठक् ॥ ४।२।६३ ॥

(सूत्राक्षेपभाष्यम्)

**अयुक्तोऽयं निर्देशः । अधीते-वेदेति वर्तते, न च वसन्तो नामाध्ययनमस्ति ॥**

१ क्वचित् च. पुस्तके 'सिद्धम्' इत्यतः परं 'अनुब्राह्मणमस्यास्तीत्यनुब्राह्मणी' इत्यधिकः पाठो दृश्यते ॥

(समाधानभाष्यम्)

**नैष दोषः ।**

**साहचर्यात्ताच्छब्द्यं भविष्यति । वसन्तसहचरितमध्ययनम्—वसन्तोऽध्ययनमिति ॥**

(प्रदीपः) **वसन्तसहचरितमिति** । यत्र वसन्तो वर्ण्यते, यद्वा वसन्तेऽधीयते तत्साहचर्यात्ताच्छब्द्यं लभते ॥

(७३६ विधिसूत्रम् ॥ ४ । २ । १ आ. ३३)

## १४८५ प्रोक्ताल्लुक् ॥ ४ । २ । ६४ ॥

(लुकोऽधिकरणम्)

(सूत्रस्वरूपसाधकं भाष्यम्)

**अयुक्तोऽयं निर्देशः । प्रौक्तादिति भवितव्यम् । सौत्रो निर्देशः ॥**

(प्रदीपः) **अयुक्त इति** । अर्थस्य प्रोक्तत्वादर्थेन च प्रत्ययस्य पौर्वापर्यासंभवादिति भावः ॥ **सौत्र इति** । प्रोक्तशब्दस्येह स्वरितत्वं प्रतिज्ञातम्, तेन तदधिकारविहितप्रत्ययग्रहणमित्यर्थः ॥

(उद्योतः) किमत्रायुक्तमत आह—**अर्थस्येति** ॥ प्रोक्तेऽर्थे विहितादित्यर्थेऽपि—इदमसाध्वित्याह—भाष्ये—**प्रौक्तादिति** ॥ भाष्ये—**सौत्र इति** । सौत्रत्वात्प्रत्ययानुत्पत्तिरित्यर्थः । सौत्रत्वाद्वृद्ध्यभाव इत्यन्ये ॥ **स्वरितत्वमिति** । अस्य क उपयोगः, अधिकारविहितेत्येतत्पर्यन्तं व्याख्यानस्य च क उपयोग इति **चिन्त्यम्** ॥

(७३७ विधिसूत्रम् ॥ ४ । २ । १ आ. ३४)

## १४८६ सूत्राच्च कोपधात् ॥ ४।२।६५ ॥

(सूत्रपूरकभाष्यम्)

**संख्याप्रकृतेरिति वक्तव्यम् । इह मा भूत्—माहावार्तिकः, चान्दनगन्धिकः, कालापकः ॥**

(प्रदीपः) **संख्याप्रकृतेरिति** । अष्ट अध्यायाः परिमाणमस्य । 'संख्याया अतिशदन्तायाः कन्' इति कन्प्रत्ययः, ततोऽष्टकमधीयत इति अणो लुकि कृतेऽष्टकाः पणिनीया इत्युदाहरणम् ॥

(उद्योतः) भाष्ये—**कालापक इति** । कलापिना प्रोक्तमधीयते कालापास्तेषामाम्नायः कालापकम् । वुञ् । अत्राणो लुकि वुञ्निबन्धनमाद्युदात्तत्वं स्यात्, स्त्रियां ङीप् च न स्यादिति भावः ॥ उदाहरणं भाष्ये नोक्तमिति स्वयमाह—**अष्टेति** ॥

(७३८ विधिसूत्रम् ॥ ४ । २ । १ आ. ३५)

## १४८७ छन्दोब्राह्मणानि च तद्विषयाणि ॥ ४ । २ । ६६ ॥

(छन्दोब्राह्मणानां तद्विषयाधिकरणम्)

(इष्टसिद्धिविषयकजिज्ञासाभाष्यम्)

**किमर्थमिदमुच्यते ?**

(प्रदीपः) इह प्रोक्तप्रत्ययान्तस्यानेकः प्रकारो दृश्यते स्वातन्त्र्यम्, उपाध्यन्तरयोगः, वाक्यम्, अध्येतृवेदित्रोः प्रत्ययश्च । स्वातन्त्र्यं तावद् यथा–पाणिनिना प्रोक्तं व्याकरणं पाणिनीयमिति । उपाध्यन्तरयोगः–महत्पाणिनीयमिति । वाक्यम्–पाणिनीयमधीयत इति । अध्येतृवेदित्रोः प्रत्ययः—पाणिनीया इति । छन्दोब्राह्मणवाचिनां तु प्रोक्तप्रत्ययान्तानामध्येतृवेदितृप्रत्ययविषयतैवेष्यते, न तु स्वातन्त्र्यादि–इति तद्विषयार्थमिदं सूत्रम् । क्रियमाणेऽपि चैतस्मिन् 'अधीते' 'वेद' इत्यधिकारादध्येतृवेदितृविषयस्य वाक्यस्यैव निवृत्तिः सिध्यति, न तु स्वातन्त्र्यादेरिति मत्वा पृच्छति—**किमर्थमिति** ॥

(उद्द्योतः) इदं सूत्रं नियमार्थमित्याह—**इह प्रोक्तेति** ॥ **तद्विषयार्थमिति** । अध्येतृवेदितृप्रत्ययविषयत्वार्थमित्यर्थः ॥ नन्वेवं 'किमर्थम्' इति प्रश्नोऽनुपपन्नोऽत आह—**क्रियमाणेऽपीति** । एवं यावदिष्टासिद्ध्या प्रश्न इति भावः ॥

(५३८० सूत्रविषयप्रदर्शकं वार्तिकम् ॥ १ ॥)

**॥ * ॥ अन्यत्राभिधेयस्यानित्यत्वात् छन्दोब्राह्मणानां तद्विषयवचनम् ॥ * ॥**

**(भाष्यम्) अन्यत्राभिधेयमनित्यं भवति ।**

**पाणिनीयमिति वा भवति, पाणिनीया इति वा ।**

**अन्यत्राभिधेयस्यानित्यत्वाच्छन्दोब्राह्मणानामप्यनित्यता प्राप्नोति । इष्यते च तद्विषयतैव स्यादिति ।**

**तच्चान्तरेण यत्नं न सिध्यतीति च्छन्दोब्राह्मणानां तद्विषयवचनम् ॥**

(प्रदीपः) **अन्यत्रेति** । पाणिनीयादौ ॥ **अभिधेयस्येति** । प्रोक्तलक्षणस्यार्थस्य ॥ **अनित्यत्वादिति** । नानाविषयत्वादध्येतृवेदित्रोर्नित्यं विशेषणत्वेनाप्रयोगात्–अनियतत्वादित्यर्थः ॥

(उद्द्योतः) ननु प्रोक्ते प्रागभावाप्रतियोगित्वे सति ध्वंसाप्रतियोगित्वरूपं नित्यत्वं नास्त्येवेत्यत आह—**नानेति** ॥ **नित्यमिति** । नित्यमध्येतृवेदित्रर्थनिरूपितविशेषणत्वेन प्रोक्तार्थस्याप्रयोगादित्यर्थः ॥ भाष्ये—**पाणिनीया इति वेति** । वा शब्दश्चार्थे ॥

(प्रयोजनान्तरावतारकं भाष्यम्)

**एवमर्थमिदमुच्यते ?**

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ?**

(५३८१ पूर्वोक्तविषयसंग्रहाभावप्रदर्शकं वार्तिकम् ॥ २ ॥)

**॥ * ॥ तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥ * ॥**

**(भाष्यम्) तत्र यथाऽधिकारं तद्विषयता प्राप्नोति ।**

**अधीते–वेदेति वर्तते, तेनाध्येतृवेदित्रोरेव तद्विषयता स्यात्; येऽन्य उपचारास्तत्र न स्यात् ।**

**यथेह भवति—पाणिनीयं महत्सुविहितमिति, एवमिहापि स्यात्–कठं महत्सुविहितमिति ॥**

(प्रदीपः) **तत्र यथाऽधिकारमिति** । अधिकारमनतिक्रम्येत्यर्थः । अधीते–वेदेत्यधिकाराद्ध्येतृवेदित्रोरेव विवक्षितयोस्तद्विषयता विधीयमाना तद्विषयमेव वाक्यं निवर्तयेत्, न तु क्रियान्तरविषयमित्यर्थः ॥ **येऽन्य उपचारा इति** । व्यवहारा इत्यर्थः ॥

(उद्द्योतः) नन्वध्येतृवेदितृविषयताया एव स्वीकारादध्येतृवेदित्रोरेव तद्विषयता स्यादिति कथम्? अत आह—**तद्विषयमेव वाक्यमिति** ॥ **क्रियान्तरमिति** । श्रवणादीत्यर्थः ॥ भाष्ये—**येऽन्ये उपचारास्तत्र न स्यादिति** । अन्यथा व्यवहारे प्रोक्तप्रत्ययान्तप्रयोगनिवृत्तिर्न स्यादित्यर्थः । तद्विषयता हि तन्निवृत्त्यर्थापीति भावः ॥

(५३८२ सिद्धान्तवार्तिकम् ॥ ३ ॥)

**॥ * ॥ सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् ॥ * ॥**

**(भाष्यम्) सिद्धमेतत् ।**

**कथम् ?**

**प्रोक्ताधिकार एव तद्विषयता वक्तव्या । "तेन प्रोक्तम्" (४।३।१०१) 'छन्दोब्राह्मणान्यध्येतृवेदित्रोः' इति ॥**

**तत्तर्ह्यध्येतृवेदितृग्रहणं कर्तव्यम् ।**

**ननु चेहापि क्रियते ।**

**परार्थमेतद्भवति—तदधीते–तद्वेदेति ।**

**एवं तर्हि—यावदिह–च्छन्दोब्राह्मणग्रहणम्, तावत्तत्राध्येतृवेदितृग्रहणम् ।**

**ननु च तत्रापि क्रियते ।**

**परार्थं तद्भविष्यति—"पुराणप्रोक्तेषु ब्राह्मणकल्पेषु" (४।३।१०५) "शौनकादिभ्यश्छन्दसि" (१०६) इति ।**

**इह वा छन्दोब्राह्मणग्रहणं क्रियते, तत्र वाऽध्येतृवेदितृग्रहणम्, को न्वत्र विशेषः ॥**

(प्रदीपः) **सिद्धं त्विति** । अध्येतृवेदित्रोरेव विवक्षितयोश्छन्दोब्राह्मणेषु प्रोक्तप्रत्यय उत्पद्यते, नान्यत्र; इत्येवं वक्तव्यमित्यर्थः ॥ **परार्थं तदिति** । 'छन्दोब्राह्मणान्यध्येतृवेदित्रोः' इति परिभाषां कृत्वा 'पुराणप्रोक्ते कल्पे च' इति करिष्यते । चकारेण ब्राह्मणग्रहणमनुकृष्यते । ततः 'शौनकादिभ्यः' इति । ततश्छन्दोग्रहणमनुवर्तिष्यत इति भावः ॥

१ ननु चेहापीति । छन्दोब्राह्मणानीति सूत्रे 'तद्विषयाणि' इत्येतदध्येतृवेदित्रर्थबोधकमित्यर्थः ॥

( उद्योतः ) छन्दोब्राह्मणेष्विति । अभिधेयेष्वित्यर्थः । अध्येत्राद्यर्थे विवक्षित एव छन्दोब्राह्मणार्थकप्रोक्तप्रत्ययान्तानि प्रयोक्तव्यानीति भाष्यस्थवचनाक्षरार्थः ॥ भाष्ये—ननु चेहापीति । तदर्थकं 'तद्विषयाणि' इत्येतदित्यर्थः ॥ परार्थमिति । यत्परार्थं कृतम् 'तदधीते तद्वेद' इति, तदनुवृत्त्यैव सामान्येन नियमार्थतायाः 'अध्येतृवेदित्रोः' इत्यनेन विनाऽपि सिद्धत्वादिति भावः ॥ एवन्तर्हीति । न्यासद्वयेऽपि समता-इत्यर्थः ॥ ननु चेति । छन्दोब्राह्मणग्रहणप्रयुक्तं गौरवं तुल्यमित्यर्थः ॥ परार्थमिति । 'पुराण' इत्यादिसूत्रद्वये तदकरणाल्लाघवमित्यर्थः । इष्टानुवृत्तिज्ञानं व्याख्यानात्सुलभमिति भावः ॥ को न्वत्रेति । अत्रापि करणे लक्ष्यानुरोधेन सामान्यापेक्षनियमस्य व्याख्यातुं शक्यत्वादिति भावः । एवं सूत्रन्यासः स्थापितः, तद्विषयताबलादेव च सुबुत्पत्तेः पूर्वमीदृशे विषये प्रत्यय इति 'शैलालिनो नटाः' इत्यादौ न नलोपः ॥

( ५३८३ अनिष्टनिरासे वार्तिकम् ॥ ४ ॥ )

**॥*॥ याज्ञवल्क्यादिभ्यः प्रतिषेधः ॥*॥**

( भाष्यम् ) **याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्कानि ब्राह्मणानि, सौलभानि ।**

**किं प्रोक्ताधिकारे तद्विषयता क्रियत इत्यतो याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः ?**

**नेत्याह ।**

**सर्वथा याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः ॥**

( प्रदीपः ) याज्ञवल्कानीति । यज्ञवल्कस्यापत्यमिति गर्गादित्वाद्यञ् । तदन्तात्प्रोक्तार्थे 'कण्वादिभ्यो गोत्रे' इत्यण् । अत्र तद्विषयता न भवति ॥ सौलभानीति । सौलभेन प्रोक्तानीति 'तेन प्रोक्तम्' इत्यण् 'सिद्धं तु' इत्यस्यानन्तरं प्रतिषेधवचनात् ॥ तन्निमित्तत्वं प्रतिषेधवचनस्याशङ्क्य पृच्छति—किं प्रोक्ताधिकार इति ॥

( ५३८४ पूर्ववार्तिकप्रत्याख्याने वार्तिकम् ॥ ५ ॥ )

**॥ * ॥ इनिर्वा प्रोक्ते तद्विषयः ॥ * ॥**

( भाष्यम् ) **अथवा इनिः प्रोक्ते तद्विषयो भवतीति वक्तव्यम् ॥**

( प्रदीपः ) इनिर्वेति । इनिशब्देन णिनिरपि गृह्यते, 'कर्मन्दकृशाश्वादिनिः' इत्ययमिनिरपि । तेनेनेरेव प्रोक्तार्थे विहितस्य तद्विषयता भविष्यति, न त्वण इत्यर्थः ॥

( उद्योतः ) ननु 'इनिर्वा' इत्युक्ते 'काश्यपिनः' इत्यादौ णिनिविषये तद्विषयता न स्यादत आह—इनिशब्देनेति ॥ न त्वण इति । एवञ्च याज्ञवल्क्यादिभ्यः प्रतिषेधो न वक्तव्य इति भावः ॥

( वार्तिकाक्षेपभाष्यम् )

**यदि—इनिः प्रोक्ते तद्विषयो भवतीत्युच्यते, एवमपि पैङ्गी कल्पः, अत्रापि प्राप्नोति ॥**

( प्रदीपः ) पैङ्गीति । पिङ्गेन प्रोक्तः कल्प इति णिनिः । अत्रापि छन्दोब्राह्मणग्रहणेऽक्रियमाणे तद्विषयताप्रसङ्गः ॥

(उद्योतः) ननु छन्दस्त्वाद्यभावात्कथम् 'पैङ्गी कल्पः' इत्यत्र तद्विषयताप्राप्तिः ? अत आह—छन्दोब्राह्मणेति । तदभावादियमापत्तिरिति भावः ॥

( ५३८५ समाधानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् ॥ * ॥**

( भाष्यम् ) **काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम् ।**

**काश्यपकौशिकाभ्यामेवेनिः कल्पे तद्विषयो भवति, नान्येभ्य इति ॥**

( प्रदीपः ) काश्यपकौशिकग्रहणं चेति । 'इनिरध्येतृवेदित्रोः' इति परिभाषां कृत्वा 'काश्यपकौशिकाभ्यामृषिभ्यां कल्पे' इति सूत्रं नियमार्थं कर्तव्यमित्यर्थः ॥

( उद्योतः ) ननु तत् 'णिनि' विधायकम्, न तु तत्र 'कल्पे' इत्यस्ति; तत्कथं नियमः ? अत आह—इनिरध्येत्रिति ॥ परिभाषामिति । नियमकारित्वात्तत्त्वम् ॥ अण्नेष्यत इति । इदं चात्र भाष्ये, 'तित्तिरिवर' इति सूत्रे च भाष्ये प्रत्ययान्तानुपन्यासाज्ज्ञायते ॥

( आक्षेपभाष्यम् )

**एवमपि छणादीनां तद्विषयता न प्राप्नोति—तैत्तिरीयाः, वारतन्तवीयाः ॥**

( प्रदीपः ) एवमपीति । इनेरेकस्योपादानात्तित्तिर्यादिसूत्रविहितानां छणादीनां तद्विषयता न स्यात् ॥

( समाधानभाष्यम् )

**यदि पुनश्छणादयः प्रोक्ते तद्विषया भवन्तीत्युच्येत ॥**

( प्रत्याक्षेपभाष्यम् )

**एवमपि पैङ्गीकल्पः, अत्रापि प्राप्नोति ॥**

( प्रत्याक्षेपे समाधानभाष्यम् )

**काश्यपकौशिकग्रहणं च कल्पे नियमार्थमित्येव ॥**

( पुनः प्रत्याक्षेपभाष्यम् )

**एवमप्यौत्सर्गिकाणां तद्विषयता न प्राप्नोति—कौडाः, काङ्कताः, मौदाः, पैप्पलादाः ॥**

---

१ सिद्धन्तु प्रोक्ताधिकारे तद्विषयवचनादिति वार्तिकस्थवचनाक्षरार्थ इति भावः ॥

२ ननु चेहापीतिभाष्यं व्याकरोति—तदर्थकमिति । अध्येतृवेदित्रर्थकं तद्विषयाणि-इत्येतदिहापि क्रियत इत्यर्थः ॥

३ छ. पुस्तके 'एवमपि' इत्यस्य पाठो नास्ति ।

४ 'प्रोक्त इति' इत्येवं कल्पशब्दरहितः पाठः क. पुस्तके ॥

( प्रदीपः ) क्रौडा इति । क्रोडेन प्रोक्तं छन्दोऽधीयते । कङ्कतेन, मुदेन, पिप्पलादेन चेति 'तेन प्रोक्तम्' इत्यण्, तस्य छणादिष्वनन्तर्भावात्तद्विषयता न प्राप्नोति ॥

( दोषान्तरदर्शनेन प्रत्याक्षेपनिरासभाष्यम् )

**छणादयश्चाप्यौत्सर्गिकानध्येतृवेदित्रोरेव बाधेरन्, येऽन्ये उपचारास्तत्र न बाधेरन्—तित्तिरिणा प्रोक्ताः श्लोका इति ॥**

( प्रदीपः ) दोषान्तरमुद्भावयति—**छणादय इति** । अध्येतृवेदितृविवक्षायामेव प्रोक्तार्थे उत्पद्यमानाश्छणादयस्तत्रैव स्वयं भवन्त औत्सर्गिकान् बाधेरन् । अन्यत्र तु स्वयमभवन्तो न बाधेरन्—इत्यर्थः ॥ **तित्तिरिणा प्रोक्ता इति** ॥ 'तित्तिरिवरतन्तु-' इत्यत्र छन्दोग्रहणं कर्तव्यमिति वक्ष्यते, तेनात्र छण् न भवति । तदभावेऽप्यण् नेष्यते । यद्येवमपवादाभाव उत्सर्गस्य प्रवृत्तिः केन निवार्यते? अथानभिधानादिकमुत्सर्गानुत्पत्तौ हेतुरभिधीयते, तर्हि छणादयश्चापि, इति दोषो नोपन्यसनीय इति **चिन्त्यमेतत्** ॥

( उद्द्योतः ) तर्हि च्छणादयश्चापीत्यस्य 'अनभिधानान्नोत्पत्स्यन्ते' इति शेषः ॥ **चिन्त्यमिति** । केचित्तु तित्तिर्यादिभ्यः प्रोक्ते छन्दस्येव प्रत्ययः, स च छणेवेति द्विविधनियमेन श्लोकेष्वणभाव इति भाष्याशयः । नियमद्वयस्याप्यध्येत्रर्थादिविवक्षायामेव प्रवृत्तावयं दोष इत्याहुः ॥

( वार्तिकान्यथासिद्धिकरणेनोपसंहारभाष्यम् )

**अस्तु तर्ह्यविशेषेण ।**

**ननु चोक्तं याज्ञवल्क्यादिभ्यः प्रतिषेध इति ।**

**वक्ष्यत्येतत्—याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वादिति, तत्रैव वक्तव्यम्—तद्विषयता च न भवतीति ॥**

**कथं काश्यपिनः, कौशिकिन इति?**

**इनिः प्रोक्ते तद्विषयो भवतीत्युच्यमाने—अवश्यमत्र काश्यपकौशिकग्रहणं कल्पे नियमार्थं द्रष्टव्यम् ।**

**तदेवेदानीं विध्यर्थं भविष्यति ॥**

**कथं पाराशरिणो भिक्षवः, शैलालिनो नटाः?**

**अत्रापि तद्विषयता चेत्यनुवर्तिष्यते ॥**

( प्रदीपः ) **अस्तु तर्हीति** । इह वा-'छन्दोब्राह्मणानि च तद्विषयाणि' इति क्रियेत, प्रोक्ताधिकारे वा 'छन्दोब्राह्मणान्यध्येतृवेदित्रोः' इत्युच्येत—नास्ति विशेषः । इहापि च प्रकरणे प्रोक्तग्रहणानुवृत्त्या प्रोक्तप्रत्ययान्तानां छन्दोब्राह्मणवाचिनां तद्विषयता विधीयमाना सर्वं स्वातन्त्र्यादि निवर्तयितुं क्षमा—इति 'यथाऽधिकारम्' इत्ययं दोषो नावतरति । 'सिद्धं तु प्रोक्ताधिकारे' इत्येतदपि वार्तिकमत्रैव सूत्रे 'प्रोक्ताल्लुक्' इत्यतः प्रोक्तशब्दस्याधिकार इत्येवं केचिद्व्याचक्षते ॥ **वक्ष्यत्येतदिति** । 'पुराणप्रोक्तेषु' इत्यत्र ॥ **कथमिति** । कल्पे तद्विषयता न प्राप्नोतीति प्रश्नः । **अत्रापि तद्विषयता चेति** । अर्थमात्रमत्र निर्दिष्टम् । तथा हि—यद्यत्र प्रकरणे सूत्रमिदं क्रियते, तदा व्यवहितत्वात्कथं तत्र तद्विषयग्रहणस्यानुवृत्तिः स्यात् । अथ प्रोक्तप्रकरणे 'छन्दो ब्राह्मणान्यध्येतृवेदित्रोः' इत्युच्यते तदा तद्विषयग्रहणं नास्ति । तस्मात्प्रोक्तप्रकरणेऽध्येतृवेदितृग्रहणं 'पाराशर्यशिलालिभ्याम्' इत्यादावनुवर्त्यमिति भाष्यकारो मन्यते । यद्वा-'याज्ञवल्क्याद्यर्थं तद्विषयता च न' इति यदुक्तं तदेव तद्विषयताग्रहणमुत्तरत्रानुवर्त्यमित्यर्थः ॥

( उद्द्योतः ) भाष्ये—**अस्तु तर्ह्यविशेषेणेति** । इनिरूपविशेषमनुपादायेत्यर्थः ॥ तादृशवचनं चात्र वा कर्तव्यम्, प्रोक्ताधिकारे वा, न विशेष इत्याह—**इह वेति** । अत एव 'सर्वथा याज्ञवल्क्यादिभ्यः' इति भाष्ये 'सर्वथा' इत्युपात्तम् ॥ **प्रोक्तग्रहणानुवृत्त्येति** । इदं स्वरूपकथनम् ॥ **सर्वं स्वातन्त्र्यादीति** । लक्ष्यानुसारिव्याख्यानादिति भावः । यद्यपि तदनुवृत्तिसामर्थ्यात्सर्वनिवृत्तिरिति कैयटस्वरसः, तथाऽपि सामर्थ्यं कथमिति चिन्त्यम् । छन्दोब्राह्मणशब्दानां तद्विषयतावारणाय तदनुवृत्तेरावश्यकत्वादित्याहुः ॥ **केचिद्व्याचक्षत इति** । अत्रारुचिस्तु भाष्याननुगुणत्वम् ॥ भाष्ये—**तुल्यकालत्वादिति** । यत्र 'शाट्यायनिनः' इत्यादाविष्यते तैस्तुल्यकालत्वेनास्यापि पुराणप्रोक्तत्वाण्णिनिप्राप्तिरित्यर्थः ॥ भाष्ये—**अत्रापि तद्विषयता चेति** । अपिना 'काश्यप' इत्यादिसूत्रे च ॥ **तस्मात्प्रोक्तप्रकरणे इति** । प्रोक्तप्रकरणे यदा वचनं तदा तत्रत्यमध्येत्रादिग्रहणमित्यर्थः ॥ **उत्तरत्रानुवर्त्यमिति** । केचित्तु—'छन्दोब्राह्मणानि च' इति सूत्रस्थचस्यानुक्तसमुच्चयार्थत्वेन, इष्टानुरोधाद्व्याख्यानाच्च 'पुराणप्रोक्तेषु' इति सूत्रविषयभिन्ने कल्पे सूत्रे च तद्विषयता । **'अत्रापि'** इत्यादिभाष्यस्यायमर्थः—काश्यपकौशिकप्रोक्ते कल्पे भिक्षुनटसूत्रयोश्च अनु—छन्दोब्राह्मणयोः पश्चात् **तद्विषयता वर्तिष्यते**—करिष्यते, कुतस्तत्राह—**चेतीति** । सूत्रे 'च' इत्युक्तेरितीति वदन्ति । ब्राह्मणानामच्छन्दस्त्वात्सूत्रे पृथग् ग्रहणं ॥

( ७३९ विधिसूत्रम् ॥ ४ । २ । १ आ. ३६ )

## १४८८ तदस्मिन्नस्तीति देशे तन्नाम्नि ॥ ४ । २ । ६७ ॥

( ७४० विधिसूत्रम् ॥ ४ । २ । १ आ० ३७ )

## १४८९ तेन निर्वृत्तम् ॥ ४।२।६८ ॥

( ७४१ विधिसूत्रम् ॥ ४ । २ । १ आ. ३८ )

## १४९० तस्य निवासः ॥ ४ । २ । ६९ ॥

( ७४२ विधिसूत्रम् ॥ ४ । २ । १ आ. ३९ )

## १४९१ अदूरभवश्च ॥ ४ । २ । ७० ॥

(चातुरर्थिकाधिकरणम्)

( एकानेकवाक्यतोपक्षेपे भाष्यम् )

**किं पुनरयमेको योग आहोस्विन्नाना योगाः ।**

१ 'काणमध्येतृ' इति क. पाठः ॥

किं चातः ?

(प्रदीपः) चतुर्णां योगानां किमेकवाक्यता, अथ नानावाक्यतेति विचारः—**किं पुनरिति** । ननु समर्थविभक्तयः प्रत्ययार्थाश्च भिन्ना इति कथमेकयोगत्वसंभावना ? उच्यते, अणादयः 'प्राग्दीव्यतोऽण्' इत्यारभ्य पञ्च एतैर्योगैर्विधीयन्त इति तद्विधानापेक्षमेकयोगत्वं संभवति । यदा युगपदेतेष्वर्थेष्वणादयो विधीयन्ते ग्रहणकवाक्येनैकेन तदैकयोगत्वम्, तदा चैतन्निबन्धनानि प्रक्रियावाक्यान्युपप्लवन्ते । यदा तु क्रमेण भिन्नेष्वर्थेषु प्रत्ययविधानं तदा नानावाक्यता ॥

(उद्द्योतः) **अणादय इति** । अण्याञ्नञ्स्नञः ॥ **एकयोगत्वमिति** । विधेयभेदप्रयुक्तयोगभेदनिरासपरमेतत् ॥

(एकवाक्यतायां दोषदर्शकं भाष्यम्)

**यद्येको योगः,**

**उत्तरेष्वर्थादेशनेषु 'देशे तन्नाम्नि' 'देशे तन्नाम्नि' इत्यनुवृत्तिः कर्तव्या, न ह्येकयोगेऽनुवृत्तिर्भवति ।**

**कथं ज्ञायते ?**

**यदयं "तदधीते तद्वेद" (४।२।५९) इति द्विस्तद्ग्रहणं करोति ॥**

(प्रदीपः) **देशे तन्नाम्नीति** । चतुर्ष्वपि योगेषु प्रत्ययान्तोपाधित्वेनैतदुपयुज्यते । एकयोगे च प्रथमेनैवार्थेनानन्तर्यात्संबध्येत, नान्यैः । नानायोगत्वे तु स्वरितत्वादधिकारे सति सर्वैरर्थैरस्योपाधेः संबन्ध उपपद्यते ॥

(भिन्नवाक्यतायां दोषदर्शकं भाष्यम्)

**अथ नाना योगाः,**

**"ओरञ्" (४।२।७१) इत्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यात् ।**

**यथेच्छसि तथास्तु ॥**

(एकवाक्यतायां दोषाभावबोधकं भाष्यम्)

**अस्तु तावदेको योगः ।**

**ननु चोक्तमुत्तरेष्वर्थादेशनेषु 'देशे तन्नाम्नि' 'देशे तन्नाम्नि' इत्यस्यानुवृत्तिः कर्तव्या, न ह्येकयोगेऽनुवृत्तिर्भवतीति ।**

**एकयोगेऽप्यनुवृत्तिर्भवति ।**

**कथं ज्ञायते ?**

**यदयं "तदस्यास्त्यस्मिन्निति मतुप्" (५।२।९४) इति द्विस्तद्ग्रहणं न करोति ॥**

**कथं 'तदधीते तद्वेद' इति ?**

**प्रमादकृतमाचार्यस्य, शक्यमकर्तुम् ।**

(प्रदीपः) **प्रमादकृतमिति** । शिष्याणां सुखावबोधाय लाघवं प्रत्यनवधानलक्षणेन प्रमादेन कृतमित्यर्थः । लौकिको ह्यधिकारोऽपेक्षालक्षण एकस्मिन्नपि योगे न विरुध्यते । अर्थसमुदायं चापेक्ष्य समर्थविभक्तिरुपाधिर्वा निर्दिश्यमानः प्रत्येकमभिसंबध्यते । यत्त्वन्यत्रोक्तम्—न चैकयोगेऽनुवृत्तिर्भवतीति । तच्छास्त्रीयमधिकारमन्तरेणैव संबन्धस्य न्याय्यत्वमनाश्रित्यविरोधः ॥

(उद्द्योतः) नन्वाचार्यस्य प्रमादोऽनुपपन्नोऽत आह—**शिष्याणामिति** ॥ ननु स्वरितत्वगुणजन्यानुवृत्तिरेकसूत्रे कथम् ? स्वविषयवाक्यबोधनान्तरं निराकाङ्क्षतयाऽन्यत्रान्वयाप्राप्तौ हि तत्प्राप्तये स्वरितासङ्गः, न चैतदेकयोगे; अत आह—**लौकिक इति** ॥ अपेक्षामेव व्युत्पादयति—**अर्थसमुदायञ्चेति** ॥ **अन्यत्रेति** । 'इको गुणवृद्धी' इत्यत्र ॥ **अधिकारमन्तरेणैवेति** । एवशब्दोऽप्यर्थे । अनाश्रित्येति च पाठः । अधिकारमनन्तरेणैवेति पाठस्तु चिन्त्यः । केचित्तु—तद्भाष्यमेतद्विरोधादेकदेश्युक्तिरिति तवाप्यावश्यकम् । एवञ्च 'लौकिको हि' इत्यादिक्लेशो व्यर्थ एव, स्वरितत्वेनाप्येकयोगेऽनुवृत्तौ बाधकाभावात् । नैराकाङ्क्ष्येण संबन्धाप्राप्तौ संबन्धायैव व्यवहितत्वादिना संबन्धाप्राप्तौ संबन्धायापि स्वरितत्वासङ्गे बाधकाभावादित्याहुः ॥

(भिन्नवाक्यतायां दोषाभावबोधकं भाष्यम्)

**अथ वा सन्तु पुनर्नाना योगाः ।**

**ननु चोक्तम्—ओरञित्येवमाद्यनुक्रमणं यदेव सर्वान्त्यमर्थादेशनं तस्यैव विषये स्यादिति ।**

**नैष दोषः ।**

**गोयूथवदधिकाराः ।**

**तद्यथा—गोयूथमेकदण्डप्रघट्टितं सर्वं समं घोषं गच्छति, तद्वदधिकाराः ॥**

(प्रदीपः) **गोयूथवदिति** । स्वरितलिङ्गासङ्गदण्डप्रेर्यमाणा अधिकारगवाः—आनन्तर्यव्यवधाननिरपेक्षाः सममेव कार्यदेशमनुसरन्तीत्यर्थः ॥

(७४३ विधिसूत्रम् ॥ ४ । २ । १ आ. ४०)

## १४९२ ओरञ् ॥ ४ । २ । ७१ ॥

(अञोऽधिकरणम्)

(५३८६ विप्रतिषेधवार्तिकम् ॥ १ ॥)

### ॥ * ॥ ओरञ्विधेर्नद्यां मतुब्विप्रतिषिद्धम् ॥ * ॥

(भाष्यम्) **ओरञ्विधेर्नद्यां मतुब्भवति विप्रतिषेधेन ।**

**ओरञ्विधेरवकाशः—कक्षतु-काक्षतवम्, काकपेलवम्[१] ।**

**मतुपोऽवकाशः—उदुम्बरावती, मशकावती ।**

१ 'कार्कपेलवम्, कार्कंदेलवम्, कार्कंदैलवम्' इत्येवं पाठा दृश्यन्ते ॥

इहोभयं प्राप्नोति—इक्षुमती, द्रुमती ।

मतुब्भवति विप्रतिषेधेन ॥

( प्रदीपः ) उदुम्बरावतीति । 'मतौ बह्वचोऽनजिरादीनाम्' इति दीर्घः ॥

( ७४४ विधिसूत्रम् ॥ ४ । २ । १ आ. ४१ )

## १४९३ मतोश्च बह्वजङ्गात् ॥ ४।२।७२ ॥

( पदकृत्यभाष्यम् )

अङ्गग्रहणं किमर्थम् ?

यथा बह्वज्ग्रहणमङ्गविशेषणं विज्ञायेत । बह्वचोऽङ्गादिति ॥

( प्रदीपः ) अङ्गग्रहणमिति । 'मतोश्च बह्वचः' इत्येवास्तु, व्यधिकरणे पञ्चम्यौ व्याख्यास्येते, बह्वचो यो विहितो मतुप् तदन्तादञ्भवतीति स एवार्थः सम्पद्यत इति प्रश्नः ॥ यथेति । सामानाधिकरण्ये सम्भवति वैय्यधिकरण्याश्रयणस्यायुक्तत्वादित्यर्थः ॥

( उद्द्योतः ) सामानाधिकरण्ये इति । तथा च वैयधिकरण्यान्वये तात्पर्यग्राहकं 'अङ्ग'ग्रहणमिति भावः ॥

( अङ्गग्रहणस्य फलबोधकं भाष्यम् )

अथाक्रियमाणेऽङ्गग्रहणे बह्वज्ग्रहणं कस्य विशेषणं स्यात् ?

मत्वन्तविशेषणम् ।

तत्र को दोषः ?

इहापि प्रसज्येत—मालावतामयं निवासो मालावतम् ।

अस्ति चेदानीं कश्चिदबह्वज्मत्वन्तो यदर्थो विधिः स्यात् ।

अस्तीत्याह । श्ववान्, स्ववान् ॥

( उद्द्योतः ) भाष्ये—यदर्थो विधिरिति । यद्व्यावृत्त्यर्थं बह्वचूपदस्य करणं स्यादित्यर्थः ॥ श्ववान्, स्ववानिति । एषां निवास इत्यर्थे 'अञ्' नेत्यर्थः ॥

( ७४५ विधिसूत्रम् ॥ ४ । २ । १ आ. ४२ )

## १५०६ नद्यां मतुप् ॥ ४ । २ । ८५ ॥

( मतुबधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं नद्यां मतुब्विधीयते, "न तदस्यास्त्यस्मिन्निति मतुप्" ( ५।२।९४ ) इत्येव सिद्धम् ॥

( ५३८७ समाधाने वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ नद्यां मतुब्वचनं मत्वर्थेऽण्विधानात् ॥ * ॥

( भाष्यम् ) नद्यां मतुब्वचनं क्रियते मत्वर्थेऽण्विधानात् ।

अयं मत्वर्थेऽण्विधीयते, स विशेषविहितः सामान्यविहितं मतुपं बाधेत ॥

( प्रदीपः ) अयमिति । 'तदस्मिन्नस्तीति देशे तन्नाम्नि' इत्येतत्सूत्रविहितः, नद्या अपि देशत्वात् । 'विशिष्टलिङ्गो नदीदेशो ग्रामाः' इत्यत्र तु पृथङ्नदीग्रहणं सर्वनदीवाच्यवयवद्वन्द्वपरिग्रहार्थम् ॥ स विशेषविहित इति । देशे तन्नाम्नि विधानात् ॥

( उद्द्योतः ) ननु नदी न देशः, अत एव 'विशिष्टलिङ्ग' इति देशात्पृथक् नदीग्रहणमत आह—नद्या अपीति ॥ पृथङ्नदीग्रहणमिति । वस्तुतस्तत्र 'अग्रामाः' इति पर्युदासात् देशपदेन मनुष्यवासयोग्यजनपदनगराणामेव ग्रहणम् । अत एव पर्वतानां न—कैलासगन्धमादने । एवञ्च नदीग्रहणसार्थक्यं स्पष्टमेव । नद्यादि सर्वावयवग्रहणं तु विशिष्टलिङ्गादिसाहचर्याद्व्याख्यानाच्चेति बोध्यम् ॥

( ५३८८ समाधानान्तरबोधकं वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ निर्वृत्ताद्यर्थं च ॥ * ॥

( भाष्यम् ) निर्वृत्ताद्यर्थं च नद्यां मतुब्वचनं क्रियते ।

निर्वृत्ताद्यर्थेषु मतुब्यथा स्यात् ॥

( प्रदीपः ) निर्वृत्ताद्यर्थं चेति । निर्वृत्तादिषु त्रिष्वर्थेषु अप्राप्त एव मतुब् विधीयते । तदस्मिन्नस्तीत्यत्र त्वर्थे प्रतिप्रसूयत इत्यर्थः ॥

( ७४६ विधिसूत्रम् ॥ ४ । २ । १ आ. ४३ )

## १५०८ कुमुदनडवेतसेभ्यो ड्मतुप् ॥ ४ । २ । ८७ ॥

( विधायकं भाष्यम् )

महिषाच्चेति वक्तव्यम् । महिष्मान् ॥

( ७४७ विधिसूत्रम् ॥ ४ । २ । १ आ. ४४ )

## १५१२ नडादीनां कुक्च ॥ ४ । २ । ९१ ॥

( छाधिकरणम् )

( कुगाक्षेपभाष्यम् )

यदि पुनरयं कुट् परादिः क्रियेत ॥

( प्रदीपः ) सूत्रकारेण कुक् पूर्वान्तः कृतः, तत्र कुञ्चा अस्मिन् सन्तीति कुञ्चकीयमिति ह्रस्वो न सिध्यति । तक्षकीयमित्यत्र च नलोपो न प्राप्नोति । परादौ तु—'केऽण' इति ह्रस्वः, नान्तस्य च पदत्वान्नलोपः सिध्यतीति मन्वान आह—यदि पुनरिति ॥

( उद्द्योतः ) ननु कुकः सूत्रोपात्तत्वात्परादित्वसम्भावनाभावोऽत आह—सूत्रेति ॥ केऽण इति । कादावित्यर्थं मन्यते ॥

( ५३८९ कुडागमे दोषवार्तिकम् ॥ १ ॥ )

॥ * ॥ कुटि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ॥ * ॥

( भाष्यम् ) कुटि सति प्रत्ययादेरित्यादेशस्यानुपपत्तिः ।

कुटि कृते अनादित्वादादेशो न प्राप्नोति ॥

एवं तर्हि पूर्वान्तः करिष्यते ।

( ५३९० कुगागमे दोषवार्तिकम् ॥ २ ॥ )

॥ * ॥ पूर्वान्ते ह्रस्वत्वम् ॥ * ॥

( भाष्यम् ) यदि पूर्वान्तः,

ह्रस्वत्वं वक्तव्यम्—कुञ्चकीयाः ।

परादौ पुनः सति "केऽणः" ( ७।४।१३ ) इति ह्रस्वत्वं सिद्धं भवति ।

अस्तु तर्हि परादिः । ननु चोक्तं कुटि कृतेऽनादित्वादादेशो न प्राप्नोतीति ॥

( ५३९१ कुडागमे दोषाभाववार्तिकम् ॥ ३ ॥ )

॥*॥ सिद्धं त्वादिष्टस्य कुड्वचनात् ॥*॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

आदिष्टस्य कुड्वचनात्, कुड्डादिष्टस्येति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् ॥

( ५३९२ आदिष्टस्येति न्यासाभावेऽपि दोषाभावबोधकं वार्तिकम् ॥ ४ ॥ )

॥ * ॥ संनियोगात्सिद्धम् ॥ * ॥

( भाष्यम् ) संनियोगः करिष्यते ।

क एष यत्नश्चोद्यते—संनियोगो नाम ?

चकारः कर्तव्यः, कुड्ड ।

किं च ?

यच्चान्यत्प्राप्नोति ।

किं चान्यत् प्राप्नोति ?

आदेशः ।

सिध्यति ।

सूत्रं तर्हि भिद्यते ॥

( प्रदीपः ) क एष इति । आगमादेशौ सह भवत इत्युच्यमाने गौरवप्रसङ्ग इति मन्यते ॥

( सिद्धान्तभाष्यम् )

यथान्यासमेवास्तु ।

ननु चोक्तं पूर्वान्ते ह्रस्वत्वमिति ।

निपातनादेतत्सिद्धम् ।

किं निपातनम् ?

कुञ्चा ह्रस्वत्वं चेति ।

तत्तर्हि पूर्वान्ते सति निपातनं कर्तव्यम् ।

परादावप्येष दोषः—यद्धि तत्केऽण इति ह्रस्वत्वम्, न तत्कादिमात्रे शक्यं विज्ञातुम् ।

इहापि प्रसज्येत-नदीकल्पः परीवाहः, कुमारीकाम्यतीति ।

तस्मादुभाभ्यामेतद्वक्तव्यम्—कुञ्चा ह्रस्वत्वञ्चेति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

( प्रदीपः ) निपातनादिति । गण एव 'कुञ्चा ह्रस्वत्वं च' 'तक्षन्नलोपश्च' इत्युच्चारणादित्यर्थः ॥ यद्धि तदिति । केऽण इत्यत्र कप्रत्ययस्य ग्रहणम्, न तु वर्णमात्रस्य, यतस्तदादिविधिः स्यादित्यर्थः ॥

इत्युपाध्यायजैय्यटपुत्रकैयटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

( उद्द्योतः ) ननु गणे विधायकवचनस्यैव पाठान्निपातनादित्यसंगतमत आह—गण एवेति ॥ निपातनम्—उच्चारणम् ॥ स्वोक्तदोषस्यापि परिहारायाह—तक्षन्निति । भाष्यमुपलक्षणमिति भावः ॥ न त्विति । अत एवाकारोच्चारणम्, अन्यथा 'कि' इति वदेदिति भावः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थाध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

---

( ७४७ विधिसूत्रम् ॥ ४ । २ । २ आ. ४४ )

## १५१३ शेषे ॥ ४ । २ । ९२ ॥

( शेषार्थाधिकरणम् )

( शेषार्थविवक्षाभाष्यम् )

शेष इत्युच्यते, कः शेषो नाम ?

अपत्यादिभ्यश्चातुरर्थपर्यन्तेभ्यो येऽन्येऽर्थाः स शेषः ॥

( प्रदीपः ) शेषग्रहणमन्तरेणापत्यादीनां चातुरर्थपर्यन्तानां निवृत्तत्वाद्वक्ष्यमाणेषु [1]जातादिषु घादयः सिध्यन्तीति मत्वा पृच्छति—कः शेष इति ॥ इतरः शिष्यबुद्धिपरीक्षार्थं शेषं दर्शयति—अपत्यादिभ्य इति ॥

( उद्द्योतः ) 'कः शेषः-' इत्यस्य किंप्रयोजनकं शेषपदमित्यर्थः । अतस्तदभावेऽपि तदर्थसिद्धिं दर्शयति—शेषग्रहणमिति ॥ भाष्ये—चातुरर्थेति । चतुर्णामर्थानां समाहारश्चतुरर्थी, चतुरर्थ्येव चातुरर्थम्, प्रज्ञादित्वादण् । अस्मादेवाध्यात्मादित्वाट्ठञि 'चातुरर्थिकः' इति बोध्यम् ॥

---

१ क. पुस्तके 'जातादिषु' इत्यस्य पाठो न ॥

( शेषपदाक्षेपभाष्यम् )

किमर्थं पुनः शेषग्रहणं क्रियते ?

शेषे घादयो यथा स्युः स्वार्थे मा भूवन्निति ।

नैतदस्ति प्रयोजनम् ।

इदं तावदयं प्रष्टव्यः—अणादयः स्वार्थे कस्मान्न भवन्तीति ?

अपत्यादिष्वर्थेष्वणादयो विधीयन्ते, तेन स्वार्थे न भविष्यन्ति ।

इमेऽपि तर्हि जातादिष्वर्थेषु विधीयन्ते, तेन स्वार्थे न भविष्यन्ति ॥

( प्रदीपः ) येनाभिप्रायेण पृष्टवांस्तेनैव पुनः पृच्छति—**किमर्थमिति** ॥ **स्वार्थे मा भूवन्निति** । अर्थानिर्देशे हि स्वार्थे घादिप्रसङ्गः, विप्रकर्षात्तु जातादिभिर्घादीनां सम्बन्धो न स्यादिति भावः ॥ **अपत्यादिष्विति** ॥ 'प्राग्दीव्यतः' इति विशिष्टावधिपरिच्छिन्नार्थाश्रयेणाणादीनां विधानादिति भावः ॥ **इमेऽपीति** । घादिविधानवाक्येष्वर्थनिर्देशाभावात् । 'तत्र जातः' इत्यादिष्वर्थनिर्देशवाक्येषु प्रत्ययानुपादानात् परस्पराकाङ्क्षावशादेकवाक्यतायां सत्यां जातादिष्वेव घादयो भविष्यन्ति, न तु स्वार्थे इत्यर्थः ॥

( उद्द्योतः ) ननु जाताद्यर्थनिर्देशात्कथं स्वार्थे विधानमत आह—**विप्रकर्षात्त्विति** ॥ ननु 'प्राग्दीव्यतोऽण्' इत्यत्रापत्याधिकाराभावात्कथमेतदत आह—**प्राग्दीव्यत इति** ॥ ननु विप्रकर्षोऽत आह—**घादीति** । पाठविप्रकर्षेऽप्याकाङ्क्षावशात्संनिधानमिति भावः ॥

( प्रत्याक्षेपभाष्यम् )

कथं पुनरिहोच्यमाना घादयो जातादिषु शक्या विज्ञातुम्[1] ?

( प्रत्याक्षेपसमाधानभाष्यम् )

अनुवर्तिष्यन्ते तत्र घादयः ।

यद्यनुवर्तन्ते घादयः, या या परा प्रकृतिस्तस्यास्तस्याः पूर्वं पूर्वं प्रत्ययाः प्राप्नुवन्ति ।

एवं तर्हि जातादिष्वर्थेषु घादीनपेक्षिष्यामहे ।

अयुक्तैवं बहुनोऽपेक्षा । अपेक्षमाणोऽयमनन्तरं योगमपेक्षेत ।

बहुनोऽप्यपेक्षा भवति ।

"तद्यथा-कषादिषु यथाविध्यनुप्रयोगः"(३।४।४६) इति ससामान्यकं सविशेषकं सर्वमपेक्ष्यते ।

अथ वा पुनरस्त्वनुवृत्तिः ।

ननु चोक्तं या या परा प्रकृतिस्तस्यास्तस्याः पूर्वं पूर्वं प्रत्ययाः प्राप्नुवन्तीति ।

नैष दोषः ।

संबन्धमनुवर्तिष्यते । राष्ट्रावारपाराद्घखौ (४।२।९३) । ग्रामाद्यखञौ (९४)

राष्ट्रावारपाराद्घखौ । कत्त्र्यादिभ्यो ढकञ् (९५) राष्ट्रावारपाराद्घखौ ग्रामाद्यखञाविति ।

(प्रदीपः) **एवं तर्हीति** । 'तत्र जात' इत्यादिषु प्रत्ययानिर्देशादवश्याकाङ्क्षितव्या घादय इति भावः ॥ **अयुक्तेति** । बहुनो वस्तुनोऽपेक्षा न युक्ता, अनन्तरेणैव प्रत्ययेनाकाङ्क्षाविच्छेदसम्भवादिति भावः ॥ **अनन्तरमिति** । 'विभाषा पूर्वाह्णापराह्णाभ्याम्' इत्येतदित्यर्थः ॥ **कषादिष्विति** । यथाऽत्र कषादिष्विति वचनेनापेक्षा प्रतिपाद्यते तथेहापि योगविभागसामर्थ्यात्प्रत्ययसमुदायापेक्षा भविष्यतीति मन्यते ॥ **ससामान्यकमिति** । 'उपमाने कर्मणि च' इत्यत्र धातुसामान्यं प्रकृतित्वेनोपादीयते, अन्यत्र तु विशेषः । ततश्च सर्वस्यैवापेक्षा भविष्यतीत्यर्थः ॥ **अथ वेति** । स्वरितत्वादिति भावः ॥

( उद्द्योतः ) **बहुनो वस्तुन इति** । वैपुल्यवाचिबहुशब्दस्य नपुंसकैकवचनप्रयोग इति बोध्यम् ॥ ननु तत्र 'कषादिषु' इत्युक्तत्वात्सर्वापेक्षा, न चैवमत्रेत्यत आह—**यथाऽत्रेति** ॥ **योगविभागेति** । 'विभाषा पूर्व' इत्यनेन[2] योगविभागेत्यर्थः ॥ नन्वधिकारपक्ष एव प्रकृते, 'अथवा' इत्ययुक्तमत आह—**स्वरितत्वादिति** । लौकिकाधिकारपरित्यागेन शास्त्रीयाधिकारद्योतनाय 'अथवा' इत्युक्तिरिति भावः ॥

( शेषपदाक्षेपसमाधानभाष्यम् )

अत उत्तरं पठति ।

( ५३९३ शेषपदाक्षेपसमाधाने वार्तिकम् ॥ १ ॥ )

॥ * ॥ शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् ॥ * ॥

( भाष्यम् ) शेषवचनं क्रियते शेषे घादयो यथा स्युः, अपत्यादिषु मा भूवन्निति ।

कथं च प्राप्नुवन्ति ?

( उद्द्योतः ) एवञ्च शेषग्रहणे व्यर्थतां प्राप्ते वार्तिककृत उत्तरं भाष्ये—**शेषवचनमिति** ॥

( ५३९४ समाधानसमर्थकं वार्तिकम् ॥ २ ॥ )

॥ * ॥ तस्येदंवचनात्प्रसङ्गः ॥ * ॥

( भाष्यम् ) तस्येदंविशेषा ह्येते-अपत्यम्, समूहः, निवासः, विकार इति ॥

( उद्द्योतः ) **तस्येदंविशेषा हीति** । सर्वे च विशेषा लाघवादेकयोग एव कृतः स्यात् । योगविभागसामर्थ्याच्च बहुनोऽपेक्षेति भावः ॥

१ 'जातादिष्वर्थेषु शक्या' इति च. झ. पाठः ॥

२ यदि 'तत्र जात' इत्यस्य 'विभाषा पूर्वाह्ण' इत्यस्यैवापेक्षा तर्हि

दिदंपदेनोक्ताः 'तस्येदम्' इति सूत्रे । इदम्पदार्थस्य 'इदंत्वस्याश्रयभूता व्यक्तिविशेषा इति' अक्षरार्थः । यद्यपीदमिति प्रत्यक्षविषयत्वेन बोधकम्, तथाऽपि तेन रूपेण सर्वविशेषसंग्राहकमेतत् । प्रत्ययतश्च प्रकरणादितस्तत्तद्रूपेण बोधः । शेषग्रहणे तु शेषे इदमर्थे प्रत्यय इत्यर्थेनापत्यादीनामुक्तानामिदंत्वेन 'इदं'शब्देनाग्रहणमिति तेषु एतद्व्यावृत्तिः । न चेदंपदेनापत्यादीनामग्रहणे 'आपत्यं गोत्रम्' इति वार्तिकप्रयोगानुपपत्तिः, अपत्यस्येदमापत्यमित्यर्थो हि तत्रेति वाच्यम्, तत्र शिवादिपाठेनाण्सिद्धेः । 'दाशरथः' इत्याद्यपि दशरथशब्दस्य शिवादिवाह्वाद्योः पाठेन सिद्धमिति भावः ॥

( ५३९५ समाधानाक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ विप्रतिषेधात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **अणादयः क्रियन्तां घादय इति,**

**किमत्र कर्तव्यम्?**

**अणादयो भवन्ति विप्रतिषेधेन ॥**

( प्रदीपः ) **विप्रतिषेधादिति** । पूर्वविप्रतिषेधादिति भावः ॥

( ५३९६ आक्षेपनिरासवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा परत्वाद्घादीनाम् ॥ * ॥**

( भाष्यम् ) **न वा एष युक्तो विप्रतिषेधः ।**

**किं कारणम्?**

**परत्वाद् घादीनाम् । विप्रतिषेधे परमित्युच्यते, पूर्वे चाणादयः परे घादयः ॥**

**परेऽणादयः करिष्यन्ते ।**

**सूत्रविपर्यासश्चैवं कृतो भवति ॥**

( प्रदीपः ) **न वेति** । अनिष्टप्रसङ्गाद्विप्रतिषेध आश्रयितुं न युक्तः, परशब्दस्य व्यवस्थाविषयस्य तत्र ग्रहणात् । इष्टवाची संगृह्यत इति चेत्, इष्टानिष्टत्वस्य वचनाद्विना दुर्ज्ञानत्वात्तद्ग्रहणस्यायुक्तत्वात् ॥

( ५३९७ शेषपदप्रयोजने वार्तिकम् ॥ ५ ॥ )

**॥ * ॥ अणपवादत्वाच्चाण्विषये घादिप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **अणपवादत्वाच्च घादीनामण्विषये घादयः प्राप्नुवन्ति ॥**

( प्रदीपः ) **अणपवादत्वादिति** । नाप्राप्तेऽणि विधीयमाना घादयोऽपत्यादिष्वप्यणं बाधेरन्निति शेषाधिकारः कर्तव्य इत्यर्थः ॥

( उद्योतः ) पूर्वविप्रतिषेधोऽप्ययुक्तः, अपवादत्वादित्याह—भाष्ये—**अणपवादत्वाच्चेति** । अण्विषये=अपत्यादिरूपेऽप्यण्विषयेऽणं बाधित्वा घादयः प्राप्नुवन्तीत्यक्षरार्थः ॥

१ ननु तस्येदमिति सूत्रे इदन्त्वेन सर्वविशेषसंग्राहकत्वेऽपि प्रत्ययेभ्यस्तद्विशेषार्थस्य बोधः कथं स्यात्तदाह—प्रत्ययतश्चेति ॥

( सूत्रप्रत्याख्यानभाष्यम् )

**नैष दोषः ।**

**आचार्यप्रवृत्तिर्ज्ञापयति-नाण्विषये घादयो भवन्तीति, यदयं "फेश्छ च" (४।१।१४९) इति फिञन्ताच्छं शास्ति ।**

**नैतदस्ति ज्ञापकम् ।**

**फिनर्थमेतत् स्यात् ।**

**सौवीरगोत्रेष्विति वर्तते, न च फिनन्तं सौवीरगोत्रमस्ति ॥**

**गोत्रग्रहणं सामूहिकेषु ज्ञापकम्, दैवयातवग्रहणं वैषयिकेषु, भाम्नायणग्रहणं नैवासिकेषु ॥**

(प्रदीपः) इदानीं भाष्यकारोऽसत्यपि शेषाधिकारे ज्ञापकेनापत्यादिषु शेषाधिकारप्रत्याख्यानाय घादीन् व्यावर्तयति—**नैष दोष इति ॥ फेश्छचेति** । 'फेर्वा' इत्येवं ठग्विधानार्थं कर्तव्यम् । तत्र ठका मुक्ते पक्षे 'वृद्धाच्छः' इति छो भविष्यति, नार्थश्छविधानेन । तत्तु ज्ञापकार्थं सम्पद्यते-'घादयोऽपत्यादिषु न भवन्ति' इत्यस्यार्थस्य ॥ अपत्य एव ज्ञापकं स्यादित्याशङ्क्य ज्ञापकान्तराण्याह—**गोत्रग्रहणमिति** । 'गोत्रोक्षोष्ट्रोरभ्र' इत्येतदिति भावः । 'गोत्रचरणाद्वुञ्' इति समूह इदमर्थान्तर्भूते वुञि सिद्धे पुनर्वुञ्विधानं यथोक्तार्थज्ञापकम् ॥ **दैवयातवग्रहणमिति** । राजन्यादिगणपठितमिति भावः । देवयातूनामपत्यानि दैवयातवा इति, गोत्रप्रत्ययान्तमेतत् ॥ **भाम्नायणग्रहणमिति** । अरीहणादिगणपठितं वुञ्विधानार्थमिति भावः ।

यद्यपि न्यायेनापत्यादिषु घाद्यभावः सिध्यति, तथापि विस्पष्टप्रतिपत्तये भाष्यकारो ज्ञापकान्युपन्यास्थत् । **तथाहि**—विशेषशब्दसन्निधाने सामान्यशब्द उपादीयमानस्तत्रैव वा विशेषेऽवतिष्ठते, यथा—वृक्षः शिंशपेति । विशेषान्तरेषु वा, यथा—'दधि ब्राह्मणेभ्यो दीयतां तक्रं कौण्डिन्याय' इति । तस्येदमिति सामान्यमपत्यादिशब्दसन्निधावुपादीयमानं यद्यपत्यादिष्वेव वर्तेत तदा सामान्योपादानमनर्थकमेव स्यात् । तस्मादपत्यादिविशेषपरिहारेण विशेषान्तराणि 'तस्येदम्' इत्यनेन ग्राहिष्यन्ते ॥

यदि तर्हि शेषग्रहणं प्रत्याख्यायते तदा तस्य लक्षणतया यानि शब्दरूपाणि साध्यानि तानि कथं सिध्यन्ति—चक्षुषा गृह्यते **चाक्षुषं** रूपम् । **श्रावणः** शब्दः । चतुर्भिरुह्यते **चातुरं** शकटम् । **आश्वो** रथः । दृषदि पिष्टा **दार्षदाः** सक्तवः । उलूखले क्षुण्ण **औलूखलो** यावकः । चतुर्दश्यां दृश्यते **चातुर्दशं** रक्ष इति । 'तस्येदम्' इति 'संस्कृतं भक्षाः' इति च सिद्धत्वाच्चार्थस्तदर्थेन शेषवचनेन । 'तत्र जातः' इत्यत्र तु सूत्रेऽस्य लक्षणत्वमाश्रित्यैतेषां सिद्धिमभिधास्यति **नागनाथः**॥

**( उद्योतः ) इदानीं** भाष्यकारोऽ**सत्यपीति** । शेषाधिकारप्रत्याख्यानाय ज्ञापकेनापत्यादिषु घादीनिति संबंधः । **भाष्यकार** इत्यस्य—तस्यैकदेशीत्यर्थः । 'फेश्छच' इत्यनेन सौवीरगोत्रात्फिञन्तादपत्ये ठक्छौ विधीयेते ॥ **इदमर्थान्तर्भूते इति । न**

चेदमर्थचतुष्टयं त्रिलिङ्गं स्यात्, समूहे तु क्लीबमिति वाच्यम्, लोकाश्रयत्वाल्लिङ्गस्येत्युक्तेः ॥ यथा दधीति । अत्र ब्राह्मणशब्दः कौण्डिन्यसंनिधौ तदतिरिक्तविशेषे वर्तते । 'वृक्षः शिंशपा' इत्यत्र तु फलग्रहणनिवृत्तये, लौकिके प्रयोगे लाघवं प्रत्यनादराच्च सामान्यशब्दोपादानमिति बोध्यम् ॥ 'यद्यपत्यादि' इत्यनेनाद्यः प्रकारो दूषितः, अतो द्वितीय एव प्रकार इत्याह—तस्मादिति । केचित्तु सामान्योपादानं व्यवहिताव्यवहितसर्वसंग्रहाय स्यात्, अतो विशेषान्तरस्यैवात्र ग्रहणबोधनार्थं शेषग्रहणम्, ज्ञापकोपन्यासो वाऽऽवश्यकः । तत्र ज्ञापकेनानुमानिकवचनकल्पनाऽपेक्षया सूत्रमेव ज्याय इति—इयमेकदेश्युक्तिरित्याहुः ॥ एतेषां सिद्धिमिति । आख्यातवाच्यार्थस्येदमा परामर्शायोगादनेनैव साधनं युक्तमिति भगवतो नागनाथस्याभिप्रायः । ज्ञापकेन वार्तिकोक्तार्थप्रत्याख्यानन्त्वेकदेशिन इत्युक्तमेव । 'शैषिकान्मतुबर्थीयात्' इत्यस्य विषयलाभायाप्यधिकारसूत्रमावश्यकमिति बोध्यम् ॥

( ७४८ विधिसूत्रम् ॥ ४ । २ । २ आ. ४५ )

## १५१४ राष्ट्रावारपाराद्घखौ ॥ ४।२।९३ ॥

( घखाधिकरणम् )

( ५३९८ सिद्धान्तवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अवारपाराद्विगृहीतादपि ॥ * ॥

( भाष्यम् ) अवारपाराद्विगृहीतादपीति वक्तव्यम् । अवारीणः, पारीणः, अवारपारीणः ॥

( ५३९९ सिद्धान्तवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ विपरीताच्च ॥ * ॥

( भाष्यम् ) विपरीताच्चेति वक्तव्यं । पारावारीणः ॥

( ७४९ विधिसूत्रम् ॥ ४ । २ । २ आ. ४६ )

## १५१६ कत्र्यादिभ्यो ढकञ् ॥ ४ । २ । ९५ ॥

( ढकञ्प्रत्ययाधिकरणम् )

( ग्रामपदविषयकशङ्कासमाधानभाष्यम् )

ग्रामाच्चेति वक्तव्यम् । ग्रामेयकः ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् । कत्र्यादिभ्यो ढकञित्यत्र ग्रामादित्येतदनुवर्तिष्यते ॥

( ७५० विधिसूत्रम् ॥ ४ । २ । २ आ० ४७ )

## १५१७ कुलकुक्षिग्रीवाभ्यः श्वाऽस्यलङ्कारेषु ॥ ४ । २ । ९६ ॥

( सूत्रप्रत्याख्याने भाष्यम् )

अयं योगः शक्योऽवक्तुम् ।

कथं कौलेयकः ?

कुलस्यापत्यम् ।

### कुक्षिग्रीवात्तु कन् ढञः ।

कुलस्यापत्यं कौलेयक इति भविष्यति ।

कुक्षिग्रीवादपि ढञन्तात्कन्भविष्यति ॥

( प्रदीपः ) कुलस्यापत्यमिति । शुनः प्रत्ययार्थत्वे श्वकुलं प्रकृत्यर्थः संपद्यते ॥ कन्निति । स्वार्थिक इति भावः ॥

( उद्योतः ) शुन इति ॥ कुलशब्दात् 'अपूर्वपदादन्यतरस्याम्' इति ढकञ् । शब्दशक्तिस्वभावात्तद्धितस्याभिधानलक्षणत्वाच्च शुन्येवापत्ये इति भावः । ननु कुलस्यापत्येन कथं योग इति चेन्न, कुलशब्दस्य तत्प्रभवपरत्वात् । शुनि शैषिकोऽस्तु न, अनभिधानादिति बोध्यम् ॥ स्वार्थिक इतीति । 'दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ्' 'ग्रीवाभ्योऽण्च' इत्यभिधानस्वाभाव्यादस्यालङ्कारयोरेवेति बोध्यम् ॥ 'संज्ञायां कन्' इति कन् ॥

( ७५१ विधिसूत्रम् ॥ ४ । २ । २ आ. ४८ )

## १५२० कापिश्याः ष्फक् ॥ ४।२।९९ ॥

( ष्फक्प्रत्ययाधिकरणम् )

( संग्रहभाष्यम् )

बाह्लयुर्दिपर्दिभ्यश्चेति वक्तव्यम् । बाह्लायनी, और्दायनी, पार्दायनी ॥

( प्रदीपः ) बाह्लयुर्दीति । 'अवृद्धादपि' इति वुञि प्राप्ते ष्फगारम्भ इत्याहुः ॥

( उद्योतः ) अवृद्धादपीति । 'बाह्लायनी' इत्यत्रापि मावृद्धादित्यर्थेन प्राप्तिः । क्वचित्तु 'बाह्लयुर्दि' इत्येव पाठः ॥

१ आद्यः प्रकार इति । 'विशेषशब्दसंनिधाने सामान्यशब्द उपादीयमानस्तत्रैव वा विशेषेऽवतिष्ठते' इत्ययम् ॥

२ द्वितीय इति । 'विशेषान्तरेषु वा' इत्ययम् ॥

३ इयम्—'शेषे' इतिसूत्रप्रत्याख्यानपरा ॥

४ आख्यातवाच्यार्थस्य क्रियारूपस्य जातरूपार्थस्य इदंशब्देन निर्देशासंभवात्सूत्रमावश्यकमिति भगवतोऽभिप्रायः ॥

५ 'शेषवचनं घादिनामपत्यादिष्वप्रसङ्गार्थम्' इतिवार्तिकोक्तशेषपदप्रयोजनप्रत्याख्यानमेकदेशिन इति भावः ॥

६ अधिकारसूत्रस्य फलान्तरमप्याह—शैषिकादिति ॥

७ 'कौलेयकः, कौक्षेयकः, ग्रैवेयकः ? कुलस्यापत्यम्' इति पाठः ज्ञ. पुस्तके ॥

८ शुनः प्रत्ययार्थत्व इति । अपत्यत्वेन शुन एव विवक्षायां प्रत्ययार्थः श्वा स्यादित्यर्थः ॥

९ कौलेयकपदस्य श्ववाचकत्वनियमे प्रमाणमाह—शब्दशक्तीति ॥

१० 'ष्फगारभ्यते' इति च. ज्ञ. पाठः ॥

( ७५२ विधिसूत्रम् ॥ ४ । २ । २ आ. ४९ )

## १५२१ रङ्कोरमनुष्येऽण्च ॥ ४।२।१००॥

( अमनुष्यग्रहणाक्षेपभाष्यम् )

अमनुष्य इति किमर्थम् ?

राङ्कवको मनुष्यः ॥

( ५४०० प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् ॥ * ॥

( भाष्यम् ) रङ्कोरमनुष्यग्रहणमनर्थकम् ।

किं कारणम् ?

मनुष्यतत्स्थयोर्वुञ्विधानात् । अयं मनुष्ये मनुष्यस्थे च वुञ्विधीयते स बाधको भविष्यति ॥

( प्रदीपः ) रङ्कवो जनपदस्ततः 'प्राग्दीव्यतोऽण्' इत्यण् प्राप्तः, ततः 'अवृद्धादपि' इति वुञ् प्राप्तः, ततः 'ओर्देशे ठञ्' प्राप्तः, ततः 'कोपधादण्', ततः 'कच्छादिभ्यश्च' इत्यण् प्राप्तः, ततः ष्फगणौ विधीयेते । कच्छादिषु कोपधत्वादेवाणि सिद्धे रङ्कुशब्दस्य पाठो मनुष्यतत्स्थयोर्वुञ्विधानार्थः ॥ स बाधक इति । विशेषविहितत्वादिति भावः ॥

( उद्द्योतः ) ननु रङ्कोः कच्छादित्वादेवाणि सिद्धेऽण्विधानं व्यर्थमत आह—रङ्कव इति । तत्र ष्फका बाधा मा भूदिति अण् विधीयत इति भावः ॥ नन्वेवं कच्छादिषु रङ्कुशब्दपाठो व्यर्थः, कोपधत्वादेव सिद्धेरत आह—कच्छादिष्विति ॥ विशेषेति । रङ्कुशब्दविषयस्य तस्याचरितार्थत्वादिति भावः । न च रङ्कोर्मनुष्यवुञ् वैकल्पिक इत्यर्थज्ञापनार्थं तत्र रङ्कुशब्दपाठः, अमनुष्येत्यस्याभावे हि पक्षे ष्फगपि स्यात् । एवञ्च मनुष्ये राङ्कवो राङ्कवक इति रूपद्वयमिति वाच्यम् । एतत्सूत्रविहितयोर्द्वयोरप्यभावस्यामनुष्यग्रहणेन बोधमात्, ज्ञापितेऽप्यणोऽलाभात् । न च तेन ष्फगभाव एव बोध्यते, विनिगमनाविरहात् सूत्रोपात्तत्वेन तत्रामनुष्ये इत्यस्यान्वयौचित्यात् ॥

( एकदेशिभाष्यम् )

एवं तर्हि ज्ञापयत्याचार्यः—अमनुष्ये मनुष्यस्थे ष्फगणौ भवत इति ॥

( प्रदीपः ) अनुमष्ये मनुष्यस्थ इति । चूडादावित्यर्थः । यदि हि मनुष्यस्थे वुञं ष्फगणौ न बाधेयाताम्, मनुष्यप्रतिषेधोऽनर्थकः स्यात् ॥

( उद्द्योतः ) यदि हीति । एवञ्च वुञः ष्फगणौ बाधकाविति ज्ञाप्यत इत्यर्थः ॥

( ५४०१ प्रत्याख्यानसमर्थकं वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेन्नानिष्टत्वात् ॥ * ॥

( भाष्यम् ) अमनुष्ये मनुष्यस्थे ष्फगणोर्ज्ञापकमिति चेत्तन्न ।

किं कारणम् ?

अनिष्टत्वात् । न ह्यमनुष्ये मनुष्यस्थे ष्फगणाविष्येते ।

किं तर्हि ?

वुञेवेष्यते ॥

( ५४०२ अण्ग्रहणप्रत्याख्यानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अण्ग्रहणं च कच्छादिभ्योऽण्वचनात् ॥ * ॥

( भाष्यम् ) अण्ग्रहणं चानर्थकम् ।

किं कारणम् ?

कच्छादिभ्योऽण्वचनात् । कच्छादिपाठादत्राण्भविष्यति ॥

( प्रदीपः ) कच्छादिभ्योऽण्वचनादिति । ततश्चैकविषयत्वात्पर्यायेण ष्फगणौ भविष्यत इति नार्थोऽण्वचनेनेत्यर्थः । तदेवं 'रङ्कोश्च' इत्येव वक्तव्यम् । यत्तु कैश्चिदभ्यधायि—अमनुष्यग्रहणेन पर्युदासाश्रयेण मनुष्यसदृशे प्राणिनि ष्फग्विधीयते, नाप्राणिनि । अत एव विशेषविहितत्वादणो बाधकः स्यादित्यण्ग्रहणमपि कृतमिति । तदयुक्तम् । न हि भाष्यकारवार्तिककाराभ्यामभियुक्ततरः शब्दविषये कश्चिदस्ति ॥

( उद्द्योतः ) ततश्चेति । न च मनुष्यतत्स्थयोर्वुञ्विध्यर्थः स पाठश्चरितार्थः, विनिगमनाविरहेण तत्पाठस्योभयार्थत्वादिति भावः ॥ न हि भाष्येति । एवञ्च भाष्यसंमतमेव लक्ष्यम्, सूत्रे तु स्पष्टप्रतिपत्त्यर्थं ग्रहणमिति भावः ॥

( ७५३ विधिसूत्रम् ॥ ४ । २ । २ आ. ५० )

## १५२५ अव्ययात्त्यप् ॥ ४ । २ । १०४ ॥

( त्यप्प्रत्ययाधिकरणम् )

( अव्ययपरिगणनभाष्यम् )

परिगणनं कर्तव्यम् ।

### अमेहक्वतसित्रेभ्यस्त्यब्विधिर्योऽव्ययात्स्मृतः ॥

अमा—अमात्यः । अमा ।

इह—इहत्यः । इह ।

क्व—क्वत्यः । क्व ।

तसि—ततस्त्यः, यतस्त्यः । तसिं ।

त्र । तत्रत्यः, यत्रत्यः ।

इतरथा ह्यौत्तराहौपरिष्टपारतानां प्रतिषेधो वक्तव्यः स्यात् । औत्तराहः, औपरिष्टः, पारतः ॥

१ 'ततः ष्फविषयत्वात्' इति क. पाठः ॥

त्यब्नेर्ध्रुवे । त्यब्नेर्ध्रुवे वक्तव्यः । नित्यः ॥

निसो गते । त्यब्वक्तव्य इति । निष्ट्यः ॥

अरण्याण्णः । अरण्याण्णो वक्तव्यः । आरण्याः सुमनसः ॥

दूरादेत्यः । दूरादेत्यो वक्तव्यः । दूरेत्यः ॥

उत्तरादाहञ् । उत्तरादाहञ् वक्तव्यः । औत्तराहः ॥

( प्रदीपः ) अमेहेति । योऽव्ययात्त्यब्विधिः सोऽमादिभ्य एव स्मृत इत्यर्थः । अमाशब्दः सहार्थे सामीप्ये च वर्तते । तेन समीपे भवतीत्यमात्यः ॥ औत्तराह इति । 'आहि च दूरे' 'उत्तराच्च' इत्याहिप्रत्ययः । उत्तराहि भवः—उपरिष्टाद्भवः—परतो भव इत्यण् । 'अव्ययानां भमात्रे' इति टिलोपः । परतःशब्दः 'विभाषा परावराभ्याम्' इत्यतसुजन्तः ॥ त्यब्नेर्ध्रुवे इति । ध्रुवं नियतमुच्यते ॥ निसो गत इति । निर्गतो वर्णाश्रमेभ्य इति निष्ट्यः—चण्डालादिः । 'ह्रस्वात्तादौ तद्धिते इति सकारस्य मूर्धन्यस्तकारस्य ष्टुत्वम् ॥ अरण्याण्ण इति । अणि सति ङीप् स्यादिति णो विधीयते ॥

( उद्योतः ) अमादिभ्यो यस्त्यब्विधिः सोऽव्ययादित्यन्वयेऽप्रसिद्धिः, वैयर्थ्यं चेत्यत आह—योऽव्ययादिति ॥ ध्रुवं नियतमिति ॥ ध्वंसाप्रतियोगित्वादिकमित्यर्थः ॥ 'निर्गतः' इत्यस्य कस्मादित्याकाङ्क्षायाः सत्त्वादाह—वर्णाश्रमेभ्य इति ॥ नन्वरण्यात्सामान्यसूत्रेणाण् सिद्ध एवेत्यत आह—अणीति । एतदर्थमेव भाष्ये स्त्रिया मुदाहृतम् ॥

( ५४०३ संग्रहवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि ॥ * ॥

( भाष्यम् ) अव्ययात्त्यबित्यत्राविष्ट्यस्य छन्दस्युपसंख्यानं कर्तव्यम् । आविष्ट्यो वर्द्धते चारुरासु[1] ॥

( प्रदीपः ) आविष्ट्य इति । आविश्शब्दाद्वृद्धाच्छे प्राप्ते त्यब्विधिः । आविर्भूत आविष्ट्यः ॥

( उद्योतः ) परिगणनमभिप्रेत्याह—वृद्धाच्छे इति ॥

(५४०४ विप्रतिषेधेन छविधिबोधकवार्तिकम् ॥ २ ॥)

## ॥*॥ अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधेर्वृद्धाच्छो भवति विप्रतिषेधेन ।

अव्ययात्त्यब्भवतीत्यस्यावकाशः—अमात्यः ।

वृद्धाच्छस्यावकाशः—शालीयः, मालीयः ।

आरादुभयं प्राप्नोति, आरातीयः ।

तीरोत्तरपदादञ् भवतीत्यस्यावकाशः—कखे[2]तीर—काखतीरी ।

छस्य स एव ।

वायसतीरादुभयं प्राप्नोति, वायसतीरीयः ॥

रूप्योत्तरपदाञ्ञो भवतीत्यस्यावकाशः—चणा[3]रूप्य—चाणाररूप्या ।

छस्य स एव ।

माणिरूप्यादुभयं प्राप्नोति । तं चापि छं परत्वाद्योपधलक्षणो वुञ्बाधते । माणिरूप्यकः ॥

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः—शिवपुर—शैवपुरः ।

छस्य स एव ।

वाडवकर्षादुभयं प्राप्नोति, वाडवकर्षीयः ।

कोपधादण् भवतीत्यस्यावकाशः—निलीनक—नैलीनकः ।

छस्य स एव ।

औल्लूकादुभयं प्राप्नोति, औल्लूकीयः ॥

( प्रदीपः ) आरातीय इति । असति परिगणनेऽत्र प्राप्नोति ॥ योपधलक्षण इति । 'धन्वयोपधाद्वुञ्' इति वुञ् । परत्वग्रहणेन बाधकत्वं लक्ष्यते । अपवादत्वाद्धि छस्य वुञ् बाधकः । वार्तिककारेण तु प्राप्तिमात्राश्रयेण छस्य रूप्योत्तरपदलक्षणस्य च ञ्यस्य विप्रतिषेध उक्तः ॥ शिवपुरमिति । शिवस्य पुरमिति षष्ठीसमासः, समासस्वरेणान्तोदात्तत्वम् । 'प्रस्थपुरवहान्ताच्च' इत्यत्र 'वृद्धात् प्राचाम्' इत्यतो वृद्धाधिकारादत्र वुञ् न भवति ॥ कोपधादिति । 'प्रस्थोत्तरपदपलद्यादिकोपधादण्' इत्ययमणिववक्षितः । एतस्माद्धि परश्छः । यस्तु 'कोपधाच्च' इत्यण्, स जनपदवुञोऽपवादः । तस्यापि 'वृद्धादकेकान्तखोपधात्' इत्यत्र खोपधग्रहणात् छो बाधकः, परत्वात् ॥ औल्लूकादिति । उल्लूका अस्मिन् सन्तीति 'तदस्मिन्नस्ति' इत्यण् । औल्लूको नाम ग्रामः ॥

( उद्योतः ) ननु परिगणनादत्र त्यपः प्राप्तिरेव नेत्यत आह—असतीति । परिगणनं भाष्यकृतः, अन्यवार्तिककारस्य वा—इति विप्रतिषेधवार्तिककारस्तन्न जानातीति भावः ॥ ननु 'धन्वयोपधात्' इत्यत्र 'वृद्धात्' इत्यनुवृत्तेरनवकाशत्वात्परत्वोक्तिरसंगतेत्यत आह—परत्वेति ॥ नन्वेवं 'रूप्योत्तरपदाञ्ञ्प्रत्ययात् वृद्धाच्छः परत्वात्' इति वार्तिकासंगतिरत आह—वार्तिकेति ॥ 'पुरे प्राचाम्' इत्यनेन पुरान्तसमासे पूर्वपदस्यान्तोदात्तत्वविधानान्नायमन्तोदात्तोऽत आह—शिवस्येति । तच्च अधिकाराद्बहुव्रीहिविषयमिति भावः ॥ ननु कथमयमञोऽवकाशः, परत्वेन पुरान्तलक्षणवुञापत्तेरत आह—प्रस्थेति ॥ वुञोऽपवाद इति । स तु 'वृद्धाच्छः' इत्यतः पर इति भावः ॥ कोपधाग्रहणादिति । अकेकान्तस्थाने कोपधग्रहणं कर्तव्यमिति वार्तिकादिति भावः । एवञ्च तत्रापि फले न विशेषो यद्यपि, तथाऽपि

---

१ छ. पुस्तके 'वर्धते चारुः' इत्येव पाठः ॥

२ 'करवतीर' इति च. झ. ञ. पाठः ॥

३ 'चणारूप्य, वणारूप्य' इति च. झ. ञ. पाठः ॥

'वृद्धाच्छः' इति वार्तिकमसंगतं स्यादिति तात्पर्यम् ॥ केचित्तु-वृद्धाच्छपदेनोभयोरपि संग्रहं मन्वते । 'वृद्धादके' इति सूत्रस्थ-कोपधादित्यस्य जनपदतदवधिविषयस्यात्र प्राप्तिरपि नेत्याह—औलुको नाम ग्राम इति ॥

( ५४०५ ठञ्ञिठोर्विप्रतिषेधबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तेभ्यष्ठञ्ञिठौ ॥ * ॥

( भाष्यम् ) तेभ्यस्त्यबादिभ्यष्ठञ्ञिठौ भवतो विप्रतिषेधेन ।

अव्ययात्त्यब्भवतीत्यस्यावकाशः—अमात्यः ।

ठञ्ञिठयोरवकाशः—कारतन्तविकी[1], कारतन्तविका ।

आरान्नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति—आरात्की, आरात्का ॥

तीरोत्तरपदादञ्भवतीत्यस्यावकाशः-कैरवतीर-कारवतीरीं[2] ।

ठञ्ञिठयोः स एव ।

कास्तीरो नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति-कास्तीरिकी, कास्तीरिका ॥

रूप्योत्तरपदाञ्ञ्यो भवतीत्यस्यावकाशः—चणाररूप्य—चाणाररूप्या ।

ठञ्ञिठयोः स एव ।

दासरूप्यं[3] नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । तौ चापि ठञ्ञिठौ परत्वाद्योपधलक्षणो वुञ् बाधते । दासरूप्यकः ॥

उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादञ्भवतीत्यस्यावकाशः—शिवपुर—शैवपुरः ।

ठञ्ञिठयोः स एव ।

शाकलं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । शाकलिकी, शाकलिका ।

कोपधादण्भवतीत्यस्यावकाशः—निलीनक—नैलीनकः ।

ठञ्ञिठयोः स एव ।

सौसुकं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति । तौ चापि ठञ्ञिठौ परत्वात्कोपधलक्षणश्छो बाधते । सौसुकीयः ॥

( प्रदीपः ) तेभ्य इति । ये छस्य बाध्या अव्ययादिलक्षणाः प्रत्ययास्तेभ्य इत्यर्थः ॥ आरात्कीति । परिगणनानपेक्षयाऽयं विप्रतिषेध उक्तः ॥ शाकलमिति । शाकलानि सन्त्यस्मिन्निति पूर्ववदण् ॥ कोपधलक्षण इति । 'वृद्धादकेकान्त' इत्यत्राकेकान्तग्रहणे कोपधग्रहणं कर्तव्यमिति विहितः ॥

( उद्द्योतः ) तच्छब्दपरामर्श्यमनुगतं रूपं दर्शयति—ये इति ॥ परिगणनानपेक्षयेति । ग्रामवाचिनोऽप्यव्ययत्वमित्याश्रित्येदम् ॥ पूर्ववदिति । 'तदस्मिन्नस्ति' इत्यनेन । अत्र सर्वत्र 'वाहीकग्रामेभ्यश्च' इति ठञ्ञिठौ ॥

( ५४०६ विप्रतिषेधवैफल्यबोधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादितरेषाम् ॥ * ॥

( भाष्यम् ) न वाऽर्थो विप्रतिषेधेन ।

किं कारणम् ?

ठञादीनां छापवादत्वात् । ठञादयश्छापवादाः, तद्विषये चाभावादितरेषाम् । तद्विषये-छविषये त्यबादीनामभावः ॥

( प्रदीपः ) न वेति । यदुक्तं 'तेभ्यष्ठञ्ञिठौ' इति तन्निराकरोति । अव्ययादिलक्षणानां प्रत्ययानां परत्वाच्छेन बाधितानां छापवादैष्ठञादिभिरुत्कृष्टबलैः सह संप्रधारणा नास्तीत्यर्थः ॥

( उद्द्योतः ) छापवादैरिति । 'वाहिकग्रामेभ्यश्च' इत्यत्र वृद्धादित्यनुवृत्तेरिति भावः ॥ ठञादिभिरिति । आदिना ञिठः । बहुवचनं प्रयोगबहुत्वाभिप्रायम् ॥

( ५४०७ विप्रतिषेधवैफल्यबोधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) अयं चाप्ययुक्तो विप्रतिषेधः—योऽयं कोपधादणः, छस्य च ॥

किं कारणम् ?

कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् । सिद्धोऽत्राण् उत्सर्गेणैव, तस्य पुनर्वचन एतत्प्रयोजनं येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् । स यथैव तदपवादमञं बाधते, एवं छमपि बाधेत ॥

( प्रदीपः ) अञं बाधत इति । उदीच्यग्रामलक्षणमित्यर्थः ॥

( उद्द्योतः ) भाष्ये—कोपधादणः पुनरिति । पूर्ववार्तिकोक्तो यः कोपधाणछयोर्विप्रतिषेधः 'औलूकीयः' इत्येतद्विषयस्तत्खण्डकमिदम् । तदाह—अयञ्चापीति ॥ तदपवादम्—अणपवादम् ॥ उदीच्यग्रामलक्षणमिति । 'प्रस्थोत्तरपद' इति कोपधलक्षणाणिति शेषः । अपवादत्वाच्च सोऽञो बाधकः, तत्र उदीच्यग्रामाच्च' इति संपूर्णसूत्रानुवृत्तेरिति भावः ॥

( ५४०८ विप्रतिषेधाभावसमर्थकं वार्तिकम् ॥ ६ ॥ )

॥ * ॥ तस्मादन्तोदात्ते कोपधप्रतिषेधः ॥ * ॥

( भाष्यम् ) तस्मादन्तोदात्ते कोपधादञः प्रतिषेधो वक्तव्यः ॥

---

1 'कारन्तविकी' इति छ. पाठः ॥

2 'कक्षतीर' इति छ. पाठः ॥

3 'दाशरूप्यं' इति च. झ. पाठः ॥

( प्रदीपः ) **तस्मादिति** । 'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तादकोपधात्' इति वक्तव्यमित्यर्थः ॥

( उद्द्योतः ) **वक्तव्यमित्यर्थ इति** । एवं हि अञि प्रतिषिद्धे यो यतः प्राप्नोति स ततो भविष्यतीति छः सिद्ध इत्यर्थः ॥

( विप्रतिषेधसमर्थकं भाष्यम् )

**न वक्तव्यः ।**

**मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवं कोपधादण् अञं बाधिष्यते, छं न बाधिष्यते ॥**

( प्रदीपः ) भाष्यकारो विप्रतिषेधं समर्थयितुमाह—**न वक्तव्य इति** ॥

( ५४०९ विप्रतिषेधबोधकवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ छादोर्देशे कालाट्ठञ् ॥ * ॥

( भाष्यम् ) **छात् "ओर्देशे ठञ्" ( ४।२।११९ ) "कालाट्ठञ्" (४।३।११) इत्येतद्भवति विप्रतिषेधेन ।**

**छस्यावकाशः—शालीयः, मालीयः ।**

**ओर्देशे ठञ्भवतीत्यस्यावकाशः— निषाहकर्षूर्नाम देशः—नैषाहकर्षुकः ।**

**इहोभयं प्राप्नोति—दाक्षिकर्षुकः ॥**

**कालाट्ठञ्भवतीत्यस्यावकाशः—आर्द्धमासिकम्, सांवत्सरिकम् ।**

**छस्य स एव ।**

**मासादुभयं प्राप्नोति, मासिकम् ॥**

( प्रदीपः ) **दाक्षिकर्षुक इति** । दाक्षिकर्षूर्नाम वाहीकग्रामः, 'तत्र भवः' इति ठञ् । 'इसुसुक्तान्तात्कः' 'केऽणः' इति ह्रस्वः ॥

( उद्द्योतः ) वृद्धत्वं दर्शयितुमाह—**दाक्षिकर्षूरिति** । अत्रास्य ठञोऽवकाशप्रदर्शनभाष्ये 'निषादकर्षूः' इति पाठः । एतदुत्तरभाष्ये 'नक्षत्राण्छात्परत्वात्' 'ट्युट्युलौ च छात्परत्वात्' इति विप्रतिषेधद्वयमुक्तम्, तदेकदेश्युक्तिः, परत्वेन छबाधकठञपवादत्वोत्कृष्टबलानामणादीनां दुर्बलेन छेन सम्प्रधारणाया अयोगात् । तद्विधावपि कालादिति वर्तत इति **वृत्त्यनुसारिणः** । वस्तुतस्तु ठञपवादत्वेऽपि परस्परपरिहारेण चारितार्थ्यस्यैव सम्प्रधारणाबीजत्वेन भाष्यासङ्गत्यभाव इति दिक् ॥

( ५४१० विप्रतिषेधबोधकवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ नक्षत्रादण् ॥ * ॥

( भाष्यम् ) **नक्षत्रादण् छाद्भवति विप्रतिषेधेन ।**

**अणोऽवकाशः—तैषः, पौषः ।**

**छस्य स एव ।**

**स्वातेरुभयं प्राप्नोति, सौवातः ॥**

( प्रदीपः ) **सौवात इति** । अतेः सुपूर्वात् 'अज्यतिभ्याम्' इतीण्प्रत्ययः । स्वातिना युक्तः काल इत्यण् । 'लुबविशेषे' इति लुप् । स्वातौ भव इति सन्धिवेलादिसूत्रेणाण् । जातेऽर्थे तु लुका भाव्यम् 'श्रविष्ठाफल्गुनी' इत्यादिना ॥

( उद्द्योतः ) **श्रविष्ठेति** । तत्र सूत्रे 'स्वातितिष्य' इति ह्रस्वान्तः पाठ इति भावः ॥

( ५४११ विप्रतिषेधबोधकवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ अव्ययाट्ट्युट्युलौ ॥ * ॥

( भाष्यम् ) **अव्ययाट्ट्युट्युलौ छाद्भवतो विप्रतिषेधेन ।**

**ट्युट्युलोरवकाशः—दोषातनम्, दिवातनम् ।**

**छस्य स एव ।**

**प्रातःशब्दादुभयं प्राप्नोति, प्रातस्तनम् ॥**

( ५४१२ विप्रतिषेधबोधकवार्तिकम् ॥ १० ॥ )

## ॥ * ॥ शरीरावयवाद्यत् ॥ * ॥

( भाष्यम् ) **शरीरावयवाद्यच्छाद्भवति विप्रतिषेधेन ।**

**यतोऽवकाशः—दन्त्यम्, ओष्ठ्यम् ।**

**छस्य स एव ।**

**पादशब्दादुभयं प्राप्नोति, पद्यम् ॥**

( प्रदीपः ) **पद्यमिति** । 'पद्यत्यतदर्थे' इति पद्भावः ॥

( ५५१३ विप्रतिषेधबोधकवार्तिकम् ॥ ११ ॥ )

## ॥ * ॥ वर्गान्ताच्चाशब्दे यत्खौ ॥ * ॥

( भाष्यम् ) **वर्गान्ताच्चाशब्दे यत्खौ छाद्भवतो विप्रतिषेधेन ।**

**यत्खयोरवकाशः—अक्रूरवर्ग्यः, अक्रूरवर्गीणः ।**

**छस्य स एव ।**

**वासुदेववर्गादुभयं प्राप्नोति, वासुदेववर्ग्यः, वासुदेववर्गीणः ॥**

( प्रदीपः ) **अक्रूरवर्ग्य इति** । अक्रूरो नाम क्षत्रियः, भगवान् वासुदेवो वा ॥

( उद्द्योतः ) **वासुदेवो वेति** । 'अक्रूरः पेशलो दक्ष' इति सहस्रनामसु पाठादिति भावः ॥

( ५४१४ विप्रतिषेधबोधकवार्तिकम् ॥ १२ ॥ )

## ॥ * ॥ बह्वचोऽन्तोदात्ताट्ठञ् ॥ * ॥

( भाष्यम् ) **"बह्वचोऽन्तोदात्ताट्ठञ्" (४।३।६७) छाद्भवति विप्रतिषेधेन । ठञोऽवकाशः—नतानत—नातानतिकः ।**

**छस्य स एव ।**

**सामस्तशब्दादुभयं प्राप्नोति, सामस्तिकः ॥**

( प्रदीपः ) **नातानतिक इति** । नतः—अनुदात्तः । अनतः—उदात्तः । ततो द्वन्द्वः, समासस्वरेणान्तोदात्तः । **सामस्तं** नाम शास्त्रम् ॥

( उद्द्योतः ) उदात्त इति । तत्तत्प्रतिपादकशास्त्रं च नतानतशब्दाभ्यामुच्यते, 'तस्य व्याख्यान' इत्यधिकारे 'बह्वचोऽन्तोदात्तात्' इत्यस्य पाठात् ॥

( ५४१५ विप्रतिषेधबोधकवार्तिकम् ॥ १३ ॥ )

॥ * ॥ आयस्थानेभ्यष्ठक् ॥ * ॥

( भाष्यम् ) आयस्थानेभ्यष्ठक् छाद्भवति विप्रतिषेधेन ।

ठकोऽवकाशः—शौल्किकम्, गौल्मिकम् ।

छस्य स एव ।

आपणादुभयं प्राप्नोति, आपणिकम् ॥

( प्रदीपः ) आपणिकमिति । आपणादागतमिति ठक् ॥

( ५४१६ विप्रतिषेधबोधकवार्तिकम् ॥ १४ ॥ )

॥ * ॥ विद्यायोनिसंबन्धेभ्यो वुञ् ॥ * ॥

( भाष्यम् ) "विद्यायोनिसम्बन्धेभ्यो वुञ्" (४।३।७७) छाद्भवति विप्रतिषेधेन ।

वुञोऽवकाशः—औपाध्यायकम्, पैतामहकम् ।

छस्य स एव ।

इहोभयं प्राप्नोति, आचार्यकम्, मातुलकम् ॥

( ५४१७ विप्रतिषेधोपपादकवार्तिकम् ॥ १५ ॥ )

॥ * ॥ ऋतष्ठञ् ॥ * ॥

( भाष्यम् ) ऋतष्ठञ् (४।३।७८) छाद्भवति विप्रतिषेधेन ।

ठञोऽवकाशः—हौतृकम्, स्वास्तृकम् ।

छस्य स एव ।

इहोभयं प्राप्नोति, शास्तृकम्, भ्रातृकम् ॥

( प्रदीपः ) स्वास्तृकमिति । उणादीनां क्वचिद् व्युत्पत्तिनिमित्तकार्याभावात् 'नप्त्राभ्याम्' इति न प्रवर्तते ॥ शास्तृकमिति । शासेस्तृन्तृचौ । 'शंसिक्षदादिभ्यः संज्ञायां चानिटौ' इति तृन्प्रत्ययः ॥

( ५४१८ विप्रतिषेधवार्तिकम् ॥ १६ ॥ )

॥ * ॥ रूप्यमयटौ ॥ * ॥

( भाष्यम् ) रूप्यमयटौ छाद्भवति विप्रतिषेधेन ।

रूप्यमयटोरवकाशः—देवदत्तरूप्यम्, देवदत्तमयम् ।

छस्य स एव ।

वायुदत्तादुभयं प्राप्नोति, वायुदत्तरूप्यम्, वायुदत्तमयम् ॥

( ५४१९ विप्रतिषेधवार्तिकम् ॥ १७ ॥ )

॥ * ॥ अचित्ताट्ठक् ॥ * ॥

( भाष्यम् ) अचित्ताट्ठक् छाद्भवति विप्रतिषेधेन ।

ठकोऽवकाशः—आपूपिकः, शाष्कुलिकः, मौदकिकः ।

छस्य स एव ।

पायसादुभयं प्राप्नोति, पायसिकः ॥

( प्रदीपः ) पायसिक इति । पयसि संस्कृतमित्यण्, ततष्ठक् ॥

( उद्द्योतः ) ततष्ठगिति । 'भक्तिः' इत्यधिकारे 'अचित्ताददेशकालाट्ठक्' इत्यनेनेति भावः ॥

( ५४२० विप्रतिषेधवार्तिकम् ॥ १८ ॥ )

॥*॥ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥*॥

( भाष्यम् ) "गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्" (४।३।९९) छाद् भवति विप्रतिषेधेन ।

वुञोऽवकाशः—ग्लौचुकायनकः, त्रैगर्तकः ।

छस्य स एव ।

इहोभयं प्राप्नोति, गार्गकः, वात्सकः, मालवकः ॥

( प्रदीपः ) गार्गक इति । गार्ग्यो भक्तिरस्येति वुञ् । 'आपत्यस्य' इति यलोपः ॥ मालवक इति । मालवस्यापत्यम् । 'वृद्धेत्कोसल' इति ञ्यङ् । पूर्ववद्वुञ्यलोपौ ॥

( उद्द्योतः ) मालवः—क्षत्रियः ॥

( ५४२१ विप्रतिषेधवार्तिकम् ॥ १९ ॥ )

॥ * ॥ णिनिरन्तेवासिब्राह्मणेभ्यः ॥ * ॥

( भाष्यम् ) णिनिरन्तेवासिब्राह्मणेभ्यश्छाद्भवति विप्रतिषेधेन ।

णिनेरवकाशः—हारिद्रविणः, तौम्बुरविणः, भाल्लविनः ।

छस्य स एव ।

इहोभयं प्राप्नोति, आरुणिनः, शाट्यायनिनः ॥

( प्रदीपः ) भाल्लविन इति । भल्लुना प्रोक्तमधीयत इति 'पुराणप्रोक्तेषु' इति णिनिः । तदन्तादध्येतर्यण् । तस्य 'प्रोक्ताल्लुक्' इति लुक् ॥ आरुणिन इति । आरुणिर्वैशंपायनान्तेवासी । तेन प्रोक्तं छन्दोऽधीयत इति णिनिः ॥ शाट्यायनिन इति । शटस्यापत्यं शाट्यः । तस्यापत्यं युवा 'यञिञोश्च' इति फक् । शाट्यायनेन प्रोक्तं ब्राह्मणमधीयत इत्यर्थविवक्षायां यूनि लुक् । 'फक्फिञोरन्यतरस्याम्' इति पक्षे लुगभावः । 'पुराणप्रोक्तेषु' इति णिनिः ॥

( उद्द्योतः ) हरिद्रुतुम्बुर्वोर्वैशंपायनान्तेवासित्वेऽपि भल्लोस्तत्त्वाभावादाह—भल्लुनेति । णिनिद्वयस्यापि विप्रतिषेधो भाष्ये उक्तः, 'अन्तेवासिब्राह्मणेभ्यः' इत्युक्तेः । ब्राह्मणेभ्य इत्यस्य ब्राह्मणबोधकप्रत्ययप्रकृतिभ्य इत्यर्थः ॥

( ५४२२ विप्रतिषेधवार्तिकम् ॥ २० ॥ )

॥ * ॥ पत्रपूर्वादञ् ॥ * ॥

(भाष्यम्) "पत्रपूर्वादञ्" (४।३।१२२) छाद्भवति विप्रतिषेधेन।

अञोऽवकाशः—उष्ट्र—औष्ट्रम्, औष्ट्ररथम्।

छस्य स एव।

इहोभयं प्राप्नोति, वामी—वामम्, वामीरथम्॥

(प्रदीपः) औष्ट्ररथमिति। 'रथाद्यत्' 'पत्रपूर्वात्' इत्यञ्॥ वामीति। वामी वडवा तस्या वाह्यमिति 'पत्राध्वर्यु' इत्यञ्॥

(उद्द्योतः) भाष्ये—पत्रपूर्वादञित्यनेन—'पत्रपूर्वादञ्' 'पत्राध्वर्युपरिषदश्च' इत्युभयोरपि ग्रहणम्, द्वयोरप्युदाहरणात्॥

( ५४२३ विप्रतिषेधवार्तिकम् ॥ २१ ॥ )

॥ * ॥ द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ * ॥

(भाष्यम्) "द्वन्द्वाद्वुन्वैरमैथुनिकयोः" (४।३।१२५) छाद्भवति विप्रतिषेधेन।

वुनोऽवकाशः—अहिनकुलिका।

छस्य स एव।

इहोभयं प्राप्नोति, काकोलूकिका, श्वावराहिका॥

(प्रदीपः) श्वावराहिकेति। श्वा च वराहश्चेति द्वन्द्वः, 'येषां च विरोधः' इत्येकवद्भावः। 'शुनो दन्तदंष्ट्रा' इति दीर्घः। ततो वैरे वुन्॥

(उद्द्योतः) श्वावराहस्य वृद्धत्वमुपपादयति—श्वा चेति॥ शुनो दन्तेति। 'अन्येषामपि दृश्यते' इत्येतत्प्रपञ्चभूताभियुक्तोक्तिरियम्॥

( ५४२४ विप्रतिषेधवार्तिकम् ॥ २२ ॥ )

॥ * ॥ गोत्रचरणाद् वुञ् ॥ * ॥

(भाष्यम्) "गोत्रचरणाद्वुञ्" (४।३।१२६) छाद्भवति विप्रतिषेधेन।

वुञोऽवकाशः—ग्लौचुकायनकम्, म्लौचुकायनकम्। काठकम्, कालापकम्।

छस्य स एव।

इहोभयं प्राप्नोति, गार्गकम्, वात्सकम्। मौदकम्, पैप्पलादकम्॥

(उद्द्योतः) भाष्ये—मौदकमिति। मौदपैप्पलादौ शाखाऽध्येतृवाचिनौ॥

( ५४२५ विप्रतिषेधवार्तिकम् ॥ २३ ॥ )

॥ * ॥ कण्वादीञोऽण्विधेः ॥ * ॥

(भाष्यम्) 'कण्वादिभ्योऽण् भवति' 'इञोऽण् भवति' इत्येतस्माद् वुञ् भवति विप्रतिषेधेन। कण्वादिभ्योऽण् भवति इञोऽण् भवतीत्यस्यावकाशः—काण्वाः—दण्डमाणवाः, दाक्षाः—दण्डमाणवाः।

वुञः स एव।

इहोभयं प्राप्नोति, काण्वकम्, दाक्षकम्॥

(प्रदीपः) काण्वा इति। काण्व्यो गर्गादियञन्तः। तस्य 'दण्डमाणवा' इत्यण्। वुञत्र 'न दण्डमाणवान्तेवासिषु' इति निषिद्धः। 'पुरस्तादपवादाः' इति न्यायेनाण् छं बाधते न वुञमिति विप्रतिषेध उक्तः॥

(उद्द्योतः) ननु कण्वाद्यणश्छस्येव वुञोऽप्यपवादत्वात्कथं विप्रतिषेधोऽत आह—पुरस्तादिति॥

( ५४२६ विप्रतिषेधवार्तिकम् ॥ २४ ॥ )

॥ * ॥ ठञ्ञिठाभ्यामोर्देशे ठञ् ॥ * ॥

(भाष्यम्) ठञ्ञिठाभ्याम् "ओर्देशे ठञ्" (४।२।११९) इत्येतद्भवति विप्रतिषेधेन।

ठञ्ञिठयोरवकाशः—कारतन्तविकी, कारतन्तविका।

ओर्देशे ठञ् भवतीत्यस्यावकाशः—निषादकर्षूः—नैषादकर्षुकः।[2]

इहोभयं प्राप्नोति, नापितवास्तुकः। ठञ् भवति विप्रतिषेधेन॥

(उद्द्योतः) भाष्ये—ठञ्ञिठाभ्यामिति। 'काश्यादिभ्यष्ठञ्ञिठौ' 'वाहीकग्रामेभ्यश्च' इति विहिताविलर्थः॥ कारतन्तव नापितवास्तू वाहिकग्रामौ॥

( ५४२७ विप्रतिषेधाभावोपपादकं वार्तिकम् ॥२५॥ )

॥ * ॥ न वा ठञोऽनवकाशत्वात् ॥ * ॥

(भाष्यम्) न वाऽर्थो विप्रतिषेधेन।[1]

किं कारणम्?

ठञोऽनवकाशत्वात्। अनवकाशष्ठञ् ठञ्ञिठौ बाधिष्यते।

ननु चेदानीमवकाशः प्रकृतः-यदवृद्धमनुवर्णान्तं वाहीकग्रामः स ठञ्ञिठयोरवकाशः।

यदवृद्धमुवर्णान्तमवाहीकग्रामः स ठञोऽवकाशः।

यद्वृद्धमुवर्णान्तं वाहीकग्रामश्च तस्मादुभयं प्राप्नोति॥

एवं तर्हि नायमस्य विप्रतिषेधस्योपालम्भः।

कस्य तर्हि?

'छादोर्देशे कालाट्ठञ्' इत्येतस्य।

१ 'विप्रतिषेधो युक्तः' इति झ. पाठः॥

२ 'निषादकर्षूः-नैषादकर्षुकः' इति छ. पाठः॥

ननु च तत्राप्यवकाशः प्रक्लृप्तः ।

यद्वृद्धमनुवर्णान्तं स छस्यावकाशः ।

यदवृद्धमुवर्णान्तं स ठञोऽवकाशः ।

यद्वृद्धमुवर्णान्तं देशश्च तस्मादुभयं प्राप्नोति ॥

एवं तर्हि "वृद्धात् प्राचाम्" (४।२।१२०) इत्यनेन वृद्धग्रहणेन किं क्रियते ?

यावद् ब्रूयात्पूर्वस्मिन् योगे वृद्धाच्चावृद्धाच्चेति ।

यदेतस्मिन् योगे वृद्धग्रहणं तदनवकाशं तस्यानवकाशत्वादयुक्तो विप्रतिषेधः ॥

( प्रदीपः ) एवं तर्हीति । छठञोरपि विप्रतिषेधो नास्तीति दर्शयति, 'वृद्धात्प्राचाम्' इति ठञो विशेषविहितत्वादित्यर्थः ॥ यावद् ब्रूयादिति । यदि 'वृद्धाच्छः' इत्यतो वृद्धग्रहणम् 'ओर्देशे' इत्यत्रानुवर्तेत तदा 'वृद्धात्प्राचाम्' इति सूत्रं न कुर्यात् । एतद्धि नियमार्थं कृतं—प्राग्देशवाचिनो वृद्धादेव यथा स्याद्, अवृद्धान्मा भूद्—माल्लवास्तव इति । न च वृद्धग्रहणानुवृत्ताववृद्धात्प्राप्तिष्ठञोऽस्तीति किं नियमार्थेन सूत्रेणेत्यर्थः ॥

( उद्योतः ) छठञोरपीति । 'ओर्देशे' इति ठञ् ॥ भाष्ये—कालाट्ठञ्तु वार्तिकोच्चारणप्रसंगेनोक्तः ॥ ननु 'ओर्देशे' इत्यत्र 'वृद्धात्' इत्यस्य निवृत्तावपि वृद्धाच्चावृद्धाच्च तेनैव तत्सिद्धौ 'वृद्धात्प्राचाम्' इति व्यर्थमत आह—तद्धीति ॥ वृद्धात्प्राचामिति ठञ इति । इत्येतत्सामर्थ्येन 'ओर्देशे ठञ्' इत्यनेन वृद्धाट्ठञो विशेषविहितत्वानुमानादित्यर्थः ॥ माल्लवास्तव इति । मल्लवास्तुः—प्रकृतिः ॥ न चेति । एवञ्चैतत्सामर्थ्यात्पूर्वसूत्रेण वृद्धेष्वपि विधानानुमानात्तस्यानवकाशत्वेनैव बाधकत्वोपपत्तेर्विप्रतिषेधोऽयुक्त इत्यर्थः ॥

( ५४२८ विप्रतिषेधवार्तिकम् ॥ २६ ॥ )

## ॥ * ॥ योपधप्रस्थादीनां वुञ् ॥ * ॥

( भाष्यम् ) योपधप्रस्थादीनां वुञ् ठञ्ञिठाभ्यां भवति विप्रतिषेधेन ।

योपधाद्वुञ् भवतीत्यस्यावकाशः—साङ्काश्य—साङ्काश्यकः, काम्पिल्यकः ।

ठञ्ञिठयोः स एव ।

दासरूप्यं नाम वाहीकग्रामः, तस्मादुभयं प्राप्नोति, दासरूप्यकः ॥

प्रस्थान्ताद्वुञ् भवतीत्यस्यावकाशः—मालाप्रस्थकः ।

ठञ्ञिठयोः स एव ।

पातानप्रस्थं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति, पातानप्रस्थकः ॥

पुरान्ताद् वुञ् भवतीत्यस्यावकाशः-काञ्चीपुर-काञ्चीपुरकः ।

ठञ्ञिठयोः स एव ।

नान्दीपुरं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति, नान्दीपुरकः ॥

वहान्ताद्वुञ्भवतीत्यस्यावकाशः—वातवह—वातवहकः ।

ठञ्ञिठयोः स एव ।

कौकुडीवहं नाम वाहीकग्रामस्तस्मादुभयं प्राप्नोति, कौकुडीवहकः ॥

( ५४२९ विप्रतिषेधवार्तिकम् ॥ २७ ॥ )

## ॥ * ॥ ओश्च ठञः ॥ * ॥

( भाष्यम् ) ओश्च ठञो वुञ् भवति विप्रतिषेधेन ।

ओष्ठञोऽवकाशः—नैषादकर्षुकः ।

वुञः स एव ।

आप्रीतमायोरुभयं प्राप्नोति, आप्रीतमायवकः ॥

( ५४३० विप्रतिषेधवार्तिकम् ॥ २८ ॥ )

## ॥ * ॥ जनपदानामकाणौ ॥ * ॥

( भाष्यम् ) जनपदानामकाणावोष्ठञो भवतो विप्रतिषेधेन ।

अकस्यावकाशः—अङ्गाः—आङ्गकः ।

ओष्ठञः स एव ।

जिह्ववो नाम जनपदस्तस्मादुभयं प्राप्नोति, जैह्ववकः ।

अणोऽवकाशः—ऋषिक—आर्षिकः ।

ओष्ठञः स एव ।

इक्ष्वाकवो नाम जनपदस्तस्मादुभयं प्राप्नोति, ऐक्ष्वाकः ॥

( उद्योतः ) भाष्ये—अकाणाविति । 'अवृद्धादपि बहुवचनविषयात्' इत्यकः । 'कोपधादण्' इत्यण् ॥

( ५४३१ विप्रतिषेधाभाववार्तिकम् ॥ २९ ॥ )

## ॥ * ॥ न वा वुञपवादत्वादणः ॥ * ॥

( भाष्यम् ) न वाऽर्थो विप्रतिषेधेन ।

किं कारणम् ?

वुञपवादत्वादणः । वुञपवादोऽण्, वुञ्च-ओष्ठञं बाधिष्यते ॥

( प्रदीपः ) वुञ्चेति । परत्वादिति भावः ॥

(उद्योतः) न वाऽर्थो विप्रतिषेधेनेति । ओष्ठञणोरिति शेषः ॥

१ छ. पुस्तके नास्य पाठः ॥

२ 'दाशरूप्यं-दाशरूप्यकः' इति च. झ. पाठः ॥

३ 'पातालप्रस्थं-पातालप्रस्थः' इति च. झ. पाठः ॥

४ 'कौकुटीवहं-कौकुटीवहः' इति च. झ. पाठः ॥

५ 'नैषाहकर्षुकः' इति छ. पाठः ॥

( ५४३२ विप्रतिषेधवार्तिकम् ॥ ३० ॥ )

**॥ * ॥ कोपधादणोऽकेकान्ताच्छः ॥ * ॥**

(भाष्यम्) कोपधादण् भवतीत्येतस्मादकान्ताच्छो भवति विप्रतिषेधेन ।

कोपधादण्भवतीत्यस्यावकाशः—निलीनक-नैलीनकः ।

अकेकान्ताच्छो भवतीत्यस्यावकाशः—आरीहणकम्—आरीहणकीयः ।

ब्राह्मणको नाम जनपदस्तस्मादुभयं प्राप्नोति, ब्राह्मणकीयः ॥

( प्रदीपः ) **कोपधादण इति** । जनपदवाचिनः कोपधाद्योऽण्विधीयते तस्मादित्यर्थः ॥ **आरीहणकमिति** । अरीहणेन निर्वृत्तमिति 'वुञ्छणकठ' इति वुञ् । अयञ्च जनपदवाचीति कोपधादणो न विषयः ॥ **ब्राह्मणक इति** । 'ब्राह्मणकोष्णिके संज्ञायाम्' इत्यत्र ब्राह्मणा आयुधजीविनो यत्र देशे तस्मिन्नर्थे ब्राह्मणकशब्दो निपातितः ॥

( उद्द्योतः ) 'कोपधादणोऽकान्ताच्छः' इति भाष्ये पाठः ॥ ननु 'प्रस्थोत्तर' इति विहितकोपधाणः 'वृद्धाच्छः' परः, तस्यापि जनपदवुञ् बाधकः, ततोऽपि परः 'वृद्धादके', इति सिद्धमेव तद्बाधकत्वमिति किमनेन वार्तिकेन ? इत्यत आह—**जनपदवाचिन इति** । 'कोपधादण्' इति स्वतन्त्रसूत्रेणेति भावः । ब्राह्मणकीये 'वृद्धादकेकान्त' इति छः ॥

( ५४३३ विप्रतिषेधवार्तिकम् ॥ ३१ ॥ )

**॥ * ॥ धन्ववुञश्च ॥ * ॥**

( भाष्यम् ) धन्ववुञश्च छो भवति विप्रतिषेधेन ।

धन्वनो वुञ् भवतीत्यस्यावकाशः—पारेधन्व-पारेधन्वकः ।

छस्य स एव ।

औष्टकं नाम धन्व तस्मादुभयं प्राप्नोति, आष्टकीयः ॥

( प्रदीपः ) **धन्ववुञ इति** । धन्वशब्दो मरुदेशवाची ॥ **पारे धन्वेति** । धन्वनः पारमिति 'पारे मध्ये षष्ठ्या वा' इत्यव्ययीभावः । 'अनश्च' 'नपुंसकादन्यतरस्याम्' इति पक्षे टच्समासान्तः ॥ **आष्टकीय इति** । 'वृद्धादकेकान्त' इति छः ॥

( उद्द्योतः ) '**पारेधन्व**'शब्दो मरुदेशविशेषवाची । अत्र भाष्ये **पारेधन्वमिति** पाठः । क्वचित्पारेधन्वेति, तदुभयसिद्धये आह—**पक्षे टजिति** । 'अनश्च' इति त्वनुवृत्तिप्रदर्शनार्थम् ॥

( ५४३४ विप्रतिषेधाभावोपपादकवार्तिकम् ॥ ३२ ॥ )

**॥ * ॥ न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् ) न वाऽर्थो विप्रतिषेधेन ।

किं कारणम् ?

छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् । सिद्धोऽत्र छः "वृद्धाच्छः" ( ४।२।११४ ) इत्येव ।

तस्य पुनर्वचन एतत्प्रयोजनम्—येऽन्ये तदपवादाः प्राप्नुवन्ति तद्बाधनार्थम् ।

स यथैवान्यांस्तदपवादान् बाधत एवमिममपि बाधिष्यते ॥

( प्रदीपः ) **येऽन्य इति** । वुञादयः ॥ **स यथैवेति** । ततश्चापवादत्वादेव छो बाधको न तु परत्वादित्यर्थः ॥

( ७५४ विधिसूत्रम् ॥ ४ । २ । २ आ. ५१ )

## १५४५ जनपदतदवध्योश्च ॥ ४ । २ । १२४ ॥

( वुञोऽधिकरणम् )

( ५४३५ सूत्रातिव्याप्तिप्रदर्शकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ जनपदतदवध्योर्वुञ्विधानेऽवयवमात्रात्प्रसङ्गः ॥ * ॥**

( भाष्यम् ) जनपदतदवध्योर्वुञो विधानेऽवयवमात्रात्प्राप्नोति । मौञो नाम वाहीकेषु ग्रामस्तस्मिन् भवो मौञीयः ॥

एवं तर्हि जनपदादेव जनपदावधेः ॥

( प्रदीपः ) तस्यावधिस्तदवधिरिति षष्ठीसमासाश्रयेण चोदयति—**जनपदेति** ॥ **अवयवमात्रादिति** । यो जनपदस्यावधिः—सीमा—अजनपदोऽपि, तस्मादपि प्राप्नोति, विशेषानुपादानादित्यर्थः ॥ **मौञो नाम वाहीकेष्विति** । सामीपिकमिदमधिकरणम् । तेन 'वाहीकग्रामेभ्यः' इति ठञ्ञिठौ न भवतः ॥ **एवं तर्हीति** । स चासाववधिस्तदवधिरिति कर्मधारय आश्रीयते इत्यर्थः । कस्यासाववधिरिति चेत्, प्रत्यासत्त्या जनपदस्येति विज्ञायते ॥

(उद्द्योतः) ननु 'तदवधिः' इति लाघवात्कर्मधारयः, तत्कथमिदं नोद्यम् ? अत आह—**तस्यावधिरिति** ॥ ननु जनपदावयवस्याजनपदत्वात्कथमवयवमात्रात्प्राप्तिरत आह—**यो जनपदस्येति** । तदवधिपदांश एव पूर्वपक्ष इति भावः ॥ ननु वाहीकग्रामः कथं तस्य जनपदस्यावधिः ? तत्त्वेऽपि वा ठञ्ञिठौ युक्तौ इति **मौञीय** इत्ययुक्तमत आह—**सामीपिकमिति** । एवं च वाहीकसमीपः दृश्यते ॥

---

१ इदानीन्तनेषु मुद्रितपुस्तकेषु 'कोपधादणोऽकान्ता च्छः' इत्येव पाठ उपलभ्यते । क. पुस्तके 'कोपधादणोऽकेकान्ताच्छः' इति पाठ उपलभ्यते ॥

२ क. पुस्तके 'उकेकान्ता' इति पाठेऽपि मुद्रितेषु 'अकान्ता' इति

३ 'आष्टकं–आष्टकीयः' इति च. ञ. पाठः ॥

४ 'अवयवमात्रादिति । यो' इति पाठः क. पुस्तके नास्ति ॥

स ग्रामः, वाहीकरूपजनपदस्यावधिश्चेति भावः ॥ भाष्ये—अवयवमात्रादित्यस्यावधिभूतजनपदावयवमात्रात्सीमाग्रामादेरपीत्यर्थः ॥

( ५४३६ सूत्रांशवैयर्थ्यप्रदर्शकवार्तिकम् ॥ २ ॥ )

॥*॥ जनपदादिति चेद्वचनानर्थक्यम् ॥*॥

( भाष्यम् ) जनपदादिति चेदवधिग्रहणमनर्थकम् । सिद्धं जनपदादित्येव ।

(प्रदीपः) वुञेवेति । त्रिगर्तेषु भवस्त्रैगर्तक इत्यत्रेत्यर्थः ॥

( सिद्धान्तभाष्यम् )

इदं तर्हि प्रयोजनम्—जनपदावधेर्वुञेव यथा स्यात्, यदन्यत्प्राप्नोति तन्मा भूदिति ।

किं चान्यत्प्राप्नोति ?

छः ।

गर्तोत्तरपदाच्छविधेर्जनपदाद्वुञ् पूर्वविप्रतिषिद्धमिति वक्ष्यति स पूर्वविप्रतिषेधो न पठितव्यो भवति ॥

( ७५५ विधिसूत्रम् ॥ ४ । २ । २ आ. ५२ )

## १५५० अरण्यान्मनुष्ये ॥ ४।२।१२९ ॥

( संग्राहकभाष्यम् )

अत्यल्पमिदमुच्यते—मनुष्य इति, पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् । आरण्यकः पन्थाः, आरण्यकोऽध्यायः, आरण्यको न्यायः, आरण्यको विहारः, आरण्यको मनुष्यः, आरण्यको हस्ती ।

वा गोमयेष्विति वक्तव्यम् । आरण्यका गोमयाः । आरण्या गोमयाः ॥

( ७५६ विधिसूत्रम् ॥ ४ । २ । २ आ. ५३ )

## १५५१ विभाषा कुरुयुगन्धराभ्याम् ॥ ४ । २ । १३० ॥

( ५४३७ विप्रतिषेधवार्तिकम् ॥ १ ॥ )

॥ * ॥ कुरुयुगन्धरेभ्यो वावचनान्मनुष्यतत्स्थयोर्वुञ्विधानम् ॥ * ॥

(भाष्यम्) कुरुयुगन्धरेभ्यो वावचनात् "मनुष्यतत्स्थयोर्वुञ्" (४।२।१३४) इत्येतद्भवति विप्रतिषेधेन ।

कुरुयुगन्धरेभ्यो वा वचनस्यावकाशः—कौरवः, कौरवकः; यौगन्धरः, यौगन्धरकः ।

मनुष्यतत्स्थयोर्वुञ् भवतीत्यस्यावकाशः—अन्ये कच्छादयः—काच्छको मनुष्यः, काच्छकमस्येक्षितम्, हसितम्, जल्पितम्, स्मितम् ।

इहोभयं प्राप्नोति, कौरवको मनुष्यः, कौरवकमस्येक्षितम्, हसितम्, जल्पितम्, स्मितम् । वुञ् भवति विप्रतिषेधेन ॥

( प्रदीपः ) अन्ये कच्छादय इति । समुदाये कार्यं विधीयमानं केषु चिदप्यवयवेषु प्रवर्तमानं सावकाशमेवेति मन्यते ॥

( उद्द्योतः ) आभ्यां वुञित्यर्थः । 'मनुष्यतत्स्थयोः' इति नित्यो वुञ् ॥ ननु कुरोस्तत्र पाठो व्यर्थोऽत आह—समुदाये इति ॥

( कुरुशब्दस्य विप्रतिषेधानर्थक्ये भाष्यम् )

नैष युक्तो विप्रतिषेधः ।

न हि कुरुशब्दस्यान्ये कच्छादयोऽवकाशः । कुरुशब्दस्य यः कच्छादिषु पाठः सोऽनवकाशः ॥

न खल्वपि कुरुशब्दो विभाषां प्रयोजयति । अनेन वुञ्, कच्छादिपाठादण्भविष्यति ।

सैषा युगन्धरार्था विभाषा ॥

( प्रदीपः ) न हीति । सर्वे एवावयवास्तत्र कार्यित्वेन निर्दिष्टा इति भावः ॥ सैषेति । ननु युगन्धरशब्दादपि 'अवृद्धादपि' इति नित्ये वुञि सिद्धेऽन्तरेणापि विभाषाग्रहणं विकल्पो विज्ञास्यते । नैतदस्ति । युगन्धरान्नित्यो वुञ्, 'अवृद्धात्' इत्यनेन तु विभाषेत्येवमपि विज्ञायते । तस्माद्विभाषाग्रहणं कर्तव्यमेव ॥

( उद्द्योतः ) भाष्ये—न खल्वपीति । विकल्पस्य कुरुग्रहणमात्रेण सिद्धेरिति भावः । एवञ्चामनुष्यतत्स्थयोरनेन वुञ्, कच्छादिपाठादण्, तयोस्तु कच्छाद्यणं बाधित्वा वुञेवेति विप्रतिषेधोऽनर्थक इति भावः ॥

( ७५७ विधिसूत्रम् ॥ ४ । २ । २ आ. ५४ )

## १५५४ कच्छादिभ्यश्च ॥ ४ । २ । १३३ ॥

( अणोऽधिकरणम् )

( जिज्ञासाभाष्यम् )

किमर्थं साल्वानां कच्छादिषु पाठः क्रियते ?

( ५४३८ पाठप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ साल्वानां कच्छादिषु पाठोऽण्विधानार्थः ॥ * ॥

( भाष्यम् ) साल्वानां कच्छादिषु पाठोऽण्विधानार्थः क्रियते । अण्यथा स्याद्, वुञ् मा भूदिति ॥

---

१ 'मस्येष्मितम्' इति च. झ. पाठः ॥
२ सूत्रार्थमाह—आभ्यामिति ॥

३ 'कच्छादिषु पाठा' इति च. झ. पाठः ॥

( ५४३९ पाठप्रयोजनाभावबोधकं वार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वाऽपदातिगोयवागूग्रहण-मवधारणार्थम् ॥ * ॥**

( भाष्यम् ) न वैतत्प्रयोजनमस्ति ।

किं कारणम् ?

अपदातिगोयवागूग्रहणमवधारणार्थं भविष्यति । अपदातावेव साल्वात् । गोयवाग्वोरेव च साल्वादिति ॥

( प्रदीपः ) साल्वशब्दो गणे पठ्यते तस्य प्रत्याख्यानायाह-**न वेति** । 'जनपदतदवध्योः' इति वुञि सिद्धे 'अपदातौ साल्वात्' 'गोयवाग्वोश्च' इति वुञो नियमादन्यत्राण्न भविष्यतीत्यर्थः । ननु वुञभावे छः प्राप्नोति न त्वणिति चिन्त्यमेतत् ॥

( उद्द्योतः ) साल्वशब्द इति । 'साल्वानाम्' इति भाष्ये बहुवचनं तु अर्थगतबहुत्वस्य शब्द आरोपाद्बोध्यम् । साल्वानां वाचकस्य किमर्थः पाठ इति वाऽर्थः ॥ **वुञभावे छ इति** । वृद्धत्वादिति भावः । 'अपदातौ' इति सूत्रेणाणमनुवर्त्य वाक्यभेदेन तद्व्यतिरिक्तेऽर्थेऽणविधानमिति भाष्यतात्पर्यमाहुः ॥

( ७५८ विधिसूत्रम् ॥ ४ । २ । २ आ. ५५ )

## १५५८ गर्तोत्तरपदाच्छः ॥ ४।२।१३७ ॥

( छाधिकरणम् )

( ५४४० पूर्वविप्रतिषेधे वार्तिकम् ॥ १ ॥ )

**॥ * ॥ गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् विप्रतिषिद्धम् ॥ * ॥**

( भाष्यम् ) गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् भवति पूर्वविप्रतिषेधेन ।

गर्तोत्तरपदाच्छो भवतीत्यस्यावकाशः—श्वाविद्गर्तं—श्वाविद्गर्तीयः ।

वुञोऽवकाशः—अङ्गाः—आङ्गकः ।

इहोभयं प्राप्नोति, त्रैगर्तकः ।

वुञ् भवति पूर्वविप्रतिषेधेन ॥

( प्रदीपः ) **श्वाविद्गर्तीय इति** । श्वानं विध्यतीति क्विप् । 'नहिवृति' इति दीर्घः । श्वाविधां गर्त इति समासः ॥

( वार्तिकप्रत्याख्याने भाष्यम् )

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ?

न वक्तव्यः ।

उक्तमेवावधिग्रहणस्य प्रयोजनम्—जनपदाज्जनपदावधेर्वुञेव यथा स्यात्, यदन्यत् प्राप्नोति तन्मा भूदिति ॥

१ पृथिवीमध्यमीय इति माभूयादत इदमसङ्गतमिति भावः ॥

( ७५९ विधिसूत्रम् ॥ ४ । २ । २ आ. ५६ )

## १५५९ गहादिभ्यश्च ॥ ४ । २ । १३८ ॥

( ५४४१ मध्यमशब्दस्य आदेशिनिश्चायकं वार्तिकम् ॥ १ ॥ )

**॥ * ॥ गहादिषु पृथिवीमध्यस्य मध्यमभावः ॥ * ॥**

( भाष्यम् ) गहादिषु पृथिवीमध्यस्य मध्यमभावो वक्तव्यः । पृथिवीमध्ये भवो मध्यमीयः ॥

( प्रदीपः ) 'मध्यो मध्यमं चाण् चरणे' इति गणपाठः, तं विशेषेऽवस्थापयितुमाह—**गहादिष्विति** । पृथिवीमध्यवाच्येव मध्यशब्दो ग्राह्यः, न तु मध्यान्तरवाचीत्यर्थः ॥

( उद्द्योतः ) ननु पृथिवीमध्यस्य प्रकृतित्वे तद्घटकमध्यशब्दस्य मध्यमादेशेऽपि 'मध्यमीयः'[1] इत्यसंगतमत आह—**वाच्येति** । गहादिषु पृथिवीमध्यवाची 'मध्य'शब्दो ग्राह्यः, तस्य च मध्यमादेश इति वार्तिकार्थः ।

अन्ये तु—गणसूत्रमनार्षम्, पृथिवीमध्यशब्दस्यैव मध्यमादेश इत्याहुः ॥

( ५४४२ अर्थनिर्णयविषये वार्तिकम् ॥ २ ॥ )

**॥ * ॥ चरणसम्बन्धेन निवासलक्षणोऽण् ॥ * ॥**

( भाष्यम् ) चरणसम्बन्धेन निवासलक्षणोऽण् वक्तव्यः । त्रयः प्राच्याः । त्रय उदीच्याः । त्रयो माध्यमाः । सर्वे निवासलक्षणाः ॥

( प्रदीपः ) **चरणसम्बन्धेनेति** । पृथिवीमध्यं निवास एषां चरणानामित्यस्मिन्नर्थे माध्यमाश्चरणा इति भवतीत्यर्थः । चरणाः कठादयः ॥ **निवासलक्षण इति** । सोऽस्य निवास इत्यत्रार्थ इत्यर्थः ॥

( उद्द्योतः ) प्राक् निवासो येषाम्, उदक् निवासो येषान्ते—प्राच्याः-उदीच्याः । 'द्युप्राक्' इति यत् ॥ **माध्यमा इति** । प्रकृतवार्तिकेनाण्, तदाह—भाष्ये—**सर्वे इति** । अनेन भाष्येण प्रागुदग्भ्यां निवासे एव इति सूचयतीति **केचित्** ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थाध्यायस्य द्वितीये पादे **द्वितीयमाह्निकम्** ॥

पादश्च समाप्तः ॥

( ७६० विधिसूत्रम् ॥ ४ । २ । २ आ. ५७ )

## १५६२ वृद्धादकेकान्तखोपधात् ॥ ४ । २ । १४१ ॥

( सूत्रोपसंख्याने भाष्यम् )

ईकान्तादपीति वक्तव्यम् ।

इहापि यथा स्यात्—ऐणीकीयः ॥
तत्तर्हि वक्तव्यम् ?
न वक्तव्यम् ॥
( ५४४३ लघूपसङ्ख्यानबोधकं वार्तिकम् ॥ १ ॥ )

॥ * ॥ अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ॥ * ॥

( भाष्यम् ) अकेकान्तग्रहणे कोपधग्रहणं कर्तव्यम् ।
किं प्रयोजनम् ?
सौसुकाद्यर्थम्, सौसुकीयः ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये चतुर्थाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥
पादश्च समाप्तः ॥

( प्रदीपः ) अकेकान्तग्रहण इति । अकेकान्तग्रहणमपनीय कोपधग्रहणं व्यापकं कर्तव्यमित्यर्थः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥
पादश्च समाप्तः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ७०३ | ४३ | १४ | ५७ | ७६० |
| अव्याख्यातसूत्राणि | ७२२ | ४८ | ४० | ८८ | ८१० |
| समुदितसूत्राणि | १४२५ | ९१ | ५४ | १४५ | १५७० |
| वार्तिकानि | ५३२७ | ६५ | ५१ | ११६ | ५४४३ |

( ७६१ विधिसूत्रम् ॥ ४ । ३ । १ आ. १ )

## १५७१ युष्मदस्मदोरन्यतरस्यां खञ्च ॥ ४ । ३ । १ ॥

( खञोऽधिकरणम् )

( ५४४४ योगविभागबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः ॥ * ॥

( भाष्यम् ) युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः कर्तव्यः ।

युष्मदस्मदोरन्यतरस्याम् । छो भवति । युष्मदीयः, अस्मदीयः ।

ततः–खञ्च ।

खञ्च भवति युष्मदस्मदोरन्यतरस्याम् । यौष्माकीणः, आस्माकीनः ॥

किमर्थो योगविभागः ?

( प्रदीपः ) त्यदादित्वाद्वृद्धत्वाद् छे प्राप्ते खञ् विधीयते । ततश्छस्य बाधे प्राप्ते चकारेण छोऽनुकृष्यते । एवं च खञ्छावन्यतरस्यां युष्मदस्मदोर्विधीयेते । तेन पक्षे यथाप्राप्तमण् भवति । तत्र खञ्छयोर्युष्मदस्मदोश्च संख्यासाम्याद्यथासंख्यं प्राप्नोति, तन्निराकरणायाह—युष्मदस्मद्भ्यामिति ॥ केचित्त्वाहुः–एक एवानेन खञ् विधीयते, चकारेण तु तस्य सहायता द्योत्यते । तत्र [1]प्रकरणछेन–इति विज्ञायते । अन्यतरस्यांग्रहणेन चाणः प्रतिप्रसवः क्रियते । तत्र यद्येक एवापूर्वः खञ् विधीयते, यदि वा त्रयः खञ्छाणः, सर्वथा नास्ति संख्यासाम्यमिति यथासंख्यनिरासाय न कर्तव्यो योगविभाग इति ।

अत्राहुः—चकारेण छस्यानुकर्षणं क्रियते, तेन यावदुक्तं खञ्छाविति तावत् खञ्चेति । ततश्च सिद्धोऽपि छप्रत्ययोऽनेनैवाबाधाय चकारेण समुच्चयार्थेनानुकृष्य विधीयत इति स्यादेव यथासंख्यम्, अन्यतरस्यांग्रहणेन तु खञ्छयोः पक्षेऽनुत्पत्तिः प्रतिपाद्यते । तदनुपत्तौ चापवादाभावात्स्वशास्त्रेणाण् भवतीति कुतः प्रत्ययत्रयस्यानेन विधानम् ॥

( उद्द्योतः ) [2]ननु खञ एवानेन विधानात्त्रयाणां वा खञ्छाणां विधानात् क्व यथासङ्ख्यप्राप्तिः ? किमर्थो वा योगविभागः ? अत आह—त्यदादित्वादिति ॥

कुतः प्रत्ययत्रयस्येति । ननु यदि प्रत्ययत्रयाविधानं तर्हि द्वयोरपि न विधानम्, चेन ससहायतामात्रद्योतनात् । यदि तात्पर्यतस्तस्यापि विधानाद्द्वयोर्विधानं तर्हि त्रयाणामपि, इति चेन्न; अन्यतरस्यांग्रहणस्य हि पक्षेऽभावमात्रमर्थः, न त्वन्यभावोऽपि, नानार्थतापत्तेः । एवञ्च वाक्यस्य महाविभाषया सिद्धत्वादन्यतरस्यांग्रहणबोधिततदभावे–अणेवेति लक्ष्यसंस्कारवेलायां निर्णीयते । यथासङ्ख्यसूत्रे च 'विध्यर्थप्रमितिकालिकं सङ्ख्यासाम्यं' गृह्यत, इति 'अमङण' इति सूत्रभाष्ये स्पष्टमित्याशयात् । ससहायत्वस्य प्रतियोगिसापेक्षत्वाद्वाक्यार्थवेलायामेव तदुपस्थितिरित्यदोषः ॥ युष्मदस्मदोरिति—षष्ठी 'गापोः' इतिवदानन्तर्ये । [3]षष्ठ्युच्चारणमुत्तरार्थम् ॥

( ५४४५ योगविभागफलबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ [4]समसंख्याप्रतिषेधार्थः ॥ * ॥

( भाष्यम् ) संख्यातानुदेशो मा भूदिति ॥

( ७६२ विधिसूत्रम् ॥ ४ । ३ । १ आ. २ )

## १५७२ तस्मिन्नणि च युष्माकास्माकौ ॥ ४ । ३ । २ ॥

( आदेशाधिकरणम् )

( ५४४६ योगविभागे वार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आदेशवचने च ॥ * ॥

( भाष्यम् ) किम् ?

योगविभागः कर्तव्यः । 'तस्मिन्नणि युष्माकास्माकौ' भवतः । यौष्माकः, आस्माकः ।

ततः–'खञि' । खञि च युष्माकास्माकौ भवतः । यौष्माकीणः, आस्माकीनः ।

किमर्थो योगविभागः ?

समसंख्याप्रतिषेधार्थ इत्येव ॥

( ५४४७ योगविभागसाधने वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ तत्र पुनः खञ्ग्रहणम् ॥ * ॥

( भाष्यम् ) तत्र पुनः खञ्ग्रहणं कर्तव्यम् । न ह्यन्तरेण खञ्ग्रहणं योगाङ्गमुपजायते ॥

( प्रदीपः ) तत्र पुनरिति । खञि–अणि चेति वक्तव्यमित्यर्थः । अन्यथा पूर्वसूत्रे खञ्चेति चकारेण छोऽनुकृष्ट इति स एवानन्तर्यात्तस्मिन्नित्यनेन परामृश्येत ॥

( उद्द्योतः ) ननु तच्छब्देन खञः परामर्शसिद्धेरसङ्गतमेव तत्, अत आह—अन्यथेति ॥

( योगविभागसाधनप्रत्याख्याने भाष्यम् )

तर्हि वक्तव्यम् ।

न वक्तव्यम् ।

एवं वक्ष्यामि—तस्मिन् खञि युष्माकास्माकौ भवतः ।

---

१ 'प्रकरणाच्छेन–इति' इति झ. पाठः ॥

२ यथासङ्ख्यप्राप्तिमुपपादयति—ननु खञ एवानेनेति ॥

३ ननु युष्मदस्मदोरिति सूत्रे षष्ठ्यपेक्षया पञ्चम्युच्चारणमेव कथं न कृतम्भगवतत्याह—षष्ठ्युच्चारणमिति ॥

४ 'संख्यातानुदेशप्रतिषेधार्थः' इति झ. ञ. पाठः ॥

ततः—अणि च । अणि च युष्माकास्माकौ भवत इति ॥

( प्रदीपः ) **एवं वक्ष्यामीति** । एवं व्याख्यास्यामीत्यर्थः । तस्मिन्नित्यनेन पूर्वेण साक्षाद्विहितः खञ् परामृश्यते, न तु चकारानुकृष्टश्छः । चशब्दो हि समुच्चयस्य द्योतकः प्रकृतमनुकर्षति । तत्र किं प्रकृतं स्यादिति विचारप्रवृत्तौ विलम्बिता छस्य प्रतीतिः, अव्यवहिता तु खञ इति तस्यैव सर्वनाम्ना परामर्शो युक्त इति भावः । अथवा पूर्वसूत्रे योगविभागस्य व्याख्यातत्वान्नैव चकारेण छस्यानुकर्षणमिति कुतस्तस्यानन्तर्यम्, यतस्तस्य परामर्शः स्यात् ॥

( उद्योतः ) **अव्यवहिता त्विति** । साक्षादुच्चारणादिति भावः । तच्छब्दस्याव्यवहितबुद्धिस्थपरामर्शकत्वादिति तात्पर्यम् । **तदेतत्पठन्ति**—'चानुकृष्टन्नोत्तरत्र' इति । इदमेव युक्तम् । 'अथवा' इत्यादि तु प्रौढ्या व्याख्यानम् ॥

( ७६३ विधिसूत्रम् ॥ ४ । ३ । १ आ. ३ )

## १५७३ तवकममकावेकवचने ॥ ४ । ३ । ३ ॥

( ५४४८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ एकार्थग्रहणं च ॥ * ॥

( भाष्यम् ) एकार्थग्रहणं च कर्तव्यम् । एकार्थयोर्युष्मदस्मदोरिति वक्तव्यम् ।

किमर्थम् ?

न एकवचन इत्येव सिद्धम् ?

न सिध्यति ।

किं कारणम् ?

एकवचनाभावात् । एकवचन इत्युच्यते, न चात्रैकवचनं पश्यामः ॥

( प्रदीपः ) कृत्रिमाऽकृत्रिमयोः कृत्रिमे कार्यसंप्रत्ययादिति न्यायात् प्रत्ययस्यैकवचनस्य ग्रहणं स्यात्, तस्य च नित्यत्वाल्लुक्प्रवर्तनात् प्रत्ययलक्षणप्रतिषेधाच्च एकवचनपरता युष्मदस्मदोर्न संभवतीति मत्वाऽऽह—**एकार्थग्रहण चेति** ॥

( उद्योतः ) ननु 'एकं वक्ति' इति व्युत्पत्त्या एकवचनशब्दस्यैव तदर्थत्वसम्भवादाह—**कृत्रिमेति** ॥ **नित्यत्वादिति** । 'अन्तरङ्गानपि' इति न्यायाच्चेत्यपि बोध्यम् ॥

( वार्तिकान्यथासिद्धिबोधकं भाष्यम् )

यदि पुनरेकवचनपरत्वेनाणखञौ विशेष्येयाताम् ।

नैवं शक्यम्, इह हि प्रसज्येयाताम्—युष्माकं छात्रो यौष्माकीणः । आस्माकीनः ।

इह च न स्याताम् । तव छात्रास्तावकीनाः । मामकीनाः ।

तस्मान्नैवं शक्यम् ।

न चेदेवमेकार्थग्रहणं कर्तव्यम् ॥

न कर्तव्यम् ।

नेदं पारिभाषिकस्यैकवचनस्य ग्रहणम् ।

किं तर्हि ?

अन्वर्थग्रहणम् । उच्यते वचनम्, एकस्यार्थस्य वचनमेकवचनमिति ॥

( प्रदीपः ) **यदि पुनरिति** । तवायं-तावक इत्यादि सिध्यतीति मन्यते ॥ **नैवं शक्यमिति** । अव्याप्त्यतिव्याप्तिदोषद्वयदुष्टत्वादिति[1] भावः ॥ **अन्वर्थग्रहणमिति** । उभयगतिरिह शास्त्रे संभवति । तत्र विषयभेदेन क्वचित् कृत्रिमस्य ग्रहणम्, क्वचिदकृत्रिमस्य[2], क्वचिदुभयोः ।

अथ वचनात् प्रत्ययलक्षणं भवतीति कस्मान्नाश्रितम् । उच्यते । अन्वर्थग्रहणे सत्यव्यवहिता प्रतिपत्तिर्भवतीति तदेवाश्रितम् । 'एकवचने' इति च प्रथमाद्विवचनान्तं–युष्मदस्मदोः समानाधिकरणं विशेषणम् ॥ **एकस्येति** । वाच्यवाचकसंबन्धे षष्ठी । एकार्थाभिधानाय ये उच्येते युष्मदस्मदी तयोरादेशावित्यर्थः ॥

( उद्योतः ) ननूभयोर्ग्रहणं वा स्यात्, कृत्रिमस्यैव वा, अकृत्रिमस्यैव ग्रहणं तु कथं लभ्यम् ? अत आह—**तत्र विषयभेदेनेति** । व्याख्यानादिति भावः ॥ **अव्यवहितेति** । प्रत्ययलक्षणस्य तु निषेधप्रतिबन्धद्वारा व्यवहितेत्यर्थः । किञ्च शास्त्रबाधापेक्षया लौकिकन्यायबाधो युक्तः । किञ्च 'त्वमावेकवचने' 'प्रत्ययोत्तरपदयोश्च' इत्यत्रास्या एव सरणेरावश्यकत्वेनात्रापीयमेवादृता भगवता ॥ नन्वेवम् 'एकवचने' इति सप्तम्येकवचनासंगतिरत आह—**एकवचने इति चेति** ॥ **प्रथमाद्विवचनान्तमिति** । एवञ्च एकार्थवाचके ये युष्मदस्मदी तयोरिति शेषोऽत्र बोध्यः । षष्ठ्यर्थे प्रथमाद्विवचनमित्यन्ये ॥ नन्वेकस्यार्थस्य **वचनम्**—कथनम्, न हि ते युष्मदस्मदी, अत आह—**वाच्येति** । वचनशब्दः करणव्युत्पत्त्या प्रतिपादकपर इति भावः ॥

( ७६४ विधिसूत्रम् ॥ ४ । ३ । १ आ. ४ )

## १५७४ अर्धाद्यत् ॥ ४ । ३ । ४ ॥

( यतोऽधिकरणम् )

( ५४४९ विधिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अर्धाद्यद्विधाने सपूर्वाट्ठञ् ॥ * ॥

( भाष्यम् ) अर्धाद्यद्विधाने सपूर्वाट्ठञ् वक्तव्यः । वालेयार्धिकः । गौतमार्धिकः ॥

---

१ 'दोषद्वयदुष्ट' इति च. झ. पाठः ॥

२ 'क्वचिदकृत्रिमस्य' अयं पाठः क. पुस्तके नास्ति ॥

( ५४५० विधिवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ दिक्पूर्वपदाट्ठञ्च ॥ * ॥

( भाष्यम् ) दिक्पूर्वपदाट्ठञ्च ठञ्च वक्तव्यः । पूर्वार्ध्यः, पौर्वार्धिकः; दक्षिणार्ध्यः, दाक्षिणार्धिकः, उत्तरार्ध्यः, औत्तरार्धिकः ॥

( वार्तिकाक्षेपभाष्यम् )

किमर्थमिदमुच्यते, यथान्यास एव दिक्पूर्वपदादर्धाद्उभयमुच्यते ।

इदमद्यापूर्वं क्रियते—अर्धाद्यद्विधाने सपूर्वाट्ठञिति ॥

( समाधानभाष्यम् )

तद् द्वेष्यं विजानीयात्—सर्वमेव विकल्पत इति ।

तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे दिक्पूर्वपदादर्धाद्यथान्यासमेव भवतीति ॥

( उद्योतः ) भाष्ये—तद्द्वेष्यमिति । 'दिक्पूर्वपदात्' इत्यस्य स्थाने सूत्रकृच्छिक्षणायेदं कृतमिति यो भ्राम्येत्तम्प्रतीदमाख्यायत इत्यर्थः ॥

( ७६५ विधिसूत्रम् ॥ ४ । ३ । १ आ. ५ )

## १५८५ श्वसस्तुट् च ॥ ४ । ३ । १५ ॥

( ठञोऽधिकरणम् )

( ५४५१ आगमस्य टित्वकरणे आक्षेपवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ श्वसस्तुड्यादेशानुपपत्तिरनादित्वात् ॥ * ॥

( भाष्यम् ) श्वसस्तुटि कृते आदेशानुपपत्तिः ।

किं कारणम् ?

अनादित्वात् । तुटि कृतेऽनादित्वादादेशो न प्राप्नोति ॥

(प्रदीपः) अनादित्वादिति । यद्यपि 'ठस्येक' इत्यत्रादिग्रहणं नास्ति तथाऽप्यङ्गस्य निमित्तं यष्ठस्तस्येक इति सूत्रार्थाश्रयणाद् यथा 'कर्मणि घटोऽठच्' इत्यठजङ्गस्य निमित्तं न ठ इति कर्मठ इत्यत्रेकादेशो न भवति, एव तुटि कृते समुदायोऽङ्गसंज्ञानिमित्तम्, न ठमात्रमिति कादेशा न प्राप्नोतीति भावः ॥

( उद्योतः ) समुदायोऽङ्गसंज्ञानिमित्तमिति । चिन्त्यमिदम्, 'ठस्येकः' इत्यत्र वर्णग्रहणपक्षे वर्णमात्रस्यैव प्रत्ययत्वेन, समुदायग्रहणपक्षे च तस्यैव प्रत्ययत्वेन 'यदागमाः' इति न्यायेन तुड्विशिष्टस्यापि प्रत्ययत्वेन ठग्रहणेन च ग्रहणात् । तस्याप्यङ्गसंज्ञानिमित्तत्वेऽपि निर्दिश्यमानपरिभाषया ठस्यैवादेशेन च दोषाभावात् । तस्मादङ्गात्परस्येति व्याख्यानमभिप्रेत्य—अनादित्वात्—इति भाष्यम् । तत्र योऽङ्गात्परो न स निर्दिश्यमानः, यश्च निर्दिश्यमानो नासावङ्गात्पर इत्यादेशानुपपत्तिरिति भावः ॥ अनादित्वात् इत्यनेनाङ्गात्परत्वाभावो बोध्यते । आदित्वे हि निर्दिश्यमानस्य तस्याङ्गात्परत्वं भवतीति बोध्यम् । समाधानान्तरमेव वक्तुम्—अङ्गनिमित्तस्येति नाश्रितं भगवतेत्येव सारम् ॥

( तुडागमस्य पूर्वान्तत्वबोधकं भाष्यम् )

एवं तर्हि पूर्वान्तः करिष्यते ॥

( ५४५२ पूर्वान्तत्वे दोषवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ पूर्वान्ते कप्रतिषेधः ॥ * ॥

( भाष्यम् ) यदि पूर्वान्तः, कादेशस्य प्रतिषेधो वक्तव्यः । शौवस्तिकम् ।

तान्तादिति कादेशः प्राप्नोति ।

( प्रदीपः ) शौवस्तिकमिति । 'द्वारादीनां च' इति वृद्धिप्रतिषेधः, ऐजागमश्च ॥

( परादित्वाभ्युपगभाष्यम् )

अस्तु तर्हि परादिः ।

ननु चोक्तं श्वसस्तुड्यादेशानुपपत्तिरनादित्वादिति ॥

(५४५३ परादित्वाभ्युपगतदोषनिराकरणवार्तिकम् ॥ ३ ॥)

## ॥ * ॥ सिद्धं त्वादिष्टस्य तुड्वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

तुडादिष्टस्येति वक्तव्यम् ॥

( ५४५४ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ संनियोगाद्वा ॥ * ॥

( भाष्यम् ) अथ वा चेन संनियोगः करिष्यते । तुट् च ।

किं च ?

यच्चान्यत्प्राप्नोति ।

किं चान्यत्प्राप्नोति ?

आदेशः ॥

(प्रदीपः) संनियोग इति । तेनागमादेशौ सह भवतः ॥

( ७६६ विधिसूत्रम् ॥ ४ । ३ । १ आ. ६ )

## १५९२ सर्वत्राण्च तलोपश्च ॥ ४।३।२२ ॥

( अणोऽधिकरणम् )

( ५४५५ सूत्रैकदेशप्रत्याख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ हेमन्तस्याणि तलोपवचनानर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् ॥ * ॥

( भाष्यम् ) हेमन्तस्याणि तलोपवचनमनर्थकम् ।

किं कारणम् ?

हेम्नः प्रकृत्यन्तरत्वात् । प्रकृत्यन्तरं हेमन्शब्दः । आतश्च प्रकृत्यन्तरम्, एवं ह्याह—हेमन् हेमन्नागनीगन्ति कर्णौ तस्मादेतौ हेमन्नशुष्यत इति ॥

(प्रदीपः) हेम्न इति । हेमन्तपर्यायो हेमन्शब्दोऽप्यस्ति, तस्मादृत्वणि कृते हैमनमिति भविष्यति, नार्थस्तलोपविधानेन; 'सर्वत्राण्' इत्येव वक्तव्यम् । भाषायां च-एतद्वृत्तिविषय एव हेमन्शब्द ऋतुवाचीत्यस्वपदेन विग्रहः कर्तव्यः—हेमन्ते साधु हैमनमिति । 'अन्' इति प्रकृतिभावाट्टिलोपाभावः ॥ हेमन् हेमन्निति । सप्तम्येकवचनस्य छन्दसि 'सुपां सुलुक्' इति लुक् । 'नङिसंबुद्ध्योः' इति नलोपप्रतिषेधः ॥

(उद्योतः) अनेन सूत्रेणाणतलोपौ विधीयेते । ननु हेमशब्दस्य स्वर्णशक्तत्वात् अर्थभेदोऽत आह—हेमन्तेति ॥ सर्वत्राणित्येव वक्तव्यमिति । वेदे ठञा बाधा मा भूदितीदं वक्तव्यम् । छन्दस्येवाणिविधाने लोके तदभाव आशङ्क्येतेति 'सर्वत्र' इति वक्तव्यम् । ननु 'हेमन्हेमन्नागनीर्गतिकर्णौ तस्मादेतौ हेमन्नशुष्यतः' इति वेदे प्रयोगाच्छंदसि तत्सत्त्वेऽपि भाषायां तदभावेन तत्र 'हैमनम्' इति प्रयोगसिद्ध्यर्थं तलोप आवश्यकः, भाषायामपि तत्स्वीकारेऽन्यत्रापि तत्प्रयोगापत्तिरत आह—एतद्वृत्तिविषय इति ॥ प्रकृतिभावादिति । इदश्च सूत्रे तलोपग्रहणेऽपि 'त' इति समुदायलोप इति पक्षे आवश्यकम् । अनेन व्यञ्जनस्यैव लोपः । 'यस्येति च' इत्यलोप इति पक्षे अलोपस्य स्थानिवत्त्वादसिद्धत्वाच्च न टिलोप इत्यपि बोध्यम् ॥

(५४५६ प्रत्याख्यानोपष्टम्भकवार्तिकम् ॥ १ ॥)

॥ * ॥ अलोपदर्शनाच्च ॥ * ॥

(भाष्यम्) अलोपः खल्वपि दृश्यते । पङ्क्तिर्हैमन्तीति ।

(उद्योतः) भाष्ये—अलोपः खल्वपीति । न च 'अण्च' इति चकारेण यथाप्राप्तऋत्वणोऽपि बोधनेन तत्र च तलोपाभावात् हैमंतीति सिद्ध्यतीति वाच्यम् । भाष्यविरोधेन चस्य तत्तात्पर्यकत्वाभावात् । तदपेक्षया तलोपाकरणस्यैवोचितत्वाच्चेति भावः ॥

(सूत्रप्रत्याख्यानभाष्यम्)

अपर आह—हेमन्तस्याणवचनम्, अणि च तलोपवचनमनर्थकम् ।

किं कारणम्?

हेम्नः प्रकृत्यन्तरत्वात् अलोपदर्शनाच्चेत्येव ।

तत्र ऋतुभ्य इत्येव सिद्धम् ॥

(प्रदीपः) अपर आहेति । सूत्रस्यैव प्रत्याख्यानम् । तथा हि—छन्दस्येव रूपत्रयमिष्टम्—हैमनम्, हैमन्तिकम्, हैमन्तमिति । तत्र हेमन्शब्दस्य ऋत्वणि हैमनमिति भवति । 'हेमन्ताच्च' इत्यनेन ठञि हैमन्तिकमिति । 'सर्वे विधयः छन्दसि विकल्प्यन्ते' इति हेमन्तशब्दादृत्वणि हैमन्तमिति भवति । भाषायां तु हेमन्हेमन्तशब्दयोर्ऋत्वणि हैमनं हैमन्तमिति रूपद्वयमिष्टं सिध्यतीति नार्थः सूत्रेणेत्यर्थः ॥

(उद्योतः) ननु 'सर्वत्र'ग्रहणसामर्थ्यात्पूर्वसूत्रेऽप्यस्यानुकर्षणेन भाषायां ठञा ऋत्वणो बाधा मा भूदिति 'सर्वत्राण्' इत्यावश्यकमत आह—छन्दस्येवेति । 'सर्वत्र' ग्रहणं तु 'सर्वत्र विभाषा गोः' इतिवत्स्पष्टार्थमेवेति भावः ॥ नन्वेवमपि ठञा बाधाद्वेदे 'हैमन्तम्' इत्यस्यासिद्धिरत आह—सर्वे विधय इति ॥

(७६७ विधिसूत्रम् ॥ ४ । ३ । १ आ. ७)

## १५९३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ॥ ४ । ३ । २३ ॥

(ट्युट्युलोरधिकरणम्)

(विध्युपष्टम्भकभाष्यम्)

चिरपरुत्परारिभ्यस्त्नो वक्तव्यः ।

चिरत्नम्, परुत्नम्, परारित्नम् ।

प्रगस्यच्छन्दसि गलोपश्च त्नश्च वक्तव्यः ।

प्रत्नमात्मानम् ।

अग्रादिपश्चाड्डिमच् स्मृतः ।

अग्रिमम्, आदिमम्, पश्चिमम् ।

अन्ताच्चेति वक्तव्यम् ।

अन्तिमम् ॥

(प्रदीपः) चिरपरुदिति । ट्युट्युलभ्यां त्नस्य समावेश इष्यते, न तु ट्युट्युलोर्बाध इत्याहुः ॥

(उद्योतः) समावेश इति । चिरशब्दे तद्दर्शनादिति भावः ॥ इत्याहुरिति । अत्रारुचिबीजं तु परुत्परारिभ्यां समावेशे मानाभाव इति ॥

(वार्तिकावतरणभाष्यम्)

अथ सायचिरयोः किं निपात्यते?

(५४५७ निपातनबोधकं वार्तिकम् ॥ १ ॥)

॥ * ॥ सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियुक्तम् ॥ * ॥

(भाष्यम्) सायचिरयोर्मकारान्तत्वं प्रत्ययसंनियोगेन निपात्यते । सायन्तनम्, चिरन्तनम् ॥

(प्रदीपः) सायचिरयोरिति । स्यतेर्घञि सायशब्दस्य चिरशब्दस्य च मान्तत्वं निपात्यत इत्यर्थः ॥

---

१ 'स्वस्वपदविग्रहः' इति च. छ. पाठः ॥

२ 'नोचितत्वादिति भावः' इति ख. ध. छ. पाठः ॥

( वार्तिकाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम्, मकारान्तः सायंशब्दः ।**

( प्रदीपः ) **मकारान्त इति** । अनेन सायंशब्दः प्रत्याख्यायते, अव्ययत्वादेव ट्युट्युलोः सिद्धत्वात् । चिरशब्दस्यैव तु मान्तत्वं निपात्यते । सायशब्दस्तु घञन्तोऽवसानमात्रवाची, न तु कालविशेषवाची–इति तस्येह ग्रहणमयुक्तमिति भावः ॥

( उद्द्योतः ) ननु मान्तसायंशब्दस्याव्ययत्वादेव सिद्धे सूत्रे तदुपादानं व्यर्थमत आह—**अनेनेति** ॥ नन्वेवमपि घञन्तस्य सायशब्दस्य 'सायिकः' इत्येतद्व्यावृत्तये तदुपादानमत आह—**सायशब्दस्त्विति** ॥ **तस्येह ग्रहणमिति** । एतत्प्रकरणस्थप्रत्यये प्रकृतित्वेन ग्रहणमित्यर्थः । अत्रापि 'कालात्' इत्यनुवर्तत इति भावः ॥ न च सायशब्दस्यापि लक्षणया कालविशेषपरत्वे कालाट्ठञ्निवारणाय सूत्रे तद्ग्रहणम्, अनभिधानेन तत्र तदभावकल्पनादित्याशयः ॥ केचित्तु–'अकारान्तसायशब्दस्य घञन्तस्यानभिधानमेव' इति भाष्याशयः । अत एवाग्रे प्रश्नः—'कथं सायाह्नः' इत्यादिः, अन्यथाऽवसानवचनस्य तत्स्थकाललक्षणया 'सायाह्नः' इत्येकदेशिसमासोपपत्तौ प्रश्नासंगतिः स्पष्टैवेत्याहुः ॥

( प्रत्याक्षेपभाष्यम् )

**यदि मकारान्तः,**
**कथं सायाह्नः ?**

( प्रत्याक्षेपसमाधानभाष्यम् )

**सायमोऽह्नि मलोपः ।**

**सायमोऽह्नि मलोपो वक्तव्यः ।**
**कथं सायतरे ?**
**तरे चेति वक्तव्यम् ।**
**कथं सायम् साये ?**
**वा सप्तम्यामिति वक्तव्यम् ॥**

(प्रदीपः) **सायमोऽह्न इति** । 'अह्नोऽह्न एतेभ्यः' इत्यह्नादेशष्टजन्तो निर्दिष्टः । 'संख्याविसायपूर्वस्याह्नस्य' इति ज्ञापकादेकदेशिसमासः ॥ **सायतर इति** । तरपि रूपमेतत् ॥ **वा सप्तम्यामिति** । मलोपे च कृते 'साये' इति, भाष्यकारवचनप्रामाण्यादव्ययसंज्ञाऽभावः ॥

( उद्द्योतः ) ननु पूर्वादित्वाभावात्कथमनेनैकदेशिसमासः ? अन्यसमासे तु पूर्वनिपातवैपरीत्यापत्तिरत आह—**संख्यावीति** ॥ नन्वेवमप्यव्ययत्वाद्विभक्तिश्रवणमसंगतमत आह—**भाष्यकारेति** । 'सायमण्डनमभित्वरयन्त्यः' इत्यादि तु च्चिन्त्यमेवेत्याहुः ॥ **च्चिरमित्यव्ययेनैव** सिद्धे च्चिरशब्दाच्च त्नेनैव ठञो बाधे सिद्धे तदु[1]पादानात् च्चिरमित्यव्ययमप्रामाणिकमित्याहुः ॥

( वार्तिकावतरणभाष्यम् )

**अथ प्राह्णप्रगयोः किं निपात्यते ?**

( ५४५८ निपातनबोधकं वार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्राह्णप्रगयोरेदन्तत्वम् ॥ * ॥**

( भाष्यम् ) **प्राह्णप्रगयोरेकारान्तत्वं निपात्यते । प्राह्णेतनम्, प्रगेतनम् ॥**

( वार्तिकाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम्, सप्तम्या अलुकाऽपि सिद्धम् ॥**

( प्रदीपः ) **अलुकेति** । 'घकालतनेषु कालनाम्नः' इत्यनेन ॥

( उद्द्योतः ) घकालेति । स च नित्य इति भावः ॥

( आक्षेपसमाधानभाष्यम् )

**भवेत्सिद्धम्, यदा सप्तमी । यदा त्वन्या विभक्तयः, तदा न सिध्यति ॥**

( प्रदीपः ) **यदा त्वन्या इति** । प्राह्णः सोढोऽस्य–प्राह्णेतन इत्यादौ ॥

( ५४५९ टित्वकरणाक्षेपवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ तुट्युक्तम् ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ?**

**तुट्यादेशानुपपत्तिरनादित्वादिति । तुटि कृतेऽनादित्वादादेशो न प्राप्नोति ॥**

( प्रदीपः ) **अनादित्वादिति** । अङ्गसंज्ञानिमित्तस्य [3]योः–अनादेश उच्यमानो मृत्युशब्द इव तुटि कृते त्युशब्दोऽङ्गनिमित्तम्, न तु युशब्द इति न स्यादित्यर्थः ॥

( उद्द्योतः ) तत्रादिग्रहणाभावादाह—**अङ्गसञ्ज्ञेति** । अत्रत्यमपि भाष्यम्—'श्वसस्तुट् च' इतिसूत्रस्थभाष्यव्याख्यानरीत्यैव व्याख्येयम् । कैयटस्तु च्चिन्त्य एव ॥

( पूर्वान्तत्वबोधकं भाष्यम् )

**एवं तर्हि पूर्वान्तः करिष्यते ॥**

( ५४६० पूर्वान्तत्वे दोषवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ पूर्वान्ते विसर्जनीयः ॥ * ॥**

( भाष्यम् ) **यदि पूर्वान्तः, विसर्जनीयो वक्तव्यः । प्रातस्तनम्, पुनस्तनम् ।**

**परादौ पुनः सति "खरवसानयोर्विसर्जनीयः" ( ८।३।१५ ) इति विसर्जनीयः सिद्धो भवति ॥**

( प्रदीपः ) **यदीति** । पदान्तस्य रेफस्य विधीय[4]मानस्तुकि कृते अपदान्तत्वान्न प्राप्नोतीत्यर्थः ॥

( सिद्धान्तोपक्रमभाष्यम् )

**अस्तु तर्हि परादिः ।**

१ यदि च्चिरमित्येतदव्ययं स्यात्तदाऽव्ययग्रहणेनैव ट्युट्युलप्रत्ययौ सिद्धाविति सूत्रे तदुपादानात्–च्चिरंशब्दग्रहणाच्चिरमित्येतदव्ययमप्रामाणिकमिति भावः ॥

२ 'रेदन्तत्वम्' इति च. ञ. पाठः ॥

३ योरिति । युवारनाकावित्यनेन युस्थाने विधीयमानस्यानादेशस्येत्यर्थः ॥

४ विधीयमान इति । विसर्जनीय इति शेषः ॥

ननु चोक्तं तुटि कृतेऽनादित्वादादेशो न प्राप्नोतीति ॥

( ५४६१ एकदेशिवार्तिकम् ॥ ५ ॥ )

॥ * ॥ सिद्धं त्वादिष्टस्य तुड्वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

आदिष्टस्य तुड्वचनात् । तुडादिष्टस्येति वक्तव्यम् ।

तत्तर्हि वक्तव्यम् ?

( सिद्धान्तभाष्यम् )

न वक्तव्यम् ॥

( ५४६२ सिद्धान्तवार्तिकम् ॥ ६ ॥ )

॥ * ॥ संनियोगाद्वा ॥ * ॥

( भाष्यम् ) अथ वा चेन संनियोगः करिष्यते । तुट् च ।

किं च ?

यच्चान्यत्प्राप्नोति ।

किं चान्यत् प्राप्नोति ?

आदेशः ॥

---

( ७६८ विधिसूत्रम् ॥ ४ । ३ । १ आ. ८ )

## १५९४ विभाषा पूर्वाह्णापराह्णाभ्याम् ॥ ४ । ३ । २४ ॥

( ५४६३ एदन्तत्वसाधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ पूर्वाह्णापराह्णाभ्यां सुबन्तवचनं सप्तमीश्रवणार्थम् ॥ * ॥

( भाष्यम् ) पूर्वाह्णापराह्णाभ्यां सुबन्तत्वं वक्तव्यम् ।

किं प्रयोजनम् ?

सप्तमीश्रवणार्थम् । सप्तम्याः श्रवणं यथा स्यात् । पूर्वाह्णेतनम्, अपराह्णेतनम् ।

तत्तर्हि वक्तव्यम् ?

( प्रदीपः ) सुबन्तवचनमिति । ङ्याप्प्रातिपदिकाधिकारात् प्रातिपदिकस्यैव तद्धितोत्पत्तौ प्रकृतित्वेन भाव्यम्, न तु सुबन्तस्येति भावः ॥

(उद्योतः) ननु समर्थात्तद्धितोत्पत्तिः, सामर्थ्यं च सुबन्तेनेति सुबन्तादेव तद्धित इति किं वचनेन? इत्यत आह—ङ्याबिति । यथाकथञ्चित्काल्पनिकसामर्थ्यमादायैव शास्त्रप्रवृत्तिरिति भावः ॥

( पूर्ववार्तिकस्यान्यथासिद्धत्वबोधकं भाष्यम् )

न वक्तव्यम् ।

आचार्यप्रवृत्तिर्ज्ञापयति—भवत्यत्र सप्तमीति, यदयं "घकालतनेषु कालनाम्नः" (६।३।१७) इति सप्तम्या अलुकं शास्ति ॥

( उद्योतः ) भाष्ये—भवत्यत्रेति । अत्र=कालवाचकशब्दे ॥

( ५४६४ आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमीप्रसङ्गः ॥ * ॥

( भाष्यम् ) अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमी प्राप्नोति । दोषातनम्, दिवातनम् ॥

( प्रदीपः ) दोषातनमिति । दोषाशब्दस्यापि कालवाचित्वादलुगनुमितायाः सप्तम्याः श्रवणप्रसङ्गः ॥

( उद्योतः ) तदाह—कालवाचित्वादिति ॥

( प्रत्याक्षेपपरं भाष्यम् )

अस्तु । 'अव्ययात्' इति लुग्भविष्यति ।

इहापि लुक्प्राप्नोति—पूर्वाह्णेतनम्, अपराह्णेतनम् ।

अलुगत्र लुकं बाधिष्यते ।

इहापि तर्हि[1] बाधेत—दोषातनम्, दिवातनम् ।

समानाश्रयो लुगलुका बाध्यते ।

कश्च समानाश्रयः ?

यः[2] प्रत्ययाश्रयः, अत्र च प्रागेव प्रत्ययोत्पत्तेर्लुग्भवति ॥

न सिध्यति । इह हि सति प्रत्यये लुका भवितव्यम्, सति लुक्यलुका भवितव्यम् । तत्र च प्रत्यय एव नास्ति कुतो लुग्भविष्यति ॥

सैषा ज्ञापकेनासती विभक्तिराकृष्यते । सा यथैवेह बाधिका भवति—पूर्वाह्णेतनम्, अपराह्णेतनमिति, एवमिहापि स्यात्—दोषातनम्, दिवातनम्[3] ॥

( प्रदीपः ) समानाश्रय इति । 'सुपो धातुप्रातिपदिकयोः' इत्ययं लुक् तद्धितोत्पत्तिनिमित्तप्रातिपदिकसंज्ञकसमुदायान्तवर्तिसुप्स्थानिकः—अलुक्तद्धितविशेषनिमित्तस्य समानाश्रयः ॥ अत्र चेति । 'अव्ययादाप्सुपः' इत्ययं लुग् अव्ययमात्रापेक्षत्वादन्तरङ्गत्वाद्भवतीत्यर्थः ॥ न सिध्यतीति । प्रातिपदिकात् प्रत्ययोत्पत्तिः, अलुग्विधानात्तु ज्ञापकाद्विभक्तिरिति

---

1 'इहापि तर्हि वा' इति च. ज. पाठः ॥

2 'यश्च प्रत्ययाश्रयः' इति च. ज. पाठः ॥

3 'दिवातनमिति' इति ख. झ. ज. पाठः ॥

पक्षः प्रक्रान्तः । तत्र प्रत्यय उत्पन्ने विभक्त्या भाव्यम्, न तु पूर्वम्; ततश्च 'अव्ययादाप्सुप' इत्ययमपि लुक्तद्धितोत्पत्त्युत्तरकालभाविसुप्स्थानिकत्वादलुकः समानाश्रयत्वात् बाध्यत इत्यर्थः । एतच्च हलदन्तादित्यस्यानुवृत्तिमनपेक्ष्योच्यते ॥ **तत्र च प्रत्यय इति** । प्राक्तद्धितोत्पत्तेः सुप्संज्ञकः प्रत्ययो नास्तीत्यर्थः ॥

**(उद्योतः)** ननु लुकोऽनैमित्तिकत्वात्किमादाय समानाश्रयत्वम्? अत आह—**सुपो धात्विति** । समानकालप्राप्तिकत्वमेव समानाश्रयत्वमिति भावः ॥ **अन्तरङ्गत्वादिति** । 'अन्तरङ्गानपि' इति न्याये तु लुगतिरिक्ता एवान्तरङ्गविधयो गृह्यन्त इति भावः ॥ ननु 'अव्ययात्' इति लुकः कथं तद्धितप्रत्ययापेक्षत्वम्? अत आह—**प्रातिपदिकादिति** ॥ **एतच्चेति** । एवञ्च तत्र तत्र तदनुवृत्तिर्वृत्तिकृतामेतद्भाष्यविरुद्धेति भावः ॥ सुपः प्रत्ययस्य सत्त्वादिदमयुक्तमत आह—**प्राक्तद्धितेति** ॥ भाष्ये—**आकृष्यत इति** । उत्पाद्यत इत्यर्थः ॥ **सा यथैवेह बाधिकेति** । तदनुमापकाऽलुक्प्रवृत्त्येत्यर्थः ॥

( एदन्तत्वे साधकान्तरबोधकं भाष्यम् )

**एवं तर्हि न ब्रूमः—'अलुग्वचनं ज्ञापकम्–भवत्यत्र सप्तमी' इति ।**

**किं तर्हि?**

**भवति सुबन्तादुत्पत्तिरिति ।**

**किं पुनर्ज्ञाप्यमेतद्, यावता समर्थानां प्रथमादिति वर्तते सामर्थ्यं च सुबन्तेन?**

**ज्ञाप्यमित्याह ।**

**कथम्?**

**ङ्याप्प्रातिपदिकादित्यपि वर्तते, तत्र कुत एतत्–सुबन्तादुत्पत्तिर्भविष्यति, न पुनर्ङ्याप्प्रातिपदिकादिति ॥**

**(उद्योतः)** भाष्ये—**सुबन्तादुत्पत्तिरिति** । 'स्वार्थद्रव्यलिङ्गसङ्ख्याकारकैः परिपूर्णार्थस्य पदस्य पदान्तरेण सम्बन्धः' इत्यर्थो ज्ञाप्यत इत्यर्थः ॥ **यावता समर्थानां प्रथमादिति** । 'किं पुनः समर्थम्? अर्थाभिधाने यच्छक्तं कृतवर्णानुपूर्वीकं पदम्' इति तत्सूत्रभाष्योक्तेरिति भावः । कृतवर्णानुपूर्वीकत्वं परं—ङ्याप्प्रातिपदिकांशे एवेत्यन्यत् ॥ **न पुनर्ङ्याबिति** । यत्सुपि सत्यर्थबोधे शक्तम्, ततः प्रथमात्प्रातिपदिकादित्यर्थो भविष्यतीति भावः ॥

( साधकान्तराक्षेपभाष्यम् )

**कथं यत्तदुक्तम्–'वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थम्' इति?**

**(प्रदीपः) कथं यदिति** । यद्यलुग्विधानेन समर्थस्य प्रकृतित्वमनुमीयते तदा ङ्याप्प्रातिपदिकाधिकारस्य वृद्धादिविशेषणत्वेन ङ्याप्प्रातिपदिकस्य प्रकृतित्वप्रतिपादनं प्रयोजनं यदुक्तं तत्कथं न विरुध्यत इति प्रश्नः ॥

**( उद्योतः )** ननु ज्ञापकात्सुबन्तस्य प्रकृतित्वेऽपि 'प्रातिपदिकात्परः सुबन्तात्परः' इत्यर्थः । तत्र सुबन्तात्परत्वमव्यवहितम्, प्रातिपदिकात्तु व्यवहितम्, सामर्थ्यात्, इति–प्रातिपदिकस्यापि संनिहितत्वात्तद्विशेषणं 'वृद्धात्' इत्यादि भविष्यतीति को विरोधः? अत आह—**यदीति** ॥ **वृद्धादिविशेषणत्वेनेति** बहुव्रीहिः । अयं भावः—'वृद्धाच्छः' इत्यादौ 'वृद्धात्' इत्यादि प्रकृतिबोधकम्, तस्य प्रातिपदिकविशेषणत्वे तस्यैव प्रकृतित्वं लभ्यते इति प्रकृतित्वप्रतिपादनरूपं यत्प्रयोजनं तदधिकारस्योक्तं तद्विरुध्यते इति । किञ्च विनिगमनाविरहादुभयोर्विशेषणं स्यात्, ततश्च 'ज्ञानामयं ज्ञीयः' इत्यत्रैव स्यात्, 'ज्ञयोरयम्' इत्यत्र न स्यात् । 'ज्ञा'शब्दोऽत्राबन्त इति भावः ॥

( आक्षेपनिरासभाष्यम् )

**समर्थस्य यद् वृद्धं ङ्याप्प्रातिपदिकमित्येवमेतद्विज्ञायते ॥**

**( प्रदीपः )** परिहारमाह—**समर्थस्येति** । समर्थस्य विभक्त्यन्तस्य प्रत्ययप्रकृतित्वेनाश्रितस्यावयवभूतं ङ्याप्प्रातिपदिकं वृद्धादि चेद्भवति ततः समर्थादेव प्रत्ययो भवतीति नास्ति विरोध इत्यर्थः ॥

**( उद्योतः ) समर्थस्येति** । लक्ष्यानुरोधात्प्रातिपदिकादित्येतत्सामर्थ्याच्च तस्यैव विशेषणं भविष्यतीति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**यद्येतज्ज्ञाप्यते, कथं द्विपद आगतं द्विपाद्रूप्यम्, प्रष्ठौह आगतं प्रष्ठवाड्रूप्यम्, कीलालप आगतं कीलालपारूप्यम्, पपुष आगतं पपिवद्रूप्यम्?**

**पद्भावः, ऊठ्, आकारलोपः, प्रसारणमित्येते विधयः प्राप्नुवन्ति ॥**

**( प्रदीपः ) कथं द्विपद इति** । विभक्त्यन्तात्प्रत्ययोत्पत्तावाश्रीयमाणायां विभक्तिनिमित्तानि कार्याण्यन्तरङ्गत्वात् प्राप्नुवन्तीति प्रश्नः । सर्वत्र 'हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः' इति रूप्यप्रत्ययः ॥

**( उद्योतः )** भाष्ये—**प्रष्ठौह इति** । 'वहश्च' इति ण्विः । एतद्भाष्यप्रामाण्यात् तत्र 'छन्दसि' इति नानुवर्तते, न हि विग्रहवाक्यं छन्दः । ण्यन्ताद्विवि तु णिलोपस्य स्थानिवत्त्वादूठ् दुर्लभः, 'कौलुंसम्' इत्यत्र क्विग्रहणं विचोऽप्युपलक्षणं वा ॥ **कीलालप इति** । एतद्भाष्यप्रामाण्यात् 'आतो मनिन्' इत्यादिसूत्रे 'छन्दसि' इत्यस्यासम्बन्धः, तेनैवात्र विच् । क्विपि तु अत्वेत्वं स्यात्, आदन्तात्क्विपोऽनभिधानाच्च ॥ **पपुष इति** । एतद्भाष्यप्रामाण्यादेव क्वसुलोभावादेव न तत्रछस्याशंकाऽपीत्यत आह—ज्ञाशब्दोऽत्राबन्त इति ॥

१ ङ्याप्प्रातिपदिकादितिसूत्रस्थं तृतीयं वार्तिकमेतत् ॥

२ ज्ञानामयमिति । वृद्धादित्यस्योभयविशेषणत्वे वृद्धात्प्रातिपदिकात् वृद्धाच्च सुबन्तादित्यर्थः स्यात् । ज्ञयोरित्यस्य सुबन्तस्य वृद्धत्वाभावात्तत्र छप्रत्ययो न स्यादित्यर्थः ॥

३ ननु वृद्धादित्येतत्प्रातिपदिकविशेषणमपि । एवञ्च ज्ञस्य वृद्धप्रातिपदिकत्वा-

४ एतत्–अलुग्वचनात्सुबन्तादुत्पत्तिरित्येतत् ॥

५ ज. पुस्तके 'कीलालप इति ''' अनभिधानाच्च' इत्यन्तो ग्रन्थो नास्ति ॥

६ 'नभिधानाचेत्याहुः' इत्येवं पाठो झ. पुस्तके ॥

केऽपि क्वचिद्भवति, 'भाषायां सदवस' इत्यत्र सदादिग्रहणं तूदाहरणमात्रमित्याहुः ॥

( प्रत्याक्षेपनिरासभाष्यम् )

**लुकि कृते न भविष्यन्ति ॥**

( प्रदीपः ) **लुकि कृत इति** । कृताकृतप्रसङ्गित्वान्नित्यत्वादिति भावः । वर्णाश्रयत्वाद् भसंज्ञायाः प्रत्ययलक्षणत्वाभावात्पङ्क्त्वादिकमनित्यम् ॥

( उद्द्योतः ) **नित्यत्वादिति** । पदस्य विभज्यान्वाख्याने इदम् ॥

( पुनः प्रत्याक्षेपभाष्यम् )

**इह तर्हि सामसु साधु सामन्यः, वेमन्यः । "न लोपः प्रातिपदिकान्तस्य"(८।२।७) इति नलोपः प्राप्नोति ॥**

( प्रदीपः ) **इह तर्हीति** । नलोपस्य प्रत्ययलक्षणेन प्राप्त्या नित्यत्वं मन्यते ॥

( उद्द्योतः ) **नलोपस्येति** । लुक्यपि प्रत्ययलक्षणेन पदत्वादिति भावः ॥

( प्रत्याक्षेपनिरासभाष्यम् )

**लुकि कृते भत्वान्न भविष्यति ।**

**इदमिह संप्रधार्यम्—लुक् क्रियतां नलोप इति, किमत्र कर्तव्यम् ?**

**परत्वान्नलोपः ।**

**एवं तर्हीदमिह संप्रधार्यम्—नलोपः क्रियतां तद्धितोत्पत्तिरिति, किमत्र कर्तव्यम् ?**

**परत्वान्नलोपः ।**

**असिद्धो नलोपः, तस्यासिद्धत्वात्तद्धितोत्पत्तिर्भविष्यति ।**

**परिगणितेषु कार्येषु नलोपोऽसिद्धः, न चेदं तत्र परिगण्यते ।**

**इदमपि तत्र परिगण्यते ।**

**कथम् ?**

**सुब्विधिरिति सर्वैविभक्त्यन्तः समासः—सुपो विधिः सुब्विधिः, सुबन्ताद्विधिः सुब्विधिरिति ॥**

( प्रदीपः ) **परत्वादिति** । द्वावपि लुङ्नलोपौ नित्यौ । 'यस्य लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम्' इति नलोपोऽपि नित्य इति भावः । एतच्च 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इत्येतदनाश्रित्योक्तम् । एतदेव त्वाश्रयणीयम्, अन्यथाऽन्तरङ्गत्वात्पङ्क्त्वादयो नित्यमपि लुकं बाधेरन् । तदुक्तम्—परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसंनिपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति । **सुबन्ताद्विधिरिति** । ततश्च तद्धितोऽपि सुब्विधिरिति तत्र कर्तव्ये नलोपस्यासिद्धत्वादप्रवृत्तिः । तद्धिते तु कृते लुकोऽपि सुब्विधित्वात्तत्र नलोपस्यासिद्धत्वाल्लुक् प्रवर्तते, ततो भत्वान्नलोपाभावः ॥

( उद्द्योतः ) ननु लुकि सति भत्वे पदत्वाभावान्नलोपाप्राप्तेः कथं तस्य नित्यत्वम् ? अत आह—**यस्येति** ॥ **परनित्येति** । एते विषयौ विरोधिभिः पूर्वादिभिः संनिपाते भवन्तीति शेषः ॥ **तेषां मिथः प्रसङ्गे**=परनित्याद्योरेकत्र प्रसङ्गे परनित्यान्तरङ्गेति पाठरीत्या[1] यद्यत्परन्तद्बलीय इति परिभाषार्थः ॥

अन्ये[2] तु—पङ्क्त्वादिविषये 'लुकि कृते' इति भाष्यस्यान्तरङ्गानपीति न्यायेनेति शेषः । लुकि कृतेऽपि प्रत्ययलक्षणेन पदत्वसत्त्वान्नलोपः प्राप्नोतीत्याह—**इह तर्हीति** ॥ उत्तरयति—**लुकि कृते भत्वादिति** । समानावधिकसर्वपदत्वबाधो भत्वेनेति भावः । '**इदमिह**' इत्यादि भाष्यं तु 'अन्तरङ्गानपि' इति परिभाषाऽनभिज्ञयोरेकदेशिनोरुक्तिप्रत्युक्तिपरमित्याहुः ॥

( ७६९ विधिसूत्रम् ॥ ४ । ३ । १ आ. ९ )

## १५९५ तत्र जातः ॥ ४ । ३ । २५ ॥

( जातार्थाधिकरणम् )

( सूत्राक्षेपभाष्यम् )

**किमर्थं जातादयोऽर्था निर्दिश्यन्ते ?**

( प्रदीपः ) जातादिषु घादीनामपेक्षामाश्रित्य शेषग्रहणं प्रत्याख्यातम् । इह तु शेष इत्यस्य लक्षणत्वमधिकारत्वं चाश्रित्य जाताद्यर्थाक्षेपः—**किमर्थमिति** । प्रत्ययार्थवशेनाभिधानसामर्थ्येन च समर्थविभक्तिर्लप्स्यत इति तन्निर्देशोऽपि न कर्तव्य इति भावः ॥

( उद्द्योतः ) ननु 'शेषे' इत्यधिकारेऽपि समर्थविभक्तिनिर्देशार्थतान्यावश्यकानीत्यत आह—**प्रत्ययार्थेति** ॥ ननु जातरूपप्रत्ययार्थे सप्तम्या इव तृतीयाया अपि योग्यत्वादाह—**अभिधानेति** ॥

( सूत्रप्रयोजनभाष्यम् )

**जातादिष्वर्थेषु घादयो यथा स्युः, स्वार्थे मा भूवन्निति ॥**

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् ।**

**"शेषे" (४।२।९२) इत्यनुवर्तते, तेन स्वार्थे न भविष्यन्ति ॥**

( प्रदीपः ) **तेन स्वार्थ इति** । ननु स्वार्थोऽपि प्रत्ययविधावनुपयोगाच्छेषः, इति कुतस्तत्र न स्युः ? उच्यते—अन्तरेणापि शेषाधिकारं चातुरर्थ्यपर्यन्तापत्याद्यर्थनिवृत्त्या स्वार्थे घादिषु प्राप्तेषु शेषाधिकारः स्वार्थव्यतिरिक्तार्थपरिग्रहार्थः ॥

( उद्द्योतः ) **स्वार्थव्यतिरिक्तेति** । उपयुक्तादन्यस्योपयुक्तसजातीयस्यैव ग्रहणादिति भावः ॥

---

1 'पाठरीत्या यत्परं' इति ख. ज. झ. पाठः ॥

2 'लुकि कृते न भविष्यन्ति' इत्यादि भाष्यं प्रकारान्तरेण विवृणोति—अन्ये त्वित्यादिना ॥

( वार्तिकावतरणभाष्यम् )

अत उत्तरं पठति—

( ५४६५ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

॥*॥ तत्र जातादिषु वचनं नियमार्थम् ॥*॥

( भाष्यम् ) नियमार्थोऽयमारम्भः । जातादिष्वेव घादयो यथा स्युरिह मा भूवन्—तत्रास्ते, तत्र शेत इति ॥

( प्रदीपः ) तत्र आस्ते इति । स्रुघ्न आस्त इत्यादावपि शेष इत्यस्य लक्षणत्वात्प्रत्ययप्रसङ्गः ॥

( उद्योतः ) भाष्ये—अयमारम्भ इति । 'तत्र जातः' इत्यादि सूत्रसमूहारम्भ इत्यर्थः ॥ नियमाभावे प्रत्ययप्रसंगमुपपादयति—स्रुघ्न इत्यादि ॥

( नियमानर्थक्यबोधकभाष्यम् )

यदि नियमः क्रियते, दार्षदाः सक्तवः, औलूखलो यावक इति न सिध्यति ।

संस्कृतमित्येवं भविष्यति ।

भवेत् सिद्धम्—दार्षदाः सक्तव इति ।

इदं तु न सिध्यति—औलूखलो यावक इति । संस्कृतं नाम तद्भवति यत्तत एवापकृष्याभ्यवह्रियते, न च यावक उलूखलादेवापकृष्याभ्यवह्रियते । अवश्यं रन्धनादीनि प्रतीक्ष्याणि ।

तस्मान्नार्थोऽनेन नियमेन ॥

( प्रदीपः ) संस्कृतमिति । उपयोगफला हि क्रिया संस्कार इति मन्यते ॥

( उद्योतः ) उपयोगः—साक्षाद्भोजनादौ विनियोगः ॥

( नियमफलसाधकभाष्यम् )

कस्मान्न भवति—तत्रास्ते, तत्र शेत इति ।

अनभिधानात् ॥

तच्चावश्यमनभिधानमाश्रयितव्यम् । क्रियमाणेष्वपि ह्यर्थनिर्देशेषु यत्र जातादिषूत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं न भवति, न भवति तत्र प्रत्ययोत्पत्तिः । तद्यथा—अङ्गुल्या खनति, वृक्षमूलादागत इति ॥

( प्रदीपः ) तच्चावश्यमिति । अर्थनिर्देशकरणवादिनाऽप्यनिष्टनिवृत्तयेऽवश्यमाश्रयितव्यमनभिधानमित्यर्थः ॥

( सूत्रफलबोधकभाष्यम् )

न तर्हीदानीं जातादयोऽर्था निर्देष्टव्याः ।

निर्देष्टव्याश्च ।

किं प्रयोजनम् ?

अपवादविधानार्थम्[1] । "प्रावृषष्ठप्" ( ४।३।२६ ) प्रावृषि जातः प्रावृषिकः ।

क्व मा भूत् ?

प्रावृषि भवाः प्रावृषेण्या बलाहकाः ।

यानि त्वेतानि निरपवादान्यर्थादेशनानि तानि शक्यान्यकर्तुम् । "कृतलब्धक्रीतकुशलाः" (४।३।३८) स्रौघ्नो देवदत्त इति ॥

( प्रदीपः ) अपवादविधानार्थमिति । असंकरेण विशिष्ट एवार्थेऽपवादा यथा स्युरित्येवमर्था अर्थनिर्देशा इत्यर्थः ॥

( उद्योतः ) नन्वर्थनिर्देशं विनाऽप्यपवादविधाने को दोषोऽत आह—असङ्करेणेति । अन्यथा प्रावृष एण्यठपोः सर्वेष्वर्थेषु पर्यायप्रसंगः स्यादिति भावः ॥

( ७७० विधिसूत्रम् ॥ ४ । ३ । १ आ. १० )

## १६०४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ॥ ४ । ३ । ३४ ॥

( लुकोऽधिकरणम् )

( ५४६६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥*॥ लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानं कर्तव्यम् । चित्रायां जाता—चित्रा स्त्री । चित्रा ॥

रेवती । रेवती स्त्री । रेवती ॥

रोहिणी । रोहिणी स्त्री ॥[2]

( प्रदीपः ) रेवतीरोहिणीति । नक्षत्राणो लुकि कृते 'लुक्तद्धितलुकि' इति स्त्रीप्रत्ययस्य लुक् । ततो गौरादिषु 'पिप्पल्यादयश्च' इति पाठादादिशब्दस्य प्रकारार्थत्वान्ङीष् प्रत्ययः ॥

( उद्योतः ) ननु गौरादौ 'रेवतीरोहिणी नक्षत्रे' इत्युक्तेः कथमत्र ङीष् ? अत आह—पिप्पल्यादयश्चेति ॥ ङीष्प्रत्यय इति । काशकृत्स्नेतिवत्[3] 'लक्ष्ये लक्षणस्य' इति न्यायस्तु न, कृतलुकां पिप्पल्यादिषु पाठादित्याहुः ॥

---

१ प्रावृष एण्यः ( ४।३।१७ ) इत्यनेन प्रावृषि साधुरित्यर्थे एण्यप्रत्ययो विधीयते । प्रावृषष्ठप् ( ४।३।२६ ) इत्यनेन तु प्रावृषि जात इत्यर्थे ठप्प्रत्यय इति तयोर्जाताद्यर्थनिर्देशाभावे पर्यायः स्यादित्यर्थः ॥

२ पूर्वोक्तेषु चित्रा रेवति रोहिणीत्युदाहरणेषु तेषां शब्दानां चित्रादिनक्षत्रजातस्त्रीबोधकत्वान्न नक्षत्रवाचकत्वमिति भावः ॥

३ काशकृत्स्नेतिवदिति । काशकृत्स्निना प्रोक्ता मीमांसेत्यर्थेऽणि ङीपि च काशकृत्स्नी, तामधीते इत्यर्थेऽणो लुकि कृते उपसर्जनस्त्रीप्रत्ययस्य ङीपोऽपि लुकि, अण्णन्तत्वात्प्राप्तो ङीप् लक्ष्ये लक्षणन्यायात्र भवति । अत्र तु कृतलुकां गणे पाठेन लक्ष्ये लक्षणन्यायानवकाश इति भावः ॥

( ५४६७ विधिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ फल्गुन्यषाढाभ्यां टानौ ॥ * ॥**

( भाष्यम् ) फल्गुन्यषाढाभ्यां टानौ वक्तव्यौ । फल्गुनी, अषाढा उपदधाति ॥

( ५४६८ विधिवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ श्रविष्ठाषाढाभ्यां छण् ॥ * ॥**

( भाष्यम् ) श्रविष्ठाषाढाभ्यां छण्वक्तव्यः । श्राविष्ठीयाः, आषाढीयाः ।

स तर्हि वक्तव्यः ?

( ५४६९ प्रथमवार्तिकखण्डनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् ॥ * ॥**

( भाष्यम् ) न वा वक्तव्यः ।

किं कारणम् ?

नक्षत्रेभ्यो बहुलं लुग्वचनात् । नक्षत्रेभ्यो बहुलं लुगित्येवमत्र लुग्भविष्यति ॥

( प्रदीपः ) न वेति । लुक एव प्रत्याख्यानम्, प्रत्ययास्तूपसंख्येयाः ॥

( उद्द्योतः ) ननु लुग्विधानेन कथं टाऽनादिविधायकप्रत्याख्यानमत आह—लुक एवेति ॥

( ७७१ विधिसूत्रम् ॥ ४ । ३ । १ आ. ११ )

## १६०९ प्रायभवः ॥ ४ । ३ । ३९ ॥

( प्रायभवार्थाधिकरणम् )

( ५४७० सूत्रप्रत्याख्याने वार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात् ॥ * ॥**

( भाष्यम् ) प्रायभवग्रहणमनर्थकम् ।

किं कारणम् ?

तत्र भवेन कृतत्वात् । यो हि राष्ट्रे प्रायेण भवति तत्र भवोऽसौ भवति । तत्र "तत्र भवः" (४।३।५३) इत्येव सिद्धम् ।

न सिध्यति ।

अनित्यभवः प्रायभवः । नित्यभवस्तत्र भवः[1] ॥

( प्रदीपः ) तत्र भवेनेति । भवे सामान्ये प्रायभवस्यापि विशेषस्यान्तर्भावादिति भावः ॥

( उद्द्योतः ) ननु भवेन प्रायभवस्य कथं गतार्थता? अर्थभेदादत आह—भवे इति ॥

( ५४७१ प्रत्याख्यानोपष्टम्भकं वार्तिकम् ॥ २ ॥ )

**॥ * ॥ अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् ॥ * ॥**

( भाष्यम् ) यद्भवान् मुक्तसंशयं तत्र भव उदाहरणं न्याय्यं मन्यते—स्रौघ्नौ देवदत्त इति, तेनैतत्तुल्यम् । सोऽपि ह्यवश्यमुदकदेशादीन्यभिनिष्क्रामति ।

अथैतद्भवान् प्रायभवे उदाहरणं न्याय्यं मन्यते, तत्र भवे किमुदाहरणम् ?

यत्तत्र नित्यं भवति—स्रौघ्नाः प्रासादाः, स्रौघ्नाः प्राकारा इति ।

एवं तर्हि तत्र भव इति प्रकृत्य जिह्वामूलाङ्गुलेश्छो विधीयते । स यथा तस्मिन् दृष्टापचारे[2]—अङ्गुलीयम्—इति भवति, एवं प्रायभवेऽपि भविष्यति ॥

( प्रदीपः ) अनित्यभव इति । अर्थभेदमनेनाचष्टे । यस्तत्र कदाचिद्भवति कदाचिन्न भवति सः-प्रायभवः । यस्य तु नियत आधाराधेयभावः सः-तत्र भव इति भावः ॥ एतन्निराकरोति—मुक्तसंशयेनेति ॥

( उद्द्योतः ) मुक्तसंशयेनेतीति । एवञ्च 'तत्र भवः' इत्यत्र सर्वं गृह्यते, अभिधानस्वाभाव्याच्च व्यवस्थेति भावः ॥ भाष्ये—देवदत्तस्यानित्यभवत्वमुपपादयति—सोऽपि ह्यवश्यकमुदकदेशादीनीति । जलाहरणाद्यर्थमिति भावः । 'उदग्देशादीनि' इति क्वचित्पाठः, अयमेव युक्तः पाठः, जलादेः स्रुघ्नदेशेऽपि सुलभत्वादिति बोध्यम् ॥ भाष्ये—यत्तत्र नित्यमिति । एवञ्च तदेवोदाहरणं स्यान्न तु 'स्रौघ्नो देवदत्तः' इति । एवञ्च संग्रहादिषु तदुदाहरणदानमसंगतं स्यादिति भावः ॥ नित्यभवस्यैव 'तत्र भवः' इत्यत्र ग्रहणे दोषान्तरमाह—भाष्ये—एवं तर्हीति । किञ्चेत्यर्थः । अभ्युपेत्य वा दोषान्तरमाह—एवं तर्हीति ॥ दृष्टापचारे इति । दृष्टव्यभिचारे, अङ्गुलीसम्बन्धाभावेऽपीति[3] यावत् । तस्मिन्नङ्गुलीभवेऽङ्गुलीयमिति भवतीत्यर्थः ॥

( सूत्रप्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—प्रायभव इति प्रकृत्य उपजानूपकर्णोपनीवेष्ठक् वक्ष्यति स प्रायभव एव यथा स्यात्, तत्र भवे मा भूत् । उपजानुभवं गन्त्रिति ॥

( सूत्रप्रयोजनान्यथासिद्धिप्रदर्शकं भाष्यम् )

अथेदानीं तत्र भव इति प्रकृत्य शरीरावयवाद्यद्विधीयते सोऽत्र कस्मान्न भवति ?

1 'नित्यभवस्तत्र भवः' इत्यस्य पाठश्छ. पुस्तके नास्ति ॥

2 अपचारपदस्य नाशरूपार्थमाशङ्क्याह—दृष्टव्यभिचार इति ॥

3 अङ्गुलीसम्बन्धेति । अङ्गुलीयस्य स्वर्णालङ्कारस्य मञ्जूषादौ स्थितस्यापि 'अङ्गुलीयम्' इत्यङ्गुलीभवत्वव्यवहारः । तत्राङ्गुलीसम्बन्धस्य व्यभिचारो दृष्ट इति भावः ॥

अनभिधानात् ।

यथैव तर्ह्यनभिधानाद्यन्न भवति, एवं ठगपि न भविष्यति ॥

( प्रदीपः ) अथेति । जानुसमीपस्थशरीरावयववाची-उपजानुशब्द इति भावः ॥ एवं ठगपीति । तत्रभवाधिकारे ठग्विधीयमानः प्रायभव एव भविष्यतीत्यर्थः ॥

( उद्द्योतः ) ननु उपजानुशब्दस्य कथं शरीरावयववाचकत्वमत आह—जानुसमीपेति ॥ प्रायभव एवेति । अभिधानस्वाभाव्यात्तत्र भवविशेष एव तदुत्पत्तिर्भविष्यतीति नार्थः । 'प्रायभवः' इत्यधिकारेणेति भावः ॥

( ७७२ विधिसूत्रम् ॥ ४ । ३ । १ आ. १२ )

## १६१२ कोशाड्ढञ् ॥ ४ । ३ । ४२ ॥

( सम्भूताधिकरणे ढञ्प्रत्ययः )

( ५४७२ प्रत्ययस्यार्थबोधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ विकारे कोशाड्ढञ् ॥ * ॥

( भाष्यम् ) विकारे कोशाड्ढञ्वक्तव्यः । कोशस्य विकारः कौशेयम् ॥

( प्रदीपः ) विकारे इति । 'तस्य विकारः' इत्यत्र प्रकरणे सूत्रमिदं कर्तव्यम् । 'एण्या ढञ्' इति कृत्वा कोशादिति कर्तव्यम् ॥

( उद्द्योतः ) विकारे-इति नापूर्वमित्याह—तस्य विकार इति ॥ तत्र लाघवमप्याह—एण्या इति ॥

( ५४७३ उत्तरसूत्रानुपपत्तिदर्शकवार्तिकम् ॥ २ ॥ )

॥ * ॥ संभूते ह्यर्थानुपपत्तिः ॥ * ॥

( भाष्यम् ) संभूत इति ह्युच्यमानेऽर्थस्यानुपपत्तिः स्यात् । न ह्यदः कोशे संभवति ।

किं तर्हि ?

कोशस्यादो विकारः ॥

( प्रदीपः ) अर्थानुपपत्तिरिति । कौशेयशब्दस्य लौकिको योऽर्थः सूत्रवस्त्रलक्षणः स एवं नोपपद्यते, लौकिकोऽर्थो न संगृहीतः स्यादित्यर्थः ॥ न ह्यद इति । कौशेयशब्दाभिधेयं वस्त्रसूत्रलक्षणं कोशेन सम्भवतीत्यर्थः । ननु कोशस्य वस्त्रकारणत्वात् कारणे च कार्यस्य सम्भवात् कथमर्थानुपपत्तिः ? नैष दोषः । लोकप्रसिद्धार्थबाध एवं कृतः स्यात्, न हि कार्यावस्थायां लोकः कार्यकारणयोः सम्भवक्रियापेक्षमाधाराधेयभावमधिगच्छति, किन्तर्हि ? प्रकृतिविकारभावम् ॥

( उद्द्योतः ) लौकिक इति । एवञ्चेष्टार्थानुपपत्तिरिति 'अर्थानुपपत्तिः' इत्यस्यार्थ इति भावः ॥ स एवमिति । सम्भूताधिकारे क्रियमाणे इत्यर्थः ॥ सम्भवः—उत्पत्तिः, सम्भावना—आधेयस्याधारपरिमाणानतिरेकश्च ॥ अद इत्यस्य च लोके बुध्यमानमित्यर्थस्तदाह—कौशेयेति । सम्भवक्रिया—उत्पत्तिक्रिया ॥ किं तर्हि प्रकृतीति । तन्तुषु पट इति तु न सम्भवक्रियापेक्ष आधाराधेयभावः, किन्त्ववयवेषु आधारत्वोपचारः, न हि तथा कोश इति भावः ॥

( प्रथमवार्तिकातिव्याप्तिदर्शकं भाष्यम् )

यदि विकार इत्युच्यते, भस्मन्यपि प्राप्नोति । भस्मापि कोशस्य विकारः ॥

( अतिव्याप्तिनिवारकभाष्यम् )

अथ सम्भूत इत्युच्यमाने क्रिमौ कस्मान्न भवति ? क्रिमिरपि कोशे सम्भवति ।

अनभिधानात् ।

यथैव तर्ह्यनभिधानात्क्रिमौ न भवत्येवं भस्मन्यपि न भविष्यति । अर्थश्चोपपन्नो भवति ॥

(प्रदीपः) अर्थश्चेति । लौकिकोऽर्थो विकारे प्रत्ययविधानेन शास्त्रेणानुसृतत्वाद्युक्तियुक्तो भवतीत्यर्थः ॥

( उद्द्योतः ) युक्तियुक्तो भवतीति । स्वस्मिन् शब्दस्य साधुत्वनियामको भवतीत्यर्थः ॥

( ७७३ विधिसूत्रम् ॥ ४ । ३ । १ आ. १३ )

## १६१८ कलाप्यश्वत्थयवबुसाद्वुन् ॥ ४ । ३ । ४८ ॥

( देयमृणाधिकरणे वुन्प्रत्ययः )

( सूत्रार्थोपपादकभाष्यम् )

अयुक्तोऽयं निर्देशः । कालादिति वर्तते, न च कलापी नाम कालोऽस्ति ॥

नैष दोषः ।

साहचर्यात्ताच्छब्द्यं भविष्यति । कलापिसहचरितः कालः कलापी काल इति ॥

( प्रदीपः ) कलापिसहचरित इति । यस्मिन् काले मयूराः कलापिनो भवन्ति स कलापीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—कालादिति वर्तत इति । 'कालात्साधुपुष्प्यत्' इत्यतः ॥ साहचर्यमुपपादयति—यस्मिन्निति ॥

( ७७४ विधिसूत्रम् ॥ ४ । ३ । १ आ. १४ )

## १६२३ तत्र भवः ॥ ४ । ३ । ५३ ॥

( तत्र भवार्थाधिकरणम् )

( पदकृत्यभाष्यम् )

तत्रेति वर्तमाने पुनस्तत्रग्रहणं किमर्थम् ?

( ५४७४ तत्रग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ तत्रप्रकरणे पुनस्तत्रवचनं कालनिवृत्त्यर्थम् ॥ * ॥

( भाष्यम् ) तत्रप्रकरणे तत्रेति पुनर्वचनं क्रियते कालनिवृत्त्यर्थम् । कालाधिकारो निवर्त्यते ॥

( उद्योतः ) भाष्ये—कालाधिकार इति । 'कालात्साधु' इत्ययम् ॥ निवर्तते इति । तत्रशब्देनेति शेषः । न च 'तदस्य सोढम्' इत्यनेन विच्छेदात्तत्रग्रहणासंबन्धः, तस्यान्यत्रापि पठितुं शक्यत्वादिति भावः ॥

( वार्तिकार्थोपष्टम्भकभाष्यम् )

**न हि काको वाश्यत इत्येवाधिकारा निवर्तन्ते, को वाऽभिसम्बन्धो यत्तत्रग्रहणं कालाधिकारं निवर्तयेत् ।**

**एषोऽभिसम्बन्धः—**

**कालाभिसम्बद्धं तत्रग्रहणमनुवर्तते, तत्रग्रहणं च तत्रग्रहणस्य निवर्तकं भवति, तस्मिन्निवृत्ते कालाधिकारोऽपि निवर्तते ॥**

( प्रदीपः ) **न हि काक इति ।** यथा काकवाशितस्य कालाधिकारनिवृत्तिर्नाभिधेया तथा तत्रशब्दस्यापीत्यर्थः ॥[1] **तत्र ग्रहणं चेति ।** सप्तम्यर्थमात्रप्रतिपत्तिप्रयोजनं तत्रग्रहणं कालसम्बद्धस्य विशेषफलस्य तत्रग्रहणस्य निवृत्तिं विरोधात् करोतीत्यर्थः ॥

( उद्योतः ) **विशेषफलस्येति ।** कालनिष्ठसप्तम्यर्थप्रतिपत्तिफलस्येत्यर्थः ॥

( ७७५ विधिसूत्रम् ॥ ४ । ३ । १ आ. १५ )

## १६२८ गम्भीराञ्ञ्यः ॥ ४ । ३ । ५८ ॥

( तत्रभवाधिकरणे ञ्यप्रत्ययः )

( ७७६ विधिसूत्रम् ॥ ४ । ३ । १ आ. १६ )

## १६२९ अव्ययीभावाच्च ॥ ४ । ३ । ५९ ॥

( ५४७५ उपसङ्ख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ॥ * ॥

( भाष्यम् ) **ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानं कर्तव्यम् । पारिमुख्यम्, पारोष्ठ्यम्, पारिहनव्यम् ॥**

( प्रदीपः ) **ञ्यप्रकरण इति ।** 'अव्ययीभावाच्च' इत्येतदतिव्यापकत्वादकृत्वा परिमुखादिभ्य एव ञ्यो विधेयः, गणे चाव्ययीभावकार्ययुक्तानि परिमुखादीनि पठितव्यानि न तु प्रातिपदिकान्येव । तेन तेषां बहुव्रीहितत्पुरुषाणां ग्रहणं न भविष्यतीति भावः ॥

( उद्योतः ) ननु परिमुखादिभ्योऽव्ययीभावेभ्य एवेष्यते, अत एव सूत्रारम्भे 'उपकूलादिभ्यः प्रतिषेधः' इत्युक्तम्, तत्र 'अव्ययीभावाच्च' इत्येव सिद्धमत आह—**अव्ययीभावाच्चेत्येतदिति ॥**

( ५४७६ उत्तरसूत्रातिव्याप्तिनिवारकं वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः ॥ * ॥

( भाष्यम् ) **अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधो वक्तव्यः । औपकूलः, औपमूलः, औपशालः ॥**

( प्रदीपः ) अथ सूत्रं क्रियते तदाऽतिव्याप्तिपरिहारायेदं वक्तव्यमित्याह—**अव्ययीभावादिति ॥**

( उद्योतः ) **इदं वक्तव्यमिति ।** वक्ष्यमाणम्—'उपकूलादिभ्यः प्रतिषेधः' इत्येतदित्यर्थः । एवञ्च 'परिमुखादिभ्यः' इत्येवोक्त्वा 'अव्ययीभावाच्च' इति न वक्तव्यमिति भावः । बहुव्रीहितत्पुरुषाणामनभिधानान्न ग्रहणमित्यन्ये ॥

( ७७७ विधिसूत्रम् ॥ ४ । ३ । १ आ. १७ )

## १६३० अन्तःपूर्वपदाट्ठञ् ॥ ४।३।६० ॥

( तत्रभवाधिकरणे ठञ् )

( वार्तिकावतरणभाष्यम् )

**अत्यल्पमिदमुच्यते ।**

( ५४७७ संग्राहकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ॥ * ॥

( भाष्यम् ) **समानस्य—सामानिकः । तदादेः—सामानग्रामिकः, सामानदेशिकः । अध्यात्मादिषु चेष्यते—आध्यात्मिकः, आधिदैविकः, आधिभौतिकः ॥**

( ५४७८ वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ ऊर्ध्वंदमाच्च देहाच्च ॥ * ॥

( भाष्यम् ) **ठञ्वक्तव्यः—और्ध्वंदमिकम्, और्ध्वदेहिकम् ॥**

( प्रदीपः ) **ऊर्ध्वंदमाच्चेति ।** दम उत्तरपदे ठञ्संनियोगेनोर्ध्वशब्दस्य मकारान्तत्वं निपात्यते ॥

( उद्योतः ) उदाहरणे 'और्ध्वं' इत्यनुस्वारश्रवणं कथम्? अत आह—**दमे इति ।** न तु देहे, और्ध्वदेहिकमिति भाष्ये तदनुच्चारणादिति भावः ॥

( ५४७९ वार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ लोकोत्तरपदस्य च ॥ * ॥

( भाष्यम् ) **ठञ् वक्तव्यः । ऐहलौकिकम्, पारलौकिकम् ॥**

---

१ यथा काकवाशितस्य कालाधिकारनिवृत्तिरूपोऽर्थो न वाच्यः, एवं तत्रशब्दस्यापि नैव वाच्यमेतदिति भावः ॥

२ छ. पुस्तके नास्योदाहरणस्य पाठः ॥

( प्रदीपः ) ऐहलौकिकमिति । अनुशतिकादित्वादुभयपदवृद्धिः ॥

( ५४८० वार्तिकम् ॥ ४ ॥ )

॥ * ॥ मुखपार्श्वतसोरीयः ॥ * ॥

( भाष्यम् ) मुख पार्श्व इत्येताभ्यां तसन्ताभ्यामीयप्रत्ययो वक्तव्यः । मुखतीयम्, पार्श्वतीयम् ॥

(प्रदीपः) मुखतीयमिति । अव्ययानां भमात्रे टिलोपः ॥

(उद्द्योतः) भाष्ये—तसन्ताभ्यामिति । वार्तिके आर्षत्वात्समासः ॥ अव्ययानां भेति । 'मुखपार्श्वतसोर्लोपश्च' इत्यनार्षमिति भावः ॥

( ५४८१ वार्तिकम् ॥ ५ ॥ )

॥ * ॥ कुग्जनस्य परस्य च ॥ * ॥

( भाष्यम् ) ईयो वक्तव्यः, कुक्चागमः । जनकीयम्, परकीयम् ॥

( ५४८२ वार्तिकम् ॥ ६ ॥ )

॥ * ॥ ईयः कार्योऽथ मध्यस्य ॥ * ॥

( भाष्यम् ) मध्यीयः ॥

( ५४८३ वार्तिकम् ॥ ७ ॥ )

॥ * ॥ मण्मीयौ चापि प्रत्ययौ ॥ * ॥

( भाष्यम् ) मण्मीयौ चापि प्रत्ययौ वक्तव्यौ । माध्यमः, मध्यमीयः ॥

( ५४८४ वार्तिकम् ॥ ८ ॥ )

॥*॥ मध्यो मध्यं दिनण् चास्मात् ॥*॥

(भाष्यम्) मध्यशब्दो मध्यंशब्दमापद्यते, दिनण् चास्मात्प्रत्ययो वक्तव्यः । माध्यन्दिन उद्गायति ॥

( प्रदीपः ) मध्यमीय इति । गहादिषु 'मध्यो मध्यमं चाण् चरणे' इति यत्पठितं तत्र पृथिवीमध्यमवाची मध्यशब्दो गृह्यत इत्युक्तम् । ततोऽन्यत्रापि भवार्थे मध्यमीय इति यथा स्यादिति मीयप्रत्ययविधिः । जातादिषु पृथिवीमध्यवाचिन एव मध्यमीय इति यथा स्यात्, मध्यान्तरवाचिनो मा भूदित्येवमर्थं गहादिषु पृथिवीमध्यस्य मध्यमभाव इत्युक्तम् ॥

(उद्द्योतः) गहादिपाठादेव सिद्धे इदं किमर्थम्? अत आह—गहादिष्विति ॥ प्रकृतवार्तिकप्रयोजनमाह—ततोऽन्यत्रापीति ॥ ननु गहादिषु सर्वमध्यशब्दस्य ग्रहणमस्तु, इदञ्च न कार्यमत आह—जातादिष्विति ॥

( ५४८५ वार्तिकम् ॥ ९ ॥ )

॥ * ॥ स्थाम्नो लुगजिनात्तथा ॥ * ॥

( भाष्यम् ) स्थाम्नो लुग्वक्तव्यः । अश्वत्थामा । अजिनात्तथा । अजिनान्ताच्च लुग्वक्तव्यः । कृष्णाजिनः, उलाजिनः, सिंहाजिनः, व्याघ्राजिनः ॥

( प्रदीपः ) स्थाम्नो लुगजिनात्तथेति । उभाभ्यामपि तदन्तविधिरिष्यते ॥

(उद्द्योतः) स्थाम्नो लुगित्यादि । भवार्थप्रत्ययस्य लुगित्यर्थः ॥ तदन्तविधिरिष्यत इति । भाष्ये तदन्तोदाहरणादिति भावः ॥

( ५४८६ वार्तिकम् ॥ १० ॥ )

॥ * ॥ बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते ॥ * ॥

(प्रदीपः) बाह्य इति । 'गम्भीराञ्ञ्यः' इत्यत्रेदं वक्तव्यमित्यर्थः ॥

( उद्द्योतः ) इदं वक्तव्यमिति । यो गभीराञ्ञ्य उक्तः, स एष्विष्यत इति भाष्याक्षरार्थः । यद्यपि बाह्यदैव्यौ 'बहिषष्टिलोपो यञ्च' 'देवाद्यञञौ' इति सिद्धौ, तथाऽपि तयोरपि भवार्थे एव प्रवृत्तिं सूचयितुमिदम्—अन्यत्रानभिधानमिति भावः । अत एव तद्वार्तिके—'बहिर्भवो बाह्यः' इत्येव विग्रहो भाष्ये दर्शितः ॥

समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ।
ऊर्ध्वंदमाच्च देहाच्च लोकोत्तरपदस्य च ॥ १ ॥
मुखपार्श्वतसोरीयः कुग्जनस्य परस्य च ।
ईयः कार्योऽथ मध्यस्य मण्मीयौ चापि प्रत्ययौ ॥ २ ॥
मध्यो मध्यं दिनण्चास्मात्स्थाम्नो लुगजिनात्तथा ।
बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते ॥ ३ ॥

( ७७८ विधिसूत्रम् ॥ ४ । ३ । १ आ. १८ )

## १६३६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ॥ ४।३।६६ ॥

( व्याख्यानार्थाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**किमर्थं भवव्याख्यानयोर्युगपदधिकारः क्रियते ?**

( प्रदीपः ) अधिकारोऽयमिति वृत्तिकारैर्व्याख्यायि, तत्र प्रयोजनं पृच्छति—किमर्थमिति । यथाविहितविधानार्थमेव भवव्याख्यानयोरुपादानं कस्मान्न भवतीति भावः ॥

( उद्द्योतः ) अधिकारोऽयमिति । विधौ फलाभाव इति तेषां गूढोऽभिप्रायः । अधिकारफलप्रश्नो युगपत्तत्करणफलप्रश्नश्चात्र । अल्पफलम्—पृथगपवादसूत्रकरणाभाव इति बोध्यम् ॥ यथाविहितेति । घादिविध्यर्थमित्यर्थः । विध्यर्थमेव किन्नेति प्रश्नाशयः ॥

---

१ 'मुखतीयः, पार्श्वतीयः' इत्येवं पाठश्छ. क. पुस्तकयोः ॥
२ 'कुक्चागमः' इत्यस्य पाठश्छ. पुस्तके नास्ति ॥.

३ 'उष्ट्राजिनः' इति च. झ. ञ. पाठः ॥
४ अस्मिन् सूत्रे यानि वार्तिकानि तेषां श्लोकसंग्रहोऽयम् ॥

( ५४८७ सूत्रप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः ॥ * ॥

( भाष्यम् ) भवव्याख्यानयोर्युगपदधिकारः क्रियते, अपवादविधानार्थः । युगपदपवादान् वक्ष्यामीति ।

( प्रदीपः ) अपवादविधानार्थ इति । वक्ष्यमाणाष्ठञादयोऽपवादा भवव्याख्यानयोर्यथा स्युरित्येवमर्थस्तयोरधिकार इत्यर्थः ॥

(उद्द्योतः) विधौ फलाभाव इत्यभिप्रायेणैवाह—भाष्ये—अपवादविधानार्थ इति ॥

( वार्तिकाक्षेपभाष्यम् )

किमुच्यतेऽपवादविधानार्थ इति, न पुनर्निर्देशार्थोऽपि स्यात् ?

( प्रदीपः ) निर्देशार्थोऽपीति । अणादीनां घादीनाञ्चार्थनिर्देशार्थोऽपीत्यर्थः ॥

(उद्द्योतः) गूढाभिप्रायमजानान आह—भाष्ये—न पुनर्निर्देशार्थ इति ॥

( ५४८८ आक्षेपनिरासवार्तिकम् ॥ २ ॥ )

॥ * ॥ कृतनिर्देशौ हि तौ ॥ * ॥

( भाष्यम् ) कृतनिर्देशौ ह्येतावर्थौ । एकः "तत्र भवः" (४।३।५३) इति, अपरः "तस्येदम्" (१२०) इति ॥

( पदकृत्यभाष्यम् )

अथ व्याख्यातव्यनाम्नो ग्रहणं किमर्थम् ?

( उद्द्योतः ) व्याख्यातव्यनाम्नो ग्रहणं किमर्थमिति । व्याख्यानेनैव योग्यतावशादस्य संबन्धः । तत्राक्षेपादेव सिद्धिरिति मत्वा प्रश्नः ॥

( ५४८९ पदप्रयोजनवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम् ॥ * ॥

( भाष्यम् ) तत्र व्याख्यातव्यनाम्नो ग्रहणं क्रियते भवार्थम् ।

किमुच्यते भवार्थमिति न पुनर्व्याख्यानार्थमपि स्यात् ?

( प्रदीपः ) भवार्थमिति । उत्तरैर्योगैर्भवे व्याख्यातव्यनाम्न एव यथा प्रत्यया स्युरित्येवमर्थमित्यर्थः ॥

( उद्द्योतः ) ननु सामान्यतो विधानेनापि ततः सिध्यतीत्यत आह—उत्तरैरिति ॥

( ५४९० पदप्रयोजनसमर्थकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ व्याख्याने ह्यवचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) व्याख्याने हि सति अन्तरेण वचनं सिद्धम् । यत्प्रति व्याख्यानमित्येतद्भवति, तस्मादुत्पत्तिर्भविष्यति ।

किं[1] प्रत्येतद्भवति ?

व्याख्यातव्य नाम ॥

( प्रदीपः ) व्याख्याने हीति । व्याख्यानशब्दस्य संबन्धिशब्दत्वाद् व्याख्यातव्याक्षेपस्य सिद्धत्वादिति भावः ॥

( अन्यदपि प्रयोजनप्रदर्शनपरं भाष्यम् )

यदुच्यते भवार्थमिति, तन्न । व्याख्यानार्थमपि व्याख्यातव्यनाम्नो ग्रहणं क्रियते । इह मा भूत्—पाटलिपुत्रस्य व्याख्यानी सुकोसलेति ।

अथ क्रियमाणेऽपि व्याख्यातव्यनाम्नो ग्रहणे कस्मादेवात्र न भवति ? अवयवशो ह्याख्यानं व्याख्यानम्, पाटलिपुत्रं चाप्यवयवश आचष्टे—ईदृशा अस्य प्राकाराः, ईदृशा अस्य प्रासादा इति ।

सत्यमेवमेतत् ।

क्वचित्तु काचित्प्रसृततरा गतिर्भवति । शब्दग्रन्थेषु चैषा प्रसृततरा गतिर्भवति—निरुक्तं व्याख्यायते, व्याकरणं व्याख्यायत इत्युच्यते, न कश्चिदाह—पाटलिपुत्रं व्याख्यायत इति ॥

( प्रदीपः ) पाटलिपुत्रस्येति । यादृशः सुकोसलायां प्राकारादिसंनिवेशस्तादृशः पाटलिपुत्रे, इति पाटलिपुत्रं व्याख्यातव्यं भवतीति स्यादेव प्रत्ययः । व्याख्यातव्यनामग्रहणात्तु व्याख्यातव्यत्वेन प्रसिद्धतमस्य ग्रन्थस्य यन्नाम तस्य ग्रहणादतिप्रसङ्गाभावः ॥

( उद्द्योतः ) व्याख्यातव्यनामग्रहणादिति । भवार्थत्वस्य व्याख्यातव्यग्रहणेनैव सिद्धेर्नामग्रहणमेतदर्थकमिति भावः ॥ भाष्ये—क्वचित्तु काचिदिति । एवञ्च भवार्थमेव व्याख्यातव्यनामग्रहणमिति भावः ॥

( ५४९१ पूर्वपक्षवार्तिकम् ॥ ५ ॥ )

॥ * ॥ भवे मन्त्रेषु लुग्वचनम् ॥ * ॥

( भाष्यम् ) भवे मन्त्रेषु लुग्वक्तव्यः । अग्निष्टोमे भवो मन्त्रः—अग्निष्टोमः, राजसूयः, वाजपेयः ॥

( प्रदीपः ) अग्निष्टोमे भव इति । अग्निष्टोमशब्दोऽत्र क्रतुवाच्येव, न तु व्याख्यातव्यवाची, इति ठञभावादणो लुक् ॥

( उद्द्योतः ) नन्वग्निष्टोमादिभ्यो भवे लुग्विधाने 'क्रतुयज्ञेभ्यश्च' इति भवे ठञ्विधानं व्यर्थं स्यादत आह—अग्निष्टोमशब्द इति । ठञ्विधानं तु तदर्थमन्त्रादिलैक्षणिकाग्निष्टोमादिभ्यश्चरितार्थमिति भावः ॥

१ 'किञ्च प्रत्ये' इति क. ख. ङ. ञ. पाठः ॥

२ 'मन्त्रादिलक्षणिक' इति ख. ग. घ. ज. पाठः ॥

( ५४९२ पूर्वपक्षवार्तिकम् ॥ ६ ॥ )

॥ * ॥ कल्पे च व्याख्याने ॥ * ॥

( भाष्यम् ) कल्पे च व्याख्याने लुग्वक्तव्यः । अग्निष्टोमस्य व्याख्यानः कल्पः—अग्निष्टोमः, राजसूयः, वाजपेयः ।

स तर्हि वक्तव्यः ॥

( प्रदीपः ) कल्पे चेति । अत्र ठञ एव लुक् ॥

( उद्द्योतः ) अत्र ठञ एवेति । व्याख्यातव्यनामत्वादिति भावः ॥ भाष्ये—स तर्हीति । भवे, मन्त्रे, व्याख्याने, कल्पे च लुगित्यर्थः ॥

( ५४९३ वार्तिकप्रत्याख्याने वार्तिकम् ॥ ७ ॥ )

॥ * ॥ न वा तादर्थ्यात्ताच्छब्द्यम् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यः ।

किं कारणम् ?

तादर्थ्यात्ताच्छब्द्यम् ।

तादर्थ्यात्ताच्छब्द्यं भविष्यति । अग्निष्टोमार्थः-अग्निष्टोमः, राजसूयः, वाजपेयः ॥

( उद्द्योतः ) तादर्थ्यात्ताच्छब्द्यमिति । अग्निष्टोमार्थे मन्त्रे तदर्थे कल्पे चाग्निष्टोमत्वारोपेण प्रयोग इति भावः ॥

( ७७९ विधिसूत्रम् ॥ ४ । ३ । १ आ. १९ )

## १६३८ क्रतुयज्ञेभ्यश्च ॥ ४ । ३ । ६८ ॥

( ठञोऽधिकरणम् )

( पदकृत्यभाष्यम् )

क्रतुग्रहणं किमर्थम् ?

यज्ञेभ्य इतीयत्युच्यमाने य एव संज्ञीभूतका यज्ञास्तत एवोत्पत्तिः स्याद् । आग्निष्टोमिकः, राजसूयिकः, वाजपेयिकः ।

यत्र वा यज्ञशब्दोऽस्ति—नावयज्ञिकः, पाकयज्ञिकः ।

इह न स्यात्-पाञ्चौदनिकः, दाशौदनिकः, शातौदनिकः, सातौदनिकः । क्रतुग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

अथ यज्ञग्रहणं किमर्थम् ?

क्रतुभ्य इतीयत्युच्यमाने य एव संज्ञीभूतकाः क्रतवस्तत उत्पत्तिः स्यात् । आग्निष्टोमिकः, राजसूयिकः, वाजपेयिकः ।

इह न स्यात्—पाञ्चौदनिकः, शातौदनिकः, सातौदनिक इति ।

यज्ञग्रहणे पुनः क्रियमाणे न दोषो भवति ॥

( प्रदीपः ) क्रतुयज्ञशब्दयोः पर्यायत्वात् प्रश्नः-क्रतुग्रहणमिति ॥ संज्ञीभूतका इति । मुख्या इत्यर्थः ॥ यत्र वेति । बहुवचननिर्देशात् स्वरूपग्रहणे निरस्ते तदन्तविधिः स्यादिति भावः ॥ पाञ्चौदनिक इति । सोमपानाभावादमुख्यत्वमेषामिति भावः । तस्माद् गौणमुख्यपरिहारार्थमुभयोरुपादानम् ॥

( उद्द्योतः ) मुख्या इति । सोमसाध्येष्वेतौ मुख्याविति बोध्यम् ॥ बहुवचननिर्देशादिति । तेन 'स्वं रूपम्' इत्येतद्बाधेन विशेषग्रहणवत् 'ग्रहणवता' इत्येतद्बाधेन तदन्तानामपि ग्रहणं स्यादिति भावः ॥ भाष्ये—यत्र वेति-'वा'शब्दश्चार्थः ॥ अमुख्यत्वमिति । एवं नवयज्ञादीनामपि तत्त्वं बोध्यम् ॥

( ७८० विधिसूत्रम् ॥ ४ । ३ । १ आ. २० )

## १६४२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ॥ ४।३।७२ ॥

( ठकोऽधिकरणम् )

( ५४९४ नामग्रहणवैयर्थ्यनिवारकवार्तिकम् ॥ १ ॥ )

॥ * ॥ नामाख्यातग्रहणं संघातविगृहीतार्थम् ॥ * ॥

( भाष्यम् ) नामाख्यातग्रहणं संघातविगृहीतार्थं द्रष्टव्यम् । नामिकः, आख्यातिकः, नामाख्यातिकः ॥

( ७८१ विधिसूत्रम् ॥ ४ । ३ । १ आ. २१ )

## १६५४ विदूराञ्ञ्यः ॥ ४ । ३ । ८४ ॥

( ञ्यप्रत्ययाधिकरणम् )

( सूत्रानुपपत्तिदर्शकभाष्यम् )

अयुक्तोऽयं निर्देशः, न ह्यसौ विदूरात्प्रभवति ।

किं तर्हि ?

वालवायात्प्रभवति, विदूरे संस्क्रियते ।

एवं तर्हि—

( सूत्रोपपत्तिप्रदर्शकं श्लोकभाष्यम् )

वालवायो विदूरं च
प्रकृत्यन्तरमेव वा ।

वालवायशब्दो विदूरशब्दमापद्यते ञ्यश्चास्मात्प्रत्ययो वक्तव्यः ॥

अथवा प्रकृत्यन्तरं विदूरशब्दोऽस्ति वालवायस्य । न वै तत्र वालवायं विदूर इत्युपाचरन्ति ॥

न वै तत्रेति चेद्ब्रूया-
जित्वरीवदुपाचरेत् ।

तद्यथा—वणिजो वाराणसीं जित्वरीत्युपाचरन्ति ।

एवं वैयाकरणा वालवायं विदूर इत्युपाचरन्ति ॥

वालवायो विदूरं च
प्रकृत्यन्तरमेव वा ।
न वै तत्रेति चेयाद्रू-
जित्वरीवदुपाचरेत् ॥

( प्रदीपः ) वालवाय इति । आदेश एव सूत्रे निर्दिष्टः । तेन त्वनुरूपः स्थानी वालवायशब्द आक्षिप्यते, यथा शिवादिगणे विश्रवणरवणेत्यादेशौ पठ्येते ताभ्यां तु विश्रवःशब्दः स्थानित्वेनाक्षिप्यते ॥

प्रकृत्यन्तरमिति । विदूरशब्दो नगरविशेषस्येव पर्वतविशेषस्यापि वाचकः, स एवात्र प्रकृतित्वेनाश्रीयत इत्यर्थः । पर्वते विदूरशब्दो न प्रसिद्ध इति चेत्, जित्वरीवद्व्यवहरेत् । प्रतिनियतपुरुषापेक्षाऽपि प्रसिद्धिर्भवति । वणिजश्च मङ्गलार्थां वाराणसीं जित्वरीति व्यवहरन्ति ॥

( उद्द्योतः ) 'वालवायो विदूरश्च' इत्यस्य नापूर्वत्वमित्याह—आदेश एवेति ॥ अनुरूपः—प्रभवतीत्यर्थानुरूपः । वालवायस्येति—भाष्ये 'वाचकः' इति शेषः ॥ न वै तत्रेत्यत्राचष्टे—न वै लोके इति[1] ॥ मङ्गलार्थां वाराणसीमिति । स्मरणमात्रेण सर्वमङ्गलप्रयोजनां वाराणसीं तत्त्वादेव जित्वरीति व्यवहरन्तीत्यर्थः । स्मरणमात्रेण सर्वमङ्गलदत्वान्मरणमात्रेण मुक्तिदत्वात्सर्वोत्कर्षवत्त्वाज्जित्वरीति व्यवहार इति भावः । एवं व्याकरण एव वालवायस्य विदूरशब्देन व्यवहार इति भावः ॥

( ७८२ विधिसूत्रम् ॥ ४ । ३ । १ आ. २२ )

## १६५६ अभिनिष्क्रामति द्वारम् ॥ ४ । ३ । ८६ ॥

( अभिनिष्क्रामतिद्वारमित्यर्थाधिकरणम् )

( सूत्रानुपपत्तिदर्शकं भाष्यम् )

अयुक्तोऽयं निर्देशः, चेतनावत एतद्भवति—निष्क्रमणमपक्रमणं वा, द्वारं चाचेतनम् ।

कथं तर्हि निर्देशः कर्तव्यः ?

अभिनिष्क्रमणं द्वारमिति । स तर्हि तथा निर्देशः कर्तव्यः ।

न कर्तव्यः ॥

( प्रदीपः ) चेतनावत इति । निष्क्रमणस्य पादविक्षेपरूपत्वादिति भावः । यद्यपि शकटादीनां निष्क्रमणादि भवति तथापि चेतनाधिष्ठानात्[2], न तु स्वतन्त्राणामिति भावः ॥

( उद्द्योतः ) यद्यपीति । तेषाञ्च न पादविक्षेपरूपं निष्क्रमणमिति भावः ॥ तथाऽपीति । अश्वादिपादविक्षेपस्य तत्रापि सत्वमिति भावः ॥

( सूत्रोपपत्तिप्रदर्शकं भाष्यम् )

अचेतनेष्वपि चेतनवदुपचारो दृश्यते ।

तद्यथा—अयमस्य कोणोऽभिनिसृतः, अयमभिप्रविष्ट इति ॥

( प्रदीपः ) अचेतनेष्वपीति । देशान्तरप्राप्तिलक्षणकार्यदर्शनादचेतनेष्वपि क्रियाव्यवहारः । न च पादविक्षेप एव निष्क्रमणम्, वायुर्निष्क्रामतीति दर्शनात् । ननु द्वारस्य देशान्तरप्राप्तिफलं नैव निष्क्रमणं मस्ति । एवं तर्हि करणस्यापि कर्तृसाध्यक्रियाऽऽरोपादभिनिष्क्रामति द्वारमिति निर्देशः ॥

( उद्द्योतः ) क्रियारोपादिति । असिश्छिनत्तीतिवदिति[3] भावः ॥

( ७८३ विधिसूत्रम् ॥ ४ । ३ । १ आ. २३ )

## १६५७ अधिकृत्य कृते ग्रन्थे ॥४।३।८७॥

( अर्थाधिकरणम् )

( ५४९५ लक्ष्यविशेषसाधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् ॥ * ॥

(भाष्यम्) अधिकृत्य कृते ग्रन्थ इत्यत्राख्यायिकाभ्यो बहुलं लुब्वक्तव्यः । वासवदत्ता, सुमनोत्तरा ॥

( प्रदीपः ) आख्यायिकाभ्य इति—तादर्थ्ये चतुर्थी । आख्यायिकाऽभिधानाय यः प्रत्ययस्तस्य बहुलं लुप् भवतीत्यर्थः ॥

( उद्द्योतः ) आख्यायिकावाचकात्प्रत्ययानुत्पत्तेः पञ्चम्यनुपपन्नेत्यत आह—तादर्थ्ये इति ॥

( बहुलफलबोधकं भाष्यम् )

न च भवति—भैमरथी ॥

---

1 न वै लोके—इति प्रतीकं सर्वेष्वप्युद्योतपुस्तकेषु दृश्यते, भाष्ये कैय्यटे वोपलब्धपुस्तकेषु नैतादृशो ग्रन्थ उपलभ्यते । अस्मादुद्योतात् 'न वै तत्रेति' भाष्यग्रन्थेऽन्यः पाठोऽनुमीयते ॥

2 'धिष्ठितानाम्' इति च. झ. पाठः ॥

3 सर्वेषूद्योतपुस्तकेषु 'असीश्छिनत्तीति भावः' इति पाठः । झ. पुस्तके 'इतिवदिति' इति पाठो दृश्यते ॥

( ७८४ विधिसूत्रम् ॥ ४ । ३ । १ आ. २४ )

## १६५८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ॥ ४ । ३ । ८८ ॥

( ५४९६ द्वन्द्वे विशेषबोधकवार्तिकम् ॥ १ ॥ )

॥*॥ द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ॥*॥

( भाष्यम् ) द्वन्द्वे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । दैवासुरम्, राक्षोऽसुरम् । दैवासुरी, राक्षोऽसुरी ॥

( उद्द्योतः ) भाष्ये—दैवासुरमित्यत्राख्यानं विशेष्यम् । दैवासुरीत्यत्राख्यायिका विशेष्येति बोध्यम् ॥

( ७८५ विधिसूत्रम् ॥ ४ । ३ । १ आ. २५ )

## १६५९ सोऽस्य निवासः ॥ ४।३।८९ ॥

( ७८६ विधिसूत्रम् ॥ ४ । ३ । १ आ. २६ )

## १६६० अभिजनश्च ॥ ४ । ३ । ९० ॥

( अर्थाधिकरणम् )

( निवासाभिजनविशेषे भाष्यम् )

निवासाभिजनयोः को विशेषः ?

निवासो नाम यत्र संप्रत्युष्यते ।

अभिजनो नाम यत्र पूर्वैरुषितम् ॥

( प्रदीपः ) निवासाभिजनयोरिति । अभिजनशब्देन पूर्वे बान्धवा उच्यन्ते । तत्संबन्धात् देशोऽभिजनो गृह्यते । निवासशब्देनाप्यधिकरणसाधनेन देश एवेत्यविशेषात्प्रश्नः ॥ निवासो नामेति । यत्र स्वयं वसति स तस्य निवासः । यत्र पूर्वबान्धवानामुषितं सोऽभिजन इत्यर्थः । निवाससाहचर्याचाभिजनो देशो गृह्यते न तु पूर्वे बान्धवाः ॥

( उद्द्योतः ) पूर्वबन्धवोऽभिजनाः, निवासो देश इति विशेषः स्पष्ट एवेत्यत आह—अभिजनेति ॥ ननु मुख्यार्थस्यैव ग्रहणङ्कुतो नेत्यत आह—निवाससाहचर्याच्चेति ॥

( ७८७ विधिसूत्रम् ॥ ४ । ३ । १ आ. २७ )

## १६६८ वासुदेवार्जुनाभ्यां वुन् ॥ ४।३।९८ ॥

( वुनोऽधिकरणम् )

( वुनि-आक्षेपभाष्यम् )

किमर्थं वासुदेवशब्दाद्वुन् विधीयते, न "गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ्"(४।३।९९) इत्येव सिद्धम् ? न ह्यस्ति विशेषो वासुदेवशब्दाद् वुनो वा वुञो वा । तदेव रूपं स एव स्वरः ॥

( प्रदीपः ) वसुदेवस्यापत्यं वासुदेवः, 'ऋष्यन्धक' इत्यणन्तः । तत्र गोत्रत्वात् क्षत्रियत्वाच्च वुञि रूपस्वरयोः सिद्धत्वात्प्रश्नः—किमर्थमिति ॥

( उद्द्योतः ) वासुदेवस्य गोत्रत्वादि दर्शयति—वसुदेवस्येति ॥ गोत्रत्वादिति । चिन्त्यमिदम् । अपत्याधिकारादुत्तरत्र लौकिकं गोत्रम्, तच्च प्रवराध्यायप्रसिद्धमेव, न चैतत्तत्प्रसिद्धम् । अत एवाग्रे 'नैषा क्षत्रियाख्या' इत्येव भाष्ये वक्ष्यति ॥

( आक्षेपनिराकरणभाष्यम् )

इदं तर्हि प्रयोजनम्—वासुदेवशब्दस्य पूर्वनिपातं वक्ष्यामीति ।

अथ वा नैषा क्षत्रियाख्या । संज्ञैषा तत्र भवतः ॥

( प्रदीपः ) पूर्वनिपातमिति । अभ्यर्हितं पूर्वं निपततीत्यस्यार्थस्य ज्ञापनार्थमित्यर्थः ॥ संज्ञैषेति । नित्यः परमात्मा देवताविशेष इह वासुदेवो गृह्यत इत्यर्थः । प्रसङ्गेन च निर्देशेन पूर्वोक्तोऽप्यर्थो ज्ञाप्यते ॥

( उद्द्योतः ) 'अभ्यर्हितं पूर्वम्' इत्यर्थज्ञापनेऽपि चारितार्थ्यानुपपादनादाह—भाष्ये—अथवा नैषा क्षत्रियाख्येति । देवताविशेष इति—बहुव्रीहिः । देवतापदं चोपलक्षणमित्याहुः ॥

( ७८८ विधिसूत्रम् ॥ ४ । ३ । १ आ. २८ )

## १६७० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ॥ ४ । ३ । १०० ॥

( प्रत्ययातिदेशाधिकरणम् )

( सर्वशब्दाक्षेपे भाष्यम् )

सर्ववचनं किमर्थम् ?

(प्रदीपः) जनपदिनः=जनपदस्वामिनः क्षत्रियाः, तद्वाचिनां बहुवचने जनपदवाचिना शब्देन समानश्रुतीनां जनपदवत् सर्वं भवति, सोऽस्य भक्तिरित्येतस्मिन् विषये । यथा अङ्गा जनपदो भक्तिरस्य आङ्गक इति 'अवृद्धादपि' इति वुञ् भवति । एवमङ्गाः क्षत्रिया भक्तिरस्येत्यत्रापि भवति । एवं स्थिते प्रश्नः— सर्ववचनमिति । अन्तरेणापि सर्ववचनं जनपदवदिति सामान्येनातिदेशः क्रियमाणः सर्वस्य भविष्यतीति भावः ॥

( उद्द्योतः ) करिष्यमाणपूर्वपक्षस्य स्फुटप्रतिपत्तये सूत्रार्थमाह—जनपदिन इति ॥

( ५४९७ आक्षेपनिराकरणवार्तिकम् ॥ १ ॥ )

॥*॥ सर्ववचनं प्रकृतिनिर्ह्रासार्थम् ॥*॥

( भाष्यम् ) सर्ववचनं क्रियते प्रकृतिनिर्ह्रासार्थम् । प्रकृतिनिर्ह्रासो यथा स्यात् ॥

(प्रदीपः) **प्रकृतिनिर्ह्रासार्थमिति** । असति सर्वग्रहणे प्रत्ययस्यैव प्राधान्यादतिदेशः स्यान्न तु प्रकृतेरपि । सर्वग्रहणात्तु भवति । **निर्ह्रासः**=अपचयः, अल्पत्वमित्यर्थः ॥

(उद्योत) प्राधान्यादिति । विधेयत्वेन प्राधान्यम्, प्रकरणाच्चेत्यपि बोध्यम् ॥ ननु निर्ह्रासो ह्रस्वः, एवं हि 'वृजिकः' इत्यसङ्गतमत आह— **निर्ह्रासोऽपचय इति** । जनपदाधिकारविहितप्रत्ययप्रकृतितुल्यतेति वाच्यार्थः । एवं हि तस्यापचयः फलति ॥

(५४९८ प्रयोजनवार्तिकम् ॥ २ ॥)

**॥ * ॥ तच्च मद्रवृज्यर्थम् ॥ * ॥**

(भाष्यम्) **तच्च मद्रवृज्यर्थं द्रष्टव्यम् । माद्रो भक्तिरस्य माद्रौ वा भक्तिरस्य—मद्रक इत्येव यथा स्यात् । वार्ज्यो भक्तिरस्य वार्ज्यौ वा भक्तिरस्य—वृजिक इत्येव यथा स्यात् ॥**

(प्रदीपः) वृद्धिनिमित्तेषु वुञादिषु विशेषाभावं मत्वाऽऽह— **तच्चेति** । द्वित्वैकत्वयोः शब्दभेदादतिदेशः प्रकृतिनिर्ह्रासार्थः, न तु बहुत्वे, तत्र मद्रा इति शब्दभेदाभावात् ॥ **मद्रक इति** । मद्रस्यापत्यमिति 'द्व्यञ्मगध' इत्यण् । माद्रशब्दस्य मद्रशब्दातिदेशः, तत्प्रत्ययातिदेशश्च ॥ **वार्ज्य इति** । वृजेरपत्यमिति 'वृद्धेत्कोसल' इति ञ्यङ् ॥

(उद्योतः) वृद्धिनिमित्तेष्विति । 'आङ्गकः' इत्यादौ ॥ ननु विग्रहे द्विवचनबहुवचनयोरेवोल्लेखो निर्बीजोऽत आह—**द्वित्वेत्यादि**॥ **तत्प्रत्ययातिदेश इति** । 'मद्रवृज्योः कन्' इति प्रत्ययः ॥

(७८९ विधिसूत्रम् ॥ ४ । ३ । १ आ. २९)

## १६७१ तेन प्रोक्तम् ॥ ४ । ३ । १०१ ॥

(प्रोक्तार्थाधिकरणम्)

(५४९९ प्रोक्तग्रहणाक्षेपे वार्तिकम् ॥ १ ॥)

**॥ * ॥ प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् ॥ * ॥**

(भाष्यम्) **प्रोक्तग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**तत्रादर्शनात् । ग्रामे ग्रामे कालापकं काठकं च प्रोच्यते । तत्रादर्शनात्, न च तत्र प्रत्ययो दृश्यते ॥**

(प्रदीपः) प्रपूर्वो वचिः प्रकाशने अध्यापनरूपे वा वर्तते करणे वा । तत्राद्येऽर्थे प्रत्ययो न दृश्यते, द्वितीये तु सूत्रान्तरेण सिद्धमिति मत्वाऽऽह—**प्रोक्तग्रहणमिति** ॥ **ग्रामे ग्राम इति** । सुशर्मादीनां प्रतिग्रामं प्रवक्तृत्वेऽपि सुशर्मणा प्रोक्तं काठकं सौशर्मणमिति प्रयोगो न दृश्यत इत्यर्थः ॥

(उद्योतः) कालापककाठकयोर्गोत्रचरणाद्वुञ् धर्माम्नाययोरिति बोध्यम् ॥ **प्रपूर्वो वचिरिति** । अध्यापनरूपे प्रकाशने वा वर्तते, करणे वेत्यन्वयः ॥ ननु 'काठकम्' इत्यादौ प्रत्ययदर्शनात्—न प्रत्ययो दृश्यते—इत्यनुपपन्नमत आह-**सुशर्मादीनामिति** ॥

(५५०० आक्षेपसाधकवार्तिकम् ॥ २ ॥)

**॥ * ॥ ग्रन्थे च दर्शनात् ॥ * ॥**

(भाष्यम्) **यत्र च दृश्यते ग्रन्थः सः, तत्र "कृते ग्रन्थे" (४।३।११६) इत्येव सिद्धम् ॥**

(उद्योतः) भाष्ये—**ग्रन्थे चेति** । तेन कृते ग्रन्थे इत्यर्थः । **ग्रन्थः स इति** । तेन कृतो ग्रन्थः स इत्यर्थः ॥

(आक्षेपनिवारकभाष्यम्)

**छन्दोऽर्थं तर्हीदं वक्तव्यम् । न हि छन्दांसि क्रियन्ते, नित्यानि च्छन्दांसि ॥**

(प्रदीपः) **नित्यानीति** । कर्तुरस्मरणात्तेषामिति भावः॥

(५५०१ प्रत्याक्षेपे वार्तिकम् ॥ ३ ॥)

**॥ * ॥ छन्दोऽर्थमिति चेत्तुल्यम् ॥ * ॥**

(भाष्यम्) **छन्दोऽर्थमिति चेत्तुल्यमेतद्भवति । ग्रामे ग्रामे काठकं कालापकं च प्रोच्यते तत्रादर्शनात् । न च तत्र प्रत्ययो दृश्यते ।**

**ग्रन्थे च दर्शनात् । यत्र दृश्यते ग्रन्थः सः, तत्र कृते ग्रन्थ इत्येव सिद्धम् ।**

**ननु चोक्तम्—न हि च्छन्दांसि क्रियन्ते नित्यानि च्छन्दांसीति ।**

**यद्यप्यर्थो नित्यः, या त्वसौ वर्णानुपूर्वी साऽनित्या । तद्भेदाच्चैतद्भवति—काठकम्, कालापकम्, मौदकम्, पैप्पलादकमिति ॥**

(प्रदीपः) **या त्वसाविति** । महाप्रलयादिषु वर्णानुपूर्वीविनाशे पुनरुत्पद्य ऋषयः संस्कारातिशयाद्वेदार्थं स्मृत्वा शब्दरचनां विदधतीत्यर्थः ॥ **तद्भेदादिति** । आनुपूर्वीभेदादित्यर्थः । ततश्च कठादयो वेदानुपूर्व्याः कर्तार एव, न तु स्थिताया एव सुशर्मादिवत्प्रवक्तारः । ततश्च छन्दस्यपि 'कृते ग्रन्थे' इत्येव सिद्धः प्रत्यय इति भावः ॥

(उद्योतः) तुल्यमेतदिति । वेदानुपूर्व्यनित्येत्यर्थः ॥ अंशेन वेदस्य नित्यत्वं स्वीकृत्यांशेनानित्यत्वमाह—**यद्यप्यर्थ इति** । अनेन वेदत्वं शब्दार्थोभयवृत्तीति ध्वनितम् ॥ ननु 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतिबलेनानुपूर्व्यपि सैवेति नव्यपूर्वमीमांसासिद्धान्तात्साऽनित्येत्ययुक्तमत आह—**महाप्रलयादिष्विति** । आनुपूर्व्यास्तत्तत्क्षणघटितत्वेनानित्यत्वमिति भाव इति केचित्, तन्न, 'यद्यप्यर्थो नित्यः' इत्यादिवाक्यशेषविरोधात्, अर्थस्यापि ज्योतिष्टोमादेरनित्यत्वात् । प्रवाहाविच्छेदेन नित्यत्वं तूभयोरपि, तस्मान्मन्वन्तरभेदेनानुपूर्वी भिन्नैव । 'प्रतिमन्वन्तरञ्चैषा श्रुतिरन्या विधीयते' इत्युक्तेः—**इत्यन्ये** ॥

**परे तु**—'अर्थो नित्यः' इत्यत्र कृतकत्वविरोधिनित्यत्वस्यैवा-

भ्युपगमः, पूर्वपक्षिणा तादृशनित्यत्वस्यैव छन्दःसूक्तेः । एवञ्चार्थशब्देनात्र ईश्वरः, मुख्यतया तस्यैव सर्ववेदतात्पर्यविषयत्वात्, 'वेदैश्च सर्वैरहमेव वेद्यः' इति गीतोक्तेरित्याहुः ॥

वर्णानुपूर्व्या अनित्यत्वे मानमाह—तद्भेदाच्चेति । अनित्यत्वव्याप्यभेदेन तत्सिद्धिः । भेदोऽत्र नानात्वम् । ईश्वरे तु न तत्त्वम् ॥ भेदे मानं व्यवहारमाह—काठकेत्यादि । अर्थैक्येऽप्यानुपूर्वीभेदादेव काठककालापकादिव्यवहार इति भावः । अत्रानुपूर्वी 'अनित्या' इत्युक्तेः 'पदानि तान्येव' इति ध्वनितम्, तदाह—ततश्च कठादय इति । अधिकं मञ्जूषायां द्रष्टव्यम् ॥

( सिद्धान्तभाष्यम् )

**न तर्हीदानीमिदं वक्तव्यम् ।**

**वक्तव्यं च ।**

**किं प्रयोजनम् ?**

**यत्तेन प्रोक्तं न च तेन कृतम् । माधुरी वृत्तिः ।**

**यदि तर्हि अस्य निबन्धनमस्ति, इदमेव वक्तव्यम्, तन्न वक्तव्यम् ।**

**तदप्यवश्यं वक्तव्यम् । यत्तेन कृतं न च तेन प्रोक्तम्—वाररुचं काव्यम्, जालूकाः श्लोकाः ॥**

(प्रदीपः) माधुरीति । माधुरेण प्रथमतः प्रकाशितेत्यर्थः । 'कलापिनोऽण्' इत्यण्ग्रहणस्याधिकविधानार्थत्वाद्वृद्धादप्यत्राण् भवति । द्विविधं चेह प्रोक्तं गृह्यते स्वकृतम्, परकृतम्—वा यत् प्रकाशितम् । तेन प्रोक्ताधिकार एव कठादिभ्यो वक्ष्यमाणप्रत्ययविधानम् ॥

( उद्द्योतः ) ननु माधुराद्वृद्धाच्छेन भाव्यमत आह—कलापिनोऽणिति ॥ नन्वेवं कठादिभ्यः प्रोक्ताधिकारे प्रत्ययविधानं व्यर्थम्, तत्र यत्प्रोक्तं न च तेन कृतम्—इत्यर्थबाधादत आह—द्विविधं चेति ॥ प्रोक्ताधिकार एवेति । कृतग्रहणेन स्वाप्रकाशितस्वकृतस्यैव ग्रहणादिति भावः ॥

---

( ७९० विधिसूत्रम् ॥ ४ । ३ । १ आ. ३० )

## १६७४ कलापिवैशम्पायनान्तेवासिभ्यश्च ॥ ४ । ३ । १०४ ॥

( णिनिप्रत्ययाधिकरणम् )

( ५५०२ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रत्यक्षकारिग्रहणम् ॥ * ॥

( भाष्यम् ) **प्रत्यक्षकारिग्रहणं कर्तव्यम्, अन्तेवास्यन्तेवासिभ्यो मा भूदिति ।**

**तत्तर्हि वक्तव्यम् ?**

**न वक्तव्यम् ॥**

( प्रदीपः ) प्रत्यक्षकारिग्रहणमिति । करोतेः क्रियासामान्यवाचित्वात् सामान्यस्य सर्वविशेषेषु समवायादध्ययनमिह करणं गृह्यते । शिष्यशिष्याणामपि शिष्यव्यवहारदर्शनात् वार्तिकारम्भः ॥

( उद्द्योतः ) नन्वन्तेवासिनः प्रत्यक्षाध्येतारो न तु तथाकारिणोऽत आह—करोतेरिति । प्रत्यक्षत्वेन साक्षात्त्वमुपलक्ष्यते ॥ ननु शिष्यशिष्या नान्तेवासिनोऽत आह—शिष्यशिष्याणामपीति ॥

( ५५०३ पूर्वपक्षनिराकरणे वार्तिकम् ॥ २ ॥ )

### ॥ * ॥ कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य ॥ * ॥

( भाष्यम् ) **यदयं कलापिखाडायनग्रहणं करोति तज्ज्ञापयत्याचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति ।**

**कथं कृत्वा ज्ञापकम् ?**

**वैशम्पायनान्तेवासी कठः, कठान्तेवासी खाडायनः । वैशम्पायनान्तेवासी कलापी ।**

**यदि चान्तेवास्यन्तेवासिभ्योऽपि स्यात्कलापिखाडायनग्रहणमनर्थकं स्यात् । पश्यति त्वाचार्यो नान्तेवास्यन्तेवासिभ्यो भवतीति, ततः कलापिखाडायनग्रहणं करोति ॥**

( प्रदीपः ) कलापिखाडायनग्रहणमिति । वैशम्पायनान्तेवासी कलापी, कलाप्यन्तेवासिनां वैशम्पायनान्तेवासित्वाण्णिनौ सिद्धे पृथक् कलापिग्रहणं प्रत्यक्षकारिग्रहणे लिङ्गम् । तथा वैशम्पायनान्तेवासी कठः । कठान्तेवासी खाडायनो वैशम्पायनान्तेवासी भवत्येवेति णिनौ सिद्धे शौनकादिषु णिन्यर्थं खाडायनग्रहणं साक्षाच्छिष्यग्रहणे लिङ्गमित्यर्थः ॥

( उद्द्योतः ) 'कलापि' इति सूत्रस्य—कलाप्यन्तेवासिभ्यो वैशम्पायनान्तेवासिभ्यश्च णिनिरित्यर्थः ॥

( ५५०४ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः ॥ * ॥

( भाष्यम् ) **छन्दोग्रहणं च कर्तव्यम् । इतरथा ह्यतिप्रसङ्गः । इतरथा ह्यतिप्रसङ्गः स्यात् ।**

**इहापि प्रसज्येत—तित्तिरिणा प्रोक्ताः श्लोका इति ॥**

( प्रदीपः ) तित्तिरिणेति । छणोऽभावे यथाऽण्न भवति तथा 'छन्दोब्राह्मणानि' इत्यत्रोक्तम् ॥

( उद्द्योतः ) भाष्ये—छन्दोग्रहणञ्चेति । 'शौनकादि'सूत्रे 'छन्दसि' इति योगं विभज्य 'तित्तिरि' इत्यादिसर्वसूत्रशेषत्वेन

व्याख्येयमिति भावः ॥ इत्यत्रोक्तमिति । 'अनभिधानात्' इति हि तत्रोक्तम् । प्रकारान्तरमपि मया तत्रोक्तम् ॥

( ७९१ विधिसूत्रम् ॥ ४ । ३ । १ आ. ३१ )

## १६७५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ॥ ४ । ३ । १०५ ॥

( ५५०५ प्रतिषेधवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात् ॥ * ॥**

(भाष्यम्) पुराणप्रोक्तेष्वित्यत्र याज्ञवल्क्यादिभ्यः प्रतिषेधो वक्तव्यः । याज्ञवल्कानि ब्राह्मणानि, सौलभानि इति ।

किं कारणम् ?

तुल्यकालत्वात् । एतान्यपि तुल्यकालानीति ॥

( प्रदीपः ) तुल्यकालत्वादिति । शाट्यायनादिप्रोक्तैर्ब्राह्मणैरेककालत्वादित्यर्थः ॥

( उद्योतः ) शाट्यायनादीति । येषु ब्राह्मणेषु णिनिरिष्यते तैरेतानि तुल्यकालानि—इति—एतान्यपि पुराणप्रोक्तानीति भावः । एतेन शाट्यायनाद्यपेक्षयैतानि आधुनिकानीति वृत्त्याद्युक्तमपास्तम् । 'अन्यत्राणि तद्विषयताया अपि प्रतिषेधः' इति 'छन्दोब्राह्मणानि' इत्यत्र भाष्ये उक्तम् ॥

( ७९२ विधिसूत्रम् ॥ ४ । ३ । १ आ. ३२ )

## १६८६ कृते ग्रन्थे ॥ ४ । ३ । ११६ ॥

( अर्थाधिकरणम् )

( ५५०६ ग्रन्थाभावेऽपि प्रत्ययविधिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कृते ग्रन्थे मक्षिकादिभ्योऽण् ॥ * ॥**

( भाष्यम् ) कृते ग्रन्थ इत्यत्र मक्षिकादिभ्योऽण्वक्तव्यः । मक्षिकाभिः कृतं माक्षिकम् ॥

(उद्योतः) भाष्ये—मक्षिकादिभ्य इति । अग्रन्थार्थमिदम् ॥

( ५५०७ प्रत्ययविधिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तद्विशेषेभ्यश्च ॥ * ॥**

( भाष्यम् ) तद्विशेषेभ्यश्चाण्वक्तव्यः । सरघाभिः कृतं सारघम्, गार्मुतम्, पौत्तिकम् ।

स तर्हि वक्तव्यः ।

न वक्तव्यः ॥

( ५५०८ वार्तिकद्वयान्यथासिद्धिवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ योगविभागात्सिद्धम् ॥ * ॥**

( भाष्यम् ) योगविभागः करिष्यते । कृते ग्रन्थे । ततः-संज्ञायाम्, संज्ञायां च तेन कृत इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति । सरघाभिः कृतं सारघम्, गार्मुतम्, पौत्तिकम् ।

ततः कुलालादिभ्यो वुञ् । संज्ञायामित्येव ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( प्रदीपः ) कृते योगविभाग इति । 'संज्ञायाम्' 'कुलालादिभ्यो वुन्' इति सूत्रं विभक्तव्यमित्यर्थः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( उद्योतः ) नन्विदं विभक्तमेव पठ्यते, तत्क योगविभागस्य कर्तव्यता नोचत इत्यत आह सञ्ज्ञायां कुलालेति ॥

इति श्रीशिवभट्टसुतसतीगर्भसम्भवनागोजीभट्टेन कृते भाष्यप्रदीपोद्योते चतुर्थस्य तृतीये प्रथममाह्निकं ॥

( ७९३ विधिसूत्रम् ॥ ४ । ३ । २ आ. १ )

## १६९० तस्येदम् ॥ ४ । ३ । १२० ॥

( इदमर्थाधिकरणम् )

( ५५०९ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तस्येदमित्यसंनिहितेऽप्राप्तिरिदमः प्रत्यक्षवाचित्वात् ॥ * ॥**

( भाष्यम् ) तस्येदमित्यसंनिहितेऽप्राप्तिः ।

किं कारणम् ?

इदमः प्रत्यक्षवाचित्वात् । इदमित्येतत्प्रत्यक्षे वर्तते, तेनैव स्यात्—तस्येदमिति, तस्याद इति । तस्य तदित्यत्र न स्यात् ॥

( प्रदीपः ) इदम इति । इदंशब्दाद्योऽर्थः प्रतीयते तस्मिन्नेव प्रत्ययप्रसङ्ग इत्यर्थः ॥

( उद्योतः ) ननु 'इदम्' इत्यनेन संबन्धिनि प्रत्ययविधानात्सर्वत्र सेत्स्यति—इत्यत आह—इदंशब्दादिति ॥ योऽर्थ इति । प्रत्यक्षविषयत्वावच्छिन्न इत्यर्थः ॥

( ५५१० न्यासान्तरेण समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु यद्योगा षष्ठी तत्र ॥ * ॥**

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

यद्योगा षष्ठी प्रवर्तते तत्रेति वक्तव्यम् ॥

( प्रदीपः ) सिद्धं त्विति । येन सम्बन्धिना योगे षष्ठी विधीयते तस्मिन् प्रत्यय इत्यर्थः ॥

(उद्द्योतः) ननु 'षष्ठी शेषे' इत्यस्यान्यसम्बन्धनिमित्तकत्वाभावादाह—येनेति । शेषे–विशेषणे षष्ठी विधीयते, विशेषणं च विशेष्यनिरूपितमिति भावः । सूत्रन्यासेऽसाधारणम्, सूत्रवार्तिकन्यासयोः साधारणं च दोषं वार्तिककृत्स्वन्यासे परिहरति—सिद्धन्त्विति ॥

( ५५११ पूर्वपक्षवार्तिकम् ॥ ३ ॥ )

॥ * ॥ अनन्तरादिषु च प्रतिषेधः ॥ * ॥

( भाष्यम् ) अनन्तरादिषु च प्रतिषेधो वक्तव्यः । तस्यानन्तरः, तस्य समीप इति ।

किं यद्योगा षष्ठी प्रवर्तत इत्यतोऽनन्तरादिषु प्रतिषेधो वक्तव्यः ?

नेत्याह ।

सर्वथाऽनन्तरादिषु प्रतिषेधो वक्तव्यः ॥

( प्रदीपः ) सर्वथेति । पाणिनीये कात्यायनीये च न्यास इत्यर्थः । पाणिनीयन्यासेऽपि देवदत्तस्येदमनन्तरमिति प्रत्ययप्रसङ्गः ॥

( ५५१२ एकदेशिसमाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ सिद्धं तु परिगणनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

परिगणनं कर्तव्यम् ॥

( प्रदीपः ) सिद्धं त्विति । असंनिहिते प्रत्ययविधानमनन्तरादिषु चाप्राप्तिरित्यर्थः[1] ॥

( उद्द्योतः ) तद्ध्वनयन्व्याचष्टे—असन्निहिते प्रत्ययविधानमिति । तत्रायं दोष आद्येन 'सिद्धं तु' इत्यनेन, 'अनन्तरादिषु च' इति दोषो द्वितीयेन तेनोद्धृत[2] इति भावः । 'असन्निहिते प्रत्ययविधाने' इति पाठे परिगणनेनासन्निहिते प्रत्ययविधाने कृते सति 'अनन्तरादिषु' इति द्वितीयोऽपि दोष उद्धृत इत्यन्वय इत्येके ॥

( ५५१३ परिगणनवार्तिकम् ॥ ५ ॥ )

॥ * ॥ स्वे ग्रामजनपदमनुष्येभ्यः ॥ * ॥

( भाष्यम् ) स्वे ग्रामजनपदमनुष्येभ्य इति वक्तव्यम् । स्रौघ्नः, माथुरः । ग्राम ॥

जनपद । आङ्गकः, वाङ्गकः । जनपद ॥

मनुष्य । दैवदत्तः, याज्ञदत्तः ॥

( प्रदीपः ) स्व इति । तेनात्मीयज्ञातिधनेष्वेव प्रत्यया भवन्ति न त्वनन्तरादिषु ॥

( उद्द्योतः ) आत्मीयज्ञातिधनेष्वेवेति । ग्रामादिभ्य एष्वेवेत्यर्थः ॥

( ५५१४ परिगणनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ पत्राद्वाह्ये ॥ * ॥

( भाष्यम् ) पत्राद्वाह्य इति वक्तव्यम् । आश्वम्, औष्ट्रम्, गार्दभम् ॥

( प्रदीपः ) पत्राद्वाह्य इति । 'पत्राध्वर्युपरिषदश्च' इत्यत्रायमर्थनिर्देशः ॥

( उद्द्योतः ) पत्राध्वर्य्विति । अत एव 'आश्वम्' इत्यादि तदुदाहरणं भाष्ये दत्तम् ॥

( ५५१५ परिगणनवार्तिकम् ॥ ७ ॥ )

॥ * ॥ रथाद्रथाङ्गे ॥ * ॥

( भाष्यम् ) रथाद्रथाङ्ग इति वक्तव्यम् । आश्वरथम्, औष्ट्ररथम्, गार्दभरथम् ॥

( प्रदीपः ) रथादिति । 'रथाद्यत्' 'पत्रपूर्वादञ्' इत्येतयोर्योगयोरर्थनिर्देशः ॥

( उद्द्योतः ) पत्रपूर्वादिति । अत एव 'आश्वरथम्' इत्याद्युदाहरणम् ॥

( ५५१६ परिगणनवार्तिकम् ॥ ८ ॥ )

॥ * ॥ वहेस्तुरणिट् च ॥ * ॥

( भाष्यम् ) वहेस्त्रन्तादण्वक्तव्य इट् च वक्तव्यः । संवोढुः स्वं सांवहित्रम् ॥

( प्रदीपः ) सांवहित्रमिति । तत्र 'पूर्वत्रासिद्धम्' इति ढत्वादीनामिटि कर्तव्येऽसिद्धत्वात् तृचि इटि रूपम् ॥

( उद्द्योतः ) तृचि—तृजवस्थायाम्[3] ॥

( ५५१७ परिगणनवार्तिकम् ॥ ९ ॥ )

॥ * ॥ अग्नीधः शरणे रञ्भं च ॥ * ॥

( भाष्यम् ) अग्नीधः शरणे रञ्वक्तव्यो भसंज्ञा वक्तव्या । अग्नीधः शरणमाग्नीध्रम् ॥

( प्रदीपः ) आग्नीध्रमिति । अग्निमिन्धे–इति ञि अन्तर्भावितण्यर्थत्वादिन्धिः सकर्मकः । होता–अग्नीदुच्यते । शरणं–गृहमाग्नीध्रम् । भसंज्ञया पदसंज्ञाया बाधनात्त्वा भावः ॥

1 'प्रत्ययविधानेऽनन्तरादिषु' इति क. पाठः ॥

2 असन्निहिते प्रत्ययविधानमित्ययं दोषः प्रथमेन–सिद्धं तु यद्योगा षष्ठी तत्रेति वार्तिकेन, द्वितीयदोषश्च सिद्धं तु परिगणनादिति वार्तिकेनोद्धृत इति भावः ॥

3 ननु ढत्वादीनामसिद्धत्वेऽपि ढत्वोत्तरं तृज् नैव क्रियते स प्रथममेवोत्पन्न इति 'असिद्धत्वात्तृचि इटि' इति कैय्यटग्रन्थोऽनुपपन्नः स्यादत आह—तृजवस्थायामिति । ढत्वादीनामसिद्धत्वात्तृचि अवस्थितत्वमित्यर्थः ॥

( उद्योतः ) होत्रेति । ऋत्विग्विशेष इत्यर्थः । अन्यथा होत्राख्यऋत्विजस्तस्य भिन्नत्वादसङ्गतिः स्पष्टैव ॥ भसंज्ञयेति । नन्वस्य भत्वस्याकडारस्थत्वाभावात् कथमनेन पदत्वबाधः ? तद्बाधे च कथं नाङ्गत्वबाधः ? इति चेत्, न, 'यचि भम्'इत्युत्तरम् 'रणि' इति कर्तव्यमित्याशयात् ॥

( ५५१८ परिगणनवार्तिकम् ॥ १० ॥ )

**॥ * ॥ समिधामाधाने षेण्यण् ॥ * ॥**

( भाष्यम् ) समिधामाधाने षेण्यण् वक्तव्यः । समिधामाधानो मन्त्रः सामिधेन्यो मन्त्रः । सामिधेनी ऋक् ॥

( ५५१९ परिगणनवार्तिकम् ॥ ११ ॥ )

**॥ * ॥ चरणाद्धर्माम्नाययोः ॥ * ॥**

( भाष्यम् ) चरणाद्धर्माम्नाययोरिति वक्तव्यम् । कठानां धर्म आम्नायो वा—काठकम् । कालापकम् । मौदकम् । पैप्पलादकम्–इति ॥

( प्रदीपः ) चरणादिति । 'गोत्रचरणात्' इत्यत्रायमर्थनिर्देशः ॥

( सिद्धान्तभाष्यम् )

तत्तर्हीदं बहु वक्तव्यम्, सूत्रं च भिद्यते ।

यथान्यासमेवास्तु ।

ननु चोक्तं तस्येदमित्यसंनिहितेऽप्राप्तिरिति । किमिदं भवान् प्रत्ययार्थमेवोपालभते, न पुनः प्रकृत्यर्थमपि । यथैव हि–इदमित्येतत् प्रत्यक्षे वर्तते, एवं तदित्येतत्परोक्षे वर्तते । तेनैव स्यात्तस्येदमिति, अस्यामुष्य इत्यत्र न स्यात् ।

अस्त्यत्र विशेषः, एकशेषनिर्देशोऽत्र भविष्यति—तस्य चास्य च अमुष्य च तस्येति भवति ।

इहापि तर्ह्येकशेषनिर्देशो भविष्यति—तच्चादश्चेदं च—इदमित्येव ।

यदप्युच्यते–अनन्तरादिषु च प्रतिषेधो वक्तव्य इति ।

न वक्तव्यः ।

अनभिधानादनन्तरादिषूत्पत्तिर्न भविष्यति ॥

( प्रदीपः ) एकशेषनिर्देश इति । 'त्यदादीनि सर्वैर्नित्यम्' इत्येकशेषः । त्यदादीनां यद्यत्परं तत्तच्छिष्यत इत्युक्तेः 'पूर्वशेषदर्शनाच्च' इत्युक्तमिति पूर्वस्यापि तदः शेषः । सौत्रत्वाच्च निर्देशस्यैकवचनम्, विभक्त्यन्तानां चैकशेषः । एकशेषद्वारेण चैतत्प्रतिपादयति–षष्ठ्यन्तमात्रं प्रकृतित्वेन विवक्षितम्, तत्प्रतियोगिमात्रं च प्रत्ययार्थत्वेन । यत्त्वपरं लिङ्गसंख्याप्रत्यक्षत्वपरोक्षत्वादिकं तदविवक्षितम् ॥

( उद्योतः ) इत्युक्तेरिति । अनन्तरमिति शेषः । इत्युक्तेरनन्तरमित्यर्थः । सप्तम्यन्तपाठे—इत्युक्ते सतीत्यर्थः ॥ निर्देशस्य सौत्रत्वमावश्यकमित्याह—विभक्त्यन्तानामिति । तेषां[1]मेकशेषस्य सूत्रानारूढत्वादेकशेषोऽत्र सौत्रः ॥ प्रत्यक्षत्वपरोक्षत्वादिकमिति । षष्ठ्यन्ताद्बुद्धिविषयत्वेन भासमाने बुद्धिविषयेऽर्थे प्रत्यय इत्यर्थ इति भावः ॥ भाष्ये—अनभिधानादिति । अत एव वृक्षादिभ्योऽप्यनन्तरादिषु नोत्पत्तिरिति भावः ॥

( ७९४ विधिसूत्रम् ॥ ४ । ३ । २ आ. २ )

## १६९५ द्वन्द्वाद्वुन् वैरमैथुनिकयोः ॥ ४ । ३ । १२५ ॥

( वुनोऽधिकरणम् )

( ५५२० सूत्रार्थपर्युदासे वार्तिकम् ॥ १ ॥ )

**॥*॥ वैरे देवासुरादिभ्यः प्रतिषेधः ॥*॥**

( भाष्यम् ) वैरे देवासुरादिभ्यः प्रतिषेधो वक्तव्यः । दैवासुरम्, राक्षोऽसुरम् ॥

( ७९५ विधिसूत्रम् ॥ ४ । ३ । २ आ. ३ )

## १६९७ सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ॥ ४ । ३ । १२७ ॥

( अण्प्रत्ययाधिकरणम् )

( ५५२१ सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ सङ्घादिषु घोषग्रहणम् ॥ * ॥**

( भाष्यम् ) सङ्घादिषु घोषग्रहणं कर्तव्यम् । गार्गो घोषः, वात्सो घोषः ।

( प्रदीपः ) घोषग्रहणमिति । तेन घोषेऽपि प्रत्ययः सिध्यति । वैषम्याच्च यथासंख्यं न भवति ॥

( एकदेशिनो णकारप्रयोजनभाष्यम् )

किमर्थो णकारः ?

वृद्ध्यर्थः, 'ञ्णिति' इति वृद्धिर्यथा स्यात् ॥

( ५५२२ पूर्वपक्षवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सङ्घादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ * ॥**

( भाष्यम् ) सङ्घादिषु प्रत्ययस्य णित्करणमनर्थकम् ।

किं कारणम् ?

वृद्धत्वात् प्रातिपदिकस्य । वृद्धमेवैतत् प्रातिपदिकम् ॥

---

[1] तेषां–विभक्त्यन्तानाम् । सरूपाणामित्यादिभिः सूत्रैः प्रातिपदिकानामेवैकशेषः क्रियते न तु विभक्त्यन्तानामिति तत्सिद्ध्यै सौत्रत्वमावश्यकमिति भावः ॥

( ५५२३ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ लिङ्गपुंवद्भावप्रतिषेधार्थं तु ॥ * ॥

( भाष्यम् ) लिङ्गपुंवद्भावप्रतिषेधार्थं तु णकारः कर्तव्यः ।

लिङ्गार्थम्—वैदी ।

पुंवद्भावप्रतिषेधार्थम्—वैदी स्थूणाऽस्य वैदीस्थूणः । 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधो यथा स्यात् ॥

( प्रदीपः ) लिङ्गेति । लिङ्गविहितप्रत्ययो लिङ्गशब्देनोच्यते ॥

( उद्द्योतः ) लिङ्गरूपार्थे पुंवद्भावाभावाल्लिंगार्थत्वस्याञि अभावाच्चाह—लिंगविहितेति ॥

( ७९६ विधिसूत्रम् ॥ ४ । ३ । २ आ. ४ )

## १७०१ रैवतिकादिभ्यश्छः

## ॥ ४ । ३ । १३१ ॥

( छप्रत्ययाधिकरणम् )

( ५५२४ अण्विधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ कौपिञ्जलहास्तिपदादण् ॥ * ॥

( भाष्यम् ) कौपिञ्जलहास्तिपदादण् वक्तव्यः । कौपिञ्जलाः, हास्तिपदाः ॥

( प्रदीपः ) अपाणिनीयः सूत्रेषु पाठ इत्याह—कौपिञ्जलेति । गोत्रे लुकि प्राप्तेऽण्विधिः । अस्मादेव निपातनादपत्यार्थे कुपिञ्जलहस्तिपादशब्दाभ्यामण्, पादस्य पद्भावश्च । गोत्राधिकाराद् गोत्रप्रत्ययान्तादिदं विधानम् ॥

(उद्द्योतः) नन्वनयोः कथं गोत्रे साधुत्वम्? अपत्याण इञा बाधादत आह—अस्मादेवेति ॥ अल्लोपस्य स्थानिवत्त्वात्पादः पद्भावाप्राप्तेराह—पद्भावश्चेति । समासान्तलोपस्तु न, 'अहस्त्यादिभ्यः' इति प्रतिषेधात् ॥ नन्वनपत्याणंतमेवात्रोदाहरणमस्त्वित्यत आह—गोत्राधिकारादिति । गोत्रचरणादित्यतो गोत्रपदाधिकारः ॥

( ७९७ विधिसूत्रम् ॥ ४ । ३ । २ आ. ५ )

## १७०२ आथर्वणिकस्येकलोपश्च

## ॥ ४ । ३ । १३२ ॥

( अणोऽधिकरणम् )

( चकारार्थबोधकभाष्यम् )

आथर्वणिकस्येकलोपश्चाण्च वक्तव्यः । आथर्वणः—धर्मः, आथर्वणः—आम्नायः ।

( प्रदीपः ) अण्वक्तव्य इति । 'कौपिञ्जलहास्तिपदादण्' इत्यस्यापाणिनीयत्वात् ॥

( उद्द्योतः ) नन्वाथर्वणिकेत्यत्राणनुवृत्त्यैव सिद्धेऽण्वक्तव्य इति व्यर्थमत आह—कौपिञ्जलेति । वार्तिकस्यस्य सूत्रेऽनुवृत्तिर्दुर्लभेत्यर्थः । इदमपि वार्तिकमिति तु हरदत्तः । 'काम्ये रोः' इत्यादिवार्तिकानां सूत्रेष्वनुवृत्तिदर्शनात्कैयटोक्तं चिन्त्यम् ॥

( अथर्वणशब्दव्यवस्थाभाष्यम् )

इदमाथर्वणार्थमाथर्वणिकार्थं च चतुर्ग्रहणं क्रियते । वसन्तादिषु–अथर्वन्शब्द आथर्वणशब्दश्च पठ्यते । षष्ठेऽध्याये प्रकृतिभावार्थं ग्रहणं क्रियते । इदं चतुर्थमिकलोपार्थम् ।

द्विर्ग्रहणं शक्यमकर्तुम् ।

कथम् ?

"तेन प्रोक्तम्"(४।३।१०१) इति प्रकृत्य ऋषिभ्यो लुग्वक्तव्यः—वसिष्ठोऽनुवाकः, विश्वामित्रोऽनुवाक इत्येवमर्थम् ।

ततो वक्तव्यम्—अथर्वणो वेति । तेन सिद्धमथर्वा-इति आथर्वण, इति च ।

अथ वसन्तादिष्वाथर्वणशब्दः पठितव्यः, तत्र नैवार्थः प्रकृतिभावार्थेन, नापि—इकलोपार्थेन ॥

( प्रदीपः ) ऋषिभ्यो लुगिति । वसिष्ठादिशब्दसिद्धये अवश्यवक्तव्यो लुक् ॥ नन्वसत्यस्मिन् सूत्रे आथर्वणिकानां धर्मे आम्नाये वेत्यत्रार्थे आथर्वणशब्दो न सिध्यतीत्याह—तत्रेति । यदेवाथर्वणा प्रोक्तमाथर्वणं शास्त्रं तदेवाथर्वणिकानामाम्नायः, न तु तेषामाम्नायान्तरमाथर्वणशब्दवाच्यम्, धर्मस्तु आथर्वणसादृश्यादाथर्वणशब्देनाभिधास्यते ॥

( उद्द्योतः ) ननु ऋषिभ्यो लुगिति वाच्यम्, अथर्वग्रहणं वा, को विशेषोऽत आह—वसिष्ठादीति ॥ इत्याहेति । इतिहेतौ ॥

( अव्यविकन्यायेन प्रयोगव्यवस्थाभाष्यम् )

यदि वसन्तादिष्वाथर्वणशब्दः पठ्यते—अथर्वाणमधीते आथर्वणिक इति न सिध्यति ।

नैष दोषः ।

इहास्माभिस्त्रैशब्द्यं साध्यम्—अथर्वाणमधीते आथर्वणमधीते, आथर्वणिक इति ।

तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहोऽपरस्मादुत्पत्तिर्भविष्यति—अविरविकन्यायेन ।

तद्यथा—अवेर्मांसमिति विग्रृह्याविकशब्दादुत्पत्तिर्भवति—आविकमिति । एवमाथर्वणमधीत इति विगृह्य—आथर्वणिक इति भविष्यति । अथर्वाणमधीत इति विगृह्य-वाक्यमेव भविष्यति । त्राभिसंबन्धमात्रं कर्तव्यम्-आथर्वणिकानामिदमिति ।

न चेदानीमन्यदाथर्वणिकानां स्वं भवितुमर्हति, अन्यदतो धर्मादाम्नायाद्वा ॥

( प्रदीपः ) न चेदानीमिति । 'चरणाद् धर्माम्नाययोः' इति वचनादर्थान्तरे प्रत्ययाभावादित्यर्थः ॥

(उद्द्योतः) भाष्ये—तत्राभिसंबन्धमात्रमिति । तत्र=आथर्वणिकसंबन्ध्याम्नाय इत्यर्थे सम्बन्धबोधकषष्ठीघटितवाक्यमेव प्रयोक्तव्यं न तु ततः प्रत्यय इति भावः ॥ आथर्वणसादृश्यादिति । सादृश्यं चाथर्वानुष्ठिततया तत्क्रियाविषयत्वेनेति बोध्यम् ॥ ननु पुत्रधनादिकमपि तेषां स्वमत आह—चरणादिति । 'तस्येदम्'इत्यस्य व्यवस्थापकमेतदित्यर्थः ॥

---

( ७९८ विधिसूत्रम् ॥ ४ । ३ । २ आ. ६ )

## १७०३ तस्य विकारः ॥ ४ । ३ । १३२ ॥

( विकारार्थप्रत्ययाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**तस्येति वर्तमाने पुनस्तस्यग्रहणं किमर्थम् ?**

( ५५२५ तस्यपदप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तस्यप्रकरणे तस्यपुनर्वचनं शैषिकनिवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् ) तस्यप्रकरणे तस्यपुनर्वचनं क्रियते शैषिकनिवृत्त्यर्थम् । शैषिका निवर्त्यन्ते ॥

(प्रदीपः) शैषिकनिवृत्त्यर्थमिति । विकारावयवयोर्घादयो मा भूवन्नित्येवमर्थं तस्य ग्रहणमित्यर्थः ॥

( उद्द्योतः ) ननु वक्ष्यमाणप्रकृतिभ्यस्तत्तत्प्रत्ययैर्बाधादेव शैषिकसामान्यप्रत्ययनिवृत्तिः सिद्धेत्यत आह—विकारेत्यादि । भाष्ये शैषिकेत्यस्य तदधिकारविहितघादीत्यर्थ इति भावः ॥

( वार्तिकावतरणभाष्यम् )

**कथं च प्राप्नुवन्ति ?**

( प्रदीपः ) कथं चेति । किमधिकारात् प्राप्नुवन्ति ? अथ तस्येदमिति वचनात् ? यद्यधिकारात् प्राप्तानां तस्यग्रहणेन निवृत्तिः क्रियते तदा पुनरपि 'तस्येदम्'इत्यनेन प्राप्नुवन्ति । अथ 'तस्येदम्'इत्यनेन प्राप्तानां तस्यग्रहणेन निवृत्तिः क्रियते,तदाऽसौ नोपपद्यते, उत्तरार्थत्वादस्य योगस्य तत्रैव चरितार्थत्वादिति प्रश्नः ॥

( उद्द्योतः ) अधिकारादेव प्राप्तिसत्त्वात् कथं चेत्यनुपपन्नमत आह—किमिति ॥ तत्रैवेति । अर्थनिर्देशवत्त्समर्थविभक्तिरपि तत्र चरितार्थेत्यभिमानः ॥

( ५५२६ प्रयोजनसाधकवार्तिकम् ॥ २ ॥ )

*** ॥ तस्येदंवचनात् प्रसङ्गः ॥ * ॥**

(भाष्यम्) तस्येदंविशेषा ह्येते—अपत्यम्,समूहः, निवासः, विकार इति ॥

( प्रदीपः ) तस्येदंवचनादिति । तस्यग्रहणं घादिसम्बद्धस्य तस्यग्रहणस्य निवर्तकं घादीनपि निवर्तयति । तन्निवर्तनसामर्थ्यात् 'तस्येदम्' इत्यनेनापि विकारावयवयोर्घादयो न भवन्ति । अन्यथा तन्निवर्तनमनर्थकं स्यादित्यर्थः । प्राग्दीव्यत इत्यवधिविशेषाश्रयेण तु अणादीनामधिकारादणादय इह सम्बध्यन्त इति विपर्ययोऽत्र न चोदनीयः—घादयोऽनुवर्तन्ताम् , अणादयो मानुवृतन्निति ॥

( सूत्राक्षेपसमाधानभाष्यवार्तिकम् )

**किमर्थमिदमुच्यते ?**

**बाधनार्थं कृतं भवेत् ।**

**ये तस्य बाधकास्तद्बाधनार्थम् ।**

**कथं पुनरशैषिकः शैषिकं बाधते ?**

**उत्सर्गः शेष एवासौ ॥**

**यो ह्युत्सर्गः सोऽपि शेष एव ॥**

(प्रदीपः) किमर्थमिति—सर्वस्यैव सूत्रस्याक्षेपः ॥ बाधनार्थमिति । 'तस्येदम्' इत्यत्राणादयो घादयश्चाणाद्यपवादा विहिताः । तत्र विकारावयवयोरणादय एव यथा स्युस्तदपवादा घादयो मा भूवन्नित्येवमर्थमिदमुच्यते ॥ ये तस्येति । अण इत्यर्थः ॥

कथं पुनरिति । 'तस्येदम्' इत्यस्मात् 'तस्य विकारः' इत्यस्य पृथङ्निर्देशादनेन विधीयमानोऽणप्रत्ययोऽशैषिकः कथं विकारेऽप्राप्तान् घादीन् बाधत इति प्रश्नः ॥ उत्सर्ग इति । असत्यस्मिन् पृथक् सूत्रे विकारोऽपि 'तस्येदम्' इत्यत्रान्तर्भावाच्छेषो भवतीति घादयः प्राप्नुवन्ति । उत्सर्गत्वं विकारस्य प्रकृतिविशेषासंबन्धात् । असति हि योगविभागे 'बिल्वादिभ्योऽण् विकारे' इति वक्तव्यम् । तत्र प्रकृतिविशेषसंबद्ध एव विकार उपयुक्तत्वादशेषः स्यात् । प्रकृतिमात्रसंबद्धस्त्वनुपयोगाच्छेष एव स्यात् । सति तु योगविभागे विकारस्याण्विधावुपयोगादशेषत्वाद् घादीनामप्राप्तिः । अप्राप्त्यनुमानमेव बाध इति भावः ॥

( उद्द्योतः ) सर्वस्यैवेति । 'तस्येदम्'इत्यनेनैव सिद्धेर्योगविषयः प्रश्न इत्यर्थः ॥ नन्वपत्यादिचतुरर्थीपर्यन्तादन्यत्वेन कथमशैषिकत्वमत आह—तस्येदमित्यस्मादिति । पृथग्योगकरणात् तस्यग्रहणाच्चास्याशैषिकत्वमित्यर्थः । अयं भावः–'तत्र जातः' इत्यादिषु 'शेषे' इति संबध्यते, यत्र यत्र च तस्य सम्बन्धस्ते शैषिकाः । अत्र च पृथग्योगात्तस्यग्रहणाच्च तदसम्बन्ध इत्ययमशैषिक इति ॥ विकारेऽप्राप्तानिति । अस्य शेषत्वाभावात्तस्येदमित्यनेनापि न प्राप्तिरिति भावः ॥ विकारोऽपीति । प्रकृतिविशेषासम्बद्ध इत्यादिः ॥ उत्सर्गत्वं चेति । योगविभागे इति शेषः ॥ उपयुक्तत्वादशेष इति । उपयुक्तश्च–उक्तो वक्ष्यमाणो वेत्यन्यत् ॥ नन्वप्राप्तौ कथं तद्बाधकत्वमत आह—अप्राप्तीति ॥

---

१ तस्यापत्यमिति सूत्रे वार्तिकमेतत् । तस्यात्र केवलमनुवाद इति न वार्तिकेषु परिगणनम् । वार्तिकत्वबोधनाय स्थूलाक्षरैर्विन्यासः ॥

( आक्षेपभाष्यम् )

**के पुनः शैषिकाणां विकारावयवयोः प्राप्नुवन्ति, यावता सर्वमपवादैर्व्याप्तम् ॥**

( प्रदीपः ) **के पुनरिति** । शैषिकाणामिति निर्धारणे षष्ठी ॥ **अपवादैरिति** । वक्ष्यमाणैरणादिभिरित्यर्थः ॥

( उद्द्योतः ) वक्ष्यमाणैरिति । केषुचित्कोपधाच्चण्, केषुचिदोरञ्, केषुचिदनुदात्तादेरञिति भावः ॥

( समाधानभाष्यम् )

**इह न किंचिदुच्यते–"हलसीराट्ठक्" (४।३।१२४) इति ॥**

**कथं पुनरिच्छताऽप्यपवादः प्राप्नुवन् शक्यो बाधितुम् ।**

**तस्यग्रहणसामर्थ्यात् ॥**

**किमिदं भवानध्यारुह्य तस्यग्रहणस्यैव प्रयोजनमाह, न पुनः सर्वस्यैव योगस्य ।**

**अवश्यमुत्तरार्थोऽर्थनिर्देशः कर्तव्यः ।**

**समर्थविभक्तिरपि तर्ह्यवश्यमुत्तरार्था निर्देष्टव्या । प्रकृता समर्था विभक्तिरनुवर्तते–'तस्येदम्' इति ॥**

( प्रदीपः ) **हलसीरादिति** । हलशब्दः 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तः, सीरशब्दोऽपि क्रन्नन्तो नित्वात् । ततश्चैताभ्यां विकारे न कश्चिदणपवादोऽस्तीति ठकं बाधित्वाऽणेव भवति–हालः, सैर इति ॥ **कथं पुनरिति** । 'हलसीराट्ठक्' इत्ययमण एवापवादः कथमणैव शक्यो बाधितुम्, योगस्तूत्तरार्थ एव स्यादिति **प्रश्नः** ॥ **तस्यग्रहणसामर्थ्यादिति** । बाधकबाधनार्थादणः पुनर्विधानादित्यर्थः । तस्यग्रहणमेवानन्यार्थमिति तत्सामर्थ्यादित्युक्तम् । [1]इदमर्थाद्विकारस्योत्कर्षो बाधकबाधनार्थ एवेत्यर्थः ॥

( उद्द्योतः ) ननु हलसीराभ्यामपि 'अनुदात्तादेरञ्' इत्यस्य प्राप्तिरत आह—**हलशब्द इति** ॥ नन्वारंभसामर्थ्यादेव बाधो भविष्यतीत्यत आह—**योगस्त्विति** ॥ ननु संपूर्णसूत्रसामर्थ्यमेव कुतो नोक्तमत आह—**तस्यग्रहणमेवेति** । तस्येत्यनुवृत्त्यैव सिद्धेरिति भावः । अर्थनिर्देशस्तूत्तरार्थ इति बोध्यम् । तत्फलितमाह—**इदमर्थादिति** ॥

( ५५२७ सूत्रेणेष्टसाधनत्वाभावबोधकं वार्तिकम् ॥ ३ ॥ )

**॥ * ॥ न वा संप्रत्ययः ॥ * ॥**

( भाष्यम् ) **न वा संप्रत्यय इयता सूत्रेण, शैषिकाणां निवृत्तेः ।**

**न हि काको वाश्यत इत्येवाधिकारा निवर्तन्ते ।**

**यदि खल्वपि विकारावयवयोः शैषिका नेष्यन्ते, महता सूत्रेण निवृत्तिर्वक्तव्या ॥**

( प्रदीपः ) **न वेति** । घादीनां प्राधान्यात्तस्यग्रहणे गुणे प्राक्तने निवर्तमानेऽपि निवृत्तिर्न शक्यते प्रतिपादयितुम् । न हि गुणानुयायि प्रधानं भवति ॥

( उद्द्योतः ) **प्राधान्यादिति** । विधेयत्वेन तत्त्वम् ॥ भाष्ये—**महता सूत्रेणेति** । घादयो विकारावयवयोर्नेत्येवं सूत्रं कार्यमित्यर्थः ॥

( ५५२८ सूत्राक्षेपे वार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिः ॥ * ॥**

( भाष्यम् ) **अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिरिष्टा, तत्र च निवृत्तिः प्राप्नोति । पाटलिपुत्रकाः प्राकाराः, पाटलिपुत्रकाः प्रासादा इति ॥**

( प्रदीपः ) **अवयवे चेति** । अवयवेऽर्थे घादीनां निवृत्तत्वादप्राण्योषधिवृक्षेभ्योऽप्रसङ्ग इत्यर्थः ॥ **पाटलिपुत्रका इति** । पाटलिपुत्रस्यावयवा इति तस्येदमित्यत्रार्थे 'रोपधेतोः प्राचाम्' इति वुञ् ॥

( उद्द्योतः ) ननु 'अववयवे च प्राण्यौषधिवृक्षेभ्यः' इत्युक्तेः कथं तद्भिन्नेभ्योऽवयवेऽनिवृत्तिरित्यत आह—**अवयवेऽर्थे इति** । तेषामवयवार्थेनासंम्बन्ध इत्यभिमानः ॥ पाटलिपुत्रस्येमे इति–इदंत्वेनावयवबोधे वुञिष्टः, तदाह—**पाटलिपुत्रस्यावयवा इति** । यद्वा तत्सम्बन्धिनो येन केनापि रूपेण बोधे प्रत्यय इति भावः ॥

( ५५२९ सूत्राक्षेपे वार्तिकम् ॥ ५ ॥ )

**॥ * ॥ अणमयटोश्च विप्रतिषेधानुपपत्तिर्मयडुत्सर्गात् ॥ * ॥**

( भाष्यम् ) **अणमयटोश्च विप्रतिषेधो नोपपद्यते । पठिष्यति हि विप्रतिषेधम्—'अणो वृद्धान्मयट्' इति स विप्रतिषेधो नोपपद्यते ।**

**किं कारणम्?**

**मयडुत्सर्गात् । निवर्तमानेषु शैषिकेषु वृद्धान्मयडुत्सर्गस्तस्याणपवादः, उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधः ॥**

( प्रदीपः ) **मयडुत्सर्गादिति** । मयडुत्सर्गः–शैषिकेषु निवृत्तेषु सामान्येन विधानमित्यर्थः, अप्राप्त एव वृद्धाच्छे 'नित्यं वृद्ध' इति मयडारम्भात् । 'अनुदात्तादेः' इत्ययमवृद्धेषु कृतार्थः, तत्राविशेषादञ्मयटोः 'कोपधाच्च' इत्ययमपवादोऽणिति शाकमयमित्यत्र मयण्न लभ्यत इत्यर्थः ॥

( उद्द्योतः ) **मयडुत्सर्गादिति**—[2]भाष्यस्य मयटः सामान्येन विधानात्, न त्वन्यत्र प्राप्ते विधानादित्यर्थस्तदाह—**मयडुत्सर्ग इति** । षष्ठीतत्पुरुषः ॥ ननु 'नित्यं वृद्ध' इति मयटश्छापवादत्वसंभवात्कथमुत्सर्गत्वमत आह—**अप्राप्ते एवेति** । शैषिकाणामेतयोरर्थयोरप्राप्तेरिति

१ तस्यग्रहणसामर्थ्यादित्यस्यार्थमाह—इदमर्थादित्यादिना ॥

२ मयटः सामान्येन विधानात्, अन्यत्र प्राप्ते विधानाभावादिति मयडुत्सर्गः–इति भाष्यस्यान्वयः ॥

भावः ॥ अविशेषादिति । बाध्यसामान्यचिन्तयेत्यर्थः ॥ अपवादोऽणिति । मयड्त्वनपवाद इति समबलत्वाभाव इति भावः ॥

( ५५३० तस्यग्रहणाभावे इष्टसिद्धिबोधकमेकदेशिवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अनुवृत्तौ हि छोत्सर्गापवादविप्रतिषेधान्मयट् ॥ * ॥

( भाष्यम् ) अनुवर्तमानेषु शैषिकेषु वृद्धाच्छ उत्सर्गः । तस्याणमयटावपवादौ । अपवादविप्रतिषेधान्मयड् भविष्यति ॥

( प्रदीपः ) अपवादविप्रतिषेधादिति । शाकशब्दाच्छापवादयोरण्मयटोः परत्वान्मयट् सिध्यतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—छोत्सर्गापवादेति छस्योत्सर्गस्यापवादयोः विप्रतिषेधादित्यर्थः । आर्षत्वावृत्तिः, गमकत्वाद्वा ॥ छापवादयोरिति । एवं चापवादत्वेन समत्वाद्विप्रतिषेधोपपत्तिरित्यर्थः ॥

( तृतीयवार्तिकोक्ताक्षेपपरिहारभाष्यम् )

यत्तावदुच्यते—'न वा संप्रत्यय इयता सूत्रेण शैषिकाणां निवृत्तेः' इति,

संप्रत्यय एव ।

न ह्यत्राण् दुर्लभः । सिद्धोऽत्राण् तस्येदमित्येव । सोऽयं पुनस्तस्यग्रहणेन—तस्य सापवादस्याणः प्रसङ्गे इमं निरपवादकमणं प्रतिपादयति ।

तत्र ये तावत् द्वितीयास्तानयमपवादत्वाद्बाधिष्यते ।

ये तृतीयास्तान् परत्वात् ।

ये चतुर्थास्तत्र केचित्पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते इत्येवमिमं न बाधिष्यन्ते । केचिन्मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इति ।

एतावन्तश्चैते स्युर्यदुत द्वितीयास्तृतीयाश्चतुर्था वा । न पञ्चमाः सन्ति न षष्ठाः ॥

( प्रदीपः ) इदानीं भाष्यकारः सूत्रेणैवेष्टसिद्धिं प्रतिपादयितुमाह—यत्तावदिति ॥ इदमिति । घादीनामिह निवृत्तत्वादयमण् निरपवादः, घाद्यनुवृत्तौ हि योगविभागोऽनर्थकः स्यात्, 'तस्येदम्' इत्यनेनैव विकारेऽप्यणादीनां घादीनां च सिद्धत्वात् ॥

तत्रेति । यथा 'हलसीराट्ठक्' इत्यणि प्राप्ते ठग्विधीयमानो द्वितीयो भवति, तमपवादत्वादयमण् बाधते तृतीयकक्षां प्राप्तः[२]॥

ये तृतीया इति । तृतीयस्थाने प्राप्तत्वादस्याणस्तुल्यकक्ष्यत्वात्परत्वाद् बाध्याः । यथा वृजीनां विकार इति 'तस्येदम्' इत्यण् प्रथमः । 'अवृद्धादपि' इति वुञ् द्वितीयः । 'मद्रवृज्योः कन्' इति तृतीयोऽनेन बाध्यते—वार्ज इति । वृजिशब्दस्य फिट्सूत्रेषु विकल्पेनोदात्तत्वविधानात् पक्षे आद्युदात्तत्वादण् । पक्षे 'अनुदात्तादेश्च' इत्यञ् ॥

ये चतुर्था इति । यथा त्रिगर्तानां व्यवहारः—विकारः—त्रैगर्त इति । त्रिगर्तशब्दो बहुव्रीहिपूर्वपदप्रकृतिस्वरेणाद्युदात्तः । अत्राण् प्रथमः । जनपदलक्षणो वुञ् द्वितीयः । गर्तोत्तरपदलक्षणश्छस्तृतीयः । तदवधिग्रहणविहितो वुञ् चतुर्थः ॥ केचिन्मध्य इति । यथा रङ्कूणां विकारो राङ्कव इत्यत्राण् प्रथमः । तदपवादयोः 'अवृद्धादपि' इति 'ओर्देशे ठञ्' इति वुञ्ठञोस्तुल्यबलयोरन्यतरो द्वितीयः । ततः 'कोपधादण्' इति वा कच्छादिपाठाद्वाऽण् तृतीयः । 'मनुष्यतत्स्थयोर्वुञ्' इति चतुर्थः । पूर्वमेवाणं बाधते न तु विकाराणं बाधते । तेनैव तु परत्वाद्वुञ् बाध्यते । ततः 'ओरञ्' इत्यञि प्राप्ते 'कोपधाच्च'इत्यण् प्रतिसूयते ॥

न पञ्चमा इति । शैषिका इति शेषः । अन्यथा प्रावृषो विकारः प्रावृण्मयः इति मयडस्त्येव । अत्राण् प्रथमः । तदपवादः कालाट्ठञिति द्वितीयः । ऋत्वण् तृतीयः । प्रावृष एण्य इति चतुर्थः । विकाराण् पञ्चमः । नित्यं वृद्धेति मयट् षष्ठो भवति ॥

( उद्द्योतः ) नन्वग्रे अस्याप्यपवादानां वक्ष्यमाणत्वात्कथमयं निरपवादोऽत आह—घादीनामिति ॥ अपवादशब्दस्तद्विशेषपर इति भावः ॥ तन्निवृत्तावुक्तां युक्तिं सारयति—घाद्यनुवृत्तौ हीति ॥

उत्सर्गस्य साक्षाद्बाधको द्वितीयः, तद्बाधकस्तृतीय इत्याह—यथेति ॥ तमपवादत्वादिति । योगविभागात्तस्यग्रहणासामर्थ्याच्चेति भावः ॥

तुल्यकक्ष्यत्वादिति । साक्षादणबाधकबाधेन चरितार्थत्वादिति भावः ॥ ननु वार्ज इत्यत्र कथमण्, अनुदात्तादित्वेनाञ् उचितत्वादित्यत आह—वृजिशब्दस्येति ॥ फिट्सूत्रेष्विति । 'हयादीनामसंयुक्तलान्तानामन्तःपूर्वं वा' इत्यनुवर्तमाने 'इगंतानां च द्व्यषाम्' इत्यनेन ॥

अञ्प्राप्तिविघातायाह—पूर्वपदेति ॥ अत्राण् प्रथमः, जनपदलक्षणो वुञ् द्वितीय इति पाठः[३] । अत्र चतुर्थस्य वुञस्तृतीयकक्ष्याप्राप्तबाधकत्वेन बलवत्त्वात्तं प्रति परत्वस्याप्रयोजकत्वात्सोऽस्याप्यणो बाधकः स्यादत आह—भाष्ये—केचित्पुरस्तादिति ॥

तत ओरञीति । विकार इत्यर्थः ॥

( चतुर्थवार्तिकोक्ताक्षेपपरिहारभाष्यम् )

यदप्युच्यते—'अवयवे च प्राण्योषधिवृक्षेभ्यो निवृत्तिः' इति,प्राण्योषधिवृक्षेभ्यो निवृत्तिरुच्यते । तत्र कः प्रसङ्गो यदप्राण्योषधिवृक्षेभ्यो निवृत्तिः स्यात् ॥

( पञ्चमवार्तिकोक्ताक्षेपपरिहारभाष्यम् )

यदप्युच्यते—'अण्मयटोश्च विप्रतिषेधानुपप-

---

१ 'छस्योत्सर्गापवाद' इति च. ञ. पाठः ॥

२ 'तृतीयकक्षां प्राप्तः' इति च. झ. ञ. पाठः ॥

३ 'इति पाठ इति' एतादृश एव कैय्यटे पाठ इदानीमुपलभ्यते ॥

त्तिर्मयड्वुत्सर्गात्' इति, मा भूद्विप्रतिषेधः । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते इत्येवमणञं बाधिष्यते, मयटं न बाधिष्यते ॥

( प्रदीपः ) यदपीति । 'अवयवे च प्राण्योषधिवृक्षेभ्यः' इति प्रकृतिविशेषाद्विधीयमानोऽण् तस्मादेव शैषिकाणां बाधकः । न तु प्रकृत्यन्तरात्, स्वयमेवाभावादित्यर्थः ॥ अञमिति । 'ओरञ्' 'अनुदात्तादेश्च' इति सूत्रद्वयविहितं 'कोपधाच्च' इत्यण् 'बाधिष्यते' न तु मयटम् । मयटैव तु परत्वादण् बाधिष्यत इत्यर्थः ॥

( उद्द्योतः ) स्वयमेवाभावादिति । एवञ्चात्र घादीनां निवृत्तावपि तस्येदमित्यनेन पाटलिपुत्रका इत्यादौ वुञ्सिद्धिरिति भावः । 'परत्वादण् बाधिष्यते' इति पाठः ॥

( ७९९ विधिसूत्रम् ॥ ४ । ३ । २ आ. ७ )

## १७०४ अवयवे च प्राण्योषधिवृक्षेभ्यः ॥ ४ । ३ । १३४ ॥

( अवयवार्थाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं विकारावयवयोर्युगपदधिकारः ?

( ५५३१ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ विकारावयवयोरुक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

तत्र तावदुक्तम्—भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ हि ताविति ।

इहापि—विकारावयवयोर्युगपदधिकारोऽपवादविधानार्थः, कृतनिर्देशौ ह्येतावर्थौ—"तस्येदम्" (४।३।१२०) इति ॥

( प्रदीपः ) कृतनिर्देशौ ह्येताविति । यद्यपि शैषिकनिवृत्त्यर्थत्वमुक्तम्, तथापि तदनपेक्ष्य 'कचित्तावदणादयस्सिद्धाः-भासनं मार्तिकमित्यादौ' इत्यभिसंबन्धाय-एतदुक्तम् ॥

( उद्द्योतः ) तदनपेक्ष्येति । यथा सामान्यविधानेऽपि 'स्वे ग्राम' इत्यादिव्यवस्थाऽभिधानमूलिका, तथाऽनभिधानादेव घादीनां विकारावयवयोरभाव इति तदनपेक्ष्येति भावः । 'तथापि तदनपेक्ष्यैतदुक्तम्' इत्येव कैय्यटे साम्प्रदायिकः पाठः ॥

( ८०० विधिसूत्रम् ॥ ४ । ३ । २ आ. ८ )

## १७०५ बिल्वादिभ्योऽण् ॥ ४।३।१३५ ॥

( अण्प्रत्ययाधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं बिल्वादिषु गवीधुकाशब्दः पठ्यते, न कोपधादणित्येव सिद्धम् ?

( ५५३२ समाधानवार्तिकम् ॥ १ ॥ )

॥ * ॥ बिल्वादिषु गवीधुकाग्रहणं मयट्प्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) बिल्वादिषु गवीधुकाग्रहणं क्रियते मयट्प्रतिषेधार्थम् । मयडतो मा भूदिति ॥

(उद्द्योतः) भाष्ये—मयडत इति । परत्वात् 'मयड्वैतयोः' इति प्राप्तः ॥

( ८०१ विधिसूत्रम् ॥ ४ । ३ । २ आ. ९ )

## १७०६ अनुदात्तादेश्च ॥ ४ । ३ । १३६ ॥

( अञोऽधिकरणम् )

( ५५३३ पूर्वपक्षवार्तिकम् ॥ १ ॥ )

॥ * ॥ अनुदात्तादेरञो विधाने आद्युदात्तान्ङीष उपसंख्यानम् ॥ * ॥

( भाष्यम् ) अनुदात्तादेरञो विधाने आद्युदात्तान्ङीष उपसंख्यानं कर्तव्यम् । कुवली-कौवलम्, बदरी-बादरम् ।

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम् । निघाते कृतेऽनुदात्तादेरित्येव सिद्धम् ।

न सिध्यति ।

किं कारणम् ?

( प्रदीपः ) कुवलीति । कुवलबदरशब्दौ 'ग्रामादीनां च' इत्याद्युदात्तौ ताभ्यां गौरादित्वान्ङीष् ॥

(उद्द्योतः) आद्युदात्तान्ङीष इत्यस्य-आद्युदात्तप्रकृतिकङीषन्तादित्यर्थः ॥

( ५५३४ एकदेशिसमाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ पदस्य ह्यनुदात्तादित्वम् ॥ * ॥

(भाष्यम् ) पदस्य हि निघातः, सुबन्तं च पदम्, ङ्याप्प्रातिपदिकाच्च प्रत्ययो विधीयते ॥

---

१ अवयवे च प्राण्योषधिवृक्षेभ्य इत्यनेन प्राण्योषधिवृक्षरूपात्प्रकृतिविशेषाद्विधीयमानोऽण् प्राण्योषधिवृक्षेभ्य एव शैषिकाणांबाधकः स्यात्, न तु प्राण्योषधिवृक्षान्यप्रकृतिभ्यः, प्राण्योषधिवृक्षेभ्योऽन्यत्र अस्याण् प्रत्ययस्य प्राप्तेरभावादित्यर्थ इति भावः ॥

२ तस्येदमिति सूत्रे देवदत्तस्यानन्तरमित्यर्थे प्रत्ययः कस्मान्नेत्याशङ्क्य अर्थपरिगणनादित्युद्धमित्युक्त्वा 'स्वे ग्रामजनपदमनुष्येभ्यः' इत्येवम्परिगणनप्रकार उक्तः । सोऽपि अनभिधानाद्देवदत्तस्यानन्तरमित्यर्थे प्रत्ययो नेति समाधाय प्रत्याख्यातः ॥ यथा तस्येदमित्यनेन सामान्यतो विधानेऽपि अनभिधानबलात्स्वे ग्रामेत्यादिपरिगणनस्य प्रत्याख्यानव्यवस्थोपलभ्यते तथाऽत्रेति भावः ॥

( प्रदीपः ) पदस्येति । 'अनुदात्तं पदमेकवर्जम्' इति वचनात् । इह चानुदात्तादिग्रहणस्य ङ्याप्प्रातिपदिकविशेषणत्वात् । यथोक्तम्[1]—वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्संप्रत्ययार्थमिति ॥

( उद्द्योतः ) ननु सुबन्तात्तद्धितोत्पत्तेस्तस्यैवानुदात्तादित्वं विशेषणम्, अतो न दोषोऽत आह—अनुदात्तादिग्रहणस्येति । एवञ्च ङ्यन्तादेरेव प्रकृतित्वम्, न च तदनुदात्तादीति भावः ॥

( ५५३५ समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ न वा समर्थस्यानुदात्तादित्वात् ॥ * ॥

( भाष्यम् ) न वा वक्तव्यम् ।

किं कारणम् ?

समर्थस्यानुदात्तादित्वात् । समर्थमनुदात्तादित्वेन विशेषयिष्यामः ॥

नैवं शक्यम् । इह च प्रसज्येत-वाचो विकारः, त्वचो विकार इति । एतद्धि समर्थमनुदात्तादि । इह च न स्यात्-सर्वेषां विकारः सर्व इति । तस्मान्नैवं शक्यम् ॥

न चेदेवमुपसंख्यानं कर्तव्यम् ।

न कर्तव्यम् । आचार्यप्रवृत्तिर्ज्ञापयति—यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इति, यदयं भिक्षादिषु गर्भिणीशब्दस्य पाठं करोति ।

कथं कृत्वा ज्ञापकम् ?

भिक्षादिषु गर्भिणीशब्दस्य पाठे एतत्प्रयोजनम्-अनुदात्तादिलक्षणोऽञ् मा भूदिति ।

यदि च पदस्य निघातः, गर्भशब्दोऽयमाद्युदात्तस्तस्मादिनिः । इन्नन्ताद्यः प्रत्ययः प्राप्नोति स तावत्स्यात् । तस्मिन्नवस्थिते निघातः । तत्र कोऽनुदात्तादिलक्षणस्याञः प्रसङ्गः ?

पश्यति त्वाचार्यः—यावत्येव द्वितीयस्य स्वरस्य प्रादुर्भावस्तावत्येव पूर्वस्य निघात इति । अतो भिक्षादिषु गर्भिणीशब्दं पठति ॥

( प्रदीपः ) न वेति । विभक्त्युत्पत्तौ सत्यां ङ्यन्तस्यानुदात्तादित्वं मन्यते । न च वृद्धावृद्धेत्यनेन विरोधः, समर्थावयवस्य ङ्याप्प्रातिपदिकस्य वृद्धादिविशेषणत्वेनाश्रयणात् ॥

एतद्धीति । 'सावेकाचः' इति विभक्तेरुदात्तत्वात्, प्रातिपदिकयोस्तु धातुस्वरेणान्तोदात्तत्वम् । सर्वशब्दश्च 'सर्वस्य सुपि' इति सुप्याद्युदात्तः । केवलस्त्वयमुणादिष्वन्तोदात्तो निपातित इत्यनुदात्तादिः । तस्माद्विभक्त्युत्पत्तेः प्रागनुदात्तादित्वमाश्रयणीयम् ॥

पूर्वस्य निघात इति । प्राग्व्यवस्थितस्य निघात इत्यर्थः ॥

गर्भशब्द इति । 'अर्तिगृभ्यां मन्' इति प्रत्ययस्य नित्वात् ॥

( उद्द्योतः ) नन्वाद्युदात्तादिविषये परस्यापि निघातदर्शनात्पूर्वस्य निघात इत्यसङ्गतमत आह—प्रागिति । प्राग्व्यवस्थितस्य तु तत्समकालमेव निघातः, असंनिहितस्य तु पश्चादपि । अतः 'अनुदात्तौ सुप्पितौ' इति भाष्येण न विरोध इति बोध्यम् ॥

भाष्ये—तस्मादिनिरिति । स प्रत्ययस्वरेणोदात्तः ॥ इन्नन्ताद्यः प्रत्यय इति । इन्नन्तान्ङीपि यः पदत्वप्रयोजकः सुप् स तावत्प्रथमं ततो निघात इति सुबुत्पत्तेः पूर्वं ङ्यन्तस्यानुदात्तादित्वाभावादञोऽप्राप्तिरित्यर्थः ॥ यावत्येवेति । यदैवेत्यर्थः ॥

( पदकृत्यभाष्यम् )

पदग्रहणं किमर्थम् ?

( ५५३६ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ पदग्रहणं परिमाणार्थम् ॥ * ॥

( भाष्यम् ) पदग्रहणं क्रियते, परिमाणार्थम् । पदावधेर्यथा स्यात्[2], वाक्यस्य मा भूत्—"अनुदात्तं पदमेकवर्जम्" ( ६।१।१५८ ) इति ॥

( प्रदीपः ) पदग्रहणमिति । यस्य पदत्वं भविष्यति तस्यैवैकवर्जमनुदात्तं यथा स्यात् पदसमूहस्य मा भूदित्येवमर्थं पदग्रहणमित्यर्थः ॥

( उद्द्योतः ) यस्य पदत्वमिति । इदमुपलक्षणम् । यावतः पदत्वं तावति येऽचो भाविनस्तेषामुदात्तादिप्रवृत्तिकालेऽसंनिहितानामपि निघातार्थमित्यपि बोध्यम् ॥

( ८०२ विधिसूत्रम् ॥ ४ । ३ । २ आ. १० )

## १७१२ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ॥ ४ । ३ । १४२ ॥

( मयटोऽधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं मयड्वैतयोरित्युच्यते[1] ?

( प्रदीपः ) किमर्थमिति । विकारावयवौ प्रकृतावेवेति भावः ॥ मयडिति । एतयोरित्येतस्मिन् सति पुनर्विधानं मयटो भवति, तच्चापवादविषयेऽपि प्राप्त्यर्थं संपद्यते ॥

( उद्द्योतः ) नन्वेतयोरित्युक्तिमात्रेण कथमपवादबाधकत्वम् ? अत आह—एतयोरितीति । योगविभागेनावृत्त्या वा पुनर्विधानमित्यर्थः ॥

---

[1] यथोक्तमिति । ङ्याप्प्रातिपदिकादिति सूत्रे वार्तिककृता स्वरविशिष्टप्रत्ययविधौ ङ्याप्प्रातिपदिकमित्यत्तद्विशेषणार्थमित्यर्थकमिदं वार्तिकमुक्तम् ॥

[2] 'पदावधेर्यथा स्यात्' इत्यस्य छ. पुस्तके पाठो न ॥

[1] 'किमेतयोरित्युच्यते' इति छ. पाठः ॥

( ५५३७ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ मयड्वैतयोर्वचनमपवाद-विषयेऽनिवृत्त्यर्थम् ॥ * ॥**

( भाष्यम् ) मयड्वैतयोरित्युच्यते, अपवादविषयेऽनिवृत्तिर्यथा स्यादिति । बिल्वमयम्, बैल्वम् ॥

( ५५३८ सिद्धान्तवार्तिकम् ॥ २ ॥ )

**॥ * ॥ एतयोरित्यर्थनिर्देशः ॥ * ॥**

( भाष्यम् ) एतयोरित्यर्थनिर्देशो द्रष्टव्यः । क्वेत्थं विजानीयात्—योगयोर्वा प्रत्यययोर्वेति ।

तदाचार्यः सुहृद्भूत्वाऽन्वाचष्टे—एतयोरित्यर्थनिर्देश इति ॥

( प्रदीपः ) योगयोर्वेति । योगयोः प्रत्यययोर्वा विषये मयडित्यर्थः स्यादित्यर्थः ॥

( उद्द्योतः ) योगयोरिति । 'पलाशादिभ्यो वा' 'शम्याः ष्लञ्' इत्येतयोरित्यर्थः ॥ प्रत्यययोः—अञ्ष्लञोरित्यर्थः ॥

( ८०३ विधिसूत्रम् ॥ ४ । ३ । २ आ. ११ )

## १७२४ ञितश्च तत्प्रत्ययात् ॥४।३।१५४॥

( अञोऽधिकरणम् )

( प्रदीपः ) तयोर्विकारावयवयोर्यो ञित्प्रत्ययस्तदन्ताद्विकारावयवयोरेवाञ् भवतीति सूत्रार्थः ॥

( उद्द्योतः ) विकारावयवयोरेवेति । एवकारः स्वरूपकथनपरः । क्वचित्तद्रहित एव पाठः ॥

( आक्षेपभाष्यम् )

किमर्थमिदमुच्यते ?

( प्रदीपः ) किमर्थमिति । अन्तरेणापि सूत्रं सिद्धिं मत्वा प्रश्नः ॥

( उद्द्योतः ) अन्तरेणापीति । वक्ष्यमाणप्रत्याख्यानरीत्येति भावः ॥

( ५५३९ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् ॥ * ॥**

( भाष्यम् ) विकारो विकारेण युज्यते, अवयवेनावयवः । विकारावयवयोर्विकारावयवयुक्तत्वान्मयट् प्राप्नोति । इष्यते चाञेव स्यादिति । तच्चान्तरेण यत्नं न सिद्ध्यतीति मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् । एवमर्थमिदमुच्यते ॥

( प्रदीपः ) विकारावयवयोरिति । कपोतस्य विकारो यत्—मांसं—कापोतम्, तस्यापि विकारो रसो भवति, कपोतावयवस्य सक्थ्यादेः कापोतस्यावयवोऽन्यो भवतीति वृद्धत्वान्मयट्प्रसङ्गे तन्निवृत्त्यर्थमञ्विधानमित्यर्थः ॥

( उद्द्योतः ) सक्थ्यादेः कापोतस्येति । ननु अस्य प्राण्यौषधिवृक्षत्वाभावाच्चिन्त्यमिदं भाष्यमिति चेत्, न, प्राणित्वारोपेणाक्षतेरित्याशयात् ॥

( ५५४० समाधानाक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ न वा दृष्टो ह्यवयवे समुदायशब्दो विकारे च प्रकृतिशब्दस्तस्मान्मयडभावः ॥ * ॥**

( भाष्यम् ) न वैतत्प्रयोजनमस्ति ।

किं कारणम् ?

दृष्टो ह्यवयवे समुदायशब्दः, तद्यथा—पूर्वे पञ्चालाः । उत्तरे पञ्चालाः । तैलं भुक्तम् । घृतं भुक्तम् । शुक्लः, नीलः, कृष्ण इति ।

विकारे च प्रकृतिशब्दः । विकारे च प्रकृतिशब्दो दृश्यते । तद्यथा—शालीन् भुङ्क्ते मुद्गैः, शालिविकारं मुद्गविकारेणेति ।

तस्मान्मयडभावः । तस्मान्मयडतो न भविष्यति ॥

( प्रदीपः ) न वेति । यदा कपोतावयवसक्थ्यादेरवयवो विवक्ष्यते तदा कपोतशब्दादेव सक्थ्याद्यवयववृत्तेरञ् भविष्यति । कपोतविकारमांसवृत्तेश्च कपोतशब्दान्मांसविकारे रसे इत्यर्थः ॥

( उद्द्योतः ) यदा कपोतेति । अयं चारोपः सूत्रारम्भेऽप्यावश्यकः । अन्यथाऽवयवे प्राण्यादित्वाभावात्ततोऽवयवे प्रत्ययो दुरुपपाद एवेति बोध्यम् ॥

( प्रत्याक्षेपभाष्यम् )

नैतद्विवदामहे—अवयवे समुदायशब्दोऽस्ति नास्तीति, विकारे वा प्रकृतिशब्द इति ।

किं तर्हि ?

विकारावयवशब्दोऽपि त्वस्ति, तत उत्पत्तिः प्राप्नोति ॥

( ५५४१ प्रत्याक्षेपनिराकरणवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ विकारावयवशब्दात्प्रसङ्ग इति चेन्न तेनानभिधानात् ॥ * ॥**

( भाष्यम् ) विकारावयवशब्दात् प्रसङ्ग इति चेत्तन्न ।

किं कारणम् ?

१ 'मयड्वैतयोरिति वच' इति च. छ. अ. पाठः ॥
२ 'तद्वेत्थं वि' इति च. छ. ज. पाठः ॥
१ 'योगयोर्वाऽपत्यययोर्वेति' इति च. छ. ज. पाठः । स च निर्मूलः ॥

तेनानभिधानात् । न हि विकारावयवशब्दादुत्पद्यमानेन प्रत्ययेनार्थस्याभिधानं स्यात् । अनभिधानात्तत उत्पत्तिर्न भविष्यति ॥

तच्चावश्यमनभिधानमाश्रयितव्यम् ॥

( प्रदीपः ) तेनेति । मयटः 'कापोतमयम्' इति विकारावयवयोः प्रयोगाभावादित्यर्थः ॥

( उद्योतः ) प्रयोगाभावादिति । मयटः प्रयोगेण तदर्थानवगमादित्यर्थः ॥

( ५५४२ आक्षेपवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अभिधाने ह्यन्यतोऽपि मयट्प्रसङ्गः ॥ * ॥**

( भाष्यम् ) अभिधाने सत्यन्यतोऽपि मयट् प्रसज्येत । बैल्वस्य विकार इति ॥

( ५५४३ सिद्धान्त्येकदेशिवार्तिकम् ॥ ५ ॥ )

**॥*॥ तस्मात्तत्प्रत्ययान्ताल्लुग्वचनम् ॥*॥**

( भाष्यम् ) तस्मात्तत्प्रत्ययान्ताल्लुग्वक्तव्यः ॥

( प्रदीपः ) तस्मादिति । यद्यनभिधानं नाश्रीयते तदा 'ञितश्च तत्प्रत्ययात्' इति सूत्रमपनीय बैल्वमयादिनिवृत्त्यर्थं 'तत्प्रत्ययाल्लुक्'[1] इति वक्तव्यम् ॥

( सिद्धान्तभाष्यम् )

यदि लुगुच्यते, कथं गौमयं भस्म, द्रौवयं मानम्, कापित्थो रसः ? इति ।

अन्यत्र[2] गोमयाद् द्रुवयात् फलाच्च लुग्वक्तव्यः ॥

इह तर्हि—औष्ट्रकी, अञन्तादितीकारो न प्राप्नोति ।

इष्टमेवैतत्संगृहीतम्, औष्ट्रिकेत्येव भवितव्यम् । इह हि सौनागाः पठन्ति—वुञश्चाव्कृतप्रसङ्ग इति ॥

इह तर्हि—पालाशी समिदित्यनुपसर्जनलक्षण ईकारो न प्राप्नोति ।

मा भूदेवम्—अञ् योऽनुपसर्जनमिति, अञन्तादनुपसर्जनादित्येवं भविष्यति ।

नैवं शक्यम् । इह हि दोषः स्यात्—काशकृत्स्निना प्रोक्ता मीमांसा काशकृत्स्नी तामधीते काशकृत्स्ना ब्राह्मणीति, अणन्तादितीकारः प्रसज्येत ।

तस्मादस्तु न तेनानभिधानादित्येव ॥

इह तर्हि कापोतो रस इति-प्राणिशब्दो नोपपद्यते ।

नैष दोषः । इदं तावदयं प्रष्टव्यः—योऽसावाद्यः कपोतः सलोमकः सपक्षः, न संप्रति प्राणिति, कथं तत्र प्राणिशब्दो वर्तते ? इति ।

अथ मतमेतत्—प्रकृत्यन्वया विकारा भवन्तीति ।

इहापि न दोषो भवति ॥

( प्रदीपः ) अन्यत्रेति । 'गोश्च पुरीषे' इति विकारे प्रत्ययं मन्यते । यदा तु पुरीषं नावयवो नापि विकारस्तदा गोर्मयट् तत्प्रत्यय[3] एव न भवतीति लुकः प्रसङ्ग एव नास्ति । द्रुवयशब्दो द्रोर्विकार इति 'माने वयः' इति वयप्रत्ययान्तः । एताभ्यामनुदात्तादिलक्षणोऽञ् ॥

औष्ट्रकीति । वृद्धलक्षणस्य मयटो लुकिकृतेऽञन्तत्वाभावादीकाराप्रसङ्गः ॥

वुञश्चेति । पाणिनीय[4]लक्षणे दोषोद्भावनमेतत् ॥

पालाशीति । पलाशस्य विकारः । 'पलाशादिभ्यो वा' इति पक्षेऽञ् । तदन्ताद्विकारे मयटो लुकि ईकाराप्रसङ्गः । पाणिनीयलक्षणे त्वञन्तादञि सतीकारः सिध्यति ॥

काशकृत्स्नेति । अणन्तस्य स्त्रियामध्येत्र्यामनुपसर्जनत्वादीकारप्रसङ्गः ॥

तस्मादिति । यस्माल्लुकि पालाशीति न सिध्यति तस्मादनभिधानान्मयटोऽनुत्पत्तिराश्रयितव्या ।

केषांचित्तु ग्रन्थः—'नैष दोषः, अध्येत्र्यामभिधेयायामण ईकारेण भवितव्यम् । यश्चाध्येत्र्यां वर्तते लुप्तः सः, यश्च श्रूयते उत्पन्नस्तस्मादीकारः । अथ वा पुनरस्तु—न तेनानभिधानादिति' ।

अनेन यद्यपि काशकृत्स्ना परिहृता तथाप्यापिशला न परिहृता भवति । पालाश्यापिशले न संवदेते । 'तस्मात् अस्तु न तेनानभिधानात्' इत्येष पाठो युक्तः ॥

इह तर्हीति । उद्गतप्राणे मांसे प्राणिवाचिनः कपोतशब्दस्य वृत्तिः । सत्यां वृत्तौ प्राणिवाचित्वाभावाद्रसे मांसविकारे कापोतशब्दो न सिध्यतीति चोद्यम् ॥

कथं तत्रेति । तत्रापि लोके कपोतशब्दो दृश्यत इति प्रश्नः ॥

---

१ तत्प्रत्ययाल्लुगिति । 'ञितश्च तत्प्रत्ययात्' इति सूत्रघटकञितश्चेत्यस्य प्रत्याख्यानात्-तत्प्रत्ययादित्यस्य विकारावयवप्रत्ययान्ताल्लुगित्यर्थः । तथाच बिल्वमयशब्दात् ञिद्भिन्नप्रत्ययान्ताद्विकारार्थकमयडन्तात्प्रत्ययस्य लुकि 'बैल्वमयम्' इति न भवतीत्यर्थः ॥

२ केचित्-अन्यत्रेत्यादिवार्तिकमेतत्, व्याख्याभाष्यन्तु अस्य लुप्तमिति तादृशं व्याख्याभाष्यं च प्रकल्पयन्ति । तन्न समीचीनम् । व्याख्याभाष्यस्य क्वाप्यनुपलम्भेन भाष्यकृतैव दोषमाक्षिप्य समाहितमिति कल्पनमेव वरं स्यात् । अग्रेऽप्याक्षिप्तदोषा भाष्यकृतैव समाहिताः, न तु वार्तिककृतेत्ययमपि दोषो भाष्यकृतैव वारित इति कल्पनया नास्माभिस्तस्य वार्तिकत्वेन निर्देशः कृत इति विचारणीयमेतत्सुधीभिः ॥

३ तत्प्रत्यय एवेति । 'गोश्च पुरीषे' इत्यनेन विहितो मयट् पुरीषस्य विकाराभावान्न विकारार्थ इति 'तत्प्रत्ययाल्लुक्' इति न्यासघटकतत्प्रत्ययपदार्थ एव न भवतीत्यर्थः । तत्प्रत्ययपदस्य च तत्र विकारावयवप्रत्यय इत्यर्थात् । अस्य च मयटो न विकारार्थत्वमिति भावः ॥

४ पाणिनीयलक्षणे—ञितश्च तत्प्रत्ययादिति सूत्रे ॥

**प्रकृत्यन्वया इति** । प्रकृतेरन्वयो येषु ते प्रकृत्यन्वयाः । प्रकृतिरेव विकाररूपतामापद्यमाना विकारावस्थायामपि क्वचित्प्रकृतिशब्देनाभिधीयत इत्यर्थः ॥

**( उद्द्योतः ) मन्यते इति** । 'गोश्च[1] पुरीषे' इति तु पुरीषरूपे विकारे एवेति नियमार्थमिति भावः ॥ **यदा त्विति** । इदं चिन्त्यम्, भाष्यविरोधात् । शरीरसंबद्धाहारविकारत्वाच्च शरीरविकारत्वमपि तस्मिन्द्रष्टव्यम् ॥ **कापित्थो रस इति**—भाष्ये—कपित्थशब्दात्फले विकारे प्रत्यये[2]ऽणि तस्य लुकि 'लघावन्ते' इति मध्योदात्ततया फलवाचिनः 'अनुदात्तादेः' इत्यञ् ॥

**वुञश्चेति**—चेन 'कंसीय' इति यञो ग्रहणम् । न च[3] शामीलशब्दात् ष्लञन्तादञि ङीपि आद्युदात्तं पदम्, अभेदे[4]विवक्षायां षित्वान्ङीष्यन्तोदात्तं स्यादिति वाच्यम् । भाष्यप्रामाण्यात् ष्लञ्छित्वस्यैवांगीकारान्न दोष इत्याशयः ॥

भाष्ये—**ईकारः प्रसज्येतेति** । किं चानुपसर्जनादित्यस्य तदन्तविशेषणत्वेऽनुपसर्जनादित्यस्य वैयर्थ्यमपि, 'बहुकुरुचरा' इत्यत्रापि प्रसंगादिति बोध्यम् ॥

**न परिहृतेति** । स्त्रियामित्यस्य गृह्यमाणविशेषणत्वेनेदं परिहर्तुं शक्यमिति चेत्—तुल्यं पालाश्यामपि—इति बोध्यम् ॥

**वृत्तिरिति** । आरोपः—इत्यर्थः ॥ **सत्यां वृत्ताविति** । आरोपे इत्यर्थः ॥ **न सिध्यतीति** । प्राणित्वाभावात् 'प्राणिरजतादिभ्योऽञ्' इत्यस्याप्राप्तेरिति भावः ॥ **चोद्यमिति** । विकारलक्ष्य[5]कप्रकृतेर्विकारे प्रत्यय इति प्रत्या[6]ख्यानपक्षे इदं चोद्यमित्यर्थः ॥

भाष्ये—**न संप्रतीति** । मरणोत्तरावस्थायामित्यर्थः ॥ **तत्रापि लोके इति** । तथा चारोपेणान्यत्र वृत्तावपि प्राणिवाचकत्वाक्षतिरिति भावः । प्राणिवाचको यो दृष्टस्ततः प्रत्यय इत्यर्थात्—इति बोध्यम् ॥

**प्रकृतेरिति** । प्रकृतिवाचकशब्दस्येत्यर्थः ॥

---

( ८०४ अतिदेशसूत्रम् ॥ ४ । ३ । २ आ. १२ )

## १७२५ क्रीतवत्परिमाणात् ॥४।३।१५५॥

( प्रत्ययातिदेशाधिकरणम् )

( जिज्ञासाभाष्यम् )

**कथमिदं विज्ञायते—क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयोरिति,**

**आहोस्वित्परिमाणात् क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयोरिति ?**

**किं चातः ?**

**यदि विज्ञायते—क्रीते ये प्रत्यया विहितास्ते भवन्ति परिमाणाद्विकारावयवयोरिति,**

**प्रत्ययमात्रं प्राप्नोति ।**

**अथ विज्ञायते—परिमाणात् क्रीते ये प्रत्यया विहितास्ते भवन्ति विकारावयवयोरिति,**

**प्रकृतिमात्रात् प्राप्नुवन्ति ।**

**तस्मात्—**

( प्रदीपः ) **प्रत्ययमात्रमिति** । मुद्गैः क्रीतं मौद्गिकमिति क्रीते ठग्विहित इति शूर्पस्य विकार इत्यत्रापि प्राप्नोति ॥ **प्रकृतिमात्रादिति** । 'शूर्पादञन्यतरस्याम्' इत्यञ्ठञौ हलस्य विकार इत्यत्रापि प्राप्नुतः ॥

**( उद्द्योतः ) शूर्पस्येति** । तत्र हि शूर्पादञिष्टः, पक्षे ठंश्च ॥

( ५५४४ सूत्रार्थसम्पादने एकदेशिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ क्रीतवत्परिमाणादङ्गं च ॥ * ॥**

**( भाष्यम् ) अङ्गं च क्रीतवदिति वक्तव्यम् ।**

**तत्तर्हि वक्तव्यम् ?**

**न वक्तव्यम् ॥**

( प्रदीपः ) **अङ्गं चेति** । 'कालेभ्यो भववत्' इत्यत्र यदुक्तं 'सिद्धं तूभयनिर्देशात्' इति तदेवानेन प्रतिपाद्यते । अङ्गग्रहणेन प्रत्यासत्त्या परिमाणमेव गृह्यते । तेनायमर्थो भवति—क्रीतार्थे यथा परिमाणमङ्गं यथा च परिमाणात् प्रत्ययस्तथा विकारेऽपि परिमाणमङ्गं प्रत्ययश्च । तेन यस्मात्परिमाणात् क्रीते यः प्रत्ययस्तस्मादेव स विकारेऽपि भवति ॥

**न वक्तव्यमिति** । क्रीते परिमाणादित्येवान्यतरविशेषणत्वे परिमाणस्य सिद्धे वतिनिर्देशात्सर्वसादृश्यपरिग्रहार्थादुभयविशेषणं परिमाणग्रहणमर्थाद्भवतीत्यर्थः ॥

**( उद्द्योतः )** ननु क्रीतेऽङ्गस्याविधानात् 'क्रीतवदङ्गम्' इत्ययुक्तमत आह—**कालेभ्य इत्यादि** ॥ **अन्यतरेति** । क्रीते ये परिमाणाद्विहिता इति, ये क्रीते विहितास्ते परिमाणाद्भवति—इति वाऽर्थः ॥

( वार्तिकोक्तार्थसाधने भाष्यम् )

**क्रीतवदिति वतिनिर्देशोऽयम् । यदि च याभ्यः प्रकृतिभ्यो येन विशेषणेन क्रीते प्रत्यया विहितास्ताभ्यः प्रकृतिभ्यस्तेनैव विशेषणेन परिमाणाद्विकारावयवयोर्भवन्ति, ततोऽमी क्रीतवत् कृताः स्युः ।**

---

१ गोश्चेत्यादिसूत्रप्रयोजनमाह—**गोश्च पुरीषे इति त्विति** ॥

२ पूर्वमेव 'लघावन्ते' इति मध्योदात्ततयाऽनुदात्तादेरित्यञि प्राप्ते, अणीति चिन्त्यम् ॥

३ विकारविकारोऽप्यभेदविवक्षायां विकार एवेत्याश्रित्य ञितश्चेत्यस्य प्रत्याख्याने आरम्भप्रत्याख्यानयोः फलभेदरूपं दोषमाक्षिपति—**न च शामीलेति** ॥

४ वार्तिककारो ञितश्च तत्प्रत्ययादित्यस्य स्थाने तत्प्रत्ययाच्छुगित्येव सूत्रमाह । भाष्यकारस्तु विकारविकारोऽपि अभेदविवक्षया विकार एवेति सम्पूर्णमेव ञितश्चेत्यादिसूत्रं प्रत्याचष्टे । तदेतदाह—**अभेदविवक्षायामिति** ॥

५ 'विकारलक्षक' इति च. झ. पाठः । विकारलक्ष्यक इत्यस्य विकारो लक्ष्यं यस्या इत्यर्थः ॥

६ **प्रत्याख्यानपक्षे इति** । ञितश्च तत्प्रत्ययादित्यस्य विकारविकारोऽपि विकार एवेत्याश्रित्य प्रत्याख्याने मांसवाचिनः कपोतशब्दस्य प्राणिवाचित्वाभावात्प्राणिरजतादिभ्योऽञिति न प्राप्नोतीति चोद्यमित्यर्थः ॥

अथ हि प्रकृतिमात्राद्वा स्युः प्रत्ययमात्रं वा स्यात्, नासौ क्रीतवत् कृताः स्युः ॥

( ५५४५ विप्रतिषेधवार्तिकम् ॥ २ ॥ )

॥ * ॥ अणो वृद्धान्मयट् ॥ * ॥

( भाष्यम् ) अणो वृद्धान्मयडित्येतद्भवति विप्रतिषेधेन ।

अणोऽवकाशः—तित्तिडीक—तैत्तिडीकम् ।

मयटोऽवकाशः—काष्ठमयम् ।

इहोभयं प्राप्नोति—शाकमयम् ॥

( प्रदीपः ) अण इति । 'कोपधाच्च' इति विहितात् ॥

( ५५४६ विप्रतिषेधवार्तिकम् ॥ ३ ॥ )

॥ * ॥ ओरञोऽनुदात्तादेरञश्च ॥ * ॥

( भाष्यम् ) ओरञोऽनुदात्तादेरञश्च मयड् भवति विप्रतिषेधेन ।

ओरञोऽवकाशः—अरडु—आरडवम् ।

मयटः स एव ।

इहोभयं प्राप्नोति—दारु—दारुमयम् ।

अनुदात्तादेरञ्भवतीत्यस्यावकाशः—कौवलम् । जरद्वृक्ष—जारद्वृक्षम् ।

मयटः स एव ।

इहोभयं प्राप्नोति—आम्रमयम् ॥

( प्रदीपः ) कौवलमिति । कुवल्या विकार इत्यर्थेऽञ् ॥ मयटः स एवेति । काष्ठमयमिति, काष्ठशब्दस्याद्युदात्तत्वात् ॥ आम्रमयमिति । आम्रशब्दः 'अमितम्योर्दीर्घश्च' इति रगन्तोऽनुदात्तादिः ॥

(उद्योतः) भाष्ये—कौवलमिति पाठः । कुवली—कौवलमित्यपपाठः । एवमग्रेऽपि—गृध्र—गार्ध्रमित्यपपाठः । गार्ध्रमित्येव ॥

( ५५४७ विप्रतिषेधवार्तिकम् ॥ ४ ॥ )

॥ * ॥ मयटः प्राण्यञ्विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) मयटः प्राण्यञ्भवति विप्रतिषेधेन ।

प्राण्यञोऽवकाशः—गार्ध्रम् ।

मयटः स एव ।

इहोभयं प्राप्नोति—चाषम् । भासम् ।

प्राण्यञ्भवति विप्रतिषेधेन ॥

( प्रदीपः ) गार्ध्रमिति । गृध्रस्य विकार इत्यर्थः ॥

( ५५४८ विप्रतिषेधखण्डनवार्तिकम् ॥ ५ ॥ )

॥ * ॥ न वाऽनवकाशत्वादपवादो मयट् ॥ * ॥

( भाष्यम् ) न वैष युक्तो विप्रतिषेधः, योऽयमञो मयटश्च ।

किं कारणम् ?

अनवकाशत्वादपवादो मयट् ।

अनवकाशो मयट् सावकाशमञं बाधिष्यते ।

स कथमनवकाशः ?

यद्यनुवर्तन्ते शैषिकाः ।

अथ निवृत्ताः शैषिकाः,

वृद्धमाद्युदात्तं मयटोऽवकाशः ॥

(प्रदीपः) नवेति । 'ओरञोऽनुदात्तादेरञश्च' इति य उक्तो विप्रतिषेधस्तन्निराकरोति ॥ यद्यनुवर्तन्त इति । 'तस्य विकारः' इत्यत्र शैषिकाणामनुवृत्तौ छे प्राप्ते मयडारभ्यमाणोऽन्यपूर्वको भवतीति छस्येवाञोऽपि बाधक इत्यर्थः । एतच्च बाध्यसामान्यचिन्तायां येन नाप्राप्त इति न्यायस्यानवतारादेतद्न्यायानपेक्षयोच्यते ॥ अथेति । तन्निवृत्तौ विध्यन्तरपूर्वको मयट् न भवतीति काष्ठमयादौ सावकाशः परत्वादेवाञं बाधते, न त्वपवादत्वादित्यर्थः ॥

( उद्योतः ) 'प्राण्यञश्च' इत्यस्य पौनरुक्त्यपरिहारायाह—ओरञ इति । इदं कोपधाणोऽप्युपलक्षणम् ॥ ननु छेनेवाञा येन नाप्राप्त्यभावात् कथमञोऽपि बाधोऽत आह—एतच्चेति । न्यायानपेक्षायां हेतुर्न्यायानवतारः ॥ तन्निवृत्ताविति । तन्निवृत्तिबोधकतस्यग्रहणसामर्थ्यात् 'तस्येदम्' इत्यनेनापि विकारे छाप्राप्तिरिति भावः ॥

( ५५४९ विप्रतिषेधखण्डनवार्तिकम् ॥ ६ ॥ )

॥ * ॥ प्राण्यञश्च ॥ * ॥

(भाष्यम्) अयं चाप्ययुक्तो विप्रतिषेधः—योऽयं मयटः प्राण्यञश्च ।

किं कारणम् ?

अनवकाशत्वादपवादो मयडित्येव ।

अनवकाशो मयट्, स यथैव ओरञमनुदात्तादेरञं च बाधते, एवं प्राण्यञमपि बाधेत ॥

( प्रदीपः ) प्राण्यञश्चेति । पूर्वत्र विप्रतिषेधाभावेऽपीष्टसिद्धिर्भवत्येव—दारुमयमाम्रमयमिति । प्राण्यञि तु तदभावे चाषं भासमितीष्टं न सिध्यति, मयट्प्रसङ्गात् ॥

( उद्योतः ) ननु पूर्ववार्तिकेनैव सिद्धाविदं व्यर्थम्, अतस्ततो विशेषं दर्शयति—पूर्वत्रेति । अपवादत्वेनेति भावः ॥ मयट्प्रसंगादिति । अपवादत्वादिति भावः । यद्येतदित्यादिना भाष्ये कोपधलक्षणाणो मयटश्च विप्रतिषेधः स्थाप्यते । अत्राधिकारे शैषिकानुवृत्तौ मयट् छापवादः । 'कोपधाच्च' इत्यण् 'ओरञ्' इत्याद्यञोऽपवादः । तत्रापवादविप्रतिषेधो न्याय्यः । अननुवृत्तौ तु कोपधाणोऽञ इव मयडपवादत्वादयुक्तः, स स्यात् इति बोध्यम् । पुरस्तादिति न्यायाङ्गीकारे तु मयटो नापवाद इति सर्वथा युक्तो विप्रतिषेध इति तात्पर्यम् । तद्ध्वनयन् वक्ष्यति—मयटा परत्वात्कोपधलक्षणोऽण् बाध्यत इति ॥

१ काष्ठशब्दस्याद्युदात्तत्वादनुदात्तादेरञ् न प्राप्नोतीति मयट एवायमवकाश इति भावः ॥

( ५५५० एकदेशिवार्तिकम् ॥ ७ ॥ )

॥*॥तस्मान्मयड्विधाने प्राणिप्रतिषेधः॥*॥

( भाष्यम् )तस्मान्मयड्विधाने प्राणिभ्यः प्रतिषेधो वक्तव्यः ।

स तर्हि वक्तव्यः ।

न वक्तव्यः ॥

(प्रदीपः) तस्मादिति । 'नित्यं वृद्धशरादिभ्योऽप्राणिनः' इति वक्तव्यमित्यर्थः ॥

( सिद्धान्तभाष्यम् )

मध्येऽपवादाः पूर्वान् विधीन् बाधन्त इत्येवमयं मयट् ओरञमनुदात्तादेरञं च बाधिष्यते, प्राण्यञं न बाधिष्यते ॥

यद्येतदस्ति—'मध्येऽपवादाः' 'पुरस्तादपवादाः' इति, माऽनुवृतञ्शैषिकाः ।

पुरस्तादपवादा अनन्तरान् विधीन् बाधन्त इत्येवमयमण् अञं बाधिष्यते, मयटं न बाधिष्यते ॥

( प्रदीपः ) यद्येतदस्तीति । यद्येतदाश्रीयत इत्यर्थः ॥ माऽनुवृतन्निति । वृतेः 'द्युद्भ्यो लुङि' इति वा परस्मैपदम् । 'पुषादिद्युतादि' इति च्लेरङादेशः । शैषिकाणां निवृत्त्यनुवृत्त्योरपि विप्रतिषेधोपपत्त्या मयटा परत्वात्कोपधलक्षणोऽण् बाध्यत इत्यर्थः ॥

( उद्द्योतः ) वृतेरनुदात्तत्वात्परस्मैपदं कथमत आह—वृतेरिति ॥

( ५५५१ विप्रतिषेधवार्तिकम् ॥ ८ ॥ )

॥ * ॥ अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) अनुदात्तादेरञः प्राण्यञ्भवति विप्रतिषेधेन ।

अनुदात्तादेरञ्भवतीत्यस्यावकाशः—जरद्वृक्षः—जारद्वृक्षम् ।

प्राण्यञः स एव ।

इहोभयं प्राप्नोति—कपोत—कापोतम् ।

प्राण्यञ्भवति विप्रतिषेधेन ॥

( प्रदीपः ) जरद्वृक्ष इति । जरद्वृक्षशब्दः समासस्वरेणान्तोदात्तत्वादनुदात्तादिः ॥ स एवेति ।—गार्ध्रमिति । कपोतशब्दः 'लघावन्ते' इति मध्योदात्तत्वादनुदात्तादिः ॥

( उद्द्योतः ) कपोते उभयप्राप्त्युपपादनायाह—कपोत इति ॥

( विप्रतिषेधोपपादकं भाष्यम् )

कः पुनरत्र विशेषः, तेन वा सति, अनेन वा ?

सापवादः स विधिः, अयं पुनर्निरपवादः ।

यदि तेन स्याद्, इह न स्यात्—श्वाविधो विकारः शौवाविधम् ॥

( प्रदीपः ) सापवाद इति । मयटा परत्वाद् बाध्यमानत्वात् ॥ अयमिति । अनेन परत्वान्मयटो बाधनात् ॥ श्वाविध इति । श्वानं विध्यतीति क्विप् । 'नहिवृति' इति दीर्घः । कृत्स्वरेणोत्तरपदस्यान्तोदात्तत्वादनुदात्तादित्वम् । अत्र मयडभावात् प्राण्यञ् भवति—इति 'द्वारादीनां च' इति वृद्धिप्रतिषेध ऐजागमश्च ॥

( उद्द्योतः ) परत्वादिति । अपवादशब्दो बाधकमात्रपर इति भावः ॥ मयडभावादिति । प्राण्यञा परत्वाद्बाधेन तदभावो बोध्यः ॥

---

( ८०५ विधिसूत्रम् ॥ ४ । ३ । २ आ. १३ )

## १७३३ फले लुक् ॥ ४ । ३ । १६३ ॥

( लुगधिकरणम् )

( ५५५२ सूत्राक्षेपे वार्तिकम् ॥ १ ॥)

॥ * ॥ फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् ॥ * ॥

( भाष्यम् ) फले लुग्वचनमनर्थकम् ।

किं कारणम् ?

प्रकृत्यन्तरत्वात्, प्रकृत्यन्तरमामलकशब्दः फले वर्तते ।

एकान्तदर्शनात् प्राप्नोति ॥

( प्रदीपः ) प्रकृत्यन्तरत्वादिति । आमलकादिशब्दः फले न यौगिकः—आमलक्याः फलमिति । किं तर्हि ? जातिशब्द एवेत्यर्थः ॥

(उद्द्योतः) ननु यौगिकत्वेऽपि अण्प्रकृत्यपेक्षयाऽन्यत्वमस्त्येवेत्यत आह—आमलकादिशब्द इति । फलं हि वृक्षस्य नावयवः, अनारंभकत्वात् । नापि विकारः, स हि द्विविधः—प्रकृत्युपमर्दकः—यथा भस्मादिः, प्रकृतेर्व्यपदेशान्तरकारी वा—यथा खादिरः स्रुव इति । फलं तु नैवंविधमिति तत्र प्रत्ययाप्राप्तेः प्रकृत्यन्तरत्वमावश्यकमिति भावः ॥

( ५५५३ सूत्राक्षेपे वार्तिकम् ॥ २ ॥ )

॥ * ॥ एकान्तदर्शनात्प्रसङ्ग इति चेद्वृक्षे लुग्वचनम् ॥ * ॥

( भाष्यम् ) एकान्तदर्शनात्प्रसङ्ग इति चेत्, वृक्षे लुग्वक्तव्यः ।

वृक्षोऽपि हि फलैकान्तः ॥

( प्रदीपः ) एकान्तदर्शनादिति । आमलक्या अवयवे आमलकं दृश्यते, ततश्च यौगिक एव फले आमलकशब्द इत्यर्थः ॥ फलैकान्त इति । फलमेकान्तो यस्येति[1] बहुव्रीहिः ।

---

१ 'फलमेकान्तस्येति' इति क., 'फलमेकान्तोऽस्येति' इति ङ. पाठः ।

यदि संबन्धदर्शनायौगिकत्वमामलकशब्दस्य फले व्यवस्थाप्यते तदा संबन्धाविशेषादामलकस्येयमामलकी वृक्ष इति वृक्षावयविनि प्रत्ययमुत्पाद्य लुग्विधेयः । तस्मादुभयत्राप्यामलकादयो जातिशब्दा एव स्वभावतो वर्तन्त इत्यभ्युपगन्तव्यमित्यर्थः ॥

(उद्द्योतः) भाष्ये—**एकान्तदर्शनादिति** । एकान्तोऽवयवः ॥ **आमलक्या अवयव इति** । अवयव्युत्पत्तेः प्रागसत्त्वादनारंभकेऽपि दन्तशृंगादौ गवाद्यवयवत्ववत् फलमप्यवयव इति भावः । एवं विकारत्वमपि बोध्यम्, प्रकृतेरवस्थान्तरस्यैव विकारत्वात् । भवति चाफलितावस्थायाः फलितावस्था—अवस्थान्तरमिति । एवं चामलकीमयमित्यादिनिवृत्त्यर्थं लुगावश्यक इति भावः ॥ भाष्ये—फलैकान्तशब्देन फलवृक्षयोः संबन्धो दर्शितस्तदाह—**यदि संबन्धेति** ॥ **लुग्विधेय इति** । आमलकीयो वृक्ष इत्यादि निवृत्त्यर्थमिति भावः ॥ **स्वभावतो वर्तन्त इति** । अतिप्रसंगस्त्वनभिधानाद्वारणीय इति भावः ॥

(८०६ विधिसूत्रम् ॥ ४ । ३ । २ आ. १४)

## १७३६ लुप् च ॥ ४ । ३ । १६६ ॥

(लुपोऽधिकरणम्)

(५५५४ संग्रहवार्तिकम् ॥ १ ॥)

### ॥ * ॥ लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् ॥ * ॥

(भाष्यम्) **लुप्प्रकरणे फलपाकशुषामुपसंख्यानं कर्तव्यम् । व्रीहयः, यवाः, माषाः, मुद्गाः, तिलाः ॥**

(प्रदीपः) **फलपाकशुषामिति** । फलपाकेन ये शुष्यन्ति व्रीह्यादयः, तद्वाचिनामित्यर्थः ॥ **व्रीहय इति** । बिल्वाद्यण् ॥ **यवा माषा इति** । 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तत्वादौत्सर्गिकोऽण् । मुद्गशब्दात्–बिल्वाद्यण् ॥

(५५५५ संग्रहवार्तिकम् ॥ २ ॥)

### ॥ * ॥ पुष्पमूलेषु च बहुलम् ॥ * ॥

(भाष्यम्) **पुष्पमूलेषु बहुलं लुब्वक्तव्यः । मल्लिका, करवीरम्, बिसम्, मृणालम् । न च भवति—पाटलानि मूलानि ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये चतुर्थस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥**

**पादश्च समाप्तः ॥**

(प्रदीपः) **पाटलानीति** । पाटलिशब्दो बिल्वादिः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते **भाष्यप्रदीपे चतुर्थ**स्याध्यायस्य **तृतीये** पादे **द्वितीय**माह्निकम् ॥

(उद्द्योतः) पाटलिशब्दस्य वृद्धत्वान्मयड्प्राप्तौ चिन्तितोऽत आह—बिल्वादिरिति ॥

इति श्रीशिवभट्टसुतसतीगर्भज**नागोजीभट्ट**कृते भाष्यप्रदीपोद्द्योते चतुर्थाध्यायस्य तृतीये पादे **द्वितीयमाह्निकम्** ॥

पादश्च समाप्तः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ७६० | ३२ | १४ | ४६ | ८०६ |
| अव्याख्यातसूत्राणि | ८१० | ८७ | ३५ | १२२ | ९३२ |
| समुदितसूत्राणि | १५७० | ११९ | ४९ | १६८ | १७३८ |
| वार्तिकानि | ५४४३ | ६५ | ४७ | ११२ | ५५५५ |

# चतुर्थाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ।

( ८०७ अधिकारसूत्रम् ॥ ४ । ४ । १ आ. १ )

## १७३९ प्राग्वहतेष्ठक् ॥ ४ । ४ । १ ॥

( ठकोऽधिकरणम् )

( ५५५६ संग्रहवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् ॥ * ॥**

( भाष्यम् ) ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानं कर्तव्यम् । माशब्दिकः, नैत्यशब्दिकः, कार्यशब्दिकः ॥

( प्रदीपः ) तदाहेति । तदिति कर्ममात्रं निर्दिश्यते न तु द्वितीया समर्थविभक्तिः, 'आहौ प्रभूतादिभ्यः' इत्यतो भेदेन वचनात् । तेन पदसमुदायादयं प्रत्ययः । माशब्द इत्याह— माशब्दिकः, नित्यः शब्द इत्याह—नैत्यशब्दिकः–इति । तत्र पदसमुदायार्थं इतिना प्रत्यवमृश्यमानो वचनक्रियासंबन्धात्कर्म संपद्यते । अप्रातिपदिकत्वात्तु द्वितीयाऽनुत्पत्तिः ॥

(उद्द्योतः) ननु तदाहेति द्वितीयासमर्थात्प्रत्यय इति लभ्यते । न च तद्युक्तम्, वाक्यात्प्रत्ययविधानेन वाक्यस्य द्वितीयांतत्वासंभवादाह—तदिति कर्मेति ॥ भेदेन वचनादिति । तेन हि पदादेव द्वितीयान्ताद्विधीयते ॥ केवल 'मा'शब्दोच्चारयितरि प्रत्ययस्यानिष्टेराह—मा शब्द इति । शब्दो मा कारीत्यर्थः । वृत्तौ करोतिक्रियाऽन्तर्भूता बोध्या । भाष्ये माशब्दमाहेत्यपपाठः ॥

( ५५५७ संग्रहवार्तिकम् ॥ २ ॥ )

**॥ * ॥ आहौ प्रभूतादिभ्यः ॥ * ॥**

( भाष्यम् ) आहौ प्रभूतादिभ्यष्ठग्वक्तव्यः । प्रभूतमाह-प्राभूतिकः, पार्याप्तिकः ॥

( प्रदीपः ) प्रभूतमाहेति । क्रियाविशेषणत्वात्कर्मत्वम् ॥

( ५५५८ संग्रहवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ पृच्छतौ सुस्नातादिभ्यः ॥ * ॥**

( भाष्यम् ) पृच्छतौ सुस्नातादिभ्यष्ठग्वक्तव्यः । सौस्नातिकः, सौखरात्रिकः, सौखशायनिकः ॥

( प्रदीपः ) पृच्छताविति । तिङन्तानुकरणमेतत् । तत्र शब्दे कार्यासंभवात्तिङन्तार्थे ठग्विधिः ॥

( उद्द्योतः ) आहौ पृच्छताविति । बहुलग्रहणाद्धात्वर्थनिर्देशे इक्श्तिपौ ॥ पृच्छतौ प्रकारान्तरमप्याह—तिङन्तेति । सौखशायनिके उभयपदवृद्धिः, अनुशतिकादित्वात् ॥

१ तेन=आहौ प्रभूतादिभ्य इत्यनेन ॥

२ वार्तिकद्वयस्थौ 'आहौ-पृच्छतौ' शब्दौ साधयति—बहुलेति । आहौ—इक् । पृच्छतौ—श्तिप् ॥

३ 'किमत्र' इति क. ज. पाठः ।

( ५५५९ संग्रहवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ गच्छतौ परदारादिभ्यः ॥ * ॥**

( भाष्यम् ) गच्छतौ परदारादिभ्यष्ठग्वक्तव्यः । पारदारिकः, गौरुतल्पिकः ॥

( ८०८ विधिसूत्रम् ॥ ४ । ४ । १ आ. २ )

## १७४७ आकर्षात् ष्ठल् ॥ ४ । ४ । ९ ॥

( ष्ठल्प्रत्ययाधिकरणम् )

( प्रत्ययानां षित्त्वनिर्द्धारणे भाष्यम् )

इह केषांचित्सांहितिकं षत्वम्, केषांचित्षिदर्थम् ।

तत्र न ज्ञायते केषां सांहितिकं षत्वम्, केषां षिदर्थमिति ?

तत्र[३] किं न्याय्यम् ?

परिगणनं कर्तव्यम् ॥

( ५५६० परिगणनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच । आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥ * ॥**

( प्रदीपः ) इहेति । एकस्य वाऽनेकस्य वा षकारस्य व्यञ्जनपरस्य श्रुत्या विशेषानवधारणात्सांहितिकेऽपि वा षकारे 'अनचि च' इति द्विर्वचनविधानादनेकषकारत्वसंभवात्संशयः ॥ आकर्षेति । श्लोकः-वार्तिककारः संदिग्धानसंदिग्धांश्च भ्रान्तिनिरासाय पर्यजीगणत् ॥ षडेत इति । विधिवाक्यापेक्षं षट्त्वम्, प्रत्ययास्तु सप्तैते ॥

( उद्द्योतः ) एकस्य वेति । 'भस्त्रादिभ्यन्' इत्यादावयं संदेहः ॥ ननु कुसीदसूत्रे ष्ठन्ष्ठचोर्द्वयोर्विधानात्षडित्ययुक्तमत आह— विधिवाक्येति ॥

( ८०९ विधिसूत्रम् ॥ ४ । ४ । १ आ. ३ )

## १७५५ विभाषा विवधात् ॥४।४।१७॥

( छनो विभाषाधिकरणम् )

( ५५६१ पूरकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वीवधाचेति वक्तव्यम् ॥ * ॥**

वैवधिकः[४] ॥

४ 'वैवधिकः, वीवधिकः' इति झ. पाठः । तादृशः पाठोऽन्येषु पुस्तकेषु न दृश्यते । 'वीवधिक इत्यस्यापीष्टत्वात्' इत्युद्द्योते रूपप्रदर्शनादपि मूले न तन्निर्दिष्टस्स्यादिति प्रतिभाति ॥

( प्रदीपः ) वीवधाच्चेति वक्तव्यमिति । अत्र विवधशब्दवीवधशब्दौ पर्यायौ । तत्राविरविकन्यायो न संभवति, उभाभ्यां प्रत्ययस्येष्टत्वात् । ततो वीवधाच्चेति वक्तव्यमित्युक्तम् ॥

(उद्द्योतः) उभाभ्याम्प्रत्ययस्येति । ष्ठन इत्यर्थः । 'वीवधिकः' इत्यस्यापीष्टत्वादिति भावः । एकदेशविकृतन्यायेनैव वीवधग्रहणस्य सिद्धाविदं व्यर्थमित्यन्ये । विवधवीवधशब्दौ स्वतन्त्रावेव, न प्रकृतिविकारभावापन्नाविति वार्तिकाशयः ॥

( ८१० विधिसूत्रम् ॥ ४ । ४ । १ आ. ४ )

## १७५८ त्रेर्मब्नित्यम् ॥ ४ । ४ । २० ॥

( मप्प्रत्ययाधिकरणम् )

( पदकृत्यभाष्यम् )

**नित्यग्रहणं किमर्थम् ?**

**विभाषा मा भूत् ।**

**नैतदस्ति प्रयोजनम्, पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम् ॥**

**इदं तर्हि प्रयोजनम्—**

( प्रदीपः ) विभाषा मा भूदिति । द्वे अत्र विभाषे संभवतः । एका महाविभाषा, अपरा—'विभाषा विवधात्' इति । तत्रान्तरेणापि नित्यग्रहणं पूर्वसूत्र एवानन्तरस्य विभाषाग्रहणस्यास्वरितत्वादननुवृत्तत्वान्महाविभाषा नित्यग्रहणेन निवर्त्यते ॥ इतरः—'अनन्तरा विभाषा निवर्त्यते' इत्युक्तम्—इति मत्वाऽऽह—नैतदस्तीति ॥ इतरः स्वाभिप्रायं प्रकाशयति—इदं तर्हीति ॥

(उद्द्योतः) ननु 'अण् कुटिलिकायाः' इत्यत्राननुवृत्त्या 'विभाषा विवधात्' इत्यस्यास्वरितत्वादेव निवृत्तिसिद्धेर्विभाषा मा भूदित्यसंगतमत आह—द्वे अत्रेति ॥ भाष्ये—इदं तर्हीति । महाविभाषानिवृत्त्यर्थमित्यर्थः ॥

( ५५६२ नित्यग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ त्रेर्मब्नित्यवचनं विषयार्थम् ॥ * ॥**

( भाष्यम् ) **नित्यं त्र्यन्तं मब्विषयमेव यथा स्यात्, केवलस्य प्रयोगो मा भूत् ।**

**अस्ति प्रयोजनमेतत् ।**

**किं तर्हीति ?**

(उद्द्योतः) तदाह—नित्यं त्र्यन्तं मब्विषयमेवेति । नित्यपदस्यैवार्थ एवकारेण दर्शितः ॥

( ५५६३ एकदेशिप्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥ * ॥**

( भाष्यम् ) **तत्र यथाधिकारं तद्विषयता[1] प्राप्नोति । निर्वृत्त इति वर्तते, तेन निर्वृत्त एव त्र्यन्तं मब्विषयं स्यात्, येऽन्ये उपचारास्तत्र न स्यात् ।**

**कृत्रिमं महत्तु विहितमिति ॥**

( प्रदीपः ) निर्वृत्त एवेति । पक्त्रिमा निर्वृत्तमित्यस्यैव वाक्यस्य निवृत्तिः स्यात्, न तु पक्त्रिः क्रियत इत्यादेरपीत्यर्थः ॥ कृत्रिमं महदिति । प्रत्ययप्रयोगमन्तरेणापि महत्त्वादीनि कृत्रिमशब्दार्थविशेषणानि स्युरित्यर्थः ॥

( उद्द्योतः ) ननु कृत्रिमं महदिति प्रयोग इष्ट एवेत्यत आह—प्रत्ययप्रयोगमिति । कृत्रिमं महदितिवत् महती कृत्रिरित्याद्यपि प्रयुज्येतेति भाष्यार्थ इति भावः ॥

( सिद्धान्तसाधकभाष्यम् )

**एवं तर्हि भाव इति प्रकृत्य इमब्वक्तव्यः । कुट्टिमा भूमिः, सेकिमोऽसिरित्येवमर्थम् ।**

**ततो वक्तव्यम्—त्रेः,**

**—त्रेश्चेमप्[2] भवति ।**

**ततः—नित्यम्,**

**—नित्यं त्र्यन्तादिमबिति ।**

**किमर्थमिदम् ?**

**नित्यं त्र्यन्तमिमब्विषय एव यथा स्यात्, केवलस्य प्रयोगो मा भूदिति ॥**

( प्रदीपः ) भाव इति प्रकृत्येति । भाववाचिनः शब्दान्निर्वृत्तेऽर्थे इमब् विधेय इत्यर्थः ॥ त्रेरिति । पूर्वेण सिद्धे नित्यार्थं वचनम् । तेन निर्वृत्ते तावद्वाक्यं निवर्त्यते । ततो नित्यमित्यनेनोपचारान्तरविषयस्यापि वाक्यस्य निवृत्तिः क्रियत इति तद्विषयता त्रिप्रत्ययस्य सिध्यति ॥

( उद्द्योतः ) ननु भावे इमपूविधाने कुट्टिमा भूमिरित्युदाहरणासंगतिरत आह—भाववाचिन इति । कुट्टनं कुट्टस्तेन निर्वृत्तेत्यर्थः ॥ ततो नित्यमित्यनेनेति । शंखो नित्यं पांडुर इतिवत् नित्यशब्दोऽयोगव्यवच्छेदार्थः । तत्र हि न कदाप्यपाण्डुर इति प्रतीयते । एवं च योऽयं निर्वृत्ते इमप् स त्र्यन्ताद्भवत्येवेत्यर्थ इति भावः । यद्यपि केवलसूत्रेऽपि योगविभागेन तत्सामर्थ्यादयमर्थः साधयितुं शक्यते, तथापि मप्पदाकरणबोधनाय भगवता वार्तिकपूर्वकं योगविभागो दर्शित इति बोध्यम् ॥

( ८११ विधिसूत्रम् ॥ ४ । ४ । १ आ. ५ )

## १७६१ चूर्णादिनिः ॥ ४ । ४ । २३ ॥

( इनिप्रत्ययाधिकरणम् )

( सूत्रप्रत्याख्यायकभाष्यम् )

**अयं योगः शक्योऽवक्तुम् ।**

१ 'तद्विषयता' इति च. ज. पाठः ।

२ 'त्रेश्चमप्प्रत्ययो' इति च. ज. पाठः ।

३ तद्विषयतेति । मप्प्रत्ययविषयता त्रिप्रत्ययान्तस्य सिध्यतीत्यर्थः ।

कथं चूर्णी, चूर्णिनौ, चूर्णिन इति ?
इनिनैतन्मत्वर्थीयेन सिद्धम् ॥

( प्रदीपः ) इनिनेति । ठक्तु 'संसृष्टे' इत्यनेनानभिधानान्न भविष्यतीति भावः ॥

( ८१२ विधिसूत्रम् ॥ ४ । ४ । १ आ. ६ )

## १७६२ लवणाल्लुक् ॥ ४ । ४ । २४ ॥

( लुकोऽधिकरणम् )

( ५५६४ सूत्रप्रत्याख्याने वार्तिकम् ॥ १ ॥ )

॥ * ॥ लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात् ॥ * ॥

( भाष्यम् ) लवणाल्लुग्वचनमनर्थकम् ।
किं कारणम् ?
रसवाचित्वात् । रसवाच्येष लवणशब्दः, नैष संसृष्टिनिमित्तः ।
आतश्च रसवाची ॥

( प्रदीपः ) रसवाचित्वादिति । रसस्य गुणत्वाद् गुणवाचिनां शुक्लादीनां गुणगुणिनोरभेदोपचाराद् गुणिवृत्तिदर्शनाच्चार्थो लुकेत्यर्थः ॥

( उद्द्योतः ) रसस्य गुणत्वादिति । द्रव्येण द्रव्यस्यैव च संसृष्टव्यवहारादिति भावः ॥ ननु समवायादिसंसर्गस्य गुणेनापि सत्त्वात् ततोऽपि प्रत्ययः स्यादित्यत आह—अभेदेति । भेदे एव संसृष्टव्यवहारः, न हि गुणगुणिनोः स इति भावः । रूपादिवद्रसशब्दस्य गुणिसमानाधिकरणत्वाभावेऽपि शुक्लादिवल्लवणशब्दस्य तत्त्वमिति तात्पर्यम् । लवणद्रव्यसंसृष्टे लावणिक इति त्वनभिधानाद्वारणीयमिति तत्त्वम् ॥

( ५५६५ लवणशब्दस्य रसवाचकत्वबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ असंसृष्टे च दर्शनात् ॥ * ॥

( भाष्यम् ) असंसृष्टेऽपि हि लवणशब्दो वर्तते ।
तद्यथा—लवणं क्षीरम्, लवणं पानीयमिति ॥

( प्रदीपः ) असंसृष्टे चेति । लवणेन द्रव्येण यदसंसृष्टं लवणरसयुक्तं तत्रापि लवणशब्दस्य दर्शनाद् गुणशब्दत्वमेवास्येत्यर्थः ॥

( ५५६६ रसवाचकत्वबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ संसृष्टे चादर्शनात् ॥ * ॥

( भाष्यम् ) संसृष्टेऽपि च यदा नोपलभ्यते, तदाह—अलवणः सूपः, [1]अलवणा यवागूः, अलवणं शाकमिति ॥

[1] एतदुदाहरणं छ. पुस्तके नास्ति ।



( प्रदीपः ) संसृष्टे चेति । लवणद्रव्यसंसृष्टमपि यल्लवणरसं न भवति, तत्र न दृश्यते लवणशब्द इत्यर्थः ॥

( ८१३ विधिसूत्रम् ॥ ४ । ४ । १ आ. ७ )

## १७६८ प्रयच्छति गर्ह्यम् ॥ ४।४।३० ॥

( ठकोऽधिकरणम् )

( सूत्रनिर्देशाक्षेपभाष्यम् )

अयुक्तोऽयं निर्देशः, यदसावल्पं दत्वा बहु गृह्णाति तद्गर्ह्यम् ।
कथं तर्हि निर्देशः कर्तव्यः ?

( प्रदीपः ) अयुक्त इति । उत्तमर्णो यदल्पं ददाति न तत् गर्ह्यम् । यत्त्वल्पं दत्वा बहु गृह्णाति तदेव गर्ह्यमित्यर्थः ॥

(उद्द्योतः) उत्तमर्णे चायमिष्यते न च तत्र प्राप्नोति—इत्याह—उत्तमर्ण इति । एवं च न तत्र प्रत्ययार्थः । यत्र चाधमर्णे प्रत्ययार्थः, न तत्रेष्यत इति भावः ॥

( ५५६७ निर्देशसाधकवार्तिकम् ॥ १ ॥ )

॥ * ॥ प्रयच्छति गर्ह्याय ॥ * ॥

( भाष्यम् ) इति । स तर्हि तथा निर्देशः कर्तव्यः ।
न कर्तव्यः ।
तादर्थ्यात्ताच्छब्द्यं भविष्यति—गर्ह्यार्थं गर्ह्यम् ॥

( प्रदीपः ) गर्ह्यायेति । द्विगुणाय प्रयच्छति द्वैगुणिक इति चतुर्थ्यन्तात् प्रत्ययो विधेय इत्यर्थः ॥

( ५५६८ निर्देशोपपादकवार्तिकम् ॥ २ ॥ )

॥ * ॥ मेस्याल्लोपो वा ॥ * ॥

( भाष्यम् ) मेस्याच्छब्दलोपो वा द्रष्टव्यः । द्विगुणं मे स्यादिति प्रयच्छति—द्वैगुणिकः, त्रैगुणिकः ॥

( प्रदीपः ) मेस्याल्लोपो वेति । उपचारापेक्षया विकल्पार्थो वाशब्दः । द्विगुणं मे स्यादिति वाक्यात् प्रत्ययः, मेस्याच्छब्दलोपश्च ॥

( ५५६९ लक्ष्यसाधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वृद्धेर्वृधुषिभावः ॥ * ॥

(भाष्यम्) वृद्धेर्वृधुषिभावो वक्तव्यः । वार्धुषिकः ॥

( प्रदीपः ) वार्धुषिक इति । वृद्ध्यर्थं धनं प्रयच्छतीत्यर्थः ॥

( उद्द्योतः ) वृद्ध्यर्थमिति । योऽल्पवृद्धिदानमंगीकृत्य परकीयं धनं गृहीत्वा बहुवृद्धयेऽन्यस्मै यच्छति तत्रैवायमिष्यत इत्यन्ये ॥

( ८१४ विधिसूत्रम् ॥ ४ । ४ । १ आ. ८ )

## १७७९ धर्मं चरति ॥ ४ । ४ । ४१ ॥

( ठकोऽधिकरणम् )

( ५५७० पूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ अधर्माच्च ॥ * ॥

( भाष्यम् ) अधर्माच्चेति वक्तव्यम् । आधर्मिकः ॥

( प्रदीपः ) अधर्माच्चेति । तदन्तविधेः 'ग्रहणवता प्रातिपदिकेन' निषेधाद्वचनम् । 'येन विधिः' इत्यत्र 'धर्माच्चञः' इति वार्तिकमनपेक्ष्यैतदुक्तम् ॥

---

( ८१५ विधिसूत्रम् ॥ ४ । ४ । १ आ. ९ )

## १७८७ ऋतोऽञ् ॥ ४ । ४ । ४९ ॥

( अञोऽधिकरणम् )

( ५५७१ पूरकवार्तिकम् ॥ १ ॥ )

॥ * ॥ नृनराभ्यामञ्वचनम् ॥ * ॥

( भाष्यम् ) नृनराभ्यामञ्चेति वक्तव्यम् । नुर्धर्म्या-नारी । नरस्यापि-नारी ॥

( प्रदीपः ) नृनराभ्यामिति । नृशब्दस्य सूत्रेणैव सिद्धे प्रत्यये दृष्टान्तत्वेनोपादानम् । यथा नृशब्दादञ् भवति, एवं नरशब्दादपीत्यर्थः ॥

(उद्द्योतः) नरशब्दादपीति । ठञ्निवृत्त्यर्थं वचनम् । अनेनैवोभयोर्नार्यां सिद्धायां नृनरयोर्वृद्धिश्चेति गणसूत्रमनार्षम् । सर्वथाऽऽद्युदात्तत्वात् नुर्नरस्य वा तज्जातीयैव धर्म्येति जातिप्रतीतिरपि सिद्धा । नरीति तु नरस्येष्यत एव । नृशब्दाऽत्तु ङीषोऽनभिधानम्, तच्च तवाप्यावश्यकं पुंयोगेन ङीषो वारणायेत्याहुः ॥

( ५५७२ पूरकवार्तिकम् ॥ २ ॥ )

॥ * ॥ विशसितुरिड्लोपश्च ॥ * ॥

( भाष्यम् ) विशसितुरिड्लोपश्चाञ्च वक्तव्यः । विशसितुर्धर्म्यं वैशस्त्रम् ॥

( ५५७३ पूरकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ विभाजयितुर्णिलोपश्च ॥ * ॥

( भाष्यम् ) विभाजयितुर्णिलोपश्चाञ्च वक्तव्यः । विभाजयितुर्धर्म्यं—वैभाजित्रम् ॥

---

( ८१६ विधिसूत्रम् ॥ ४ । ४ । १ आ. १० )

## १७९३ शिल्पम् ॥ ४ । ४ । ५५ ॥

( ठञोऽधिकरणम् )

( अनिष्टनिवारकं भाष्यम् )

किं यस्य मृदङ्गः शिल्पं स मार्दङ्गिकः ?

किं चातः ?

कुम्भकारे प्राप्नोति ।

एवं तर्ह्युत्तरपदलोपो द्रष्टव्यः । शिल्पमिव—शिल्पम् । मृदङ्गवादनं शिल्पमस्य—मार्दङ्गिकः, मौरजिकः, पाणविकः, पैठरिकः ॥

( प्रदीपः ) अभ्यासपूर्वकं क्रियासु कौशलं शिल्पम् । मृदङ्गादिषु द्विविधा क्रिया-अभ्याहननलक्षणा, निष्पादनलक्षणा च । तत्र विशेषानुपादानात् पृच्छति— किं यस्येति ॥

एवं तर्हीति । उपचरितवृत्तिः शिल्पशब्द आश्रीयत इत्ययमेवेवशब्दलोपः । कुम्भकारस्य हि मृदङ्गो मुख्यं शिल्पं वादकस्य तूपचरितम् ॥ मृदङ्गवादनमिति । लोके तु मार्दङ्गिकशब्दस्य मृदङ्गवादनशिल्पोऽभिधेयः । तत्र साहचर्यान्मृदङ्गवादने मृदङ्गशब्दस्य वृत्तिविषये वृत्त्या गतार्थत्वादप्रयोगो वादनशब्दस्य ॥

( उद्द्योतः ) ननु लोके द्रव्यसौन्दर्यजनकक्रियाकौशले शिल्पशब्दप्रसिद्धेर्मृदङ्गवादनकौशलवति कथं प्रत्ययोऽत आह— अभ्यासेत्यादि । मुख्यगौणसाधारणमिदं लक्षणम् ॥ द्विविधेति । तत्राद्ये मुख्यम्, आद्ये औपचारिकम् । स्पष्टं चेदं भाष्ये ॥ विशेषानुपादानादिति । गौणस्यैव ग्रहणमित्यर्थबोधकविशेषानुपादानादित्यर्थः ॥

उपचरितेति । मुख्येऽनभिधानेन सामर्थ्यादुपचरितस्य ग्रहणमिति भावः ॥ उपचरितमिति । मृदङ्गवादनमिति शेषः, क्वचित्तु तथैव पाठः । तदुपचरितं शिल्पमित्यर्थः ॥ नन्वेवं मार्दङ्गवादनिक इति स्यादत आह— तत्र साहचर्यादिति ॥ वृत्तिविषये वृत्त्येति । तद्धितवृत्तिविषये लक्षणयेत्यर्थः । मृदङ्गवादनशब्दात्त्वनभिधानात्प्रत्ययाभाव इति भावः ॥

---

( ८१७ विधिसूत्रम् ॥ ४ । ४ । १ आ. ११ )

## १७९७ शक्तियष्ट्योरीकक् ॥ ४।४।५९ ॥

( ईककोऽधिकरणम् )

( सूत्रन्याससमर्थकं भाष्यम् )

किमर्थमीकगुच्यते, न कणेवोच्येत ?

का रूपसिद्धिः—शाक्तीकः, याष्टीक इति ?

शक्तियष्ट्योरीकारोऽन्ते, कशब्दश्च प्रत्ययः ॥

न सिध्यति ।

विभाषा चैव हि शक्तियष्ट्योरीकारः, अपि च "केऽणः" (७।४।१३) इति ह्रस्वत्वम् प्रसज्येत ।

एवं तर्हि—इकगुच्यते ।

का रूपसिद्धिः—शाक्तीको याष्टीक इति ।

सवर्णदीर्घत्वेन सिद्धम् ।

न सिध्यति, यस्येति लोपः प्राप्नोति ॥

इकारोच्चारणसामर्थ्यान्न भविष्यति ॥

यदि तर्हि प्राप्नुवन् विधिरिकारोच्चारणसामर्थ्याद्बाध्यते, सवर्णदीर्घत्वमपि न प्राप्नोति ।

यं विधिं प्रत्युपदेशोऽनर्थकः स विधिर्बाध्यते । यस्य तु विधेर्निमित्तमेव, नासौ बाध्यते ।

---

१ 'मौरजिकः पाणविकः'—एते उदाहरणे छ. पुस्तके न दृश्येते ॥

**यस्येति लोपं च प्रतीकारोच्चारणमनर्थकम्, सवर्णदीर्घस्य तु निमित्तमेव ॥**

( प्रदीपः ) **ईकारोऽन्त इति** । बह्वादिपाठात् । 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति वचनात् शक्तीयष्टीशब्दाभ्यां कग्भविष्यतीत्यर्थः ॥

**इकारोच्चारणसामर्थ्यादिति** । अन्यथा ककमेव विदध्यात् । न चावग्रहनिवृत्तिरिकारस्य प्रयोजनम्; यतः—न लक्षणेन पदकारा अनुवर्त्याः, पदकारैर्नाम लक्षणमनुवर्त्यम् ॥

**यं विधिमिति** । एवं च दीर्घोच्चारणं प्रत्याख्यातम्, इकका सिद्धत्वात् ।

**अन्ये** त्वाहुः—'शक्तियष्टिभ्यां ठक्' इति ठग्विधानादेव **यस्ये**ति लोपाभावः सिद्धः । 'प्रहरणम्' इत्यनेन हि ठकि सिद्धे पुनष्ठग्विधानं **यस्ये**ति लोपाभावार्थमेव । वाक्यनिवृत्तये नित्यार्थं तत्स्यादिति चेत्—तन्न, शक्तियष्टिभ्यामित्येवाधिकस्य ठकः पूर्वेण सिद्धस्य पुनर्विधानेन वाक्यनिवृत्तेरपि सिद्धत्वात् ॥

(उद्द्योतः) ननु सूत्रे ह्रस्वपाठात् कथमीकारोऽन्ते, कथं वा तदंतात्प्रत्ययोऽत आह—**बह्वादीति** । तत्र[1] हि शक्तियष्टिशब्दौ पठितौ ॥

भाष्ये—**विभाषेति** । तथा च ङीषभावे शाक्तिक इत्यापत्तिरिति भावः ॥

ननु लोपार्थैवेकारोच्चारणं स्यादत आह—**अन्यथेति** ॥ **इककेति** । न च **नञ्स्नञीकगिति** ङीप्विधायकवार्तिकेऽस्य ग्रहणार्थं दीर्घपाठः, तत्रापि ह्रस्वस्य सुपठत्वात् । 'कर्कलोहितादीकक्' 'तीयादीकक्' इत्यादेस्तु न तत्र ग्रहणम्, नञ्स्नञ्साहचर्येणास्वार्थिकस्यैव तत्र ग्रहणादिति भावः ॥

**वाक्यनिवृत्तेरपि सिद्धत्वादिति** । एवं च ठगेव वक्तुं युक्त इति भावः । वस्तुत[2]ष्ठको विकाराभावार्थत्वस्यापि संभावितत्वेनेकादेशदीर्घयोरभावापत्तिरिति चिन्त्यमिदम् ॥

( ८१८ विधिसूत्रम् ॥ ४ । ४ । १ आ. १२ )

## १७९८ अस्तिनास्तिदिष्टं मतिः ॥ ४ । ४ । ६० ॥

( ठकोऽधिकरणम् )

( सूत्रार्थोपपादकभाष्यम् )

**किं यस्यास्ति मतिः स आस्तिकः ?**
**किं चातः ?**
**चौरेऽपि प्राप्नोति ॥**

**एवं तर्हि—इतिलोपोऽत्र द्रष्टव्यः । अस्तीत्यस्य मतिः—आस्तिकः । नास्तीत्यस्य मतिः—नास्तिकः । दिष्टमित्यस्य मतिः—दैष्टिकः ॥**

( प्रदीपः ) **चौरेऽपीति** । तस्यापि मतिसद्भावात् । अचेतनश्च पदार्थो नास्तिकः स्यादिति वक्तव्यम् । न्यायस्य[3] तु प्रदर्शनाद्भाष्यकारेण प्रतिपदं नोक्तम् ॥ **अस्तीत्यस्येति** । परलोककर्तृका च सत्ता विज्ञेया । तत्रैव विषये लोके प्रयोगदर्शनात् । तेन परो लोकोऽस्तीति मतिर्यस्य स आस्तिकस्तद्विपरीतो नास्तिकः । दिष्टशब्दो दैवपर्यायः । तेन दैवपरायणो दैष्टिकः ॥

( उद्द्योतः ) इति वक्तव्यमिति । इत्यपि वक्तुं योग्यमिति भावः ॥ **न्यायस्य त्विति** । एवं चार्थतस्तदुक्तमेवेति विशिष्य नोक्तमित्यर्थः ॥ नन्वेवं घटादिकर्तृकसत्तामतिमत्यपि आस्तिक इति स्यादत आह—**परलोकेति** ॥

( ८१९ विधिसूत्रम् ॥ ४ । ४ । १ आ. १३ )

## १८०० छत्रादिभ्यो णः ॥ ४ । ४ । ६२ ॥

( णप्रत्ययाधिकरणम् )

( सूत्रार्थबोधकभाष्यम् )

**किं यस्य छत्रधारणं शीलं स च्छात्रः ?**
**किं चातः ?**
**राजपुरुषे प्राप्नोति ।**

**एवं तर्हि—उत्तरपदलोपोऽत्र द्रष्टव्यः—छत्रमिवच्छत्रम् । गुरुश्छत्रम् । गुरुणा शिष्यश्छत्रवत् छाद्यः । शिष्येण गुरुश्छत्रमिव परिपाल्यः ॥**

( प्रदीपः ) **राजपुरुष इति** । यः पुरुषो राज्ञश्छत्रं धारयति स छात्रशब्दाभिधेयः स्यादित्यर्थः ॥ **उत्तरपदलोप इति** । उत्तरपदस्य—इवशब्दस्य लोपो द्रष्टव्य इत्यर्थः । गौणी वृत्तिश्छत्रशब्दस्याश्रयणीया । तत्रैव प्रत्ययस्य दर्शनादित्युक्तं भवति ॥ **गुरुश्छत्रमिति** । अज्ञानं शिष्यस्य छादयति—निवर्तयति, यतस्तत्र छत्रं शीलमस्य, गुरुविषयं पालनं शीलमस्येत्यर्थः ॥

( उद्द्योतः ) **अज्ञानमिति** । यथा छत्रमुष्णादि निवर्तयति, एवमज्ञानं गुरुर्निवर्तयति—इति तत्सदृशत्वाद्गुरुः—छत्रम् । वृत्तौ[4] तद्विषयपालनादौ छत्रशब्दस्य वृत्तिः । तदुक्तं भाष्ये—**शिष्येण गुरुश्छत्रमिव परिपाल्य इति** । मुख्यार्थात्तु[5] प्रत्ययो नानभिधानादिति बोध्यम् ॥

---

१ तत्र हीति । शक्तियष्टिशब्दयोर्बह्वादिगणपठितत्वाद्बह्वादिभ्यश्चेति ङीषि दीर्घेकारान्तौ तौ शब्दौ । लिङ्गविशिष्टपरिभाषया च शक्तियष्ट्योरिति सूत्रे तयोर्ग्रहणमिति भावः ॥

२ वस्तुत इति । 'शक्तियष्ट्योरीकक्' इति सूत्रमपहाय 'शक्तियष्ट्योष्ठक्' इति न्यासे पूर्वेण ठकः सिद्धत्वात्पुनष्ठग्विधानसामर्थ्येनायं ठक् विकारे न भवतीति ज्ञापनेनापि ठग्विधानस्य सार्थक्यसिद्धौ ठग्विधानसामर्थ्यादिकादेशनिमित्तको यस्येति लोपो न, दीर्घश्च भवतीति ज्ञापयितुमशक्यत्वमिति भावः ॥

३ न्यायस्येति । यस्य मतिरस्तीत्यास्तिक इति कथनेनैव भगवता—अचेतनश्च पदार्थो नास्तिक इति—अर्थत उक्तमेवेति प्रतिपदं नोक्तमिति भावः ॥

४ वृत्ताविति । तद्धितादिवृत्तिघटकस्य छत्रशब्दस्य तद्विषयपालनादौ लक्षणेति भावः ॥

५ मुख्यार्थादिति । अज्ञानं गुरुर्निवर्तयतीति छत्रसदृशो गुरुश्छत्र इति गुरुरूपार्थश्छत्रशब्दस्य मुख्यः । तस्माद्गुरुरूपार्थाच्छत्रशब्दात्प्रत्ययोऽनभिधानात् । शिष्यार्थे लाक्षणिकाच्छत्रशब्दात्प्रत्यय इति भावः ॥

( ८२० विधिसूत्रम् ॥ ४ । ४ । १ आ. १४ )

## १८०३ हितं भक्षाः ॥ ४।४।६५ ॥

( ५५७४ आक्षेपवार्तिकम् ॥ १ ॥ )

**॥*॥ हितं भक्षा इति चतुर्थीनिर्देशः ॥*॥**

( भाष्यम् ) हितं भक्षा इति चतुर्थीनिर्देशः कर्तव्यः ॥

( ५५७५ आक्षेपसमर्थकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ इतरथा ह्यनिर्देशः ॥ * ॥**

(भाष्यम् ) इतरथा हि निर्देशो न भवति । हितशब्देन च योगे चतुर्थी विधीयते, सा प्राप्नोति ।

स तर्हि चतुर्थीनिर्देशः कर्तव्यः ?

न कर्तव्यः ।

एवं वक्ष्यामि—हितं भक्षास्तदस्मै । ततः—दीयते नियुक्तम् । तदस्मा इति ॥

(प्रदीपः) **इतरथा हीति** । यदि हि चतुर्थी न निर्दिश्यते तदा प्रकृताया अस्येति षष्ठ्याः सम्बन्धायोग्यत्वादिहानुपस्थानात्प्रत्ययार्थो न निर्दिष्टः स्यादित्यर्थः ॥

( उद्योतः ) **संबन्धायोग्यत्वादिति** । हितयोगे चतुर्थीविधानादिति भावः ॥ भाष्ये—**अनिर्देश इति** । अर्थानिर्देश इत्यर्थः ॥ तदेवाह—**सा प्राप्नोतीति** । चतुर्थी प्राप्नोतीति—अस्येति षष्ठ्यनुपपत्तिरित्यर्थः ॥

( ८२१ विधिसूत्रम् ॥ ४ । ४ । १ आ. १५ )

## १८१४ तद्वहति रथयुगप्रासङ्गम् ॥ ४ । ४ । ७६ ॥

( यतोऽधिकरणम् )

( ५५७६ सूत्राक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानानर्थक्यं विहितत्वात् ॥ * ॥**

( भाष्यम् ) वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्ययविधानमनर्थकम् ॥

किं कारणम् ?

विहितत्वात् । विहितोऽत्र प्रत्ययः "तस्येदम्" (४।३।१२०) इति ॥

शब्दभेदादविधानम् । शब्दभेदादविधिः स भवति—अन्यो हि शब्दो रथं वहति, अन्यो हि रथस्य वोढेति ॥

( प्रदीपः ) **शब्दभेदादिति** । षष्ठ्यन्तात्प्रत्ययो विधीयमानो द्वितीयान्ताच्च प्राप्नोतीत्यर्थः ॥

( उद्योतः ) ननु सूत्रे वहनकर्तृरूपार्थस्यैव विवक्षितत्वाद्वहति वोढेति शब्दभेदकथनमसंगतमत आह—**षष्ठ्यन्तादिति** । षष्ठीवाच्यकर्मत्वापेक्षया द्वितीयावाच्यं[1] कर्मत्वं विजातीयमित्यभिमानः ॥

( ५५७७ आक्षेपसमर्थकं वार्तिकम् ॥ २ ॥ )

**॥ * ॥ शब्दभेदादविधानमिति चेदर्थाश्रयत्वात् प्रत्ययविधानस्यार्थसामान्यात्सिद्धम् ॥ * ॥**

( भाष्यम् ) शब्दभेदादविधानमिति चेदर्थाश्रयः प्रत्ययविधिः । यं[2] एवार्थो रथं वहति, स एव रथस्य वोढेति ।

तत्रार्थसामान्यात्सिद्धम् ॥

( प्रदीपः ) **अर्थसामान्यादिति** । अर्थस्यैक्यात् षष्ठ्यन्तादेव प्रत्ययोत्पत्ताविष्टसिद्धिर्भवत्येवेत्यर्थः । ननु 'रथाद्रथाङ्गे' इति तत्रोक्तम्[3] । वोढर्यपि प्रयोगदर्शनादिष्यतामित्यदोषः ॥

( उद्योतः ) **अर्थस्यैक्यादिति** । वहतीत्यस्य क्रियाप्रधानत्वेऽपि विशेषणविशेष्यभावव्यत्यासेन कर्तृरूपार्थस्यैव सूत्रे प्रतीत्या तस्यैव तद्धितार्थत्वेन विवक्षितत्वादिति भावः । कर्मत्वयोर्वैजात्ये मानाभाव इति तत्त्वम् ॥ भाष्ये—**य एवार्थ इति** । तद्धितार्थोपदर्शकविग्रहवाक्यस्थतिङन्तस्येत्यर्थः[4] । तदुक्तम्—

**आख्यातं तद्धितार्थस्य यत्किंचिदुपदर्शकम् ।**
**गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥** इति ।

तुल्यन्यायात्कृदर्थोपदर्शकविग्रहवाक्यस्थतिङन्तेऽप्येवमेवं[5] । अत एव वृत्तिविग्रहयोः समानार्थत्वनिर्वाहः । इदमपि[6] वृत्त्यर्थोपदर्शकवाक्यविषयमेव । तेन स्वातन्त्र्येण प्रयुज्यमाने धात्वर्थप्रधानत्वमेव । एवं च तुल्यन्यायाच्चित्रगुरित्यस्यार्थोपदर्शके चित्रा गावो यस्येति वाक्येऽपि तद्व्यत्यासेन चित्रगोसंबन्धीत्येवं[7] बोधः । अत एव तत्रापि वृत्तिविग्रहयोः समानार्थत्वनिर्वाहः । एतद्बोधनायैव तत्र स इत्यस्य विग्रहवाक्ये प्रयोग इत्याहुः ॥ **तत्रोक्तमिति** । एवं च वोढरि कथं तेन सिद्धिरिति भावः ॥

---

१ द्वितीयावाच्यमित्यस्य स्थाने 'द्वितीयाबोध्यम्' इति ख. पाठः ॥

२ 'स एवार्थो' इति छ. पाठः ॥

३ तस्येदम् ४।३।१२० इति सूत्रे तदुक्तम् ॥

४ तिङन्तस्य=वहतीत्यस्य ॥

५ एवमेवेति । रथस्य वोढेति कृदन्ते विग्रहवाक्येऽस्त्यादिक्रियाया अध्याहारेऽपि विशेष्यविशेषणभावव्यत्यासेन कर्तृरूपार्थस्यैव तत्र प्रतीतिरिति भावः ॥

६ इदमपि—आख्यातं तद्धितार्थस्येति वचनमपि, क्रियाप्रधानत्वेऽपि कर्तृरूपार्थस्य प्रतीतिरित्यपि च ॥

७ इत्येव बोध इति । चित्रगुरित्यस्य चित्रगोस्वामीति बोधः । चित्रा गावो यस्य सन्तीति विवरणवाक्यस्य च—यत्सम्बन्धि चित्रगवाभिन्नकर्तृवृत्तिसत्ता इति बोधः । एवञ्च विवरणविव्रियमाणयोरर्थभेदान्न विवरणार्थत्वमस्येत्याक्षेपोऽपि परास्तः । आख्यातं तद्धितार्थस्येत्यत्र तद्धितार्थस्येत्युपलक्षणं समासस्यापि—इति समासार्थवाक्येऽपि कर्तृरूपार्थस्यैव प्रतीतिरिति भावः ॥

( सिद्धान्तभाष्यम् )

इदं तर्हि प्रयोजनम्—यो द्वौ रथौ वहति स द्विरथ्यः । यो द्वयो रथयोर्वोढा स द्विरथः । तेन सति लुग्भवति ॥

अनेन सति कस्मान्न भवति ?

प्राग्दीव्यत इत्युच्यते ॥

( प्रदीपः ) द्विरथ्य इति । 'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिः ॥

( उद्योतः ) भाष्ये—तेन सति लुगिति । अनजादित्वेऽपि यथाऽस्य लुक् तथा 'द्विगोर्लुक्' इत्यत्रोक्तम् ॥

( ८२२ विधिसूत्रम् ॥ ४ । ४ । १ आ. १६ )

## १८२० संज्ञायां जन्याः ॥ ४ । ४ । ८२ ॥

( सूत्रार्थोपपादकभाष्यम् )

किं निपात्यते ?

जनन्या जनीभावो निपात्यते यच्च प्रत्ययः ॥

( उद्योतः ) भाष्ये—जनन्या जनीभाव इति । योग्यतावशात्पुत्रजनन्यत्र जननीशब्देन गृह्यते ॥

( ५५७८ सूत्राक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् ॥ * ॥

( भाष्यम् ) जन्या इति निपातनमनर्थकम् ।

किं कारणम् ?

पञ्चमीनिर्देशात् । जनीशब्दादेषा पञ्चमी ॥

( प्रदीपः ) निपातनानर्थक्यमिति । वृत्तिकारैर्यन्निपातनमाश्रितं तदनर्थकं विधिनैवेष्टसिद्धिर्भवत्येवेत्यर्थः ॥ जनीशब्दादिति । जायतेस्यां गर्भ इति जनी वधूरुच्यते । 'जनिसहिभ्याम्' इतीण्प्रत्ययः, 'जनिवध्योश्च' इति वृद्धिप्रतिषेधः ॥

( सूत्रफलबोधकं भाष्यम् )

इदं तर्हि प्रयोजनम्—सर्वकालः प्रत्ययविधिर्यथा विज्ञायेत ।

जनीं वहन्ति जन्याः । जनीं वोढारो जन्याः । जनीमवाक्षुर्जन्या इति ॥

( प्रदीपः ) सर्वकाल इति । यद्यपि विध्यर्थत्वेऽपि संख्याकालयोरविवक्षयैतत्सिध्यति, तथापि न्यायानुसरणे प्रतिपत्तिगौरवं स्यादिति निपातनाश्रयणम् ॥

( उद्योतः ) जनीं वोढार इति । लुटि रूपम् ॥

( ८२३ विधिसूत्रम् ॥ ४ । ४ । १ आ. १७ )

## १८२१ विध्यत्यधनुषा ॥ ४ । ४ । ८३ ॥

( ५५७९ आक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ विध्यत्यकरणेन ॥ * ॥

( भाष्यम् ) विध्यत्यकरणेनेति वक्तव्यम् ॥

( उद्योतः ) अकरणेनेत्यस्य [१]करणयोगे नेत्यर्थः ॥

( ५५८० आक्षेपसमर्थकं वार्तिकम् ॥ २ ॥ )

॥ * ॥ इतरथा ह्यनिष्टप्रसङ्गः ॥ * ॥

( भाष्यम् ) अधनुषेति ह्युच्यमानेऽतिप्रसङ्गो भवति ।

इहापि प्रसज्येत—शर्कराभिर्विध्यति, कण्टकैर्विध्यतीति ।

तत्तर्हि वक्तव्यम् ?

न वक्तव्यम् ॥

( प्रदीपः ) शर्कराभिरिति । प्रधानस्यात्र सापेक्षत्वात् । वृत्तिप्रसङ्गः ॥ अनभिधानादिति । शर्कराभिः पद्य इति प्रयोगाभावादित्यर्थः । एवं चाधनुषेत्यपि न वक्तव्यम् ॥

अन्ये त्वाहुः—धनुषा करणविशेषेण करणमात्रं लक्ष्यत इति सर्वत्र करणे प्रतिषेधः प्रवर्तते ॥

( उद्योतः ) प्रधानस्यात्रेति । न चाख्याते क्रियायाः प्राधान्येऽपि तद्धिते साधनप्राधान्यादिदमयुक्तम्, कारकांशे गुणभूतक्रियाया अपि नित्यसापेक्षत्वेनादोषात् । अत एव कृतपूर्वी कटमित्यादि सिध्यति । प्रत्ययार्थत्वात्तु प्रधानस्येत्युक्तमुपाध्यायैः ।

इदं तु बोध्यम्—प्रत्ययान्तयोगे न तृतीया, तदर्थं प्रति करणत्वाभावस्य करणसंज्ञाभावस्य च 'कर्तृकर्मणोः' इति सूत्रस्थभाष्यसंमतत्वात् । विग्रहकालिककरणत्वमादाय तु करणत्वव्यवहार इति ॥

( सिद्धान्तभाष्यम् )

कस्मान्न भवति—कण्टकैर्विध्यति, शर्कराभिर्विध्यतीति ।

अनभिधानात् ॥

( ८२४ विधिसूत्रम् ॥ ४ । ४ । १ आ. १८ )

## १८२८ गृहपतिना संयुक्ते ञ्यः ॥ ४ । ४ । ९० ॥

( ञ्यप्रत्ययाधिकरणम् )

( आक्षेपभाष्यम् )

गृहपतिना संयुक्त इत्युच्यते, तत्र दक्षिणाग्नावपि प्राप्नोति । दक्षिणाग्निरपि गृहपतिना संयुज्यते ॥

[१] 'करणायोगेनेत्यर्थः' इति ङ. पाठः ॥

( प्रदीपः ) गृहपतिः—यजमानः ॥

( उद्योतः ) ननु गृहपतिः=अग्निविशेषः, तेन संयोगो गार्हपत्यस्यैवेति कथं दक्षिणाग्नौ प्राप्तिरत आह—यजमान इति । स च गार्हपत्य इव दक्षिणाग्नावपि कार्याणि करोतीति तेनापि स संयुक्त इति भावः ॥

( सिद्धान्तभाष्यम् )

एवं तर्हि—गृहपतिना संयुक्त इत्युच्यते, सर्वेश्च गृहपतिना संयुक्तः ।

तत्र प्रकर्षगतिर्विज्ञास्यते—साधीयो यो गृहपतिना संयुक्त इति ।

कश्च साधीयः ?

यस्मिन् पत्नीसंयाजाः क्रियन्ते ॥

अथ वा गृहपतिर्नाम मन्त्रः स यस्मिन्नुच्यते ॥

अथ वा संज्ञायामिति वर्तते ॥

( प्रदीपः ) यस्मिन्निति । यजमानेन पत्न्या च ये यागविशेषाः क्रियन्ते ते पत्नीसंयाजाः, ते च गार्हपत्य एव क्रियन्ते न दक्षिणाग्नौ ॥ अथ वेति । स च मन्त्रो गार्हपत्यविषय एव ॥

( उद्योतः ) प्रकर्षगतेर्मन्त्रविशेषस्य वा ग्रहणे बीजाभावादाह—भाष्ये—अथ वा संज्ञायामिति ॥

( ८२५ विधिसूत्रम् ॥ ४ । ४ । १ आ. १९ )

## १८६६ मत्वर्थे मासतन्वोः ॥ ४ । ४ । १२८ ॥

( ५५८१ पूरकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ मासतन्वोरनन्तरार्थे वा ॥ * ॥

( भाष्यम् ) मासतन्वोरनन्तरार्थे वेति वक्तव्यम् । मध्वस्मिन्नस्ति मध्वनन्तरमिति वा मधव्यः । माधवः ॥

( प्रदीपः ) अनन्तरार्थे वेति । वाशब्दः समुच्चये । मत्वर्थे मासतन्वर्थविशेषेणेऽपि प्रत्ययोऽनन्तरार्थेऽपीत्यर्थः ॥

( उद्योतः ) मासतन्वर्थविशेषणेऽपीति । सामान्यस्य विशेषं प्रति विशेषणत्वादिति भावः ॥

( ५५८२ पूरकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ लुगकारेकाररेफाश्च ॥ * ॥

( भाष्यम् ) लुगकारेकाररेफाश्च प्रत्यया वक्तव्याः । लुक्—मधुः, नभः, तपः ।

अकारः—इषः, ऊर्जः ।

इकारः—शुचिः ।

रेफश्च—शुक्रः ॥

(प्रदीपः) मधुरिति । मधु विद्यतेऽस्मिन्, नभांसि विद्यन्ते यस्मिन्, तपो विद्यतेऽस्मिन्निति यतो लुक् । नभःशब्दोऽभ्रवाची । अत्र नभः, तप इति नपुंसकत्वम्, छान्दसत्वात् ॥

इष इति । एषणम्—इट्, साऽस्मिन्नस्ति, ऊर्गस्मिन्नस्ति, शोचनं—शुक् साऽस्मिन्नस्तीति प्रत्ययाः ।

शुक्र इत्यत्रायस्मयादित्वाजश्त्वाभावः ॥

( उद्योतः ) ननु लुकि विशेष्यनिघ्नतया पुंस्त्वं स्यादत आह—नपुंसकत्वमिति ॥ वार्तिके बाहुलकात् 'र' इति समुदायनिर्देशेऽपि इफः कृतः । क्वचित्तु 'रशब्दाश्च प्रत्ययाः' इति पाठः ॥

( ८२६ विधिसूत्रम् ॥ ४ । ४ । १ आ. २० )

## १८७८ वसोः समूहे च ॥ ४।४।१४० ॥

( ५५८३ पूरकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अक्षरसमूहे छन्दस उपसंख्यानम् ॥ * ॥

( भाष्यम् ) अक्षरसमूहे छन्दस उपसंख्यानं कर्तव्यम् । ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम्, ये यजामह इति पञ्चाक्षरम्, यजेति द्व्यक्षरम्, द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरः—छन्दस्यः प्रजापतिर्यज्ञमनुविहितः ॥

(प्रदीपः) अक्षरसमूह इति । अक्षरसमूहवाचिनश्छन्दःशब्दाद्यत्प्रत्ययः ॥ ओ श्रावयेति—अक्षराणि गण्यन्ते ॥

( उद्योतः ) ननु छन्दःशब्दस्याक्षरसमूहवाचकत्वात्ततस्तत्र प्रत्ययविधानानुपपत्तिरत आह—अक्षरसमूहवाचिन इति । अक्षरसमूहे वर्तमानात्प्रातिपदिकादिति वार्तिकार्थः । प्रत्ययस्तु स्वार्थे इति भावः ॥ भाष्ये—प्रजापतिः=प्रजापतिदृष्ट इत्यर्थः ॥

( ५५८४ एकदेशिवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) छन्दसि बहुभिर्वसव्यैरुपसंख्यानं कर्तव्यम् । हस्तौ पृणस्व बहुभिर्वसव्यैः ॥

( उद्योतः ) पृणस्वेति । पृणातिः पूरणकर्मा ॥

( ५५८५ एकदेशिवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अग्निरीशे वसव्यस्य ॥ * ॥

( भाष्यम् ) अग्निरीशे वसव्यस्येत्युपसंख्यानं कर्तव्यम् ।

---

१ ननु लुगकारेकाररेफाश्चेति वार्तिके अकारान्तस्य रप्रत्ययस्य विवक्षितत्वेन रस्य केवलवर्णबोधकत्वाभावात्र तस्मात् 'रादिफः' इत्यस्य प्रवृत्तिरिति रेफाश्च' इति निर्देशोऽयुक्तस्तत्साधयन्नाह—वार्तिके इति ।

तत्तर्हि उपसंख्यानं कर्तव्यम्?

न कर्तव्यम् ॥

( ५५८६ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

॥ * ॥ स्वार्थविज्ञानात्सिद्धम् ॥ * ॥

( भाष्यम् ) स्वार्थविज्ञानात् सिद्धमेतत् । वसव एव वसव्याः पान्तु ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादोऽध्यायश्च चतुर्थः समाप्तः ॥

( प्रदीपः ) स्वार्थविज्ञानादिति । 'वसोः' इति योगविभागः कर्तव्यः । तेन स्वार्थे भविष्यतीत्यर्थः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे चतुर्थस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादोऽध्यायश्च चतुर्थः समाप्तः ॥

( उद्द्योतः ) स्वार्थे यतो विधानाभावादाह—योगविभाग इति । वस्तुतः स्वार्थिकप्रकरणे एषामुपसख्यानं कर्तव्यम्, यत्-प्रत्यय उपसंख्येयो वेति भाष्यार्थं इति पंचमे वक्ष्यते ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते चतुर्थाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादोऽध्यायश्च चतुर्थः समाप्तः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | |
|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | सर्वयोगः |
| व्याख्यातसूत्राणि | ८०६ | २० | ८२६ |
| अव्याख्यातसूत्राणि | ९३२ | १२४ | १०५६ |
| समुदितसूत्राणि | १७३८ | १४४ | १८८२ |
| वार्तिकानि | ५५५५ | ३१ | ५५८६ |

| | चतुर्थाध्यायस्थसूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्रथमपादे | द्वितीयपादे | तृतीयपादे | चतुर्थपादे | समग्रेऽध्याये |
| आह्निकानि | ४ | २ | २ | १ | ९ |
| व्याख्यातसूत्राणि | ८६ | ५७ | ४६ | २० | २०९ |
| अव्याख्यातसूत्राणि | ९० | ८८ | १२२ | १२४ | ४२४ |
| समुदितसूत्राणि | १७६ | १४५ | १६८ | १४४ | ६३३ |
| वार्तिकानि | २३४ | ११६ | ११२ | ३१ | ४९३ |

जयदेवगुरून्नत्वा तुर्यभाष्यं सुपूजितम् । प्रभापद्मैर्भार्गवेण प्रीयतां परमेश्वरः ॥

## पञ्चमाध्यायस्य प्रथमपादे प्रथममाह्निकम् ॥

( ८२७ अधिकारसूत्रम् ॥ ५ । १ । १ आ. १ )

### १८८२ प्राक् क्रीताच्छः ॥ ५।१।१ ॥

( छप्रत्ययाधिकरणम् )

( पदकृत्यभाष्यम् )

**प्राग्वचनं किमर्थम् ?**

( प्रदीपः ) **प्राग्वचनमिति** । छ इत्येवाधिकारोऽस्त्विति प्रश्नः ॥

( उद्द्योतः ) ननु प्राक्पदाऽभावे 'क्रीतात्' इत्यस्याऽपि व्यर्थत्वेन भाष्ये—'प्राग्वचनं किमर्थम्' इति तन्मात्रोल्लेखे न बीजमिति चेन्न; अवयवाक्षेपद्वाराऽवधिनिर्देशाक्षेपे एव तात्पर्यात्,-इत्याह—**इत्येवेति** ॥

( ५५८७ प्राक्पदप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्राग्वचन उक्तम् ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ?**

**तत्र तावदुक्तम्—*प्राग्वचनं सकृद्विधानार्थम्, अधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्गः* इति ।**

**इहापि प्राग्वचनं क्रियते सकृद्विधानार्थम् । सकृद्विहितः प्रत्ययो विहितो यथा स्यात्, योगे योगे तस्य ग्रहणं मा कार्षमिति ॥**

( प्रदीपः ) **प्राग्वचन उक्तमिति** । अस्मिन् प्राग्वचने यद्वक्तव्यं तदन्यत्रोक्तम् । न्यायस्य तुल्यत्वात् 'प्राग्दीव्यतोऽण्' इत्यत्र यदुक्तं तदेवेहापि द्रष्टव्यमित्यर्थः ॥ **सकृद्विधानार्थमिति** । प्राक्क्रीतायेऽर्थास्तानपेक्ष्य सकृदेवानेन तेष्वर्थेषु छस्य विधानं यथा स्यादित्यर्थः ॥

**विहितो यथा स्यादिति** । पुनःश्रुत्या प्रकर्षप्रतिपत्तिः—सुष्ठु लाघवेन विहितो यथा स्यादित्यर्थः ॥ **योगे योग इति** । असति सकृद्विधाने 'तस्मै हितम्' 'छः' इत्येवं प्रत्यर्थनिर्देशसूत्रं छो वक्तव्यस्तथा च शास्त्रगौरवप्रसङ्गः ॥

( उद्द्योतः ) ननु 'छः' इत्येव नानावाक्यत्वाऽभावात्सकृद्विधानं सिद्धमेवेत्यत आह—**प्राक्क्रीतादिति** ॥ ननु विहितो विहित इति पुनरुक्तमत आह—**पुनरिति** ॥ प्रकर्षमेव दर्शयति—**सुष्ठ्विति** ॥ नन्वधिकारत्वेऽपि कियद्दूरमधिकार इत्येतज्ज्ञानायावधिनिर्देशावश्यकत्वे किं तत्र लाघवमत आह—**छ इतीति** ॥

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम्, अधिकारादप्येतत्सिद्धम् । अधिकारः प्रतियोगं तस्यानिर्देशार्थ इति योगे योग उपतिष्ठते ॥**

( प्रदीपः ) **अधिकारादिति** । 'छः' इत्येतावदेव सूत्रमस्तु, नार्थः प्राक्क्रीतादित्यनेन । यथैव प्रत्ययादयोऽधिकारा अवधिविशेषोपादानमन्तरेणेष्टं साधयन्ति, एवमयमपि साधयिष्यतीत्यर्थः । **प्रतियोग**मित्यनेन लाघवार्थत्वमधिकारस्य दर्शयति । **'योगे योग उपतिष्ठते'** इत्यनेन त्वधिकारस्य व्यापारः प्रदर्श्यते ॥

( उद्द्योतः ) ननु 'प्रतियोग'मिति 'योगे योगे' इति च पुनरुक्तमत आह—**प्रतियोगमिति** ॥ **व्यापार इति** । उत्तरत्रोपस्थितिरूपः ॥

( समाधानवार्तिकस्मारकभाष्यम् )

***अधिकारात्सिद्धमिति चेदपवादविषये छप्रसङ्गः***

**अधिकारात् सिद्धमिति चेदपवादविषये छः प्राप्नोति । "उगवादिभ्यो यत्" [५।१।२] छश्च, इति छोऽपि प्राप्नोति ।**

**तस्मात् प्राग्वचनं कर्तव्यम् ॥**

( प्रदीपः ) **उगवादिभ्यो यत् छश्चेतीति** । नदीस्रोतोन्यायेन प्रतिसूत्रमधिकारस्योपस्थानात् उत्सर्गापवादयोः सन्निधानाविशेषात्तव्यत्तव्यानीयरामिव विकल्पः स्यादित्यर्थः ।

**केचिदाहुः**—'उगवादिभ्यो यत्' इत्ययमप्यधिकारस्ततो द्वयोरपि पारार्थ्यात्परस्परासम्बन्धादुपलक्षणमेतत् । इदं तु प्रदर्शनीयम्—'शरीरावयवाद्यच्छश्च' इति ॥

(उद्द्योतः) नन्वत्र यतैव निराकाङ्क्षत्वात् 'छः' इत्यस्याऽसम्बन्धोऽत आह—**नदीति** । एतेन 'श्रौतसम्बन्धेन निराकाङ्क्षत्वात्प्रकरणलब्धस्य कथं सम्बन्धः' इत्यपास्तम् । स्वरितत्वरूपयत्नेन तस्याऽपि सम्बन्धसम्भवादिति भावः ॥ **केचिदाहुरिति** । संज्ञापरिभाषयोः परार्थयोरपि परस्परसम्बन्धदर्शनादत्राऽपि स्यादित्यत्राऽरुचिः ॥

( प्राक्पदार्थनिरूपकभाष्यम् )

**अथ क्रियमाणेऽपि प्राग्वचने कथमिदं विज्ञा-**

---

जयदेवगुरून्नत्वा पञ्चमाध्यायवर्तिनाम् ।
भाष्यप्रदीपोद्द्योतानाम्प्रभाम्पुष्णाति भार्गवः ॥

१ तात्पर्यादिति । एवञ्च प्राग्वचनं किमर्थमिति भाष्यस्यावधिप्रदर्शनं किमर्थमित्येव तात्पर्यमिति भावः ॥

२ सकृदेवानेनेति । सूत्रे प्राक्क्रीतादित्यस्याभावे छप्रत्ययानुवृत्त्या प्रतिसूत्रं छविधानं स्यादिति वाक्यभेदः । प्राक्क्रीतादिति पदसत्त्वे तु प्राक्क्रीतायेऽर्थास्तेषु छप्रत्ययस्य विधानमनेनैवैकेन वाक्येन स्यादिति सकृद्विधानमिति भावः ॥

३ पुनः श्रुत्येति । भाष्ये 'विहितः प्रत्ययो विहितः' इति विहितपदस्य पुनः श्रवणेन प्रकर्षप्रतिपत्तिर्भवतीत्यर्थः ॥

४ सुष्ठु लाघवेनेति । एकेनैव वाक्येन क्रीतपर्यन्तार्थेषु छप्रत्ययो विहितः स्यादिति भावः ॥

५ व्यापारः प्रदर्श्यत इति । सूत्रे प्राक्क्रीतादित्यस्याभावे छ इत्यंशस्य प्रतिसूत्रमुपस्थानेन वाक्यभेदेन च गौरवम्पूर्वमुक्तम् । इदानीं तु 'छः' इत्येवमधिकारे कृते एकवाक्यतयैवोत्तरत्रापि सम्बन्ध इति प्राक्क्रीतादित्यस्याभावेऽपि न गौरवमिति प्रदर्शयति ॥

६ सन्निधानाविशेषादिति । अपवादत्वज्ञानं हि वाक्यार्थबोधोत्तरमेवेति न वाक्यार्थबोधकाले तज्ज्ञानमिति बाध्यबाधकभावासम्भवाद्विकल्पः स्यादित्यर्थः ॥

७ 'परार्थयोः परस्पर' इति घ. ङ. पुस्तकयोरपिशब्दरहितः पाठः ॥

**यते—प्राक् क्रीताद्याः प्रकृतयः, आहोस्वित्प्राक्क्रीताद्येऽर्था इति ।**

**किं चातः?**

**यदि विज्ञायते—प्राक्क्रीताद्याः प्रकृतय इति, स एव दोषः—अपवादविषये छप्रसङ्ग इति ।**

**अथ विज्ञायते प्राक् क्रीताद्येऽर्था इति न दोषो भवति । समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यत् छं बाधिष्यते ॥**

**यथा न दोषस्तथाऽस्तु ।**

**प्राक् क्रीताद्येऽर्था इति विज्ञायते ।**

**कुत एतत्?**

**तथा ह्ययं प्राधान्येनार्थं प्रतिनिर्दिशति । इतरथा हि बह्वयस्तत्र प्रकृतयः पठ्यन्ते, ततो यां कांचिदेव प्रकृतिमवधित्वेनोपाददीत ।**

**अथ वा पुनरस्तु—प्राक् क्रीताद्याः प्रकृतय इति । ननु चोक्तमपवादविषयेऽपि छप्रसङ्ग इति ॥**

( प्रदीपः ) **स एव दोष इति** । 'तस्मै हितम्' इत्यादिष्वर्थनिर्देशेषु ङ्याप्प्रातिपदिकादिति सामान्यप्रकृतिरधिकारात्सन्निहिता । 'शरीरावयवाद्यत्' इत्यादौ तु विशेषप्रकृतिः । तत्र प्राक्क्रीतात् प्रकृतिभ्यो विधीयमानश्छो विशेषप्रकृतेरपि प्राप्नोतीत्यर्थः ॥

**समानेऽर्थ इति** । तस्मै हितमित्यस्मिन्नर्थे शरीरावयवाद्विधीयमानः प्रकृत्यन्तरे सावकाशं छं बाधते, तक्रमिव कौण्डिन्ये दधीत्यर्थः ॥ **तथा हीति** । यथाजातीयोऽवधिस्तथाजातीयेनावधिमता भाव्यम् । यथा मासात्पर इत्युक्ते कालः प्रतीयते, ग्रामात् पूर्व इत्युक्ते देशः, अलोऽन्त्यात्पूर्व इत्यलेव ॥ **यां कांचिदिति** । 'आ परिखायाश्छः' इत्येवं वाच्यं स्यादित्यर्थः ॥

**अथवेति** । अभ्युपगम्यवादोऽयम् । न त्वयं पक्षो युक्तः, अवधिविजातीयत्वात् । नन्वस्मिन्पक्षे छस्यार्थो न निर्दिष्टः स्यात् ततश्च स्वार्थे प्राप्नोति । नैष दोषः । 'तस्मै हितम्' इत्यादीनामर्थनिर्देशानां प्रत्ययं प्रति साकाङ्क्षत्वात् सन्निहितेन छेन निराकाङ्क्षीकरणादर्थस्य लाभात् स्वार्थे प्रत्ययाप्रसङ्गात् ॥

( उद्द्योतः ) ननु 'तस्मै हितम्' इत्यादौ सामान्यप्रकृतिविषये चरितार्थश्छो विशेषप्रकृतिभ्यस्तैस्तैर्बाध्येतेत्यत आह—**तस्मै इत्यादि** ॥ ननु 'क्रीतात्' इत्यस्य प्राग्विशेषणत्वेन कथं प्राधान्यमत आह—**यथेति** । **प्राधान्येने**त्यस्याऽवधित्वेनेत्यर्थ इति भावः[2] । स ह्यवधिमदपेक्षया प्रधानम्, तत्प्रतिपादनतात्पर्येणाऽवधिनिर्देशादिति बोध्यम् ॥ नन्वस्मिन्पक्ष इति । प्रकृतियुक्ते सूत्रेऽर्थानिर्देशादित्यभिमानः ॥

( आक्षेपनिवारकवार्तिकसारकभाष्यम् )

***न वा क्वचिद्वावचनात्***

**न वा एष दोषः ।**

**किं कारणम्?**

**क्वचिद्वावचनात् । यदयं क्वचिद्वावचनं करोति—"विभाषा हविरपूपादिभ्यः" (५।१।४) इति, तज्ज्ञापयति—नापवादविषये छो भवतीति ॥**

( प्रदीपः ) **वावचनादिति** । विकल्पवचनादित्यर्थः ॥

( उद्द्योतः ) ननु 'वावचनम्' इत्यस्य 'विभाषा हविः' इत्युदाहरणमसङ्गतमत आह—**विकल्पेति** । वाशब्दोऽर्थपर इति भावः ॥

( आक्षेपभाष्यम् )

**यद्येवम्, नार्थः प्राग्वचनेन, अधिकारात्सिद्धम् ।**

**ननु चोक्तमधिकारात्सिद्धमिति चेदपवादविषये छप्रसङ्ग इति ।**

**परिहृतमेतत्—'न वा क्वचिद्वावचनात्' इति ।**

( सिद्धान्तभाष्यम् )

**अथ[3] किमर्थमियानवधिर्गृह्यते, न प्राक् ठञ इत्येवोच्येत । एतज्ज्ञापयत्याचार्यः—अर्थेष्वयं भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**समानेऽर्थे प्रकृतिविशेषादुत्पद्यमानो यत् छं बाधते ॥**

( प्रदीपः ) **अथेति** । ठञः परोऽर्थः प्रकृतिर्वा प्राक्क्रीतान्नास्तीति लाघवार्थम् 'प्राक्ठञः' इति वक्तव्यम् । 'प्राग्वतेष्ठञ्' इति प्रत्यासन्नष्ठञ् ग्रहीष्यत इत्यर्थः ॥ **अर्थेष्विति** । तेन ज्ञापकाश्रयणमन्तरेण न्यायेनापवादविषये छस्याप्रवृत्तिः सिध्यति । 'प्राक् ठञः' इति तूच्यमाने तुल्यजातीयस्यावधिमतोऽभावादर्थाः प्रकृतयो वाऽवधिमत्त्वेन संगृह्येरन् ॥

( उद्द्योतः ) नन्वेवं 'लोकसर्वलोक' इति ठञोऽप्यवधित्वं सम्भाव्येतेत्यत आह—**प्राग्वतेरिति** ॥ **न्यायेनेति** । न्यायश्च यच्छयोः सामान्यविशेषभाव एव ॥ **अवधिमतोऽभावादिति** । सर्वत्राऽन्वयप्रयोजकस्येत्यर्थः ॥ **प्रकृतयो वेति** । वाशब्दश्चार्थे । प्रकृतीनाञ्चाऽवधिमत्त्वे यच्छयोः समावेशः स्यात् । तद्वारणायोक्तज्ञापकाश्रयणे गौरवं स्यादिति तत्परिहाराय सूत्रकृताऽर्थोऽवधित्वेनाश्रित इति भावः । अनेन च भाष्येण 'अथवा पुनरस्तु' इत्यस्य प्रौढिवादत्वं सूचितम् ॥

———

१ 'स्तैर्भ्यस्तैर्बाध्येते' इति ख. ग. पाठः ॥

२ इति भाव इति । भाष्यस्थप्राधान्येनेति पदस्यावधित्वेनेत्यर्थ इत्याशयः ॥

३ अथेति । अस्मिन् सूत्रे सिद्धान्तस्तु—'प्राक्क्रीताच्छः' इत्येव सूत्रमावश्यकम् । क्रीतादित्यनेन तु अर्थ एवावधित्वेन निर्दिश्यते । प्रतिसूत्रमस्योपस्थाने हि प्राक्क्रीतादित्यंशो व्यर्थ एव स्यात्, छ इत्यधिकारेण प्रतिसूत्रमुपस्थानस्य सिद्धत्वात् । एवञ्च प्राक्क्रीतादित्येतत्सामर्थ्यादर्थेष्वेवास्योपस्थितिरिति यत्प्रत्ययादीनामनेन न बाधः । न वा तव्यत्तव्यानीयर्वत्समावेशोऽपि—इति ॥

( ८२८ विधिसूत्रम् ॥ ५ । १ । १ आ. २ )

## १८८४ उगवादिभ्यो यत् ॥ ५।१।२ ॥

( यतोऽधिकरणम् )

( ५५८८ पूर्वविप्रतिषेधबोधकमेकदेशिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ यञ्ञ्यावञः पूर्वविप्रतिषिद्धं सनङ्गूपानहौ प्रयोजनम् ॥ * ॥**

(भाष्यम्) यञ्ञ्यौ भवतोऽञः पूर्वविप्रतिषेधेन ।

किं प्रयोजनम् ?

सनङ्गूपानहौ प्रयोजनम् ।

यतोऽवकाशः—शङ्कव्यं दारु, पिचव्यः कार्पासः ।

अञोऽवकाशः—वार्ध्रम्, वारत्रम् ।

सनङ्गुर्नाम चर्मविकारः, तस्मादुभयं प्राप्नोति—सनङ्गव्यं चर्म ॥

ञ्यस्यावकाशः—औपानह्यं दारु ।

अञः स एव ।

उपानन्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति—औपानह्यं चर्म ॥

( प्रदीपः ) यञ्ञ्याविति । छापवादानां परविप्रतिषेधबाधनायेदम् ॥

( उद्द्योतः ) वार्ध्रे-'चर्मणोऽञ्' । औपनह्ये—'ऋषभोपानहोर्ञ्यः' । नन्वत्रञ्छाऽपवादत्वाद्वाध्यसामान्यचिन्तया यतोऽप्यपवादत्वादयुक्तो विप्रतिषेधोऽत आह—छापवादानामिति । येन नाप्राप्तिन्यायेन छापवादत्वमेव, न तु यदपवादत्वम् । 'यत्' अपि छापवाद इति अपवादविप्रतिषेध इति भावः ॥

( ५५८९ विप्रतिषेधबोधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ढञ्च ॥ * ॥**

( भाष्यम् ) ढञ्च भवत्यञः पूर्वविप्रतिषेधेन ।

ढञोऽवकाशः—छादिषेयं तृणम् ।

अञः स एव ।

छदिर्नाम चर्मविकारस्तस्मादुभयं प्राप्नोति—छादिषेयं चर्म ।

ढञ् भवति पूर्वविप्रतिषेधेन ॥

( प्रदीपः ) छदिर्नामेति । छादनं छदिस्तच्च चर्मविकारोऽपि सम्भवति ।

अत्राहुः—छदिरुपानहोः प्रतिपदं प्रत्ययविधानादयुक्तो विप्रतिषेधः । तथा चोक्तम्—'परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वम्' इति नार्थः पूर्वविप्रतिषेधेनेति चिन्त्यमेतत् ॥

( उद्द्योतः ) छादनमिति—करणे ल्युट् । छदिरित्यत्र 'इसमन्' इति ह्रस्वः । तच्च तृणविकारः । क्वचिच्चर्मविकारोऽपि ॥

अत्राहुरिति । अत्राऽरुचिबीजं निरवकाशत्वे सत्येव प्रतिपदविधित्वं बाधकत्वे प्रयोजकम्, नान्यथा—इति ॥

( ५५९० विप्रतिषेधबोधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ हविरपूपादिभ्यो विभाषाया यत् ॥ * ॥**

( भाष्यम् ) हविरपूपादिभ्यो विभाषाया यद्भवति पूर्वविप्रतिषेधेन ।

हविरपूपादिभ्यो विभाषाया अवकाशः—आमिक्ष्यम्—आमिक्षीयम् । पुरोडाश्यम्—पुरोडाशीयम् ।

यतः स एव ।

इहोभयं प्राप्नोति—चरव्यास्तण्डुलाः ।

यद्भवति पूर्वविप्रतिषेधेन ॥

( प्रदीपः ) हविरपूपादिभ्य इति । सूत्रपाठानुपूर्वीप्रदर्शनार्थमपूपादिग्रहणम् । न ह्यपूपादिषु प्रतिपदं कश्चिदुकारान्तः पठ्यते । पाठेऽपि वाऽपवादोऽसौ भवति, उत्सर्गापवादयोश्चायुक्तो विप्रतिषेधस्तस्माद्धविर्विशेषवाचिविषय एव विप्रतिषेधोऽभिमतः । गवादिगणे हविःशब्दस्य पाठात् स्वरूपग्रहणाच्च 'विभाषा हविर्' इत्यत्र हविर्विशेषवाचिग्रहणम् ॥ चरव्या इति । चर्वधिकरणं हविरुपचाराच्चरुशब्देनोच्यते ॥

( उद्द्योतः ) ननु हविर्विषयस्यैवोदाहरणादपूपादिग्रहणं व्यर्थमत आह—सूत्रपाठेति ॥ असम्भवोऽपि तद्विषये विप्रतिषेधस्येत्याह—न हीति । पाठेऽपि वेत्यभ्युपगमवादः ॥ ननु हविश्शब्दस्य ग्रहणात्कथं तत्राऽपि विप्रतिषेधप्रसक्तिरत आह—गवादीति ॥ स्वरूपेति । असञ्जातविरोधित्वन्यायेन तत्रैव स्वरूपग्रहणमिति भावः ॥ ननु चरुशब्दस्य स्थाल्यां प्रसिद्धेः कथमत्रोभयप्राप्तिरत आह—चर्वधीति ॥

( ५५९१ विप्रतिषेधबोधकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अन्नविकारेभ्यश्च ॥ * ॥**

( भाष्यम् ) अन्नविकारेभ्यश्च विभाषाया यद्भवति पूर्वविप्रतिषेधेन ।

अन्नविकारेभ्यश्च विभाषाया अवकाशः—सुर्याः, सुरीयाः ।

यतः स एव ।

इहोभयं प्राप्नोति—सक्तव्या धाना इति ।

यद्भवति पूर्वविप्रतिषेधेन ॥

( प्रदीपः ) अन्नविकारेभ्यश्चेति । अपूपादिषु 'अन्नविकारेभ्यश्च' इति पठ्यते, तद्विषयोऽयं विप्रतिषेध उच्यते ।

प्रपञ्चार्थश्चायं पाठः, 'हविरपूपादिभ्यो विभाषाया यत्' इत्युक्तत्वात्। तत्र सामर्थ्यादपूपादिग्रहणेनानिर्धारितविशेषा अन्नविकारा एव ग्रहीष्यन्ते ॥

( उद्योतः ) ननु 'हविरपूपादिभ्य'इति वार्तिकेऽपूपादिग्रहणं व्यर्थम्, अन्नविकारातिरिक्तापूपादिषूवर्णान्ताभावादत आह—तत्रेति विप्रतिषेधवार्तिके इत्यर्थः ॥ सामर्थ्यादिति । अपूपादिषु तद्भिन्नोवर्णान्तपाठाभावादिति भावः ॥ अनिर्धारितविशेषा इति । तत्स्वरूपा अन्नविकारवाचकाः शब्दा इत्यर्थः । तैस्य च क्वचित्सुरादौ चारितार्थ्याद्विप्रतिषेधसङ्गतिरिति भावः । पूर्वं 'अन्नविकारेभ्यश्च' इत्यैस्यापूर्वत्वं मत्वा अपूपादिग्रहणं सूत्रपाठानुपूर्वीप्रदर्शनार्थमुक्तम् । इह त्वस्य तत्प्रपञ्चार्थत्वमुच्यते ॥

( विप्रतिषेधानर्थक्यबोधकमेकदेशिभाष्यम् )

**स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ।**

**न वक्तव्यः । इष्टवाची परशब्दः—विप्रतिषेधे परं यदिष्टं तद्भवतीति ।**

( वार्तिकावतरणभाष्यम् )

**अयं नाभिशब्दो गवादिषु पठ्यते । तत्रैवोच्यते—नाभि नभं चेति । तत्र चोद्यते—**

( ५५९२ नाभेः प्रत्ययानुपपादकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् ॥ * ॥**

**( भाष्यम् ) नाभेर्नभभावे प्रत्ययस्यौनुपपत्तिः ।**

**किं कारणम् ?**

**प्रकृत्यभावात् ।**

**विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्, न च नाभिसंज्ञिकाया विकृतेः प्रकृतिरस्ति । यदेव हि तन्मण्डलचक्राणां मण्डलचक्रं तन्नभ्यमित्युच्यते ॥**

(प्रदीपः) **प्रकृत्यभावादिति** । यद्यपि हितार्थे नभ्यं तैलं नभ्यं लोहबन्धनमिति सिध्यति, तथापि नभ्यं चक्रमिति न सिध्यति । न हि चक्रस्य नाभिर्विकृतिरपि त्ववयवः । नापि तादर्थ्यमस्ति, अवयविनोऽवयवार्थत्वाभावादिति पर्यनुयोगः । यस्तु शरीरावयवो नाभिस्ततः परत्वाद्धितार्थे 'शरीरावयवाद्यत्' इति यता भाव्यम्—नाभ्यम् तैलमिति । गवादियता सन्नियुक्तो नभभावोऽन्यत्र यति न भवति ॥

**न चेति** । यद्यपि दारुलक्षणा प्रकृतिर्नाभेरस्ति, तथापि नभ्यशब्दवाच्यं चक्रं नाभेः प्रकृतिर्नास्तीत्यर्थः । **मण्डलचक्राणामिति**—नेयं निर्धारणे षष्ठी, सामान्यविशेषाभावात् । न हि भवति—गवां गौः सम्पन्नक्षीरतमेति । तस्मादवयवावयविभावे षष्ठी । मण्डलाकारं चक्रं येषां तानि मण्डलचक्राणि—शकटानि, तेषां मण्डलाकारं यच्चक्रं तन्नभ्यमुच्यते । तच्च नाभेः प्रकृतिर्न भवतीति तत्र प्रत्ययो न प्राप्नोतीत्यर्थः ॥

( उद्योतः ) ननु हितार्थे प्रत्ययविधानोपपत्तेः किमुच्यते प्रत्ययाऽनुपपत्तिरित्यत आह—**यद्यपीत्यादि** । तैलं स्नेहनत्वात्, लोहबन्धनमशैथिल्यकारकत्वात्, नाभये हितमिति बोध्यम् ॥ **अवयव इति** । छिद्रवत्प्रदेशरूप इत्यर्थः । यच्छिद्राऽनुप्रविष्टः काष्ठविशेषोऽक्ष इत्युच्यते ॥ **अवयवार्थत्वाऽभावादिति** । आरम्भकत्वेनावयवानामेवावयव्यर्थत्वादिति भावः ॥ नन्वेवं 'नाभ्यं तैलम्' इति न सिध्येदत आह—**यस्त्विति** ॥ 'मण्डलचक्राणां मण्डलचक्रम्' इत्यत्रान्वयानुपपत्तिं परिहरति—**नेयमित्यादिना** ॥ **सामान्यविशेषाभावादिति ।** तत्त्वाभावादित्यर्थः । क्वचित्तु 'सामान्ये विशेषाभावात्' इति पाठः । तत्राऽयमर्थः—सामान्यबोधके विशेषबोधकत्वाऽभावादित्यर्थः । 'सामान्यविशेषभावाभावात्' इति क्वचित्पाठः ॥

( ५५९३ रूपसाधकं वार्तिकम् ॥ ६ ॥ )

**॥ * ॥ सिद्धं तु शाखादिषु वचनात् ह्रस्वत्वं च ॥ * ॥**

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम् ?**

**शाखादिषु नाभिशब्दः पठितव्यः, ह्रस्वत्वं च वक्तव्यम् । नाभिरिव—नभ्यमिति ।**

**कः पुनरिहोपमार्थः ?**

**यत्तदक्षधारणं परिवर्तनं वा ॥**

---

१ पाठ इति । हविरपूपादिभ्यो या विभाषा ततो यद्विप्रतिषेधेन इत्येतदर्थकवार्तिकेन पूर्वविप्रतिषेधस्योक्तत्वादपूपादिगणपठितगणसूत्रस्य 'अन्नविकारेभ्यश्च' इत्यस्य वार्तिके पूर्वविप्रतिषेधार्थम्पुनः पाठः प्रपञ्चार्थ इति भावः ॥

२ तस्य च—'अन्नविकारेभ्यश्च' इति गणसूत्रस्य च ॥

३ ननु सूत्रपाठानुपूर्वीप्रदर्शनार्थमपूपादिग्रहणन्न तु प्रयोजनमपूपादिग्रहणस्यास्तीति 'हविरपूपादिभ्यो' इति वार्तिके उक्तम्, अत्र तु अपूपादिग्रहणस्य फलमुच्यते—इति विरोधस्तत्परिहारायाह—**पूर्वमित्यादि** ॥

४ अस्य—अन्नविकारेभ्यश्चेत्यस्य । तत्प्रपञ्चार्थत्वम्—अपूपादिप्रपञ्चार्थत्वम् । एवञ्चास्य प्रपञ्चार्थमुक्तवतो मतेन अपूपादिग्रहणस्य फलवत्त्वमुपपादितम्भवतीति पूर्वोक्तेन विरोध इति भावः ॥

५ 'प्रत्ययविधानानुपपत्तिः' इति झ. पाठः ॥

६ प्रत्ययानुपपत्तौ हेतुमाह—**विकृतेः प्रकृताविति** । विकृतिवाचकाच्छब्दात्प्रकृतौ वाच्यायां यत्प्रत्ययेन भाव्यम् । यत्प्रत्ययान्तस्य नभ्यशब्दस्य च चक्रं वाच्यत्वेन प्रसिद्धम् । न च तत् नाभिरूपाया विकृतेः प्रकृतिरिति प्रत्ययानुपपत्तिरिति भावः ॥

७ नभ्यं तैलम्, नभ्यं लोहबन्धनमित्यत्र तैललोहबन्धनयोर्नाभेर्हितत्वम्बोधयति—**तैलमित्यादिना** ॥

८ **यच्छिद्रानुप्रविष्ट इति** । चक्रस्य यस्मिन् छिद्रेऽनुप्रविष्टः काष्ठदण्डोऽक्ष इति संज्ञां लभते तादृशच्छिद्रवत्प्रदेशो नाभिसंज्ञकश्चक्रस्यावयव इत्यर्थः ॥

९ ननु मण्डलचक्राणां मण्डलचक्रमित्यत्र निर्धारणषष्ठ्यभावे सामान्यविशेषाभावरूपहेतुकथनमयुक्तम् । 'यतश्च निर्धारणे' इत्यनेन हि यतः स्वघटितसमुदायात्स्वेतरसमुदायघटकव्यावृत्तधर्मकरणकं पृथक्करणन्तद्वाचकात् षष्ठी विधीयते, सामान्यविशेषेऽपि हि धर्मकरणकपृथक्करणाभावे षष्ठी न भवति—इति नायं हेतुर्निर्धारणषष्ठ्यभावे । अतः षष्ठ्यभावे हेतुम्प्रतिपादयति—**तत्त्वाभावादित्यर्थ इति** । *विशेषत्वरूपधर्मकरणकपृथक्करणासम्भवादित्यर्थः* ॥

अपर आह—यत्तदञ्जनोपाञ्जनमिति ।

(प्रदीपः) **कः पुनरिति** । अवयवावयविनोः सादृश्याभावादिति **प्रश्नः** ॥ इतरः क्रियाद्वारकं सादृश्यं प्रतिपादयति—**यत्तदिति** । छिद्रवान् रथाङ्गविशेषो नाभिशब्दवाच्यः, स यथाऽक्षाख्यं काष्ठविशेषं धारयति परिवर्तते च, एवं चक्रमपि, इति तत्सादृश्यान्नभ्यशब्देनाभिधास्यत इत्यर्थः ॥ **अञ्जनोपाञ्जनमिति** । **अञ्जनम्**—तैलाभ्यङ्गः । **उपाञ्जनम्**—समीपाभ्यङ्गः ॥

(उद्योतः) भाष्ये—**सिद्धं तु शाखादिष्विति** । 'शाखादिभ्यो यः' इति पाठस्त्वसाम्प्रदायिक इति भावः ॥ **सादृश्याभावादिति** । संस्थानकृतसादृश्याभावादित्यर्थः ॥ **रथाङ्गविशेष इति** । **रथाङ्गस्य**—चक्रस्य **विशेषः**—अवयवविशेष इत्यर्थः ॥ **एवं चक्रमिति** । अवयविनो धारणाद्यभावेऽवयवस्यापि तदभावप्रसङ्ग इति भावः ॥ **समीपेति** । नाभिसमीपवर्तिदेशाभ्यङ्ग इत्यर्थः । यथा नाभेरिदम्, तथा चक्रस्यापि-इति सादृश्यमिति भावः ॥

(गवादिगणपाठप्रयोजनभाष्यम्)

**न तर्हीदानीमिदं वक्तव्यम्—नाभि नभं चेति ।**

**वक्तव्यं च ।**

**किं प्रयोजनम् ?**

**यान्येतान्यरवन्ति चक्राणि तदर्थम् । तत्र नाभिसंज्ञिकाया विकृतेः प्रकृतिरस्ति ।**

**यानि चाप्यनरवन्ति चक्राणि तदर्थमपीदं वक्तव्यम् । दृश्यते हि समुदायादवयवस्य पृथक्त्वम् ।**

**तद्यथा—वार्क्षी शाखेति ॥**

**गुणान्तरयोगाच्च विकारशब्दो दृश्यते ।**

**तद्यथा-वैभीतको यूपः, खादिरं चषालमिति ।**

**तत्रावयवात्समुदाये वृत्तिर्भविष्यति ॥**

(प्रदीपः) **यान्येतानीति** । एतच्चोपलक्षणम्, 'नभ्यो लोहबन्धः' 'नभ्योऽक्षः' इत्याद्यर्थमपि पठितव्यमेव । अरवत्सु चक्रेषु पृथग्व्यवस्थितेभ्यः काष्ठेभ्यः पृथग्भूता एव नाभ्यादयोऽवयवा उत्पद्यन्ते । तत्र नाभेः प्रकृतिः काष्ठं नभ्यं भवत्येव । अररहितं तु चक्रमेकस्मादेव काष्ठादुत्पद्यत इति पृथङ्नाभेः प्रकृतिभूतकाष्ठाभावात् प्रत्ययाप्रसङ्गादित्यर्थः ॥ **यानि चापीति** । अनराणीति वक्तव्ये चक्रजातिविशेषप्रतिपत्त्यर्थो मतुब्निर्देशः । अनराणीत्युक्ते भग्नाराण्यपि चक्राणि प्रतीयेरन्, तस्मादरवत्पर्युदासेनानुपजातारचक्रप्रतीतिरनरवन्तीत्यनेन भवति ॥ ननु यथा वृक्षा एव बहवो वनं न तु तद्व्यतिरिक्तम् । एवं नाभ्यादय एव चक्रम्, तत्र भेदनिबन्धनो नाभिचक्रयोः प्रकृतिविकारभावो न स्यादित्याशङ्क्य भेदं तावदवयवावयविनोः साधयति—**दृश्यत इति** । भेदेनापि व्यवहारोऽवयवावयविनोर्दृश्यते, न केवलमभेदेनैवेत्यर्थः ॥

ननु प्रकृत्युच्छेदे विकारस्य दर्शनम्, यथा-काष्ठोच्छेदे भस्मनः । न चेह चक्रोच्छेदे नाभिदर्शनमित्याशङ्क्याह—**गुणान्तरयोगादिति** । तत्रावयवो यश्चक्रस्य नाभिसंज्ञकः सोऽञ्जनादिगुणयुक्तनाभिसञ्ज्ञावयवप्रकृतिः, तद्द्वारेण चक्रमपि प्रकृतिः । दृश्यते ह्यवयवनिबन्धनो व्यपदेशः समुदाये, पटो दग्ध इत्यादौ । तत्र बुद्धिपरिगृहीतभाविविकारापेक्षालब्धप्रकृतिव्यपदेशनाभिलक्षणावयवद्वारकश्चक्रस्य नभ्यव्यपदेशः ॥

(उद्योतः) अरवत्सु को विशेषोऽत आह—**अरवत्स्विति** ॥ **पृथग्व्यवस्थितेभ्य इति** । अरनिर्माणसौकर्यार्थमिति भावः ॥ **तत्र नाभेरिति** । तत्प्रकृतिभूतकाष्ठस्य पृथग्भावादित्यर्थः । विकारद्वारा तद्योगाच्च चक्रमपि नभ्यमिति भावः ॥ ननु वृत्तिद्वयकल्पनागौरवेण बहुव्रीहिणा 'अनराणि' इत्येव युक्तमत आह—**चक्रजातीति** ॥ अनरचक्रार्थत्वमुपपादयति—भाष्ये—**दृश्यते हीति** ॥ **समुदायादिति** । अपृथगुत्पन्नादपीत्यर्थः ॥ ननु गुणान्तरयोगाद्विकृतित्वेऽपि चक्रस्य नाभिः कथं विकृतिरत आह—भाष्ये—**तत्रावयवादिति** ॥ तद्व्याचष्टे—**तत्रेति** ॥ **सोऽञ्जनादीति** । अञ्जनादिगुणयुक्तनाभिसंज्ञकस्य स्वात्मकाऽवयवस्य तद्रहितः स्वयं प्रकृतिरित्यर्थः ॥ नन्वेवमवयवस्य नाभेर्नभ्यत्वेऽपि अवयविनि चक्रे कथं तद्व्यपदेशोऽत आह—**दृश्यते हीति** ॥ **भाविविकारः**—अञ्जनादिगुणयोगस्तदपेक्षया लब्धः प्रकृतिव्यपदेशो येनेदृशनाभिलक्षणावयवद्वारेणेत्यर्थः ॥

(वृक्षे नभ्यशब्दोपपादकवार्तिकावतरणभाष्यम्)

**अथ यो नभ्यार्थो वृक्षः कथं तत्र भवितव्यम्—नभ्यो वृक्षः, नभ्या शिंशपेति ?**

(५५९४ एकदेशिसमाधानवार्तिकम् ॥ ७ ॥)

**॥ * ॥ नभ्यात्तु लुग्वचनम् ॥ * ॥**

(भाष्यम्) **नभ्यात्तु लुग्वक्तव्यः ।**

**स तर्हि लुग्वक्तव्यः ।**

(सिद्धान्तभाष्यम्)

**न वक्तव्यः । तादर्थ्यात्ताच्छब्द्यं भविष्यति । नभ्यार्थो नभ्य इति ॥**

(प्रदीपः) **तादर्थ्यादिति** । अनेनैव न्यायेन चरव्यतण्डुलार्था व्रीहयोऽपि चरव्याः । अङ्गारीयकाष्ठार्थो वृक्षोऽप्यङ्गारीय एवेति प्रकृतौ छो न भवतीति वेदितव्यम् ॥

१ ननु काष्ठविकारस्वरूपं सादृश्यं नाभिचक्रयोरस्त्येवेत्यत आह—संस्थानेति ॥

२ 'संज्ञाया' इति क. ज. पाठः ॥

३ 'तत्र नाभिप्रकृतिः काष्ठं' इति च. झ. क. पाठः ॥

४ 'प्रसङ्गः स्यादि' इति ज. झ. पाठः ॥

५ 'यथा-पटो दग्ध' इति झ. पाठः ॥

६ 'अनरवन्ति' इत्यत्र समासवृत्तिस्तद्धितवृत्तिरिति वृत्तिद्वयम्, अनराणीत्यत्र चैक एव बहुव्रीहिः समास इति लाघवमिति भावः ॥

( उद्द्योतः ) प्रकृताविति । प्रकृतेः प्रकृताविल्यर्थः । अनभिधानादिति भावः ॥

( ८२९ विधिसूत्रम् ॥ ५ । १ । १ आ. ३ )

## १८८५ कम्बलाच्च संज्ञायाम् ॥ ५ । १ । ३ ॥

( सूत्रप्रत्याख्यानपरं भाष्यम् )

**अयं योगः शक्योऽवक्तुम् ।**
**कथमशीतिशतं कम्बल्यमिति ?**
**निपातनादेतत्सिद्धम् ।**
**किं निपातनम् ?**
**"अपरिमाणविस्ताचितकम्बल्येभ्यो न तद्धितलुकि" ( ४।१।२२ ) इति ।**
**इदं तर्हि प्रयोजनम्—संज्ञायामिति वक्ष्यामीति ।**
**इह मा भूत्—कम्बलीया ऊर्णाः ।**
**एतदपि नास्ति प्रयोजनम् । परिमाणपर्युदासेन पर्युदासे प्राप्ते तत्र कम्बल्यग्रहणं क्रियते—परिमाणार्थम्, परिमाणं च संज्ञैव ॥**

( प्रदीपः ) **निपातनादिति** । अन्तस्वरितपाठाच्च यदन्तत्वं विज्ञायते ॥

**परिमाणपर्युदासेनेति** । अपरिमाणान्ताद् द्विगोस्तद्धितलुकि पञ्चाश्वेत्यादौ ङीपि प्रतिषिद्धे कम्बल्यग्रहणं तत्र परिमाणार्थमेवेत्यर्थः ॥ **परिमाणं च सञ्ज्ञैवेति** । सञ्ज्ञायत इति संज्ञा ॥

( उद्द्योतः ) ननु तेन कम्बल्यशब्दसाधुत्वबोधनेऽपि स्वरार्थं यद्विधिरत आह—**अन्तेति** । 'लोके वेदे च' इति शेषः ॥ ननु परिमाणमर्थः, सञ्ज्ञा तु शब्दः—इति कथं तयोः सामानाधिकरण्यमत आह—**सञ्ज्ञायत इति** । परिमाणं रूढ्या कम्बल्यशब्देन गम्यत इत्यर्थः ॥

( ८३० विधिसूत्रम् ॥ ५ । १ । १ आ. ४ )

## १८८६ विभाषा हविरपूपादिभ्यः ॥ ५ । १ । ४ ॥

( अप्राप्तविभाषानिश्चायकं भाष्यम् )

**किमियं प्राप्ते विभाषा, आहोस्विदप्राप्ते ।**
**कथं च प्राप्ते ? कथं वाऽप्राप्ते ?**
**ऊर्णान्तादिति वा नित्ये प्राप्ते, अन्यत्र वाऽप्राप्ते ॥**

( प्रदीपः ) **किमियमिति** । यद्यपि 'हविरपूपादिभ्यो विभाषाया यत्' इति पूर्वविप्रतिषेधप्रदर्शनादप्राप्तविभाषात्वमिहावगतम्, तथापि शिष्याणां सुखावबोधनायोपन्यासः ॥

( ५५९५ सिद्धान्तवार्तिकम् ॥ १ ॥ )

**॥ * ॥ हविरपूपादिभ्योऽप्राप्ते ॥ * ॥**

( भाष्यम् ) **हविरपूपादिभ्योऽप्राप्ते विभाषा, प्राप्ते नित्यो विधिः । चरव्यास्तण्डुलाः ॥**

( ८३१ विधिसूत्रम् ॥ ५ । १ । १ आ. ५ )

## १८८८ शरीरावयवाद्यत् ॥ ५ । १ । ६ ॥

( ५५९६ संग्राहकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ यत्प्रकरणे रथाच्च ॥ * ॥**

( भाष्यम् ) **यत्प्रकरणे रथाच्चोपसंख्यानं कर्तव्यम् । रथाय हिता—रथ्या ॥**

( प्रदीपः ) **रथायेति** । हितार्थ एव रथात् यत् यथा स्यादर्थान्तरे मा भूदित्येवमर्थम् 'उगवादिभ्यो यत्' इत्यत्रोपसंख्यानं न कृतम् । **केचित्**–'रथसीताहलेभ्यो यद्विधौ' इति तदन्तविधिमिच्छन्ति । **अन्ये तु**–हलसीताशब्दयोः साहचर्यात् चतुर्थाध्यायविहित एव यति तदन्तविधिः, न त्वस्मिन्नित्याहुः[1] ॥

( उद्द्योतः ) **इत्याहुरिति** । अत्रारुचिस्तु[2]–असमासग्रहणज्ञापकसिद्धतदन्तविधेः 'कृष्णतिल्यम्' 'राजमाष्यम्' इत्यादाविवेहापि दुर्वारत्वमिति ॥

( ८३२ विधिसूत्रम् ॥ ५ । १ । १ आ. ६ )

## १८८९ खलयवमाषतिलवृषब्रह्मणश्च ॥ ५ । १ । ७ ॥

( अनिष्टरूपनिवारकं भाष्यम् )

**वृषशब्दोऽयमकारान्तो गृह्यते ।**

---

१ न त्वस्मिन्नित्याहुरिति । रथसीताहलेभ्यो यद्विधाविल्येतद्यन्विधिरिति सूत्रस्थं वार्तिकम् । तद्वहतिरथयुगेत्यनेन रथशब्दाद्यत्, नौवयोधर्मेत्यनेन सीताशब्दाद्यत्, मतजनहलादित्यनेन च हलशब्दाद्यत् । परमरथ्यः, परमसीत्यम्, परमहल्या–एतानि दन्तविधेः प्रयोजनानि । अत्र सीताहलशब्दाभ्यां विहितस्य यतश्चतुर्थाध्यायस्थत्वेन तत्साहचर्याच्चतुर्थाध्यायस्थे यद्विधावेव तदन्तविधिरिति अन्येषां मतम् । एवञ्च हितार्थे यत्प्रत्ययो रथान्तान्न भवतीति तदभिप्रायः ॥

२ अत्रारुचिरित्यिति । सीताहलशब्दसाहचर्यात्तदन्तविधिश्चतुर्थाध्यायस्थे यद्विधावेवेत्याश्रयणे अस्मिन् पञ्चमाध्यायस्थयत्प्रकरणे असमासे निष्कादिभ्य इत्येतत्सूत्रस्थासमासग्रहणेन ज्ञापितः परिमाणान्तस्यासंज्ञाशाणयोरित्यत्र परिमाणान्तग्रहणेन निर्दिष्टावधिकस्तदन्तविधिरत्र दुर्निवार इति साहचर्याश्रयणं न युक्तमिति भावः ॥

वृषन्शब्दोऽपि नकारान्तोऽस्ति तस्योपसंख्यानं कर्तव्यम्, वृषशब्दश्चादेशो वक्तव्यः । वृष्णे हितमिति विगृह्य-वृष्यमित्येव यथा स्यात् ।

तथा ब्रह्मन्शब्दो नकारान्तो गृह्यते ।

ब्राह्मणशब्दश्चाकारान्तोऽप्यस्ति तस्योपसंख्यानं कर्तव्यम्, ब्रह्मन्शब्दश्चादेशो वक्तव्यः । ब्राह्मणेभ्यो हितमिति विगृह्य-ब्रह्मण्यमित्येव यथा स्यात् ।

तत्तर्हि वक्तव्यम् ।

न वक्तव्यम् । समानार्थावेतौ—वृषशब्दो वृषन्शब्दश्च, ब्रह्मन्शब्दो ब्राह्मणशब्दश्च । आतश्च समानार्थौ, एवं ह्याह—कुतो नु चरसि ब्रह्मन् कुतो नु चरसि ब्राह्मण-इति ।

तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः, अपरस्मादुत्पत्तिर्भविष्यति-अविरविकन्यायेन ।

तद्यथा—अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति—आविकमिति ।

एवमिहापि वृषाय हितमिति विगृह्य-वृष्यमिति भविष्यति । वृष्णे हितमिति विगृह्य वाक्यमेव ।

तथा ब्रह्मणे हितमिति विगृह्य ब्रह्मण्यमिति भविष्यति, ब्राह्मणेभ्यो हितमिति-विगृह्य वाक्यमेव भविष्यति ।

त्रैशब्द्यं चेह साध्यम्, तच्चैवं सति सिद्धं भवति॥

( प्रदीपः ) वृषशब्दोऽयमिति । न तु कृतनलोपोऽकारान्तः, अन्यथाऽसंदेहायाकृतनलोपो निर्दिश्येतेति भावः ॥

वृषन्शब्द इति । उच्चारणादेव नान्तत्वे ज्ञाते नकारान्त इति वचनं स्वरूपनिरूपणार्थम् ॥ तस्येति । अन्यथा ततश्छः प्रसज्येत ॥ वृषशब्दश्चादेश इति । अन्यथा 'ये चाभावकर्मणोः' इति प्रकृतिभावाद्वृषण्यमिति स्यात् ॥

कुतो नु चरसीति-ब्रह्मन्शब्दस्यानेकार्थत्वाद् ब्राह्मणशब्दपर्यायत्वं नातिप्रसिद्धमिति व्युत्पादयति ॥ एकेन विग्रह इति । एकेन विग्रह एवेत्यर्थः । विग्रहस्तु द्वाभ्यामपि भवतीति नासौ नियम्यते ॥

विगृह्येति—भिन्नकर्तृकत्वात् क्त्वाऽनुपपत्तिः । नैष दोषः । उत्पत्तिशब्देनोत्पादनमुच्यते, अन्तर्भावितण्यर्थत्वात् पदेः । 'परावरयोगे च' इति वा क्त्वाप्रत्ययः । वृषन्ब्राह्मणशब्दाभ्यामनभिधानाच्छप्रत्ययो न भवतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—अकारान्त इति । अत एव वृष्यमिति सिध्यति ॥ अन्यथेति । 'आत्मन्विश्वजन' इतिवत् । किञ्च नान्तग्रहणे तस्य वृषादेशवचनम्, वृषस्य वृषीयमिति स्यादिति ततो यद्वचनञ्चावश्यकमेव ॥ स्वरूपनिरूपणं—स्वरूपस्य साक्षाच्छब्देन बोधनम् ॥ ननु ब्रह्मन्शब्दस्य ब्राह्मणपर्यायत्वे इव वृषस्य वृषन्पर्यायत्वे कुतो युक्तिर्न दर्शितेत्यत आह—ब्रह्मन्शब्दस्येति । अनेकाऽर्थत्वञ्च—कमलासनादावपि वृत्तेः । वृषन्-वृषयोस्तु नान्यतरस्याप्यनेकार्थत्वमिति भावः ॥ नाऽसौ नियम्यत इति । एकेनैव विग्रह इत्येव मित्यर्थः । तथा च सति त्रैशब्द्यासिद्धिर्न स्यादिति भावः ॥ भिन्नेति । विग्रहे प्रयोक्ता कर्त्ता, भवने उत्पत्तिः, उत्पत्तौ च प्रत्ययः कर्तेति भावः ॥ एवमपि 'वृष्णे हितमिति विगृह्य वाक्यमेव' इत्यनुपपन्नमेवात आह—परावरेति । कालकृतोऽत्र परावरयोगः, विग्रहज्ञानोत्तरकालिकत्वात्प्रत्ययतदभावज्ञानस्य । इदमपि—'अतिबाललोकदृष्ट्या' इति बोध्यम् ॥

( ८३३ विधिसूत्रम् ॥ ५ । १ । १ आ. ७ )

## १८९१ आत्मन्विश्वजनभोगोत्तरपदात्खः ॥ ५ । १ । ९ ॥

( साधिकरणम् )

( ५५९७ भोगोत्तरपदात्खविधाने पूर्वपक्षे आक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् ॥ * ॥

( भाष्यम् ) भोगोत्तरपदात्खविधानेऽनिर्देशः । अगमको निर्देशोऽनिर्देशः ।

---

१ 'वृषशब्दश्चास्यादेशः । वृषशब्दोऽस्या' इत्येवं पाठः क. पुस्तके । अत्र केचित् 'वृषन्शब्दस्योपसंख्यानं वृषशब्दादेशश्च' 'ब्राह्मणशब्दस्योपसंख्यानं ब्रह्मन्शब्दादेशश्च' इति द्वे वार्तिके इति वदन्ति, तन्न । तत्तर्हि वक्तव्यं न वक्तव्यमित्यादिशब्दैरेव भाष्यकृताऽस्यार्थस्य प्रत्याख्यानान्नेयं वार्तिककारोक्तिरिति प्रतीयते । ईदृशशब्दैर्यत्र प्रत्याख्यानं तत्र वार्तिककृतो वचनमिति भाष्यकारशैली प्रतीयते । तादृशपाठोऽपि (वार्तिकरूपेण) नोपलभ्यत इति वार्तिकाभिमानिभिरेवोक्तम् । भाष्यकृत्तु तत्तर्हि वक्तव्यं न वक्तव्यमित्यादिशब्दैरेव प्रत्याचष्टे इत्यभियुक्तैरपि तथैवोक्तत्वात् ॥

२ ननु सूत्रे वृषशब्दो लुप्तनकारोऽपि सम्भवति तर्हि कथमुच्यते—वृषशब्दोऽयमकारान्त इत्यादि—इत्याशङ्कावारणायाह—न तु कृतेति । सन्देहस्थलेऽसन्दिग्धोच्चारणमेवाचार्याणां व्यवहार इत्यस्माद्भाष्यात्प्रतीयते ॥

३ अन्यथा=अस्मिन्सूत्रे नान्तवृषन्शब्दाग्रहणे नान्तशब्दात्सामान्यविहितश्छः प्रसज्येतेति भावः ॥

४ अन्यथा=नान्तशब्दाद्यति वृषादेशकरणाभावे ॥

५ एकेनेति । एकेन विग्रह एवेत्युक्ते एकेन विग्रहः, अन्येन विग्रहः प्रत्ययश्चेति प्रतीयते, यत एवकारस्ततोऽन्यत्र नियम इति न्यायात् । अत्र विग्रहशब्दोत्तरमेवकारकरणेन एकस्य शब्दस्य नियमः । एकेनैव विग्रह इत्युच्यमाने विग्रहस्य नियमः, विग्रह एकेन शब्देन भवति, अन्येन च न विग्रह इति ॥

६ उत्पादनमुच्यत इति । केवलाया उत्पत्तेः प्रत्ययः कर्ता, अन्तर्भावितण्यर्थस्योत्पादनस्य च प्रयोक्ता कर्तेति समानकर्तृकत्वात्क्त्वाप्रत्ययः सुलभ इति उत्पत्तिशब्दस्योत्पादनार्थपर्यन्तमनुधावनम् ॥

७ उत्पत्तिरिति । कर्त्री—इति शेषः । अवेर्मांसमिति विगृह्याविकशब्दादुत्पत्तिर्भवतीति भाष्यवाक्ये उत्पत्तिः कर्त्री—इति भावः ॥

८ एवमपीति । अवेर्मांसमिति विगृह्येति वाक्ये अन्तर्भावितण्यर्थादियुक्त्या क्त्वाप्रत्ययसाधनेऽपि वृष्णे हितमिति विगृह्य वाक्यमेवेत्यत्र पूर्वोक्तयुक्तेरनुपयोगाद्युक्त्यन्तरमाहेत्यर्थः ॥

किं कारणम्?

पूर्वपदार्थहितत्वात्। उत्तरपदार्थप्रधानस्तत्पुरुषः पूर्वपदार्थप्रधाने च प्रत्यय इष्यते । पितृभोगाय हिते प्राप्नोति, पित्रे चैव हित इष्यते ।

एवं तर्हि भोगीनरप्रत्ययो विधास्यते ॥

(प्रदीपः) अनिर्देश इति । योऽयं हितमिति प्रत्ययार्थनिर्देशः स भोगोत्तरपदात्खविधाने विवक्षितार्थप्रत्यायनासामर्थ्यादनिर्देशः, तत्कार्याकरणात् । तथाहि—लोके पितृभोगीनादिशब्दैः पित्रादिहितस्यार्थस्य प्रतिपत्तिः । पित्रादिभोगहितस्य तु प्रतिपत्तिप्रसङ्गः ॥

(उद्द्योतः) कस्य निर्देशस्याऽगमकत्वमत आह—योऽयमिति ॥ विवक्षितार्थेति । पितृभोगीनशब्दाद्विवक्षितार्थेत्यर्थः ॥ तत्कार्येति । निर्देशकार्येत्यर्थः । प्रत्ययार्थनिर्देशकार्यं च प्रयोगतस्तदर्थप्रतीतिः ॥ भाष्ये—पूर्वपदार्थप्रधाने इति । पूर्वपदार्थनिरूपितप्राधान्यवति हितरूपेऽर्थे प्रत्यय इष्यते । 'लोके' इति शेषः ॥ तदेव व्युत्पादयति—पितृभोगायेत्यादिना ॥

(५५९८ न्यासान्तरविधाने दोषवार्तिकम् ॥ २ ॥)

॥ * ॥ भोगीनरिति चेद्वावचनम् ॥ * ॥

(भाष्यम्) भोगीनरिति यदि प्रत्ययो विधीयते वावचनं कर्तव्यम्, मात्रीयः पित्रीय इत्यपि यथा स्यादिति ॥

(प्रदीपः) वावचनमिति । अन्यथा भोगीनराच्छो बाध्येत । भोगोत्तरपदात् खविधाने केवलेभ्यः पित्रादिभ्यो बाधकाभावाच्छः सिध्यति ॥

(५५९९ एकदेशिवार्तिकम् ॥ ३ ॥)

॥ * ॥ राजाचार्याभ्यां नित्यम् ॥ * ॥

(भाष्यम्) राजाचार्याभ्यां नित्यमिति वक्तव्यम्। राजभोगीनः ।

आचार्यादणत्वं च । आचार्यभोगीनः ॥

किं भोगीनरप्रत्ययो विधीयत इत्यतः राजाचार्याभ्यां नित्यमिति वक्तव्यम्?

नेत्याह । सर्वथा राजाचार्याभ्यां नित्यमिति वक्तव्यम् ॥

इह च ग्रामणिभोगीनः, सेनानिभोगीन इति 'उत्तरपदे' इति ह्रस्वत्वं न प्राप्नोति ।

इह चाब्भोगीन इति "अपो भि" (७।४।४८) इति तत्वं प्राप्नोति । सूत्रं च भिद्यते ॥

(प्रदीपः) किं भोगीनरिति । प्रत्यासत्त्याश्रयेण प्रश्नः ॥ सर्वथेति । सामर्थ्यं बलवदित्युत्तरम् । ननु भोगोत्तरपदात् खविधाने, क्रियमाणेऽपि नित्यग्रहणे केवलाभ्यां राजाचार्याभ्यां छस्य निवृत्तिर्न सिध्यति । एवं तर्हि तथा पाठः कर्तव्यः, यथेष्टं सिध्यति—राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेव हिते प्रत्यय इति ॥ ग्रामणिभोगीन इति । ग्रामण्यो भोग इति षष्ठी समासः । 'इको ह्रस्वोऽङ्यो गालवस्य' इति ह्रस्वः ॥ तत्वं प्राप्नोतीति । भकारादौ प्रत्ययेऽङ्गस्य विधीयमानमिति भावः ॥

(उद्द्योतः) निवृत्तिर्न सिध्यतीति । 'नित्यम्' इत्यस्य प्रत्ययेन सम्बन्धान्महाविभाषानिवृत्तिरेव स्यादिति भावः ॥ राजेति । 'राजाचार्याभ्यां यदि हिते प्रत्ययस्तर्हि भोगोत्तरपदाभ्यामेव' इत्यर्थादिष्टसिद्धिरिति भावः । नित्यमित्यस्यैव विवरणं—भोगोत्तरपदाभ्यामेवेति ॥ भाष्ये—इह चेत्यादिना प्रत्ययान्तरविधाने दोषान्तरमाह—इह चेति । यथान्यासे यथा सिध्यति तदाह—ग्रामण्य इत्यादि ॥

(सिद्धान्तभाष्यम्)

यथान्यासमेवास्तु ।

ननु चोक्तम्—भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात्—इति ।

नैष दोषः। अयं भोगशब्दोऽस्त्येव द्रव्यपदार्थकः। तद्यथा—भोगवानयं देश इत्युच्यते यस्मिन्गावः सस्यानि च वर्तन्ते ।

अस्ति क्रियापदार्थकः । तद्यथा—भोगवानयं ब्राह्मण इत्युच्यते । यः सम्यक् स्नानादीः क्रिया अनुभवति ।

तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम् ।

यश्च पितुस्ताभ्यः क्रियाभ्यो हितः, संबन्धादसौ पित्रेऽपि हितो भवति ॥

यदि संबन्धात्, अस्तु द्रव्यपदार्थकस्यापि ग्रहणम् । योऽपि हि पितृद्रव्याय हितः, संबन्धादसौ पित्रे हितो भवति ॥

अथ वा भोगशब्दः शरीरवाच्यपि दृश्यते । तद्यथा—अहिरिव भोगैः पर्येति बाहुम् । अहिरिव शरीरैरिति गम्यते ।

---

१ 'पितृभोगीण श' इति पाठः झ. पुस्तके ॥

२ 'इको ह्रस्वोऽङ्यो गालवस्य' (६।३।६१) इत्यनेन ॥

३ सामर्थ्यमिति । एकार्थीभावरूपसामर्थ्यस्य बलवत्त्वेन राजभोगीन इत्यादौ वृत्तिरेव, न तु विग्रह इति भावः ॥

४ नित्यमित्यस्येति । राजाचार्याभ्यां नित्यमित्युच्यमानेऽपि नित्यग्रहणेन वाक्यस्य निवृत्तिः क्रियेत न तु केवलाभ्यां राजाचार्याभ्यां छप्रत्ययस्य । नित्यग्रहणेन हि भोगोत्तरपदाभ्यां राजाचार्याभ्यां नित्यम्प्रत्यय इत्येव बोधयितुं शक्यन्तेन हि वाक्यमेव निवर्तेतेति भावः ॥

५ इष्टसिद्धिरिति । केवलाभ्यां राजाचार्याभ्यां हितार्थे छप्रत्ययाभावरूपेति भावः ॥

६ ननु 'राजाचार्याभ्यां नित्यं भोगोत्तरपदाभ्यामेव हिते प्रत्ययः' इति प्रदीपे उक्तम् । तत्र हि नित्यग्रहणाभावेऽपि इष्टार्थः सिद्ध्यत्येवेति नित्यग्रहणं व्यर्थमित्याशङ्कावारणायाह—नित्यमित्यस्यैवेत्यादिना ॥

एवं पितृशरीराय हितः—पितृभोगीण इति ॥

(प्रदीपः) द्रव्यपदार्थक इति । भोगो धनमुच्यते ॥ भोगवानयं ब्राह्मण इति । धनवानपि कृपणो निर्भोग उच्यते, तस्मादत्र क्रिया भोगशब्दवाच्या ॥ संबन्धादिति । यस्तु पितृधनाय हितो नासाववश्यं पितृहितो भवति, ममैतद्धनं भविष्यतीत्येवं बुद्ध्या पितृधनरक्षणादिति भावः ॥ योऽपि हीति । यस्तु 'ममैतद्भविष्यति' इति मन्यते नासौ 'पितुरेतद्धनम्' इति रक्षति, किं तर्हि 'ममैतत्' इत्यभिमानेन ॥ अहिरिवेति । समुदाये वृत्तो भोगशब्द एकदेशेषु फणेषु प्रयुज्यते ।

केचिदाहुः—भुजङ्गाङ्गमेव भोगशब्देनोच्यते, न तु सर्वशरीरमिति । तदयुक्तम् । अनन्तत्वात् प्रयोगविषयस्यावधारणस्य कर्तुमशक्यत्वात् ॥

(उद्योतः) भोगो धनमिति । कर्मणि घञिति भावः ॥ नन्वत्रापि धनमेव भोगपदार्थोऽस्त्वत आह—धनवानपीति ॥ ननु द्रव्यपदार्थेऽप्येतत्तुल्यमत आह—यस्त्विवति ॥ मन्यते नासाविति । एवं हि पित्रादिना धनस्य विशेषणमयुक्तं स्यादिति भावः ॥ ननु भोगशब्दस्य शरीरवाचकत्वे एकदेशे फणे प्रयोगो न स्यादत आह—समुदाये इति ॥ भुजङ्गाऽङ्गमेवेति । भुजङ्गशरीरमेवेत्यर्थः ॥ न तु सर्वमिति । अत एव 'अहेश्च फणकाययोः' इति कोशः सङ्गच्छत इति भावः ॥ अनन्तत्वादिति । भाष्यप्रामाण्यात्कोशः प्रसिद्धतरार्थविषय इति भावः ॥

(५६०० उपसङ्ख्यानवार्तिकम् ॥ ४ ॥)

## ॥ * ॥ खविधाने पञ्चजनादुपसंख्यानम् ॥ * ॥

(भाष्यम्) खविधाने पञ्चजनादुपसंख्यानं कर्तव्यम् । पञ्चजनाय हितः—पञ्चजनीनः ।

समानाधिकरण[1] इति वक्तव्यम् । यो हि पञ्चानां जनाय हितः—पञ्चजनीयः स भवति ॥

(प्रदीपः) पञ्चजनादिति । मनुष्याः पञ्चजना उच्यन्ते—चत्वारो वर्णाः, रथकारपञ्चमाः ॥ पञ्चजनायेति । 'दिक्संख्ये संज्ञायाम्' इति समासः । समुदाये[2] वृत्तस्यावयवेऽपि वृत्त्या एकवचनम्, यथा—सप्तर्षिरिति ॥ यो हि पञ्चानामिति । ननु सापेक्षत्वादत्र[3] समासेन न भाव्यम् । संख्या हि संख्येयविशेषमपेक्षते । संख्येयस्यैव जनापेक्षया व्यतिरेकस्तद्द्वारेण तु संख्यायाः—गुणस्येति साक्षात् संबन्धाभावात्समासाप्रसङ्गः । नैष दोषः । प्रकरणादिवशाद्यदा विशिष्टसंख्येयवृत्तित्वावसायः संख्याशब्दानां तदा जनादिना साक्षात्संबन्धाद्भवति वृत्तिः ॥

(उद्योतः) नन्वेवं बहुवचनं स्यादत आह—समुदाये वृत्तस्येति । एवञ्चैकस्मिन् यदा वृत्तिस्तदैकवचनम् ॥ संख्या हीति । पञ्चादयः केवलसङ्ख्याबोधका इत्यभिमानः[4] ॥ व्यतिरेकः—भेदपूर्वकः सम्बन्धः । साक्षात्सम्बन्धाभावात्—सङ्ख्येयमनपेक्ष्य सम्बन्धाभावात् । अनेन सापेक्षत्वादसामर्थ्यं दृढं कृतम् । वस्तुतः सङ्ख्येयवृत्तित्वेऽपि तद्विशेषापेक्षत्वेन सापेक्षत्वं बोध्यम् । ध्वनितञ्चेदं 'सङ्ख्येयविशेषमपेक्षते' इत्युक्त्या, सिद्धान्ते 'विशिष्टसङ्ख्येयवृत्तित्वावसायः' इत्युक्त्या चेति बोध्यम् ॥

(५६०१ विधिवार्तिकम् ॥ ५ ॥)

## ॥ * ॥ सर्वजनाट्ठञ्च ॥ * ॥

(भाष्यम्) सर्वजनाट्ठञ्च वक्तव्यः, खश्च । सर्वजनाय—हितः सार्वजनिकः, सर्वजनीनः ।

समानाधिकरण इति च वक्तव्यम् । यो हि सर्वेषां जनाय हितः—सर्वजनीयः स भवति ॥

(प्रदीपः) सर्वजनायेति । सर्वो जन इति 'पूर्वकालैकसर्व' इति समासः ॥ सर्वेषां जनायेति । सर्वसाधारणाय वैश्यादिजनायेत्यर्थः ॥

(५६०२ नित्यत्वबोधकवार्तिकम् ॥ ६ ॥)

## ॥ * ॥ महाजनान्नित्यम् ॥ * ॥

(भाष्यम्) महाजनान्नित्यं ठञ्वक्तव्यः । महाजनाय हितो माहाजनिकः ।

तत्पुरुष इति वक्तव्यम्, बहुव्रीहौ मा भूदिति । महान् जनोऽस्य—महाजनः, महाजनाय हितः—महाजनीयः ।

(प्रदीपः) महाजनादिति । नित्यग्रहणं सर्वजनादुक्तः खो मा भूदित्येवमर्थम् । महाजनशब्दश्च समानाधिकरणपद आत्वनिर्देशादेवावसीयते ॥

---

१ समानाधिकरण इति । वार्तिकमेतदिति केषाञ्चिद्भ्रमः, अस्मिन्नेव सूत्रे 'आचार्यादणत्वञ्च' इत्यपि वार्तिकमिति च वदन्ति, तदपि नातीव समञ्जसम् । वररुचिकृतानां वार्तिकानां सर्वेषामपि कुण्डलना भाष्यकृद्भिः क्रियत इत्यभियुक्तानामभिप्रायः । अत्र चास्मदुपलब्धपुस्तकेषु प्राचीनेष्वपि कुण्डलनादेरदर्शनान्नैते वार्तिके इति निर्णीतमस्माभिः । यैश्च प्राचीनतमेषु पुस्तकेषु कुण्डलनादिनिमित्तं दृष्टम्, भवेत्तेषां गौडानां वार्तिकत्वेऽभिनिवेश इति सुधियो विचारयन्तु ॥

२ समुदाये इति । जनसमुदाये शक्तस्य पञ्चजनशब्दस्य अवयवे—समुदायघटकेऽपि शक्तिरिति एकवचनमित्यर्थः । यदा जातिबोधकत्वं तदा—एकवचनम्, व्यक्तिबोधकत्वे बहुवचनमिति भावः । तदाह—उद्योते—एवञ्चैकस्मिन्निति ॥ अथवा 'दृष्टो हि अवयवे समुदायशब्दः । तद्यथा—पूर्वे पञ्चालाः' उत्तरे पञ्चालाः, तैलम्भुक्तमिति' इति जितश्च तत्प्रत्ययादिति सूत्रभाष्ये उक्तत्वात्तदनुसारेणायम्पञ्चजनशब्दो यदा एकस्यां व्यक्तौ प्रवर्तते तदैकवचनमिति भावः । तदाह—यथा सप्तर्षिरिति । सप्तऋषिसमुदाये प्रवृत्तस्य शब्दस्यावयवेऽपि वृत्तिरित्येकवचनमिति भावः ॥

३ सापेक्षत्वादिति । पञ्चानां जनः पञ्चजन इत्यत्र सङ्ख्याया जनेन न साक्षात्सम्बन्धः किन्तु सङ्ख्येयद्वारेति सङ्ख्येये सापेक्षस्य पञ्चशब्दस्य जनेन समासो न स्यादिति शङ्काऽऽशयः । सापेक्षत्वमेवोपपादयति—सङ्ख्या हीत्यादिना ॥

४ इत्यभिमान इति । 'संख्येये ह्यादश त्रिषु' इति कोशाद्दशान्तानां शब्दानां संख्येयवाचकत्वे प्रसिद्धेऽपि संख्यावाचित्वमनुसृत्यानुपपत्तिप्रदर्शनमभिमान इति भावः ॥

( उद्योतः ) नेदं[1] नित्यग्रहणं महाविभाषानिवृत्त्यर्थमित्याह—नित्यग्रहणमिति। अन्यथा खानुवृत्तिरप्यत्र सम्भाव्येतेति भावः॥ अत्र 'समानाऽधिकरणे' इत्यनुक्तौ बीजमाह—**महाजनशब्दश्चेति**॥

( समानाधिकरणाद्युपाधिप्रत्याख्याने भाष्यम् )

**यदि तर्ह्यतिप्रसङ्गाः सन्तीत्युपाधिः क्रियते, आद्यन्यासेऽप्युपाधिः[2] कर्तव्यः—'आत्मन्विश्वजन' समानाधिकरण इति वक्तव्यम्। यो हि विश्वेषां जनाय हितः—विश्वजनीयः स भवति।**

**अथ मतमेतत्—अनभिधानादाद्यन्यासे न भविष्यतीति, इहापि नार्थ उपाधिग्रहणेन।**

**इहाप्यनभिधानान्न भविष्यति॥**

( ८३४ विधिसूत्रम् ॥ ५। १। १ आ. ८ )

## १८९२ सर्वपुरुषाभ्यां णढञौ ॥५।१।१०॥

( छप्रत्ययापवादणढञोरधिकरणम् )

( ५६०३ विकल्पवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सर्वाण्णस्य वावचनम् ॥ * ॥

( भाष्यम् ) **सर्वाण्णस्य वेति वक्तव्यम्। सार्वः, सर्वीयः॥**

( प्रदीपः ) **सर्वादिति**। अनुकरणत्वात्[3] सर्वनामकार्याभावः, 'सर्वनामानि' इत्यन्वर्थसंज्ञाविज्ञानाद्। अनाश्रितार्थस्य च शब्दरूपस्यानुकरणमिति प्रकृतिवद्भावादपि[4] सर्वनामत्वं न भवति॥

( उद्योतः ) भाष्ये—**सर्वाण्णस्य वेति वक्तव्यमिति**। सर्वाण्णविधायकांशस्य वेति वक्तव्यम्। अधिकरणस्य शेषत्वविवक्षायां षष्ठी॥ **अनाश्रितार्थस्य शब्दरूपस्येति**। शब्दस्वरूपपरस्येत्यर्थः। एवञ्च—प्रकृतेरेव सर्वनामत्वाभावेन तदतिदेशोऽशक्य इति भावः। तस्या[5]नित्यत्वादिति तु तत्त्वम्॥

( ५६०४ अर्थविधायकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ पुरुषाद्वधे ॥ * ॥

( भाष्यम् ) **पुरुषाद्वध इति वक्तव्यम्। पौरुषेयो वधः॥**

**अत्यल्पमिदमुच्यते—पुरुषाद्वध इति।**

**पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्। पौरुषेयो वधः। पौरुषेयो विकारः। पौरुषेयस्समूहः। तेन कृतं पौरुषेयम्॥**

( प्रदीपः ) **पुरुषाद्वधेति**। प्रत्ययार्थ[6]सामर्थ्येन षष्ठी समर्थविभक्तिर्लभ्यते। कृते तु 'तेन' इति तृतीयोपात्तैव। पुरुषश्च लोकप्रसिद्धः पाण्यादियुक्त इह गृह्यते। न तु सांख्यादिशास्त्रप्रसिद्धः, तत्र प्रत्ययस्यादर्शनादित्याहुः॥

( उद्योतः ) ननु समर्थविभक्तिर्न निर्दिष्टेत्यत आह—**प्रत्ययार्थेति**॥ तेनेति तृतीयेति। सौत्रत्वा[7]द् द्वन्द्व इति भावः॥ तत्र प्रत्ययस्येति। तस्य[8] वधविकाराद्यसम्भवाच्चेत्यपि बोध्यम्। अनेकार्थ[9]त्वाच्च वधादिशब्दप्रयोगोऽपि॥

( ८३५ विधिसूत्रम् ॥ ५। १। १ आ. ९ )

## १८९४ तदर्थं विकृतेः प्रकृतौ ॥५।१।१२॥

( तदर्थे प्रत्ययविध्यधिकरणम् )

( ५६०५ संग्रहवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तदर्थमिति कृत्यनाम[10]भ्यष्ठञ् ॥ * ॥

( भाष्यम् ) **तदर्थमिति कृत्यनामभ्यष्ठञ्वक्तव्यः। इन्द्रमहार्थमैन्द्रमहिकम्। गाङ्गामहिकम्। काशेरुयज्ञिकम्॥**

( प्रदीपः ) **कृत्यनामभ्य इति**। अवश्यकर्तव्यत्वात् करणार्हत्वाद्वा कृत्याः—उत्सवाः, तन्नामभ्य इत्यर्थः॥

( उद्योतः ) ननु प्रकृतिविकृतिभावस्थले कार्यत्वरूपकृत्यत्वाव्यभिचारादाह—**अवश्येति**॥

( ५६०६ प्रत्याख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ न वा प्रयोजनेन कृतत्वात् ॥ * ॥

( भाष्यम् ) **न वा वक्तव्यम्।**

**किं कारणम्?**

**प्रयोजनेन कृतत्वात्। यद्धीन्द्रमहार्थम्, इन्द्र-**

---

१ ननु 'महाजनान्नित्यम्' इति वार्तिके नित्यग्रहणात् 'महाजनाय हितो माहाजनिकः' इति विग्रहप्रदर्शनं भाष्यकृतामनुपपन्नमत आह—नेदं नित्येति॥

२ उपाधिः=समानाधिकरणानामिति वक्तव्यम्, तत्पुरुष इति वक्तव्यमिति॥

३ ननु सर्वशब्दस्य सर्वनामत्वेन वार्तिके सर्वादित्यनुपपन्नमत आह—अनुकरणत्वादिति॥

४ प्रकृतिवद्भावादपि—प्रकृतिवदनुकरणमित्यतिदेशादपि॥

५ तस्येति। प्रकृतिवदनुकरणमित्यतिदेशस्यानित्यत्वात् सर्वशब्दस्यानुकरणस्यात्र न संज्ञेति भावः॥

६ ननु 'पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यम्' इति भाष्ये कृतमित्यर्थे प्रत्यये समर्था विभक्तिः 'तेन' इति निर्दिश्यते, अन्यार्थे तु नेति पौरुषेयो वध इत्यत्र का समर्थविभक्तिरित्याकाङ्क्षायामाह—प्रत्ययार्थेति॥

७ सौत्रत्वादिति। पुरुषाद्वधविकारसमूहतेनकृतेष्विति वक्तव्यमित्यत्रेति भावः॥

८ तस्य—सांख्यप्रसिद्धपुरुषस्य निर्विकारत्वेन वधादीनामसम्भवः॥

९ अनेकार्थत्वाच्चेति। शास्त्रप्रसिद्धस्यास्य पुरुषस्य विराड्रूपस्य सर्ववाचकत्वेन पुरुषः—वधः—इत्येवम्प्रयोगः स्यान्न तु पुरुषस्य वध इति भेदेन निर्देशः सम्भाव्येतेति भावः॥

१० कृत्यनामेति। यत्र प्रकृतिविकृतिभावो नास्ति प्रत्ययश्चेष्यते तदर्थमिदं वार्तिकम्। इन्द्रमहार्थं यद्यत्क्रियते न तदिन्द्रमहस्य प्रकृतिर्विकृतिर्वेत्यभिप्रायमारम्भः॥

महस्तस्य प्रयोजनं भवति; तत्र "प्रयोजनम्" (५।१।१०९) इत्येव सिद्धम् ॥

(प्रदीपः) न वेति । प्रयुज्यतेऽनेनेति प्रयोजनम्–फलमप्यभिधीयते, कारणमपि–इति भावः ॥

(उद्द्योतः) ननु कार्यस्येन्द्रमहस्य कथं कारणत्वरूपं प्रयोजनत्वम्, तत्र चैकागारिकानुरोधेन कारणपर्यायस्य ग्रहणमत आह—प्रयुज्यतेऽनेनेति । ऐकागारिकानुप्रवचनीयाद्यनुरोधेनोभयमपि तत्र गृह्यत इति भावः ॥

(८३६ विधिसूत्रम् ॥ ५ । १ । १ आ. १०)

## १८९५ छदिरुपधिबलेर्ढञ् ॥ ५।१।१३ ॥

(ढञोऽधिकरणम्)

(५६०७ आक्षेपवार्तिकम् ॥ १ ॥)

### ॥ * ॥ उँपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् ॥ * ॥

(भाष्यम्) उपध्यर्थमिति प्रत्ययस्यानुपपत्तिः ।

किं कारणम् ?

उपध्यभावाद् । विकृतेः प्रकृतावभिधेयायां प्रत्ययेन भवितव्यम्, न चोपधिसंज्ञिकाया विकृतेः प्रकृतिरस्ति ।

यद्धि तद्रथाङ्गं तदौपधेयमित्युच्यते ॥

(प्रदीपः) उपध्यभावादिति । उपधिशब्दो विकृतिवाची नास्ति, एकस्यैव रथाङ्गविशेषस्योपध्यौपधेयशब्दाभ्यामभिधानात् प्रकृतिप्रत्ययार्थयोश्च प्रकृतिविकारभावाभावादित्यर्थः ॥

(उद्द्योतः) भाष्ये—उपध्यर्थमितीति । 'उपध्यर्थमेषा प्रकृतिः' इत्यर्थे प्रत्ययाऽनुपपत्तिरित्यर्थः ॥ ननूपध्यभावादित्यस्य—'उपधिशब्दाभावात्' इति नार्थः, तस्य किप्रत्ययान्तस्य शास्त्रसिद्धत्वादत आह—उपधीत्यादि । औपधेयपदस्य योऽर्थस्तद्विकृतिवाची नास्तीत्यर्थः । तदेवाह—एकस्यैवेति । एवञ्च तादर्थ्यस्याप्यभाव इत्यपि ध्वनितम् ॥ भाष्ये—न चेति । औपधेयपदवाच्योऽर्थः प्रकृतिर्नास्तीत्यर्थः । तदेवाह—यद्धि तद्रथाङ्गमिति । यद्रथाङ्गमुपधिशब्दवाच्यन्तदेवौपधेयशब्देनोच्यत इत्यर्थः ॥

(५६०८ एकदेशिसमाधानवार्तिकम् ॥ २ ॥)

### ॥ * ॥ सिद्धं तु कृदन्तस्य स्वार्थेऽञ्वचनात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ।

कथम् ?

कृदन्तस्य स्वार्थे अञ्वक्तव्यः । उपधीयते—उपधेयम्, उपधेयमेवौपधेयम् ।

सिद्ध्यति ।

सूत्रं तर्हि भिद्यते ॥

(प्रदीपः) सिद्धं त्विति । उपधेयशब्दात्कर्मसाधनयदन्तात् स्वार्थेऽञ् वक्तव्य इत्यर्थः ॥

(उद्द्योतः) ननूपधीत्यस्य कृदन्तत्वेऽपि ततोऽञि नेष्टसिद्धिरत आह—उपधेयेति । कृत्पदेन सामर्थ्यात्कृत्यो गृह्यत इत्यर्थः । एवञ्च स्वार्थिकप्रकरणे 'आग्नीध्रसाधारणादञ्' इत्यत्रोपधेयशब्दः पाठ्य इति भावः ॥

(सिद्धान्तभाष्यम्)

यथान्यासमेवास्तु ।

ननु चोक्तम्—'उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात्' इति ।

नैतदस्ति । अयमुपधिशब्दोऽस्त्येव कर्मसाधनः–उपधीयते—उपधिरिति । अस्ति भावसाधनः–उपधानमुपधिरिति । तयो भावसाधनस्तस्येदं ग्रहणम् ।

एवमपि न सिध्यति ।

किं कारणम् ?

विकृतेः प्रकृताविति वर्तते ।

प्रकृतिविकृतिग्रहणं निवर्तिष्यते । तच्चावश्यं निवर्त्यम्, इहार्थमुत्तरार्थं च । इहार्थं तावत्—बालेयास्तण्डुलाः । उत्तरार्थम्—"ऋषभोपानहोर्ञ्यः" (५।१।१४) आर्षभ्यो वत्स इति ॥

(प्रदीपः) तयो भावसाधन इति । तत्र हि तादर्थ्यं संभवति, उपधानक्रियार्थत्वाद्रथाङ्गविशेषस्य ॥ एवमपीति । यद्यपि लोके क्रिया विकारत्वेन क्वचिन्निर्दिश्यते–'बहुविकारोऽयं

---

१ प्रयोजनमिति । प्रयोजनपदेन फलं कारणञ्च द्वयमपि गृह्यत इति इन्द्रमहात् 'प्रयोजनम्' इत्यनेन प्रत्ययः सिद्ध इति भावः ॥

२ तत्र चैकागारिकेति । 'ऐकागारिकट् चौरे' इत्यनेन हि एकागारशब्दात्प्रत्ययः प्रयोजनमित्यर्थे निपात्यते । तत्र एकमगारं हि चौरस्य चौर्यकर्मणि कारणं न तु कार्यम्–इति तत्साहचर्यात्कारणवाचकादेवप्रत्यय इति–इन्द्रमहशब्दात्प्रत्ययो न स्यात् तस्य कार्यत्वादिति भावः ॥

३ ऐकागारिकेति । अनुप्रवचनादिभ्यश्छ इत्यनेन अनुप्रवचनशब्दात्प्रत्ययः । अनुप्रवचनं च कार्यमिति तत्साहचर्यात्कार्यवाचकात्, ऐकागारिकसाहचर्यात्कारणवाचकादपि प्रत्यय इति भावः ॥

४ विकृतिवाचकेभ्यश्छदिरुपधिबलिशब्देभ्यस्तदर्थायाम्प्रकृतौ वाच्यायां ढञ्प्रत्यय इति सूत्रार्थः । तत्र–उपधिशब्दस्य रथाङ्गवाचित्वम्, ढञ्प्रत्ययान्तस्यौपधेयशब्दस्यापि तद्वाचित्वमेवेति न विकृतिवाचित्वमुपधिशब्दस्य न वा प्रकृतिवाचकत्वमौपधेयशब्दस्येति प्रत्ययाप्राप्तावाह–वार्तिककारः—उपध्यर्थमिति ॥

५ नास्तीत्यर्थ इति । औपधेयपदार्थस्य विकृतिवाची उपधेयशब्दो नास्तीति भावः ॥

६ कर्मसाधन इति । कर्मसाधने उपधिशब्दो रथाङ्गवाचक इति रथाङ्गार्थं रथाङ्गं न भवतीति तादर्थ्यासम्भवाद्भावसाधनस्यैवात्र ग्रहणम् । उपधानक्रियार्थत्वं भवितुमर्हतीति न दोषः ॥

मनुष्यो हसति गायति नृत्यति' इति, तथापि प्रत्ययविधौ विशिष्ट एव प्रकृतिविकारभावो गृह्यते—यत्र प्रकृत्युच्छेदः, यत्र वा प्रकृते रूपान्तरापत्तिः ॥ **बालेया इति** । अत्र तण्डुलानां तादर्थ्यमस्ति न तु प्रकृतिविकारभावः, बल्यवस्थायामपि तण्डुलानां तदवस्थत्वादिति भावः ॥ **आर्षभ्य इति** । यथा पक्कमाम्रफलमाम्रफलविकारत्वेन न प्रसिद्धम्, अपि तु प्रत्यभिज्ञावशात्तत्त्वेन । एवमृषभोऽपि न वत्सविकारः ॥

**(उद्द्योतः) विशिष्ट इति** । उभयोपादानसामर्थ्यादिति भावः ॥ ननु वत्सर्षभयोरवस्थाभेदेन प्रकृतिविकारभावः स्पष्ट एवेत्यत आह—**यथेति** ॥

**( अनुवृत्तिनिश्चायकभाष्यम् )**

**अथ तदर्थमित्यनुवर्तते, उताहो न ।**

**किं चार्थोऽनुवृत्त्या ?**

**बाढमर्थः—"तदस्य तदस्मिन् स्यादिति" (५।१।१६) तदर्थे यथा स्यात्, इह मा भूत्-प्रासादो देवदत्तस्य स्यादिति, प्राकारो नगरस्य स्यादिति ।**

**यदि तदर्थमित्यनुवर्तते "ऋषभोपानहोर्ञ्यः" ऋषभार्थो घासः, उपानदर्थस्तिलकल्क इत्यत्रापि प्राप्नोति ।**

**एवं तर्हि—अनुवर्तते प्रकृतिविकृतिग्रहणम् ।**

**ननु चोक्तं बल्यृषभयोर्न सिध्यतीति ।**

**कं पुनर्भवान् विकारं मत्वाऽऽह—बल्यृषभयोर्न सिध्यतीति ?**

**( प्रदीपः ) अथेति** । तदर्थग्रहणाननुवृत्तौ स्वार्थे प्रत्यय उपधिशब्दात्सिध्यतीति भावः । ऋषभोपानद्व्रत्रादयश्च शब्दास्तादर्थ्याद्वत्सादिषु वर्तमानाः स्वार्थ एव प्रत्ययमुत्पादयिष्यन्ति ॥ **प्रासाद इति** । अत्र संभावनामात्रं गम्यते न तु तादर्थ्यमिति प्रत्ययो नेष्यते । इतिकरणापरामर्शेनेदमुच्यते । यदि तर्हि 'तदस्य' इत्यनेन तादर्थ्ये प्रत्ययः क्रियते तदा योग्यतामात्रविवक्षायां प्रत्ययाप्रसङ्गः-अरणीयं सूनाकाष्ठमिति । अत्रापि बुद्धिपरिकल्पितारोपिततादर्थ्याश्रयणे प्रत्ययो भविष्यतीत्याहुः ॥

**( उद्द्योतः )** ननु ऋषभाद्यनुरोधेनानुवृत्तिरेव न्याय्या, बहूनामनुग्रहात् । न त्वेकोपध्यर्थमननुवृत्तिः, 'त्यजेदेकम्' इति न्यायादत आह—**ऋषभेति** । मुख्यार्थेभ्यस्त्वनभिधानान्न प्रत्यय इति भावः ॥ नन्वितिकरणेनैवानतिप्रसङ्गे 'तदर्थम्' इत्यनुवृत्तिर्व्यर्थेत्यत आह—**इतिकरणेति**[1] ॥ **अरणीयं सूनाकाष्ठमिति** । अरणिः सूनाकाष्ठस्य स्यादित्यर्थ इत्यभिमानः ॥ **अत्रापीति** । अन्यथा[3] सूनाकाष्ठमेवारणिरिति भेदनिबन्धना षष्ठी न स्यात् । आरोपितभेदेन सूनाकाष्ठस्यारणिरिति षष्ठ्यां तु तादर्थ्यमपि तथैवेति भावः ॥

**( विकारपदार्थबोधकं भाष्यम् )**

**यदि तावद्यः प्रकृत्युपमर्देन भवति स विकारः, वैभीतिको यूपः, खादिरं चषालमिति न सिध्यति । अथ मतमेतत्तदेव गुणान्तरयुक्तं विकार इति, बल्यृषभयोरपि सिद्धं भवति । गुणान्तरयुक्ता हि तण्डुला बालेयाः, गुणान्तरयुक्तश्च वत्स आर्षभ्यः ।**

**औपधेयं तु न सिध्यति ।**

**वचनात्स्वार्थिको भविष्यति ॥**

**(प्रदीपः) गुणान्तरयुक्ता हीति** । बल्यवस्थायां यो गुणः सन्निवेशलक्षणः, लाक्षादिकृतलौहित्यादिलक्षणो वा तदपेक्षया प्राक्तनगुणयुक्ता इत्यर्थः ॥ **गुणान्तरयुक्तश्च वत्स इति** । सुजातावयवः संहननवान् महाप्राण ऋषभावस्थाप्राप्तये यदा परिपोष्यते, न तु दानविक्रयार्थम्; तदा तादर्थ्यस्य सम्भवः । आम्रं तु पक्वं यद्यप्याम्रविकारः, गुणभेदात्; तथापि तत्त्वबुद्ध्युत्पादाल्लोके प्रकृतिविकारभावस्याप्रसिद्धत्वात् तत्र प्रत्ययाभावः । आमपक्वावस्थयोराम्रशब्द एव वाचकत्वेन प्रवर्तते, न तु शब्दान्तरं वत्सर्षभशब्दवत् ॥ **औपधेयं त्विति** । सत्यपि क्रियापेक्षद्रव्यस्य तादर्थ्ये प्रकृतिविकारभावात् ॥ **वचनादिति** । कर्मसाधनकिप्रत्ययान्तादुपधिशब्दात्स्वार्थे ढञ् प्रत्ययः, उपध्यौपधेयशब्दयोर्लोके पर्यायत्वादेकस्यार्थस्यात्मापेक्षया तादर्थ्यम्, प्रकृतिविकारभावाभावात् ॥

**(उद्द्योतः)** ननु प्राक्तनगुणापेक्षया भिन्नगुणयुक्ता हि बलिरूपा एव, न बालेया अत आह—**बल्यवस्थायामिति** । **गुणः**—कुङ्कुमादिकृतलौहित्यादिरूपः, सन्निवेशलक्षणो वा ॥ ननु दानविक्रयाद्यर्थं वत्सपोषणे तादर्थ्याभावोऽत आह—**सुजातेति** ॥ **संहननम्**—अशिथिलबन्धता ॥ यत्त्वाम्रफलदृष्टान्तेन प्रकृतिविकृतिभावाभाव इत्युक्तम्, तत्राह—**आम्रन्त्विति** ॥ **तत्त्वबुद्धिः**—प्रत्यभिज्ञारूपा ॥ वैषम्यान्तरमप्याह—**आमपक्वेति** । एवञ्च पक्वाम्रे प्रख्याभेदाभावात्प्रकृतिविकारभावाभाव इति भावः ॥

---

**( ८३७ अधिकारसूत्रम् ॥ ५ । १ । १ आ. ११ )**

## १८९८ तदस्य तदस्मिन्त्स्यादिति ॥ ५ । १ । १६ ॥

**( पदकृत्यभाष्यम् )**

**( षष्ठी सप्तम्यर्थे प्रत्ययाधिकरणम् )**

**स्याद्ग्रहणं किमर्थम् ?**

---

१ इतिकरणेति । तदस्य तस्मिन्निति सूत्रे तदर्थमित्यस्याननुवृत्तौ प्रासादो देवदत्तस्य स्यादित्यादौ सम्भावनाविषयेऽपि प्रत्ययः प्राप्नुयादित्यापत्तिर्न सम्भवति । तत्सूत्रे इतिकरणेनेष्टार्थलाभात् । इतिकरणाविचारेण चेदमुच्यत इति भावः ॥

२ 'स्थूणाकाष्ठम्' इति च. ञ. पाठः । 'सूनाधो जिह्विकापि च' इत्यमरः । 'सूनाख्या पुष्पिते पुष्पे जिह्वातले वधालये' इत्यजयः । 'स्थूणा स्तम्भेऽपि वेश्मनः' इत्यमरः । 'स्थूणा स्यात् सूर्म्यां स्तम्भेऽपि वेश्मनः' इति मेदिनी । 'सूर्मी स्थूणाऽयःप्रतिमा' इत्यमरः । 'स्थूणा सूर्म्यां स्तम्भे रुगन्तरे' इति हैमः—इत्यादिकोषदर्शनात्पर्यायावेतावित्यवगम्यते ॥

३ अन्यथा=बुद्धिपरिकल्पितारोपिततादर्थ्याश्रयणाभावे ॥

**इह मा भूत्—प्रासादो देवदत्तस्य, प्राकारो नगरस्येति ।**

( प्रदीपः ) **स्याद्ग्रहणमिति** । क्रियमाणेऽपि स्याद्ग्रहणे नैवातिप्रसङ्गनिवृत्तिः, इति करणादेव च सर्वातिप्रसङ्गनिवृत्तिः सेत्स्यतीति **प्रश्नः** ॥ **प्रासादो देवदत्तस्येति** । अक्रियमाणे स्याद्ग्रहणे स्वस्वामिसंबन्धादावतिप्रसङ्ग उक्तः, **अस्येति** षष्ठ्या संबन्धमात्रस्य प्रतिपादनात् सामान्ये च सर्वविशेषान्तर्भावात् ।

**ननु** तदर्थग्रहणानुवृत्त्याऽत्र न भविष्यति । तथा च 'छदिरुपधिबलेर्ढञ्' इत्यत्र भाष्यं—**बाढमर्थः**—इत्यादि । एवं तर्ह्यसति स्याद्ग्रहणे प्रासादार्थोऽयं देवदत्त उत्पन्नो योग्योऽयं प्रासादलाभ इति तादर्थ्यसंभवात्प्रत्ययप्रसङ्गः ॥

( उद्योतः ) ननु स्याद्ग्रहणं सम्भावनार्थकत्वेन स्वस्वामिभावादिसम्बन्धव्यावृत्त्यर्थमत आह—**क्रियमाणेऽपीति** । 'प्रासादो नगरस्य स्यात्' इत्यादावतिप्रसङ्गसत्त्वादिति भावः ॥ **सर्वेति** । एवञ्च व्यापकत्वात्तदेव कार्यमिति भावः ॥ नन्वत्र स्वस्वामिभावोऽवयवावयविभावश्च तत्त्वेन विवक्षितो न तु सम्बन्धसामान्यम्, अस्येति च सामान्यार्थकमतो न दोषोऽत आह—**अस्येति षष्ठ्येति** ॥ **तादर्थ्यसम्भवादिति** । 'तदस्य' इत्यर्थे प्रत्ययो भवति, सम्बन्धी चेत्तदर्थो भवति—इति तदर्थः । प्रासादार्थस्य देवदत्तस्यायं प्रासाद इत्यर्थे 'प्रासादीयः' इति स्यादिति—**इह माभूदित्यादेरर्थः** ॥

( स्याद्ग्रहणाक्षेपभाष्यम् )

**अथ क्रियमाणेऽपि स्याद्ग्रहण इह कस्मान्न भवति—प्रासादो देवदत्तस्य स्यात्, प्राकारो नगरस्य स्यादिति ।**

**शक्यार्थे लिङिति वक्तव्यम् ।**

**नैवं शक्यम्, इदानीमेव ह्युक्तम्—न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणमिति ।**

**एवं तर्हि—इतिकरणः क्रियते । ततश्चेद्विवक्षा भवति । विवक्षा च द्वयी । अस्त्येव प्रायोक्त्री विवक्षा, अस्ति लौकिकी ।**

**प्रायोक्त्री विवक्षा—प्रयोक्ता हि मृद्व्या स्निग्धया श्लक्ष्णया जिह्वया मृदून् स्निग्धान् श्लक्ष्णान् शब्दान् प्रयुङ्क्ते ।**

**लौकिकी विवक्षा—यत्र प्रायस्य संप्रत्ययः, प्राय इति लोको व्यपदिश्यते । न च प्रासादो देवदत्तस्य स्यात् प्राकारो नगरस्य स्यादित्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात् ॥**

( प्रदीपः ) **अथेति** । यदा देवदत्तनामा केनचिदीश्वरो दृष्टस्ततः प्रासादं विस्तीर्णं दृष्ट्वाऽसौ संभावयति—नायं प्रासादोऽन्यस्य संभवति देवदत्तस्यायं प्रासादः स्यादिति, तदा प्रत्ययः प्राप्नोतीत्यर्थः । नन्वत्र तादर्थ्यं न प्रतीयत इति प्रत्ययो न भविष्यति । एवं तर्हि 'प्रासादलाभयोग्योऽसौ देवदत्तः प्रासादार्थः' इत्येवं विवक्षायामिदमुदाहरणम् । अथवा तदर्थग्रहणमत्र नानुवर्तते, इतिकरणेनानिष्टनिवृत्तेः साधयिष्यमाणत्वात् । पूर्वसूत्रे तु भाष्यकारेणेतिकरणापरामर्शेन प्रसङ्गान्तरेण तदर्थग्रहणस्यैवानुवृत्तिर्दर्शिता, न त्वसौ सिद्धान्तः । तथा चान्यार्थमपि दारु योग्यतामात्रेण प्रासादीयमुच्यते । न च तत्र तादर्थ्यलेशोऽप्यस्ति, न च प्रतीयते, येनासदपि तादर्थ्यं बुद्ध्या परिकल्प्य प्रयोगः क्रियेत ॥ **शक्यार्थ इति** । 'स्याच्छक्यार्थे' इति पठितव्यमित्यर्थः ॥ **इदानीमेवेति** । चिरवृत्तमपि वस्तु बुद्ध्या भावितत्वात्प्रत्यासन्नमिव प्रतीयते । 'उपदेशेऽजनुनासिक इत्' इत्यत्रेदमुक्तम्—'प्रायग्रहणादसंज्ञायामपि घञ् भवति, प्रायवचनात् संज्ञायामेव घञ् स्याद्वा न वा, न ह्युपाधेरुपाधिर्भवति विशेषणस्य वा विशेषणम्' इति । तत्र हि घञ् विधेयत्वात्प्रधानम्, तस्यैव प्रायग्रहणं संज्ञाग्रहणं च विशेषणं न्याय्यम् । न तु संज्ञायाः प्रायग्रहणं विशेषणम्, परार्थस्य स्वसंस्कारप्रतिपत्तावयोग्यत्वात्, शब्देन पारार्थ्यापन्नस्यैव प्रत्यायनात्, एकवाक्यत्वाच्च । उपाधिविशेषणशब्दयोश्च क्वचित्पर्यायत्वम्, क्रियाभावशब्दयोरिव । क्वचित्तु भेदेन व्यवहारः ।

तदुक्तम्—

**अर्थविशेष उपाधिस्तदन्तवाच्यः समानशब्दो यः ।**
**अनुपाधिरतोऽन्यः स्याच्छ्लाघादिविशेषणं यद्वत्**॥इति।

तत्र स्यादित्येतत्प्रकृत्यर्थविशेषणायोपात्तं परतन्त्रमयोग्यं शक्यार्थं इत्यनेन विशेषणेन संबन्धानुभवे । ननु विशेषणसंबन्धमनुभूय प्रकृत्यर्थं विशेषयिष्यति । नैतदस्ति । विशेषणसंबन्धानुभवे प्रधानत्वं तस्य स्यात्, न तूपाधित्वम्; प्रतीतिकाल एव तस्य पारार्थ्यमवगतमिति कुतो विशेषणसंबन्धः ? अथोपाधिद्वयेन प्रकृत्यर्थः संबध्येत, तदिहापि प्रसज्येत—'शक्यः प्रासादो देवदत्तस्य स्यात्' इति । तत्र ज्ञातुमुपभोक्तुं वा शक्य इति प्रकृत्यर्थस्य शक्यार्थविशेषणसंबन्धसंभवः ॥ **मृदूनिति** । अपभ्रंशानित्यर्थः । तस्मात् प्रयोक्तृविवक्षा नाश्रीयते, प्रयोक्तुः स्वातन्त्र्यान्नियमाभावात् ॥

( उद्योतः ) ननु तत्स्वामिकत्वेन निर्णीते प्रासादे कथं सम्भावनाविषयत्वमत आह—**यदेति** । स्वस्वामिभावविषये सम्भावनासत्त्वेन न तेन तादृशसम्बन्धव्यावृत्तिरिति भावः ॥ भाष्योदाहरणाक्षरेभ्यः 'प्रासादार्थ' इत्यादेरलाभादाह—**अथवेति** ॥

१ उपाधिविशेषणयोर्भेदमाह—**अर्थविशेष** इत्यादि । इतिहरिः पशुरित्यत्र हरतेर्दृतिनाथयोरित्यनेन दृत्युपपदात् इन् धातोः इन् प्रत्ययः पशौ कर्तरि भवति । अत्र हि दृतिहरिपदेन इन्प्रत्ययान्तेन पशुरेवोच्यते । पशुरूपार्थविशेषः प्रत्ययान्तेन पदेन वाच्यः समानाधिकरणशब्देन च उच्यते स उपाधिरित्यर्थः । दृतिहरिः पशुरित्यत्र समानाधिकरणः पशुरूपार्थो दृतिहरिशब्देनोक्त उपाधिर्भवति । गार्गिकया श्लाघते इत्यत्र च 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' इत्यनेन विधीयमानो वुञ् न श्लाघाभूते, श्लाघादिषु विषयभूतेष्वस्य विधीयमानत्वात् । एवञ्च प्रत्ययान्तेन गार्गिकापदेन श्लाघाया अवचनान्नेयं श्लाघा—उपाधिः किन्तु विशेषणमेव ॥

२ 'भावविषयेऽपि सम्भावना' इति च. ज. पाठः ॥

**भाष्यकारेणेति** । तदेकदेशिनेत्यर्थः । न हि सिद्धान्तिनोऽज्ञानकल्पना युक्ता ॥ **प्रसङ्गान्तरेणेति** । औपधेये तदर्थग्रहणानुवृत्तावपि प्रत्ययस्य स्वार्थिकत्वव्युत्पादनप्रसङ्गेनेत्यर्थः ॥ ननु शक्यार्थे लिङः 'शकि लिङ् च' इतिसूत्रेणैव सिद्धेर्वक्तव्यत्वोक्तिरसङ्गतेत्यत आह—**स्याच्छक्यार्थे इति** । यत्प्रथमासमर्थं तच्चेच्छक्यार्थकस्यात्पदबोध्यमित्यर्थः । तदस्य शक्यमित्यर्थे प्रत्ययो वक्तव्य इत्यर्थः । एवञ्चाविकारिकारण एवायं प्रत्यय इति नोक्तदोष इति भावः । तत्र सम्भावनाविषयस्वस्वामिभावस्यैव प्रतीतिर्न तु कारणत्वस्येति तात्पर्यम् ॥ नन्विदं प्रथमे उक्तम्, तत्कथमिदानीमेवेत्युच्यते ? अत आह—**च्विरेति** ॥ **परार्थस्येति** । परविशेषणत्वेन प्रतीतस्येत्यर्थः । यथा राजसेवकस्य राजसेवाकरणकाले स्वसेवककृतसेवया संस्काराभाव इति भावः ॥ तदेवाह—**शब्देन पारार्थ्येति** । सप्तम्येत्यर्थः[1] ॥ **एकेति**[2] । घञ्विध्येकवाक्यतापन्नत्वादिति भावः । एतेन 'अवान्तरवाक्यार्थवत् तदर्थः प्रागिति तत्र तस्य स्वातन्त्र्यमेव' इति परास्तम् ॥

**तदन्तवाच्यः**—प्रत्ययान्तशब्दवाच्यः । **समानशब्दः**—समानाधिकरणशब्दः । यथा 'दृतिहरिः पशुः' इति, कर्तुः प्रत्ययेनाभिधानात्पशोरुपाधित्वम् । **अतोऽन्यः**—प्रत्ययावाच्यः, व्यधिकरणश्चेत्यर्थः । यथा 'गार्गिकया श्लाघते' इति श्लाघा ॥

**तत्रेति** । प्रथमासमर्थात् षष्ठ्याद्यर्थे प्रत्यय इत्येकं वाक्यम्, यत्तत्प्रथमासमर्थं तच्चेत्स्यादिति द्वितीयम् । तत्र द्वितीये प्रकृत्यर्थः प्रधानम्, विशेष्यत्वात् । 'स्यात्' इत्येतच्च विशेषणत्वेन प्रतीयमानत्वादप्रधानमिति न तस्य विशेषणान्तरेण सम्बन्ध इति भावः ॥ **नन्विति** । 'गुणैः[3] कृतात्मसंस्कारः' इति न्यायादिति भावः ॥

नन्वन्यनिरूपितप्रधानत्वेऽप्यन्यनिरूपितं विशेषणत्वं स्यात्को विरोधः ? अत आह—**प्रतीतिकाल एवेति** । अयं भावः—

**आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।**
**गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥**

—**इति** 'तदर्हति—' इति सूत्रस्थभाष्यसंमत[4]न्यायेन शक्योत्पत्तिकर्तृवाचकप्रथमान्तादस्येत्यर्थे प्रत्यय इत्यर्थो वाच्यः । तत्र च शक्यत्वमसधात्वर्थोत्पत्तिविशेषणम्, तस्याश्चोपस्थितिकाले एव कर्तृविशेषणतयोपस्थितेर्न तत्र विशेषणान्वय इति ॥ ननु कथं प्रासादस्य शक्यार्थरूपविशेषणसम्बन्धः, स्वरूपेणाशक्यत्वात्; अत आह—**तत्र ज्ञातुमिति** ॥ **शक्यार्थविशेषणसम्बन्धेति** । शक्यार्थः—शक्यत्वं, तद्रूपविशेषणेत्यर्थः ॥

( सिद्धान्तभाष्यम् )

**यद्येवम्, नार्थः स्याद्ग्रहणेन । न हि प्रासादो देवदत्तस्य प्राकारो नगरस्येत्यत्रोत्पद्यमानेन प्रत्ययेन प्रायस्य संप्रत्ययः स्यात् ॥**

( प्रदीपः ) **प्रायस्येति** । समग्रकल्पस्येत्यर्थः । तस्माद्यत्रार्थे लोकाः शब्दान् प्रयुञ्जते तदर्थाभिधायिन एव शास्त्रेणानुविधीयन्ते, प्रयोगमूलत्वाद् व्याकरणस्मृतेः । अयमेव न्यायः क्वचित्—इतिकरणेनोपसंगृह्यते । तत्र—**इति**—शब्दो हेत्वर्थः सन् विवक्षामनुसारयति । योऽयमर्थः—'तदस्य तदस्मिन् स्यादिति' तदर्थप्रत्यायनाय यदा विवक्षा भवति, अतो हेतोरयमर्थः प्रत्ययोत्पत्तिनिमित्तत्वेनाश्रीयत इति । अथ वा एवमर्थवृत्तिः—**इति**—शब्दो विवक्षामनुसारयति । एवं यदि लोकस्य विवक्षा भवति तत्र प्रत्यय इत्यर्थः । न च लोकस्य प्रासादो देवदत्तस्य स्यादित्यर्थस्य प्रतिपादनाय प्रासादीयो देवदत्त इति शब्दप्रयोगेच्छा भवति, भवाद्यर्थप्रतिपादनायैवैतच्छब्दप्रयोगात् ॥

( उद्द्योतः ) **तस्मादिति** । यतः प्रयोक्तारो मार्दवगुणादरेणासाधूनपि प्रयुञ्जत इत्यर्थः ॥ **लोकाः शब्दानिति** । साधुप्रयोगादरशालिनः शिष्टलोका इत्यर्थः ॥ अनुसरणप्रकारमाह—**योऽयमिति** ॥ **भवादीति** । आदिना जातः ॥

---

( ८३८ अधिकारसूत्रम् ॥ ५ । १ । १ आ. १२ )

## १९०१ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ॥ ५ । १ । १९ ॥

( ठगधिकरणम् )

( परिमाणतः संख्यायाः पृथग्ग्रहणप्रयोजनभाष्यम् )

**किमर्थं संख्यायाः पृथग्ग्रहणं क्रियते ? न संख्याऽपि परिमाणमेव, तत्र परिमाणपर्युदासेन पर्युदासो भविष्यति ।**

**एवं तर्हि सिद्धे सति यत्संख्यायाः पृथग्ग्रहणं करोति तज्ज्ञापयत्याचार्य्यः—अन्या संख्या, अन्यत्परिमाणमिति ॥**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**"अपरिमाणबिस्ताचितकम्बलेभ्यो न तद्धितलुकि" ( ४।१।२२ ) इति—द्वाभ्यां शताभ्यां क्रीता द्विशता, त्रिशता । परिमाणपर्युदासेन पर्युदासो न भवतीति ॥**

( प्रदीपः ) **किमर्थमिति** । परिमीयतेऽनेनेति परिमाणमिति क्रियाशब्दत्वात्परिमाणशब्दस्य संख्याया अपि परिच्छेदहेतुत्वात् पृथग्ग्रहणं न कर्तव्यमिति मत्वा **प्रश्नः** ॥ **एवं तर्हीति**—आचार्य्यदेशीयः परिहरति । यथा प्राच्यत्वाद्भरतानां

---

१ सप्तम्येत्यर्थ इति । पुंसि संज्ञायां घः प्रायेणेति सूत्रतोऽनुवृत्तसंज्ञायामिति सप्तम्येत्यर्थः ॥

२ घञ्विध्येकेति । 'हलश्च' इति घञ्विध्येकवाक्यतापन्नत्वादित्यर्थः ॥

३ गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते ।
प्रधानस्योपकारे हि तथा भूयसि वर्तते । इति न्यायस्वरूपम् ॥

४ ननु प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्येऽपि भावप्रधानमाख्यातमिति सिद्धान्तादसधातुवाच्योत्पत्तिः कथं कर्तृरूपे प्रत्ययार्थे विशेषणतयाऽन्वियेतेत्यत आह—**सूत्रस्थभाष्यसम्मतन्यायेनेति** । भावप्रधानमाख्यातमिति सिद्धान्तेऽपि तद्धितान्तस्य विवरणभूते आख्याते गुणप्रधानभावस्य विपर्ययो दृष्ट इति—अत्रापि असधात्वर्थोत्पत्तिः प्रत्ययार्थे विशेषणतयाऽन्वेतीति भावः ॥

ग्रहणे सिद्धे 'बह्वचः' इत्यत्र भेदेनोपादानमन्यत्र प्राच्यग्रहणे भरतग्रहणनिवारणार्थम्, तेन 'इञः प्राचाम्' इति भरतेभ्यो युवप्रत्ययस्य लुङ् भवति—औद्दालकिः पिता, औद्दालकायनः पुत्र इति। एवमिहापि संख्याग्रहणमन्यत्र परिमाणग्रहणे संख्याया अग्रहणार्थम् । तेन द्वाभ्यां शताभ्यां क्रीता द्विशतेत्यत्र द्विगुलक्षणस्य ङीपोऽपरिमाणान्तत्वात् प्रतिषेधः सिध्यति यथा—पञ्चाश्वेति । 'पणपाद' इति नित्ये यति प्राप्ते 'शाणाद्वा' इत्यत्र 'शतशाणाभ्यां वा' इति वचनाद्यत्प्रत्ययाभावात्, पक्षे 'शताच्च ठन्यतावशते' इत्यत्रासमासग्रहणानुवृत्त्या संख्यालक्षणस्य कनः 'अध्यर्धपूर्व' इति लुकि कृते द्विशतेति भवति ॥

( उद्द्योतः ) ननु 'परिमाणन्तु सर्वतः' इत्युक्तेः सङ्ख्या कथं परिमाणमत आह—**परिमीयतेऽनेनेति** । रूढेरव्याप्त्यज्ञानादिति भावः ॥ ननु वास्तवे भेदे ज्ञापकं व्यर्थम्, असति तु तस्मिन् ज्ञापकेन कथं तत्त्वमत आह—**यथेति** ॥ द्विशतेत्येतदुपपादयति—**पणपादेति नित्ये यतीति** । तस्य च विधानसामर्थ्याल्लुगभाव इत्यर्थः ॥ ननु ठन्यतोरपि विधानसामर्थ्याल्लुगभाव इति, अत आह—**असमासेति** । एवञ्च समासे तदप्राप्तिरेवेति भावः ॥

( परिमाणतः संख्याभेदे दोषभाष्यम् )

**यद्येतज्ज्ञाप्यते, "तदस्य परिमाणम्" "संख्यायाः संज्ञासङ्घसूत्राध्ययनेषु" (५।१।५७-५८) इति विशेषणं न प्रकल्पते—परिमाणं या संख्येति । इह च "क्रीतवत्परिमाणात्" (४।३।१५६) इति संख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पते । शतस्य विकारः—शत्यः, शतिकः, साहस्र इति ॥**

( प्रदीपः ) **यद्येतदिति**—शिष्य आचार्यदेशीयेनोक्ते दूषणमुद्भावयति ॥

( ज्ञापकासम्भवप्रदर्शनभाष्यम् )

**यत्तावदुच्यते[1]—एतज्ज्ञापयत्याचार्यः—अन्या संख्या, अन्यत्परिमाणमिति ।**

**नैतज्ज्ञापकसाध्यम्—अन्या संख्या, अन्यत्परिमाणमिति ।**

**न्यायसिद्धमेवैतत् ।**

**भेदमात्रं संख्याऽऽह । यच्चेषीकान्तं[2] यच्चापरिमाणं तस्य सर्वस्य संख्या भेदमात्रं ब्रवीति ।**

**परिमाणं तु सर्वतः । सर्वतो मानमिति चातः परिमाणमिति । प्रस्थस्य च समानाकृतेर्न कुतश्चिद्विशेषो गम्यते—न चोन्मानतः, न परिमाणतः, न प्रमाणतः ॥**

( प्रदीपः ) इदानीमाचार्य आह—**यत्तावदिति** । परिमाणशब्दः क्रियाशब्दत्वेऽपि विशिष्टपरिच्छेदहेतौ द्रोणादौ रूढो न संख्यामभिधेयत्वेन गृह्णाति । यथा पङ्कजशब्दः पद्ममेवाभिदधाति न तु कुमुदादिकमपीत्यर्थः ॥ **भेदमात्रमिति** । भेदः—पदार्थानां वैलक्षण्यम्[3], तन्मात्रं संख्याशब्दः प्रतिपादयति, मूर्तामूर्तगणनात्मकत्वात् संख्यायाः । एको घट इत्यत्रापि द्व्यादिनिरासाद्भेदावगतिरस्त्येव ॥ **यच्चेषीकान्तमिति** । अपचितपरिमाणोपलक्षणमिषीकान्तग्रहणम् । तेनायमर्थः—हिमवदादि महापरिमाणमपि संख्यया गण्यते—सप्त कुलाचला इति । अपचितपरिमाणमपि—त्रयः परमाणव इति ॥ **यच्चापरिमाणमिति** । अमूर्तमप्यात्मादि गण्यते इत्यर्थः । उन्मानप्रमाणपरिमाणानि तु मूर्तद्रव्यविषयाण्येव । क्वचित्पाठः—**यच्च परिमाणमिति** । तत्रायमर्थः—द्रोणादिपरिमाणमपि संख्यया परिच्छिद्यते—द्वौ द्रोणाविति । परिमाणग्रहणं चोपलक्षणम्, सर्वस्य संख्यापरिच्छेद्यत्वात् ।

तदुक्तम्—

**दिष्टिप्रस्थसुवर्णादि मूर्तिभेदाय कल्पते ।**
**क्रियाभेदाय कालस्तु संख्या सर्वस्य भेदिका ॥** इति ॥

**सर्वत इति** । आरोहपरिणाहाभ्यां खगताभ्यां धान्यादि येन मीयते काष्ठादिमयेन, तत्—परिमाणं प्रस्थादिकमुच्यते ॥ **प्रस्थस्य चेति** । संख्ययैव विशेषो गण्यते—द्वौ प्रस्थौ, त्रयः प्रस्था इति, न त्वन्यत इत्यर्थः । भिन्नसन्निवेशस्य हस्तादिनाऽपि परिच्छेदो भवतीति समानाकृतिग्रहणं समानसन्निवेशप्रतिपादनार्थम् ॥

( उद्द्योतः ) ननु परिमाणशब्दस्य यौगिकत्वात्कथमन्या सङ्ख्येत्यत आह—**परिमाणशब्द इति** । योगरूढोऽयमिति भावः ॥ **द्रोणादौ**—सर्वतो मानत्वविशिष्टे ॥ **वैलक्षण्यम्**—सङ्ख्यान्तरप्रयोजकवस्तुसाहित्याभावरूपम्, सङ्ख्यान्तरनिर्वर्तकवस्तुसाहित्यरूपं च । सङ्ख्याशब्दइत्यस्य सङ्ख्याशब्दवाच्यत्वेन प्रसिद्धः शब्द इत्यर्थः । तदाह—**मूर्तेत्यादि** । तत्रान्त्यभेदो द्व्यादिशब्दवाच्यः । आद्यस्त्वेकशब्दे इत्याह—**एको घट इति** ॥ भाष्ये—**भेदमात्रमित्यस्य** भेदसहचरितमितरसाहित्यम्, तत्सहचरितेतरसाहित्याभावश्चेत्यर्थः ॥ **यच्चेषीकान्तमिति** । चोऽप्यर्थे । तेन यदल्पपरिमाणम्, यच्च महापरिमाणम्, यच्चापरिमाणं रूपक्रियादि, तत्सर्वं सङ्ख्यया गण्यत इत्यर्थ इत्येके ॥ **मूर्तिः**—असर्वगतद्रव्यपरिमाणम् ॥ **अमूर्तमप्यात्मादीति** । नन्वात्मन्यपि परममहत्परिमाणसत्त्वात्कथं 'अपरिमाणम्' इति भाष्ये उक्तिः, द्रव्यस्य परिमाणवत्त्वनियमादिति चेन्न; नियमस्य मूर्तद्रव्यविषयत्वात्, सर्वपरिमाणाभाववत्त्वेनैव तत्र परममहदादिव्यवहारस्य गौणत्वादिति कैयटाशयः ॥ **मूर्तद्रव्यविषयाण्येवेति** । तदपि न सर्वमूर्तद्रव्यविषयमित्यपि बोध्यम् ॥ **सर्वस्य**—मूर्तामूर्तस्य ॥

---

१ यत्तावदिति । सिद्धान्तिन इयमुक्तिः । नैतज्ज्ञापकेन साध्यम् । संख्याभिन्ने मरथाढकादौ परिमाणशब्दस्य रूढेः सत्त्वेन न संख्यायाः परिमाणपदेन ग्रहणमिति लोकसिद्धोऽयमर्थः ॥

२ इषीका—सूचिः, सूच्यन्तपरिमाणमपकृष्टपरिमाणमित्यर्थः ॥

३ संख्यान्तरप्रयोजकवस्तुसाहित्याभावरूपम्, संख्यान्तरनिर्वर्तकवस्तुसाहित्यरूपेति द्विधाव्याख्यानस्योदाहरणे आह—तत्रान्त्यभेद इति ॥

आरोहः—उच्छ्रायः ॥ **परिणाहः**—विस्तारः ॥ एतौ च न मेयगताविल्याह—**स्वगताभ्यामिति** ॥ परिमाणशब्दस्य प्रस्थादिमात्रे वृत्तियोगमाह—भाष्ये—**सर्वतोमानमिति चात इति** ॥ परिमाणभेदकत्वादपि न सङ्ख्या परिमाणमित्याह—**प्रस्थस्य चेति** ॥ **सङ्ख्ययैवेति** । **'न कुतश्चित्'** इति भाष्यस्य—सङ्ख्याया अन्यतः कुतश्चिद्विशेषो न गम्यत इत्यर्थः ॥ **भिन्नसन्निवेशस्येति** । प्रस्थान्तराद्भिन्नसन्निवेशस्य प्रस्थस्येत्यर्थः ॥

**(उन्मानादिलक्षणैः संख्यायाः परिमाणतो भेदबोधकं भाष्यम्)**

**किं पुनरुन्मानम् ? किं परिमाणम् ? किं प्रमाणम् ?**

**ऊर्ध्वमानं किलोन्मानम्**

**ऊर्ध्वं यन्मीयते तदुन्मानम् ॥**

**परिमाणं तु सर्वतः ।**

**सर्वतो मानमिति चातः परिमाणम् ।**

**कुत एतत् ?**

**परिः सर्वतोभावे वर्तते ।**

**आयामस्तु प्रमाणं स्यात्**

**आयामविवक्षायां प्रमाणमित्येतद्भवति ॥**

**संख्या बाह्या तु सर्वतः ॥**

**आतश्च सर्वतः संख्या बाह्या—**

**भेदमात्रं ब्रवीत्येषा**

**नैषा मानं कुतश्च न ॥**

**एवं च कृत्वा संख्यायाः पृथग्ग्रहणं क्रियते ॥**

( प्रदीपः ) प्रसङ्गेन उन्मानप्रमाणयोरपि स्वरूपप्रतिपादनं प्रश्नपूर्वकं करोति—**किं पुनरिति** ॥ **ऊर्ध्वमिति** । ऊर्ध्वदिगवस्थितं परिच्छेदकमुन्मानमुच्यते । यथा हास्तिनमुदकमित्यत्र हस्तीति **केचिदाहुः** । **अन्ये तु**—हस्त्यादेः प्रमाणे एवान्तर्भावात्तुलादण्डादावारोप्य येन द्रव्यान्तरपरिच्छिन्नगुरुत्वेन पलादिशब्दवाच्येन पाषाणादिना सुवर्णादेर्गुरुत्वं मीयते तदुन्मानम्, तच्चोर्ध्वारोपणादूर्ध्वमुच्यत इत्याहुः ॥ **आयाम इति** । विस्तारो येन मीयते दारुवस्त्रादीनां तत्प्रमाणं हस्तादि, तच्चायामपरिच्छेदित्वादुपचारादायामशब्देनोच्यते ॥ **नैषेति** । **न कुतश्चित्**=संनिवेशादेः **संख्या मानं**—सन्निवेशादिनिरपेक्षं मानमित्यर्थः । तथाहि—द्वौ मेरुसर्षपावित्यपि भवति ॥

**( उद्द्योतः )** पूर्वग्रन्थेनासङ्गतिमाशङ्क्याह—**प्रसङ्गेनेति** । **'न चोन्मानतः'** ईत्याद्युक्तिरप्येवं[1] प्रश्नपूर्वकं तत्स्वरूपनिरूपणायैवेति बोध्यम् ॥ भाष्ये—**यन्मीयते इति** । मीङो दैवादिकस्य रूपम्, परिच्छेदं करोतीत्यर्थः । तदाह—**ऊर्ध्वदिगवस्थितमिति** ॥ **हस्त्यादेरिति** । द्विविधायामस्यापि प्रमाणत्वादिति भावः ॥ **आहुरिति** । अत्रारुचिबीजं त्वेवम्—पुरुषद्वयसम्, हस्तिनीद्वयसम्—इत्यादौ 'प्रमाणे ल' इति नित्यलुगापत्तिः । अयं नित्यो लुगिति तत्रैव भाष्यकैयटयोः स्पष्टमित्याहुः । तस्माद्द्विविधमपि तदुन्मानमेवेति बोध्यम् । तिर्यग्विस्तारपरिच्छेदकमेव च प्रमाणमिति । विस्तारः—दैर्घ्यम् ॥ नन्वायामपरिच्छेदके आयामशब्दः कथमत आह—**तच्चायामेति** ॥ **कुतश्चितदिति** । एषा सङ्ख्या कुतश्चित्सन्निवेशादेर्न मानम्, अपि तु तन्निरपेक्षं मानमित्यन्वयः । अनेन सन्निवेशनिरपेक्षत्वसापेक्षत्वाभ्यां सङ्ख्यापरिमाणयोर्भेद उक्तः । किञ्चानेन ग्रन्थेन सङ्ख्यायाः सर्वबाह्यत्वोक्त्या तेषामबाह्यत्वमपि परस्परं सूचितम् । अत एव 'अपरिमाणबिस्त—' इति सूत्रे 'परिमाणान्तस्य' इति सूत्रे च परिमाणग्रहणेनोन्मानग्रहणमपि । अत एव ङीप्निषेधे बिस्ताचितग्रहणम्, द्वितीये शाणपर्युदासश्च सङ्गच्छते ॥

**( संख्याया भेदे पूर्वोक्तदोषनिरासभाष्यम् )**

**यदप्युच्यते—'तदस्य परिमाणं संख्यायाः संज्ञासङ्घसूत्राध्ययनेष्विति विशेषणं न प्रकल्पत इति'**

**आहायम्—परिमाणं या संख्येति, न चास्ति संख्या परिमाणम्, तत्र वचनादियती विवक्षा भविष्यति ।**

**यदप्युच्यते—'क्रीतवत्परिमाणादिति च संख्याविहितस्य प्रत्ययस्यातिदेशो न प्रकल्पते इति'**

**संख्याया इति च तत्र वक्तव्यम् ॥**

( प्रदीपः ) **इयती विवक्षेति** । रूढिपरित्यागेन परिच्छेदकत्वमात्रमाश्रयिष्यते इत्यर्थः । नन्वेवमप्यव्यभिचारात् संख्याया विशेषणमनर्थकम् । नैष दोषः । प्रत्ययार्थस्य यदा परिच्छेदिका संख्या तदा प्रत्ययो यथा स्यात्—पञ्चको गोसंघ इति । यदा तु प्रकृत्यर्थस्यैव परिच्छेदिका संख्या—पञ्च गावोऽस्य संघस्येति तदा मा भूदित्येवमर्थं संख्या परिमाणग्रहणेन विशेष्यते ॥ **संख्याया इति च तत्रेति** । लक्ष्यसिद्धये संख्याग्रहणं तत्राधिकं कर्तव्यमित्यर्थः ॥

**(उद्द्योतः)** भाष्ये—**इयतीति** । यौगिकार्थमात्रविषयेत्यर्थः ॥ तदाह—**रूढिपरित्यागेनेति** । योग्यतावशाच्च विशिष्टस्योपस्थितावपि तावन्मात्रस्यैव[2] शाब्दबोधविषयतेत्याशयः । ईदृशे विषये लक्षणेत्यन्ये ॥ **पञ्चको गोसङ्घ** इत्यस्य पञ्चसङ्ख्यापरिच्छेद्यो गोसङ्घ इत्यर्थः ॥ **तत्राधिकमिति** । लक्षणैकचक्षुषां योगार्थमात्रतात्पर्यग्रहस्य वक्तुमशक्यत्वाद्वचनमेव कार्यमिति भावः ॥

**( ठगाद्यधिकारमर्यादासम्भवभाष्यम् )**

**किं पुनरिमे ठगादयः प्रागर्हाद्भवन्ति, आहोस्वित्सहार्हेण ।**

**कश्चात्र विशेषः ?**

१ इत्याद्युक्तिरपीति । 'कुतश्चिद्विशेषो गम्यते । न चोन्मानतो न परिमाणतो न प्रमाणतः' इति भाष्योक्तिरपीति भावः ॥

२ तावन्मात्रस्यैवेति । यौगिकार्थमात्रस्यैवेत्यर्थः ॥

( प्रदीपः ) किं पुनरिति । किं मर्यादायामाङ्, अथाभिविधाविति प्रश्नः । अर्हतिशब्दैकदेशानुकरणश्चात्रार्हशब्दः ॥

( उद्योतः ) अर्हतिशब्देति । 'तदर्हम्' इति सूत्रस्याजन्तग्रहे तु आर्हादित्यस्य वैयर्थ्यापत्तिः, 'प्राग्वतेः' इत्येव सिद्धेः । न चाभिविध्यर्थतया वत्यर्थेऽपि एतदधिकारार्थं तत् । वत्यर्थमभिव्याप्याधिकारानिष्टेः । विशेषविहितकना वतेर्बाधापत्तौ 'एकवचनात्सान्यतरस्याम्' इति प्रयोगविरोधापत्तेरिति भावः ॥

( ५६०९ प्रथममर्यादाऽऽक्षेपवार्तिकम् ॥ १ ॥ )

॥*॥ ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः ॥*॥

( भाष्यम् ) ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः । अर्हे ठगादयो विधेयाः । शतमर्हति-शत्यः—शतिकः, साहस्र इति ।

वस्ने वचनात्सिद्धम् ।

इह यः शतमर्हति शतं तस्य वस्नो भवति । तत्र "सोऽस्यांशवस्नभृतयः" (५।१।५६) इत्येव सिद्धम् ॥

( प्रदीपः ) वस्ने वचनादिति । पटादेरर्थस्य शत्यादिशब्दैरभिधानादिति भावः ॥

( उद्योतः ) वस्ने इति । वस्नः—मूल्यम् ॥

( ५६१० आक्षेपवार्तिकम् ॥ २ ॥ )

॥ * ॥ वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः ॥ * ॥

( भाष्यम् ) वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः । मांसौदनिकोऽतिथिः, श्वैतच्छत्रिकः, कालायसूपिकः ॥

तथा गुणानां परिप्रश्नो भवति—किमयं ब्राह्मणोऽर्हति ।

शतमर्हति-शत्यः, शतिकः, साहस्रः, नैष्किक इति न सिध्यति ॥

( प्रदीपः ) मांसौदनिक इति । न हि मांसौदनोऽतिथेर्मूल्यमिति भावः ॥

( द्वितीयमर्यादाक्षेपवार्तिकावतरणभाष्यम् )

सन्तु तर्हि सहार्हेण ॥

( ५६११ द्वितीयमर्यादाक्षेपवार्तिकम् ॥ ३ ॥ )

॥*॥ आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः ॥*॥

( भाष्यम् ) आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गो भवति—भोजनमर्हति, पानमर्हतीति ।

किमुच्यते भोजनादिष्वतिप्रसङ्ग इति, यदा छेदादिभ्य इत्युच्यते । अवश्यं मांसौदनिकाद्यर्थं योगविभागः कर्तव्यः—तदर्हति, ततः—छेदादिभ्यो नित्यमिति । तस्मिन् क्रियमाणे भोजनादिष्वतिप्रसङ्गो भवति ॥

( ५६१२ समाधानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

अनभिधानादिति ।

अनभिधानाद्भोजनादिष्वतिप्रसङ्गो न भवति ।

अथ वा योगविभागो न करिष्यते ।

कथं मांसौदनिकोऽतिथिः, श्वैतच्छत्रिकः, कालायसूपिकः ?

अस्मिन् दीयते, अस्मा इति च, एवमेतत्सिद्धम् ।

अथ वा पुनः सन्तु प्रागर्हात् ।

ननु चोक्तं ठगादयः प्रागर्हाच्चेदर्हे तद्विधिरिति । परिहृतमेतद्-वस्ने वचनात्सिद्धमिति ।

ननु चोक्तं वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिरिति, तथा गुणानां परिप्रश्नो भवति-किमयं ब्राह्मणोऽर्हति, शतमर्हति शत्यः, शतिकः, साहस्रः, नैष्किक इति न सिध्यतीति ।

अस्मिन् दीयते, अस्मा इति च—एवमेतत् सिद्धम् ॥

( प्रदीपः ) अस्मिन् दीयत इति । अधिकरणत्वं सम्प्रदानत्वं वा विवक्षित्वा प्रत्ययो विधास्यत इति विकल्पप्रदर्शनार्थमुभयोरुपादानम् । तत्र 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' इति योगविभागः क्रियते । 'तदस्मिन्' इत्येको योगः । 'वृद्ध्यायलाभशुल्कोपदा' इति द्वितीयः पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थः । 'दीयते' इति तृतीयो योग उभयोर्योगयोः शेषः । ततो दीयते तदस्मिन्निति सप्तम्यर्थे ठगादयः प्रत्यया भवन्ति । 'तदस्मिन् दीयते तदस्मा इति चोपसंख्यानम्' इति वचनाच्चतुर्थ्यर्थेऽपि भवन्तीति सर्वेष्टसिद्धिः । यद्यप्यर्हतेऽपि न दीयते तथापि योग्यतया संभावितदानाश्रयप्रत्ययोत्पादनेन विशिष्टस्वरूपनित्यशब्दव्युत्पत्तिरविरुद्धेति मन्यते ॥

( उद्योतः ) विकल्पेति । भाष्ये चशब्दो वाऽर्थ इति भावः ॥ ननु 'तदस्मिन्' इति सूत्रस्य 'वृद्ध्याय' इत्यादिवाक्यशेषात्कथमन्यत्र प्रत्ययोऽत आह—तत्रेति ॥ इति योगविभाग इति । इत्यत्र योगविभाग इत्यर्थः ॥ नन्वेवं चतुर्थ्यें न स्यादत आह—तदस्मिन्दीयते तदस्मा इति । एवं च 'प्राक्' पदानुवृत्त्यैव सिद्धे आङ्ग्रहणसामर्थ्यादभिविध्यर्थक एवायमत्रेति निष्कर्षः ॥

( ८३९ विधिसूत्रम् ॥ ५ । १ । १ आ. १३ )

## १९०२ असमासे निष्कादिभ्यः ॥ ५ । १ । २० ॥

( पदकृत्यभाष्यम् )

**असमास इति किमर्थम्?**

**परमनिष्केण क्रीतम्-परमनैष्किकम् ।**

**नैतदस्ति । निष्कशब्दात्प्रत्ययो विधीयते, तत्र कः प्रसङ्गो यत्परमनिष्कशब्दात्स्यात् । नैव प्राप्नोति, नार्थः प्रतिषेधेन ।**

**तदन्तविधिना प्राप्नोति ।**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥**

**अत उत्तरं पठति—**

(**प्रदीपः**) **असमास इति** । वक्ष्यमाणः प्रष्टुरभिप्रायः ॥ **परमनैष्किकमिति** । ठञेवात्र भवति । निष्कशब्दस्य परिमाणवाचित्वात् पूर्वेणाप्राप्तोऽनेन ठग्विधीयते ॥

(**उद्योतः**) **ठञेवात्रेति** । 'असमासे' इति पर्युदासेनाप्राप्तेः ॥ ननु निष्कस्योन्मानत्वेनापरिमाणत्वात्पूर्वेणैव ठकि सिद्धेऽस्य नियमार्थत्वेन निष्कशब्दात्प्रत्ययो विधीयत इत्यादिभाष्यासङ्गतिरत आह—**परिमाणवाचित्वादिति** । एतद्भाष्यप्रामाण्येनात्र परिमाणविशेषवाचकानामेव निष्कादीनां ग्रहणमिति भावः । तेषां तद्वाचित्वेऽपीदमेव भाष्यं मानम्, असमासग्रहणस्य तदन्तविधिज्ञापकतापरं भाष्यञ्च मानम् । अन्यथा पणपादादिविषये पूर्वसूत्रप्राप्तठको निवृत्त्या तच्चारितार्थ्यं स्पष्टमेव ॥ यद्वा पूर्वेण ठकि सिद्धे इदं व्यर्थमत आह—**परिमाणवाचित्वादिति** । पूर्वसूत्रे उन्मानस्यापि परिमाणग्रहणेन ग्रहणादिति भावः । पणपादादयोऽप्युन्मानमेवेति बोध्यम् । 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्युत्तरपदवृद्धिः । शाणपर्युदासाच्च तत्रोन्मानमपि गृह्यते । परिमाणविशेषा एव वा निष्कादयः । यद्यपि 'उत्तरपदस्य' इति सूत्रभाष्येऽत्र[1] सूत्रे 'संख्यायाः' इत्यनुवृत्तिरुक्ता, तथाप्यत्रत्यप्रयोगरूप[2]भाष्यविरोधेनोत्तरपदाधिकारप्रयोजनखण्डकपूर्वपक्षयुक्तिरूपतद्भाष्यं प्रौढिवाद इति भावः । अत[3] एव 'परिमाणान्तस्य' इत्यन्तग्रहणं चरितार्थम् । 'संख्यायाः' इत्यनुवृत्तौ तु तद्वैयर्थ्यं स्पष्टमेव । यद्वा[4] 'संख्यायाः' इत्यनुवर्त्त्यं तत्र वाक्यभेदेन व्याख्येयम् । तेन 'परिमाणान्तस्य' इत्यस्य—असंख्यापूर्वपदे क्वाचित्कत्वम् । अत एवास्याप्युत्तरपदे एव प्रवृत्तिरिति न तत्राधिकारप्रयोजनमिति तदाशयः । एतेन 'संख्यायाः संवत्सरसंख्यस्य च' इत्यत्र संवत्सरग्रहणमन्यत्र परिमाणग्रहणे कालाग्रहणज्ञापकमिति भाष्ये उक्तम् । तत्प्रामाण्याच्च 'परिमाणान्तस्य' इत्यत्र 'संख्यायाः' इत्यनुवृत्तिरवश्यवाच्या । अन्यथा 'संवत्सरस्य चेत्संख्यायाः' इति नियमार्थतासम्भवेनोक्तार्थज्ञापकता न स्यादित्यपास्तम् । 'परिमाणं तु सर्वतः' इतिलक्षणलक्षितपरिमाणत्वस्य संख्यायामिव कालेऽभावात्, लक्ष्याऽनुरोधेनासञ्जातविरोधन्यायेन च विधित्वमङ्गीकृत्य तज्ज्ञापनमेव युक्तमित्यभिप्रायाच्चेत्याहुः । अत[5] एव 'विभाषा कार्षापण' इति सूत्रे 'अध्यर्धसौवर्णिकम्' इत्यादिष्व[6]नेन वृद्धिर्वक्ष्यते कैयटेन । अन्य[7]था समासकन्विध्योरेव तस्य संख्यात्वेन तदसङ्गतिः स्पष्टैव ॥

( ५६१३ असमासपदप्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य ॥ * ॥

(**भाष्यम्**) **निष्कादिष्वसमासग्रहणं क्रियते ज्ञापकार्थम् ।**

**किं ज्ञाप्यम्?**

**एतज्ज्ञापयत्याचार्य्यः-पूर्वत्र तदन्तविधेः प्रतिषेधो न भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**"प्राग्वतेष्ठञ्" ( ५।१।१८ ) इत्यत्र तदन्तविधिः सिद्धो भवति ॥**

**नैतदस्ति प्रयोजनम् ।**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते, न च ठञ्विधौ काचित्प्रकृतिर्गृह्यते ।**

**इदं तर्हि प्रयोजनम्—"आर्हादगोपुच्छसंख्यापरिमाणाट्ठक्" ( ५।१।१९ )—परमगोपुच्छेन क्रीतं पारमगोपुच्छिकम् । अत्र तदन्तविधिः सिद्धो भवति॥**

**एतदपि नास्ति प्रयोजनम् ।**

**विधौ प्रतिषेधः, प्रतिषेधश्चायम् ।**

**एवं तर्हि ज्ञापयत्याचार्यः-इत उत्तरं तदन्तविधेः प्रतिषेधो न भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**"पारायणतुरायणचान्द्रायणं वर्तयति" ( ५।१। ७२) द्वैपारायणिकः, त्रैपारायणिकः । अत्र तदन्तविधिः सिद्धो भवति ॥**

**एतदपि नास्ति प्रयोजनम् । वक्ष्यत्येतत्-प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकीति ।**

---

१ अत्र सूत्रे-परिमाणान्तस्येति सूत्रे । एवञ्च संख्यापूर्वपदस्य परिमाणान्तस्योत्तरपदवृद्धिरित्यर्थः स्यात् । ततश्च परमनैष्किकमित्यत्र न स्यात् ॥

२ भाष्यविरोधेनेति । परमनैष्किकमिति प्रयोगविरोधेनेति भावः ॥

३ अत एव-संख्याया इत्यस्यानुवर्तनादेव ॥

४ परिमाणान्तस्येत्यत्र संख्याया इत्यस्यानुवृत्तौ संख्यायाः संवत्सरसंख्यस्य चेति सूत्रं नियमार्थं स्यात्—संवत्सरस्य चेत् संख्यापूर्वपदस्यैवेति । कालाग्रहणज्ञापनार्थं न स्यादत आह—यद्वेति ॥

५ अत एव-संख्याया इत्यस्याननुवर्तनादेव ॥

६ अनेन-'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यनेन ॥

७ अन्यथा-संख्याया इत्यस्यानुवृत्तौ, समासे कन्विधौ च संख्यापूर्वपदत्वेन परिमाणान्तस्येत्यस्योपस्थितौ, अत्र-अध्यर्धसौवर्णिकमित्यत्र परिमाणान्तस्येत्यस्योपस्थितिरसङ्गतैवेति भावः ॥

**पूर्वत्रैव तर्हि प्रयोजनम् । "खलयवमाषतिलवृषब्रह्मणश्च" (५।१।७) इति । कृष्णतिलेभ्यो हितः-कृष्णतिल्यः, राजमाषेभ्यो हितं-राजमाष्यम् ॥**

( प्रदीपः ) **निष्कादिष्विति** । पूर्वग्रहणं वार्तिककारः पठन् कृष्णतिल्यादि सिद्धमेव प्रयोजनं मेने । भाष्यकारस्तु न्यायव्युत्पादनाय पूर्वत्रग्रहणमविवक्षितार्थं मत्वा प्रयोजनानि प्रदर्श्य दूषयित्वा च कृष्णतिल्याद्यर्थत्वमेव ज्ञापकस्य स्थापयिष्यति ॥

**प्राग्वतेष्ठञित्यत्रेति** । तेन परमनिष्कशब्दाट्ठञ् सिद्धो भवति । केवलात् प्रातिपदिकाट्ठञ् विधीयमानः समासान्न स्यादित्याभासमात्रेणेदमुक्तम् ॥

**न च ठञ्विधाविति** । यत्र विशिष्टा प्रकृतिरुपादीयते तत्र तदन्तविधेः प्रतिषेधः । ठञ्विधौ तु ङ्याप्प्रातिपदिकाधिकारात् प्रातिपदिकमात्रं प्रकृतित्वेनाश्रीयते । तत्र हि समासस्यापि प्रातिपदिकत्वात्तदन्तविधेर्न विधिः, न प्रतिषेध इति ठञ् सिध्यतीति भावः ॥ **पारमगोपुच्छिकमिति** । ठक्प्रतिषेधाट्ठञ् भवति । यद्येवं केवलस्य प्रतिषेधो न प्राप्नोति–गौपुच्छिक इति । नैष दोषः । यस्यां परिभाषायां प्रातिपदिकश्रुतिरस्ति सेह नोपतिष्ठत इति सामान्यापेक्षं ज्ञापकमाश्रीयते । तेन 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति द्वयोरप्यत्रानुपस्थानात्तदन्तविधिना तदन्तस्य कार्यम्, केवलस्यापि व्यपदेशिवद्भावेन ॥

**विधौ प्रतिषेध इति** । 'पूर्वादिनिः' 'सपूर्वाच्च' इति प्रत्ययविधौ 'ग्रहणवता' इत्येतस्याः परिभाषाया ज्ञापितत्वाद् यत्रैव प्रत्ययो विधीयते तत्रैवानया तदन्तविधिः प्रतिषिध्यते । अगोपुच्छसंख्यापरिमाणादित्यनेन तु ठक् प्रतिषिध्यत इति न तदन्तविधिप्रतिषेधः, नापि व्यपदेशिवद्भावप्रतिषेधः । **अन्ये त्वाहुः**–गोपुच्छात्परष्ठक् साधुर्न भवतीत्येवं प्रतिषेधे विज्ञायमाने गोपुच्छश्रुतेः सर्वत्राविशेषात् केवलात्तदन्ताच्च ठकोऽसाधुत्वं सिध्यतीति नात्र तदन्तविधिना प्रयोजनमिति तदभावे तत्प्रतिषेधस्याप्रसङ्ग इति ज्ञापनस्यापि न प्रयोजनम् ॥

**वक्ष्यत्येतदिति** । तच्चावश्यं वक्तव्यम्—असत्यस्मिन् ज्ञापके विध्यर्थम्, सति तु नियमार्थम्–संख्यापूर्वपदानामेव यथा स्यात् । इह मा भूत्–परमपारायणं वर्तयतीति । तथा लुगन्तायाः प्रकृतेर्मा भूत्–द्विशूर्पेण क्रीतं द्विशौर्पिकमिति ॥

**राजमाष्यमिति** । ननु राजमाषशब्दस्य जात्यन्तरवाचित्वान्माषशब्दस्यानर्थक्यादत्र प्रत्ययो न प्राप्नोति । नैष दोषः । यथैकविंशतिर्नरसिंहो गौरखरो लोहितशालिरित्यादीनां समुदायानामर्थान्तराभिधायित्वेऽपि नावयवानामानर्थक्यम्, तथाऽस्यापि । शब्दसंस्काराय हि शास्त्रे सर्वत्र परिकल्पिताऽर्थवत्ताऽऽश्रीयते । तात्त्विकी तु वाक्यस्यैव, तस्यैवार्थस्य प्रत्यायनाय प्रयोगात् ॥

( उद्द्योतः ) ननु वार्तिके 'पूर्वत्र' इत्युक्तेर्भाष्ये 'पारायण'[1] इत्यादेरुदाहरणत्वं कथमत आह—**पूर्वत्रेति** ॥ **प्रयोजनानीति** । 'पारायण' इति सूत्रविषयाण्यपीत्यर्थः ॥

**आभासमात्रेणेति** । तद्बीजन्तु 'ग्रहणवता—'इति सिद्धान्तयुक्तिः ॥ ननु प्रातिपदिकरूपाप्रकृतिस्तत्रास्त्येवेत्यत आह—**यत्र विशिष्टेति** । तत्रैव विशेष्यसन्निधानात्तदन्तविधिप्रसक्तेरिति भावः ॥ **यद्येवमिति** । व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति निषिद्ध इति भावः ॥ **सामान्यापेक्षमिति** । स निषेधः सूत्रोपात्तान्तादिशब्दविषयक इत्यपि बोध्यम् । इदञ्च 'येनविधिः' इत्यत्र कैयटे स्पष्टम् ॥

विधावेव प्रतिषेध इत्यर्थे मानमाह—**पूर्वादित्यादि** । अन्यथा 'पूर्वादिनिः' इत्येव तदन्तविधिना सिद्धे 'सपूर्वाच्च' इतिवैयर्थ्यं स्पष्टमेव । अत्रैव 'पूर्वात्सपूर्वादिनिः' इत्येकसूत्रे कर्तव्ये योगविभागः 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्यस्य ज्ञापको बोध्यः ॥ **अन्ये त्वाहुरिति** । अत्रारुचिबीजन्तु विधावप्येवमेवार्थापत्तौ 'ग्रहणवता' इत्यस्य निर्विषयत्वापत्तिर्भाष्यविरोधश्च ॥

**आनर्थक्यादिति** । अनर्थकेन तदन्तविधेरभावादिति भावः ॥ **नावयवानामानर्थक्यमिति** । अत एव सुबन्तत्वसमानाधिकरणत्वप्रयुक्तसमाससिद्धिरिति भावः ॥ नन्वेतत्काल्पनिकम्, न वास्तवम्; तत्राह—**शब्दसंस्काराय हीति** ॥

( ५६१४ उपसङ्ख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि ॥ * ॥**

( भाष्यम् ) **प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि कर्तव्यम् । पारायणतुरायणचान्द्रायणं वर्तयति । द्वैपारायणिकः । त्रैपारायणिकः ।**

**अलुकीति किमर्थम्?**

**द्वाभ्यां शूर्पाभ्यां क्रीतम्—द्विशूर्पम्, त्रिशूर्पम् । द्विशूर्पेण क्रीतम्—द्विशौर्पिकम्, त्रिशौर्पिकम् ॥**

( प्रदीपः ) **द्वाभ्यामिति** । 'तद्धितार्थ' इति समासे कृते 'शूर्पादञन्यतरस्याम्' इत्यञ्ठञोरन्यतरस्य 'अध्यर्ध' इति लुक् । ततो द्विशूर्पेण क्रीतमित्यञभावे सामान्यविहितष्ठञ् भवति । तस्य द्विगुनिमित्तत्वाभावाल्लुगभावः । 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः ॥

( उद्द्योतः ) भाष्ये—**प्राग्वतेरिति** । इत[2] ऊर्ध्वमार्हीयेऽनार्हीये चेति शेषः ॥ अलुकीत्युक्तेः फलं दर्शयति—**समासे कृते**

1 पारायण इत्यादेरिति । निष्कादिष्वसमासग्रहणं ज्ञापकमित्यादिवार्तिके वार्तिककृता पूर्वत्र तदन्तविधेरप्रतिषेध उक्तः, तेन च पारायणतुरायणेति सूत्रे तदन्तविधेः सत्वेन पारायणिक इत्याद्युदाहरणं भाष्यकृतां कथं संगच्छेतेत्याशयः ॥

2 इत ऊर्ध्वमिति । असमासे निष्कादिभ्यः (५।१।२०) इत्यतः प्राक् तदन्तविधिरत्रत्यसमासग्रहणेन ज्ञाप्यते । इतः परं च 'प्राग्वतेः' इति वार्तिकेन तदन्तविधिर्बोध्यते । 'तदर्हति' (५।१।६३) इत्येतत्पर्यन्तमार्हीयम्, ततः परं 'तेन तुल्यं क्रिया चेद्वतिः' (५।१।११५) इत्येतत्पर्यन्तमनार्हीयम् । अतः प्राक् तदन्तविधिर्भवति ॥

इति ॥ अञभावे इति । लुगन्तायाः प्रकृतेस्तदन्तविधिना ग्रहणाभावादिति भावः । अलुकीत्यस्य[2] लुगन्ता या प्रकृतिस्तद्विषयस्तदन्तविधिर्नेति वाच्योऽर्थः ॥

( ८४० विधिसूत्रम् ॥ ५ । १ । १ आ. १४ )

## १९०३ शताच्च ठन्यतावशते ॥ ५ । १ । २१ ॥

( ठन्यतोरधिकरणम् )

( प्रदीपः ) 'संख्यायाः' इति कनि प्राप्ते ठन्यतौ विधीयेते । तत्र 'अशते' इति प्रत्ययार्थविशेषणं न प्रकृतेः, असंभवात् । न[3] हि शतशब्दस्याशते वृत्तिः संभवति । तत्र प्रत्ययार्थस्य द्विविधं शतत्वम्-प्रकृत्यर्थव्यतिरिक्तसंख्येयान्तरविषयम्, प्रकृत्यर्थविषयं च । तत्र पूर्वं यथा-शतेन क्रीतं शत्यं शाटकशतमिति[4] । अपरं तु-शतमध्यायाः परिमाणमस्य ग्रन्थस्य-शतक इति । अत्र[5] हि केवलं प्रत्ययोत्पादनाय प्रकृतिप्रत्ययार्थयोर्भेदविवक्षा, तात्त्विकस्त्वभेद इति प्रत्ययार्थस्यैकत्वेऽपि[6] शतत्वमस्त्येव । यथा शतमित्येकत्वे विभक्तिवाच्ये सत्यपि शतत्वं न निवर्तते ॥

( उद्योतः ) वार्तिकोत्थानायाह—**संख्याया इति** ॥ **प्रकृत्यर्थेति** । तद्व्यतिरिक्तं यत्संख्येयान्तरम्=संख्येयविशेषः, तद्विषयम्=तदाश्रितमित्यर्थः ॥ **यथा-शतेनेति** । अत्र च प्रत्ययार्थस्य शतत्वं शाटकशतादिपदान्तरसमभिव्याहारगम्यमिति बोध्यम् ॥ **अपरं त्विति** । इदं च पदान्तरानपेक्षं प्रत्ययान्तशब्दश्रवणमात्रेणैव गम्यते—प्रत्ययार्थोऽपि शतमिति ॥ नन्वत्र प्रकृतिप्रत्ययार्थयोर्भेदाभावात् कथं 'तदस्य परिमाणम्' इति प्रत्ययः, अपि च प्रत्ययार्थस्यैकत्वात् कथं शतत्वम्? अत आह—**अत्र हीति** । आरोपितभेदमादायैव प्रत्ययोत्पत्तिरिति भावः ॥ अन्त्यं[7] समाधत्ते—**प्रत्ययार्थस्यैकत्वेऽपीति** ॥

( ५६१५ अर्थविशेषबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः ॥ * ॥

( भाष्यम् ) शतप्रतिषेधेऽन्यशतत्वे प्रतिषेधो न भवतीति वक्तव्यम् ।

इह मा भूत्—शतेन क्रीतं शत्यं शाकटशतमिति ।
अन्यशतत्व इति किम्?
शतकं निदानमिति ॥

( प्रदीपः ) तत्रार्थस्य निषेधो मा भूदित्याह—**शतप्रतिषेध इति**[8] । तत्र **केचिदाहुः**—न्यायसिद्ध[10] एवार्थो वार्तिककारेण प्रतिपादितः । प्रकृत्यर्थस्य शतस्य यत्र प्रत्ययार्थत्वं तत्रान्तरङ्गमहेयम्, संख्यान्तरासाधारणं[11] च शतत्वम् । अन्यत्र तु शत्यं शाटकशतमित्यादौ शब्दान्तरप्रयोगसमधिगम्यत्वाद्बहिरङ्गमिति तत्र प्रतिषेधाप्रसङ्गः ॥ **अन्ये त्वाहुः**—शतको ग्रन्थ इत्यत्र ग्रन्थस्यैकसंख्यत्वाच्छतत्वमनुमीयते[12] । तत्र यथा 'वृक्षः' इत्यत्र मूलाद्यवयवसमवेतबहुत्वसंख्याश्रयं बहुवचनं न भवति, एवम्-अशते इति प्रतिषेधो ग्रन्थे न प्राप्नोति, अन्यशतत्वे च प्राप्नोतीति वार्तिकारम्भः । ततः—**अन्यशतत्वे** प्रतिषेधाभावात्सामर्थ्यादनुमीयमानशतत्वविषयः प्रतिषेधः संपद्यते । एवं च सति शतं गावः परिमाणमस्य गोसङ्घस्य-शतको गोसंघ इत्यत्रापि प्रतिषेधो भवति । 'आपिशलकाशकृत्स्नयोस्त्वग्रन्थे' इति वचनादन्यत्र प्रतिषेधाभावः । नियतकालाश्च स्मृतयो व्यवस्थाहेतव इति मुनित्रयमतेनाद्यत्वे साध्वसाधुप्रविभागः ॥

( उद्योतः ) **इत्याहेति** । इतिहेतौ ॥ भाष्ये—**अन्यशतत्वे इति** । प्रकृत्यर्थातिरिक्तगतशतत्वस्य प्रत्ययार्थत्वे इत्यर्थः ॥ **तत्रान्तरङ्गमिति** । पदान्तरसमभिव्याहारानपेक्षत्वादन्तरङ्गत्वम् ॥ **अहेयमिति** । शत्यं शाटकशतमित्यादौ शत्यं शाटकद्वयमित्यस्यापि संभवात्तस्य हेयत्वम् । अत एव तत्संख्यांतरसाधारणमित्याहुः ॥ **अन्ये**

---

१ अञभावे हेतुमाह—**लुगन्ताया इति** ॥

२ ननु अलुकीत्यस्य लुकि कर्तव्ये तदन्तविधिर्नेत्यर्थः स्यात् । तथा च द्विशूर्पेण क्रीतमित्यर्थे अञि कर्तव्ये तदन्तविधिः स्यादेवेत्यत आह—**अलुकीत्यस्येति** ॥

३ प्रकृतिविशेषणासम्भवं प्रकटयति—**न हीति** ॥

४ **शत्यं शाटकशतमितीति** । अत्र हि प्रकृत्यर्थव्यतिरिक्तं शाटकशतरूपं संख्येयान्तरं तद्विषयं शतत्वमस्ति । एवञ्च प्रकृत्यर्थव्यतिरिक्तसंख्येयान्तरविषयं शतत्वं प्रत्ययवाच्यं यत्र तत्र शताच्च ठन्यताविति प्रवर्तते । यत्र प्रकृत्यर्थविषयं शतत्वम्प्रत्ययवाच्यं तत्र नैतत्प्रवर्तते । शत्यमित्यत्र शाटकगतं शतत्वं प्रत्ययवाच्यं न तु प्रकृत्यर्थविषयमिति तत्रास्य प्रवृत्तौ बाधकाभावः । शतको ग्रन्थ इत्यत्र तु प्रकृत्यर्थविषयमेव शतत्वं प्रत्ययेनोच्यत इति नात्रास्य प्रवृत्तिः ॥

५ **अत्र हि**-शतमध्यायाः परिमाणमस्येत्यत्र हि । 'शतकः' इत्यत्र हि 'तदस्य परिमाणम्' इत्यनेन प्रत्ययो विधीयते । यदि चात्र प्रकृतिप्रत्ययार्थयोर्भेदः स्यात्तदा भेदसम्बन्धबोधकषष्ठ्यन्तेन अस्येति पदेन प्रत्ययो न प्राप्नुयादतो भेदविवक्षा ॥

६ **प्रत्ययार्थस्यैकत्वेऽपीति** । 'शतकः' इत्यादौ प्रत्ययार्थस्य संघादिरूपैकत्वेऽपि शतत्वमस्त्येव । तत्र दृष्टान्तमाह—**यथा शतमितीति** ॥

७ **अन्त्यं समाधत्त इति** । प्रत्ययार्थस्यैकत्वात्कथं शतत्वमित्याक्षेपं समाधत्त इत्यर्थः । आद्यं—प्रकृतिप्रत्ययार्थयोर्भेदाभावादित्यादि समाधत्ते—**आरोपितभेदमादायैवेति** ॥

८ **शतप्रतिषेध इति** । शताच्च ठन्यतावित्यत्र 'अशते' इत्यनेन अन्यशतत्वे-प्रकृत्यर्थव्यतिरिक्तसंख्येयान्तरविषये प्रतिषेधो न भवतीति वार्तिकार्थः ॥

९ आद्यस्य=प्रकृत्यर्थव्यतिरिक्तसंख्येयान्तरविषयस्य ॥

१० **न्यायसिद्ध इति** । शताच्च ठन्यतावित्यस्य हि-शतशब्दाट्ठन्यतौ भवतः शतत्वभिन्ने प्रत्ययार्थे-इत्यर्थः । तत्र प्रत्ययार्थस्य शतत्वं द्विधोपपद्यते—प्रकृत्यर्थगतशतत्वविषयकत्वेन, प्रकृत्यर्थातिरिक्तगतशतत्वविषयकत्वेन च । तत्रान्तरङ्गत्वात् प्रकृत्यर्थगतशतत्वविषयकमहेयमिति तस्यैव निषेधो नान्यस्येति भावः ॥

११ अहेयत्वे हेतुमाह—**संख्यान्तरासाधारणमिति** ॥

१२ **अनुमीयत इति** । एवञ्च प्रत्ययार्थस्य शतत्वाभावेन तत्र प्रतिषेधो न प्राप्नुयादित्येतदर्थं वार्तिकारम्भः ॥

**त्वाहुरिति** । शब्दमर्यादानुसारिण इत्यर्थः ॥ **अनुमीयत इति** । अवयवगतं तदारोप्य शब्दजबोधोत्तरं प्रतीतिविषयीक्रियत इत्यर्थः ॥ **बहुवचनं न भवतीति** । तस्य बहुत्वस्य शब्दजप्रतीतिविषयत्वाभावादिति भावः ॥ **एवमिति** । अस्य शतत्वस्य प्रत्ययार्थवृत्तितया शब्देनाप्रतीतेरिति भावः ॥ **अन्यशतत्वे इति** । तत्र हि प्रत्ययार्थस्य शब्देनैव प्रतीयते शतत्वम्—इति तत्रैव स्यादिति भावः ॥ **नियतकालाश्चेति** । कलौ पाराशरी स्मृतिरितिवदिति भावः ॥

---

( ८४१ विधिसूत्रम् ॥ ५ । १ । १ आ. १५ )

## १९०४ संख्याया अतिशदन्तायाः कन् ॥ ५ । १ । २२ ॥

( कनोऽधिकरणम् )

( उपसंख्यानभाष्यम् )

**डतेश्चेति वक्तव्यम् ।**

**इहापि यथा स्यात्—कतिभिः क्रीतं कतिकम् ।**

**किं पुनः कारणं न सिध्यति ?**

**त्यन्ताया नेति प्रतिषेधः प्राप्नोति ॥**

( प्रदीपः ) **डतेश्चेति** । विंशतिशब्दात्तु 'विंशतिकात्खः' इति ज्ञापकात्कन् भवति ॥

( उद्द्योतः ) ननु डतेरुपसंख्यानेऽपि विंशतेः कन्न स्यात्, तस्यापि त्यन्तत्वादत आह—**विंशतीति** ॥

( ५६१६ उपसंख्यानानर्थक्यबोधकं वार्तिकम् ॥ १ ॥ )

**॥ * ॥ तिप्रतिषेधाड्डुतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **अर्थवतस्तिशब्दस्य ग्रहणम्, न च डतेस्तिशब्दोऽर्थवान् ॥**

( प्रदीपः ) **न च डतेरिति** । समुदायस्यार्थवत्त्वात्तदवयवस्तिशब्दोऽनर्थकः । अत एव विंशतिशब्दे शतिचः प्रत्ययत्वात्तिशब्दस्यानर्थक्याज्ज्ञापकमन्तरेणापि कन् सिद्धः ॥

( उद्द्योतः ) **ज्ञापकमन्तरेणापीति** । यदा विंशादेशस्तिप्रत्ययश्च तदा तु ज्ञापकादेव सिद्धिर्बोध्या ॥

( सिद्धान्तभाष्यम् )

**नैषा परिभाषा इह शक्या विज्ञातुम्, न हि केवलेन प्रत्ययेनार्थो गम्यते ।**

**किं तर्हि ?**

**सप्रकृतिकेन ।**

**क्व तर्ह्येषा परिभाषा कर्तव्या भवति ?**

**यान्येतानि शब्दसंघातग्रहणानि ॥**

**तत्तर्हि वक्तव्यम् ?**

**न वक्तव्यम्, अर्थवद्ग्रहणात्सिद्धम् ।**

**ननु चोक्तम्—नैषा परिभाषेह शक्या विज्ञातुं न हि केवलेन प्रत्ययेनार्थो गम्यते केन तर्हि सप्रकृतिकेन—इति ।**

**केवलेनापि प्रत्ययेनार्थो गम्यते ।**

**कथम् ।**

**उक्तम्—अन्वयव्यतिरेकाभ्याम् ॥**

( प्रदीपः ) **नैषेति** । लौकिकार्थवत्ता प्रकृतीनां प्रत्ययानां च नास्ति, केवलानां प्रयोगाभावादिति भावः ॥ **यान्येतानीति** । यद्यपि प्रत्यया अपि शब्दसंघातास्तथापि तेषामानर्थक्यादर्थवन्तः शब्दसंघाता इह विवक्षिताः । यथोक्तम्—संग्रहणे पायसं करोतीति सुण्ण भवति । उद्ग्रहणे गर्मुद्ग्रहणं न भवति—गर्मुत् स्यास्यतीति । हन्ग्रहणे प्लीहन्ग्रहणं न भवति—'प्लीहानौ' इति ॥ **केवलेनापीति** । शास्त्रव्यवस्थाहेतुरन्वयव्यतिरेकगम्याऽर्थवत्ताऽऽश्रीयत इत्यर्थः । अत एव शेऽर्थवद्ग्रहणात्काशे कुशे इत्यादौ शेशब्दस्य ग्रहणाभावः । उपसर्गाणामपि केवलानां प्रयोगाभावाल्लौकिक्या अर्थवत्ताया अभावादन्वयव्यतिरेकव्यवस्थाप्यैवासावाश्रीयते ॥

( उद्द्योतः ) ननु शास्त्रेणार्थवत्ताबोधनात् कथमेतत् ? अत आह—**लौकिकीति** ॥ **संग्रहणे इति** । समादेर्लौकिकीमर्थवत्तां मन्यते ॥ **अन्वयव्यतिरेकगम्येति** । शास्त्रवासनाकल्पितान्वयव्यतिरेकगम्येत्यर्थः ॥ **उपसर्गाणामपीति** । धातोरप्युपलक्षणम् । लौकिक्या अर्थवत्ताया ग्रहणे तु उपसर्गाणामपि तदभावात्तदसंगतिः स्पष्टैवेति दिक् ॥ **अन्वयव्यतिरेकेति** । ताभ्यां व्यवस्थापनीयैवेत्यर्थः ॥

---

( ८४२ विधिसूत्रम् ॥ ५ । १ । १ आ. १६ )

## १९०५ वतोरिड्वा ॥ ५ । १ । २३ ॥

( इडागमाधिकरणम् )

( एकदेश्याक्षेपभाष्यम् )

**कस्यायमिड्विधीयते ?**

**कन इत्याह ।**

**तत्कनो ग्रहणं कर्तव्यम्, अक्रियमाणे हि प्रत्ययाधिकारात् प्रत्ययोऽयं विज्ञायेत ।**

**टित्करणसामर्थ्यादादिर्भविष्यति ।**

---

१ अर्थवद्ग्रहणपरिभाषा च लौकिकार्थवत्स्यैवोपतिष्ठते न शास्त्रीय इत्याश्रित्य—नैषा परिभाषेत्यादि उक्तं भगवता, सिद्धान्ते तु शास्त्रीयाऽप्यन्वयव्यतिरेकगम्याऽऽश्रीयत इत्याह—केवलेनापि प्रत्ययेनार्थ इत्यादि ॥

२ 'लौकिक्यर्थवत्ता' इति च. झ. ञ. पाठः ॥

३ सुण्णेति । सम्परिभ्यां करोतौ भूषण इत्यनेन । गर्मुत् स्यास्यतीत्यत्र उदस्थाःस्तम्भोः पूर्वस्येति पूर्वसवर्णः । प्लीहानावित्यत्र इन्हन्निति नियमो नेत्यर्थः ॥

४ लौकिकार्थवत्ताया आश्रयेण न केवलं प्रकृतिप्रत्ययविषय एव दोषः किन्त्वन्यत्रापीति दर्शयति—उपसर्गाणामपीति ॥

अस्त्यन्यट्टित्करणस्य प्रयोजनम्—टित इति ईकारो यथा स्यात् ।

अकारान्तप्रकरणे ईकारः, न चैषोऽकारान्तः ।

एवमपि कुत एतत्—टित्करणसामर्थ्यादादिर्भविष्यति, न पुनरकारान्तप्रकरणे अनकारान्तादपि ईकारः स्यात् ?

तस्मात्कनो ग्रहणं कर्तव्यम् ॥

( प्रदीपः ) कस्यायमिति । टित्वादस्यागमत्वं निश्चितम्, आगमी तु न निर्दिष्ट इति तद्विषयः प्रश्नः । वतोः—इति पञ्चमीनिर्देशाद्वत्वन्तस्यागमित्वमयुक्तम् ॥ कन इति । वत्वन्तस्य संख्यात्वात् पूर्वेण विहितस्येति भावः । आनन्तर्याच्च कनमागमिनं मन्यते ॥ तदिति । संख्यायास्तावदनेकस्य प्रत्ययस्य विधानादागमिविशेषो दुर्लभः । प्रत्ययाधिकाराच्च 'चरेष्टः' इत्यादिवदिटः प्रत्ययत्वप्रसङ्गः ॥ अनकारान्तादिति । यथा डित्यभस्यापि टिलोपः ।

अथ[1] प्रयोजनाभावाट्टकारस्येत्संज्ञा न भवतीति कस्मान्न कल्प्यते । नैतदस्ति । 'हलन्त्यम्' इति श्रुतेर्बलीयस्त्वादत इति प्रकरणदुर्बलस्य बाधोपपत्तौ प्रयोजनलाभात् ॥

( उद्द्योतः ) ननु वत्वन्तादिडित्यर्थात्, प्रत्ययविधेश्च कस्यायमिट्—इत्यनुपपन्नमत आह—टित्वादिति ॥ पञ्चमीति । व्याख्यानादिति भावः ॥ संख्यात्वात्–संख्यासंज्ञत्वात् ॥ ननु संख्यावाचकेभ्यः पाङ्क्तिरित्यादौ इञादिरपि विहित इति कन एवेति कुतः ? तत्राह—आनन्तर्याच्चेति ॥ संख्यायास्तावदिति । व्यासिन्यायाश्रयणादानन्तर्यानादरं मन्यते ॥ युक्त्यन्तरमाह—प्रत्ययाधिकाराच्चेति ॥

( समाधानभाष्यम् )

न कर्तव्यम् । प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

"संख्याया अतिशदन्तायाः कन्" (५।१।२२) इति ।

तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ।

वतोरित्येषा पञ्चमी कन्निति प्रथमायाः षष्ठीं प्रकल्पयिष्यति—"तस्मादित्युत्तरस्य" इति ।

प्रत्ययविधिरयम्, न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ।

नायं प्रत्ययविधिः, विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥

( प्रदीपः ) न चेति । पञ्चमी हि प्रत्ययस्वरूपमुत्पादयति, यथा 'गुप्तिज्किद्भ्यः सन्' इति । न तु षष्ठीं प्रकल्पयति, असतः[2] षष्ठीप्रकल्पनाभावादिति भावः ॥ प्रकृतश्चेति । स्वरितत्वप्रतिज्ञानादिति भावः ॥

ननु विधानार्थाऽपि कनोऽनुवृत्तिः संभवति, इटा मा बाधीति । तत्रेट्कनौ वा भवतः पक्षे ठन्—इति प्रत्ययत्रयं स्यात् । नैष दोषः । पूर्वसूत्रेण तावत् कन्विहित इति तस्येहानुवृत्तिर्विधानार्था न भवतीति प्रतीतिरुपजायते । 'तस्मादित्युत्तरस्य' इत्येषा च परिभाषाऽवतिष्ठते, तत्र किमनिष्टप्रकल्पनयाऽनेकबाधोऽस्तु ? अथेष्टप्रकल्पनया सर्वानुग्रह इति । तत्र सर्वानुग्रहो न्याय्यः, लक्ष्यस्य तथाऽवस्थानाच्च ॥

( उद्द्योतः ) प्रत्ययविधौ पंचम्याः प्रकल्पकत्वाभावे बीजमाह—पञ्चमी हीति । प्रत्ययसंज्ञाविशिष्टस्य तद्योगे[3] विधानात्तस्याः प्रत्ययस्वरूपोत्पादकत्वं बोध्यम् । प्रकृतानुवृत्तौ[4] तु पूर्वसूत्रविहितत्वेन सत्त्वात् तत्र षष्ठीप्रकल्पनं युक्तमित्युत्तरम् ॥ अनेकेति । विधानार्थत्वाभावपूर्वकनियामकत्वप्रतीतेः, 'तस्मात्' इति परिभाषायाश्चेत्यर्थः ॥ तथावस्थानाच्चेति । तावतिकस्तावत्क[5] इत्येवमेवावस्थानादित्यर्थः । एवंच लक्ष्यानुसारिव्याख्यानमेवात्र शरणमिति भावः ॥

---

( ८४३ विधिसूत्रम् ॥ ५ । १ । १ आ. १७ )

## १९०६ विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ॥ ५ । १ । २४ ॥

( कन्ड्वुनोरधिकरणम् )

( पदकृत्यभाष्यम् )

असंज्ञायामिति किमर्थम् ? त्रिंशत्कः, विंशतिकः ।

कथं चात्र कन् भवति ?

संख्यायाः कन् भवतीति ।

अतिशदन्ताया इति प्रतिषेधः प्राप्नोति ।

एवं तर्ह्याचार्य्यप्रवृत्तिर्ज्ञापयति—भवत्यत्र कन्निति, यदयं "विंशतिकात्खः" (५।१।३२) इति प्रत्ययान्तनिपातनं करोति ।

विंशतेरेतज्ज्ञापकं स्यात् ।

नेत्याह, योगापेक्षं ज्ञापकम् ।

अथ वा योगविभागः करिष्यते—विंशतित्रिंशद्भ्यां कन् भवतीति ।

ततः—ड्वुनसंज्ञायामिति ॥

---

१ ननु 'इट्' इत्यत्र टकारस्येत्संज्ञायामपि ङीब्विधायके अत इत्यस्यानुवर्तनात्स न प्राप्नोति, 'प्रत्ययः' 'परश्च' इत्यधिकारात् 'आद्यन्तौ टकितौ' इत्यपि न प्राप्नोति—इति टित्वं व्यर्थमतष्टकारस्येत्संज्ञैव नेति वाच्यमिति चेन्न प्रकरणात्प्राप्तस्यात इत्यस्य बाधनमेव टित्करणस्य फलं मन्यते, हलन्त्यमिति श्रुतिबाधकल्पनं नोपपद्यत इत्येतदाह—अथ प्रयोजनाभावादिति ॥

२ असत इति । स्वरूपेणासतः प्रत्ययस्य पञ्चम्या षष्ठीप्रकल्पनं न सम्भवतीति भावः ॥

३ तद्योगे इति । पञ्चमीयोगे प्रत्ययसंज्ञाविशिष्टस्य विधानात्पञ्चम्याः प्रत्ययस्वरूपोत्पादकत्वमित्यर्थः ॥

४ प्रकृतानुवृत्ताविति । प्रकृतस्य कन्प्रत्ययस्यात्रानुवृत्तौ तस्य कनः पूर्वसूत्रेण विहितत्वात्कन्प्रत्ययः सिद्ध इति तस्य षष्ठीकल्पनं युक्तमिति भावः ॥

५ तावतिक इति । कन्प्रत्ययान्तमेवोदाहरणम्, न तु ठञ्प्रत्ययान्तं केवलइट्प्रत्ययान्तं वा दृश्यत इति लक्ष्यानुरोधात्कन इडेव विधीयत इति भावः ॥

( प्रदीपः ) **प्रत्ययान्तनिपातनमिति** । कन्प्रत्ययान्तोच्चारणमित्यर्थः ।

ननु विंशतिशब्दे शतिचः प्रत्ययत्वात्तिशब्दस्यानर्थक्यात् प्रतिषेधप्रसङ्गाभावात्किं ज्ञापकाश्रयणेन ? उच्यते—द्विदशशब्दस्य विंशादेशस्तिप्रत्यय इत्येषा प्रक्रियाऽऽश्रीयते । एवं हि ज्ञापकाश्रयणेन त्रिंशत्कशब्दोऽपि सिध्यति । अन्यथा त्रिंशच्छब्दे शतोऽर्थवत्त्वादशदन्ताया इति प्रतिषेधः स्यात् ॥

ननु विंशतिशब्दादज्ञातायर्थविवक्षायां कन्प्रत्यये विंशतिकशब्दः स्यादिति कथं ज्ञापकम् ? नैतदस्ति । स्वार्थिके कन्प्रत्यये विंशतिकाया इति निर्देशः स्याद् । असंज्ञायां ड्वुनो विधानात् संज्ञाविषयमेव ज्ञापकमाश्रयणीयम् ॥

**योगापेक्षमिति** । यथा 'पुंवत्' इति योगापेक्षत्वाज्ज्ञापकस्य वत्यर्थे नञ्स्नञोरप्रवृत्तौ स्त्रीवदित्यपि भवति, एवम्—एतद्योगापेक्षं 'विंशतिकात्' इति ज्ञापकमिति त्रिंशत्कशब्दोऽपि संज्ञायां भवतीत्यर्थः ॥

( उद्द्योतः ) ननु निपातनत्वे ज्ञापकत्वोक्तिरसंगतेत्यत आह—**कन्प्रत्ययान्तेति** ॥ **एषा प्रक्रियेति** । भाष्यानुगुण्यादेतत्प्रक्रियाश्रयणमेव युक्तमिति भावः ॥ तत्प्रक्रियाश्रयणे युक्त्यन्तरमाह—**एवं हीति** ॥ **निर्देशः स्यादिति** । विंशत्यादि-नवत्यन्तानां स्त्रीत्वात् स्वार्थिकानां प्रकृतिलिङ्गानतिवर्तनादिति भावः । सूत्रेऽस्य शब्दपरत्वादिदमयुक्तम् । व्याख्यानात्तस्याग्रहणमिति वक्तुं युक्तम् ॥ नन्वेवमसंज्ञायामप्येतस्माज्ज्ञापकात् विंशतिक इति स्यादत आह—**असंज्ञायामिति** ॥ **एतद्योगेति** । 'विंशतित्रिंशद्भ्याम्' इति योगेत्यर्थः ॥

( ८४४ विधिसूत्रम् ॥ ५ । १ । १ आ. १८ )

## १९०७ कंसाट्टिठन् ॥ ५ । १ । २५ ॥

( टिठन्प्रत्ययाधिकरणम् )

( उद्द्योतः ) 'कंसाट्टिठन्' इति पाठान्तरम् ॥

( ५६१७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ टिठन्नर्धाच्च ॥ * ॥

**( भाष्यम् ) टिठन्नर्धाच्चेति वक्तव्यम् । आर्धिकः, आर्धिकी ॥**

( प्रदीपः ) **आर्धिक इति** । अर्धशब्दः कार्षापणस्यार्धे रूढ इति भागवदपेक्षायामसामर्थ्यं नाशङ्कनीयमिति **केचिदाहुः** । **अन्ये** तु प्रकरणादिवशाद्यदा निर्ज्ञातो भागवद्विशेषो भवति तदा नास्त्यसामर्थ्यमिति सर्वस्यैवार्धस्य ग्रहणेन भाव्यमित्याहुः ॥

( उद्द्योतः ) **भागवदपेक्षयेति** । अर्धशब्दस्य भागवाचित्वादिति भावः ॥ **इत्याहुरिति** । वस्तुतो नित्यसापेक्षत्वेन गमकत्वान्नासामर्थ्यमिति बोध्यम् । कंसशब्दोऽत्र पूर्वोत्तरसाहचर्यात् परिमाणवाच्येव गृह्यते, न लोहविशेषवाचीत्याहुः ॥

( ५६१८ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ कार्षापणाद्वा प्रतिश्च ॥ * ॥

**( भाष्यम् ) कार्षापणाद्वा टिठन्वक्तव्यः, वा च प्रतिरादेशो वक्तव्यः । कार्षापणिकः, कार्षापणिकी । प्रतिकः, प्रतिकी ॥**

( ८४५ विधिसूत्रम् ॥ ५ । १ । १ आ. १९ )

## १९१० अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ॥ ५ । १ । २८ ॥

( उद्द्योतः ) समाहारे द्वन्द्वः, सौत्रं पुंस्त्वम् ॥

( ५६१९ निमित्तग्रहणावश्यकत्वबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ द्विगोर्लुक्युक्तम् ॥ * ॥

( लुकोऽधिकरणम् )

**( भाष्यम् ) किमुक्तम् ?**

**तत्र तावदुक्तम्—*द्विगोर्लुकि तन्निमित्तग्रहणम्* अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि* इति ।**

**इहापि द्विगोर्लुकि तन्निमित्तग्रहणं कर्तव्यम् । द्विगोर्निमित्तं यस्तद्धितस्तस्य लुग्भवतीति वक्तव्यम् । इह मा भूत्—द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम् । द्विशूर्पेण क्रीतं द्विशौर्पिकम् । त्रिशौर्पिकम् ।**

***अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि* ।**

**अर्थविशेषस्यासंप्रत्ययेऽतन्निमित्तादपीति वक्तव्यम् ।**

**किं प्रयोजनम् ? द्वयोः शूर्पयोः समाहारः—द्विशूर्पी । द्विशूर्प्या क्रीतमिति विगृह्य द्विशूर्पमित्येव यथा स्यात् ॥**

---

१ असंज्ञायामिति । विंशतिकात्ख इत्यादिनिर्देशेन विंशतित्रिंशच्छब्दाभ्यां कन्प्रत्ययो भवतीति यदि ज्ञाप्येत तदा ज्ञापितः कन् ड्वुनमपि बाधेत । तथा चासंज्ञायां 'विंशतिकः' इति ड्वुन्प्रत्ययापवादः कन् स्यात् स मा भूदतः संज्ञायामेव विंशतित्रिंशच्छब्दाभ्यां कन्प्रत्ययो भवतीति ज्ञाप्यत इति न दोषः ॥

२ अयुक्तमिति । विंशतिकादिति सूत्रे विंशतिशब्दस्य शब्दपरकत्वेन स्त्रीत्वाभावात् विंशतिकाया इति निर्देशः स्यादित्युक्तिरसङ्गतेति भावः । वस्तुतस्तु 'खार्या ईकन्' इत्यादौ शब्दपरकस्यापि खारीशब्दस्य स्त्रीत्वदर्शनात्कैयटोक्तमपि युज्यत ॥

३ ननु स्वार्थिककन्प्रत्ययान्तस्यापि विंशतिशब्दस्य विंशतिकादिति निर्देशोपपत्तौ कथं तन्निर्देशस्य ज्ञापकत्वमत आह—व्याख्यानादिति । व्याख्यानादेव विंशतिकशब्दे स्वार्थिककन्प्रत्ययस्य न ग्रहणमिति भावः ॥

४ ननु अर्धशब्दस्य नित्यसापेक्षत्वेन 'अर्धेन क्रीतः' इत्यादेरसंभवात् 'टिठनर्धाच्च' इति वार्तिकस्य अर्धान्तादार्हीयेऽर्थे टिठन्नित्यर्थो वाच्यः स्यात् । तथाच 'आर्धिकः' इति भाष्योदाहरणं न युज्येतेत्याशङ्कायामाह—अर्धशब्द इत्यादि ॥

५ सर्वस्यैव=कार्षापणस्यार्धे रूढस्यार्धशब्दस्य, भागवाचिनोऽर्धशब्दस्य च ॥

६ अर्धशब्दस्य सापेक्षत्वमुपपादयति—भागवाचित्वादिति ॥

७ अध्यर्धपूर्वेति न द्विगोर्विशेषणमित्याह—समाहारे इति ॥

( प्रदीपः ) द्विगोर्लुक्युक्तमिति । 'द्विगोर्लुगनपत्ये' इत्यत्र भाष्ये व्याख्यातमिति तत एव बोद्धव्यम् ॥

( उद्द्योतः ) भाष्ये—द्विशौर्पिकमिति । अत्र द्वितीयस्य ठको लुक् माभूदिति भावः ॥ अर्थविशेषेति । तद्धितार्थद्विगुना सह यत्रार्थौ न भिद्येते तत्रातन्निमित्तद्विगोरपि परस्य लुगित्यर्थः ॥ इति विगृह्य द्विशूर्पमिति । विग्रहो वृत्तिश्चेत्युभयमत्रेष्यते ॥

( तन्निमित्तपदार्थबोधकभाष्यम् )

अथ क्रियमाणेऽपि तन्निमित्तग्रहणे कथमिदं विज्ञायते-तस्य निमित्तं-तन्निमित्तम्, तन्निमित्तादिति, आहोस्वित्स निमित्तं यस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति ।

किं चातः ?

यदि विज्ञायते—तस्य निमित्तं तन्निमित्तम्, तन्निमित्तादिति ।

क्रियमाणेऽपि हि तन्निमित्तग्रहणेऽत्र प्राप्नोति—द्वाभ्यां शूर्पाभ्यां क्रीतं द्विशूर्पम्, द्विशूर्पेण क्रीतं द्विशौर्पिकम् । त्रिशौर्पिकम् ।

अथ विज्ञायते—स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति ।

न दोषो भवति ।

यथा न दोषस्तथाऽस्तु ।

स निमित्तमस्य सोऽयं तन्निमित्तः, तन्निमित्तादिति विज्ञायते ।

कुत एतत् ?

यदयमाह—अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति ।

( निमित्तग्रहणानावश्यकत्वबोधकभाष्यम् )

तत्तर्हि तन्निमित्तग्रहणं कर्तव्यम् ।

न कर्तव्यम् ।

द्विगोरिति नैषा पञ्चमी ।

का तर्हि ?

संबन्धषष्ठी । द्विगोस्तद्धितस्य लुग्भवति । द्विगोर्यस्तद्धितः ।

किं च द्विगोस्तद्धितः ?

निमित्तम् । यस्मिन् द्विगुरित्येतद्भवति ।

कस्मिंश्चैतद्भवति ?

प्रत्यये ।

इदं तर्हि वक्तव्यम्—अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति ।

एतच्च न वक्तव्यम् । इहास्माभिस्त्रैशब्द्यं साध्यम्—द्वाभ्यां शूर्पाभ्यां क्रीतम्, द्विशूर्प्या क्रीतम्, द्विशूर्पम् । त्रिशूर्पमिति ।

तत्र द्वयोः शब्दयोः समानार्थयोरेकेन विग्रहः करिष्यते, अपरस्मादुत्पत्तिर्भविष्यति—अविरविक-न्यायेन ।

तद्यथा—अवेर्मांसमिति विगृह्य अविकशब्दादुत्पत्तिर्भवति—आविकमिति ।

एवमिहापि-द्वाभ्यां शूर्पाभ्यां क्रीतमिति विगृह्य—द्विशूर्पमिति भविष्यति ।

द्विशूर्प्या क्रीतमिति विगृह्य—वाक्यमेव भविष्यति ॥

( उद्द्योतः ) भाष्ये—इति विगृह्य वाक्यमेवेति । न तु वृत्तिः, अनभिधानादिति भावः ॥

( पदकृत्यभाष्यम् )

असंज्ञायामिति किमर्थम् ?

पाञ्चलोहितिकम्, पाञ्चकलापिकम् ॥

( ५६२० असंज्ञाग्रहणानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्य ॥ * ॥

( भाष्यम् ) संज्ञाप्रतिषेधश्चानर्थकः ।

किं कारणम् ?

तन्निमित्तत्वाल्लोपस्य । नान्तरेण तद्धितं तद्धितस्य च लुकं द्विगुः संज्ञाऽस्ति, यस्तस्मादुत्पद्यते नासौ तन्निमित्तं स्यात् । एवं तर्हि इदं स्यात्—पञ्चानां लोहितानां समाहारः पञ्चलोहिती, पञ्चलोहित्या क्रीतमिति ।

अत्रापि पञ्चलोहितमित्येव भवितव्यम् ।

कथम् ?

उक्तं ह्येतत्—अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपीति ॥

( प्रदीपः ) संज्ञाप्रतिषेधानर्थक्यमिति । इह वृत्तिकारा असंज्ञाग्रहणं प्रत्ययान्तविशेषणं व्याचक्षते—न चेत् प्रत्ययान्तं संज्ञेति । पाञ्चलोहितिकपाञ्चकलापिकशब्दौ च परिमाणविशेषस्य संज्ञे इति लुङ् भवति ।

वार्तिककारस्तु—द्विगुविशेषणमसंज्ञाग्रहणं सन्निधानादवगम्य प्रत्याचष्टे—तन्निमित्तत्वादिति । तस्याः संज्ञाया लोप एव निमित्तमित्यर्थः । पञ्चलोहितपञ्चकलापशब्दौ द्विगू कृततद्धितलुकावेव संज्ञे, ततो नार्थः प्रतिषेधेनेत्यर्थः ॥ पञ्चलोहितीति । समाहारद्विगुं संज्ञां मन्यते । ततश्च नलोपनिमित्तैव संज्ञा ॥ अत्रापीति । अव्यविकन्यायेन वाक्यविषय एव समाहारद्विगुरित्यर्थः ॥

( उद्द्योतः ) ननु द्विगोः संज्ञात्वाभावात्कथमेतत्प्रत्युदाहरणमत आह—इहेति ॥ प्रत्ययान्तविशेषणमिति । सप्तमीनिर्देशादिदं द्विगोर्न विशेषणम्, किन्तु प्रत्ययान्तस्यासंज्ञात्वे लुगित्यर्थ इति

भावः। पञ्च लोहिन्यः पंच कलापाः परिमाणमस्येति 'तद्धितार्थे' इति समासः। 'तदस्य परिमाणम्' इति ठञि 'भस्याढे' इति पुंवत्त्वाल्लोहिनीशब्देकारनकारयोर्निवृत्तिः ॥ **परिमाणविशेषस्येति** । तत्संख्याकगुञ्जाकलापादिपरिच्छिन्नस्येत्यर्थः। **द्विगुविशेषणमिति** । विषयत्वं सप्तम्यर्थः, संज्ञाविषयो द्विगुर्न चेदित्यर्थः ॥ **तस्याः संज्ञाया इति** । सत्येव लुकि संज्ञाप्रतीतेरिति भावः ॥

( ५६२१ अध्यर्धग्रहणानर्थक्यबोधकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ उक्तं संख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम् ॥ * ॥**

( भाष्यम् ) उक्तं संख्यात्वेऽध्यर्धग्रहणस्य प्रयोजनम्।

किमुक्तम्?

अध्यर्धग्रहणं च समासकन्विध्यर्थं लुकि चाग्रहणमिति ।

तस्मादिहाध्यर्धग्रहणानर्थक्यम्।

तस्मादिहाध्यर्धग्रहणमनर्थकम्, द्विगोरित्येव लुक् सिद्धः ॥

( प्रदीपः ) **अध्यर्धग्रहणं चेति** । 'बहुगण' आदिसूत्र इदमुक्तम्। न च संख्याकार्याभावज्ञापनमध्यर्धग्रहणस्येह प्रयोजनम्, कन्समासाभावप्रसङ्गात् । तस्मात्तत्रत्यं वार्तिकमेव कर्तव्यम्, तस्मिंश्च सति इहाध्यर्धग्रहणमनर्थकम्, द्विगुत्वाल्लुकः सिद्धत्वात् ॥

( उद्द्योतः ) **न चेति** । तेन क्त्वसुजभाव इति भावः ॥ **तस्मादिति** । वार्तिके च कृते समासकनोरेव संख्यात्वोपसंख्यानात् क्त्वसुजभावः सिद्ध एवेति भावः ॥

---

( ७४६ विधिसूत्रम् ॥ ५ । १ । १ आ. २० )

## १९११ विभाषा कार्षापणसहस्राभ्याम् ॥ ५ । १ । २९ ॥

( ५६२२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानं कर्तव्यम्। अध्यर्धसुवर्णम्, अध्यर्धसौवर्णिकम् । अध्यर्धशतमानम्, अध्यर्धशातमानम्। द्विशतमानम्, द्विशातमानम् ॥

( प्रदीपः ) **अध्यर्धसुवर्णमिति** । अध्यर्धेन सुवर्णेन क्रीतमिति द्विगौ कृते ठञो लुक्। अलुक्पक्षे 'परिमाणान्तस्य' इत्युत्तरपदवृद्धिः । उन्मानस्यापि वृद्धौ शाणप्रतिषेधात् ग्रहणात्[1] ॥ **द्विशातमानमिति** । 'शतमान' आदिसूत्रेणाण् ॥

( उद्द्योतः ) **ठञो लुगिति** । सहस्रादप्यस्यैव लुक्। कार्षापणस्य परिमाणत्वे ततोऽप्यस्यैव लुक् । अन्यथा ततष्ठको लुगिति बोध्यम्। शाणप्रतिषेधाद्धेतोरुन्मानस्यापि वृद्धौ ग्रहणादित्यन्वयः ॥

---

( ८४७ विधिसूत्रम् ॥ ५ । १ । १ आ. २१ )

## १९१२ द्वित्रिपूर्वान्निष्कात् ॥ ५।१।३० ॥

( ८४८ विधिसूत्रम् ॥ ५ । १ । १ आ. २२ )

## १९१३ बिस्ताच्च ॥ ५ । १ । ३१ ॥

( उद्द्योतः ) अत्राध्यर्धग्रहणं न संबध्यते, विरोधात्, चस्याभावाच्च । द्विगोरिति तु संबध्यते षष्ठीसमासन्यावृत्तये इति बोध्यम्। उत्तरत्र त्वनुवर्तत एव ॥

( ५६२३ सूत्रविषयनिर्धारकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ द्वित्रिभ्यां द्वैयोग्यम् ॥ * ॥**

( भाष्यम् ) द्वित्रिभ्यामिति यदुच्यते द्वैयोग्यमेतद्द्रष्टव्यम्।

किमिदं द्वैयोग्यमिति?

द्वयोर्योगयोर्भवं—द्वियोगम्, द्वियोगस्य भावो द्वैयोग्यमिति ॥

( प्रदीपः ) **द्वयोर्योगयोरिति** । तद्धितार्थे द्विगौ कृते 'बह्वचोऽन्तोदात्ताट्ठञ्', 'द्विगोर्लुगनपत्ये' इति लुक् । अथ द्विगुर्न व्याख्यातव्यनाम तदा अण एव लुक् । द्वैयोग्यशब्देन चाधाराधेयभाव उच्यते, 'समासकृत्तद्धितेषु संबन्धाभिधानम्—'इति वचनात् ॥

( उद्द्योतः ) **भाष्ये—द्वित्रिभ्यामिति** । अनेन सूत्रे पूर्वग्रहणं चिन्त्यप्रयोजनमिति ध्वनयति ॥ **आधाराधेयभाव इति** । तेन च स्वाश्रयो लक्ष्यते—इति 'एतद्द्वैयोग्यम्' इति सामानाधिकरण्योपपत्तिः । तद्धितप्रयोगस्तु 'प्रियतद्धिता दाक्षिणात्याः' इति न्यायेनेति दिक् ॥

( वार्तिकप्रत्याख्याने भाष्यम् )

द्वैध्यं विजानीयादविशेषेणेत उत्तरं द्वित्रिभ्यामिति ।

तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे द्वित्रिभ्यां द्वैयोग्यमिति ॥

( ५६२४ संग्रहवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तत्र च बहुग्रहणम् ॥ * ॥**

( भाष्यम् ) तत्र च बहुग्रहणं कर्तव्यम् । बहु-

---

१ 'उन्मानस्यापि वृद्धौ' इत्यादि प्रदीपग्रन्थान्वयमाह—शाणप्रतिषेधादिति ॥

निष्कम्, बहुनैष्किकम् । बहुबिस्तम्, बहुबैस्तिकम् ॥

( ८४९ विधिसूत्रम् ॥ ५ । १ । १ आ. २३ )

## १९१५ खार्या ईकन् ॥ ५ । १ । ३३ ॥

( ईकन्प्रत्ययाधिकरणम् )

( ५६२५ इष्टाख्याने वार्तिकम् ॥ १ ॥ )

॥ * ॥ खार्या ईकन् केवलायाश्च ॥ * ॥

( भाष्यम् ) खार्या ईकन् केवलायाश्चेति वक्तव्यम् । खारीकम् ॥

( ५६२६ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ काकिण्याश्चोपसंख्यानम् ॥ * ॥

( भाष्यम् ) काकिण्याश्चोपसंख्यानं कर्तव्यम् । अध्यर्धकाकिणीकम्, द्विकाकिणीकम् ॥

( ५६२७ इष्टाख्याने वार्तिकम् ॥ ३ ॥ )

॥ * ॥ केवलायाश्च ॥ * ॥

( भाष्यम् ) केवलायाश्चेति वक्तव्यम् । काकिणीकम् ॥

( प्रदीपः ) केवलायाश्चेति । 'अध्यर्धपूर्वद्विगोः' इत्यधिकारात्केवलाया न प्राप्नोतीति वचनम् ॥

( उद्द्योतः ) अध्यर्धेति । तदसम्बन्धे[1] तु केवले ईकनश्चरितार्थस्य अध्यर्धपूर्वद्विगुविषये लुक् स्यादिति बोध्यम् ॥

( ८५० विधिसूत्रम् ॥ ५ । १ । १ आ. २४ )

## १९१७ शाणाद्वा ॥ ५ । १ । ३५ ॥

( यतोऽधिकरणम् )

( ५६२८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ शतशाणाभ्यां वा ॥ * ॥

( भाष्यम् ) शतशाणाभ्यां वेति वक्तव्यम् । अध्यर्धशतम्, अध्यर्धशत्यम् । पञ्चशतम्, पञ्चशत्यम् । अध्यर्धशाणम्, अध्यर्धशाण्यम् । पञ्चशाणम्, पञ्चशाण्यम् ॥

( प्रदीपः ) शतशाणाभ्यामिति । शतान्तात्पूर्वेण नित्ये यति प्राप्ते विकल्पार्थं वचनम् । यदभावपक्षे कनो लुक् ॥

( ५६२९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ द्वित्रिपूर्वादण्च ॥ * ॥

( भाष्यम् ) द्वित्रिपूर्वादण्चेति वक्तव्यम् । द्विशाणम्, त्रिशाणम् । द्वैशाणम्, त्रैशाणम् । द्विशाण्यम्, त्रिशाण्यम् ॥

[1] तदसम्बन्धे—अध्यर्धपूर्वद्विगोरित्यस्यासम्बन्धे ॥



( प्रदीपः ) द्वित्रिपूर्वादण्चेति—सूत्रेष्वनार्षः पाठ इति वार्तिकारम्भः ॥

( ८५१ विधिसूत्रम् ॥ ५ । १ । १ आ. २५ )

## १९१९ तेन क्रीतम् ॥ ५।१।३७ ॥

( क्रीतार्थाधिकरणम् )

( ५६३० एकदेश्युपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ तेन क्रीतमिति करणात् ॥ * ॥

( भाष्यम् ) तेन क्रीतमित्यत्र करणादिति वक्तव्यम् । इह मा भूद्—देवदत्तेन क्रीतम्, यज्ञदत्तेन क्रीतमिति ॥

( उद्द्योतः ) करणादिति । करणत्वञ्च वाक्यावस्थायां बोध्यम् ॥

( ५६३१ एकदेश्युपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ अकर्त्रेकान्तात् ॥ * ॥

( भाष्यम् ) अकर्त्रैकान्तादिति वक्तव्यम् । इह मा भूत्—देवदत्तेन पाणिना क्रीतमिति ॥

( उद्द्योतः ) अकर्त्रैकान्तादिति । कर्त्रनवयवादित्यर्थः ॥

( ५६३२ एकदेश्युपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ संख्यैकवचनाद् द्विगोश्चोपसंख्यानम् ॥ * ॥

( भाष्यम् ) संख्याया इति वक्तव्यम् । इहापि यथा स्यात्—पञ्चभिः क्रीतं पञ्चकम् ।

किं पुनः कारणं न सिध्यति ?

एकवचनान्तादिति वक्ष्यति, तस्यायं परस्तादपकर्षः ।

एकवचनात् ।

एकवचनान्तादिति वक्तव्यम् । इह मा भूत्—शूर्पाभ्यां क्रीतम्, शूर्पैः क्रीतमिति ।

द्विगोश्चेति वक्तव्यम् । इहापि यथा स्यात्—द्वाभ्यां शूर्पाभ्यां क्रीतं—द्विशूर्पम्, त्रिशूर्पमिति ।

( प्रदीपः ) संख्यैकवचनादिति । समाहारे द्वन्द्वः ॥

( उद्द्योतः ) द्वन्द्वे द्विवचनं स्यात्, समासान्तरं तु भाष्यविरुद्धमत आह—समाहारे इति ॥ भाष्ये—अपकर्षः—अपवाद इत्यर्थः । एकवचनान्तत्वाभावादप्राप्तौ वचनम् । 'द्विगोश्च' इत्यपि एकवचनान्तादित्यस्यापकर्षः । तद्ध्वनयन्नाह—द्वाभ्यां शूर्पाभ्यामिति ॥

( आक्षेपभाष्यम् )

यद्येकवचनान्तादित्युच्यते, मुद्गैः क्रीतं मौद्गिकम्, माषैः क्रीतं माषिकमिति न सिध्यति ।

परिमाणस्य संख्याया यदेकवचनं तदन्तादिति वक्तव्यम् ।

तत्तर्ह्येकवचनान्तादिति वक्तव्यम् । तस्मिंश्च क्रियमाणे बहु वक्तव्यं भवति ।

न वक्तव्यम् ।

कस्मान्न भवति शूर्पाभ्यां क्रीतं शूर्पैः क्रीतमिति ?

( प्रदीपः ) परिमाणस्येति । परिमाणस्य या संख्या तस्या यत् वाचकं द्योतकं वैकवचनं तदन्तादिति वक्तव्यमिति वचनाद् मुद्रादीनां द्व्यादीनां चाप्रतिषेधः ॥

( ५६३३ सिद्धान्तवार्तिकम् ॥ ४ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

अनभिधानादिति ॥

यद्येवम्, 'करणात्' 'अकर्त्रेकान्तात्' इत्यपि न वक्तव्यम् ॥

कर्तुः कर्त्रेकान्ताद्वा कस्मान्न भवति ?

अनभिधानात् ॥

( प्रदीपः ) अनभिधानादिति । वृत्तौ संख्याविशेषानवगमात् परिमाणशब्देभ्यो द्विवचनबहुवचनान्तेभ्यः प्रत्ययाभावः । एकत्वसंख्यायुक्ते चार्थे तेषां स्वभावतो वृत्त्या-एकवचनान्तेभ्य एव प्रत्ययः । द्व्यादयस्तु शब्दा लुप्तायामपि विभक्तौ स्वप्रवृत्तिनिमित्तभूतां संख्यामवगमयन्तीति तेभ्यः प्रत्ययो भवत्येव । एकया च मुद्रादिव्यक्त्या क्रयासंभवाद् बहुवचनान्तादेव प्रत्ययः । यदा तु जातिशब्दत्वं मुद्रादीनामभ्युपेयते तदैकवचनान्तेभ्योऽपि प्रत्ययः । ननु यत् निष्केण क्रीतं तस्य निष्को वस्नो भवतीति 'सोऽस्यांशवस्नभृतयः' इत्यनेन प्रत्ययः सिद्ध इति नार्थोऽनेन योगेन । अत्राहुः—यस्य शतं मूल्यं न भवति अथ च तेन क्रीतं कार्यवशात्, तदर्थमिदम् ॥

( उद्द्योतः ) परिमाणशब्देभ्य इति । वस्तुतः 'अनभिधानात्' इति भाष्योक्तमेव साधु ॥ नन्वेवं द्व्यादिभ्योऽपि न स्यादत आह—द्व्यादयस्त्विति ॥

( ८५२ विधिसूत्रम् ॥ ५ । १ । १ आ. २६ )

## १९२० तस्य निमित्तं संयोगोत्पातौ ॥ ५ । १ । ३८ ॥

( संयोगोत्पातयोरर्थनिश्चायकभाष्यम् )

संयोगोत्पातयोः को विशेषः ?

संयोगो नाम स भवति—इदं कृत्वेदमवाप्यत इति ।

उत्पातो नाम स भवति—यादृच्छिको भेदो वा छेदो वा पत्रं वा पर्णं वा ॥

( प्रदीपः ) संयोगोत्पातयोरिति । कोऽनयोः शब्दयोरर्थ इति प्रश्नः । नत्वेकार्थत्वं मन्यमानस्य प्रश्नः । कोऽसौ विशेषः, येन संयोगोत्पातौ प्रतिपद्यामहे ॥ इदं कृत्वेति । यथा—काम्यैर्यागैः पुत्रादयोऽवाप्यन्ते, तत्र संयुज्यते फलविशेषेण येन यागादिना करणेन स यागादिरर्थः संयोगः ॥ यादृच्छिक इति । अतर्कितोपनतः ॥ भेद इति ।—वस्त्रादेः ॥ छेद इति ।—उपानदादेः । भाविनः शुभस्याशुभस्य वा सूचकोऽर्थ उत्पात इत्यर्थः । तस्य च निमित्तत्वं—फलविशेषविषयबुद्ध्युत्पत्तिहेतुत्वात्, न तु फलं प्रतिकारणत्वात् ॥

( उद्द्योतः ) न त्वेकार्थत्वमिति । अर्थभेदस्य स्पष्टत्वादिति भावः ॥ यदवाप्यते स संयोग इति भ्रमं वारयति—यथेति ॥ भाष्ये—पत्रं वा पर्णं वेति । पात्रादावकस्मादुपगतं पत्रादि ताम्बूल्यादिपर्णं वा शुभसूचक उत्पात इत्यर्थः ॥ ननु तस्य फलकारणत्वाभावात् कथं निमित्तत्वमत आह—तस्य चेति ॥

( ५६३४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानं कर्तव्यम् । वातस्य शमनं कोपनं वा—वातिकम्, पैत्तिकम्, श्लैष्मिकम् ॥

( प्रदीपः ) वातिकमिति । शमनकोपने एवात्र प्रत्ययार्थः, न तु निमित्तम् । ठगत्र प्रत्ययः । प्रकरणादिवशाच्च क्वचिच्छमनं प्रतीयते क्वचित्कोपनम् ॥

( ५६३५ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ संनिपाताच्च ॥ * ॥

( भाष्यम् ) सन्निपाताच्चेति वक्तव्यम् । सान्निपातिकम् ॥

( ८५३ विधिसूत्रम् ॥ ५ । १ । १ आ. २७ )

## १९२१ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ॥ ५ । १ । ३९ ॥

( यतोऽधिकरणम् )

( ५६३६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ यत्प्रकरणे ब्रह्मवर्चसाच्च ॥ * ॥

( भाष्यम् ) यत्प्रकरणे ब्रह्मवर्चसाच्चोपसंख्यानं

१ ननु वृत्तौ संख्यानवगमाद्यदि प्रत्ययाभावस्तर्हि 'संख्यैकवचनाद्द्विगोः' इत्यादिवार्तिकेण शूर्पेण क्रीतमित्यत्रापि एकत्वसंख्यानवगमात्प्रत्ययो न स्यादित्यत आह—वस्तुतोऽनभिधानादितीति । अनभिधानादित्येव प्रत्ययानुत्पत्तौ हेतुर्वक्तव्यः, न तु संख्याविशेषानवगमादित्यादीति भावः ॥

२ 'ताम्बूलादिपर्णं' इति ख. ज. पाठः ॥

कर्तव्यम् । ब्रह्मवर्चसस्य निमित्तं संयोगः—ब्रह्मवर्चस्यः, उत्पातो वा ॥

( प्रदीपः ) ब्रह्मवर्चस्य इति । ब्रह्मणो वर्चो ब्रह्मवर्चसम् । वृत्तस्वाध्यायसंपदुच्यते । 'ब्रह्महस्तिभ्यां वर्चसः' इत्यच् समासान्तः ॥

( उद्द्योतः ) ब्रह्मणः=ब्राह्मणस्य । वृत्तम्=आचारः स्वाध्यायः=वेदाध्ययनम् ॥

( ८५४ विधिसूत्रम् ॥ ५ । १ । १ आ. २८ )

## १९२९ तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ॥ ५ । १ । ४७ ॥

( अर्थाधिकरणम् )

( ५६३७ एकदेश्युपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तदस्मिन् दीयतेऽस्मा इति च ॥ * ॥

( भाष्यम् ) तदस्मिन् दीयतेऽस्मा इति चेति वक्तव्यम् । पञ्च वृद्धिर्वा आयो वा लाभो वा शुल्को वा उपदा वा दीयते अस्मै—पञ्चकः, सप्तकः, अष्टकः, नवकः, दशकः ॥

( प्रदीपः ) यत्र नदीद्वारादौ शुल्कादि दीयते तत्र प्रत्ययो विधीयमानः सम्प्रदाने न प्राप्नोतीत्याह—तदस्मिन्निति ॥

( सिद्धान्तभाष्यम् )

तत्तर्हि उपसंख्यानं कर्तव्यम् ।

न कर्तव्यम् ।

यद्धि यस्मै दीयते तस्मिन्नपि तद्दीयते, तत्र तदस्मिन् दीयते इत्येव सिद्धम् ॥

( प्रदीपः ) तस्मिन्नपीति । संप्रदानमेव दानक्रियापेक्षयाऽधिकरणत्वेन विवक्ष्यते । यथा 'सममब्राह्मणे दानम्' इति ॥

( उद्द्योतः ) यथा सममिति । अब्राह्मणे[1] दानमदानेन समम्, निष्फलमित्यर्थः । कालान्तरीणब्राह्मणसंप्रदानकदानेन ग्रहणादि कालिकब्राह्मणब्रुवादिदानं सममित्यर्थो वा ॥

( ८५५ विधिसूत्रम् ॥ ५ । १ । १ आ. २९ )

## १९३० पूरणार्धाट्ठन् ॥ ५ । १ । ४८ ॥

( ठनोऽधिकरणम् )

( ५६३८ एकदेशिवार्तिकम् ॥ १ ॥ )

॥*॥ ठन्प्रकरणेऽनन्तादुपसंख्यानम् ॥*॥

( भाष्यम् ) ठन्प्रकरणेऽनन्तादुपसंख्यानं कर्तव्यम् । द्वितीयिकः । तृतीयिकः ।

किं पुनः कारणं न सिध्यति ?

पूरणादित्युच्यते । न चैतत्पूरणान्तम् । अनैतत्पर्यवपन्नम् ॥

( प्रदीपः ) अनन्तादिति । यथा 'गोस्त्रियोः—' इत्यत्र स्त्रीशब्देन स्त्र्यधिकारविहितानां टाबादीनां ग्रहणम्, एवमिहापि पूरणाधिकारविहिता एव डडादयो गृह्येरन्निति वचनम् ॥ द्वितीयिक इति । द्वयोः पूरणो भाग इति द्वेस्तीयस्तदन्तात् 'पूरणाद्भागे तीयादन्' इति स्वार्थे अन्प्रत्ययः । ततो द्वितीयो वृद्ध्यादिरस्मिन् दीयत इति ठन् प्रत्ययः ॥ पर्यवपन्नमिति । व्यवहितमित्यर्थः ॥

( उद्द्योतः ) ननु[2] स्वार्थिक—अन्—प्रत्ययान्तत्वेन तस्यापि पूरणार्थत्वमस्त्येवेत्यत आह—यथेति ॥

( सिद्धान्तभाष्यम् )

पूरणं नामार्थः, तमर्थमाह तीयशब्दः, पूरणं सोऽसौ भवति ।

पूरणान्तात्स्वार्थे भागे अन्, सोऽपि पूरणं भवत्येव ॥

( प्रदीपः ) पूरणं नामेति । अर्थग्रहणमिह, न तु पूरणाधिकारविहितप्रत्ययग्रहणमिति भावः ॥ स्वार्थ इति । स्वस्याः प्रकृतेरर्थः । सा हि प्रत्ययस्यात्मीया । तदर्थे च-अन्-विधीयमानः पूरणाभिधायित्वात्पूरणव्यपदेशमासादयतीत्यर्थः ॥

( उद्द्योतः ) भाष्ये—तमर्थमिति[3] । यतस्तमर्थं तीयशब्द आह, अतः सोऽसौ तीयशब्दः पूरणं भवति । यतश्च तदन्तात्स्वार्थेऽन् अतः स अन्—अपि पूरणमित्यर्थः ॥ ननु सर्वोऽपि प्रत्ययः स्वस्यैवार्थे, किञ्चानोऽर्थाभावात्स्वार्थे इत्यनुपपन्नमत आह—स्वस्या इति ॥

( ८५६ विधिसूत्रम् ॥ ५ । १ । १ आ. ३० )

## १९३४ सम्भवत्यवहरति पचति ॥ ५ । १ । ५२ ॥

( अर्थाधिकरणम् )

( ५६३९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तत्पचतीति द्रोणादण्च ॥ * ॥

( भाष्यम् ) तत्पचतीति द्रोणादण् चेति वक्तव्यम् । द्रोणं पचति द्रौणी, द्रौणिकी ॥

( प्रदीपः ) द्रोणादिति । द्रोणपरिमिते[4] व्रीह्यादौ वर्तमानाद् द्रोणशब्दात्प्रत्ययः, तस्यैव पाकसम्भवात् ॥

---

१ 'अब्राह्मणे गोदानमदानेन' इति घ. पाठः ॥

२ नन्विति । पूरणार्थात्तीयप्रत्ययान्तात्स्वार्थे विधीयमानः 'अन्' प्रत्ययोऽपि पूरणार्थ एवेत्यर्थः ॥

३ पूरणं नामार्थ इत्यादिभाष्यान्वयं प्रदर्शयति—यतस्तमर्थमिति ॥

४ ननु द्रोणम्—परिमाणम्, न च तस्य पाकः सम्भवति, अत आह—द्रोणपरिमिते इति ॥

( ८५७ विधिसूत्रम् ॥ ५ । १ । १ आ. ३१ )

## १९३७ कुलिजाल्लुक्खौ च ॥ ५ । १ । ५५ ॥

( लुक्खाधिकरणम् )

( ५६४० लुक्खग्रहणानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावात् ॥ * ॥**

( भाष्यम् ) कुलिजाच्चेत्येव सिद्धं नार्थो लुक्खग्रहणेन ।

किं कारणम् ?

पूर्वस्मिंस्त्रिकभावात् । पूर्वस्मिन् योगे सर्व एव त्रिको निर्दिश्यते—द्व्याढकी, द्व्याढकिकी, द्व्याढकीना ॥

( प्रदीपः ) कुलिजाच्चेति सिद्ध इति । 'कुलिजाच्च' इत्येव सूत्रमस्तु, तत्र 'द्विगोर्ष्ठ श्च' इत्यनुवर्तते, खोऽन्यतरस्यामिति च । तत्र छन्खाभ्यां मुक्ते पक्षे ठञ्, तस्य 'अध्यर्धपूर्व' इति लुक् । एवं रूपत्रयं सिद्धम् । न च ठञः पक्षे लुगभावेन चतुर्थं रूपमिष्यते, इति लुक्खग्रहणं वार्तिककृता प्रत्याख्यातम् ॥

( उद्द्योतः ) भाष्ये—पूर्वस्मिन् योग इति । 'आढकाचित' इति सूत्रे ॥ न च ठञ इति । अत्र सूत्रेऽन्यतरस्यांग्रहणानुवृत्त्येति भावः । वृत्तिस्तु भाष्यविरोधाच्चिन्त्यैव ॥

( ८५८ विधिसूत्रम् ॥ ५ । १ । १ आ. ३२ )

## १९३९ तदस्य परिमाणम् ॥ ५।१।५७ ॥

( ८५९ विधिसूत्रम् ॥ ५ । १ । १ आ. ३३ )

## १९४० संख्यायाः संज्ञासंघसूत्राध्ययनेषु ॥ ५ । १ । ५८ ॥

( अर्थाधिकरणम् )

( ५६४१ संख्येयमात्रार्थकत्वेनाऽप्राप्तौ प्रत्ययबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ संज्ञायां स्वार्थे ॥ * ॥**

( भाष्यम् ) संज्ञायां स्वार्थे प्रत्यय उत्पाद्यः । पञ्चैव पञ्चकाः शकुनयः । त्रिकाः शालङ्कायनाः । सप्तका ब्रह्मवृक्षाः ॥

( प्रदीपः ) संज्ञायां स्वार्थ इति । इहादशभ्यः संख्याः संख्येये वर्तन्ते, न तु संख्यानमात्रे । ततः परा तु संख्या संख्याने संख्येये च । तत्र य एव शकुनयः पञ्चत्वसंख्यायुक्ताः पञ्चशब्दस्य वाच्यास्त एव पञ्चकशब्दस्यापि । ततश्च परिमाणपरिमाणिभावाभावात् स्वार्थ एव प्रत्ययो वक्तव्यः ।

यदा वृत्तिविषये संख्यामात्रवृत्तित्वं पञ्चादीनामाश्रीयते, तथा च 'द्व्येकयोः' इति सूत्रकारेण द्वित्वैकत्वे द्व्येकशब्दवाच्ये आश्रित्य निर्देशः कृतः । संख्येयार्थत्वे हि द्व्येकेष्विति स्यात्, तदा परिमाणपरिमाणिभावाश्रयेणापि शक्यः प्रत्यय उत्पादयितुम् ॥

( उद्द्योतः ) ननु संख्यामात्रवृत्तेः पञ्चादिशब्दात्संख्येये परिमाणिनि प्रत्ययसंभवात् किं वार्तिकेन ? इत्यत आह—इहेति ॥ संख्यानेति । करणे ल्युट् । तेनैकत्वद्वित्वादावित्यर्थः ॥ शक्य उत्पादयितुमिति । एवं हि पञ्चसंख्यः संघ इत्यर्थे 'पञ्चकः' इत्यपि स्यादिति संख्येयवृत्तेरेवानेनैं प्रत्यय एष्टव्य इत्यपरे ॥

( ५६४२ संघादिषु प्रत्ययबोधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ ततः परिमाणिनि ॥ * ॥**

( भाष्यम् ) ततः परः प्रत्ययः परिमाणिनीति वक्तव्यम् । पञ्चकः संघः । दशकः संघः ॥

( उद्द्योतः ) ततः परिमाणिनीत्यस्य भाष्यस्य तदूर्ध्वपठ्यमानसंघादिष्वित्यर्थः ॥

( ५६४३ प्रथमवार्तिकाक्षेपर्यैकदेशिवार्तिकम् ॥ ३ ॥ )

**॥*॥ जीवितपरिमाणे चोपसंख्यानम् ॥*॥**

( भाष्यम् ) जीवितपरिमाणे चोपसंख्यानं कर्तव्यम् । षष्टिर्जीवितपरिमाणमस्य—षाष्टिकः, साप्ततिकः ॥

( उद्द्योतः ) जीवितपरिमाणे इत्यस्य—तत्र वर्तमानात् प्रथमान्तादस्येत्यर्थे प्रत्यय इत्यर्थः ॥

( ५६४४ एकदेशिनिरासवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् ॥*॥**

( भाष्यम् ) जीवितपरिमाणे चेत्यनर्थकं वचनम् ॥

किं कारणम् ?

कालादिति सिद्धत्वात् । "कालात्" (५।१।७८) इत्येव सिद्धम् । इह यस्य षष्टिर्जीवितपरिमाणं षष्टि-

---

१ अत्र सूत्र इति । कुलिजाल्लुखौ चेति सूत्रे लुक्खग्रहणे क्रियमाणेऽन्यतरस्यामित्यप्यत्रानुवर्तेत, तथा च लुकोऽपि विकल्पः सम्भाव्येतेति रूपचतुष्टयं स्यात् । अतोऽत्र वार्तिककृता लुक्खग्रहणं प्रत्याख्यातम्, तेन च लुको विकल्पो न भवतीति रूपत्रयमिष्टमुपपद्यते । वृत्तिकृता रूपचतुष्टयप्रदर्शनं कृतं तद्भाष्यविरोधादुपेक्ष्यमिति भावः ॥

२ तेनैकत्वेति । करणे ल्युड्विधानादेकद्व्यादिशब्दानामेकत्वद्वित्वादौ वृत्तिर्नेत्यर्थः ॥

३ अनेनेति । यदा तु वृत्तिविषये पञ्चादिशब्दानां संख्यामात्रवृत्तित्वं तदा तेभ्यः परिमाणिनि प्रत्ययः स्यादेवेति तस्मिन् पक्षे वार्तिकं व्यर्थमेव स्यात् । अतः संख्येयवृत्तेर्न तु संख्यावृत्तेरनेन वार्तिकेन प्रत्यय मकव्य इत्यपरेषामाशयः ॥

मसौ भूतो भवति । तत्र तमधीष्टो भूतो भूतो भावीत्येव सिद्धम् ॥

अवश्यं चैतदेवं विज्ञेयम् ॥

( प्रदीपः ) जीवितपरिमाणे चेति । पूर्वापेक्षः समुच्चयः । संघादिषु प्रत्ययो विधीयमानोऽन्यत्र न प्राप्नोतीति वचनम् ॥

( उद्द्योतः ) पूर्वापेक्ष इति । 'संज्ञायां स्वार्थे' इत्येतदपेक्ष इत्यर्थः ॥ एतद्वचनारम्भे बीजमाह—सङ्घादिष्विति । परिमाणिष्वित्यर्थः । अत्र हि षष्टिसङ्ख्या सङ्ख्येयस्य परिमाणिजीवितद्वारा देवदत्तादिः, न तु सङ्घादिरित्यप्राप्तिरिति भावः ॥

( ५६४५ एकदेशिवार्तिके दोषप्रदर्शकं वार्तिकम् ॥ ५ ॥ )

॥ * ॥ इह वचने हि लुक्प्रसङ्गः ॥ * ॥

( भाष्यम् ) इह हि क्रियमाणे लुक् प्रसज्येत—द्विषाष्टिकः, त्रिषाष्टिकः ।

अनेन सति लुग्भवति ।

तेन सति कस्मान्न भवति ?

आर्हादित्युच्यते ।

न सिध्यति ।

किं कारणम् ?

न हीमे कालशब्दाः ।

किं तर्हि ?

संख्याशब्दा इमे ।

इमेऽपि कालशब्दाः ।

कथम् ?

संख्या संख्येये वर्तते ।

यदि तर्हि यो यः काले वर्तते स स कालशब्दः, रमणीयादिष्वतिप्रसङ्गो भवति । रमणीयं कालं भूतः, शोभनं कालं भूतः ।

अथ मतमेतत्—काले दृष्टः शब्दः कालशब्दः, कालं यो न व्यभिचरति–इति । न रमणीयादिष्वतिप्रसङ्गो भवति, जीवितपरिमाणे तूपसंख्यानं कर्तव्यम् ।

इह चोपसंख्यानं कर्तव्यम्—वार्षशतिकः, वार्षसहस्रिक इति ।

किं पुनः कारणं न सिध्यति ?

न हि वर्षशतशब्दः संख्या ।

किं तर्हि ?

संख्येये वर्तते वर्षशतशब्दः ।

एवं तर्हि—

( प्रदीपः ) द्विषाष्टिक इति । 'संख्यायाः संवत्सरसंख्यस्य च' इत्युत्तरपदवृद्धिः ॥ आर्हादिति । 'अध्यर्धपूर्व' इत्यत्रार्हादित्यनुवर्तनादार्हीयस्य लुका भाव्यम् । 'तमधीष्ट' इत्यनेन प्रत्ययोऽर्हात्पर इति तस्य लुगभावः ॥ न हीम इति । मासादय एव कालशब्दाः, न तु निमित्तान्तरेण काले प्रयोगमात्रेणेति भावः ॥ संख्या संख्येय इति । काले संख्येये वर्तमानस्य संख्यावाचिनः कालाभिधायित्वमुपपन्नमिति भावः ॥ वार्षशतिक इति । संख्यायाः प्रत्ययो विधीयमानस्तदन्तान्न प्राप्नोति । संख्या पूर्वपदानामेव प्राग्वतेस्तदन्तविधिरिष्यते ॥

( उद्द्योतः ) नन्वेतेऽपि कालबोधका विशेष्यतया–इत्यत आह–मासादय एवेति । कालेतराऽवृत्तिकालत्वव्याप्यधर्मप्रवृत्तिनिमित्तका इति भावः ॥ सङ्ख्येयवृत्तित्वेऽपि पञ्चादिवत्सङ्ख्यात्वमक्षतमत आह—सङ्ख्याया इति ॥ ननु तदन्तविधिना भविष्यतीत्यतः—सङ्ख्यापूर्वेति । परे तु 'ठञ्विधौ सङ्ख्यायाः' इति तदन्तविधिसूत्रभाष्योक्तेस्तदारम्भसामर्थ्येनात्रान्यपूर्वपदस्याऽपि तदन्तस्य ग्रहणाच्चिन्त्यमिदम् । तस्माद्वर्षशतशब्दादौ 'शतं वर्षाणि' इत्याद्यर्थे मयूरव्यंसकादित्वात्पूर्वपदार्थप्रधानः समासः । सङ्ख्येये वर्तते इत्यस्य वर्षादिरूपसङ्ख्येये वर्तते, शतब्राह्मणशब्दवत् । सङ्ख्याशब्दत्वं च—सङ्ख्याप्रवृत्तिनिमित्तकत्वम् । द्वे षष्टी संवत्सरा जीवितपरिमाणमस्येत्यर्थे द्विषष्टिशब्दस्य सङ्ख्याप्रवृत्तिनिमित्तकत्वमेव । प्रकरणादिवशात्तु संवत्सररूपसङ्ख्येयस्य तादृशसङ्ख्यावत्त्वेनैव शाब्दबोधे भानमित्यन्यत्र–इत्याहुः ॥

( ५६४६ योगविभागबोधकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अन्येभ्योऽपि दृश्यते खारशताद्यर्थम् ॥ * ॥

( भाष्यम् ) अन्येभ्योऽपि दृश्यत इति वक्तव्यम् ।

किं प्रयोजनम् ?

खारशताद्यर्थम् । खारशतिको राशिः । खारसहस्रिको राशिः ॥

( प्रदीपः ) खारशताद्यर्थमिति । खारशब्दोऽकारान्तो वार्तिककारवचनात् साधुः । 'तदस्य परिमाणम्' इति योगविभागः कर्तव्य इत्युक्तं भवति ॥

( उद्द्योतः ) खारशब्द इति । खारीशब्दपर्याय इत्यर्थः । 'अन्येभ्योऽपि' इत्यस्य—सङ्ख्याभिन्नेभ्य इत्यर्थः । दृशेः सर्वोपाधिव्यभिचारार्थत्वात् 'अन्येष्वपि' इत्यर्थोऽपि द्रष्टव्यः ॥ योगविभाग इति । द्विषाष्टिकवार्षशतिकादिसिद्धये इति भावः ॥

( सिद्धान्ताभिप्रायकं भाष्यम् )

अयं तर्हि दोषः—इह वचने हि लुक्प्रसङ्ग इति ।

न ब्रूमो यत्र क्रियमाणे दोषस्तत्र कर्तव्यमिति ।

किं तर्हि ?

यत्र क्रियमाणे न दोषस्तत्र कर्तव्यम् ।

क्व च क्रियमाणे न दोषः ? परमार्हात् ।

तत्तर्हि उपसंख्यानं कर्तव्यम् ।

न कर्तव्यम् ।

कालादित्येव सिद्धम् ।

ननु चोक्तं नेमे कालशब्दाः, किं तर्हि, संख्याशब्दा इति ।

ननु चोक्तमिमेऽपि कालशब्दाः । कथं? संख्या संख्येये वर्तते ।

ननु चोक्तं यदि तर्हि यो यः शब्दः काले वर्तते स स कालशब्दः, रमणीयादिष्वतिप्रसङ्गो भवतीति ॥

(उद्द्योतः) भाष्ये—लुक्प्रसङ्ग इति । 'द्विषाष्टिकः' इत्यत्रेति भावः ॥ परमार्हादिति । 'तदस्य परिमाणम्' इति तत्र पठितव्यमित्यर्थः ॥ तत्तर्हीति । परमार्हात् 'तदस्य परिमाणम्' इत्येतत् ॥ न कर्तव्यमिति । खारशतिकवार्षशतिकार्थमत्र योगविभागः कार्यः, द्विषाष्टिकादिश्च 'कालात्' इत्येव सिद्ध इति न तदर्थः स आर्हात्परः कार्य इति भावः ॥

(५६४७ सिद्धान्तवार्तिकम् ॥ ७ ॥)

॥ * ॥ उक्तं वा ॥ * ॥

(भाष्यम्) किमुक्तम्?

अनभिधानादिति । अनभिधानाद्रमणीयादिषूत्पत्तिर्न भविष्यति ॥

(प्रदीपः) अनभिधानादिति । न हि रमणीयादयो वृत्तिविषये काले वर्तन्ते, षष्ठ्यादयस्तु वृत्तौ संख्येयेषु संवत्सरेषु स्वभावतो वर्तन्त इति युक्तं तेषां कालवाचित्वम् । लोके च संवत्सरसंख्यया जीवितं प्रायेण परिच्छिद्यत इति संवत्सरवृत्तित्वं षष्ठ्यादीनामुच्यते ॥

(उद्द्योतः) इमेऽपि कालशब्दा इत्यनेन—कालग्रहणे यथाकथञ्चित्कालवृत्तीनां ग्रहणमिति सूचयति, अतिप्रसङ्गाऽभावस्त्वनभिधानात् । तदेवाह—न हीति ॥ ननु संवत्सरेष्विति कुतः? मासादीनामपि सङ्ख्येयत्वसम्भवात्—अत आह—लोके चेति ॥

(५६४८ उपसङ्ख्यानवार्तिकम् ॥ ८ ॥)

॥*॥ स्तोमे डविधिः पञ्चदशाद्यर्थः ॥*॥

(भाष्यम्) स्तोमे डो विधेयः ।

किं प्रयोजनम्?

पञ्चदशाद्यर्थः । पञ्चदशः स्तोमः । सप्तदशः स्तोम इति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

(प्रदीपः) स्तोमे डविधिरिति । डित्करणं विंशः स्तोम इत्यादौ टिलोपार्थम्[1] । पञ्चदश इत्यत्र तु 'नस्तद्धिते' इति टिलोपः सिध्यति । स्तोमो मन्त्रसमूहः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥

१ 'विंशः स्तोमस्त्रिंशः स्तोम' इति ज. पाठः ॥

(उद्द्योतः) डित्करणमिति । विंशे तिलोपार्थम्, त्रयस्त्रिंशादौ टिलोपार्थमित्यर्थः । 'तिटिलोपार्थम्' इति पाठः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य प्रथम पादे प्रथममाह्निकम् ॥

(८६० विधिसूत्रम् ॥ ५ । १ । २ आ. ३४)

## १९४१ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ॥ ५ । १ । ५९ ॥

(निपातनाधिकरणम्)

(वार्तिकावतरणभाष्यम्)

इमे विंशत्यादयः सप्रकृतिकाः सप्रत्ययकाश्च निपात्यन्ते, तत्र न ज्ञायते—का प्रकृतिः, कः प्रत्ययः, कः प्रत्ययार्थ इति ।

तत्र वक्तव्यम्—इयं प्रकृतिः, अयं प्रत्ययः, अयं प्रत्ययार्थ इति ।

इमे ब्रूमः—द्विशब्दादयं दशदर्थाभिधायिनः स्वार्थे शतिच् प्रत्ययो निपात्यते, विन्भावश्च । द्वौ दशतौ विंशतिः ॥

(प्रदीपः) इमे विंशत्यादय इति । सूत्रे पठितानां प्रत्यक्षत्वादिदमा परामर्शः । पङ्क्तिशब्दश्छन्दोविशेषे संनिवेशविशेषे च रूढो नैवावयवार्थानुसारेण प्रवर्तत इति तत्परित्यागेन विंशत्यादय एव विचार्यन्ते । वक्ष्यमाणवार्तिकावतारणार्थं चायं भाष्य उपक्षेपः ॥ सप्रकृतिका इति । प्रकृतिप्रत्ययप्रकरणे उच्चारणादिति भावः । सहशब्दोऽत्र विद्यमानार्थः, न तुल्ययोगार्थः । तेन विद्यमानप्रकृतिप्रत्यया इत्यर्थः ॥ निपात्यन्त इति । अथ प्रकृतित्वमेषां कस्मान्न विज्ञायते? पञ्चम्याः प्रत्ययस्य चानुपादानात्, अनिष्पन्नस्य च प्रकृतित्वाभावात् । प्रत्ययत्वं तर्हि कस्मादेषां न भवति? लोके केवलानां प्रयोगदर्शनात् । 'शताच्च ठन्यतावशते' 'विंशत्यादिभ्यः' इति शास्त्रे च केवलानामुच्चारणात् । विधिनिपातनयोश्चायं भेदो यत्रावयवा निर्दिश्यन्ते, समुदायोऽनुमीयते स विधिः । यत्र तु समुदायः श्रूयते, अवयवाश्चानुमीयन्ते तन्निपातनम् ॥ का प्रकृतिरिति । प्रकृतिप्रत्ययविशेषविषयः प्रश्नः । प्रकृत्यर्थं तु न पृच्छति, प्रकृतौ विज्ञातायां तदर्थस्यापि विज्ञानात् ॥ कः प्रत्ययार्थ इति । लोके विंशत्यादीनां संख्यायां संख्येये च प्रयोगो दृश्यते, तत्र लौकिकार्थानुगुणकं प्रत्ययार्थमाश्रित्य साधुत्वायैषामन्वाख्यानं क्रियत इत्यर्थः ॥

इमे ब्रूम इति । वचनक्रियायामाभिमुख्यं प्रतिपादयितुं प्रत्यक्षार्थसर्वनामोपादानम् । वचनमात्रं चेद्विवक्षितम्, न

* 'तिटिलोपार्थम्' इति क. पाठः ॥

तु कर्त्रभिप्रायं क्रियाफलमित्यात्मनेपदं न कृतम् ॥ **द्विशब्दादिति** । दशद्वर्गलक्षणसंख्येयवाचिन इत्यर्थः । समुदाये च निपात्यमाने नान्तरीयकमवयवानां निपातनमित्यभिप्रायेण शतिच्प्रत्ययो निपात्यत इत्युच्यते ॥ **स्वार्थ इति** । प्रत्ययस्य स्वात्मीया प्रकृतिः, तस्या अर्थ इत्यर्थः । **अथ वा** यः प्रकृतेरर्थः स एव प्रत्ययानां स्वार्थः–पितृधनमिव पुत्रस्य, तत्रैवार्थे प्रत्यासत्त्याऽनिर्दिष्टार्थप्रत्ययस्योत्पत्तेर्न्याय्यत्वात् ॥

( **उद्योतः** ) प्रथमोपस्थितपङ्क्तित्यागे बीजमाह—**पङ्क्तिशब्द इति** ॥ बीजान्तरमप्याह—**वक्ष्यमाणेति** । तच्च विंशत्यादिविषयमेवेति भावः ॥ ननु कथमेतदवगतं सप्रकृतिका इत्यादि ? अत आह—**प्रकृतीति** ॥ ननु प्रकृतिप्रत्ययाऽतिरिक्तनिपात्याभावात्केन साहित्यमत आह—**सहशब्दोऽत्रेति** ॥ **अथेति** । पङ्क्त्यादिभ्योऽधिकृतः प्रत्ययो भवति–इति हि–अर्थः स्यादिति भावः ॥ प्रत्ययस्याधिकारलब्धत्वात् 'गापोष्टक्' इत्यादौ पञ्चम्या अभावाच्च युक्त्यन्तरमाह—**अनिष्पन्नस्य चेति** । अन्यत एषामनिष्पत्तेः ॥ **शताच्चेति** । तत्र तदन्तविधिसम्भवाच्चिन्त्यमिदम् ॥ विधीयन्त इति त्यक्त्वा 'निपात्यन्ते' इत्युक्तौ बीजमाह—**विधीत्यादि** ॥ **विशेषविषय इति** । प्रकृतिसामान्यस्य प्रकरणादेव ज्ञातत्वादिति भावः ॥ ननु प्रकृतावुक्तायां तदर्थेऽवगतेऽवशिष्टः प्रत्ययार्थ इति ज्ञातुं शक्यत इति किं तत्प्रश्नेन ? इत्यत आह—**लोके इति** ॥ **सङ्ख्याने इति** । सङ्ख्यायतेऽनेनेति सङ्ख्यानं–सङ्ख्या ॥ **साधुत्वाय**–तद्बोधनाय ॥

**आभिमुख्यमिति** । उत्तरदानोद्यतत्वमित्यर्थः ॥ **प्रतिपादयिषुमिति** । प्रतिवचनस्य सुशकत्वद्योतनायेति भावः ॥ ( नन्वाचार्यः स्वोक्तदूषणपरिहारमाह–इति क्रियाफलस्य कर्तृगामित्वादात्मनेपदाप्त्तिरत आह—) **वचनमात्रञ्चेति** । वस्तुतः कथनफलस्य–तन्निर्णयस्य शिष्यगामित्वात्तत्त्वेनैव विवक्षणाच्च कथमत्रात्मनेपदप्राप्तिरिति चिन्त्यम् ॥ **दशद्वर्गेति** । दश द्रव्याणि परिमाणमस्य वर्गस्य सः–दशद्वर्गः । **वर्गः**–सङ्घ इत्युच्यते ॥

ननु समुदायस्यैव निपातनात्कथं प्रत्ययो निपात्यत इत्युक्तिः ? अत आह—**समुदाये चेति** ॥ स्वार्थशब्दे षष्ठीतत्पुरुषः कर्मधारयो वेत्याह—**प्रत्ययस्येत्यादिना** ॥

**( ५६४९ विंशत्यादीनां दशदाद्यर्थे समासवचनानुपपत्तिरूपाक्षेपवार्तिकम् ॥ १ ॥ )**

## ॥ * ॥ विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः ॥ * ॥

**( भाष्यम् ) विंशत्यादयो दशदर्थे चेत्समासो नोपपद्यते—विंशतिगवमिति ।**

**किं कारणम् ?**

**द्रव्यमनभिहितम्, तस्यानभिहितत्वात् षष्ठी प्राप्नोति, षष्ठ्यन्तं च समासे पूर्वं निपतति । तत्र गोविंशतिरिति प्राप्नोति ॥**

**न चैवं भवितव्यम्—गोविंशतिरिति ?**

**भवितव्यम् च, विंशतिगवं तु न सिध्यति ॥**

**इह च त्रिंशत्पूली चत्वारिंशत्पूली समानाधिकरणलक्षणः समासो न प्राप्नोति ॥**

**वचनं च विधेयम् । विंशतिः ।**

**द्वित्वाद्दशतोर्द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति ॥**

( **प्रदीपः** ) **समासवचनानुपपत्तिरिति** । इष्टयोः समासवचनयोरनुपपत्तिरित्ययमर्थोऽभिमतः । न हि समासमात्रं वचनमात्रं वा न सिद्ध्यति ॥ **विंशतिगवमिति** । विंशतिशब्देन द्वयोर्दशतोरभिधानं न तु दशत्संबन्धिनां द्रव्याणाम् । ततश्च दशदपेक्षया गवां व्यतिरेकोपजननात् षष्ठ्या भाव्यम्–गवां विंशतिरिति । ततः समानाधिकरणपदनिबन्धनद्विगुसमासाप्रसङ्गः ॥ **षष्ठ्यन्तं चेति** । 'उपसर्जनं पूर्वम्' इति लक्षणेन । 'गुणेन षष्ठी न समस्यते' इति प्रतिषेधः संख्याया[2] न भवति, 'शतसहस्रान्ताच्च निष्कात्' इति प्रत्ययविधानाज्ज्ञापकात्, 'क्रोशशतयोजनशतयोः' इति वार्तिकवचनाच्च ॥

**द्विवचनं प्राप्नोतीति** । स्वार्थिकाः प्राकृतं लिङ्गमेव केचिदतिवर्तन्ते न तु संख्यामपि, संख्यान्तरयुक्तस्य संख्यान्तरविरोधात् । लिङ्गानां तु विरोधाभावः स्त्रीसूत्रे प्रतिपादितः ॥

**एवं तर्हीति** । 'तदस्य परिमाणम्' इत्यधिकारात्परिमाणोपाधेः संख्यायाः 'अस्य' इति परिमाणिनि प्रत्ययः । परिमाणी च द्विविधः–द्रव्यसंघातः, भिन्नानि वा द्रव्याणि । तत्र संघस्यैकत्वाद् विंशतिरित्येकवचनं सिध्यति । द्रव्याणां तु परिमाणित्वे विंशतिगवं त्रिंशत्पूलीति समानाधिकरणसमाससिद्धिरिति भावः ॥

( **उद्योतः** ) ननु षष्ठीसमासादेः सिद्धेः कथं समासाऽनुपपत्तिः ? अत आह—**इष्टयोरिति** ॥ ननु विंशतिशब्दस्य सङ्ख्येयवाचित्वात्समानाधिकरणसमासोऽपि सेत्स्यतीत्यत आह—**विंशतिशब्देनेति** ॥ **दशतोः**—दशाऽवयवकसमूहयोः ॥ **न त्विति** । तादृशसमूहसम्बन्धिनां दशसङ्ख्यद्रव्याणामित्यर्थः ॥ **गवां व्यतिरेकोपजननादिति** । गवां द्वौ दशताविलर्थादिति भावः ॥

ननु गुणेन षष्ठीसमासनिषेधात्समास एव तावद्दुर्लभः, किं पूर्वनिपातदूषणेन ? इत्यत आह—**गुणेनेति** ॥ अस्य[3] प्रयोगस्येष्टत्वादाह–भाष्ये—**न चैवमिति** ॥ उत्तरयति—**भवितव्यञ्चेति** ॥ ननु 'स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते' इत्यस्यापि सत्त्वात्कथमिदं दूषणमत आह—**स्वार्थिका इति** ॥ **न तु सङ्ख्यामपीति** । सङ्ख्याबोधकप्रकृत्युपात्तसङ्ख्यामपीत्यर्थः ॥ **स्त्रीसूत्रे इति** । 'इयं व्यक्तिरयं पदार्थ इदं वस्तु' इति त्रिविधव्यवहारस्य प्रतिवस्तु सत्त्वान्नपुंसक इति व्यवहाराच्च तेषामविरोध इति भावः ॥ ननु किं

---

१ (　　) एतच्चिह्नस्थो ग्रंथः 'झ.' पुस्तक एवोपलभ्यते । प्रामाणिकप्राचीनोद्योतपुस्तकेषु नास्य पाठः ॥

२ 'संख्यायां' इति ज. पाठः ॥

३ झ. पुस्तके 'सङ्ख्यामात्रपरत्वेऽस्य' इति पाठः । अन्येषु च स नोपलभ्यते ॥

'परिमाणिनि' इति वक्तव्यं, नेत्याह—तदस्येति ॥ द्विविध इति । द्वौ दशतौ परिमाणमस्य, एषामिति वा विग्रहः ॥

( वार्तिकावतरणभाष्यम् )

**एवं तर्हि—परिमाणिनि विंशत्यादयो भविष्यन्ति॥**

( ५६५० परिमाण्यर्थस्वीकारे दोषोद्भावकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम् ॥ * ॥**

( भाष्यम् ) **परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययो विधेयः । विंशकः संघः ॥**

( प्रदीपः ) **परिमाणिनि चेदिति** । द्वौ दशतौ परिमाणं यस्य स संघो विंशतिरित्यभिधीयते । तत्र विंशतिः परिमाणं यस्य संघस्येति संघान्तरस्य परिमाणिनोऽसंभवाद्विंशकः संघ इति सिद्धये 'विंशतित्रिंशद्भ्यां ड्वुन्संज्ञायाम्' इति ड्वुन्प्रत्ययः स्वार्थे वक्तव्यः । ननु यदा द्रव्याणि परिमाणीनि विंशतिशब्दाभिधेयानि तदा संघे परिमाणिनि प्रत्ययः सिध्यत्येव-विंशतिर्गावः परिमाणमस्य विंशकः संघ इति । एवं तर्हि विंशतिशब्देन संघस्याभिधानं प्राप्नोति । न चेष्यते-विंशतिर्गोसंघ इति । तस्माद्यदा संघे परिमाणिनि विंशत्यादयो निपात्यन्ते तदा तत्र तेषां केवलानां प्रयोगो मा भूदिति पुनः स्वार्थे नित्यं प्रत्ययो विधेयः ॥

( उद्योतः ) ननु परिमाणिनि विहितस्य पुनः स्वार्थे विधानमनुपपन्नमत आह—**द्वौ दशताविति** ॥ भाष्ये—**पुनरित्यस्य**—तदन्तादित्यर्थो बोध्यः ॥ **स्वार्थे इति** । अन्यथाऽधिकारादार्हीयेष्वेव स्यादिति भावः ॥ **न चेष्यते विंशतिरिति** । किन्तु 'विंशको गोसङ्घः' इत्येवेष्यत इति भावः ॥

( ५६५१ परिमाण्यर्थे द्वितीयदोषोद्भावकवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ षष्ठीवचनविधिश्च ॥ * ॥**

( भाष्यम् ) **षष्ठी च विधेया । गवां विंशतिः । द्रव्यमभिहितं तस्याभिहितत्वात् षष्ठी न प्राप्नोति ॥**

**एकवचनं च विधेयम् । विंशतिर्गावः ।**

**गोभिः सामानाधिकरण्यात् "बहुषु बहुवचनम्" ( १।४।२१ ) इति बहुवचनं प्राप्नोति ॥**

( प्रदीपः ) **षष्ठीवचनविधिश्चेति** । संघे परिमाणिनि विंशत्यादीनां केवलानां नित्यं प्रयोगो नेष्यते । भिन्नेषु तु द्रव्येषु परिमाणिषु प्रत्ययोत्पत्तावाश्रीयमाणायां विंशतिशब्देन द्रव्याणामभिधानाद् व्यतिरेकाभावाद् गवां विंशतिरिति षष्ठी न प्राप्नोति, द्रव्यसामानाधिकरण्याद् बहुवचनप्रसङ्गश्च ॥

( उद्योतः ) ननु सङ्घस्य विंशत्यर्थत्वेन 'गवां सङ्घः' इतिवत्षष्ठ्युपपन्नैवेत्यत आह—**सङ्घे इति** ॥ **नित्यमिति** । सर्वथेत्यर्थः ॥

( ५६५२ दृष्टान्तनिदर्शनेनाक्षेपवारकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु ॥ * ॥**

( भाष्यम् ) **अनारम्भो वा पुनर्विंशत्यादीनां न्याय्यः ।**

**कथं सिध्यति ?**

**प्रातिपदिकविज्ञानात् ।**

**कथं प्रातिपदिकविज्ञानम् ?**

**विंशत्यादयोऽव्युत्पन्नानि प्रातिपदिकानि । यथा सहस्रादिषु ।**

**तद्यथा—सहस्रम्-अयुतम्-अर्बुदम्-इति, न चानुगमः क्रियते, भवति चाभिधानम् ॥**

( प्रदीपः ) तदेवं व्युत्पत्तिपक्षे दूषणान्यभिधायाव्युत्पत्तिपक्षं निर्दोषमाश्रित्यारम्भं प्रत्याख्यातुमाह—**अनारम्भो वेति** । वाशब्दस्त्वर्थे । सहस्रादिवदव्युत्पन्ना एव विंशत्यादयः 'अर्थवदधातुः-' इति लब्धप्रातिपदिकसंज्ञा अर्थवत्सूत्रेणानुज्ञातसाधिमानः संख्यायां संख्येये च प्रयोगभेदेनाक्षादिपदवदनेकार्थतया स्वभावतो वर्तमाना रूढिशब्दत्वाच्च नियतलिङ्गसंख्याः, यथा आपोदारा इति भावः ॥

( उद्योतः ) व्युत्पत्तिपक्षस्य दुष्टत्वाद्विकल्पार्थो वाशब्दो न युज्यतेऽत आह—**तह्यर्थे इति** ॥ **अर्थवत्सूत्रेणाऽनुज्ञातेति** । अन्यथा सर्वत्र 'कृत्तद्धित-' इत्येव सिद्धेऽर्थवत्सूत्रं व्यर्थं स्यादिति भावः । 'बहुपटवः'इत्याद्यर्थं तदावश्यकत्वाचिन्त्यमिदमिति **केचित्** । तन्न । 'बहुजकज्वत्' इति न्यासेनैव सिद्धेरित्याशयात् ॥ **स्वभावत इत्यस्यैव** व्याख्या—**रूढिशब्दत्वाच्चेति** । चो हेतौ । अनेन योगनिरपेक्षमेवानेकार्थवृत्तित्वमुक्तं, न त्विदं नियतलिङ्गत्वे हेतुः, तादृशानामपि पद्मादीनामनेकलिङ्गत्वदर्शनात् । नियतलिङ्गत्वं तु स्वभावतो दृष्टान्तमात्रेणेति बोध्यम् ॥ भाष्ये—**न चाऽनुगम इति** । प्रकृतिप्रत्यययोरित्यर्थः ॥ **भवति चाभिधानमिति** । अर्थस्येति भावः ॥

( सहस्रादिष्वाक्षेपसमाधानभाष्यम् )

**यथा सहस्रादिष्वित्युच्यते,**

**अथ सहस्रादिष्वपि कथं भवितव्यम्—सहस्रं गवाम् । सहस्रं गावः । सहस्रगवम् । गोसहस्रमिति ।**

**यावताऽत्रापि संदेहः, नासूया कर्तव्या यत्रानुगमः क्रियते ॥**

( प्रदीपः ) इदानीं भाष्यकार आरम्भं समर्थयमान आह—**यथेति** । अयमत्रार्थः—अक्षादयः परस्परानन्वितानेकार्थाभिधायिनो भिन्नासु जातिषु रूढशब्दा एव न तु यौगिकाः । विंशत्यादयः सहस्रादयश्च शुक्लादिवद् गुणिनि यौगिका एव । न हि संख्यानिरपेक्षाः संख्येयविशेषमेते प्रत्याययन्ति येनैषां

रूढिशब्दत्वमुच्येत ॥ **अत्रापि संदेह इति** । क एषां मुख्योऽर्थः, को वा 'सोऽयम्' इति संबन्धादौपचारिक इति संदेहः ॥ **नासूयेति** । अननुगमो हि दोषाय । अशक्यो वाऽऽनन्त्यात्सर्वशब्दानुगमः । न त्वनुगम एव स्वप्रज्ञापराधादशक्यार्थविशेषनिश्चयत्वाद्दोषत्वेनोद्भावनीय इत्यर्थः ॥

( उद्द्योतः ) ननु स्वभावत एवानेकार्थत्वात् **'कथं भवितव्यम्'** इति प्रश्नाऽनुपपत्तिरत आह—**अयमत्रेति** ॥ **शुक्लादिवदिति** । 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति वार्त्तिककरीत्येदम् ॥ **न हि सङ्ख्येति** । किन्तु सङ्ख्याप्रकारकसङ्ख्येयबोधजनका एवेति भावः ॥ **रूढिशब्दत्वमुच्येतेति** । शुक्लादीनां यौगिकत्वं वदता वार्तिककृतेदं वक्तुमनुचितमिति भावः ॥ ननु स्वभावत उभयत्रापि वृत्तेः सन्देहानुपपत्तिरत आह—**क एषामिति** ॥ **सोऽयमिति सम्बन्धादिति** । सोऽयम्—अस्यास्तीति सम्बन्धेनोत्पन्नस्य मतोर्लोपाद्विलम्बोपस्थितिक इत्यर्थः । यद्वा 'गुणवचनेभ्यः' इत्येतत्प्रत्याख्यानरीत्येदम् ॥ **दोषायेति** । अनुगममन्तरेण मन्दबुद्धीनामनुग्रहासम्भवादिति भावः ॥ वस्तुतो न सोऽप्याचार्यस्य दोष इत्याह—**अशक्यो वेति** ॥ अनुगमस्तु सर्वथा नाचार्यस्य दोषायेत्याह—**नत्विति** । अनुगमविषयेषु विंशत्यादिष्वर्थविशेषानिश्चयः स्वप्रज्ञाऽपराधजः, न तु तत्र सूत्रकृदपराध इति भावः ॥ **अशक्यार्थविशेषनिश्चयत्वादिति** । बहुव्रीहेस्त्वप्रत्ययः ॥ **दोषत्वेनेति** । अयमाचार्यदोषत्वेन सर्वथा नोद्भावनीय इत्यर्थः ॥

**( विंशत्यादीनां समुदायबोधकत्वस्वीकारेण वार्तिकाक्षिप्तदोषवारणभाष्यम् )**

**ननु चोक्तम्—विंशत्यादयो दशदर्थे चेत्-समासवचनानुपपत्तिः, परिमाणिनि चेत्-पुनः स्वार्थे प्रत्ययविधानम्, षष्ठीवचनविधिश्चेति ।**

**नैष दोषः ।**

**समुदाये विंशत्यादयो भविष्यन्ति ।**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

**सङ्घ इति वर्तते, सङ्घः समूहः समुदाय इत्यनर्थान्तरम् ॥**

( प्रदीपः ) **समुदाय इति** । 'अस्य' इति प्रत्ययार्थस्यानुवर्तनात्समुदायः परिमाणी प्रत्ययार्थत्वेनाश्रीयते, न तु भिन्नानि द्रव्याणीत्यर्थः ॥ **किं वक्तव्यमिति** । अस्येत्यनुवर्तनात्परिमाणिमात्रे प्रत्ययो लभ्यते, न तु तद्विशेष इति मत्वा **प्रश्नः** ॥ **संघ इति वर्तत इति** । पूर्वसूत्रे द्वन्द्वनिर्दिष्टस्यापि संघशब्दस्यैव स्वरितत्वादिहानुवृत्तिः ॥ ननु प्राणिसमूहः संघः, ततश्च वृक्षाणां विंशतिरिति न प्राप्नोतीत्याह—**संघः समूह इति** । सामान्येन प्राणिनामप्राणिनां समुदायः संघ इत्यर्थः ॥

ननु चोक्तं 'परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम्' इति । नैष दोषः । द्रव्यसंघयोर्दशतोः संघे प्रत्ययो निपात्यते,



न तु द्रव्यसंघे । इह द्रव्याणां द्रव्यसंघस्य दशतां दशत्संघस्य च पारमार्थिको भेदो नास्ति, केवलं बुद्ध्या परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमवगमयन्ति ॥

**(उद्द्योतः) न तु भिन्नानीति** । एवञ्च सङ्घस्यैकत्वादेकवचनं, सामानाधिकरण्यनिबन्धनद्विगुसमासश्चोपपन्न इति भावः ॥ **सामान्येनेति** । 'संघोढौ—' इति निपातनबललभ्यमेतत् ॥ **ननु चोक्तमिति** । अन्यथा 'विंशतिर्गोसङ्घः' इति प्राप्नोति, 'विंशकः' इति चेष्यत इति भावः ॥ **द्रव्यसंघयोरिति** । दशच्छब्दो दशसङ्ख्यापरिच्छिन्नद्रव्यसंघे इति भावः ॥ **न तु द्रव्यसंघे इति** । तत्र दशतोः संघस्य विंशतिशब्देनाभिधानात् गोसंघे विवक्षिते दशत्संघद्वयात्मिका विंशतिः परिमाणमस्येत्यर्थे 'विंशको गोसंघः' इति भविष्यति, 'विंशतिर्गोसङ्घः' इति च न । गवां विंशतिर्गोविंशतिरिति च सिध्यतीति भावः ॥

नन्वेवमपि दशतोः सङ्घस्य दशतौ गुणिनौ, न गावः । तेन दशतोर्विंशतिरिति प्राप्नोति, गवां विंशतिरिति च न सिध्यत्यत आह—**इहेति** । एवञ्च गवां दशतोश्च तात्त्विकभेदाभावाद्दशत्सङ्घमपि प्रति गवां गुणत्वमुपपद्यते, व्यभिचाराभावात्तु दशद्वयां विंशतिर्न विशेष्यते, तत एव च सामानाधिकरण्यमपि—विंशतिर्गाव इतीति भावः ॥

नन्वेवमपि भेदाभावात्षष्ठ्यनुपपन्नेत्यत आह—**केवलं बुद्ध्येति** ॥ **बुद्धिव्यवस्थापितेत्यादि** । बुद्धिपरिकल्पितार्थाभिधायिन एव शब्दा न तु बाह्यार्थाभिधायिन इति मञ्जूषायां शक्तिवादे निरूपितम् ॥

**( विंशत्यादीनां गुणवचनत्वबोधकभाष्यम् )**

**त एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति, भाववचनाः सन्तो गुणवचना भवन्ति, गुणवचनाः सन्तोऽविशिष्टा भवन्त्यन्यैर्गुणवचनैः ॥**

(प्रदीपः) **त एत इति** । निपातनसामर्थ्याद्विशिष्टे दाशते संघे वर्तमाना भाववचना भवन्ति । भावशब्देनात्र धर्ममात्रमुच्यते । भाव इव भावः । यथा पाकादिभावः पराश्रयः, एवमन्योऽपि धर्मः पराश्रयत्वाद् भावः ॥ **गुणवचना इति** । गुणमुक्तवन्तो गुणवचनाः, गुणमुक्त्वा द्रव्यमभिदधतीत्यर्थः ॥ **अन्यैरिति** । शुक्लादिभिरुभयवचनैस्तुल्या इत्यर्थः ॥

( उद्द्योतः ) प्रकारान्तरेणाऽपि 'विंशतिर्गावः' इति समानाधिकरणप्रयोगोपपादनायाह—भाष्ये—**त एत इति** ॥ **विशिष्टे दाशते इति** । दशद्वयात्मके इत्यर्थः ॥ नन्वेते न धात्वर्थरूपभाववचना अत आह—**भावशब्देनेति** । वस्तुत एते क्रियारूपा एव, एकबुद्धिसम्बद्धत्वरूपस्य, एकदेशसम्बद्धत्वरूपस्य वा समूहस्य बन्धनक्रियारूपत्वात्, तादृशाश्च सन्तो गुणवचनास्तत्सदृशा भवन्ति ॥ तत्सादृश्यमेवाह—**तत्सदृशाः सन्तोऽन्यैर्गुणवचनैरविशिष्टा अविलक्षणा इति** । अत एव 'शतसहस्रादौ षष्ठीसमासः' इति **परे** ॥ गुणबोधकरूपादितुल्यत्वेऽपि नेष्टसिद्धिरत आह—**शुक्लादिभिरिति** ॥

**( गुणानां गुणिविशेषकत्वबोधकभाष्यम् )**

**अन्येषु च गुणवचनेषु कदाचिद्गुणो गुणि-**

**विशेषको भवति, तद्यथा—शुक्लः पट इति ॥**

**( प्रदीपः ) गुणिविशेषक इति** । भाष्यकारवचनात् 'कर्तरि च' इति अनित्यः षष्ठीसमासनिषेधः, शेषषष्ठ्या वा समासः । अथ वा गुणिनं विशिनष्टीति, कर्मण्यण् । ततः स्वार्थे कन्प्रत्ययः ॥ **पटः शुक्ल इति** । गुणगुणिनोरव्यतिरेकविवक्षया मतुब्लोपाद्वा सामानाधिकरण्यम् । एवं विंशत्यादीनामपि द्रव्येण सामानाधिकरण्यम् ॥

**( उद्द्योतः )** नन्वत्र षष्ठीसमासनिषेधः प्राप्नोतीत्यत आह—**भाष्येति** ॥

**( गुणिनां गुणव्यपदेशदर्शकभाष्यम् )**

**कदाचिद्गुणिना गुणो व्यपदिश्यते, तद्यथा—पटस्य शुक्ल इति ॥**

**( प्रदीपः ) कदाचिदिति** । आधारान्तरव्यवच्छेदायोपजातव्यतिरेकेण गुणिना गुणो विशेष्यते—पटस्य शुक्लः, न शङ्खादेरित्यर्थः ॥

**( उद्द्योतः )** ननु भेदकल्पने किं बीजमत आह—**आधारान्तरेति** ॥

**( आक्षेपपरिहारदर्शकभाष्यम् )**

**तद्यदा तावदुच्यते—विंशत्यादयो दशदर्थे चेत्—समासवचनानुपपत्तिरिति, सामानाधिकरण्यं तदा गुणगुणिनोः ।**

**वचनपरिहारस्तिष्ठतु तावत् ।**

**परिमाणिनि चेत्पुनः स्वार्थे प्रत्ययविधानमिति, संहनने वृत्तः संहनने वर्तिष्यते, संख्यासंहनने वृत्तो द्रव्यसंहनने वर्तिष्यते ॥**

**अथ षष्ठी तदा गुणिना गुणो विशेष्यते ॥**

**( प्रदीपः ) दशदर्थे चेदिति** । अस्मिन् पक्षे यो दोषः स पक्षान्तराश्रयेण परिह्रियत इत्यर्थः ॥ **वचनपरिहार इति** । समुदायाभिधाने वचनदोषो नावतरति । सामानाधिकरण्ये त्ववतरति, स च परतः परिहरिष्यते ॥ **तिष्ठत्विति** । परस्ताद्वक्ष्यमाणत्वात् ॥ **संहनन इति** । संघः—संहननम्, तत्र दशतोः संघे वृत्तो विंशतिशब्दो गवादिद्रव्यसंघे परिमाणिनि प्रत्ययमुत्पादयिष्यतीत्यर्थः । विंशतिः परिमाणमस्य गोसंघस्य विंशको गोसंघ इति ॥ **वर्तिष्यत इति** । परार्थाभिधानं वृत्तिर्विवक्षिता, न तु विंशतिशब्दः कदाचिदपि गोसंघे वर्तते ॥ **गुणिनेति** । गवादिनेत्यर्थः ॥ ननु दाशतस्य संघस्य गवादिर्गुणी न भवति, दशतौ हि तस्य गुणिनौ । नैष दोषः । गवां दशतोश्च तात्त्विकभेदाभावात् गवामपि गुणित्वात् । तत्राव्यभिचाराद् दशता विंशतिर्न विशेष्यते—दशतोर्विंशतिः—इति । गोभिस्त्वश्वादिव्यावृत्तये विशेष्यते—गवां विंशतिरिति । यथा 'पटस्य शौक्ल्यम्' इति पटेन शङ्खादिव्यावृत्तये शौक्ल्यं विशेष्यते, न तु शुक्लेन गुणेन स्वसमवेतं गुणसामान्यं—शुक्लस्य शौक्ल्यमिति, व्यभिचाराभावाद् ॥

**( उद्द्योतः )** भाष्ये—**तद्यदा तावदिति** । दशदर्थाभिधायिनो 'द्वि'शब्दात्स्वार्थे प्रत्यय इति पक्षे यद्दूषणमुच्यते **'दशदर्थे चेत्'** इत्यादिना,—तस्मिन् पक्षे तद्दूषणं न भवति, यतस्तदा गुणगुणिनोः सामानाधिकरण्यमिति भाष्याक्षरार्थः । तदाह—**यो दोष इति** । समासानुपपत्तिरूप इत्यर्थः ॥ **पक्षान्तरेति** । पूर्वं दाशते सङ्घे वृत्तिं समुदायसमुदायिनोश्चाभेदमाश्रित्य परिहृतम्, इदानीं तु दशदर्थे एव वृत्तिं गुणगुणिनोरिव समूहसमूहिनोः सामानाधिकरण्यमाश्रित्य परिह्रियत इत्यर्थः ॥ **तदेत्यनेन**—यदा भेदविवक्षा तदा गवां विंशतिरिति वैयधिकरण्यमित्यपि सूचितम् ॥ **दशतोः सङ्घे इति** । दशसमुदाययोः सङ्घे इत्यर्थः ॥ भाष्ये—**संहनने वर्तिष्यते इति** । संहनने द्रव्यसङ्घे स्वप्रकृतिकप्रत्ययघटितं वृत्त्यन्तरं प्राप्स्यत इत्यर्थः ॥ तदाह—**पराऽर्थेति** । भाष्ये—**सङ्ख्यासंहनने इति** । सङ्ख्यारूपे समुदाये वृत्त इत्यर्थः ॥ **कदाचिदपीति** । अत एव 'विंशतिर्गोसङ्घः' इति न ॥

भाष्ये—**गुणो विशेष्यते इति** । भेदेनेत्यर्थः ॥ **नन्विति** । एवञ्च दशतोर्विंशतिरिति प्राप्नोतीति भावः ॥ गवां गोसमूहेन दशतश्च दशत्सङ्घेन न पारमार्थिको भेदः, किन्तु बुद्धिकल्पित इति न दोष इत्याशयेनाह—**गवां दशतोश्चेति** । गवामपि दशत्सङ्घं प्रति गुणित्वादित्यर्थः । **न शुक्लेन गुणेनेति** । स्वाश्रयद्वारेत्यर्थः ॥

**( वचनदोषपरिहारभाष्यम् )**

**वचनपरिहार उभयोरेवम् ।**

**उभयोरपि पक्षयोरेवं कृत्वा वचनपरिहारः—**

**( प्रदीपः ) वचनपरिहार उभयोरिति** । समुदायाभिधाने गुण्यभिधाने चेत्यर्थः । तत्र समुदायाभिधाने तस्यैकत्वात्सिद्धमेकवचनमिति सामर्थ्यात् परिहृत एव वचनदोषः । सामानाधिकरण्ये तु परिहार उच्यते इति भावः ॥

**( उद्द्योतः ) समुदायेति** । वर्गद्वयसमुदायेत्यर्थः ॥ **गुण्यभिधाने चेति** । तादृशसङ्ख्यगुणकद्रव्याभिधाने चेत्यर्थः । तादृशसङ्घ एव विंशतित्वमिति बोध्यम् । एवं द्व्यादिसङ्घ एव द्वित्वादिकमित्याहुः ॥

**( विंशत्यादीनां गुणवचनत्वसाधने आक्षेपभाष्यम् )**

**यदि तर्हि—इमे विंशत्यादयो गुणवचनाः स्युः, सधर्मभिरन्यैर्गुणवचनैर्भवितव्यम् ।**

**अन्ये च गुणवचना द्रव्यस्य लिङ्गसङ्ख्ये अनुवर्तन्ते, तद्यथा—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति ।**

---

१ शुक्ल इति । उपलब्धभाष्यपुस्तकेषु 'शुक्लः पटः' इत्येवम्पाठो दृश्यते । प्रदीपे च 'पटः शुक्ल इति' इत्येतादृक् प्रतीकमुपलभ्यते ॥

२ 'प्रवृत्तः' इति ख. पाठः ॥

यदसौ द्रव्यं श्रितो गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति ॥

( विंशत्यादीनां गुणवचनानां लिङ्गसंख्याऽननुवर्तनेन दोषाभावबोधकभाष्यम् )

विंशत्यादयः पुनर्नानुवर्तन्ते ।

अन्येऽपि वै गुणवचना नावश्यं द्रव्यस्य लिङ्गसंख्ये अनुवर्तन्ते, तद्यथा—गावो धनम् । पुत्रा अपत्यम् । इन्द्राग्नी देवता । विश्वेदेवा देवता । यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणा समृद्ध्या इति ॥

( प्रदीपः ) तं वचनदोषं 'यदि तर्हि' इत्यनुभाष्य परिहरति—**विंशत्यादयः पुनरिति** । प्राक् शतात्तेषां स्त्रीलिङ्गत्वादेकवचनान्तत्वाच्च, शतस्य नपुंसकत्वादेकवचनान्तत्वाच्चेति भावः । विंशती-विंशतयः शते-शतानि-इति तु प्रचयविवक्षायामेकशेषो भवति ॥ **गावो धनमिति** । धनादीनां साकाङ्क्षत्वाद्भेदकत्वात् क्रियायां पारतन्त्र्याच्च गुणत्वम् । यथा शुक्लमित्युक्ते 'किं तत्' इति नित्यं द्रव्यमाकाङ्क्षति । शुक्लं च वस्त्रमिति द्रव्यस्य भेदकम् । शुक्लमानयेति क्रियायां द्रव्यपरतन्त्रं, द्रव्यानयनमन्तरेण गुणानयनासंभवात्-इति शौक्ल्यं गुणः । एवं धनमित्युक्ते 'किं तत्' इति गवाद्याकाङ्क्षति । गावो धनमिति गवां प्रीतिहेतुत्वावगमाद्भेदकम् । धनमानयेत्युक्ते गवादिद्रव्यानयनात् क्रियायां पारतन्त्र्यमिति धनं गुणः ॥

( उद्योतः ) **यदि तर्हीत्यनुभाष्येति** । 'यदि तर्हीत्यादि तद्गुणस्यापि भवति'इत्यन्तेन ग्रन्थेनानूद्येत्यर्थः ॥ **विंशत्यादयो गुणवचना इत्यस्य**—तत्सदृशा इत्यर्थः ॥ **प्रचयविवक्षायामिति** । समुदायभेदविवक्षायामित्यर्थः ॥ विंशत्यादिभिस्तदननुवृत्तिं दृष्टान्तसिद्धयुक्त्योपपादयितुमाह—भाष्ये-**अन्येऽपि वै गुणेत्यादि** ॥ ननु धनादीनां द्रव्यवचनत्वात्कथं गुणवचनत्वमत आह—**धनादीनामिति** ॥ हेतुत्रयमपि दृष्टान्ते उपपादनपूर्वं प्रकृते उपपादयति—**यथेत्यादि** ॥ **भेदकमिति** । प्रीतिहेतुत्वेनेतरेभ्यो भेदकमित्यर्थः ॥

( लिङ्गसंख्याननुवर्तनहेतुबोधकभाष्यम् )

अथात्राननुवृत्तौ हेतुः शक्यो वक्तुम् ?

बाढं शक्यो वक्तुम् ।

कामं तर्ह्युच्यताम् । इह—कदाचिद्गुणः प्राधान्येन विवक्षितो भवति, तद्यथा—पञ्चोडुपशतानि तीर्णानि । पञ्चवध्रीशतानि तीर्णानि[1] । अश्वैर्युद्धम् । असिभिर्युद्धमिति । न चासयो युध्यन्ते, असिगुणाः पुरुषा युध्यन्ते, गुणस्तु खलु प्राधान्येन विवक्षितो भवति ॥

इह तावद्गावो धनमिति, धिनोतेर्धनम्, एको गुणः स च प्राधान्येन विवक्षितः ॥

पुत्रा अपत्यमिति, अपतनादपत्यम्, एको गुणस्स प्राधान्येन विवक्षितः ॥

इन्द्राग्नी देवता—विश्वेदेवा देवता इति, दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तल्, एको गुणः स प्राधान्येन विवक्षितः ।

यावन्तस्ते तां वाशितामनुयन्ति सर्वे ते दक्षिणा समृद्ध्या इति, दक्षतेर्वृद्धिकर्मणो[2] दक्षिणा एको गुणः स प्राधान्येन विवक्षितः, तस्यैकत्वादेकवचनं भविष्यति ॥

विंशत्यादिषु चाप्येको गुणः स प्राधान्येन विवक्षितः, तस्यैकत्वादेकवचनं भविष्यति ॥

( प्रदीपः ) **उडुपशतानीति** । अत्र संख्यालक्षणस्य गुणस्य तरणे प्राधान्यं विवक्षितम्, 'तीर्णानि' इति कर्तरि निष्ठाविधानात् । तत्त्वतस्तु संख्येयानामुडुपानां प्लवने कर्तृत्वम् । **अथ वा**-उडुपानां करणानामेव कर्तृत्वविवक्षायामिदमुदाहरणम् ॥ **अश्वैरिति** । अश्वा असयश्चाधिकरणत्वात्करणत्वाच्चोपकारित्वात् गुणा अपि सन्तः प्रहारे प्राधान्येन विवक्षिताः, कर्तरि तृतीयाविधानात् ।

**धिनोतेर्धनमिति** । समुदायस्य प्रीतिहेतुत्वाद्धनत्वम्, न त्वेकैकस्य गोपिण्डस्येति धनमेकं गोभिर्विशेष्यते । आश्रितसंख्याविशेषाश्च गोपिण्डा धनं विशेषन्तः समुदायस्य प्रीतिहेतुत्वं प्रत्याययन्तीति गावोऽपि धनसंख्यां नानुवर्तन्ते, गौर्धनमित्युक्ते विवक्षितार्थानवगमात् ॥

**अपतनादिति** । बहूनां चापतनहेतुत्वम्, न त्वेकैकस्य । तथा चोच्यते—'वरमपुत्रत्वं न त्वेकपुत्रता'इति लोकाश्रयत्वाल्लिङ्गस्यापत्यशब्दो नपुंसकलिङ्ग एव प्रयुज्यते । प्रत्येकं त्वपतनहेतुत्वे विवक्षिते 'पुत्रा' 'अपत्यानि' इति बहुवचनं भवत्येव ।

**इन्द्राग्नी देवतेति** । संघस्य देवतात्वमेकं हविष्प्रति-इति द्विवचनाभावः । 'देवते' इत्युच्यमाने प्रत्येकं देवतात्वं प्रतीयेत, ततश्च विकल्पेन देवताकार्यं स्यात् । यथा खादिरे बध्नाति पालाशे बध्नातीति बध्नातावेकार्थत्वादधिकरणविकल्पः ।

**सर्वे ते दक्षिणेति** । अत्रापि समुदायस्य दक्षिणात्वमित्येकवचनम् । 'दक्षिणाः' इति तु बहुवचने दाने विकल्पः स्यात् ।

**विंशत्यादिष्विति** । विंशतिसंख्या समुदितद्रव्यसमवायिनी, न तु प्रत्येकं शुक्लादिवत्परिसमाप्तेति द्रव्यगते लिङ्गसंख्ये

१ 'पञ्चफलकशतानि' इति छ. पाठः ॥

२ 'दक्षेर्वृद्धि' इति छ. पाठः ॥

नानुवर्त्तते । पञ्चादयस्तु नित्यं संख्येयवचना इति संख्येयलिङ्गसंख्याऽनुविधायिनः ॥

**( उद्योतः )** भाष्ये—**अथात्राननुवृत्ताविति** । गुणिलिङ्गाद्यननुवृत्तावित्यर्थः ॥ **उडुपशतानीत्यादि**—षष्ठीतत्पुरुषः ॥ **कर्तरि निष्ठेति** । प्लवनार्थस्य तरतेरकर्मकत्वादिति भावः । तरणे च तेषां कर्तृत्वात्प्राधान्यमिति तात्पर्यम् ॥ ननु तेषां करणत्वेन कथं कर्तृत्वमिति चेन्न, यदा स्वत एव तानि जले प्लवन्ते तदोदाहरणत्वमित्याशयात् । इत एव वाऽस्वरसादाह—**अथ वेति** । एवञ्च करणत्वेन गुणानामेवोडुपानां प्राधान्यविवक्षेति भावः ॥ **कर्तरि तृतीयेति** । कर्त्रन्तरानुपादानात्क्रियाया नियमेन कर्त्राकाङ्क्षत्वाच्च तेषामेव कर्तृत्वप्रतीतिरिति तात्पर्यम् ॥

**समुदायस्येति** । अयम्भावः—यस्य धर्मस्य धर्मिणा सहाभेदः प्रतिपाद्यते, स चेत्तेषु प्रत्येकं परिसमाप्तस्तदा तस्याऽपि धर्मिवदेव भिन्नत्वात् द्विवचनादि । यथा—शुक्लौ शुक्ला इति । न चैवं प्रकृते, धनाकारे भेदाभावाद्बहुवचनाप्रसङ्ग इति ॥ **धनमेकमिति** । प्रीतिहेतुत्वमेकं समुदाये पर्याप्तमित्यर्थः । एकरूपप्रीतिहेतुत्वस्य प्रतिपिपादयिषितत्वादिति भावः ॥ भाष्ये—**स च प्राधान्येन विवक्षित इति** । एतदेव चास्य प्राधान्यं यत्तद्गतसंख्यावत्त्वेनैव ततस्तदाश्रयद्रव्यप्रतीतिरिति बोध्यम् । केवलधर्मप्रतीतिस्तु नैतेभ्यः, अनभिधानादिति 'गवां धनम्' इत्यादि नापाद्यम् । द्रव्यवचनानामप्येषां गुणवचनसादृश्याद्गुणवचनव्यवहारो भाष्ये । सादृश्यं चोपपादितमेव कैयटेन । यथा च लोके यद्धनादिना यो धनकार्यादीनि लभते, स तदपेक्षया प्रधानत्वेन व्यवह्रियते, तद्वदत्र प्राधान्येन विवक्षेति भाष्यतात्पर्यम् ॥ यत्तु प्रकृत्यर्थताऽवच्छेदकेऽत्र संख्याऽन्वयः, संख्याऽन्वयित्वमेव च प्राधान्यमिति, तन्न, तस्याप्रकृत्यर्थत्वेन 'प्रकृत्यर्थान्वित' इति व्युत्पत्तिविरोधात् ॥ नन्वेवं गावो धनसंख्यां कुतो नानुवर्तन्त इत्यत आह—**आश्रितेति** । **प्रत्येकं त्विति** । अनया रीत्या 'गावो धनानि' इत्यपि भवतीति द्रष्टव्यम् ॥

**दक्षिणात्वमिति** । कर्मफलसमृद्धिहेतुत्वमित्यर्थः । तदुक्तम्—'दक्षिणा दक्षतेः समृद्धिकर्मणो व्यृद्धं समर्द्धयति' इति ॥ **विकल्पः स्यादिति** । 'कदाचिद्द्वौ, कदाचित्सर्वे' इत्येवं विकल्पः स्यादित्यर्थः ॥ **विंशतिसंख्येति** । दशद्वर्गद्वयसङ्घरूपैव सेत्याहुः ॥

**नानुवर्तते इति** । 'विंशतिर्गावः' इत्यादाविति भावः ॥ नन्वेवं 'त्रयः' 'पञ्च' इत्यादावपि एकवचनापत्तिः, त्रित्वादीनामपि प्रत्येकमपरिसमाप्तत्वादत आह—**पञ्चादयस्त्विति** । अत्र वदन्ति—विंशतिशब्दद्व्यादिशब्दयोः को विशेषः ? समुदितद्रव्यसमवायित्वस्योभयत्रापि तुल्यत्वात्, 'द्व्येकयोः' इत्यादौ तेषामपि संख्यामात्रवचनताया दृष्टत्वाच्च । तस्मादयमत्र भाष्यार्थः—विंशत्यादयो द्व्यादयश्च धर्मशक्ता एव, धर्मधर्मिणोरभेदाच्च व्यक्तौ कार्याणि, तयोश्च भेदाभेदौ । विंशत्यादयः कदाचिद्भेदेन संख्यां वदन्ति—'गवां विंशतिः' इति । कदाचिदभेदेन—'विंशतिर्गावः' इति । यदाऽप्यभेदेन तदापि धर्मगतसंख्यावैशिष्ट्येनैव ततो द्रव्यप्रतीतिः, शब्दशक्तिस्वभावात् । यथा—'गावो धनम्' इत्यादौ प्रीतिहेतुत्वगुणगतसंख्यावैशिष्ट्येन द्रव्यप्रतीतिर्धनशब्दात् । इयांस्तु विशेषः—तत्र कदाचित्स्वगतसंख्यावैशिष्ट्येनापि प्रतीतिः । अन्यगतसंख्यावैशिष्ट्यमन्यस्य कथमिति चेत्—आरोपेणेति गृहाण । द्व्यादयस्तु स्ववाच्यसंख्याविशिष्टद्रव्याभेदेन तद्गतसंख्याविशिष्टमेव धर्मं प्रतिपादयन्ति, शब्दशक्तिस्वभावात्—इति न कदाचिदपि तत्रैकवचनम्, नापि विंशत्यादिभ्यो बहुवचनम् । विंशतिप्रचये तु बहुवचनमिष्टमेव । 'द्व्येकयोः' इत्यादौ तु विंशतिवदेव धर्मगतसंख्याविशिष्टद्रव्यस्यैव प्रतीतिरिति द्विवचनम् । एवम्प्रतीतिरीदृशवृत्तिविषयैवेति नातिप्रसङ्गः । 'न ब्राह्मणं हन्यात्' इत्यादौ 'जातावेकवचनम्' इत्यस्याप्ययमेवार्थः—जातिगतसंख्याऽऽरोपवद्द्रव्यस्यैव प्रतीतिरिति । तद्गतसंख्यारोपश्च विनिगमनाविरहात्सर्वव्यक्तिष्विति सकलव्यक्तिप्रतीतिः । 'जातिप्राधान्यविवक्षा' इत्यस्याऽप्ययमेवार्थः । तद्ध्वनयन् वक्ष्यति—**अथ वाऽव्यतिरेकादिति** ॥

( विंशत्यादीनां गुणवचनत्वे आक्षेपभाष्यम् )

**अयं तर्हि विंशत्यादिषु भाववचनेषु दोषः-गोविंशतिरानीयतामिति, भावानयने चोदिते द्रव्यानयनं न प्राप्नोति ॥**

**( प्रदीपः ) भावानयन इति** । न ह्यन्यस्मिंश्चोदितेऽन्यस्यानुष्ठानं युक्तम् । न हि दण्डं छिन्धीत्युक्ते कश्चिद्दण्डिनं छिनत्तीति भावः ॥

**( उद्योतः )** भाष्ये—**भाववचनेष्विति** । वैयधिकरण्ये इत्यर्थः ॥

( दृष्टान्तप्रदर्शनपूर्वकं समाधानभाष्यम् )

**नैष दोषः ।**

**इदं तावदयं प्रष्टव्यः-अथेह-गौरनुबन्ध्योऽजोऽग्नीषोमीय इति कथमाकृतौ चोदितायां द्रव्ये आरम्भणालम्भनप्रोक्षणविशसनादीनि क्रियन्ते इति ।**

**असंभवात् ।**

**आकृतावारम्भणादीनां संभवो नास्तीति कृत्वा आकृतिसहचरिते द्रव्ये आरम्भणादीनि क्रियन्ते ।**

**इदमप्येवंजातीयकमेव । असंभवाद्भावानयनस्य द्रव्यानयनं भविष्यति ॥**

**( प्रदीपः ) इदं तावदिति** । अन्यस्मिंश्चोदितेऽन्यत्रापि तदव्यभिचारिणि कार्यं दृश्यत इति मत्वा प्रश्नः ॥ **असंभवादिति** । आकृतौ साक्षात् कार्याणामसंभवाद् द्रव्येषु कार्याणि क्रियन्त इत्यर्थः । **येषां** तावद्व्यतिरिक्ता जातिस्तेषामेतदेव जातौ कार्यं चोद्यमानं द्रव्यविषयमेवोपतिष्ठते । यथा च 'अग्निमानय' इति चोदिते नान्तरीयकत्वादचोदितमपि पात्रमानीयते, तथा जातिचोदनायां द्रव्ये क्रियाप्रवृत्तिः ॥

१ 'इति संख्यानुविधायिनः' इत्येव पाठः क. पुस्तके ॥
२ 'स्वगतवाच्य' इति ख. घ. ङ. पाठः ॥
३ 'जातिसंख्यारोपवत्' इत्येव पाठः ख. घ. ङ. पुस्तकेषु ॥

( उद्द्योतः ) भाष्ये—**आकृतौ चोदितायामिति**। आकृतिरेव शक्या सैव तज्जन्यबोधविषयेति मत इदम् ॥ **तदव्यभिचारिणीति**। अनेनातिप्रसङ्गनिरासः। अव्यभिचारश्च शक्तिग्रहे नियमेन विषयतया बोध्यः, तत्पक्षेऽपि 'गौर्गोपदशक्यः' इत्येव शक्तिग्रहात्। तदुक्तं भाष्ये—**आकृतिसहचरित इति** ॥ **व्यतिरिक्तेति**। व्यतिरिक्तैवेत्यर्थः ॥ **तेषामेतदेवेति**। एतदेव समाधानमित्यर्थः ॥ तदेवाह—**जातौ कार्यमित्यादिना**। असम्भवादिति भावः ॥

( प्रकारान्तरेण समाधानभाष्यम् )

**अथ वा अव्यतिरेकात्** ॥

( प्रदीपः ) **अव्यतिरेकादिति**। जातितद्वतोर्गुणगुणिनोश्च तात्विकभेदाभावाद् **द्रव्यमेव** तेन द्वारेण तासु तासु क्रियासु चोद्यत इत्यर्थः। सहस्रादयस्तु पृषोदरादित्वादनुज्ञातसाधिमानः ॥

( उद्द्योतः ) भाष्ये—**अव्यतिरेकादिति**। एवञ्च सामानाधिकरण्यमपि मतुब्लोपं विनैवेत्यादि ध्वनितम् ॥ नन्वेवं सहस्रादीनामननुगमोऽत आह—**पृषोदरादित्वादिति**। केषाञ्चिद्ग्रहणं तूदाहरणमात्रमित्याहुः ॥

( ८६१ विधिसूत्रम् ॥ ५। १। २ आ. ३५ )

## १९४६ छेदादिभ्यो नित्यम् ॥५।१।६४॥

( ८६२ विधिसूत्रम् ॥ ५। १। २ आ. ३६ )

## १९५८ पन्थो ण नित्यम् ॥ ५।१।७६ ॥

( णप्रत्ययाधिकरणम् )

( ५६५३ सूत्रद्वयेऽपि नित्यग्रहणाक्षेपवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ छेदादिपथिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् ॥ * ॥

( भाष्यम् ) **छेदादिपथिभ्यो नित्यग्रहणमनर्थकम्।**

**किं कारणम्?**

**विग्रहदर्शनात्। विग्रहो दृश्यते—छेदमर्हति, पन्थानं गच्छतीति ॥**

( प्रदीपः ) **छेदादिपथिभ्य इति**। नित्यग्रहणं **प्रत्ययान्तरनिवृत्त्यर्थं** तावदिह न भवति, तस्याप्राप्तत्वात्। यथा 'एकगोपूर्वाट्ठञ् नित्यम्' इत्यत्र नित्यग्रहणं मतुब्निवृत्त्यर्थम्। तथा हि—'छेदादिभ्यः' इति ठग्विधीयते, न चैतेभ्यः प्रत्ययान्तरप्रसङ्गः। पथिशब्दात् ष्कन्प्रत्ययो विधानसामर्थ्याद्भवत्येव, प्रत्ययान्तरस्य तु प्रसङ्गाभावः। नापि **तद्विषयार्थं** नित्यग्रहणम्। यथा 'त्रेर्मम्नित्यम्' इति मप्प्रत्ययादन्यत्र त्र्यन्तप्रयोगनिवारणफलं नित्यग्रहणम्, छेदादीनामन्यत्र प्रयोगस्येष्टत्वात्। नापि **प्रत्ययार्थविशेषणम्**, नित्यं छेदमर्हतीत्यस्यार्थस्यासम्भवात्। न हि कश्चित्पदार्थो नित्यं छेदमर्हति, योऽपि वेतसादिरर्थैश्छिन्नः प्ररोहति सोऽपि न नित्यं छेदमर्हति, कालान्तरे तस्य छेदप्रवर्तनात्। नित्यं पन्थानं गच्छतीति यद्यप्यर्थः सम्भवति तथापि नात्रैवार्थे पान्थशब्दस्य प्रयोग इष्यते, कदाचिद्गच्छत्यपि प्रयोगात्। **वाक्यनिवृत्त्यर्थं** नित्यग्रहणं स्यात्। यथा—'नित्यं क्रीडाजीविकयोः' इति। एतदप्यप्रयोजनम्, शिष्टप्रयोगे वाक्यस्य **दर्शनात्** ॥

( उद्द्योतः ) अन्यार्थत्वमाशङ्क्य नित्यग्रहणस्य निराचष्टे—**नित्यग्रहणमित्यादिना**। यथा 'एकगोपूर्वात्—' इत्यत्र नित्यग्रहणं मतुन्निवृत्त्यर्थं, तथेह न भवति,—कुतः,—तस्याप्राप्तत्वादित्यन्वयः ॥ अप्राप्तिमेवोपपादयति—**तथा हीति**। **विधानसामर्थ्यादिति**। अन्यथा 'पथः ष्कन्' इति व्यर्थं स्यादिति भावः ॥ **प्रत्ययान्तरस्येति**। कना बाधादिति भावः ॥ **इष्टत्वादिति**। अत एव छेदादिपठितसम्प्रश्नशब्दस्य विधिनिमन्त्रणादिसूत्रे स्वतन्त्रप्रयोगः ॥ **वाक्यस्य दर्शनादिति**। न च 'नित्यं कौटिल्ये गतौ' इत्यत्र यथाऽर्थान्तरनिवृत्त्यर्थं नित्यग्रहणं वृत्तिमते, तथेहापि स्यादिति वाच्यम्। अर्थान्तरेऽपि च्छेदादिभ्य आर्हीयप्रत्ययेष्टेरिति बोध्यम् ॥ ननु 'नित्यं विकार उत्पद्यते' इत्येव लभ्यते न तु तेन वाक्यनिवृत्तिरत आह—**नित्यं प्रत्ययेति**। वाक्यलभावादेव विकारस्य नित्यत्वे लब्धे नित्यश्रुतिरेतदर्थेति भावः ॥

( नित्यग्रहणप्रयोजनभाष्यम् )

**विकारार्थं तर्हीदं नित्यग्रहणं क्रियते, विकारेण विग्रहो मा भूदिति।**

**विराग विरङ्गं च। पन्थो ण नित्यमिति ॥**

( प्रदीपः ) **विकारेणेति**। नित्यग्रहणं विकारेण सम्बध्यते। विरङ्गादेशः पन्थादेशश्च नित्यं प्रत्ययविषयौ भवतः, न तु ताभ्यां वाक्यं कर्तव्यमित्यर्थः। अन्यथा तयोः साधुत्वं सर्वविषयमित्याशंक्येत, प्रत्ययविधानं त्वन्वाचीयमानं विज्ञायतेति भावः ॥

( उद्द्योतः ) ननु प्रत्ययसन्नियोगशिष्टत्वात्कथं सर्वविषयं साधुत्वमत आह—**अन्वाचीयमानमिति** ॥

( ५६५४ नित्यग्रहणवैफल्यबोधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ विकारार्थमिति चेदकङादिभिस्तुल्यम् ॥ * ॥

( भाष्यम् ) **विकारार्थमिति चेदकङादिभिस्तुल्यमेतत्। यथाऽकङादिभिर्विकारैर्विग्रहो न भवति, एवमाभ्यामपि न भविष्यति।**

( प्रदीपः ) **अकङादिभिरिति**। 'सुधातुरकङ्च' 'कल्याण्यादीनामिनङ्' 'परस्त्री परशुं च' इति प्रत्ययसंनियोगेन विधीयमानानामादेशानां तदभावे प्रसङ्ग एव नास्तीति नार्थो विकारेण वाक्यनिषेधार्थेन नित्यग्रहणेन ॥

( उद्द्योतः ) **विकारेण वाक्येति**। विकारेण प्राप्तस्य वाक्यस्य निषेधार्थेनेत्यर्थः ॥

( सन्नियोगशिष्टन्यायेन नित्यग्रहणवैफल्यबोधकभाष्यम् )

**किं पुनरिहाकर्तव्यं नित्यग्रहणं क्रियते, आहोस्विदन्यत्र कर्तव्यं न क्रियते?**

इहाकर्तव्यं क्रियते ।

एष एव न्यायो यदुत-संनियोगशिष्टानामन्यतरापाये उभयोरप्यभावः । तद्यथा—देवदत्तयज्ञदत्ताभ्यामिदं कर्तव्यमिति देवदत्तापाये यज्ञदत्तोऽपि न करोति ॥

( प्रदीपः ) **संनियोगशिष्टानामिति** । विशिष्टप्रयोगसिद्धये ययोरेकस्मिन् विषये विधिस्तयोस्तद्विषयादन्यत्रैकस्याप्रयोगे परोऽपि न प्रयुज्यते । यथा 'श्रुवः शृ च' इति श्रुसन्नियोगेन विधीयमानस्य शृभावस्य विषयान्तरे प्रयोगाभावः । अस्यैव न्यायसिद्धस्यार्थस्य 'बिल्वकादिभ्यश्छस्य लुक्' इत्यत्र लिङ्गं वक्ष्यते ॥ **इदं कर्तव्यमिति** । धर्मनिर्णयादिकं । तत्र ह्येकस्य सन्देहसम्भवादनधिकारः ॥

( उद्द्योतः ) अकङादिभिस्तुल्यमित्यनेन किमकङादिषु कर्तव्यताऽऽपाद्यते, किं वा तद्वदिहाकर्तव्यतोच्यते इति पृच्छति भाष्ये—**किं पुनरिति** ॥ सन्नियोगशिष्टत्वं सह विधानमित्याह—**विशिष्टेति** ॥ सन्नियोगपदार्थः—**एकस्मिन् विषये इति** ॥ ननूभाभ्यां कर्तव्यत्वेन नोदितस्याऽपि भारवहनादेरेकेनापि शक्तेन करणं भवतीत्यत आह—**धर्मेति** । यत्तु 'नित्यग्रहणं पौनःपुन्यार्थकं छिन्नप्ररूढो वेतसादिश्चोदाहरणम्' इति वृत्तिकृतः, तद्भाष्यविरुद्धम् । एवं च 'छेदादिभ्यः—' इत्यपि व्यर्थमेवेति 'छेदादिभ्यो नित्यम्' इति सूत्रस्यैव प्रत्याख्यानं बोध्यम् ॥

( ८६३ विधिसूत्रम् ॥ ५ । १ । २ आ. ३७ )

## १९५३ यज्ञर्त्विग्भ्यां घखञौ ॥५।१।७१॥

( घखञ्प्रत्ययाधिकरणम् )

( ५६५५ उपसङ्ख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ॥ * ॥

( भाष्यम् ) यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानं कर्तव्यम् ।

यज्ञकर्मार्हतीति यज्ञियो देशः ।

ऋत्विक्कर्मार्हतीत्यार्त्विजीनं ब्राह्मणकुलमिति ॥

( प्रदीपः ) **तत्कर्मार्हतीति** । ननु वृत्तिविषये यज्ञार्थव्यापारे यज्ञशब्दस्य वृत्त्या सिद्धः सूत्रेणैव प्रत्ययः । यथा—मृदङ्गवादनवृत्तेर्मृदङ्गशब्दात् ठग् भवति—मार्दङ्गिक इति । नैतदस्ति । तत्र हि गौणार्थवृत्तिभ्य एव प्रत्यय इष्यते, न तु मुख्यार्थवृत्तिभ्यः । ततश्च गौणमुख्यपरिभाषा तत्र नाश्रीयते । इह तु यश्च यज्ञमर्हति यश्च तत्कर्मार्हति तयोरपि प्रत्यय इष्यते । तत्र मुख्यार्थसम्भवे गौणपरिग्रहणस्यान्याय्यत्वात्सूत्रेण न सिध्यतीति वार्तिकारम्भः ॥ ननु यो देशो यज्ञकर्मार्हति स यज्ञमर्हतीति नार्थो वार्तिकारम्भेण । नैतदस्ति । यस्य यज्ञेऽधिकारः स यज्ञमर्हति । अधिकारश्च कर्तुरर्थिनो विदुषः शास्त्रेणापर्युदस्तस्य, न तु देशादेः । तस्य तु योग्यत्वाद्यज्ञार्थव्यापारार्हत्वमुच्यते ॥

( उद्द्योतः ) **यज्ञार्थेति** । यज्ञशब्देन प्रधानज्योतिष्टोमादियागरूपः ॥ **गौणेति** । अप्रसिद्धत्वमत्र गौणत्वम् ॥ **वार्तिकारम्भ इति** । गौणादपि प्रत्ययसिध्यर्थं वार्तिकारम्भ इति भावः ॥ **यज्ञेऽधिकार इति** । शब्दशक्तिस्वभावात्तत्रैवार्हे प्रत्यय इष्यते ॥

( ८६४ विधिसूत्रम् ॥ ५ । १ । २ आ. ३८ )

## १९५४ पारायणतुरायणचान्द्रायणं वर्तयति ॥ ५ । १ । ७२ ॥

( ठञोऽधिकरणम् )

( ५६५६ वर्तयति निर्देशस्यानुपपत्तिबोधकवार्तिकम् ॥१॥ )

### ॥ * ॥ तद्वर्तयतीत्यनिर्देशस्तत्रादर्शनात् ॥ * ॥

( भाष्यम् ) तद्वर्तयतीत्यनिर्देशः । अगमको निर्देशोऽनिर्देशः ।

पारायणं को वर्तयति ?

यः परस्य करोति ।

तुरायणं को वर्तयति ?

यश्चरुपुरोडाशान्निर्वर्तयति ।

तत्रादर्शनात् । न च तत्र प्रत्ययो दृश्यते ॥

( प्रदीपः ) **अनिर्देश इति** । इष्टार्थसाधनत्वाभावान्निर्देशकार्याकरणादनिर्देशः ॥ **परस्येति** । शिष्यस्य ॥ **करोतीति** । उच्चारयति अध्यापक इत्यर्थः । शिष्यस्तु केवलं प्रतिपद्यते न तु निष्पादयति, अध्यापकाधीनत्वान्निष्पत्तेरिति भावः ॥ **तुरायणमिति** । यज्ञविशेषमृत्विगेव सव्यापारत्वाद्निष्पादयति । यजमानस्तूष्णीमास्त इति भावः ॥

( उद्द्योतः ) ननु गुरुक्तविग्विषये निर्देशस्य गमकत्वादनिर्देश इत्ययुक्तमत आह—**इष्टार्थेति** । निर्देशकार्याकरणेऽयं हेतुः ॥ **शिष्यस्येति** । 'अर्थबोधार्थम्' इति शेषः ॥ **प्रतिपद्यते**—तदुच्चारितं वस्तु प्राप्नोति ॥ न तु **निष्पादयति**—'तद्वस्तुविषयमुच्चारणम्' इति शेषः ॥ **यज्ञविशेषमिति** । संवत्सरसाध्यं यज्ञविशेषमित्यर्थः ॥

( ५६५७ अन्यत्रप्रत्ययोत्पत्तिरूपदोषबोधकवार्तिकम् ॥२॥ )

### ॥ * ॥ इङ्यज्योश्च दर्शनात् ॥ * ॥

( भाष्यम् ) इङ्यज्योश्च प्रत्ययो दृश्यते ।

यः पारायणमधीते स पारायणिक इत्युच्यते ।

यस्तुरायणेन यजते स तौरायणिक इत्युच्यते ॥

( वार्तिकाक्षिप्तदोषनिवारकं सिद्धान्तभाष्यम् )

यश्चैवाधीते यश्च परस्य करोति, उभौ तौ वर्तयतः ।

यश्च यजते यश्च पुरोडाशान्निर्वर्तयति, उभौ तौ वर्तयतः ॥

उभयत्र कस्मान्न भवति ?

अनभिधानात् ॥

( प्रदीपः ) **उभौ ताविति** । अन्यतरासन्निधौ क्रियाया अनुत्पादादुभयोः कर्तृत्वम् ॥ **यश्चेति** । यजमानो देवतोद्देशेन स्वं द्रव्यं त्यजतीति तस्यापि तुरायणनिर्वर्तने कर्तृत्वम् । तदेवं भाष्यकारेण यथान्यासं सूत्रं समर्थितम् ॥ **अनभिधानादिति** । अध्यापके याजके च प्रयोगाभावात् ॥

( उद्द्योतः ) अन्यतरासन्निधाविति । आदित आरभ्य आऽन्तादविच्छेदेनाध्ययनं पारायणम् । तच्चोभाभ्यां निर्वर्त्यत इति भावः ॥

( ८६५ विधिसूत्रम् ॥ ५ । १ । २ आ. ३९ )

## १९५८ योजनं[1] गच्छति ॥ ५।१।७४ ॥

( ५६५८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) **योजनं गच्छतीत्यत्र क्रोशशतयोजनशतयोरुपसंख्यानं कर्तव्यम् ।**

**क्रोशशतं गच्छति-इति-क्रौशशतिकः ।**

**योजनशतं गच्छति-इति-यौजनशतिक इति ॥**

( ५६५९ अर्थोपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ ततोऽभिगमनमर्हतीति च ॥ * ॥

( भाष्यम् ) **ततोऽभिगमनमर्हतीति च क्रोशशतयोजनशतयोरुपसंख्यानं कर्तव्यम् ।**

**क्रोशशतादभिगमनमर्हति—क्रौशशतिको भिक्षुः । योजनशतादभिगमनमर्हति—यौजनशतिको गुरुः ॥**

( ८६६ विधिसूत्रम् ॥ ५ । १ । २ आ. ४० )

## १९५९ उत्तरपथेनाहृतं च ॥ ५।१।७७ ॥

( प्रदीपः ) चकारः[2] प्रत्ययार्थसमीपे श्रूयमाणः प्रत्ययार्थमेव 'गच्छति' इत्येतं समुच्चिनोति । समर्थविभक्तिस्तु तत्रापि सूत्रोपात्ता तृतीयैव । तेन वारिपथेन गच्छतीत्यादिः पाठो युक्तो न द्वितीयान्तपाठः । द्वितीयापक्षे[3] आक्रान्ते अनाक्रान्ते च प्रकृत्यर्थे प्रत्ययः स्यात्, आक्रान्ते एवेष्यते ॥

( उद्द्योतः ) ननु 'गच्छति' इत्यर्थे पूर्वत्र द्वितीयायाः समर्थविभक्तित्वस्य क्लृप्ततया 'उत्तरपथेन गच्छति' इत्ययुक्तमित्यत आह्—चकार इति ॥ प्रत्ययार्थमेवेति । न तु समर्थविभक्तियुक्तं वाक्यार्थमित्यर्थः । 'तस्य व्याख्यान—'इत्यत्रेव वाक्यार्थपरामर्शि—इति शब्दाभावादिति भावः । 'आक्रान्ते' इत्यादेः 'कर्त्री' इत्यादिः ॥ आक्रान्त एवेष्यत इति । तादृशस्य करणताया युक्तत्वादिति भावः । वार्यादिपूर्वपदकं च प्रकरणात्पथिशब्दान्तमेव गृह्यते ॥

( ५६६० उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् ॥ * ॥

( भाष्यम् ) **आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानं कर्तव्यम् ।**

**वारिपथेन गच्छति—वारिपथिकः । वारिपथेनाहृतम्—वारिपथिकम्—वारि ॥**

**जङ्गल—जङ्गलपथेन गच्छति—जाङ्गलपथिकः । जङ्गलपथेनाहृतं—जाङ्गलपथिकम्—जङ्गल ॥**

**स्थल—स्थलपथेन गच्छति—स्थालपथिकः । स्थलपथेनाहृतं—स्थालपथिकम्—स्थल ।**

**कान्तार—कान्तारपथेन गच्छति—कान्तारपथिकः । कान्तारपथेनाहृतं—कान्तारपथिकम् ॥**

( ५६६१ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अजपथशङ्कुपथाभ्यां च ॥ * ॥

( भाष्यम् ) **अजपथशङ्कुपथाभ्यां चेति वक्तव्यम् । अजपथेन गच्छति—आजपथिकः । अजपथेनाहृतम्—आजपथिकम् । शङ्कुपथेन गच्छति—शाङ्कुपथिकः । शङ्कुपथेनाहृतं—शाङ्कुपथिकम् ॥**

( ५६६२ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ मधुकमरिचयोरण् स्थलात् ॥ * ॥

( भाष्यम् ) **मधुकमरिचयोरण् स्थलाद्वक्तव्यः । स्थालपथं मधुकम् । स्थालपथं मरिचम् ॥**

( प्रदीपः ) **मधुकमरिचयोरिति**[4] । अत्र मुख्यगमनासम्भवादाहृत एव च प्रत्ययमिच्छन्ति । **अन्ये तु** गौणगमनाश्रयेण गच्छतीत्यत्राप्यर्थे प्रत्ययमाहुः । प्रत्ययार्थोपाधित्वाच्च द्वयोरसन्देहार्थोऽन्यतरप्रयोगः[5] ॥

( उद्द्योतः ) (भाष्ये)-स्थलादिति । ततः परो यः पथिशब्दस्तदन्तादित्यर्थः ॥ गौणगमनेति । अन्याधिष्ठितस्य रथादिवद्गौणगमनसम्भवादित्यर्थः ॥

---

१ अनेन सूत्रेण गच्छतीत्यर्थे योजनशब्दात्प्रत्ययो विधीयते । प्रथमवार्तिकेन हि कोशशतयोजनशतशब्दाभ्यामपि गच्छतीत्यर्थे प्रत्ययो विधीयते । द्वितीयवार्तिकेन च पूर्ववार्तिकोक्ताभ्यां क्रोशशतयोजनशतशब्दाभ्यां 'अभिगमनमर्हति' इत्यस्मिन्नर्थे प्रत्ययो विधीयते ॥

२ एतत्सूत्रघटकश्चकारः 'आहृतं' इति प्रत्ययार्थस्य समीपे श्रूयमाणः प्रत्ययार्थेन पूर्वसूत्रोपात्तेन 'गच्छति' इत्यनेन समुच्चयं करोति न तु समर्थविभक्तेः समुच्चय इति भावः ॥

३ द्वितीयापक्षे—द्वितीयासमर्थविभक्तिरनेन 'आहृतं' इत्यनेन विधीयते इति तत्पक्षे ॥

४ मधुकमरिचयोरचेतनत्वेन गमनासम्भवादाह—अत्र मुख्येति ॥

५ अन्यतरप्रयोग इति । भाष्ये स्थालपथं मधुकम्—स्थालपथं मरिचमित्युदाहरणद्वयं दत्तं तदसन्देहार्थमित्यर्थः ॥

( ८६७ विधिसूत्रम् ॥ ५ । १ । २ आ. ४१ )

## १९६२ तमधीष्टो भृतो भूतो भावी ॥ ५ । १ । ८० ॥

(५६६३ 'तम्' इति द्वितीयान्तनिर्देशाक्षेपवार्तिकम् ॥ १ ॥)

**॥ * ॥ अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् ॥ * ॥**

(भाष्यम्) अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकः।
किं कारणम्?
तत्रादर्शनात्। न ह्यसौ मासमधीष्यते।
किं तर्हि?
मुहूर्तमसावधीष्टो मासं तत्कर्म करोति।

(प्रदीपः) अधीष्टभृतयोरिति। यावन्तं कालमध्येषणं भरणं च क्रियते ततः प्रत्ययो नेष्यते। अध्येषणभरणफलव्यापारव्याप्यात्तु कालादिष्यते, ततो न प्राप्नोति। तस्याध्येषणभरणाभ्यामव्याप्त्या द्वितीयाऽनुपपत्तिरिति निष्प्रयोजनो द्वितीयानिर्देशः॥

( उद्द्योतः ) अधीष्टः—सत्कृत्य व्यापारितः। भृतः—वेतनेन क्रीतः। भूतः—सत्तया व्याप्तकालः। भावी—तादृश एवानागतः॥ ननु कश्चिन्मासमप्यध्येषणादि क्रियतेऽत आह—यावन्तमिति॥ फलव्यापारेति। अध्येषणादिफलभूतो यो व्यापारः कर्मकरणरूपस्तद्व्याप्यात्—तेनात्यन्तसंयुक्तादित्यर्थः॥

( ५६६४ चतुर्थीनिर्देशेनाक्षेपनिरासवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु चतुर्थीनिर्देशात् ॥ * ॥**

( भाष्यम् ) सिद्धमेतत्।
कथम्?
चतुर्थीनिर्देशः कर्तव्यः। तस्मा अधीष्ट इति।

( प्रदीपः ) सिद्धं त्विति। तेन मासायाधीष्टो भृतो वेति तादर्थ्यचतुर्थ्यन्तात्प्रत्ययः। मासव्यापिव्यापारार्थमधीष्ट इत्यर्थः॥

( उद्द्योतः ) ननु मासस्य सम्प्रदानत्वाऽभावात्कथं चतुर्थ्यत आह—तादर्थ्येति॥ ननु न मासस्वरूपार्थमध्येषणमत आह—मासव्यापीति॥

( वार्तिकानुपयोगप्रदर्शनपूर्वकं सिद्धान्तभाष्यम् )

स तर्हि चतुर्थीनिर्देशः कर्तव्यः?
न कर्तव्यः। तादर्थ्यात्ताच्छब्द्यं भविष्यति। मासार्थो मुहूर्तः—मासः॥

(प्रदीपः) तादर्थ्यादिति। मासादिशब्दा अध्येषणभरणव्याप्तमुहूर्तादिकालवाचिन एवाश्रीयन्ते। भूतभाविनोस्तु प्रत्ययविधौ मुख्यार्थवृत्तय इति विभागो लक्ष्यपरतन्त्रत्वाल्लक्षणस्य॥

( उद्द्योतः ) अध्येषणेति। मासव्यापिव्यापारफलकाध्येषणेत्यर्थः॥

( ८६८ विधिसूत्रम् ॥ ५ । १ । २ आ. ४२ )

## १९६६ अवयसि ठंश्च ॥ ५।१।८४ ॥

( ठनोऽधिकरणम् )

( ५६६५ अनुकर्षणनिर्धारकवार्तिकम् ॥ १ ॥ )

**॥*॥ अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः ॥*॥**

( भाष्यम् ) अवयसि ठंश्चेत्यनन्तरस्यानुकर्षो[1] द्रष्टव्यः। ढ्रेष्यं विजानीयात् यबप्यनुवर्तत इति।

तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे—अवयसि ठंश्चेत्यनन्तरस्यानुकर्ष इति॥

( प्रदीपः ) अनन्तरस्येति। ण्यतः॥ ढ्रेष्यमिति। विपरीतमित्यर्थः। व्यवहितस्यापि क्वचिदनुवृत्तिर्दृष्टा। यथा—'द्वितीयाटौस्वेनः' इत्यत्रैतद इव इदम इति दर्शनादिहापि कश्चिद् भ्राम्येदित्यर्थः॥

( उद्द्योतः ) इहाऽपि कश्चिदिति। 'अवयसि' 'ठन्—' इति योगद्वयेनैव सिद्धौ चकारादिति[2] तदाशयः॥ भाष्ये—यबप्यनुवर्तत इति। 'पूर्वसूत्रे' इति शेषः। अन्यथा पूर्वसूत्रे उभयोरप्युपस्थितत्वाविशेषात्तस्यापि समुच्चयः स्यात्। 'अनन्तरस्यानुकर्षः' इत्युक्त्या तस्यानन्तरत्वं सूचितम्। तच्च पूर्वसूत्रानुवृत्तौ[3] भवतीति साऽन्वाख्यायत इति भावः। कैयटेनापि—'व्यवहितस्यापि' इत्यादि व्याचक्षाणेन दृष्टान्तेन च पूर्वसूत्रेऽप्यननुवृत्तिरित्युक्तप्रायमेव। एवञ्च पूर्वसूत्रे 'चेनाधिकारप्राप्तठक एव समुच्चयः' इति बोध्यम्। अनन्तरस्येति भाष्यस्य ण्यच्चेत्यस्येत्यर्थः। अत एव 'दत्तः षाण्मासिकोऽवधिः' इत्यादिसिद्धमित्यन्ये॥

( ८६९ अधिकारसूत्रम् ॥ ५ । १ । २ आ. ४३ )

## १९७२ षष्टिकाः षष्टिरात्रेण पच्यन्ते ॥ ५।१।९० ॥

( निपातनाधिकरणम् )

( प्रदीपः ) बहुवचनमतन्त्रम्। एकवचनान्तस्यापि षष्टिकशब्दस्य लोके प्रयोगात्॥

( उद्द्योतः ) ननु सूत्रे 'षष्टिकाः' इति बहुवचननिर्देशाद्बहु-

---

१ अवयसि ठंश्चेति। अवयसि ठंश्चेति सूत्रे अनन्तरात् 'षण्मासाण्ण्यच्च' इति सूत्राण्ण्यतोऽनुकर्ष इत्यर्थः॥

२ चकारादिति। 'अवयसि' इति एको योगः। तत्र हि ण्यतोऽनुकर्षणात्सिद्धिः। 'ठन्' इति द्वितीयो योगः। अत्र 'अवयसि' इत्यस्यानुकर्षः। एवं च योगविभागेनैव सिद्धौ चकारकरणसामर्थ्यादनन्तरस्य ण्यतोऽनुकर्ष इति भावः॥

३ पूर्वसूत्राननुवृत्ताविति। पूर्वस्मिन्—'अवयसि' इति विभक्तसूत्रे यप्प्रत्ययस्याननुवृत्तौ ठनपेक्षया ण्यतोऽनन्तरत्वं भवति। एकयोगे तु षण्मासाण्ण्यच्चेति सूत्रे यपोऽनुवर्तनात्सोऽप्यनन्तरः स्यात्। अनन्तरस्यानुकर्ष इति कथनात् ण्यत एवानन्तरत्वमाचार्याणामभिमतम्। तच्च योगविभागेनैव साधनीयमिति भावः॥

वचन एवास्य साधुत्वमवगम्यते, तत्कथं 'षष्टिके' इति वार्तिके एकवचननिर्देशोऽत आह—बहुवचनमिति । सूत्रे तु प्रयोगबाहुल्याऽभिप्रायेण तदिति भावः ॥ 'षष्टिके' इति वार्तिकप्रयोगः शब्दपरतयाऽपि साधुः स्यादत आह—लोक इति । अयमन्वेष्यो बहुदर्शिभिः । सूत्रस्वरसात्तु तस्यासाधुत्वं प्रतीयत इति केचित् ॥

( ५६६६ षष्टिकशब्दमर्यादाकरणवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ षष्टिके संज्ञाग्रहणम् ॥ * ॥

**( भाष्यम् ) षष्टिके संज्ञाग्रहणं कर्तव्यम् । मुद्गा अपि हि षष्टिरात्रेण पच्यन्ते तत्र मा भूदिति ॥**

( प्रदीपः ) **संज्ञाग्रहणमिति** । षष्टिरात्रेण पच्यन्ते इत्यत्रार्थे निपात्यमानस्य धान्यविशेष एव प्रयोगार्थम् ॥

( उद्योतः ) **निपात्यमानस्येति** । रात्रशब्दलोपः कन्प्रत्ययश्च निपात्यत इत्यर्थः । **धान्यविशेषः**—व्रीहयः ॥

( ५६६७ सिद्धान्तवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ उक्तं वा ॥ * ॥

**( भाष्यम् ) किमुक्तम् ?**

**अनभिधानादिति ॥**

( प्रदीपः ) **अनभिधानादिति** । लोके स्वार्थे प्रयुज्यमानानां शब्दानां साधुत्वमात्रमनेन प्रतिपाद्यते, न त्वर्थे नियोगः क्रियते ॥

( उद्योतः ) ननु तदर्थे शास्त्रेण विधानात्कथमनभिधानम् ? अत आह—**लोक इति** । शिष्टलोकव्यवहारे इत्यर्थः । **नियोगः**—अपूर्वविधानम् ॥

( ८७० विधिसूत्रम् ॥ ५ । १ । २ आ. ४४ )

# १९७६ तदस्य ब्रह्मचर्यम् ॥ ५।१।९४ ॥

( ब्रह्मचर्यार्थाधिकरणम् )

( प्रदीपः ) द्विधेदं सूत्रं व्याख्यायते—तदिति द्वितीयासमर्थात् कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति, ब्रह्मचर्यं चेद् गम्यते । मासं ब्रह्मचर्यमस्य मासिको ब्रह्मचारी । तथा–तदिति प्रथमासमर्थात्कालवाचिनोऽस्येति षष्ठ्यर्थे ठञ् भवति, यत्तदस्येति षष्ठीनिर्दिष्टं ब्रह्मचर्यं चेत्तद्भवति । मासो ब्रह्मचर्यमस्य मासिकं ब्रह्मचर्यमिति वाक्ये मासस्य प्राधान्यात् प्रथमैव न तु द्वितीया, तस्याः षष्ठीविषये विधानात् ॥

( उद्योतः ) ननु 'तदस्य' इत्यर्थे विधानान्महानाम्नीनां ब्रह्मचर्यमिति विग्रहोऽसङ्गतोऽत आह—**द्विधेति** ॥ ननु द्वितीयपक्षेऽपि 'मासो ब्रह्मचर्यस्य' इत्यादावत्यन्तसंयोगप्रतीतेः 'अत्यन्तसंयोगे–' इति द्वितीया स्यादत आह—**तस्या इति** । एवञ्च विशेषणादेव द्वितीयाविधिरिति भावः ॥

( ५६६८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम् ॥ * ॥

**( भाष्यम् ) तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानं कर्तव्यम् । महानाम्नीनां ब्रह्मचर्यं माहानाम्निकम् । आदित्यव्रतिकम् ॥**

( प्रदीपः ) **महानाम्न्यादिभ्य इति** । ब्रह्मचर्यस्य प्रत्ययार्थत्वात् सामर्थ्यलभ्या षष्ठी समर्थविभक्तिः ॥

( उद्योतः ) नन्वेवमपि 'महानाम्न्योऽस्य ब्रह्मचर्यस्य' इत्येवं विग्रह उचितोऽत आह—**सामर्थ्यलभ्येति** । अयं भावः–सूत्रेऽपि द्वितीयपक्षे 'तदस्य' इति व्यर्थं, 'तस्य ब्रह्मचर्यम्' इत्येव सिद्धेः । यस्य मासः सम्बन्धी, तन्मासस्यापि सम्बन्धि भवत्येवेति । एवञ्च तदस्येत्येतत्सामर्थ्यादाद्यव्याख्यानेऽपि सूत्रतात्पर्यं, भाष्यप्रामाण्येन द्वितीयेऽपीति । एवञ्च द्वितीयव्याख्याने 'तत्' इत्यस्यान्वयो नेति तात्पर्यम् ॥

( ५६६९ उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तच्चरतीति च ॥ * ॥

**( भाष्यम् ) तच्चरतीति च महानाम्न्यादिभ्य उपसंख्यानं कर्तव्यम् । महानाम्नीश्चरति माहानाम्निकः । आदित्यव्रतिकः ॥**

( आक्षेपभाष्यम् )

**नैष युक्तो निर्देशस्तच्चरतीति । महानाम्न्यो नामर्चः, न च ताश्चर्यन्ते, व्रतं तासां चर्यते ॥**

( प्रदीपः ) **न च ता इति** । चरणम्–अनुष्ठानं, तच्च क्रियाविषयमिति भावः ॥

( समाधानभाष्यम् )

**नैष दोषः ।**

**साहचर्यात्ताच्छब्द्यं भविष्यति । महानाम्नीसहचरितं व्रतं महानाम्न्यो व्रतमिति ॥**

( प्रदीपः ) **महानाम्न्यो व्रतमिति** । लिङ्गसंख्ये अजहद् देव महानाम्नीशब्दो व्रते वर्तते ॥

( उद्योतः ) ननु 'महानाम्न्यो व्रतम्' इत्यसङ्गतं, व्रतस्य नपुंसकत्वेन 'महानाम व्रतम्' इत्यस्यैवौचित्यादत आह—**लिङ्गसङ्ख्ये इति** । अत एव महानाम्नीशब्दस्याभाषितपुंस्कत्वाद् 'भस्याढे' इति पुंवत्त्वं न ॥

( ५६७० उपसंख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ अवान्तरदीक्षाभ्यो डिनिः ॥ * ॥

**( भाष्यम् ) अवान्तरदीक्षाभ्यो डिनिर्वक्तव्यः । अवान्तरदीक्षी, तिलव्रती ॥**

( प्रदीपः ) डिनेर्डित्करणमष्टाचत्वारिंशदर्थम् । अन्येषां 'यस्य–' इति लोपेन रूपस्य सिद्धत्वात् ॥

( ५६७१ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ अष्टाचत्वारिंशतो ड्वुंश्च ॥ * ॥

( भाष्यम् ) अष्टाचत्वारिंशतो ड्वुंश्च डिनिश्च वक्तव्यः । अष्टाचत्वारिंशकः, अष्टाचत्वारिंशी ॥

( प्रदीपः ) अष्टाचत्वारिंशक इति । वृत्तिविषये वर्षेष्वेव संख्येयेष्वष्टाचत्वारिंशच्छब्दो वर्तते । चतुर्षु वेदेष्वष्टाचत्वारिंशतं वर्षाणि व्रतं चरति । प्रतिवेदं द्वादशवर्षाणि व्रतचरणात् ॥

( उद्योतः ) नन्वष्टाचत्वारिंशद्वर्षव्रतचारिण्येव प्रयोग इष्यते, अष्टचत्वारिंशत्सङ्ख्यव्रतचारिणि प्राप्नोतीत्यत आह—वृत्तिविषये इति ॥

( ५६७२ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ चातुर्मास्यानां यलोपश्च ॥ * ॥

( भाष्यम् ) चातुर्मास्यानां यलोपश्च ड्वुंश्च डिनिश्च वक्तव्यः । चातुर्मासकः । चातुर्मासी ।

अथ किमिदं चातुर्मास्यानामिति ?

(प्रदीपः) चातुर्मासीति । 'तत्र भवः' इत्येवाण् सिद्धः । तस्य तु 'द्विगोर्लुगनपत्ये' इति लुक् प्राप्नोतीति पुनरण्विधिः । 'कालाट्ठञ्' इत्यस्याप्राप्तिः, समुदायस्याकालवाचित्वात्तदन्तविध्यभावाच्च । केचित्तु—यथाकथंचित्कालवृत्तेष्ठञ् इष्टत्वात् ठञ्येव प्राप्ते तस्य च लुकि इदमण्विधानमित्याहुः ॥

(उद्योतः) तस्य च लुकीति । अत्रापि 'प्राप्ते' इति बोध्यम् ॥

( ५६७३ चातुर्मास्यसिद्धिसाधकं वार्तिकम् ॥ ६ ॥ )

## ॥*॥ चतुर्मासाण्ण्यो यज्ञे तत्र भवे ॥*॥

( भाष्यम् ) चतुर्मासाण्ण्यो वक्तव्यः, यज्ञे तत्र भव इत्येतस्मिन्नर्थे । चतुर्षु मासेषु भवानि चातुर्मास्यानि यज्ञाः ॥

( ५६७४ विधिवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ संज्ञायामण् ॥ * ॥

( भाष्यम् ) संज्ञायामण् वक्तव्यः । चतुर्षु मासेषु भवा चातुर्मासी पौर्णमासी ॥

( ८७१ विधिसूत्रम् ॥ ५ । १ । २ आ. ४५ )

# १९७७ तस्य दक्षिणा यज्ञाख्येभ्यः ॥ ५ । १ । ९५ ॥

( ठञोऽधिकरणम् )

( उद्योतः ) यज्ञमाचक्षते यज्ञाख्याः । मूलविभुजादित्वात्कः, सोपसर्गत्वात्सूत्रेणाप्राप्तेः ।

( आख्यापदाक्षेपभाष्यम् )

आख्याग्रहणं किमर्थम् ?

( प्रदीपः ) आख्याग्रहणमिति । 'यज्ञेभ्यः' इति बहुवचननिर्देशात् स्वरूपग्रहणाभावात्तदर्थाभिधायिभ्यः प्रत्ययो लभ्यत इति प्रश्नः ॥

( उद्योतः ) भाष्ये—आख्याग्रहणमिति । आङ्पूर्वख्याधातोर्ग्रहणं किमर्थमित्यर्थः । ह्रस्वपाठस्तु युक्तः ॥ पर्यायेभ्यो विशेषेभ्यश्च कथं सिद्धिरत आह—बहुवचनेति । अविशेषादुभयेभ्यः सिध्यतीति भावः । आख्याग्रहणसामर्थ्यादेव चात्र 'कालात्' इत्यस्यासम्बन्ध इति बोध्यम् ॥

( आख्यापदप्रयोजनभाष्यम् )

'तस्य दक्षिणा यज्ञेभ्यः' इतीयत्युच्यमाने य एव संज्ञीभूतका यज्ञास्तत उत्पत्तिः स्यात्—आग्निष्टोमिक्यः, राजसूयिक्यः, वाजपेयिक्यः ।

यत्र वा यज्ञशब्दोऽस्ति—नावयज्ञिक्यः, पाकयज्ञिक्यः ।

इह न स्यात्—पाञ्चौदनिक्यः, दाशौदनिक्यः ।

आख्याग्रहणे पुनः क्रियमाणे न दोषो भवति । ये च संज्ञीभूतका यज्ञाः, ये च न संज्ञीभूतकाः, यत्र च यज्ञशब्दोऽस्ति, यत्र च नास्ति, तदाख्यामात्रात्सिद्धं भवति ॥

( प्रदीपः ) संज्ञीभूतकाः—सर्वलोकप्रसिद्धाः । प्रसिद्धत्वादेव ते यज्ञा मुख्या इति भावः ॥ यत्र वेति । बहुवचननिर्देशाद्यज्ञशब्दान्ता एव गृह्येरन्, नान्ये । एवं यज्ञशब्दश्रुतिर्बहुवचनं चानुगृहीतं भवतीति भावः ॥ आख्याग्रहण इति । ये यज्ञं प्रसिद्धमप्रसिद्धं वाऽऽचक्षते सर्वेभ्यष्ठञ् भवति ॥

१ अत्र आङुपसर्गपूर्वकत्वात् 'आतोऽनुपसर्गे कः' इत्यनेनाप्राप्तत्वात् मूलविभुजादित्वात्कप्रत्ययो विधीयते ॥

२ अत्र यज्ञशब्देन स्वरूपग्रहणे बहुवचनमनुपपन्नम्, अतो यज्ञार्थाभिधायिभ्यः प्रत्ययो लभ्यत इति 'आख्या'ग्रहणमनर्थकमिति प्रश्न इति भावः ॥

३ ननु 'आख्याग्रहणं किमर्थम्' इति भाष्यमनुपपन्नम् । सूत्रे आकारान्त 'आख्या' शब्दस्य ग्रहणाभावात् । अतो भाष्यं योजयितुमाह—आङ्पूर्वख्याधातोरिति । आख्यग्रहणं किमर्थमिति ह्रस्वान्त पाठ एवोचित इति भावः ॥

४ ननु 'तस्य दक्षिणा' इति सूत्रे आख्याग्रहणाभावेऽपि यज्ञेभ्य इत्युच्यमाने यज्ञवाचकशब्देभ्य एव स्यादिति कालाधिकारो निवर्तते इति यज्ञग्रहणादेव कालाधिकारनिवृत्तिरिति वक्तुं शक्यं तथापि अप्रसिद्धयज्ञवाचकानामपि ग्रहणार्थं यज्ञपदग्रहणमिति आख्याग्रहणेनैव कालाधिकारो निवर्त्यते ॥

( ८७२ अतिदेशसूत्रम् ॥ ५ । १ । २ आ. ४६ )

## १९७८ तत्र च दीयते कार्यं भववत् ॥ ५ । १ । ९६ ॥

( अतिदेशाधिकरणम् )

( ५६७५ कार्यग्रहणाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कार्यग्रहणमनर्थकं तत्रभवेन कृतत्वात् ॥ * ॥**

**( भाष्यम् ) कार्यग्रहणमनर्थकम् ।**

**किं कारणम् ?**

**तत्रभवेन कृतत्वात् । यद्धि मासे कार्यं मासे भवं तद्भवति, तत्र 'तत्र भवः' ( ४।३।५३ ) इत्येव सिद्धम् ।**

( प्रदीपः ) 'दीयते' 'कार्यम्' इत्येतयोरर्थयो कालवाचिभ्यो भववत् प्रत्यया भवन्तीति सूत्रार्थः । तत्र कार्यस्य भवेऽन्तर्भावादेवात्र प्रत्ययानां सिद्धिं मत्वाऽऽह—**कार्यग्रहणमिति** ॥

( उद्द्योतः ) **सूत्रार्थं इति** । 'वृत्तिसंमतः' इति शेषः ॥ **सिद्धिमिति** । 'तत्र भवः' इत्यनेन–इत्यादिः ॥

( 'दीयते'ग्रहणाक्षेपभाष्यम् )

**किमिदं भवान् कार्यग्रहणमेव प्रत्याचष्टे, न पुनर्दीयतेग्रहणमपि ।**

**यथैव हि यन्मासे कार्यं तन्मासे भवं भवति, एवं यदपि मासे दीयते तदपि मासे भवं भवति । तत्र 'तत्र भवः' इत्येव सिद्धम् ।**

**न सिध्यति । न तन्मासे दीयते ।**

**किं तर्हि ?**

**मासे गते ।**

**एवं तर्हि—औपश्लेषिकमधिकरणं विज्ञास्यते ॥**

( प्रदीपः ) **मासे गते इति** । 'मासे दीयते' इति नैषाऽधिकरणसप्तमी । किं तर्हि ? 'यस्य च भावेन' इति । 'तत्र भवः' इत्यत्र चाधिकरणसप्तमी आश्रिता, 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायात् । इह त्वतिदेशसामर्थ्याद्भावलक्षणसप्तमीपरिग्रहः ॥ **औपश्लेषिकमिति** । मासेऽतिक्रान्ते यद्दीयते तस्य मास औपश्लेषिकमधिकरणमिति 'तत्र भवः' इत्यनेनैव सिद्धमित्यर्थः । कारकप्रकरणे च गौणस्यापि संज्ञा भवतीत्युक्तम् ॥

( उद्द्योतः ) नन्वेवमनेनापि सूत्रेण न सिध्यतीत्यत आह—**नैषेति** ॥ **यस्य च भावेनेति** । मासगमनेन दानक्रियाकालो लक्ष्यत इति तत्प्राप्तिरिति भावः ॥ **कारकविभक्तिरिति** । कारकाधिकारपठितसंज्ञानिमित्तका हि विभक्तिः कारकविभक्तिपदेनोच्यत इति भावः ॥ **औपश्लेषिकमिति** । उप–समीपे श्लेषः—सम्बन्धः । तेन 'वटे गावः' इतिवत्सामीपिकमिदमधिकरणमित्यर्थः ॥ नन्वयं गौण आधारस्तत्र कथं सप्तमीत्यत आह—**कारकेति** ॥

( समाधानभाष्यम् )

**एवं तर्हि योगविभागोत्तरकालमिदं पठितव्यम्—**

**'तस्य दक्षिणा यज्ञाख्येभ्यः' ।**

**'तत्र च दीयते' ।**

**ततः—'कार्यं भववत् कालात्' इति ॥**

( प्रदीपः ) **एवं तर्हीति** । प्रत्ययविध्यर्थं 'दीयते' इत्युपात्तम्, न त्वतिदेशार्थम् । तेनाग्निष्टोमे दीयते–आग्निष्टोमिकं भक्तमित्येवमादि सिद्धम् । **केचिदाहुः**–दीयमानस्य भवत्वात् 'ऋतुयज्ञेभ्यश्च' इति ठञ् सिद्ध इति । तदयुक्तम् । 'व्याख्यातव्यनाम्नः' इति तत्रानुवर्तनात् । [1]तदेवं कार्यग्रहणमेव वार्तिककृता प्रत्याख्यातम् ।

'प्राग्वतेः संख्यापूर्वपदानाम्' इति वचनाद् द्वयोर्वाजपेययोर्दीयते–द्वैवाजपेयिकमित्यत्रापि योगविभागाट्ठञ् भवति ॥

( उद्द्योतः ) **प्रत्ययविध्यर्थमिति** । चो 'दीयते' इत्यस्यानन्तरं योज्यः, वाक्यभेदश्च । तत्राद्ये 'यज्ञाख्येभ्यः' इति वर्तत इति भावः ॥ **प्रत्याख्यातमिति** । वस्तुतस्तु कर्तुं योग्यस्याकृतस्यापि कार्यपदार्थत्वेन तत्र तत्रभवत्वाभावात्तदप्यावश्यकमेव । अत एवान्त्यभाष्ये उपसंहारे तस्याप्युल्लेखः । 'तत्र भवः' इत्यत्र हि भूधातुः सत्तार्थक एवेत्याहुः ॥

योगविभागे फलान्तरमप्याह—**प्राग्वतेरिति** । एवं 'द्वयोर्मासयोर्भवं द्वैमासिकम्' इत्येतत्सिद्धिः कार्यांशस्य फलम् । कालाट्ठञा तु न सिध्यति, 'द्विगोर्लुक्' इत्यस्य प्रसङ्गात् । अनेन प्रत्यये तु न लुक्, अनार्हीयत्वादप्राग्दीव्यतीयत्वाच्चेत्याहुः ॥

( ८७३ विधिसूत्रम् ॥ ५ । १ । २ आ. ४७ )

## १९७९ व्युष्टादिभ्योऽण् ॥ ५।१।९७ ॥

( अण्प्रत्ययाधिकरणम् )

( ५६७६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानं कर्तव्यम् ॥**

( प्रदीपः ) **अण्प्रकरण इति** । प्रकरणं–प्रस्तावः ॥ **अग्निपदादिभ्य इति** । आदिशब्दः प्रकारे । तत्र क्वचिदर्थे कुतश्चिदण्प्रत्ययो भवति । तत्राण्दर्शनमात्रकृतं सादृश्यमाश्रीयते ॥

( उद्द्योतः ) नन्वेवं सर्वत्रार्थे सर्वेभ्यः प्रत्ययः प्राप्नोतीत्यत

[1] तदेवमिति । दीयमानस्य भवत्वेऽपि व्याख्यातव्यनाम्न इत्यस्य तत्रानुवर्तनात्ऋतुयज्ञेभ्यश्चेत्यनेन प्रत्ययसिद्धये दीयते इत्यस्यावश्यकत्वे इत्यर्थः ॥

आह—आदिशब्द इति ॥ क्वचिदर्थे इति । तच्च भाष्य एव स्पष्टम् ॥

( अग्निपदादिभ्य उपसंख्यानस्य स्थलसम्भवबोधकं भाष्यम् )

त्रीणीमान्यणग्रहणानि—व्युष्टादिभ्योऽण्, समयस्तदस्य प्राप्तम् ऋतोरण् (५।१।१०४,१०५) । प्रयोजनम् विशाखाषाढादण् मन्थदण्डयोः (१०९,११०) इति ।

तत्र न ज्ञायते कतरस्मिन्नणप्रकरणे अग्निपदादिभ्य उपसंख्यानम् ॥

( उपसंख्यानस्थलनिश्चायकभाष्यम् )

अविशेषात्सर्वत्र ।

व्युष्टादिभ्योऽण् भवतीत्युक्त्वाऽग्निपदादिभ्यश्चेति वक्तव्यम् । अग्निपदे दीयते कार्यं वा—आग्निपदम्, पैलुमूलम् ।

समयस्तदस्य प्राप्तमृतोरण्, अग्निपदादिभ्यश्चेति वक्तव्यम् । उपवस्ता प्राप्तोऽस्यौपवस्त्रम्, प्राशिता प्राप्तोऽस्य प्राशित्रम् ।

प्रयोजनं विशाखाषाढादण् मन्थदण्डयोः, अग्निपदादिभ्यश्चेति वक्तव्यम् । चूडा प्रयोजनमस्य—चौडम्, श्रद्धा प्रयोजनमस्य—श्राद्धम् ॥

( ८७४ विधिसूत्रम् ॥ ५ । १ । २ आ. ४८ )

## १९९३ अनुप्रवचनादिभ्यश्छः ॥ ५ । १ । १११ ॥

( छप्रत्ययाधिकरणम् )

( ५६७७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानं कर्तव्यम् । विशि-गेहानुप्रवेशनीयम् । पूरि-प्रपापूरणीयम् । पदि-गोप्रपदनीयम्, अश्वप्रपदनीयम् । रुहि-प्रासादारोहणीयम् ॥

( प्रदीपः ) अनादिति । अनस्य केवलस्य पूर्वपदेन संबन्धाभावात्सामर्थ्यात्तदन्तग्रहणम् ॥

( उद्द्योतः ) विशिपूरीत्यादि-ठञ्बाधनार्थम् ॥ भाष्ये—गेहानुप्रवेशनीयमिति । अनुप्रवेशनशब्दस्यानान्तत्वं 'कृद्ग्रहणे गतिकारकपूर्वस्यापि' इति न्यायेन बोध्यम् । 'अस्य प्रयोजनम्' इत्यर्थे प्रत्ययः ॥

( ५६७८ विधिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ स्वर्गादिभ्यो यत् ॥ * ॥**

( भाष्यम् ) स्वर्गादिभ्यो यत्प्रत्ययो भवति । स्वर्ग्यम् । धन्यम् । यशस्यम् । आयुष्यम् ।

( प्रदीपः ) स्वर्ग्यमिति । स्वर्गः प्रयोजनमस्येति ठञि प्राप्ते यद्विधिः ॥

( ५६७८ लुग्विधिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पुण्याहवाचनादिभ्यो लुक् ॥ * ॥**

( भाष्यम् ) पुण्याहवाचनादिभ्यो लुग्वक्तव्यः । पुण्याहवाचनम् । शान्तिवाचनम् । स्वस्तिवाचनम् ॥

( प्रदीपः ) पुण्याहवाचनादिभ्य इति । साहचर्यादभिधाने सिद्धे भेदविवक्षायां प्रत्ययश्रवणनिवृत्त्यर्थं लुग्विधानम् ॥

( ८७५ विधिसूत्रम् ॥ ५ । १ । २ आ. ४९ )

## १९९५ ऐकागारिकट् चौरे ॥५।१।११३॥

( ५६७९ सूत्रप्रत्याख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ एकागारान्निपातनानर्थक्यं ठञ्प्रकरणात् ॥ * ॥**

( भाष्यम् ) एकागारान्निपातनमनर्थकम् ।

किं कारणम् ?

ठञ्प्रकरणात् । ठञ् प्रकृतः सोऽनुवर्तिष्यते ।

इदं तर्हि प्रयोजनम्—चोर इति वक्ष्यामीति ।

इह मा भूत्—एकागारं प्रयोजनमस्य भिक्षोरिति ।

यद्येतावत्प्रयोजनं स्यात् 'एकागाराच्चोरे' इत्येव ब्रूयात् ॥

(प्रदीपः) एकागारादिति । 'प्रयोजनम्' इत्यनेनैव ठञः सिद्धत्वात्सूत्रं निपातनार्थं न कर्तव्यमित्यर्थः ॥ **ठञ्प्रकरणादिति** । 'प्रयोजनम्'इत्यत्र ठञ्प्रकृतस्तेनैवैकागारिकशब्दः सिद्ध इत्यर्थः । एकशब्दोऽसहायवाची, असहायं गृहमस्य मुमुषिषोः प्रयोजनं स ऐकागारिकः । ससहायं तु गृहमनेकपुरुषाधिष्ठानान्मोषितुमशक्यम् ॥ **ठञ् प्रकृत इति** । 'प्राग्वतेष्ठञ्' इत्यत्र । ठञ्प्रत्ययः 'प्रयोजनम्' इत्यत्रानुवर्तिष्यते ॥ **इदं तर्हीति** । नियमार्थमेतदित्यर्थः ॥ **भिक्षोरिति** । एकामेव यो भिक्षां गृह्णीते न द्वितीयां, तस्याभिधानं मा भूदित्यर्थः ॥ **यद्येतावदिति** । अनभिधानाद्भिक्षोर्न भविष्यतीति नियमार्थमप्येतन्नोपयुज्यते इति भावः । न च ञित्स्वरनिवृत्त्यर्थं निपातनम् । ञित्स्वरस्येष्टत्वात् । एतच्च भाष्यवार्तिककाराभ्यां[1] निराकरणात् ज्ञायते ॥

( उद्द्योतः ) सूत्रप्रत्याख्यानपरमेव भाष्यं, न तु निपातनमात्रप्रत्याख्यानपरमित्याह—प्रयोजनमित्यनेनैवेति ॥ ननु एत-

१ 'भाष्यवार्तिकाभ्यां निरणायि' इति क. पाठः ॥

त्सूत्राभावे प्रकरणात्क ठञा सम्बन्धः स्यादत आह—प्रयोजनमित्यत्रेति ॥ ननु न चोरोऽप्येकमेव गृहं मुष्णातीत्यत आह—एकशब्द इति ॥ एकामेवेति । 'एकागारे चरेद्ग्रामे तत्पुराणं मुनेर्व्रतम्' इत्युक्तेः ॥ यद्यन्तर्भावोक्तेरेवं सूत्रकरणे न तात्पर्यमित्याह—अनभिधानादिति ॥ अत्रत्यवृत्तिर्भाष्यविरुद्धेत्याह—न चेत्यादिना । एवञ्च सूत्रारम्भेऽप्याद्युदात्तनिपातनं बोध्यम् ॥

( ८७६ विधिसूत्रम् ॥ ५ । १ । २ आ. ५० )

## १९९६ आकालिकडाद्यन्तवचने ॥ ५ । १ । ११४ ॥

( निपातनाधिकरणम् )

( ५६८० निपातनानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आकालान्निपातनानर्थक्यं ठञ् प्रकरणात् ॥ * ॥**

**( भाष्यम् ) आकालान्निपातनमनर्थकम् ।**
**किं कारणम् ?**
**ठञ्प्रकरणात् । ठञ् प्रकृतः सोऽनुवर्तिष्यते ॥**

( प्रदीपः ) **आकालादिति** । आकालशब्दात् प्रत्ययनिपातनमनर्थकम्, प्रकृतिमुच्चार्य प्रकृतष्ठञ् विधेय इत्यर्थः । तत्राऽऽवृत्तः कालो यस्यासावाकालः, न च कालस्यावृत्तिः संभवति—इति—अयमर्थो भवति—उत्पत्तिकालेन समानो यस्य विनाशकालः । एवं हि तस्योत्पत्तिकालो विनाश आवृत्तो भवति—यदि य एवोत्पत्तिकालः स एव विनाशकालः । न चोत्पादविनाशयोरेककालत्वं संभवति, निरन्तरविनाशकालप्रतीतिर्भवति । निरन्तरो हि कालो भेदाग्रहणात् 'स एव कालः' इति लोके व्यवह्रियते । ततः स्वार्थे ठञ् विधेयः । आद्यन्तवचने विषय इति भावः ॥

( उद्द्योतः ) अत्रत्यभाष्यस्य सूत्रप्रत्याख्यानपरत्वेनाव्याख्याने बीजभूतां सूत्रान्तरेणासिद्धिं दर्शयति—**तत्रावृत्त इति** ॥ तत्र कालस्य मुख्यावृत्तेरसम्भवाद्गौणी आवृत्तिरित्याह—**अयमर्थ इति** । समानशब्दोऽत्रैकपर्यायः । 'एवं हि' इत्यादि 'स एव विनाशकालः' इत्यन्तमेकं वाक्यम् । **निरन्तरत्वम्**—अव्यवहितत्वम् ॥ नन्वेवं प्रत्ययार्थः कोऽत आह—**ततः स्वार्थे इति** ॥ **आद्यन्तवचने विषय इति** । आद्यन्तयोरुत्पत्तिनाशयोरेककालत्ववचने विषये इत्यर्थः । यद्वाऽऽदिकालस्यान्तकालत्ववचने इत्यर्थः । एवं हि ङीप् आद्युदात्तत्वञ्चेत्युभयमपि सिध्यतीति वार्तिकाशयः ॥

( निपातनस्य फलान्तरबोधकं भाष्यम् )

**इदं तर्हि प्रयोजनम्—एतस्मिन् विशेषे निपातनं करिष्यामि समानकालस्याद्यन्तविवक्षायामिति ॥**

( प्रदीपः ) भाष्यकारो निपातनं समर्थयितुमाह—**इदं तर्हीति** । निपातने हि समानकालशब्दः प्रकृतित्वेनाश्रीयते, तस्य च 'आकालः' आदेशो निपात्यते । समानशब्द एकवाची, एककालावाद्यन्तौ यस्यासावाकालिकः । **आदिः**—जन्म, **अन्तः**—विनाशः । जन्मविनाशयोश्चाव्यवहितकालत्वादेककालत्वम् । विधौ त्वयमर्थः क्लेशेन प्रतीयत इति निपातनाश्रयणम् । उक्तं च—
**धातुसाधनकालानां प्राप्त्यर्थं नियमस्य च ।**
**अनुबन्धविकाराणां रूढ्यर्थं च निपातनम् ॥** इति ॥

अन्ये वर्षादिष्वप्याकालिकशब्दमिच्छन्ति । यस्मिन्नेव काले मध्याह्नादावुत्पत्तिर्येषां तेषां तस्मिन्नेव द्वितीयादिदिवससंबन्धिनि विनाशस्तानि—आकालिकानि ॥

( उद्द्योतः ) भाष्ये—**समानकालस्येति** । एककालस्याद्यन्तकालत्वविवक्षायामित्यक्षरार्थः ॥ **निपातने हीति** । समानकालावाद्यन्तौ यस्येति विग्रहः । यस्येत्यधिकारात्स प्रत्ययार्थः । अत्र पक्षे आद्युदात्तत्वमपि निपात्यम्, अतः प्रत्याख्यानवार्तिकेन न विरोधः ॥ **अन्ये इति** । समानपदोपादानेन भाष्येऽप्ययमर्थः सूचितः ॥

( ५६८१ विधिवार्तिकम् ॥ २ ॥ )

**॥ * ॥ आकालाट्ठंश्च ॥ * ॥**

**( भाष्यम् ) आकालाट्ठंश्च वक्तव्यः । आकालिकी । आकालिका ॥**

( प्रदीपः ) **आकालाट्ठंश्चेति** । आकालशब्दव्युत्पत्तिः प्रदर्शिता, ततः स्वार्थे ठन्प्रत्ययः, चकारात् ठञ् । अर्थस्तु पूर्वं प्रदर्शितः ॥

( उद्द्योतः ) **चकाराट्ठञिति** । इदञ्च सूत्रप्रत्याख्यानवार्तिकरीत्या, भाष्यरीत्या तु चान्निपातनं बोध्यम् । निपातनपक्षेऽपि प्रकरणाट्ठञन्तनिपातनसम्भवाट्टित्वफलं चिन्त्यम् ॥

( अथ भावकर्मार्थाः )

( ८७७ विधिसूत्रम् ॥ ५ । १ । २ आ. ५१ )

## १९९७ तेन तुल्यं क्रिया चेद्वतिः ॥ ५ । १ । ११५ ॥

( वतिप्रत्ययाधिकरणम् )

( निर्देशाक्षेपभाष्यम् )

**इदमयुक्तं वर्तते ।**
**किमत्रायुक्तम् ?**
**यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवति—इत्युच्यते, कथं च तृतीयासमर्थं नाम क्रिया स्यात् ॥**

( प्रदीपः ) **इदमयुक्तमिति** । सूत्रोपात्तं वस्तु इदमा परामृश्यते ॥ **यत्तत्तृतीयासमर्थमिति** । 'तेन तुल्यम्'

१ अस्य हि—'आकालिकट्' इति रूपं निपात्यते, आद्यन्तवचने—आद्यन्तयोर्वचने—विशेषणे विवक्षिते । समानकालशब्दस्य स्थानेऽयमादेशः समानकालशब्दार्थश्चाद्यन्तयोर्विशेषणं चेदित्यर्थः ॥

२ टित्वफलमिति । सूत्रे 'आकालिकट्' इति निपात्यते तत्र टकारश्चित्स्वार्थः । निपातनपक्षे ठञन्तस्यैतन्निपातनमिति कल्पनेन टित्कार्यसंपादनात् टित्वनिपातनमनर्थकमिति भावः ॥

इत्यनेन क्रमेण प्रकृतिप्रत्ययार्थौ[1] निर्दिष्टौ, तत्र क्रियाग्रहणं प्रकृत्यर्थस्यैव प्राथम्यात् व्यतिक्रमहेत्वभावाद्विशेषणं न्याय्यम्, एतच्चासंभवादयुक्तमित्यर्थः ॥ ननु तेनेत्यस्य विविभक्तिकत्वेन[2] क्रियाग्रहणेन कथं संबन्धः? सोपस्कारत्वात् सूत्राणां यत्तृतीयासमर्थं क्रिया चेत्सा भवतीत्येवं संबन्धसंभवाददोषः ॥

**कथं चेति** । तृतीया सत्त्ववाचिनः प्रातिपादिकाद्विधीयते । क्रिया तु साध्यरूपत्वादसत्त्वभूता, ततो विशेषणविशेष्यभावोऽसंभवादयुक्तः । पाकादयो घञाद्यन्तवाच्याः सत्त्वधर्मसमन्वयात् क्रियाधर्मातीताः, तथा च तत्र कृत्वोऽर्थप्रत्ययाभावः । 'भोक्तुं पाकः' इत्यादौ धातुवाच्यक्रियापेक्षस्तुमुन्प्रत्ययः, विभक्तिस्तु तृतीयादिः पाकादेः सत्त्वरूपाश्रया, न क्रियारूपताश्रया । पचत्यादीनां तु क्रियावाचिनामप्रातिपदिकत्वादसत्त्वभूतार्थाभिधानाच्च तृतीयाद्यभावः । 'कृत्वा हृत्वा कर्तुं हर्तुम्' इत्यादीनामव्ययकृतां यद्यपि क्रियावाचित्वं, तथा च 'पञ्चकृत्वः कृत्वा' इति कृत्वोऽर्थोत्पत्तिर्भवति, तथाप्यसत्त्ववाचित्वात्तेभ्यस्तृतीयाद्यभावः । प्रातिपदिकार्थमात्रे[3] तु प्रथमाया एवोत्पत्तिः । शयितव्यादयो यद्यपि क्रियावचनाः, पञ्चकृत्वः शयितव्यमिति कृत्वोऽर्थप्रत्ययदर्शनात्, तथापि तत्रोपमानोपमेयभावासंभवः । न हि भवति शयितव्येन तुल्यो देवदत्तः शयितव्येन तुल्यः शुक्ल इति । उपमानं हि प्रसिद्धगुणक्रियाहेतुकं भवति, यथा—अस्याश्चन्द्र इव मुखमिति । नापि शयितव्येन तुल्यः शायक इति क्रियावतः क्रियोपमानं संभवति, क्रियातद्वतोरत्यन्तभेदात् । क्रियाणामपि भिन्नजातीयानां नास्त्युपमानोपमेयभावः—शयितव्येन तुल्यमासितव्यमिति, अत्यन्तभेदात् । नास्त्येकजातीयानामपि—शयितव्येन तुल्यं शयितव्यमिति, यथा गौरिव गौरिति । येनैव हेतुनैको गौस्तेनैवाऽपरोऽपीति क उपमानोपमेयभावः ॥

नन्वाधारभेदादेकजातीयानामपि भेदाश्रय उपमानोपमेयभावो भवति, यथा—राज्ञः शयितव्येन तुल्यं देवदत्तस्य शयितव्यमिति । सापेक्षत्वादत्र प्रत्ययेन न भाव्यमित्यदोषः ॥

ननु यदा प्रकरणादिवशादपेक्ष्यं निर्ज्ञातं भवति तदा प्रत्ययप्रसङ्गः । तथा राजशयितव्येन तुल्यं देवदत्तशयितव्यमित्यत्र सापेक्षत्वाभावः, तथा स्यातव्येन तुल्यं गमनं, मन्दत्वात्; नृत्येन तुल्यं गमनं, बहुविकारत्वात्—इति, भोक्तुं पाक इत्यादौ च क्रियानिबन्धनकार्यदर्शनात्तैलपाकेन तुल्यो घृतपाक इत्यादावस्ति तृतीयासमर्थस्यापि क्रियावाचित्वम्, तत्किमुच्यते—कथं च तृतीयासमर्थं नाम क्रिया स्यादिति? **अत्रोच्यते**—उपमानोपमेयभावस्त्रितयसंनिधानायत्तः,—येनोपमीयते यच्चोपमीयते यश्च तयोः साधारणोऽर्थः । एतत् त्रयमवश्यापेक्ष्यम् । तत्र यदा क्रिया उपमानत्वेन विवक्ष्यते तदाऽसाववश्यापेक्ष्यसाधारणधर्माधारत्वात् क्रियारूपतां हित्वा सत्त्वरूपतां प्रतिपद्यत इति मत्वा भाष्यकृतैतदुक्तम् ॥

( उद्द्योतः ) सर्वेषां पदानां साधुत्वादर्थस्य च तत्त्वात् 'इदमयुक्तम्' इति न युक्तमत आह—**सूत्रोपात्तमिति** । सूत्रबोध्यवाक्यार्थस्वरूपमित्यर्थः ॥ ननु 'क्रिया चेत्' इत्येतत्सन्निहितत्वात्तुल्यस्यैव विशेषणं न्याय्यमिति नेदं सूत्रबोध्यमत आह—**तेनेत्यादि** ॥ **प्राथम्यादिति** । तुल्यपदार्थान्वये 'चेत्' ग्रहणं व्यर्थं, तृतीयासमर्थात्तुल्यं क्रियेत्यर्थे प्रत्यय इत्यर्थेन सिद्धेः । तस्माच्चेद्ग्रहणात्तृतीयासमर्थविशेषणमिति परे ॥ **विविभक्तित्वेनेति** । विरुद्धविभक्तित्वे कथं सामानाधिकरण्येन सम्बन्ध इत्यर्थः । **सोपस्कारत्वात्**—अध्याहारादि[5]सापेक्षत्वादित्यर्थः ॥ अध्याह्रियमाणं दर्शयति—**यत्तृतीयासमर्थमिति** ॥

ननु रोदनेन[6] तुल्यं गायतीत्यादौ सम्भवतीत्यत आह—**तृतीयेति** ॥ **असम्भवादिति** । एकस्यैव वस्तुनः सत्त्वभूतत्वासत्त्वभूतत्वयोर्विरोधादित्यर्थः ॥ ननु[7] पाकादिषु कारकान्वयेन तदर्थस्य क्रियात्वमावश्यकं, लिङ्गसङ्ख्याऽन्वयात्सत्त्वभूतत्वञ्च—इति ते तत्र दृष्टे—अत आह—**पाकादय इति** । कारकान्वयस्तु धात्वाच्यांशमादाय । तमादाय कृत्वसुच्तु न, क्रियाग्रहणसामर्थ्यात्साध्यत्वेनैव भासमानक्रियायास्तत्र ग्रहणादिति भावः ॥ वस्तुत इदं चिन्त्यं[8], 'द्विर्वचनेऽचि' इत्यादिप्रयोगात् । वतिस्तु यथा न प्राप्नोति तथाऽनुपदमेव वक्ष्यते ॥ नन्वेवं 'भोक्तुं पाकः' इति न स्यादत आह—**धातुवाच्येति** । तत्र कृत्वसुच्सूत्रोक्तार्थग्रहणे मानाभावादिति भावः । कारकान्वयोऽप्येतदादायैवेत्युक्तमेव । किञ्च 'उपपदमतिङ्' इति सूत्रभाष्यरीत्या पाकादियोगे कारकविभक्तिवत् कृत्वसुजादयो भवन्त्येवेति तत्रैव निरूपितम् । 'तुमुन्न' इत्यपि तत्रैव निरूपितमितीदं चिन्त्यम् ॥ नन्वेवं तद्वदेव वतिः स्यादत आह—**विभक्तिस्त्विति** । 'द्व्येकयोः' इत्यादिभिस्तस्यैकवाक्यत्वादित्यर्थः । साध्यत्वाख्यवैजात्येन पाकप्रकारकः, सिद्धत्वाख्यवैजात्येन तद्विशेष्यको बोधो घञन्तात् । वस्तुत एकनिष्ठत्वाच्च प्रकारताविशेष्यतयोर्न स्फुटं ग्रहो बोधे । एवञ्च 'तेन' इत्यनेनोपस्थापितपाकादिविशेष्यांशे तदन्वयबाधः, प्रत्ययानां प्रकृत्यर्थविशेष्यान्वयित्वस्यौत्सर्गिकत्वादिति भावः । एवञ्च तृतीयासमर्थत्वं नाम तृतीयार्थान्वितत्वम् । न च तत् क्रियारूपे, सङ्ख्याया अपि विभक्त्यर्थत्वेन तदन्वययोग्य एव विभक्त्यर्थान्वयाङ्गीकारादिति तत्त्वम् ॥ **प्रथमाया इति** । तदेकवचनस्येत्यर्थः ॥ **प्रसिद्धेति** । न हि देवदत्तशयितव्ययोः सादृश्यप्रयोजकं गुणाद्यस्तीति भावः ।

---

१ प्रकृतिप्रत्ययार्थाविति । 'तेन' इति तृतीयान्तात्, तुल्यमित्यर्थे इत्येवं निर्दिष्टावित्यर्थः ॥

२ विविभक्तिकत्वेनेति । एवं पाठे हेत्वर्थे तृतीयेयम् । तेनेत्यस्य विविभक्तिकत्वात्क्रियाग्रहणेन सम्बन्धः कथमित्यर्थः । विविभक्तिकेनेति पाठे क्रियाग्रहणेनेत्यस्य विशेषणं बोध्यम् ॥

३ ननु का तर्हि विभक्तिस्तदाह—प्रातिपदिकार्थमात्रे त्विति ॥

४ नेत्यदग्रहणात् क्रिया तृतीयासमर्थस्य विशेषणमित्यर्थः ॥

५ अल्पाक्षरत्वात्सूत्राणामध्याहाराद्यपेक्षेति भावः ॥

६ तृतीयासमर्थस्यापि क्रियात्वम्प्रतिपादयति—रोदनेनेत्यादि ॥

७ क्रियात्वसत्त्वभूतत्वयोरेकत्र संभवं प्रदर्शयति—ननु पाकादिष्वित्यादि ॥

८ इदं चिन्त्यमिति । द्विर्वचने इत्यत्र कृत्वसुचो दर्शनेन साध्यत्वेन भासमानायाः क्रियायास्तत्राऽदर्शनेन च साध्यत्वेन प्रतीयमानक्रियास्थले एव कृत्वसुजित्यादि चिन्त्यमित्यर्थः ॥

**क्रियातद्वतोरिति** । उक्त एव भावः । अत्यन्तभेदे च सादृश्याभावः ॥ **येनैव हेतुनेति** । गोत्वादिनेत्यर्थः । एवञ्च तेन रूपेणाभेद एव, न केनाऽपि भेद इति नोपमानोपमेयभाव इति ॥

ननु व्यक्तिभेदेन तत्रैवात्राप्यस्तु—इति शङ्कते—**नन्विति** ॥ **सापेक्षत्वादिति** । नित्यसापेक्षत्वे गमकत्वे च भवत्येव—विष्णोः पुत्रवच्छिवस्य पुत्र इति ॥ **तैलपाकेनेति** । घञन्ते सिद्धत्वसाध्यत्वोभयविशिष्टस्य पच्यर्थस्य बोध इत्युभयरूपताऽस्ति । न च विरोधः, भाष्यादिप्रामाण्येन वैजात्यद्वये विरोधाभावस्यैवाङ्गीकारादिति भावः ॥ **साधारणधर्माधारत्वादिति** । साधारणधर्मान्वयित्वादित्यर्थः । **परे** तु—'अवश्यापेक्ष्यसाधारणधर्माधारत्वात्' इत्यादिव्याख्या न भाष्यानुगुणा, तृतीयासमर्थत्वस्यैव क्रियात्वाभावे हेतुताया भाष्याल्लाभात् । किञ्च साधारणधर्मान्वयेऽपि यथा तत्र कारकान्वयस्तथा वतिरपि स्यात् । तस्मादयमत्र भाष्यार्थः—उपमानोपमेयभावविषयं प्रकृतं तृतीयासमर्थमुपमानं, क्रिया न—इति । तथा हि 'न वै तिङन्तेनोपमानमस्ति' इति सन्सूत्रस्थभाष्ये तिङन्तग्रहणस्य क्रियोपलक्षणत्वादसत्त्वभूतशयितव्यार्थानामुपमानत्वमेव न । एवञ्च तेषां तुल्यादियोगाभावात्तेभ्यस्तृतीयैव न, पाकादिपदार्थस्य तृतीयार्थान्वितस्य सत्त्वमेव, न क्रियात्वं, ब्राह्मणादिपदार्थस्य चेति ॥

( समाधानभाष्यम् )

**नैष दोषः । सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते—ब्राह्मणः क्षत्रियो वैश्यः शूद्र इति ।**

**आतश्च गुणसमुदाये,**

**एवं ह्याह—**

**तपः श्रुतं च योनिश्च एतद् ब्राह्मणकारकम् ।**
**तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥१॥**

**तथा गौरः शुच्याचारः पिङ्गलः कपिलकेश इत्येतानप्यभ्यन्तरान् ब्राह्मण्ये गुणान् कुर्वन्ति । समुदायेषु च शब्दा वृत्ता अवयवेष्वपि वर्तन्ते ।**

**तद्यथा—पूर्वे पञ्चालाः, उत्तरे पञ्चालाः । तैलं भुक्तम्, घृतं भुक्तम् । शुक्लः, नीलः, कृष्ण इति ।**

**एवमयं ब्राह्मणशब्दः समुदाये वृत्तोऽवयवेष्वपि वर्तते ॥**

( प्रदीपः ) **सर्वे एत इति** । उपमानोपमेयभावविषयाः शब्दा **एत**च्छब्देन परामृश्यन्ते ॥

**तप इति** । चान्द्रायणादि ॥ **श्रुतमिति** । वेदवेदाङ्गादीनाम् ॥ **योनिरिति** । ब्राह्मणाद्ब्राह्मण्यां जन्म ॥ **ब्राह्मणकारकमिति**—शेषषष्ठीसमासः । 'तृजकाभ्यां कर्तरि' 'कर्तरि च' इत्येताभ्यां तु कर्तरि या षष्ठी या च तृजकनिमित्ता कर्मणि तस्या एव समासनिषेधः, न तु शेषषष्ठ्याः । न हि सा तृजकसंबन्धनिमित्ता । ब्राह्मणव्यपदेशस्य निमित्तमेतदित्यर्थः ॥ **तपःश्रुताभ्यामिति** । नासौ परिपूर्णो ब्राह्मणः । जातिलक्षणैकदेशाश्रयस्तु तत्र ब्राह्मणशब्दप्रयोगः । अत एव च तस्य सर्वासु ब्राह्मणक्रियासु नास्त्यधिकारः ॥

**शुच्याचारः**=अनुपहताचारः ॥ **एतानपीति** । गौरत्वादयो ब्राह्मण्यस्य पुराकल्पदर्शनेनायत्वेऽपि क्वचित्तदन्वयदर्शनेन व्यञ्जका इति तानपि शब्दार्थान्तर्भूतत्वेनाश्रयन्तीत्यर्थः ॥

**पूर्वे पञ्चाला इति** । समुदायरूपारोपादवयवे समुदायवृत्तिशब्दवृत्तिः, न तु उपात्तार्थत्यागेनार्थान्तराभिधानं शब्दानामुपपद्यते, शब्दार्थसंबन्धस्यानित्यत्वप्रसङ्गात् । पूर्वादिशब्दसामानाधिकरण्याच्चावयववृत्तित्वावसायः, समुदायवृत्तित्वे हि पञ्चालानां पूर्व इति षष्ठ्या भाव्यम् ॥ **तैलं भुक्तमिति** । यदा द्रव्यसंस्कृते विशिष्टमात्रायुक्तेऽर्थे तैलादयो वर्तन्ते तदैषां समुदायशब्दत्वम्, एकदेशोपयोगे च यदा तैलं भुक्तमिति प्रयोगस्तदावयववृत्तित्वमवसेयम् । यदा तु जातिशब्दास्तैलादयस्तदा संस्थानप्रमाणनिरपेक्षा जातिसमाश्रयेण वर्तन्त इति—अनुदाहरणमेतत् ॥ **शुक्ल इति** । स्वयमशुक्लोऽप्यवयवः शुक्लसमुदायसंबन्धात्तद्रूपारोपात् शुक्ल[1] इत्युच्यते ॥ **एवमयमिति** । यैव क्रियोपमेये श्रूयते तस्यामेव ब्राह्मणादिशब्दो वर्तेत इत्यर्थः ।[2] ब्राह्मणेन तुल्यमधीते—ब्राह्मणवदधीते क्षत्रिय इति । अध्ययनक्रियाविशेषणत्वात् 'तुल्य[3]म्' इति द्वितीया नपुंसकत्वं च । ब्राह्मणाध्ययनेन च क्षत्रियाध्ययनस्य तुल्यत्वसंभवात्सामर्थ्यात् ब्राह्मणशब्दस्य वृत्तिः-इति-उपपद्यते तृतीयासमर्थस्य क्रियावाचित्वम्[4] ॥

ननु भिन्नकर्तृकयोरध्ययनयोस्तुल्यत्वे आश्रीयमाणेऽन्यः[5] साधारणो धर्मोऽपेक्षणीयः । कर्त्रोरेव तूपमानोपमेयत्वेऽध्ययनमेव साधारणो धर्म इति नास्ति धर्मान्तरापेक्षा । उच्यते । शब्दानुपात्ता अपि यथा चन्द्र इव मुखमस्या इत्यादौ कान्त्यादयः प्रतीयन्ते तथाऽत्रापि सौष्ठवादयः प्रत्येष्यन्ते ।

ननु [6]चोक्तं साधारणधर्माधारत्वात्सत्त्वरूपापत्त्या क्रियारूपहानिरिति । एवं तर्हि सामर्थ्याद् भूतपूर्वगत्याश्रयणम्—यस्यार्थस्य क्रियारूपताऽभूत् स संप्रति क्रियारूपातीतोऽपि सत्त्वभावा-

१ 'शुक्ल उच्यते' इति क. पाठः ॥

२ उपमेये—क्षत्रियोऽधीते इत्यत्र या क्रिया श्रूयते 'अधीते' इति तस्यामेव क्रियायां ब्राह्मणशब्दो वर्तते, समुदायेष्वपि च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते इति न्यायादित्यर्थः ॥

३ तुल्यमितीति । क्रियाविशेषणानां कर्मत्वं क्लीबता चेत्याश्रयणादिति भावः ॥

४ क्रियावाचित्वमिति । 'अधीते क्षत्रियः' इत्यर्थे सामर्थ्यात्प्रवृत्तस्य ब्राह्मणशब्दस्य तृतीयासमर्थस्य 'समुदायेषु च वृत्ताः शब्दाः' इति न्यायेन क्रियावाचित्वमिति भावः ॥

५ आश्रीयमाणेऽन्य इति । 'सादृश्यं सुन्दरमुपमा' इति अभियुक्तैरुपमापदार्थस्य निर्णयात् ब्राह्मणाध्ययनक्षत्रियाध्ययनयोरुपमानोपमेयत्वे अध्ययनयोः सुन्दरसादृश्यसम्पादनायान्यः साधारणधर्म आश्रयणीयः स्यात् । ब्राह्मण क्षत्रिययोरेवोपमानोपमेयत्वे साधारणधर्मोऽध्ययनमस्त्येवेति कोऽत्र धर्म आश्रयणीय इति प्रश्नः ॥

६ उक्तमपि । अस्मिन्नेव सूत्रे पूर्वं 'कथं च तृतीया समर्थं क्रिया स्यात्' इति भाष्यव्याख्यावसरे समाधानप्रकरणे 'अत्रोच्यते' इत्यनन्तरं प्रदीपे उक्तमित्यर्थः ॥

पक्षस्तृतीयान्तशब्दवाच्यः परिग्रहीष्यते । अत एव ब्राह्मणादयः शयितव्यादयश्च भूतपूर्वक्रियारूपार्थवाचित्वेन तुल्या इति संप्रति क्रियारूपार्थवाच्यसम्भवाद्भूतपूर्वगतिरभ्युपेयते ॥

( उद्योतः ) उपमानोपमेयेत्यादि । एवं व्याख्याने बीजं चिन्त्यम् ॥ एतत्—तपःश्रुतादि ॥ **ब्राह्मणकारकम्**—ब्राह्मणव्यवहारकारणम् ॥ ननु ब्राह्मणलक्षणाभावे कथं ब्राह्मणपदप्रयोगोऽत आह—**जातिलक्षणेति** । अयमेव भाष्ये जातिब्राह्मणपदस्यार्थः । गौरादिपदार्था 'नञ्'२।२।६ सूत्रे व्याख्याताः ॥ ननु गौरत्वादि न ब्राह्मण्यव्यञ्जकं, व्यभिचारादत आह—**ब्राह्मण्यस्येति** । पुराकल्पे ते तस्य व्यञ्जकत्वेन दृष्टा इत्यर्थः ॥ भाष्ये—**अभ्यन्तरान् ब्राह्मण्ये इति**। एते सर्वे ब्राह्मणशब्दजबोधे प्रकारतया भासन्त इत्यर्थः ॥

नन्वन्यत्रान्यशब्दस्य वृत्तौ शब्दार्थसम्बन्धनित्यत्वहानिरत आह—**समुदायरूपेति** ॥ 'पूर्वे पञ्चालाः' इत्यादावारोपगमकमाह—**पूर्वादिशब्देति** ॥ ननु तैलादीनामवयवावयविसाधारणजातिशब्दत्वात्कथमिदम् ? अत आह—**यदेति** । **मात्रा**—परिमाणम् ॥ **संस्थानप्रमाणनिरपेक्षा इति** । अवयवावयविसाधारणा इत्यर्थः ॥ ननु देवदत्तवत्पचतीति तदनभ्यन्तरक्रिययोरप्युपमादर्शनादाह—**यैवेति** । यथा समुदायवृत्तस्य तदन्तर्गतयत्किञ्चिदवयवे वृत्तिः, एवमन्यक्रियायामपि तद्वृत्तिः,तस्यामप्यभ्यन्तरत्वारोपेणेति भाष्याशयः ॥ **सामर्थ्यादिति**। द्रव्येण क्रियाया उपमाऽसम्भवादित्यर्थः ॥

**कर्त्रैरेव विति** । न च तयोः सादृश्येऽर्थे वत्यन्तस्याऽव्ययत्वं न स्यात्, 'ब्राह्मणेन तुल्यः क्षत्रियः' इत्यादाविव द्रव्याभिधानादिति वाच्यम् । अव्ययप्रकरणे पाठेन, शब्दशक्तिस्वभावेन च वत्युपात्तस्य लिङ्गाद्यनन्वयित्वसम्भवात्, चादिवत्-इत्याशयः ॥

**साधारणधर्माधारत्वात्सत्त्वरूपापत्त्येति** । तृतीयार्थान्वितत्वेन सत्त्वरूपताऽऽपत्तिरित्यपि बोध्यम् । **सामर्थ्यादिति** । मुख्यक्रियायास्तिङन्तक्तप्रत्ययान्तादिवाच्यायाः सादृश्यान्वयाऽभावात् । अन्यस्याश्च लिङ्गाद्यन्वयित्वेन सत्त्वभूतत्वादिति भावः ॥ **अत एवेति** । गौणमुख्यन्यायस्य तु नायं विषयः, सादृश्यसम्बन्धमूलगौणलक्षणिकत्वरूपस्य गौणत्वस्य तत्राश्रयणात् ॥ न चैवं ब्राह्मणपदादि । लाक्षणिकत्वमात्रेण तु न गौणता । ईदृशानामप्रसिद्धत्वमपि गौणत्वं नात्र, अस्य लोकप्रसिद्धत्वादित्याशयः ॥ **शयितव्यादयश्चेति** । तैलपाकादयश्चेति वक्तुं युक्तम् । 'सम्प्रति क्रियारूपार्थवाच्यसम्भवात्' इति पाठे—तद्वाचिनः शब्दस्याभावादित्यर्थः । 'वाच्यासम्भवात्' इति पाठे बहुव्रीहिः । 'वाचकत्वासम्भवात्' इति पाठस्तु युक्त एव ॥

( तृतीयासमर्थविशेषणे दोषदर्शकभाष्यम् )

**यदि तर्हि तृतीयासमर्थं विशेष्यते, प्रत्ययार्थोऽविशेषितो भवति ।**

**तत्र को दोषः ?**

**तृतीयासमर्थात् क्रियावाचिनो गुणतुल्येऽपि प्रत्ययः स्यात् । पुत्रेण तुल्यः स्थूलः । पुत्रेण तुल्यः पिङ्गल इति ॥**

( प्रदीपः ) **अविशेषित इति** । एकेनै विशेषणेन द्वयोः सम्बन्धाभावादिति भावः ॥ **गुणतुल्य इति** । गुणैस्तुल्य इति तृतीयासमासः ॥ **पुत्रेण तुल्यः स्थूल इति** । पुत्रशब्दोऽत्र श्रुताध्ययननिदेशस्थानादिप्रसिद्धक्रियाऽन्तर्भावेण स्वार्थमभिदधातीति सम्भवति क्रियावाची ॥

( उद्योतः ) तृतीयासमास इति । 'पूर्वसदृश–' इत्यनेनेति भावः ॥ **श्रुताध्ययनं**—श्रुतमात्रस्याध्ययनं—ग्रहणम् ॥ **निदेशस्थानं**—पित्राद्याज्ञायां स्थितिः ॥ **क्रियावाचीति** । क्रियाघटितार्थवाचकत्वादिति भावः ॥

( प्रत्ययार्थविशेषणे दोषभाष्यम् )

**अस्तु तर्हि प्रत्ययार्थविशेषणम्—यत्तत्तुल्यं क्रिया चेत्सा भवतीति ।**

**एवमपि तृतीयासमर्थमविशेषितं भवति ।**

**तत्र को दोषः ?**

**तृतीयासमर्थादक्रियावाचिनः क्रियातुल्येऽपि प्रत्ययः प्राप्नोति ॥**

( प्रदीपः ) **अस्तु तर्हीति** । समानविभक्तित्वात् प्रधानत्वाच्च प्रत्ययार्थः क्रमबाधेन विशेष्यत इति भावः ॥ **क्रियातुल्येऽपीति** । अत्रोदाहरणमूह्यम् । क्वचित्तु पुस्तके भाष्य एव पठ्यते—**स्थूलेन तुल्यः पुत्रः स्थूलेन तुल्यो यातीति** । तत्र पुत्रादयो निदेशस्थानादिभिः क्रियावन्तः स्थौल्यगुणयुक्तेन पित्रादिना स्थौल्येनैव गुणेन तुल्या इति विवक्षायामपि वतिप्रसङ्गः। क्रियाग्रहणं च क्रियावत उपलक्षणं, निष्क्रियनिवृत्तिफलत्वात्तस्य-इत्यभिप्रायेण पक्षद्वयेऽप्यतिप्रसङ्गचोदना॥

( उद्योतः ) **प्रधानत्वाच्चेति** । सन्निहितत्वाच्चेत्यपि बोध्यम्। '**चेत्**' शब्दस्त्वत्र पक्षेऽपि यथाकथञ्चियोजयितुं शक्यते इति भावः । नन्वेवं क्रियावतस्तुल्यत्वेऽपि न क्रियायास्तौल्यमत आह—**क्रियाग्रहणञ्चेति** ॥ तदुपादाने तर्हि किं फलमत आह—**निष्क्रियेति** ॥

---

१ **व्याख्याने इति** । **'सर्वे एते शब्दा गुणसमुदायेषु वर्तन्ते'** इति भाष्यव्याख्यायां प्रदीपे **'सर्वे एते इति'** इति प्रतीकमुपादाय **'उपमानोपमेयभावविषयाः शब्दा एतच्छब्देन परामृश्यन्ते'** इति कैय्यटेनोक्तम्, तत्र सर्वे एते इत्यनेन उपमानोपमेयभावविषयाणां शब्दानामेवोपादानमिति उपमानोपमेय भावविषयो यो ब्राह्मणशब्दो न संभवति सोऽपि गुणसमुदाये वर्तते एव—इत्येवं व्याख्याने बीजं चिन्त्यमिति भावः । तेन तुल्यमिति सूत्रोदाहरणीभूतानां ब्राह्मणादिशब्दानामुपमानोपमेयभावविषयत्वात्तथोक्तमिति केचित् ॥

२ **ननु ब्राह्मणेति** । **'तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः'** इति लक्षणे तपःश्रुताभ्यां हीने कथं ब्राह्मणपदव्यवहार इत्यर्थः ॥

३ 'नञ्' सूत्रे हि 'गौरः शुच्याचारः' इत्यादिब्राह्मणलक्षणघटकगौरपदस्य—अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते । सा गौरी तत्सुतो यस्तु स गौरः परिकीर्तितः । एवमर्थ उक्तः, न तु गौरवर्णो गौरपदस्यार्थः ॥

४ अविशेषितो भवतीत्यत्र हेतुमाह—**एकेन इति** ॥

५ क्रियाघटितार्थवाचकः **'समुदाये वृत्तोऽवयवेष्वपि वर्तते'** इति न्यायेन क्रियावाचीति भावः ॥

पक्षद्वयेऽपीति ॥ पक्षद्वयेऽपि क्रियाग्रहणं क्रियावदुपलक्षणमिति पुत्रेण तुल्यः स्थूलः स्थूलेन तुल्यः पुत्र इत्यत्रातिप्रसङ्गोद्भावनमिति भावः ॥

( प्रत्ययार्थविशेषणे दोषाभावबोधकभाष्यम् )

**नैष दोषः ।**

**यत्तत्तुल्यं क्रिया चेत्सा भवतीत्युच्यते । तुलया च संमितं तुल्यम्, यदि च तृतीयासमर्थमपि क्रिया, प्रत्ययार्थोऽपि क्रिया, ततस्तुल्यं भवति ॥**

( प्रदीपः ) **नैष दोष इति** । एकस्मिन्नप्यर्थे विशेषिते सामर्थ्यादुभयोर्विशेषितत्वात् ॥ **तुलया च संमितमिति** । सदृशमित्यर्थः । यथा तुला परिच्छिनत्ति द्रव्यविशेषम्, एवं यत् सादृश्येन वस्त्वन्तरं परिच्छिनत्ति तत् तुल्यमुच्यते । ततः प्रत्ययार्थे विशेषिते सामर्थ्यात् प्रकृत्यर्थोऽपि विशेषितो भवति । न ह्यक्रियया क्रिया तुल्या भवतीति सामर्थ्यात् क्रियावाचिन एव प्रत्ययो विज्ञायते । न च क्रियाशब्देन क्रियावान् गृह्यते, मुख्यार्थसंभवे गौणग्रहणस्यायुक्तत्वात् । न च स्थूलेन तुल्यः पुत्र इत्यादौ क्रिययोस्तुल्यत्वप्रतीतिः, क्रियापदानुपादानात् । अत एव न पुत्रादेः[1] क्रियावत्त्वप्रतीतिः । स्थूलेन तुल्यो यातीत्यत्रापि न क्रिया तुल्या, स्थूलेन यस्तुल्यः—स्थौल्येन गुणेन स यातीत्यर्थावगमात् । यदा तु स्थूलेन तुल्यं यातीति क्रियातुल्यत्वविवक्षा तदा वतिर्भवत्येव—स्थूलवद्यातीति ॥

( उद्योतः ) **सामर्थ्यादुभयोरिति** । अत्यन्तभेदे उपमाया असम्भवादिति भावः ॥ नन्वध्ययनादि न तुलया संमितमत आह—**यथेति** ॥ **क्रियावाचिन एवेति** । क्रियोपमानत्वयोग्यार्थवाचिन एवेत्यर्थः । क्रियात्वलाभे दृढतरमानाभावात् ॥ एवं हि प्रागुक्तातिप्रसङ्गोऽपि नेत्याह—**न च स्थूलेनेति** ॥ क्रियावाचित्वेऽपि[2] वस्तुतो नातिप्रसङ्ग इत्याह—**अत एवेति** । क्रियापदानुपादानादेवेत्यर्थः । निर्देशस्थानादयो[3] न पुत्रशब्दप्रवृत्तिनिमित्तमिति भावः ॥ ननु क्रियापदोपादाने तर्ह्यतिप्रसङ्गः स्यादत आह—**स्थूलेनेत्यादि** । 'स्थौल्येन गुणेन' इति तुल्यपदान्वयि ॥

( तृतीयासमर्थस्य विशेषणे दोषाभावबोधकभाष्यम् )

**अथ वा पुनरस्तु—यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवति—इत्येव ।**

**ननु चोक्तं प्रत्ययार्थोऽविशेषित इति ।**

**तत्र को दोषः ?**

**तृतीयासमर्थात् क्रियावाचिनो गुणतुल्येऽपि प्रत्ययः प्राप्नोति—पुत्रेण तुल्यः स्थूलः, पुत्रेण तुल्यः पिङ्गल इति ।**

**नैष दोषः ।**

**यत्तत्तृतीयासमर्थं क्रिया चेत्सा भवतीत्युच्यते, तुलया च संमितं तुल्यम् । यदि च तृतीयासमर्थमपि क्रिया, प्रत्ययार्थोऽपि क्रिया, ततस्तुल्यं भवति ॥**

( प्रदीपः ) **अथ वेति** । पूर्वोक्तेनैव न्यायेन प्रकृत्यर्थे विशेषिते प्रत्ययार्थोऽपि विशेषित इत्यर्थः ॥

( सिद्धान्तभाष्यम् )

**किं पुनरत्र ज्यायः ?**

**प्रत्ययार्थविशेषणमेव ज्यायः ।**

**कुत एतत् ?**

**एवं चैव हि कृत्वाऽऽचार्येण सूत्रं पठितम् । वतिना सामानाधिकरण्यं कृतम् ॥**

( प्रदीपः ) **किं पुनरिति** । उक्तदोषपरिहाराद्द्वयोरपि प्रशस्यत्वादन्यतरप्रकर्षविषयः[4] **प्रश्नः** ॥ **वतिनेति** । वतिशब्देन वत्यर्थ उच्यते । तेनायमर्थः—प्रकृत्यर्थविशेषणपक्षे वाक्याध्याहारेण समर्थनीयम्, 'तेन' 'क्रिया' इत्यनयोः पदयोर्भिन्नविभक्तित्वात् । 'तुल्यं' 'क्रिया' इत्यनयोस्तु पदयोरेकविभक्तिकत्वात् श्रुत्यैव सामानाधिकरण्योपपत्तिः ॥ **अन्ये तु**—वतिप्रत्ययेनैव सामानाधिकरण्यं व्याचक्षते—वतिर्भवति स च क्रियावाची । एवं च क्रियायां तुल्यायां वतिर्भवतीत्यर्थः संपद्यते ॥

( उद्योतः ) आतिशायनिकोपपत्तये आह—**उक्तदोषेति** ॥ ननु सूत्रे वतेर्विधेयतया स्वरूपपरत्वेन कथं क्रियापदेन सामानाधिकरण्यमत आह—**वतिशब्देनेति** । 'तुल्यम्' इति च सूत्रे प्रथमान्तं सामान्ये नपुंसकम् । 'चेत्' इत्युच्चारणन्तु पूर्वाचार्यानुरोधेनेति बोध्यम् ॥ **अन्ये त्विति** । अध्याहारसापेक्षत्वमत्रारुचिः ॥

( प्रत्ययार्थविशेषणे फलान्तरकथनभाष्यम् )[5]

**अपि च वतेरव्ययेषु पाठो न कर्तव्यो भवति । क्रियायामयं भवन् लिङ्गसंख्याभ्यां न योक्ष्यते ॥**

(प्रदीपः) **अपि चेति** । प्रत्ययार्थविशेषणपक्षे[6] मुख्या क्रिया साध्यमानस्वभावाऽसत्वभूता संभवति । तस्यां वतिर्विधीयमानो विनाऽपि गणपाठेनाव्ययसंज्ञां प्रतिपद्यते । 'यन्नव्येति लिङ्गसंख्यानुपादानात्'-तदव्ययमिति अव्ययलक्षणं, गणपाठस्तु प्रप-

1 न पुत्रादेरिति । पुत्रेण तुल्यः स्थूल इत्यादौ क्रियाया अनुपादानान्न क्रियावत्त्वप्रतीतिरिति भावः ॥

2 ननु क्रियावाचिनः प्रत्ययोत्पत्तावपि 'ब्राह्मणवत्' इत्यादौ ब्राह्मणशब्दाद्वतिप्रत्ययो दुर्लभ इत्यत आह—**क्रियोपमानत्वयोग्यार्थवाचिन इति** ॥

3 ननु सर्व एते शब्दा गुणसमुदायेषु वर्तन्ते—ब्राह्मणादयः । तद्वत्पुत्रशब्दोऽपि गुणसमुदाये वृत्तश्चेत् निर्देशस्थितावपि पुत्रशब्दस्य वृत्तिरिति क्रियावाचित्वं तस्य । तथा च 'न क्रियावत्त्वप्रतीतिः' इति कथं संगच्छेत ? तदाह—**निर्देशस्थानादय इति** ॥

4 क्रियायाः प्रकृत्यर्थविशेषणत्वप्रत्ययार्थविशेषणत्वरूपपक्षद्वयस्य प्रशस्यत्वेऽपि प्रत्ययार्थविशेषणत्वपक्षे भाष्यकृद्दर्शितपक्षपातं स्पष्टयति—**तेनायमर्थ इत्यादिना** ॥

5 प्रत्ययार्थविशेषणपक्षे लाघवमप्याह—भाष्यकृत्—**अपि चेति** ॥

6 वतेरव्ययेषु पाठो न कर्तव्यो भवतीत्येतदुपपादयति—**प्रत्ययार्थविशेषणेति** । क्रियायां वतिप्रत्ययस्य विधानेन प्रत्ययार्थस्य च शाब्दबोधे मुख्यत्वेन क्रियावाचित्वमेव वतिप्रत्ययान्तस्य शब्दस्येति लिङ्गसंख्याभ्यां योगाभावात्तस्य अव्ययत्वं सुलभमिति न तदर्थं गणे वतिप्रत्ययस्य पाठ आवश्यक इति भावः ॥

स्वार्थ इति भाष्यकाराभिप्रायः । क्रिया[1]मात्रं चेह वतिनाऽभिधीयत इति तद्विशेषप्रतिपत्तये क्रियापदप्रयोगः । प्रकृत्य[2]र्थविशेषणपक्षे तु–भूतपूर्वगतिर्वाऽऽश्रयणीया, क्रियाग्रहणेन वा क्रियावत उपलक्षणे क्रियाद्वारकं क्रियावतः सादृश्यमाश्रयणीयम् । तत्र गत्यन्तरसम्भवे भूतपूर्वाश्रयणमयुक्तम् । द्वितीये तु पक्षे–क्रियावान् प्रत्ययार्थः स्यात्–ब्राह्मणेन तुल्योऽध्येतेति । तथा च लिङ्गसंख्यावदर्थाभिधायित्वादव्ययसंज्ञार्थो वतेः पाठः कर्तव्यः स्यात् । पाठ[3]सामर्थ्याच्च सत्त्ववाचित्वेऽव्ययसंज्ञाप्रवृत्तिः । तदेवं स्थितमेतत्—**प्रत्ययार्थविशेषणं क्रिया ।** ब्राह्मणे[4]न तुल्योऽध्येतेत्येवमादौ क्रियावतोः सादृश्यं विवक्षितं न तु क्रिययोरिति प्रत्ययाभावः । उत्तरसूत्रेणापि वतेर्विहितस्यासत्त्वभूतार्थाभिधायित्वम्, इवशब्दस्येव । 'तदर्हम्' इत्यनेनापि क्रियायां वतिर्विधीयत इति तदर्थोऽप्यव्ययेषु वतेः पाठो न कर्तव्यः ॥

**( उद्योतः ) मुख्या क्रियेति ।** उपमेयभूतेत्यर्थः ॥ नन्वेवं वतेरेव क्रियार्थत्वे क्रियापदप्रयोगो न स्यादत आह—**क्रियामात्रञ्चेति** ॥ ननु प्रकृत्यर्थविशेषणपक्षेऽप्यन[5]या रीत्याऽव्ययत्वस्य सुलभत्वात्कथं प्रत्ययार्थविशेषणपक्षे साधकत्वेनास्योपन्यासोऽत आह—**प्रकृत्यर्थविशेषणपक्षे त्विति ॥ भूतपूर्वगतिरिति ।** प्रकृत्यर्थस्येव प्रत्ययार्थस्यापि संप्रत्यक्रियारूपस्य–भूतपूर्वक्रियारूपस्य ग्रहणं स्यादिति नियमेनाव्ययत्वासिद्धिरिति भावः ॥ अत्र पक्षे दोषान्तरमप्याह—**गत्यन्तरेति । परे तु**–प्रत्ययार्थविशेषणेऽपि ब्राह्मणवदधीत इत्यत्रै[6]व स्यात्, न तु नृत्यवद्गमनमित्यादौ, गमनपदवाच्यस्य सत्त्वरूपत्वात् । तस्मात्तत्रापि व्याख्यानेन, स्वरितपाठाश्रयेण वा भूतपूर्वस्यापि ग्रहणमावश्यकमिति वदन्ति । तन्न । अ[7]स्तिक्रियाऽध्याहारेण तत्रापि क्रियाया एव तुल्यत्वादित्याशयात् ॥ **द्वितीये त्विति ।** क्रियावदुपलक्षणत्वमिति पक्षे इत्यर्थः ॥ **क्रियावान्प्रत्ययार्थः स्यादिति ।** क्रियावता क्रियावत एव सादृश्यसम्भवादिति भावः ॥ **पाठः कर्तव्यः स्यादिति ।** यद्यपि शब्दशक्तिस्वभावेनेदं परिहर्तुं शक्यं, तथाऽपि तद्द्योतनार्थमेव पाठः कर्तव्य इत्याशयः ॥ **न तु क्रिययोरिति ।** अस्तिक्रियामादाय तु भवत्येव वतिरिति बोध्यम् । अनेन च क्रियावदुपलक्षणत्वपक्षो दुष्ट इति बोधितम् । अत एव अध्येतृब्राह्मणतुल्योऽसौ क्षत्रियोऽध्येतेत्यादावपि न वतिरिति बोध्यम् ॥ ननूत्तरसूत्रविहितवत्यन्तस्य संज्ञा[8]र्थं पाठ आवश्यकोऽत आह—**उत्तरसूत्रेणाऽपीति ॥**

( ८७८ विधिसूत्रम् ॥ ५ । १ । २ आ. ५२ )

## १९९८ तत्र तस्येव ॥ ५ । १ । ११६ ॥

( प्रयोजनाक्षेपभाष्यम् )

**किमर्थमिदमुच्यते? न 'तेन तुल्यं क्रिया चेद्वतिः' (११५) इत्येव सिद्धम्?**

**( प्रदीपः ) किमर्थमिति ।** 'तुल्यार्थैः'–इति या तृतीया तयैवेवयोगे सर्वविभक्त्यर्था व्याप्ताः । यथा–ब्राह्मण इवाधीते, ब्राह्मणेन तुल्यमधीते । ब्राह्मणमिव पश्यति, ब्राह्मणेन तुल्यं पश्यति । ब्राह्मणेनेवाधीतं, ब्राह्मणेन तुल्यमधीतम् । ब्राह्मणायेव वैश्याय ददाति, ब्राह्मणेन तुल्यं वैश्याय ददाति । ब्राह्मणादिव वैश्यादधीते, ब्राह्मणेन तुल्यं वैश्यादधीते । ब्राह्मणस्येव क्षत्रियस्य स्वं, ब्राह्मणेन तुल्यं क्षत्रियस्य स्वम् । ब्राह्मण इव क्षत्रिये वर्तते, ब्राह्मणेन तुल्यं क्षत्रिये वर्तत इति । तत्र तृतीयया षष्ठीसप्तम्यर्थस्य व्याप्तत्वात् तृतीयान्तादेव पूर्वेण प्रत्ययो विधास्यते, क्रियाग्रहणं च न करिष्यते, य एव चार्थो मथुरायामिव पाटलिपुत्रे प्राकारा इति स एव मथुरया तुल्याः पाटलिपुत्रे प्राकारा इति । तथा देवदत्तस्येव यज्ञदत्तस्य शुक्ला दन्ताः, देवदत्तेन तुल्या यज्ञदत्तस्य शुक्ला दन्ता इति । मथुराशब्देन च तदवयवाः प्राकारा उच्यन्ते, देवदत्तशब्देनापि दन्ता इति **प्रश्नः ॥**

**(उद्योतः)** ननु तृतीयासमर्थात्क्रियातुल्यत्वे तेन प्रत्ययः, अनेन तु द्रव्यगुणादितुल्ये षष्ठ्याद्यन्तादिति कथं तेन सिद्धिः? अत आह—**तुल्यार्थैरितीति ।** इवयोगे ये सर्वे विभक्त्यर्थास्ते तुल्ययोगे 'तुल्यार्थैः'–इति तृतीयया व्याप्ताः–सम्बद्धा इत्यन्वयः ॥ **यथेति । ब्राह्मण** इवाधीत इत्यादितोऽपि ब्राह्मणेन तुल्यमधीत इत्यादित इव ब्राह्मणकर्तृकाध्ययनतुल्यमध्ययनमित्यादिक्रमेणैव बोध इ[9]त्यभिमानः ॥ **पूर्वेण**

---

१ **क्रियामात्रमिति ।** यथा एधामास इत्यादौ विशेषक्रियावाचिनः परः सामान्यक्रियावचनस्य 'अस्' धातोः प्रयोगः क्रियते न तु क्रियाविशेषवचनस्य प्रयोगः । तद्वदत्र वतेः क्रियावाचित्वेऽपि तस्य सामान्यक्रियावाचित्वमिति तद्विशेषज्ञानाय क्रियापदप्रयोग आवश्यक इति भावः ॥

२ **प्रकृत्यर्थविशेषणपक्षे त्विति ।** प्रकृत्यर्थविशेषणे हि **'यत्तत्तृतीयासमर्थं क्रिया चेत्सा'** इत्यर्थकरणेऽपि तृतीयासमर्थस्य ब्राह्मणादिशब्दस्य क्रियावाचित्वाभावात्तत्र भूतपूर्वगतिराश्रयणीया । तथा च संप्रति क्रियावाचित्वाभावान्नाव्ययत्वमिति तदर्थं वतेः पाठो गणे आवश्यक इति गौरवम् । क्रियाग्रहणेन क्रियावत उपलक्षणेऽपि क्रियावाचित्वाभाव एवेति गणपाठ आवश्यक इति भावः ॥

३ ननु प्रकृत्यर्थविशेषणपक्षे वतेर्गणे पाठेऽपि क्रियावाचित्वाभावात्कथमव्ययत्वं तदाह—**पाठसामर्थ्याच्चेति ॥**

४ प्रकृत्यर्थविशेषपक्षे दोषमप्याह—**ब्राह्मणेन तुल्य इत्यादि ।** अस्मिन् हि पक्षे क्रियावतोः सादृश्यविवक्षणात्तस्य चात्र सत्वात्स्याद्वतिः । प्रत्ययार्थविशेषणपक्षे हि क्रिययोरत्र सादृश्यं न विवक्षितमिति न प्रत्यय इति भावः ॥

५ **अनया रीत्येति ।** तत्पक्षेऽपि हि क्रियावाचकाद्ब्राह्मणादिशब्दात्स्वार्थे प्रत्ययविधानाद्विशिष्टस्य क्रियावाचित्वादव्ययत्वमितिरीत्येत्यर्थः ॥

६ **इत्यत्रैव स्यादिति ।** लिङ्गसंख्याऽनन्वयादसत्वरूपत्वादव्ययत्वमिति शेषः । गमनपदस्य सत्वरूपार्थवाचकत्वेन यथा लिङ्गसंख्याभ्यामन्वयः, अव्ययत्वाभावश्च, तथा नृत्यवदिति वतिप्रत्ययान्तस्यापि सत्वरूपत्वेनाव्ययत्वं न स्यादिति तदर्थं प्रत्ययार्थविशेषणपक्षेऽपि गणपाठ आवश्यक इति भावः ॥

७ प्रत्ययार्थविशेषणपक्षेऽपि नृत्यवद्गमनमित्यादौ प्राप्तदोषस्य परिहारमाह—**अस्तिक्रियाध्याहारेणेति ।** नृत्यशब्दस्य नृत्यकर्तृकसत्तायां लक्षणया नृत्यकर्तृकसत्ताया उपमानत्वं, गमनकर्तृकसत्ताया उपमेयत्वमित्यर्थः ॥

८ **संज्ञार्थमिति ।** अव्ययसंज्ञार्थं वतेर्गणे पाठ इत्यर्थः ॥

९ **इत्यभिमान इति ।** ब्राह्मण इवाधीते–ब्राह्मणेन तुल्यमधीत इत्यत्र इवार्थसादृश्यस्य ब्राह्मणविशेषणतया तुल्यार्थस्य च विशेष्यतया बोधे वैलक्षण्येऽपि 'तृतीयैव इव योगे सर्वविभक्त्यर्था व्याप्ताः' इत्युक्तिरभिमान इति भावः ॥

प्रत्यय इति । अत[1] एव 'पूर्ववत्सनः' इत्यादौ पञ्चम्यन्तार्थकाद्वतिर्विधीयते ॥ न करिष्यत इति । अतिप्रसङ्गस्त्वनभिधानात्परिहरणीय इत्यर्थः ॥ ननु प्राकारादीनां मधुरादिभिः कथं तुल्यत्वमत आह—मधुराशब्देन चेति ॥

( सूत्रप्रयोजनबोधकभाष्यम् )

**न सिध्यति ।**

**तृतीयासमर्थात्तत्र प्रत्ययः—यदाऽन्येन कर्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते ।**

**न च काचिदिवशब्देन योगे तृतीया विधीयते ।**

**ननु च सप्तम्यपि न विधीयते ।**

**एवं तर्हि सिद्धे सति यदिवशब्देन योगे सप्तमीसमर्थाद्वतिं शास्ति तज्ज्ञापयत्याचार्यः-भवति-इवशब्देन योगे सप्तमीति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ?**

**'देवेष्विव नाम, ब्राह्मणेष्विव नाम' एष प्रयोग उपपन्नो भवति ॥**

( प्रदीपः ) **न सिध्यतीति** । पूर्वसूत्रे अवश्यं कर्तव्यं क्रियाग्रहणं 'गवा तुल्यो गवयः' इत्यादौ प्रत्ययनिवृत्त्यर्थं, तस्मिन् क्रियमाणे गुणद्रव्ययोस्तुल्यत्वे प्रत्ययो न प्राप्नोतीति षष्ठीसप्तम्यन्तादिवार्थे वतिर्विधीयत इत्यर्थः । इवशब्दश्च द्योतकत्वान्न व्यतिरेकहेतुः-गौरिव गवय इति । यथा चशब्दः-'धवश्च खदिरश्च' इति । तुल्यशब्दस्तु वाचकत्वादुपमाने व्यतिरेकहेतुः-देवदत्तेन तुल्यो देवदत्तस्य तुल्यः इति वा । तत्र दन्तप्राकारादिसम्बन्धोपजनितषष्ठीसप्तम्यन्तादिवार्थेऽनेन प्रत्ययः ।

ननु 'इव' इत्येव सूत्रमस्तु, पूर्वसूत्राच्च 'तेन' इत्यनुवर्तिष्यते, तदनुवृत्त्या च शेषविषये सर्वा विभक्तय इवशब्दप्रयोगे उपमानाद्भवन्तीत्यनुमास्यते-इत्याशङ्क्याह-**न च काचिदिति** । **अयमर्थः**-इवशब्दस्तावदसत्त्ववाचित्वान्न व्यतिरेकहेतुरिति तद्योगे लक्षणेन तृतीया नास्ति, नापि तद्योगे शेषविषये ज्ञापयितुमिष्टेति हित्वा तृतीयां विभक्त्यन्तरमाश्रितम् ॥ **ननु चेति** । तत्र यथा शेषविषये ज्ञापकात्सप्तमी भवति-एवं तृतीयाऽपि भविष्यतीति भावः ॥ **एवं तर्हीति** । तृतीयाऽनुवृत्त्यैव इवयोगेऽस्मादेव ज्ञापकादनुमिततृतीयान्ताद्वतौ सिद्धे तत्रेति सप्तमीनिर्देशो ज्ञापयति-'शेषविषये भवति-इवयोगे सप्तमी' इति । तृतीया तु नेष्यत इति नासौ ज्ञाप्यते ॥

**देवेष्विति** । देवानामिवेत्यर्थः । नन्वसति प्रयोजने ज्ञापकं भवति । अस्ति च सप्तम्युपादानस्य प्रयोजनं-मधुरायामिव मधुरावत्पाटलिपुत्रे प्राकार इत्यादौ प्राकाराद्याधेयापेक्षाधिकरणविहितसप्तम्यन्तात्प्रत्ययविधानम् । किं च ज्ञापकात्सप्तम्यनुमानेऽधिकरणसप्तम्यन्ताद्वतेरनुत्पत्तिः स्यात् । एवं तर्हि तन्त्रेण सूत्रद्वयमुच्चारितमिति भाष्यकाराभिप्रायः । तत्रैकेन सूत्रेण स्वलक्षणविहितषष्ठीसप्तम्यन्ताद्वतिर्विधीयते, द्वितीयेन तु इवशब्दयोगे 'तस्य'इत्यस्यार्थे 'तत्र' इति सप्तमी विधीयते । सप्तम्या षष्ठी मा बाधि इति तस्येत्यनेन प्रतिप्रसूयते । महाविभाषाऽधिकाराद्वा षष्ठी न बाध्यते ॥

( उद्द्योतः ) भाष्ये—**तृतीयासमर्थात्तत्र प्रत्यय** इत्यस्य-तृतीयासमर्थात्तत्र क्रियातुल्यत्वे प्रत्यय इत्यर्थः ॥ तदेवाह—**यदाऽन्येनेति** ॥ **क्रियाम्**-तत्सदृशीमित्यर्थः ॥ तदाह—**पूर्वसूत्रे इत्यादि** ॥ नन्विवयोगेऽपि 'तुल्यार्थैः-' इति तृतीया सुलभा, अतः 'तत्र तस्य' इति व्यर्थं, 'तेन' इत्यनुवृत्त्यैव सिद्धेरत आह—**द्योतकत्वादिति** । समभिव्याहृतस्यैव तदर्थकतेति भेदाभाव इत्यर्थः ॥ **व्यतिरेकहेतुरिति** । भेदनिबन्धनषष्ठ्यादिहेतुरित्यर्थः । **अपरे तु**-इवादिर्यदनन्तरमुपात्तस्तद्गतोपमानत्वस्य, तद्गतसाधारणधर्मसम्बन्धस्योपमानोपमेयभावसम्बन्धस्य च बोधकः । एवञ्च 'चन्द्र इव मुखम्'इत्यत उपमानचन्द्राभिन्नमाह्लादकं मुखमिति धीः । एवञ्चेवार्थस्योपमानत्वस्य विशेषणतया चन्द्रादेश्च विशेष्यतया न तत्रोपपदविभक्तिरिति वाचकत्वेऽपि न दोषः । तदुक्तं भाष्ये—**न च काचिदिवशब्देन योग इति** । तदर्थनिरूपितसम्बन्धे इत्यर्थः । एवञ्च बोधभेदायेदं सार्थकमिति भावः । एतच्च **'न च'** इति चेन सूचितम् । तेन ह्यस्य प्रयोजनान्तरत्वं सूचितम् । द्रव्यगुणादितुल्यार्थमिदमित्यपि 'यदाऽन्येन' इत्यादिनोक्तम् । इवार्थस्योपमानविशेषणतयोपमानस्योपमेयेऽभेदान्वयेनोपमेयसमाने षष्ठीसप्तम्यौ स्त एवेति तात्पर्यम् ॥ एतदाशयानभिज्ञ एकदेशी शङ्कते—**ननु चेति** ॥ सिद्धान्त्येकदेश्याह—**एवं तर्हीति** । अन्यथा इवार्थनिरूपितसम्बन्धे षष्ठ्या अपि दुर्लभत्वाच्छङ्कोत्तरयोरसङ्गतिः, न हि भवति चन्द्रस्येव मुखमिति । **'देवेष्विव'** इत्यस्योपमेयं नामेतीति भाष्यार्थमाहुः । कैयटव्याख्या तु चिन्त्या ॥ अथ कैयटाक्षराणि व्याख्यायन्ते—**यथा चशब्द इति** । इतरसमुच्चयवान्धवस्तथा खदिर इति बोधादिति भावः ॥ **वाचकत्वादिति** । सत्त्वभूतार्थवाचकत्वेन विशेष्यत्वादित्यर्थः ॥ नन्वेवं कथं षष्ठ्याद्यन्तादिवार्थे प्रत्ययोऽत आह—**तत्र दन्तेति** । अयं भावः-वाक्ये प्राकारादिपदाध्याहारेणैव बोधः । प्राकारयोरेव च सादृश्यम् । वृत्तौ तु मधुरादिपदानां तत्सम्बन्धिप्राकारादौ लक्षणेति ।

ननु 'तुल्यार्थैः-' इति सूत्रमस्त्वेवेत्यत आह—**इवशब्द इति** ॥ **असत्त्ववाचित्वादिति** । द्योतकत्वादित्यर्थः । एवञ्च तद्योगे न तत्प्राप्तिरिति भावः ॥ **इष्टेतीति** । किन्तु प्राकारादिजनितव्यतिरेके एव षष्ठी इष्टेति भावः ॥ **शेषविषये**—प्राकारादिजनितसम्बन्धे क्रियासम्बन्धाभावात्सप्तम्यप्राप्तिरिति भावः ॥ **देवानामिति** । देवानां नामेवेत्यर्थः ॥ **नन्वसतीति** । आधारस्याधेयद्वारैव क्रियाऽन्वय इति नासामर्थ्यम् । **परे तु**-अधिकरणसप्तम्यन्तात्प्रत्ययो नेष्ट एव भगवतः । उपमानमधुरासम्बन्धिप्राकाराभिन्नः पाटलिपुत्रसम्बन्धी प्राकार इत्येव बोधः । **'भवतीवयोगे सप्तमी'** इत्यस्योपमानविशेषणे उपमेयविशेषणे चेत्यर्थः । एवञ्च-आवृत्तिर्व्यर्थैव । **देवेष्विवेत्यस्य**-देवेष्विव मनुष्येषु नामे-

[1] अत एव—तृतीयया सर्वविभक्त्यर्थानां व्याप्तत्वादेव ।

[2] तेन तुल्यमिति सूत्रे क्रियाग्रहणाभावे पुत्रेण तुल्यः स्थूल इत्यादावपि वतिः प्राप्नुयात्तत्परिहारमाह—अतिप्रसङ्गस्त्विति ।

त्यर्थः । महाविभाषाऽधिकाराद्वेत्यपि चिन्त्यमेव, तस्मात्तद्धितप्रत्ययान्वयित्वादित्याहुः ॥

( ८७९ विधिसूत्रम् ॥ ५ । १ । २ आ. ५३ )

## १९९९ तदर्हम् ॥ ५ । १ । ११७ ॥

( सूत्राक्षेपभाष्यम् )

**किमर्थमिदमुच्यते न 'तेन तुल्यं क्रिया चेद्वतिः' (११५) इत्येव सिद्धम् ?**

( प्रदीपः ) **किमर्थमिति** । इह क्रियाग्रहणमनुवर्तते तेन द्वितीयान्तादर्हणस्य कर्त्र्यां क्रियायां वतिर्विधीयते–राजानमर्हति वृत्तं, ब्राह्मणमर्हति वृत्तं, राजवद्वर्तते, ब्राह्मणवद्वर्तत इति । तत्र 'राज्ञा तुल्यं वर्तते' इति विग्रहाश्रयेण पूर्वेण वतिः सिद्धः । राजानमर्हति छत्रमित्यादौ क्रियाऽनुवर्तनात् प्रत्ययेन न भाव्यम् । राजवद्वृत्तमस्येत्यादावपि 'तत्र तस्येव' इति सिद्धो वतिः । 'तेन तुल्यम्' इत्येतत्तु चोदकेनोपलक्षणायोपात्तम् । इह तर्हि 'राजवद्वर्तते राजा' इति भेदाभावाद्भेदनिबन्धनसादृश्याभावादप्राप्तो वतिरनेन विधीयते । अत्रापि राजत्वेन प्रसिद्धा ये पृथुभरतभगीरथादयस्त इदानींतनानां राज्ञामुपमानानि–इति सिद्धो वतिरिति प्रश्नः ॥

( उद्द्योतः ) ननु पूर्वसूत्रवदक्रियार्थमेतत्स्यादत आह–**इहेति** । द्वितीयान्तादर्हमित्यर्थे प्रत्ययो भवति, यदर्हं सा क्रिया चेदित्यर्थः । **अर्हमिति** पचाद्यजन्तम् । **राजानमर्हतीत्यादेः**–राजनिष्ठयोग्यतानिरूपकत्वकर्त्रे तद्वृत्तमिति बोधः । एवं तर्हि अर्हणक्रियाकर्तृवृत्तं भवति । एवञ्च राजवृत्ततुल्यमेतद्वृत्तमिति फलति । तदाह–**राज्ञा तुल्यमिति** । राजवृत्तेन तुल्यं वर्तनमित्यर्थः ॥ क्रियाऽनुवृत्तेः फलं दर्शयति–**राजानमिति** । राजवद्वृत्तमस्येत्यादौ तृतीयासमर्थत्वाभावाद्वृत्तपदार्थस्याक्रियात्वाच्च 'तेन तुल्यम्' इत्यस्याप्राप्तेराह–**तत्र तस्येवेति** ॥ शङ्कते–**इहेति** ॥ राजपदद्वयमप्येकस्यैव वाचकं, तदाह–**भेदाभावादिति** ॥

( फलसमर्थकभाष्यम् )

**न सिध्यति ।**

**तृतीयासमर्थात्तत्र यदाऽन्येन कर्तव्यां क्रियामन्यः करोति तदा प्रत्यय उत्पाद्यते ।**

**इह पुनर्द्वितीयासमर्थादात्मार्हायां क्रियायामर्हतिकर्तरि निश्चितबलाधाने प्रत्यय उत्पाद्यते–ब्राह्मणवद्भवान् वर्तते । एतद्वृत्तं ब्राह्मणमर्हतीति ॥**

(प्रदीपः) **न सिध्यतीति** । यदा राजशब्दः सामान्यवचनः, प्रसिद्धविशेषविषयो वा 'राजवदयं वर्तते पृथुः' इति तदा सादृश्याभावाद्वतेरप्राप्तिः । तथा 'चिच्छेद कृतहस्तवत्' इति–कृतहस्तमर्हति च्छेदनमित्यर्हणं गम्यते न तु सादृश्यम् ॥ **आत्मार्हायामिति** । द्वितीयान्तवाच्यस्यार्थस्यात्मनोऽर्हा या क्रिया तस्यामित्यर्थः ॥ **अर्हतिकर्तरीति** । अर्हतेः कर्तरि क्रियारूपे वृत्तादिक इत्यर्थः ॥ **निश्चितबलाधान इति** । निश्चितस्यार्थस्यान्ययोगनिवृत्त्यर्थं **बलाधानम्**–पुनरुपादानेन निश्चयनमित्यर्थः । यदा राज्ञः किञ्चन वृत्तं प्रसिद्धमेवान्यनिवृत्त्यर्थं पुनरुपादीयते–'राजानमेतदर्हति वृत्तं न त्वराजानम्' इति तदाऽर्थवदेतत् सूत्रम् । यदा त्वेकमेव वस्तु अवस्थाभेदपरिकल्पितभेदमुपमानोपमेयत्वेन विवक्ष्यते तदा नार्थोऽनेन योगेन । तथा च इवशब्दस्यापि प्रयोगो दृश्यते–'राजेवायं राजा युध्यते' 'वैयाकरण इवायं वैयाकरणो ब्रूते' 'त्वमिव त्वं बुध्यस्व' इति । तथा 'सदृशस्त्वं तवैव' इति ॥

( उद्द्योतः ) सामान्यस्य विशेषानालिङ्गितस्याभावादाह–**प्रसिद्धविशेषेति** ॥ **राजवदयमिति** । पृथुकर्तृकवर्तनं पृथुराजयोग्यमित्यर्थः ॥ **न तु सादृश्यमिति** । तदुक्तं–

'युक्तमौपयिकं राज्ञ इत्यर्थस्य निदर्शनम् ।
उपमानाविवक्षायां तदर्हमिति पठ्यते ॥' इति ॥

**चिच्छेद कृतहस्तवदित्यस्याऽपि**–कृतहस्तयोग्यमेतदीयं छेदनमिति बोधः । एवञ्चाऽयमपि कुशल इति फलति ॥ नन्वात्मार्हायामित्यत्रात्मपदेन क्रियाग्रहणेऽसङ्गतिं मत्वा आह–**द्वितीयान्तेति** । द्वितीयान्तवाच्यार्थस्यात्मपदेन ग्रहणमिति भावः ॥ **अर्हतेरिति** । अर्हधातोश्च योग्यतानिरूपकत्वमर्थः । तत्र वृत्तस्य कर्तृत्वम्, ब्राह्मणस्य योग्यताश्रयत्वात्कर्मत्वम् ॥ ननु सर्वेणापि स्वयोग्यक्रियाकरणादीदृशप्रयोगो निष्फलोऽत उक्तं–**निश्चितबलाधान इति** ॥ तद्व्याचष्टे–**निश्चितस्येति** ॥ तदेवोपपादयति–**यदेति** ॥ **तदा नाऽर्थ इति** । तदुक्तम्–

'तदर्हमिति नारब्धं सूत्रं व्याकरणान्तरे ।
सम्भवत्युपमाऽत्रापि भेदस्य परिकल्पनात् ॥' इति ।

**इदं चिन्त्यम्** । 'त्वमिव त्वम्' इत्यत्र द्वितीयसदृशान्यवच्छेदप्रतीतिरेव, न तु सादृश्यमिति सूत्रभाष्यकृतोरभिप्रायात् ॥

( ८८० विधिसूत्रम् ॥ ५ । १ । २ आ. ५४ )

## २००० उपसर्गाच्छन्दसि धात्वर्थे ॥ ५ । १ । ११८ ॥

( अर्थग्रहणाक्षेपभाष्यम् )

**अर्थग्रहणं किमर्थम् ?**

**न 'उपसर्गाच्छन्दसि धातौ' इत्येवोच्येत ॥**

**धातुर्वै शब्दः, शब्दे कार्यस्यासंभवादर्थे कार्यं विज्ञास्यते ।**

**कः पुनर्धात्वर्थः ?**

**क्रिया ॥**

( प्रदीपः ) **अर्थग्रहणमिति** । धातावित्येव धात्वर्थो लभ्यत इति भावः ॥ **धातुर्वै शब्द इति** । तत्रार्थग्रहणमन्तरेणार्थस्य ग्रहणं न स्यादिति भावः ॥ येनाभिप्रायेण प्रश्नस्त-

मेवाविष्कर्तुमाह—शब्दे कार्यस्येति । न हि वतिप्रत्ययस्य धातुर्वाच्य उपपद्यत इति सामर्थ्याद्धातुसहचरितोऽर्थ आश्रयिष्यत इत्यर्थः । अथवा 'धातुर्वै शब्दः शब्दे कार्यस्य' इत्येकग्रन्थ एवायम् ॥

(उद्योतः) धातावित्येवेति । वक्ष्यमाणरीत्येत्यर्थः ॥

(समाधानभाष्यम्)

**इदं तर्हि प्रयोजनम्-उत्तरपदलोपो यथा विज्ञायेत, धातुकृतोऽर्थो धात्वर्थ इति ।**

**कः पुनर्धातुकृतोऽर्थः ?**

**साधनम् ।**

**किं प्रयोजनम् ?**

**साधनेऽयं भवन् लिङ्गसंख्याभ्यां योक्ष्यते । उद्गतानि उद्गतः, निगतानि निवत इति ॥**

(प्रदीपः) उत्तरपदलोप इति । गम्यमानार्थत्वादप्रयोग एव शब्दस्य लोपः ॥ धातुकृत इति । धातुशब्देनात्र धात्वर्थ उच्यते । क्रियाकृतोऽर्थ आश्रयिष्यत इत्यर्थः । क्रियया कारकं कर्मादिव्यपदेशयुक्तं क्रियते, क्रियापेक्षत्वात्कर्मादिव्यपदेशस्य । बहुव्रीह्याश्रयाचायमर्थो गृह्यते—धातुः—धात्वर्थः क्रिया, सा अर्थः प्रयोजनं यस्य साधनस्य तस्मिन् वर्तमानादुपसर्गात् स्वार्थे वतिप्रत्ययः । वृत्तिविषये चोपसर्गः क्रियाविशेषविशिष्टशक्त्याधारे च द्रव्ये वर्तत इति तस्यार्थे विधीयमानस्य वतेः सत्त्ववाचित्वादन्वर्थसंज्ञाविज्ञानादलिङ्गासंख्यस्य विधीयमानाऽव्ययसंज्ञा न प्रवर्तते । साधनशब्देनात्र शक्त्याधारो द्रव्यं विवक्षितम् ॥ उद्गतान्युद्गत इति । पुंस्त्वमत्र नपुंसकप्रसङ्गे च्छान्दसम् ॥

(उद्योतः) 'वाररुचं काव्यम्' इत्यादौ शब्देऽपि कार्यदर्शनादाह—न हीति ॥ एकग्रन्थ इति । एकवक्तृको ग्रन्थ इत्यर्थः ॥ लोपविधायकाभावादाह—गम्यमानेति । ननु धातुकृतोऽर्थः क्रियैवेति पूर्वस्मादविशेष इत्यत आह—धातुशब्देनेति ॥ ननु साधनकृता क्रिया, न तु क्रियाकृतं साधनमत आह—क्रिययेति ॥ धातुशब्दस्य धात्वर्थकृते लक्षणायां बीजाभावादाह—बहुव्रीह्याश्रयाचेति ॥ क्रियाविशेषशक्तीति । क्रियाविशेषनिरूपितशक्त्याधार इत्यर्थः । क्वचित्तु 'क्रियाविशेषे विशिष्टशक्त्याधारद्रव्ये च' इति पाठः । तत्र क्रियाविशेषे—उद्गमनरूपे, तन्निरूपितशक्त्याधारद्रव्ये चेत्यर्थः ॥ ननु साधनं शक्तिरिति पर्यायौ तत्कथं लिङ्गादियोगोऽत आह—साधनशब्देनेति ॥

(५६८२ एकदेशिवार्तिकम् ॥ १ ॥)

## ॥*॥ स्त्रीपुंसाभ्यां वत्युपसंख्यानम् ॥*॥

(भाष्यम्) **स्त्रीपुंसाभ्यां वत्युपसंख्यानं कर्तव्यम् । स्त्रीवत्, पुंवदिति ।**

**किं पुनः कारणं न सिध्यति ?**

**इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते तौ विशेषविहितौ सामान्यविहितं वतिं बाधेयाताम् ॥**

(प्रदीपः) वत्युपसंख्यानमिति । वतिप्रत्यये विधीयमान इत्यर्थः ॥ इमौ नञ्स्नञाविति । प्राग्भवनार्थेऽर्थास्तान् सर्वानपेक्ष्य प्रकृतिविशेषाद्विधीयमानौ प्रकृतिसामान्याद्विधीयमानस्य सर्वस्य प्रत्ययस्य सर्वेष्वर्थेषु नञ्स्नञौ बाधकौ, ततो वत्यर्थे वतिरुपसंख्यायते । तेन चोपसंख्यानेन विशिष्टार्थविषयेणार्थान्तरे सावकाशौ नञ्स्नञौ बाध्येते ॥

(उद्योतः) ननु 'वतेरुपसङ्ख्यानम्' इत्यनेन विहितो वतिः सर्वार्थे स्वार्थे एव वा स्यादत आह—वतिप्रत्यये इति ॥ ननु नञ्स्नञावप्यर्थमादाय सामान्यौ, वतिरपि प्रकृतिमादायेति कथं बाध्यबाधकभावोऽत आह—प्राग्भवनादिति ॥ तान्सर्वानिति । तत्तद्रूपेणेत्यर्थः ॥

(सिद्धान्तभाष्यम्)

**नैष दोषः ।**

**आचार्यप्रवृत्तिर्ज्ञापयति—न वत्यर्थे नञ्स्नञौ भवत इति, यदयं 'स्त्रियाः पुंवत्' इति निर्देशं करोति ॥**

**एवमपि 'स्त्रीवत्' इति न सिध्यति ।**

**योगापेक्षं ज्ञापकम् ॥**

(प्रदीपः) योगापेक्षमिति । 'स्त्रीपुंसाभ्याम्' इति योगो वत्यर्थे न प्रवर्तते इत्यस्यार्थस्य 'पुंवत्' इति ज्ञापकमित्यर्थः ॥

(८८१ विधिसूत्रम् ॥ ५ । १ । २ आ. ५५)

# २००१ तस्य भावस्त्वतलौ ॥ ५ । १ । ११९ ॥

(त्वतल्प्रत्ययाधिकरणम्)

(५६८३ एकदेशिपूर्वपक्षवार्तिकम् ॥ १ ॥)

## ॥ * ॥ स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम् ॥ * ॥

(भाष्यम्) **स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं कर्तव्यम् । स्त्रीभावः-स्त्रीत्वम्, स्त्रीता । पुंभावः-पुंस्त्वम्, पुंस्तेति ।**

**किं पुनः कारणं न सिध्यति ?**

**इमौ नञ्स्नञौ प्राग्भवनादित्युच्येते, तौ विशेषविहितौ सामान्यविहितौ त्वतलौ बाधेयाताम् ॥**

(५६८४ एकदेशिपूर्वपक्षवार्तिकम् ॥ २ ॥)

## ॥ * ॥ वावचनं च ॥ * ॥

(भाष्यम्) **वावचनं च कर्तव्यम् ।**

**किं प्रयोजनम् ?**

**नञ्स्नञावपि यथा स्याताम् । स्त्रीभावः-स्त्रैणम्, पुंभावः-पौंस्नमिति ॥**

(प्रदीपः) **वावचनं चेति** । अन्यथाऽर्थान्तरे सावकाशयोर्नञ्स्नञोरुपसंख्यानविहिताभ्यां विशिष्टार्थविषयाभ्यां त्वतल्भ्यां बाधः स्यात् ॥

(उद्द्योतः) ननूपसङ्ख्यानसूत्राभ्यामुभयोः सिद्धौ वावचनं व्यर्थमत आह—**अन्यथेति** ॥

(५६८५ एकदेशिसमाधानवार्तिकम् ॥ २ ॥)

**॥ * ॥ अपवादसमावेशाद्वा सिद्धम् ॥ * ॥**

(भाष्यम्) **अपवादसमावेशाद्वा सिद्धमेतत् ।**

**तद्यथा-इमनिच्प्रभृतिभिरपवादैः समावेशो भवति, एवमाभ्यामपि भविष्यति ॥**

(प्रदीपः) **अपवादसमावेशाद्वेति** । वाशब्दः पूर्वोक्तवचनव्यावृत्त्यर्थः । वावचनं न कर्तव्यम्, अपवादसमावेशात्सिद्धत्वादित्यर्थः । यथा प्रकृतिविशेषाद्विधीयमानैरिमनिजादिभिस्त्वतलौ समाविशतः, एवं नञ्स्नञ्भ्यामित्यर्थः ॥

(उद्द्योतः) ननु युक्तिवचनयोः समत्वाभावाद्विकल्पार्थो वाशब्दोऽनुपपन्नोऽत आह—**वाशब्द इति** । निपातानामनेकार्थत्वात्त्वर्थो वाशब्द इति भावः । **पूर्वोक्तवचनं**—'स्त्रीपुंसाभ्यां त्वतलोः—' इत्येतत् ॥

(वार्तिकोक्तार्थसाधकसिद्धान्तभाष्यम्)

**नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराः पठन्ति-इमनिच्प्रभृतिभिरपवादैः समावेशो भवतीति ।**

**किं तर्हि ?**

**'आ च त्वात्' इत्यस्माद्यत्नादिमनिच्प्रभृतिभिरपवादैः समावेशो भवति, न चैतावत्राभ्यन्तरौ ।**

**एतावप्यत्राभ्यन्तरौ ।**

**कथम् ?**

**अपवादसदेशा अपवादा भवन्तीति ।**

**एतच्चैव न जानीमोऽपवादसदेशा अपवादा भवन्तीति ।**

**अपि च कुत एतद्-एतावप्यत्राभ्यन्तराविति, न पुनः पूर्वौ वा स्यातां परौ वा ।**

**एवं तर्हि वक्ष्यति-'आ च त्वात्' इत्यत्र चकारकरणस्य प्रयोजनं नञ्स्नञ्भ्यामपि समावेशो भवतीति ॥**

(प्रदीपः) **नैवेश्वर इति** । ईश्वरभयाद्विरुद्धमप्यनुष्ठीयते[1] ॥ **नापीति** । तेषां[2] हि वचनमदृष्टेऽर्थे प्रमाणम् । एतेन दृष्टादृष्टार्थाभाव उक्तः ॥ **यत्नादिति** । नञ्स्नञोश्चासौ[3] यत्नो न व्याप्रियते, 'आ च त्वात्' इत्यस्मात्सूत्रादूर्ध्वमा त्वसंशब्दनात् नञ्स्नञोरसंनिधानात् ॥ **एतावप्यत्रेति** । प्राग्भवनात्[4] प्रतिसूत्रमुपस्थानात् त्वतलापवादैरिमनिजादिभिः समानदेशौ नञ्स्नञावित्यर्थः ॥ **एतच्चैव न जानीम इति** । विध्यधिकार[5]परिभाषारूपसंभवादन्यतमरूपनिश्चयाभावात् । तत्राधिकारपक्षे कार्यकालपरिभाषापक्षे[6] च प्रतिसूत्रं प्रत्यर्थं चोपस्थानात् स्यादनयोरभ्यन्तरत्वम्[7] । यदा तु प्राग्भवनाद्येऽर्थास्तानपेक्ष्य नञ्स्नञौ विधीयेते यथोद्देशं वा परिभाषाऽऽश्रीयते तदा नास्त्यनयोरभ्यन्तरत्वम्[8] । तथा च 'ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम्' इति पूर्वविप्रतिषेधो विधियथोद्देशपरिभाषापक्षयोरेव संभवति, न तु प्रतिसूत्रमुपस्थाने ॥ **न पुनरिति** । कार्यकालपरिभाषापक्षेऽपि प्राग्भवनाद्येऽर्थास्तत्र नञ्स्नञ्भ्यामुपस्थातव्यम् । तत्र यदि तावद्भाव[9] इत्यर्थनिर्ज्ञानमात्र एव नञ्स्नञावुपतिष्ठेते-'तस्य भावस्त्वतलौ' 'स्त्रीपुंसाभ्यां भावे नञ्स्नञौ' इति, तदाऽस्मिन् प्रदेशे संनिधानात् 'आ च त्वात्' इत्येतस्मात् सूत्रात्पूर्वौ नञ्स्नञौ भवतः, नाभ्यन्तरौ । अथ[10] तूत्सर्गापवादविधानोपयोगविज्ञानानन्तरं नञ्स्नञोरुपस्थानं तदा 'ब्राह्मणस्त्वः'

---

१ विरुद्धमपीति । स्वेच्छाविरुद्धमपीत्यर्थः ॥

२ तेषामपीति । धर्मशास्त्रकाराणां वचनमदृष्टार्थे प्रमाणमिति यदि अपवादसमावेशविषयकमीश्वरस्य धर्मशास्त्रकाराणां वा वचनं स्यात्तदा भयाद्वाऽदृष्टविशेषेच्छया वा अपवादसमावेशं करिष्यन्ति । तथा न वचनमिति यत्नादेव तत्साध्यमित्यर्थः ॥

३ न्वासौ यत्न इति । 'पृथ्वादिभ्य इमनिज्वा' इत्यादिसूत्रविहितेमनिजादिभिरनयोस्त्वतलोः समावेशो भवतीति 'आ च त्वात्' इत्यनेन यत्नेन प्रतीयते । यदि 'स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम्' 'वावचनं च' इत्येते वार्तिके न स्यातान्तदा 'आ च त्वात्' इत्यनेन यत्नेन नञ्स्नञ्भ्यामपि अनयोः समावेशो न स्यात् । तत्र हेतुमाह—'आ च त्वात्' इत्यस्मात्सूत्रादूर्ध्वमित्यादि । नञ्स्नञोरसन्निधानात्ताभ्यां सह नानेन यत्नेन समावेश इत्यर्थः ॥

४ नञ्स्नञोः समानदेशत्वमुपपादयति—प्राग्भवनादित्यादिना । यदि स्त्रीपुंसाभ्यां नञ्स्नञावित्ययं विधिः स्यात्तदा पृथ्वादिभ्य इमनिज्वेत्यादिसूत्रविहितैः इमनिजादिभिः सहास्य समानदेशत्वं न स्यात्, द्वयोरप्युद्देश्यतावच्छेदकभेदात् । स्त्रीपुंसाभ्यामित्यस्य विधित्वेऽपि तद्घटकनञ्स्नञोर्धान्यानां भवन इत्यतः प्रागधिकारात्समानदेशत्वमिति न दोषः ॥

५ 'न जानीमः' इति भाष्योक्तौ हेतुमाह—विध्यधिकारेति ॥

६ कार्यकालपरिभाषापक्षे चेति । स्त्रीपुंसाभ्यामित्यस्य परिभाषात्वपक्षे परिभाषाविषयककार्यकालपक्षसमाश्रयणे चेत्यर्थः ॥

७ अभ्यन्तरत्वमिति । अधिकारपक्षे प्रतिसूत्रमुपस्थानेन 'आ च त्वात्' इत्यतः परमप्यस्योपस्थानेनास्य तदभ्यन्तरत्वम् । परिभाषापक्षेऽपि यदि कार्यकालपक्षाश्रयणन्तदा तत्पक्षेऽस्याः परिभाषाया विधिदेशे उपस्थानेन तदभ्यन्तरत्वमिति भावः ॥

८ नास्त्यनयोरभ्यन्तरत्वमिति । यथोद्देशपक्षे परिभाषादेशे एव तस्याः सफलवाक्यार्थबोधेन तद्देशस्थत्वमेवेति नाभ्यन्तरत्वमिति भावः ॥

९ यदि तावद्भाव इति । अर्थोपस्थापकपक्षे यत्र भावरूपार्थस्य ज्ञानं तत्रेयं परिभाषोपतिष्ठत इति 'तस्य भावस्त्वतलौ' इति सूत्रे एवास्या उपस्थानमिति 'आ च त्वात्' इत्यतः प्रागेवोपस्थितिः स्यात् । इति तौ नाभ्यन्तराविति भावः ॥

१० ननु परिभाषापक्षेऽपि नास्याः शास्त्रत्वसम्पादकत्वमिति सूत्रार्थकरणवेलायां नास्या उपस्थानम् । अपि तु बाध्यबाधकभावज्ञानवेलायामस्या उपस्थितिरिति तस्य भावस्त्वतलावित्यादि ब्राह्मणस्त्व इत्येतत्पर्यन्तं यदा वाक्यार्थबोधस्तदा स्यादिति ब्राह्मणस्त्व इत्यस्मात्परमेवास्या उपस्थानमित्येतदाह—अथ तूत्सर्गापवादेत्यादि ॥

इत्येतस्मात्परौ नञ्स्नञौ भवतः, तथापि नाभ्यन्तरौ। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इत्यत्र तु प्रकृतिविशेषसंबद्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण तस्यासंबन्धात्कर्मणि नञ्स्नञोरनुपस्थानादभ्यन्तरत्वं नाशङ्कनीयम् ॥ **एवं तर्हीति । चशब्देन** यत्नेन समावेशः सिध्यति । एतच्च तत्रैव व्याख्यास्यते ॥

**( उद्द्योतः ) ईश्वरो–राजा** । 'ब्रह्मणस्त्वः' इत्येतत्पर्यन्तं त्वतलोरधिकार इति 'आच त्वात्' इत्यस्याऽर्थः ॥

नन्वस्य विधित्वादिमनिजादिसमानदेशत्वमसिद्धमत आह—**प्राग्भवनादिति** । अधिकारत्वादिति भावः ॥ ननु नदीस्रोतोन्यायेनाधिकारे निश्चिते 'एतच्चैव न जानीमः' इत्ययुक्तमत आह—**विध्यधिकारेति** । एवञ्च विधित्वस्यापि सम्भवान्न जानीम इत्युक्तिः–न निश्चिनुम इत्यर्थिकेति भावः । **प्रतिसूत्रं प्रत्यर्थञ्चेति** । भवनात्प्राक्तनोऽर्थो यत्र यत्र सन्निहितस्तत्र तत्र परिभाषापक्षेऽप्युपस्थानादित्यर्थः ॥ **यथोद्देशं वेति** । 'स्त्रीपुंसाभ्यां नञ्स्नञौ' इत्यनेन तौ विधाय 'प्राग्भवनात्' इत्यंशो नञ्स्नञनुवृत्त्याऽर्थनियमार्थतया परिभाषात्वेन व्याख्येय इति भावः ॥ **ष्यादय इति** । 'दित्यदित्यादि–' आदिसूत्रविहिता ष्यादयः । प्रतिसूत्रमनुवृत्तौ हि उपस्थितिसामर्थ्यादेव बाधसम्भव इति तस्या[1]ऽऽनर्थक्यमिति भावः ॥ **यथोद्देशेति** । इदं चिन्त्यमिति 'इको गुणवृद्धी' इत्यत्र निरूपितम् । विधित्वमेव तूचितं, सर्वतस्तस्य लघुत्वात् ॥ अभ्युपेत्यापि परिभाषात्वं भाष्ये दूषणान्तरमाह—**अपि चेति** ॥ तद्व्याचष्टे—**कार्यकालपरिभाषापक्षेऽपीति** । 'अर्थनिर्ज्ञानमात्र एव' इति पा[2]ठे निर्ज्ञानमपि ज्ञानमेव, सामान्यतो ज्ञानं वा । अत एवाग्रे 'विज्ञान' इत्युक्तं,–विशिष्टज्ञानेत्यर्थकं । तत्तत्प्रकृत्याद्यपबाधाकाङ्क्षानिवृत्त्यनन्तरं हि अन्यस्मरणावकाशः । **उपयोगो–लक्ष्यम्** । ननु कर्मणि तयोरुपस्थित्याऽभ्यन्तरत्वमत आह—**गुणवचनेति** ॥

( ५६८६ अतिव्याप्त्याशङ्कवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गः ॥ * ॥

**( भाष्यम् ) तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गो भवति । इहापि प्राप्नोति–अभिप्रायो देवदत्तस्य मोदकेषु भोजने । ये नो भावास्ते नो भावाः पुत्राः पुत्रैश्चेष्टन्त इति ॥**

**( प्रदीपः ) अभिप्रायादिष्विति** । अनाश्रितप्रवृत्तिनिमित्तविशेषो भावशब्दवाच्यो यावान् कश्चिदर्थस्तस्य सर्वस्य विशेषानुपादानाद् ग्रहणस्य न्याय्यत्वादतिप्रसङ्गः ॥ **ये नो भावा इति** । अस्माकं येऽभिप्रायास्ते नित्यमेवास्माकं भवन्तीत्यर्थः । भवन्तीति भावाः । 'भवतेश्चेति वक्तव्यम्' इति कर्तरि णः ॥

**( उद्द्योतः )** भा[3]वशब्दोऽस्त्यभिप्रायवाची, यथा 'अयम्भावः' इति । पदार्थमात्रेऽपि यथा–'विचित्रा भावशक्तयः' इति । अस्ति च शृङ्गारादिस्थायिसञ्चारिषु–'स्थायीभावः',–'सञ्चारीभावः' इति । कर्तृवर्जितकारके च–'यस्य च भावेन–' इत्यादौ धात्वर्थवचनः, प्रवृत्तिनिमित्तवाची चेत्यभिप्रायेणाह–भाष्ये—**अभिप्रायादिष्विति** ॥ तद्व्याचष्टे—**अनाश्रितेति** । 'ये नो भावाः' इति भाष्येण 'भाव'-शब्दस्याभिप्रायवाचित्वे लौकिकः प्रयोगः प्रमाणत्वेन दर्शितः । अभिप्रायभवनमेव दर्शयति–भाष्ये—**पुत्राः पुत्रैश्चेष्टन्त इति** ॥

( ५६८७ अतिव्याप्तिनिवारकवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सिद्धं तु यस्य [4] गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम् ?**

**यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने–तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम्, न चाभिप्रायादीनां भावाद् द्रव्ये देवदत्तशब्दो वर्तते ॥**

**(प्रदीपः) यस्य गुणस्येति** । गु[4]णशब्देन यावान् कश्चित्पराश्रयो भेदको जात्यादिरर्थः स सर्व इह गृह्यते । 'यस्य[5] भावात्' इत्येतावत्युच्यमाने पुत्रस्य भावात् पितरि पितृशब्दप्रवर्तनात्पितृत्वमिति पुत्रे भावप्रत्ययः स्यात्, पुत्रत्वमिति च पितरि–इति गुणग्रहणम् । **भावात्**—विद्यमानत्वादित्यर्थः । **द्रव्यशब्देन** विशेष्यभूतस्सत्वभावापन्नोऽर्थ उच्यते । तस्मिन् द्रव्ये **शब्दनिवेशः**–शब्दस्य प्रवृत्तिर्यस्य गु[6]णस्य शब्देन वाच्यस्यावाच्यस्य वा भावात् स त्वतलाद्यभिधेय इत्यर्थः । तत्र ये रूपादयः शब्दा गुणमात्रवृत्तयस्तेभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः–रूपत्वमिति । ये तु शुक्लादयो गुणगुणिवृत्तयो गु[7]णगुणिनोरभेदोपचारान्मतुब्लोपाद्वा तेभ्यो गुण[8]वृत्तिभ्यो गुणसमवायिनि सामान्ये भावप्रत्ययः । गुणिवृत्तिभ्यस्तु गुणे । अणुमहद्दीर्घादयो नित्यं परिमाणिनि वर्तन्ते न तु परिमाणमात्रे, तेन तेभ्यः परिमाणे गुणे भावप्रत्ययः । 'षत्वं[9]' 'णत्वम्' इति भिन्नवर्णव्यक्तिसमवेते

१ तस्यानर्थक्यमिति । प्रतिसूत्रमुपस्थाने हि अनुवृत्तिबलादेव अपवादबाधकत्वमिति ष्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धमिति वार्तिकस्यानर्थक्यमिति भावः ॥

२ निर्ज्ञानपदेन निष्कृष्टज्ञानस्य बोधो मा भूदित्यत आह—इति पाठे निर्ज्ञानमपीति ॥

३ भावशब्दस्यानेकार्थत्वमुपदर्शयति—भावशब्दोऽस्तीति ॥

४ 'सिद्धं तु यस्य गुणस्य' इति वार्तिकस्थगुणशब्देन न लोकप्रसिद्धगुणानां ग्रहणमित्येतदाह—गुणशब्देन यावानित्यादि ॥

५ 'यस्य गुणस्य भावात्' इति वार्तिकस्थगुणशब्दप्रयोजनमाह—यस्य भावादित्येतावतीति ॥

६ शब्देन वाच्यस्यावाच्यस्य वा यस्य गुणस्य भावात्–सत्वात्, शब्दस्य प्रवृत्तिः सः–गुणस्त्वतलाद्यभिधेय इत्यन्वयः ॥

७ शुक्लादीनां गुणगुणिवृत्तित्वे हेतुमाह—गुणगुणिनोरभेदोपचारादिति ॥

८ गुणवृत्तिभ्य इति । गुणवृत्तिभ्यो गुणसमवायिनि सामान्ये एव भावप्रत्यय इति भावः । गुणिवृत्तिभ्यस्तु गुणे एव भावप्रत्यय इति भावः ॥

९ षत्वमिति । इतरेभ्यो भिन्ना या षकारवर्णव्यक्तिस्तत्समवेतसामान्ये–इतरवर्णसमवेतसामान्यतो विशेषे भावप्रत्यय इत्यर्थः ॥

सामान्यविशेषे प्रत्ययः । गवादयो यदा जातिमात्रवाचिनः, तदा तेभ्यः शब्दस्वरूपे प्रत्ययः । तथा हि—अर्थे जातौ शब्दस्वरूपमध्यस्यते–यो गोशब्दः स एवार्थ इति, ततः शब्दस्वरूपमेव तत्र प्रवृत्तिनिमित्तं नान्यत् । द्रव्यवाचिभ्यस्तु गवादिभ्यो जातौ प्रत्ययः । समासकृत्तद्धितास्तु यद्यपि केवलं संबन्धं नाभिदधति तथापि संबन्धिनि वर्तमानाः संबन्धं प्रवृत्तिनिमित्तमपेक्षन्त इति तेभ्यः संबन्धे भावप्रत्ययः । तथा च 'राजपुरुषत्वम्' इति स्वस्वामिभावः प्रतीयते । 'पाचकत्वम्' इति क्रियाकारकसंबन्धः। 'औपगवत्वम्' इति अपत्यापत्यवत्संबन्धः ॥

केचिदौपगवत्वमित्यपत्यप्रत्ययान्ताद्भावप्रत्ययस्य जातिमभिधेयामिच्छन्ति तन्मतेऽर्थान्तरवृत्तिस्तद्धित उदाहार्यः । उक्तं च—'समासकृत्तद्धितेषु संबन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसंबन्धेभ्यः' इति । **रूढिशब्दाः**—गौरखरसप्तपर्णलोहितशाल्यादयो जातिविशेषावच्छिन्नद्रव्यवाचिन इति तेभ्यो जातावेव भावप्रत्ययः। एवं कुम्भकारत्वं हस्तित्वमिति। **अभिन्नरूपाः**—शुक्लादयो मतुब्लुकि विज्ञायमाने यद्यपि तद्धितान्तास्तथापि तेभ्यो भावप्रत्ययो गुण एव भवति न तु संबन्धे। गुणगुणिनोर्जातितद्वतोरिव सोऽयमित्यभिसंबन्धेन लोकनिरूढेन भेदसंबन्धस्य न्यग्भावात् 'गुणवचनेभ्यो लुक्'इति लुग्विधानद्वारेणाभेदेनैव गुणिनोऽभिधानं न तु भेदं कृत्वा मत्वर्थोत्पत्तिरित्याख्यायते । **अव्यभिचरितसंबन्धात्**—सतो भावः सत्तेति जातावेव भावप्रत्ययः । न हि सद्वस्तु सत्तासंबन्धं व्यभिचरतीति सत्तासंबन्धानपेक्षणान्न संबन्धे प्रत्ययः । राजपुरुषयोस्तु संबन्धस्य कादाचित्कत्वात्तदपेक्षो राजपुरुषशब्दः स्वार्थमभिधत्त इति ततः संबन्धे प्रत्ययो युक्तः । तस्मात् सत्सु सर्वेषु पदार्थेषु नित्यसमवायिनी शब्दप्रवृत्तिहेतुः सत्तैव भावप्रत्ययवाच्या न तु सत्सत्तयोः संबन्धः समवायाख्यः । 'धवखदिरत्वम्' इति जातिद्वन्द्वाज्जातिसमुदाये । 'कुत्वम्' इत्यादौ संज्ञास्वरूपे संज्ञिष्वध्यस्ते प्रत्ययः । अन्ये तु संज्ञासंज्ञिसंबन्ध इत्याहुः ॥

**( उद्योतः )** नेनु[1] घटत्वमित्यादौ त्वानापत्तिः, नायं गुणप्रवृत्तिनिमित्तकोऽत आह—**गुणशब्देनेति** । न तु नैयायिकादिसम्मत एवेति भावः ॥ **विद्यमानत्वादिति** । बुद्धावित्यादिः[2] ॥ तात्त्विकद्रव्यग्रहणे 'रूपत्वम्' इति भावप्रत्ययानुपपत्तिरत आह—**द्रव्यशब्देनेति** ॥ विशेष्यभूतत्वस्य क्रियायामपि सत्त्वात्तद्व्याचष्टे—**सत्त्वभावापन्न इति** । लिङ्ग[3]सङ्ख्यादिविशेष्यभूत इत्यर्थः ॥ **प्रवृत्तिः** । 'तद्बोधनार्थम्' इति शेषः ॥ **वाच्यस्येति** । इदञ्च 'विशिष्टे श[4]क्तिः' इति मते, 'धर्मे ए[5]व शक्तिः' इति मते च ॥ व्यक्तिमात्रं पदार्थ इति मत आह—**अवाच्यस्य वेति** ॥ तत्र तत्र शब्दे प्रवृत्तिनिमित्तानि स्पष्टप्रतिपत्तये दर्शयति—**तत्र ये इति** । **सामान्ये**—रूपत्वादौ ॥ गुणिवृत्तित्वमुपपादयति—**अभेदेति** । **सामान्ये**—गुणगतशुक्लत्वादिजातौ ॥ **नित्यं परिमाणिनीति** । परिमाणं चतुर्धा–अणु, महत् ह्रस्वं, दीर्घं च इत्यादावण्वादयः शब्दा अण्वादिवृत्तौ लाक्षणिका बोध्याः ॥ **भिन्नवर्णेति** । उच्चारणभेदेन भेदं वर्णानां मन्यते, औपाधिकभेदेन वा ॥ **जातिमात्रेति** । 'जात्याख्यायाम्' इति सूत्रबलात्तद्वाच्चिता बोध्या ॥ **अध्यस्यत इति** । अनादिलोकपरम्परयेत्यर्थः ॥ अध्यासमेव दर्शयति—**यो गोशब्दः स एवार्थ इति** । प्रवृत्तिनिमित्ततदाश्रययोश्च सर्वत्राध्यासिकं तादात्म्यमेव सम्बन्ध इति भावः ॥ **केवलमिति** । जातिगुणप्रवृत्तिनिमित्तकशब्देषु यथा केवले जातिगुणौ वाच्ये, आश्रयस्य त्वाक्षेपादिना लाभस्तथा नाऽत्र, सम्बन्ध्यनालिङ्गितसम्बन्धभानाभावादिति भावः ॥ **सम्बन्धं प्रवृत्तिनिमित्तमिति** । राजसम्बन्धज्ञानादेव पुरुषे राजपुरुषपदप्रवृत्तिरिति तस्य प्रवृत्तिनिमित्तत्वम् । एवं नामवा[6]च्यक्रियया भेदस्यैव प्रतीतेस्तत्र सम्बन्धज्ञानादेव शब्दस्य प्रवृत्तिः । जातिगुणयोस्तु स्वरूपज्ञानादेवेति भावः ॥ **क्रियाकारकसम्बन्धः**—कर्तृत्वादिरूपः । 'पाचकपदं पाकसम्बद्धकर्तरि शक्तम्' इति—शक्तिग्रहात्कृत्स्वेकार्थीभावाङ्गीकारात् । न चैषां क्रियाप्रवृत्तिनिमित्तकत्वव्यवहारानापत्तिः; क्रियासम्बन्धप्रवृत्तिनिमित्तक इत्येव तदर्थात् । क्रियापदञ्च सम्बन्धप्रवृत्तिनिमित्तकशब्दमात्रोपलक्षणं, तेन 'चतुष्टयी शब्दानां प्रवृत्तिः' इत्यस्य न हानिरिति बोध्यम् ॥

**केचिदिति** । 'गोत्रञ्च चरणैः सह' इत्यनेन तस्यापि जातित्वबोधनादिति तद्भावः । तथा च 'जात्याख्यायाम्–' इति सूत्रे औपगवादयोऽप्युदाहृता भाष्यकैयटयोः ॥ **जातावेवेति** । सम्बन्धस्याभावात् । जातेस्तु[7] व्यक्त्यभेदेनैव भानमिति न तत्सम्बन्धस्यापि प्रतीतिरिति भावः ॥ **जातितद्वतोरिव**—इति दृष्टान्तः ॥ **भेदसम्बन्धस्य**—तन्मूलकसम्बन्धस्येत्यर्थः ॥ **न्यग्भावादिति** । नीलोत्पलमित्यादावपि तन्न्यग्भावेन तदुत्तर'त्व'प्रत्ययेन नीलरूपमुत्पलत्वं चोच्यत इति बोध्यम् ॥ ननु 'पटस्य शुक्लः' इतिवद्भेदविवक्षायां मत्वर्थीयोऽपि तेभ्यः स्यादिति वार्त्तिकमते सम्बन्धाभिधानमेव स्यादत आह—**लुग्विधानद्वारेणेति** ॥ **न हीति** । 'सत्'पदं हि सत्ताऽभेदेनैव बोधकं, न तु सत्तासम्बन्धेन । शतृप्रत्ययस्तु कर्तृत्वारोपेणोपपाद्य इति भावः ॥ **तस्मात्सर्वेष्विति** । सत्पदार्थेष्वित्यर्थः । क्वचित्तु 'सत्सु सर्वेषु'–इत्येव पाठः ॥ **जातिसमुदाये इति** । तस्यानुद्भूतावयवभेदत्वविवक्षयैकवचनम्, उद्भूतावयवभेदत्वे तु द्विवचनादिकमपि बोध्यम् ॥ **संज्ञिष्वध्यस्ते इति** । शब्दार्थयोरभेदाध्यवसायाज्जातिवद्विशेषणतया भासमाने इत्यपि बोध्यम् । तदभेदज्ञानादेव हि तत्र 'कु'आदिशब्द-

---

१ **ननु घटत्वमिति** । अस्य गुणस्य भावाच्छब्दनिवेशो द्रव्य इत्युच्यमाने घटत्वमित्यादौ त्वप्रत्ययानापत्तिः, अस्य घटस्य गुणप्रवृत्तिनिमित्तकत्वाभावादित्यर्थः ॥

२ **ननु पुत्रस्य भावात्**–विद्यमानत्वात् द्रव्ये पितृशब्दस्य निवेशस्तदभिधाने त्वप्रत्यय इत्युच्यमाने मृतस्य पुत्रस्य विद्यमानत्वाभावात्तदभिधायकस्त्वप्रत्ययो न स्यादत आह—**बुद्धावित्यादिरिति** ॥

३ ननु शाब्दबोधे क्रियाया एव विशेष्यत्वमाश्रीयते वैय्याकरणैरिति सत्वभूतोऽर्थः कथं विशेष्यः स्यादत आह—**लिङ्गसंख्यादीति** ॥

४ **विशिष्टे शक्तिरिति** । जातिविशिष्टव्यक्तौ शक्तिरिति मत इत्यर्थः ॥

५ **धर्मे एवेति** । केवलजातावेव शक्तिरिति मते इत्यर्थः ॥

६ **'नामक्रियया'** इति ख. ग. घ. पाठः ॥

७ ननु शब्दस्य जातिविशिष्टव्यक्तिबोधकत्वे जातिव्यक्त्योः सम्बन्धस्तच्छब्दवाच्यो वर्तत एवेति कथं सम्बन्धाभावः ? तदुपपादयति—**जातेस्त्वित्यादिना** ॥

प्रवृत्तिरिति तस्य प्रवृत्तिनिमित्ततेति भावः ॥ **इत्याहुरिति** । शब्दार्थयोर्भेदवादिमत इदम् । वाचकत्वमेव सम्बन्धस्तज्ज्ञानाद्वाचकत्वग्रहासम्भव **इत्यत्रारुचिः** । 'नानात्वं' 'सहत्वं' 'यौगपद्यम्' इत्यादौ 'नाना'शब्दोऽसहभूते, 'सह'शब्दः सहभूते वृत्तौ वर्तते, अतोऽसहभावादौ प्रत्यय इति बोध्यम् । एवञ्च यज्ज्ञानार्थे शब्दस्य प्रवृत्तिः स प्रत्ययार्थः । प्रकृतिरर्थपरैव । प्रवृत्तिनिमित्तत्वेन च तच्छक्यम् । बोधस्तु समभिव्याहाराद्विशिष्यैव, तथैवानुभवात्, वार्तिकस्वारस्याच्च । शक्ततावच्छेदकञ्च त्वतल्त्वादीत्यादि बोध्यम् ॥

( द्रव्यगुणनिर्वचनभाष्यम् )

**किं पुनर्द्रव्यं? के पुनर्गुणाः?**

**शब्दस्पर्शरूपरसगन्धा गुणाः, ततोऽन्यद् द्रव्यम् ॥**

( प्रदीपः ) **किं पुनरिति** । प्रकृतिप्रत्ययार्थयोर्भेदप्रतिपत्त्यर्थः **प्रश्नः** ॥ **शब्दस्पर्शेति** । एतच्चोपलक्षणम्, पराश्रयस्य सर्वस्य भेदकस्य जात्यादेरिह गुणत्वेनाभिमतत्वात्, विशेष्यस्य सर्वनाम्ना प्रत्यवमृश्यस्य द्रव्यत्वेनाभिमतत्वात् । तत एतदुक्तं भवति—यथा शब्दादय आश्रिताः संसर्गिणो गुणा एवमन्योऽपि जात्यादिधर्मो गुण इति ॥

( उद्योतः ) **भेदप्रतिपत्त्यर्थ इति** । 'स्त्रियाम्' इति सूत्रभाष्योक्ते 'गुणसमूहो द्रव्यम्' इति मते समूहसमूहिनोर्भेदाभावादिति भावः ॥ भाष्ये—**ततोऽन्यदिति** । प्रत्येकातिरिक्तसमूहरूपमित्यर्थः ॥ **एतदुक्तमिति** । 'शब्द' इत्यादिभाष्यं संसर्गिभेदकपरमिति तात्पर्यम् ॥

( द्रव्यनिर्वचनोपक्रमभाष्यम् )

**किं पुनरन्यच्छब्दादिभ्यो द्रव्यम्, आहोस्विदनन्यत्?**

**गुणस्यायं भावाद् द्रव्ये शब्दनिवेशं कुर्वन् ख्यापयति-अन्यच्छब्दादिभ्यो द्रव्यमिति ।**

**अनन्यच्छब्दादिभ्यो द्रव्यम्, न ह्यन्यदुपलभ्यते । पशोः खल्वपि विशसितस्य पर्णशते न्यस्तस्य नान्यच्छब्दादिभ्य उपलभ्यते ॥**

( प्रदीपः ) **किं पुनरन्यदिति**—भेदावगतिहेतुप्रमाण**प्रश्नः** ॥ **अयमिति** । तात्त्विकभेदाभेदचिन्तापरिहारेण लोकप्रसिद्धं भेदमाश्रित्य प्रत्ययार्थ आचार्येण व्यवस्थापित इत्यर्थः ॥ **न ह्यन्यदिति** । असत्यपि भेदे लोके भेदव्यवहारदर्शनाच्चास्ति ततो भेदनिश्चयः । न च रूपादिव्यतिरेकेण द्रव्यं प्रत्यक्षेणोपलभ्यते, रूपादिसंनिवेशमात्रे घटादिव्यवहारात् ॥ **पशोः खल्वपीति** । उपलब्धिलक्षणप्राप्तस्य द्रव्यस्यानुपलम्भादसत्त्वनिश्चयो युक्त इति भावः ॥ **पर्णशते न्यस्तस्येति** । बहुधा विभक्तस्येत्यर्थः । एतेन भागानां परस्पराव्यवधानेन व्यवधानस्यानुपलब्धिकारणस्याभावः प्रतिपादितः ॥ नन्ववयवविभागात्संयोगनिमित्तावयविद्रव्यस्य विनाशादनुपलम्भः स्यात् । एवं तर्ह्युपलब्धिलक्षणप्राप्तस्य सर्वदाऽनुपलम्भादसत्त्वनिश्चयोऽस्तु ॥

( उद्योतः ) 'ततोऽन्यद्द्रव्यम्' इत्युक्ते पुनरन्यत्वानन्यत्वविषये प्रश्नोऽयुक्तोऽत आह—**हेतुप्रमाणेति** । तेभ्योऽन्यद्द्रव्यमिति प्रमाणसिद्धं वा, उत—अनन्यदिति प्रमाणसिद्धं वा ? इति प्रश्नभाष्यार्थ इति भावः ॥ भाष्ये—**गुणस्यायं भावादिति** । **अयम्**—वार्तिककारः । **कुर्वन्**—वदन् ।

ननु तद्वाक्यावगतेऽर्थे प्रमाणं पृच्छन्तं प्रति तद्वाक्यस्यैव प्रमाणत्वेनोपन्यासोऽयुक्तोऽत आह—**तात्त्विकेति** । एवञ्च त्वदीयोऽयं प्रश्नो निर्विषय इति भावः ॥ **लोकप्रसिद्धमिति** । लोकव्यवहारार्थे शास्त्रे लोकप्रसिद्धपदार्थस्यैवाश्रयणं युक्तमिति भावः ॥ वास्तवभेदस्तु नास्त्येवेति तात्पर्यम् ॥ **असत्यपीति** । यथा मृद्घटयोर्वास्तवभेदाभावेऽपि लोके 'मृदो घटः' इति भेदव्यवहार इत्यर्थः । एवञ्च भ्रान्तलोकव्यवहारेण कथं शास्त्रार्थनिर्णय इति भावः ॥ **न च रूपादीति** । एवञ्चानुपलब्धिप्रमाणेनान्यत्वाभावनिश्चय इत्यर्थः ॥

अनुपलब्धिप्रमाणमेव द्रढयति भाष्ये—**पशोरिति** ॥ तद्व्याचष्टे—**उपलब्धीति** । एवञ्च विविक्ततया ग्रहणाभावादसत्त्वनिश्चय इत्यर्थः । उपलब्धिलक्षणं प्रमाणमेव सत्त्वनिश्चायकम्, उपलब्धिलक्षणात्प्रमाणात्प्राप्तस्य प्राप्तसत्त्वनिश्चययोग्यस्यानुपलम्भादसत्त्वनिश्चय इत्यर्थः ॥ **एतेनेति** । भागानां मेलने हि तत्कृतव्यवधानादनुपलब्धिः सम्भाव्यत इति भावः ॥ **एवं तर्हीति** । अतिरिक्तद्रव्यस्य तन्नाशस्य च कल्पनापेक्षयाऽनन्यत्वं लब्धमिति भावः ॥

( द्रव्यनिर्वचनभाष्यम् )

**अन्यच्छब्दादिभ्यो द्रव्यम्, तत्त्वनुमानगम्यम् । तद्यथा-ओषधिवनस्पतीनां वृद्धिह्रासौ, ज्योतिषां गतिरिति ।**

**कोऽसावनुमानः ?**

**इह समाने वर्ष्मणि परिणाहे च अन्यत्तुलाग्रं**

---

१ 'यज्ज्ञानादर्थे' इति ख. ग. घ. पाठः ॥

२ प्रकृतिप्रत्ययार्थयोरिति । यस्य गुणस्य भावाद्द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलाविति वार्तिकेन द्रव्यवाचकाच्छब्दाद्गुणे त्वतलौ विधीयेते । तयोः प्रकृतिप्रत्ययार्थयोर्द्रव्यगुणयोः को भेद इति प्रश्नः ॥

३ भाष्यकृता—शब्दस्पर्शरूपरसगन्धा गुणास्ततोऽन्यद्द्रव्यम्—इत्युक्त्वा किं पुनरन्यच्छब्दादिभ्यो द्रव्यमित्युक्तम् । नैतन्मन्दबुद्धीनां सामञ्जस्येन सङ्गच्छत इति तत् 'भेदावगतिहेतुप्रमाण प्रश्नः' इति ग्रन्थेन कैय्यटेन व्याख्यातम् । शब्दादिभ्यो द्रव्यस्य भेदे यो हेतुः स प्रामाणिको न वेति तदाशयः ॥

४ 'यस्य गुणस्य भावात्' इत्यादिवार्तिकवाक्यात् अवगतेऽर्थे प्रमाणजिज्ञासायां वार्तिकवाक्येनैव समाधानमयुक्तमिति भावः ॥

५ प्रश्न इति । एकदेशिना 'किं पुनरन्यत्' इत्यादिना कृतः ॥

६ वास्तवभेदस्त्विति । गुणसमुदायो द्रव्यमिति सिद्धान्ताद्द्रव्यगुणयोर्भेदः सिद्धान्ते नैवाश्रीयत इत्यर्थः ॥

७ ननु द्रव्यगुणयोर्वास्तवभेदाभावे लोके कथं भेद इत्येतत् दृष्टान्तेन विशदयति—यथा मृद्घटयोरिति ॥

८ एवञ्चेति । द्रव्यं गुणेभ्योऽन्यत्वेन नोपलभ्यत इत्यन्यत्वं नास्तीत्यर्थः ॥

९ अतिरिक्तद्रव्यस्येति । भागानां संयोगेऽतिरिक्तं द्रव्यमुत्पद्यते, संयोगस्य च नाशाद्द्रव्यनाश इति गुरुतरकल्पनाऽपेक्षयाऽनन्यत्वमेव वरमिति भावः ॥

**भवति लोहस्य, अन्यत्कार्पासानाम् । यत्कृतो विशेषस्तद् द्रव्यम् ॥**

**तथा कश्चित्स्पृशन्नेव छिनत्ति, कश्चिल्लम्बमानोऽपि न छिनत्ति, यत्कृतो विशेषस्तद् द्रव्यम् ॥**

**तथा कश्चिदेकेनैव प्रहारेण व्यपवर्गं करोति, कश्चिद् द्वाभ्यामपि न करोति, यत्कृतो विशेषस्तद् द्रव्यम् ॥**

( प्रदीपः ) **अनुमानगम्यमिति** । यद्यपि गुणव्यतिरिक्तद्रव्यवादिभिः प्रत्यक्षप्रमाणग्राह्यं द्रव्यमभ्युपगतं, रूपाद्यालम्बनप्रत्ययविलक्षणपदार्थालम्बनप्रत्ययोत्पादात्, तथापि प्रत्यक्षे विप्रतिपन्नं प्रति साक्षिस्थानीयानुमानोपन्यासः ॥ प्रत्यक्षापलापिनं प्रति प्रत्यक्षपूर्वकानुमानासंभवात् सामान्यतो दृष्टमनुमानमुपन्यस्यते—**ओषधिवनस्पतीनामिति** । भाष्यकारवचनात् 'जातिरप्राणिनाम्' इत्येकवद्भावो न भवति । कुड्यादीनामुपचयापचयपूर्वको देशविशेषसंबन्धो दृष्ट इति वनस्पत्यादीनामङ्कुराद्यवस्थासु दृष्टानां कालान्तरे देशविशेषसंबन्धदर्शनादुपचयापचयानुमानम् ॥ **ज्योतिषां गतिरिति** । गतिपूर्विकां देशान्तरप्राप्तिमश्वादीनामुपलभ्याऽऽदित्यादीनां देशान्तरप्राप्त्या गत्यनुमानम् ॥ **कोऽसावनुमान इति** । अनुमीयतेऽनेनेत्यनुमानशब्देन हेतुरुच्यते ॥ **समान इति** । **वर्ष्म**—उच्छ्रायः । **पारिमाणम्**—पारिमाण्डल्यम् । क्वचित्**परिणाह** इति पाठः । **परिणाहः**—पारिमाण्डल्यमेव ॥ **अन्यत्तुलाग्रमिति** । तुलाग्रस्यान्यथात्वं—नामोन्नामलक्षणं, गुरुत्वभेदात् । गुरुत्वस्य च समवायिकारणं द्रव्यमिति रूपादिव्यतिरिक्तद्रव्यसिद्धिः ॥ **विशेष इति** । तुलाग्रस्य नामोन्नामलक्षणो भेद इत्यर्थः ॥ **स्पृशन्नेवेति** । खड्गादिः ॥ **लम्बमानोऽपीति** । कार्पासादिः ॥ **व्यपवर्गमिति** । विभागम् ॥

( उद्द्योतः ) **विलक्षणेति** । 'रूपं' 'रसः' इत्यादितो विलक्षणरूपवद्रसवदित्यादिद्रव्यरूपपदार्थविषयप्रत्ययेत्यर्थः ॥ **विप्रतिपन्नमिति** । पुरुषप्रतीतेर्भ्रान्तत्वसम्भवादिति भावः ॥

**सामान्यतो दृष्टमिति** । '[1]द्रव्यं—गुणेभ्योऽन्यत्, विशेषवत्त्वात्, यद्यतो विशेषवत् तत्ततोऽन्यत्, यथा लोहकार्पासे परस्परस्मात्' । [2]यदि प्रत्येकं द्रव्यत्वं स्यात्, उच्छ्रायविस्तारयोः साम्यात्तयोरेकत्वापत्त्या तुलाग्रादिविशेषाऽनुपपत्तेः प्रत्येकातिरिक्तस्य तत्तद्गुणविशेषघटितगुणसमूहरूपस्य नानागुरुत्वादिभिरधिकगुरुत्वादिमत्त्वेन भाष्यप्रदर्शितविशेषसिद्धिरित्यतिरिक्तसमूहरूपद्रव्यसिद्धिरिति भाष्याभिप्रायः ॥ **भाष्यकारेति** । द्रव्य[3]प्राधान्यविवक्षयेत्याशयः । 'कुड्यादीनामुपचयापचयपूर्वकः' इति पाठः । 'ओषध्यादीनाम्' इत्यपपाठः, तेषामपि पक्षत्वेन भाष्ये उपन्यासात् । येऽश्वादिक्रियायाः प्रत्यक्षत्वं मन्यन्ते तन्मतेऽप्यनुमानविषयत्वम्, 'ज्योतिषां गतेः' इति तदुपन्यासः ॥ प्रमाणवाच्यनुमानशब्दस्य नपुंसकत्वात्पुंस्त्वानुपपत्तेराह—**अनुमीयतेऽनेनेति** । प्रकृते को हेतुरिति भाष्याक्षरार्थः ॥ **पारिमाण्डल्यं**—विस्तारः ॥ ननु तुलाग्रस्य भेदाभावादाह—**नामोन्नामेति** । नमनोन्नमनेत्यर्थः ॥ **गुरुत्वभेदादिति** । तद्भेदश्च समवायिकारणभेदाधीन इति द्रव्यमतिरिक्तं सिध्यति ॥

भाष्ये—**तद्द्रव्यमि**त्यस्य तदाश्रयो द्रव्यमिति भावः ।

**अत्र वदन्ति**—एवं हि रूपादिसमवायिकारणतयैव द्रव्यसिद्धावेतत्[4]पर्यन्तधावनवैफल्यापत्तिः । **किञ्च**[5] अतिरिक्तस्यैकगुरुत्वाश्रयस्याभावेऽपि दश[6]गुञ्जाभिरल्पगुञ्जाभ्योऽधिकाभ्यश्च नामोन्नामोऽनेकगुरुत्वैरेव दृष्टः, तद्वदत्रापि तैरेवं[7] द्रव्यानतिरिक्तैस्तदुपपत्तौ न तदतिरिक्तद्रव्यसिद्धाविदं मानम् । **किञ्चैवं**[8] पटादौ सूत्रादिभ्योऽधिकगुरुत्वाद्युपलम्भापत्तिः । तस्मात् **'यत्कृतो विशेषः'** इति भाष्यस्य कार्पासादधिकगुरुत्वसमूहकृतो विशेषः, तत्समूहो द्रव्यमित्यक्षरार्थः । एवञ्च तुल्यन्यायाद्रूपादिसमूह एव द्रव्यम् । प्रत्येकञ्च गुणत्वमिति द्रव्यगुणयोर्भेदसिद्धौ प्रकृतिप्रत्ययार्थयोर्भेदोपपत्तिरिति भावः । **किञ्च** तेषामेव प्रत्येकं द्रव्यत्वेऽनेकद्रव्यप्रतीत्यापत्तिरिति । एवञ्चायुतसिद्धरूपादिपरमाणुरूपावयवानुगतः समूहो द्रव्यम्—अतो वनादेर्न द्रव्यत्वम् । स्पष्टं च 'स्त्रियाम्' इति सूत्रे भाष्ये उक्तं—द्रव्ये च भवतः कः संप्रत्ययः ? गुणसमुदायो द्रव्यम्' इति । तथा तपरसूत्रेऽपि भाष्ये—'कं च प्रत्यवयवो गुणः ?' समुदायम्' इतीति दिक् ॥

( द्रव्यपरिचायकलक्षणभाष्यम् )

**अथ वा यस्य गुणान्तरेष्वपि प्रादुर्भवत्सु तत्त्वं न विहन्यते तद् द्रव्यम् ।**

**किं पुनस्तत्त्वम् ?**

**तद्भावस्तत्त्वम् । तद्यथा—आमलकादीनां फलानां रक्तादयः पीतादयश्च गुणाः प्रादुर्भवन्ति, आमलकं बदरमित्येव भवति ॥**

( प्रदीपः ) **तत्त्वमिति** । एकाकारबुद्धिनिमित्तत्वमित्यर्थः ।

---

१ सामान्यतो दृष्टमनुमानमाह—'द्रव्यं गुणेभ्योऽन्यत्' इति ॥

२ अनुमानसिद्धमर्थं विशदयति—**यदि प्रत्येकमिति** । यदि प्रत्येकस्य गुणस्य द्रव्यत्वमाश्रीयेत तदा कार्पासे यौ उच्छ्रायविस्तारौ तावेव लोहे यस्मिन् भवतः, तयोरैक्यात् कार्पासलोहयोस्तुलाग्रस्य नामोन्नमने विशेषानुपपत्तिः, तस्माद्धेतोः प्रत्येकगुणातिरिक्तस्य गुणसमूहरूपस्य द्रव्यस्य भिन्नव्यक्तिगतगुरुत्वभेदेन लोहकार्पासयोर्विशेषसिद्धिर्द्रव्यसिद्धिश्चेति भावः ॥

३ 'ओषधिवनस्पतीनाम्' इत्यादौ एकवद्भावाभावमुदाहरतां भाष्यकाराणामभिप्रायमाह—**द्रव्यप्राधान्येति** ॥

४ **एतत्पर्यन्तेति** । यदि गुणसमवायिकारणतयैव द्रव्यसिद्धिः स्यात्तदा भाष्यकृतामनुमानदर्शनपर्यन्तमनुधावनं व्यर्थं स्यादित्यर्थः ॥

५ ननु 'इह समाने वर्ष्मणि परिणाहे' इत्यादि भाष्यस्य रूपादिसमवायिकारणतयैव द्रव्यसिद्धौ तात्पर्यमित्यरुचेराह—**किञ्चेति** । लोहस्य कार्पासानां च तुलाग्रभेदो गुञ्जादिदृष्टान्तेनाप्युपपादयितुं शक्यत इत्यर्थः ॥

६ दशसंख्यातो न्यूनसंख्याकगुञ्जाभ्यः अनेकगुरुत्वैर्दशगुञ्जाभिरुन्नामो दृष्टः, दशसंख्यातोऽधिकसंख्याकगुञ्जाभ्यश्च अनेकगुरुत्वैर्दशगुञ्जाभिरेव दृष्ट इत्यादिरर्थः ॥

७ **तैरेवेति** । द्रव्यानतिरिक्तैर्गुरुत्वैरेवेत्यर्थः ॥

८ ननु दशगुञ्जादिदृष्टान्तेन लोहकार्पासयोर्नमनोन्नमनस्योपपत्तावपि न सर्वेष्टसिद्धिरित्याह—**किञ्चैवमिति** ॥

यदि रूपाद्यालम्बनैवामलकादिबुद्धिः स्यात्तदा पूर्वरूपादिविनाशादपूर्वरूपादिप्रादुर्भावाच्च तदेवेदमामलकमिति प्रत्यभिज्ञाप्रत्ययो नोत्पद्येत । अस्ति च भिन्नाकारबुद्ध्युत्पत्तिः । तस्मादस्ति रूपाश्रयो द्रव्यम् । एतच्च पाकजरूपाद्युत्पत्तौ ये द्रव्यविनाशं नेच्छन्ति तन्मतेन द्रव्यं प्रत्यभिज्ञाश्रयेणोक्तम् ॥ **ये तु** पाकजरूपाद्युत्पत्तौ पूर्वद्रव्यविनाशमपूर्वद्रव्यारम्भं चाभ्युपगच्छन्ति तन्मतेन द्रव्यभेदेऽपि जातेरेकत्वाज्जातिप्रत्यभिज्ञाश्रयेणोक्तम् । जातेश्चाधारो द्रव्यं, ततो जातिमन्तरेण प्रत्यभिज्ञाया अभावाद् द्रव्यमन्तरेण जात्युपलम्भाभावाद् द्रव्यस्य सद्भावनिश्चयः ॥

**( उद्द्योतः )** नन्वत्र पक्षे आमलकादौ पाकेन पूर्वरूपादिविनाशे तत्तद्घटितसमुदायस्यापि नाशात्तदेवेदमामलकमिति प्रतीत्यनापत्तिरिति चेन्न, केषाञ्चिद्गुणानां नाशेऽपि बहोर्गुणसमुदायस्य सत्त्वेन प्रत्यभिज्ञोपपत्तेः । तदेवाह—**अथ वा यस्येति** । 'सद्भावात्' इति शेषः । यस्यावयवसमूहस्य सद्भावादित्यर्थः । कैयटस्तु वैशेषिकादिनयानुसारेण भाष्यं व्याचक्षाणः कथं 'स्त्रियाम्' इति सूत्रस्थभाष्येण न विरुध्यत इति चिन्त्यम्; कथं च 'किं पुनर्द्रव्यम्, के गुणाः' इति प्रश्नस्य न निर्दलतेति च चिन्त्यम् ॥ **तन्मतेनेति** । ते हि व्यक्तिविषयामेव प्रत्यभिज्ञां मन्यन्ते ॥ **ये त्विति** । ते हि परमाणुपर्यन्तद्रव्यनाशे परमाणुष्वेव पाकजरूपाद्युत्पत्तौ पुनः पूर्ववद्द्रव्यारम्भं वदन्ति ॥ **जातेश्चाधारो द्रव्यमिति** । यद्यपि गुणोऽपि जात्याधारस्तथापि प्रकृताभिप्रायेणेदम् ॥

**( द्रव्यस्यान्वर्थलक्षणभाष्यम् )**

**अन्वर्थं खल्वपि निर्वचनं—गुणसंद्रावो द्रव्यमिति ॥**

**( प्रदीपः ) अन्वर्थमिति** । [1]अर्थान्विताद् द्रव्यव्यपदेशादेव रूपादिव्यतिरिक्तं द्रव्यं सिद्धमित्यर्थः ॥ **गुणसंद्राव इति** । संद्रूयते—संगम्यते—आश्रीयते इति संद्रावः । 'समि युद्रुदुवः' इति घञ् । गुणानामाश्रयो द्रव्यमित्यर्थः ॥

**( उद्द्योतः ) गुणानामाश्रय इति** । समूहस्य भेदकल्पनयैव चाश्रयत्वव्यवहारोऽपीति भावः । एवञ्च 'गुणसमूहो द्रव्यमिति पतञ्जलिः' इति **योगभाष्येण** न विरोध इति मञ्जूषायां निरूपितम् ॥

**( सिद्धं तु यस्येत्यादिन्यासाक्षेपभाष्यम् )**

**यदि तर्हि षष्ठीसमर्थाद् गुणे प्रत्यया उत्पद्यन्ते, कि[2]मियता सूत्रेण ? एतावद्वक्तव्यम्-षष्ठीसमर्थाद् गुण इति ॥**

**( प्रदीपः ) किमियतेति** । 'यस्य गुणस्य भावात्' इत्यादिना गुरुणा सूत्रेणेत्यर्थः ॥

**( उद्द्योतः )** भाष्ये—**षष्ठीसमर्थाद्गुणे इति** । 'तस्य गुणे' इति वक्तव्यमिति भावः ॥

**( एतादृशन्यासे दोषभाष्यम् )**

**षष्ठीसमर्थाद् गुण इतीयत्युच्यमाने द्विगुणा रज्जुस्त्रिगुणा रज्जुः, अत्रापि प्राप्नोति ॥**

**( प्रदीपः ) द्विगुणा रज्जुरिति** । विषयप्रदर्शनमात्रमेतत् । [3]रज्जुशब्दात्तु षष्ठ्यन्तादवयवलक्षणे गुणे त्वतल्प्रसङ्गः ॥

**( उद्द्योतः )** ननु 'द्विगुणा रज्जुः' इत्यत्र गुणशब्देनैवाभिधानात् 'उक्तार्थानाम्' इति न्यायेन षष्ठीसमर्थाभावेन च प्रत्ययानुत्पत्तिरत आह—**विषयेति** ॥

**( अवयवानामपि गुणत्वबोधकभाष्यम् )**

**नैष[4] दोषः ।**

**गुणशब्दोऽयं बह्वर्थः । अस्त्येव समेष्ववयवेषु वर्तते । तद्यथा—द्विगुणा रज्जुः, त्रिगुणा रज्जुरिति ।**

**अस्ति द्रव्यपदार्थकः । तद्यथा—गुणवानयं देश इत्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते ।**

**अस्त्यप्राधान्ये वर्तते । तद्यथा—यो यत्राप्रधानं भवति स आह-गुणभूता वयमत्रेति ।**

**अस्त्याचारे वर्तते । तद्यथा—गुणवानयं ब्राह्मण इत्युच्यते, यः सम्यगाचारं करोति ।**

**अस्ति संस्कारे वर्तते । तद्यथा—संस्कृतमन्नं गुणवदित्युच्यते ॥**

**( प्रदीपः )** कथं [5]प्रसङ्ग इत्याह—**गुणशब्दोऽयमिति** । क्वचित्तु पाठः—**नैष दोषः । गुणशब्दोऽयमिति** । तत्रा[6]यमर्थः—यतोऽयं गुणशब्दो बह्वर्थः, ततः 'यस्य गुणस्य भावात्' इत्यस्मिन् न्यासेऽतिप्रसङ्गो न भवति, शब्देन विशिष्टस्य गुणस्य शब्दप्रवृत्तिनिमित्तरूपस्योपादानात् ॥

**( उद्द्योतः ) कथं प्रसङ्ग इति** । परा[7]श्रयस्य भेदकस्य गुणपदार्थत्वादिति भावः ॥ **क्वचित्त्विति** । तद्रहित[8]पाठ एव युक्तः, अत्र पाठेऽर्थसामञ्जस्याभावादित्याहुः ॥

---

१ **अर्थान्विताददिति** । गुणसंद्रावरूपद्रव्यपदस्य व्यवहारादेव तदतिरिक्तमित्यर्थः ॥

२ द्रव्यगुणपदार्थयोः प्रसङ्गादापन्नयोर्विवेचनानन्तरं **'सिद्धं तु यस्य-'** इत्यादिवार्तिकोक्तन्यासे पदप्रयोजनमाह—**किमियतेति** ॥

३ **रज्जुशब्दात्त्विति** । द्विगुणा रज्जुरित्यत्र न त्वतलौ प्राप्नुतः किन्तु रज्जुशब्दादेव द्विगुण इत्येतस्मिन्नर्थे प्रत्ययः प्राप्नोतीति भाष्याशयः ॥

४ टीकाकाराणान्तत्रभवतामसंमतोऽप्ययं पाठ इदानीन्तनेषु सर्वेष्वपि पुस्तकेषूपलभ्यत इत्यस्माभिरपि स्थापितः । अत्रत्यं तत्त्वं च प्रदीपोद्योतदर्शनादवगतं भवेदिति न तत्पाठेऽपि असंबद्धं भाष्यं इति भ्रमो भविष्यति ॥

५ ननु द्वाभ्यां समाभ्यामवयवाभ्यां निर्मिता रज्जुर्द्विगुणा रज्जुरित्युच्यते । अवयवानाञ्च गुणत्वं नास्तीति रज्जुशब्दात्प्रत्यय एव न प्राप्नोतीत्याशयेनाह—**कथं प्रसङ्गेति** ॥

६ **'नैष दोषः'** इति पाठे तस्यापि युक्तार्थत्वं संपादयति—**तत्रायमर्थ इति** ॥

७ अवयवानामपि गुणत्वं सम्पादयति—**पराश्रयस्येति** ॥

८ **तद्रहित पाठ एव युक्त इति** । भाष्यकृता हि-द्विगुणा रज्जुरित्यत्र प्राप्नोतीत्युक्तम् । अत्र अवयवानां गुणत्वाभावादेव प्रत्ययस्य प्राप्तिर्नास्तीति आशङ्क्य अवयवानामपि गुणत्वमुपपादयति भगवान्—**गुणशब्दोऽयमित्यादिना** । एवञ्च मध्ये **'नैष दोषः'** इति पाठोऽयुक्त एवेति तद्रहितपाठ एव युक्त इति भावः ॥

( षष्ठीसमर्थाद्गुण इति न्यासे अतिव्याप्तिदर्शकभाष्यम् )

अथवा सर्वत्रैवायं गुणशब्दः समेषु अवयवेषु वर्तते । तद्यथा—द्विगुणमध्ययनं त्रिगुणमध्ययनमित्युच्यते । चर्चागुणान् क्रमगुणांश्चापेक्ष्य भवति, न संहितागुणांश्चर्चागुणांश्च ।

यद्येवं गुणवदन्नमिति गुणशब्दो नोपपद्यते । नह्यन्नस्य सूपादयो गुणाः समा भवन्ति ।

नावश्यं वर्ष्मतः परिमाणत एव वा साम्यं भवति ।

किं तर्हि ?

युक्तितोऽपि । आतश्च युक्तितः, यो हि मुद्गप्रस्थे लवणप्रस्थं प्रक्षिपेन्नादो युक्तं स्यात् ।

यदि तावददेरन्नं[1] नादोऽत्तव्यं स्यात् ।

अथानितेरन्नं[2] नादो जग्ध्वा प्राण्यात् ॥

( प्रदीपः ) अथ वेति । पूर्वोक्तविषये सर्वस्मिन्नित्यर्थः ॥ त्रिगुणमध्ययनमिति । पदक्रमसंहितालक्षणावयवत्रययोगात् ॥ चर्चागुणाः=पदविच्छेदगुणाः । पदक्रमाध्यायी द्विगुणमधीत इत्युच्यते ॥ न संहितागुणांश्चेति । वेदान्तरसंहितां वेदान्तरपदानि वाऽधीयानो द्विगुणमधीत इति नोच्यते, अध्ययनक्रमभेदादेकस्याध्ययनस्य द्विगुणत्वाभावात् । यद्यपि क्रमपाठे पदावृत्त्याधिक्यं भवति, तथापि युक्तितः साम्योपपत्तिः । 'गुणवानयं देशः' इत्यत्रापि गोसस्यादयो युक्तितः समा देशावयवत्वाद् गुणा उच्यन्ते । गवादीनां देशावयवत्वमुपचरितम् । 'गुणभूता वयम्' इत्यत्रापि गृहाद्यवयवसदृशात्मनिर्देशः । 'गुणवानयं ब्राह्मणः' इत्यादावपि ब्राह्मणादिशब्दार्थगुणसमुदायैकदेशाचारवाची गुणशब्दः । युक्तितश्चाचारस्य साम्यम् ॥ यद्येवमिति । यथा 'द्विगुणा रज्जुः' इत्यादौ प्रमाणतोऽवयवस्य साम्यं न तथाऽत्रेति प्रश्नः ॥ युक्तित इति । अर्थक्रियायां[3] यथोग्यं तत्सममित्यर्थः ॥ यदि तावदिति । युक्तितः साम्याभावे अन्नमेव तन्न स्यात्, कुतः पुनस्तस्य गुणवत्त्वमित्यर्थः । तदेवं 'षष्ठीसमर्थाद्गुणे' इत्युच्यमानेऽतिप्रसङ्गात् 'यस्य गुणस्य भावात्–' इत्याश्रयितव्यम् ॥

( उद्द्योतः ) संहितामधीत्य यः पदान्यधीते तदीयमध्ययनं द्विगुणमित्युच्यते । ते अधीत्य यः क्रममप्यधीते तस्य त्रिगुणम् । संहिताध्ययनकालेऽपि नान्तरीयकतया पदाध्ययनसत्त्वादाह—पदविच्छेदेति । भाष्ये—'चर्चागुणान्' इत्यादेः 'समान्' इत्यादिः । पदक्रमाध्यायीति । पदानां क्रमेण–विच्छेदेनाध्यायीत्यर्थः ॥ भाष्ये समावयवेषु वृत्तौ युक्तिमाह—न संहितेति । अस्य 'विषमान्' इत्यादिः । तद्ध्वनयन्नाह—वेदान्तरेति ॥ अध्ययनक्रमभेदादिति । अध्ययनविषयवर्णानुपूर्वीभेदादित्यर्थः ॥ युक्तित इति । बोध्यमानपदस्वरूपभेदाभावादिति भावः ॥ युक्तितः समा इति । देशस्य समा अवयवा इत्यर्थः ॥ तदाह—देशावयवत्वादिति । 'समानदेशावयवत्वात्' इति पाठे अवयवान्तरेण तुल्यतया देशावयवत्वादित्यर्थः ॥ ननु तेषां देशावयवत्वं कथमत आह—गवादीनामिति । यथा देशावयवोऽर्थक्रियाकारी, तथा गोसस्यादिकमपीत्यर्थः ॥ युक्तितः–ब्राह्मणव्यवहारप्रयोजकत्वेनेत्यर्थः ॥ ननूक्तरीत्या युक्तितः साम्यादेव 'गुणवदन्नम्' इत्यादयः प्रयोगा अत आह—यथेति ॥ अर्थक्रियायामिति । सा च प्रकृते भोजनरूपा ॥

( यस्य गुणस्येति न्यासस्याव्याप्तिप्रदर्शकं भाष्यम् )

शुक्लादिषु तर्हि वर्त्यभावाद् वृत्तिर्न प्राप्नोति । शुक्लत्वम्, शुक्लतेति ।

किं पुनः कारणं शुक्लादय एवोदाह्रियन्ते, न पुनर्वृक्षादयोऽपि—वृक्षत्वम्, वृक्षतेति ।

अस्त्यत्र विशेषः,

उभयवचना ह्येते द्रव्यं चाहुर्गुणं च, यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति ॥

( प्रदीपः ) अत्राप्यव्याप्तिं चोदयति—शुक्लादिष्विति । 'पटस्य शुक्लः' इति व्यतिरेकदर्शनाद्गुणमात्रवचनाः शुक्लादयः । 'पटस्य शुक्लत्वम्' इत्यादौ गुण एव त्वतलादिप्रत्ययो दृश्यते । न च गुणे वर्तमानानां तेषां गुण एव प्रवृत्तिनिमित्तमिति मत्वा प्रश्नः । गुणसमवायिनि तु सामान्ये स्यात् प्रत्ययः, किंतु पटस्य शुक्लत्वमिति पटेन संबन्धाभावप्रसङ्गः ॥ वर्त्यभावादिति । वर्तनं–वर्तः । वृत्तिरित्यर्थः । वर्तोऽस्मिन्नस्तीति–वर्ती प्रत्ययार्थः, प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावादित्यर्थः ॥ न पुनर्वृक्षादय इति । तेऽपि जातिमात्रवचनाः, ततो जातौ प्रत्ययाप्रसङ्गः ॥ द्रव्यं चाहुरिति । विशिष्टजातियुक्तमित्यर्थः ॥ गुणं चेति । जातिलक्षणम् ॥ यतो द्रव्य वचना इति । यस्माद्द्रव्यवचनास्तस्माज्जातौ प्रवृत्तिनिमित्ते प्रत्ययः ॥

( उद्द्योतः ) ननु गुणिपरेषु शुक्लादिषु गुण एव वर्ती, गुणपरेषु तद्गतजातिरिति किमुच्यते 'वर्त्यभावात्' इति ? इत्यत आह—पटस्य शुक्ल इति ॥ पटेन सम्बन्धाभावेति । प्रकृत्यर्थस्य पटेन सम्बन्धे च सापेक्षत्वाद्वृत्त्यभावप्रसङ्ग इति भावः ॥

( अव्याप्त्यभावोपपादकभाष्यम् )

इमेऽपि तर्हि–उभयवचनाः ।

कथम् ?

आरभ्यते मतुब्लोपः—गुणवचनेभ्यो मतुपो लुग्भवतीति ।

यतो द्रव्यवचनास्ततो वृत्तिर्भविष्यति ॥

---

१ अदेरन्नमिति । अत्ति–भक्षयति–तदन्नमित्येवं व्युत्पत्तावपि युक्तितः साम्याभावे मुद्गप्रस्थे लवणप्रस्थं दत्तं स्यात्तादृशमन्नं अन्नपदवाच्यमेव न स्यादित्यर्थः ॥

२ अनितेरन्नमिति । यदि युक्तितः समं तदन्नं न स्यात्तर्हि तादृशान्नस्य भक्षणेन जीवनमपि न स्यादित्यर्थः ॥

३ अर्थक्रियायामिति । भोजनरूपायां तस्यां यथोग्यं भवेत्–मुद्गप्रस्थे न्यूनमपि लवणं सममेव । यदि च मुद्गप्रस्थे लवणप्रस्थं दीयेत न तत् सम स्यादित्यर्थः ॥

(प्रदीपः) आरभ्यते मतुब्लोप इति । वृक्षादयो जातितद्वतोरभेदविवक्षायां द्रव्यमाहुः । न हि यथा 'पटस्य शुक्लः' इति व्यतिरेको दृश्यते तथा 'धवस्य वृक्षः' इति । तत्र गुणद्रव्ययोर्व्यतिरेकदर्शनान्मतुब्श्रवणनिवृत्त्यर्थो लुगारम्भः ॥

( उद्योतः ) ननु यथा वृक्षशब्दो मतुब्लोपं विनैव जातिविशिष्टद्रव्यमाह, तथा शुक्लादयोऽपि गुणविशिष्टं द्रव्यं वक्ष्यन्तीति किं मतुब्लोपेन ? इत्यत आह—वृक्षादय इति । जातिप्रवृत्तिनिमित्तकशब्दबोध्यजातेः स्वाश्रयेणाभेदविवक्षैवेति भावः । अत्रत्यं तत्त्वं प्रागेवोक्तम् ॥

( अव्याप्तिदर्शकं भाष्यम् )

**डित्थादिषु तर्हि वर्त्यभावाद् वृत्तिर्न प्राप्नोति । डित्थत्वम्, डित्थता, डाम्भिट्टता, डाम्भिट्टत्वमिति ।**

**अत्रापि—"कश्चित् प्राथमकल्पिको डित्थो डाम्भिट्टश्चेति" । तेन कृतां क्रियां गुणं वा यः कश्चित्करोति स उच्यते—डित्थत्वं त एतत्, डाम्भिट्टत्वं त एतत् । एवं डित्थाः कुर्वन्ति, एवं डाम्भिट्टाः कुर्वन्ति ॥**

**यस्तर्हि प्राथमकल्पिको डित्थो डाम्भिट्टश्च, तस्य वर्त्यभावाद् वृत्तिर्न प्राप्नोति ।**

**नैष दोषः ।**

**यथैव तस्य कार्थंचित्कः प्रयोगः, एवं वृत्तिरपि भविष्यति ॥**

( प्रदीपः ) डित्थादिष्विति । डित्थादयो यदृच्छाशब्दा अर्थगतं न किंचित्प्रवृत्तिनिमित्तमपेक्षन्ते, पुरुषेच्छावशेन प्रवर्तनात् ॥ तेन कृतामिति । डित्थसहचरितगुणक्रियादर्शनादन्यत्राप्युपचारात्प्रवर्तमानस्य डित्थशब्दस्य गुणक्रिये एव प्रवृत्तिनिमित्तमित्यर्थः ॥ कार्थंचित्क इति । विनयादिषु कथंचिच्छब्दस्य पाठात्स्वार्थे ठक्प्रत्ययः । शब्दस्वरूपमर्थेऽध्यस्य 'अयं डित्थः' इति संज्ञासंज्ञिसंबन्धः क्रियते । ततः शब्दस्वरूपासङ्गायथा डित्थशब्दस्यार्थे प्रयोगस्तथैव शब्दस्वरूपेऽर्थेऽध्यस्ते प्रत्यय इत्यर्थः । अन्ये तूत्पत्तिप्रभृत्या विनाशात्कौमाराद्यवस्थाभेदभिन्नद्रव्यसमवायिनीं जातिमिच्छन्ति । यद्दर्शनादवस्थान्तरेऽपि 'स एवायं डित्थः' इति प्रत्यभिज्ञाप्रत्यय उत्पद्यते तस्यां प्रत्ययः ॥

(उद्योतः) ननु तत्रापि शब्दरूपं प्रवृत्तिनिमित्तमस्तीत्यत आह—डित्थादय इति । भाष्ये—तत्रापि कश्चिदिति । 'तत्रापि' इत्यस्य 'उत्तरमाह' इति शेषः ॥ 'कश्चित्'—इत्यादि 'इति' इत्यन्तं वार्तिकोक्तमुत्तरम् ॥ तद्याचष्टे—तेन कृतामित्यादि ॥ शब्दस्वरूपमर्थेऽध्यस्येति । तादात्म्याध्यासोऽत्र बोध्यः । तदेवाह—अयं डित्थ इति संज्ञासंज्ञिसम्बन्धः क्रियत इति ॥ यथा डित्थशब्दस्येति । अन्यथा शब्दात्रिर्विकल्पकाभावेन निर्धर्मितावच्छेदकशक्तिग्रहाभावेन च प्रयोग एव न स्यादित्यर्थः । जात्यतिरिक्तपदार्थे विशेष्यताप्रकारतयोः सावच्छिन्नत्वनियमादिति भावः । अन्ये तु—एवं व्याख्याने घटादिपदसदृशत्वादस्य 'कथञ्चित्'पदप्रयोगासामञ्जस्यम्, अतो व्यक्तेरेव प्रकारताविशेष्यताख्यविषयताद्वयेन भानमिति शक्तिग्रहप्रयोगयोरुपपत्तिः । एवं प्रकारस्य चान्यत्राद्दृष्टत्वात् 'कथञ्चित्' इत्युक्तिः समञ्जसा । एवञ्च प्रकारताविशिष्टा व्यक्तिः 'त्व'प्रत्ययार्थ इत्याहुः ॥ जातिमिच्छन्तीति । अत एवातातिप्रसङ्गवारणाय 'आकृतिग्रहणा'—इत्यादिपरिभाषा स्वशास्त्रे आश्रिता ॥

( ५६८८ सिद्धं तु यस्येति न्यासं परित्यज्य अन्यन्यासे वार्तिकम् ॥ ६ ॥ )

**॥ * ॥ यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने ॥ * ॥**

( प्रदीपः ) यद्वेति । पूर्वत्र लक्षणे जातिगुणद्रव्यलक्षणार्थाभिधायिभ्यो गवादिभ्यः शब्दस्वरूपगुणसामान्यादिषु प्रत्ययः । इह तु शब्दाभिधायिभ्यः पूर्वोक्तेष्वेवार्थेषु-इति प्रकृत्यर्थभेदेऽपि प्रधानप्रत्ययार्थाभेदापेक्षो विकल्पः ॥

( उद्योतः ) पूर्वन्यासादत्र पक्षे विशेषमाह—पूर्वत्र लक्षणे इति ॥ शब्दस्वरूपेत्यादि । यदा गोशब्दो गोत्वमात्रवचनस्तदा शब्दस्वरूपे, डित्थादयोऽपि शब्दस्वरूपे उदाहरणं । गुणिवाचकेभ्यः शुक्लादिभ्यो गुणे, गुणवचनेभ्यस्तद्गते सामान्ये—इत्यर्थः । गवादिभ्यश्च सामान्ये । शब्दाभिधायिभ्यः—शब्दस्वरूपमात्रपरेभ्यः । गोत्वमित्यादौ गोशब्दसम्बन्धी धर्म इत्यादिप्रकारेण बोधः ॥ नन्वर्थभेदे विकल्पोऽयुक्तः, एकार्थानां विकल्पात्—अत आह—प्रकृत्यर्थभेदेऽपीति ॥

( वार्तिकव्याख्याभाष्यम् )

**किमेभिस्त्रिभिर्भावग्रहणैः क्रियते ?**

**एकेन शब्दः प्रतिनिर्दिश्यते द्वाभ्यामर्थः । यद्वा—सर्वे शब्दाः स्वेनार्थेन भवन्ति स तेषामर्थ इति, तदभिधाने वा त्वतलौ भवत इति वक्तव्यम् ॥**

**नैवमन्यत्र भवति । न हि "तेन रक्तं रागात्" ( ४।२।१ ) इत्यत्र शब्देन रक्ते प्रत्यया उत्पद्यन्ते । शब्देऽसंभवादर्थेन रक्ते प्रत्यया भविष्यन्ति ॥**

( प्रदीपः ) किमेभिरिति । भावशब्दत्रयस्यार्थभेदं पृच्छति ॥ एकेनेति । भवन्तीति—भावाः—शब्दाः । 'भवतेश्चेति वक्तव्यम्' इति कर्तरि णः ॥ द्वाभ्यामिति । स च द्विविधः—वाच्य-प्रवृत्तिनिमित्तरूपः । अत्र तु करणसाधनो घञ् । तत्र शुक्लस्य भावः शुक्लत्वमिति शुक्लशब्दस्य गुणे वर्तमानस्य भावो गुणसमवायिसामान्यं, तस्माद्धि निमित्ताच्छुक्लशब्दः स्वस्मिन्नर्थे गुणलक्षणं भवति-प्रवर्तेत इत्यर्थः । द्रव्ये तु वर्तमानस्य शुक्लशब्दस्य गुणो भावः । तथा गोशब्दस्य द्रव्ये वर्तमानस्य जातिर्भावः । राजपुरुषशब्दस्य संबन्ध इत्यादि बोद्धव्यम् ॥ स्वेनार्थेनेति । शब्दानां स्वार्थः—वाच्यः, तेन भवन्ति । तत्र वाचकत्वेन प्रवर्तन्त इत्यर्थः । वाच्योऽर्थः शब्दभवने करणत्वेन विवक्षितः । अर्थप्रत्यायनाय शब्दप्रयोगाद्भवति—अर्थस्य करणत्वम् ॥ स तेषामर्थ इति । यत्तदोर्नित्याभिसंबन्धाद्यस्मादित्यपेक्षते ।

यस्मात्[1]प्रवृत्तिनिमित्तात् स्वेनार्थेन प्रयुज्यन्ते सोऽर्थस्तेषां प्रवृत्तिनिमित्ततया संबन्धीत्यर्थः । एतेन प्रकृतिप्रत्ययार्थयोः संबन्धो दर्शितः ॥

**नैवमन्यत्रेति** । अन्यत्र शब्दार्थसंबन्धी प्रत्ययार्थो निर्दिश्यते । न तु शब्दसंबन्धीत्यर्थः ।

अत्रोत्तरम्—**शब्देऽसंभवादिति** । शब्दसंबन्धित्वं प्रत्ययार्थस्य नोपपद्यते । कषायादिशब्देन रागाद्यसंभवात्ततः शब्दार्थसंबन्धित्वं प्रत्ययार्थस्याश्रीयते । इह तु शब्दस्य तदर्थस्येव भावसंबन्धसंभवात्तद्वाच्चिनी कामचारात् प्रकृतिराश्रीयते । यथा हि—शुक्लस्य द्रव्यस्य गुणो भावः, तद्वशाद्धि शुक्लं द्रव्यं भवति । गोत्वसंबन्धाच्च गौर्द्रव्यम् । एवं शुक्लशब्दस्यापि द्रव्ये वर्तमानस्य गुणो भावः, तद्वशात्तस्य द्रव्ये प्रवर्तनात् । गोत्ववशाच्च गोशब्दस्य—इत्येवं सर्वत्रावसेयम् । 'नानात्वं' 'यौगपद्यम्' इत्यादौ पूर्वत्र लक्षणे नानाभूतार्थाभिधायिनो युगपद्भूतार्थाभिधायिनश्च द्रव्यधर्मे असहभावे युगपद्भावे च प्रत्ययः । उत्तरत्र तु शब्दाभिधायिभ्यां पूर्वोक्त एव भावे प्रत्ययः ॥

**( उद्द्योतः ) भवन्तीति** । उच्चारणविषया भवन्तीत्यर्थः ॥ **द्विविध इति** । **वाच्यो**—विशेष्यरूपः । **प्रवृत्तिनिमित्तम्**—प्रकाररूपम् । **अयमत्र वार्तिकार्थः**—सर्वे शब्दाः स्वेन वाच्येन[2] करणेन यस्मात्प्रवृत्तिनिमित्ताद्भवन्ति—वाच्यार्थबोधनाय प्रयोगं प्राप्नुवन्ति स प्रवृत्तिनिमित्तरूपोऽर्थस्तेषां शब्दानां भावः । अतस्तदभिधानेऽर्थाच्छब्दपरेभ्यः प्रत्यय इत्यर्थः । प्रथमभावशब्दस्य शब्दपरतायां 'यद्वा सर्वे भावाः' इत्यादिनोक्तं लक्षणं यादृशं सम्पद्यते तदनुवदति—भाष्ये—**यद्वा सर्वे शब्दा इति** ॥ नन्वर्थस्य शब्दभवने कथं कारणत्वमत आह—**अर्थप्रत्यायनायेति** ॥ **प्रवृत्तिनिमित्तत्येति** । प्रवृत्तिनिमित्तेन शक्तिरित्यभिप्रायः ॥ **सम्बन्ध इति** । प्रवृत्तिनिमित्तत्वरूपः । प्रकृतिश्चात्र पक्षे शब्दस्वरूपपरा । प्रवृत्तिनिमित्तत्वं च स्वजन्यबोधीयमुख्यविशेष्यतानिरूपितविषयतावत्त्वम् ॥

भाष्ये शङ्कते—**नैवमन्यत्रेति** । **अन्यत्र**—अर्थे । क्वचिदपि लक्ष्ये एवंप्रकारो न भवतीत्यर्थः ॥

**यथा हीति** । गुणादेर्द्रव्यभावत्वं तद्वृत्तिधर्मत्वात् ॥ **तद्वशात्**—गुणवशात् । **तद्**—द्रव्यं । **शुक्लं**—तद्व्यपदेशवत् । एवं **गोत्वसम्बन्धाद् द्रव्यं**—गौः—तद्व्यपदेशवत् । अतो गुणादेर्द्रव्यभावत्वम् । एवं तत्तच्छब्दानां द्रव्ये वृत्तौ तेषामेव निमित्तत्वादौपचारिकं शब्दधर्मत्वमिति शब्दभावोऽपि स इति भावः । **परे** तु—संज्ञाशब्दे प्रवृत्तिनिमित्तानङ्गीकारेऽपि प्रत्ययोपपादनायेदम् । **अयं भावः**—शब्दस्य योऽर्थो वाच्यप्रवृत्तिनिमित्तान्यतररूपस्तद्वाचकत्वं प्रत्ययस्य । तत्र 'घटत्वम्' इत्यादौ जात्यादिरूपं प्रवृत्तिनिमित्तं तदर्थः । 'डित्थत्वम्' इत्यादौ त्वन्यस्यासम्भवाद्विशेष्यभूतोऽर्थ एव त्वार्थः । एवञ्च डित्थडित्थत्वशब्दयोः पर्यायता । ईदृशे स्थले एव प्रकृतिः शब्दपरा 'त्व'स्य साधुत्वाय कल्प्यते । एवञ्च 'कुत्वम्' इत्यादेः कवर्ग इत्यादिरेवार्थः । तव तु 'कुत्वं कस्मान्न भवति' इत्यादौ कुत्वशब्दार्थकुशब्दस्य प्राप्त्यभावात्तस्य स्वार्थाश्रये लक्षणाऽऽश्रयणीया स्यात् । किञ्चैवं 'डित्थत्वम्' इत्यादौ प्रकृतिप्रत्ययार्थयोर्भेदाभावः । **किञ्च** सर्वत्र प्रकृतेर्लक्षणायां न मानम् । 'डित्थत्वम्' इत्यादौ तु प्रकृतिप्रत्ययार्थानुपपत्त्या तत्कल्पनम् । **शब्देऽसम्भवादि**त्यादेरयमर्थः,—यथा तत्र शब्देऽसम्भवादर्थेन रक्ते प्रत्ययास्तथैतद्विषये डित्थत्वादावर्थस्य भावेऽसम्भवात् प्रकृतेः शब्दपरत्वं कृत्वाऽर्थे वाच्य एव भावप्रत्ययः । सम्भवे तु अर्थपरायाः प्रकृतेः शब्दबोध्यप्रवृत्तिनिमित्ते प्रत्यय इत्याहुः । गुणसमुदायस्य द्रव्यत्वेऽपि तत्तच्छब्दस्वभावात् कश्चिद्गुणः, क्वचित्प्रकारः, इतरे विशेष्या इति निमित्तत्वरूपसम्बन्धस्य न हानिः ॥

( न्यासप्रत्याख्यानकवार्तिकावतरणभाष्यम् )

**तत्तर्ह्यन्यतरत्कर्तव्यम् । सूत्रं च भिद्यते ॥**

**यथान्यासमेवास्तु ।**

**ननु चोक्तं—तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्ग इति ॥**

**( प्रदीपः ) तत्तर्ह्यन्यतरदिति** । 'यस्य गुणस्य भावात्' इति वा 'यद्वा सर्वे भावाः' इति वेत्यर्थः ॥

(उद्द्योतः) भाष्ये—**तत्तर्ह्यन्यतरदिति** । 'कु' आदिपदानां ककारादिवृत्तिधर्मान् कत्वादीनुपलक्षणीकृत्य 'यः शुक्लवासाः स देवदत्तः' इत्यादाविव शक्तिग्रहो बोध्य इत्याहुः ॥

**( ५६८९ न्यासप्रत्याख्यानकसिद्धान्तवार्तिकम् ॥ ७ ॥ )**

**॥ * ॥ उक्तं वा ॥ * ॥**

**( भाष्यम् ) किमुक्तम् ?**

**अनभिधानादिति । अनभिधानादभिप्रायादिषूत्पत्तिर्न भविष्यति ॥**

**( प्रदीपः ) अनभिधानादिति** । न हि गोत्वमश्वत्वमित्यादावुक्तेऽभिप्रायाद्यवगम्यते किं तु जात्यादीत्यर्थः । तत्र भवत्यनेनेति करणसाधनेन घञन्तेन भावशब्देन जात्यादिके उच्यमाने वाच्यसंबन्धिनि शब्दसम्बन्धिनि च पूर्वोक्तन्यायाद्द्रव्यादिवाच्चिनः शब्दाभिधायिनो वा शुक्लादेस्त्वतलादय इति स्थितम् ॥

**( उद्द्योतः )** वार्तिकद्वयलभ्यमर्थं सूत्राक्षरैः साधयति—**तत्र भवत्यनेनेति** ॥

**( ५६९० पूर्वविप्रतिषेधवार्तिकम् ॥ ८ ॥ )**

**॥ * ॥ त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् ॥ * ॥**

**( भाष्यम् ) त्वतल्भ्यां नञ्समासो भवति पूर्वविप्रतिषेधेन ।**

**किं प्रयोजनम् ?**

**त्वतलोः स्वरसिद्ध्यर्थम् । त्वतलोः स्वरसिद्धिर्यथा स्यात् ।**

---

१ 'यस्मात्—यत्प्रवृत्ति' इति झ. पाठः ॥

२ 'अर्थेन—वाच्येन' इति झ. पाठः ॥

त्वतलोरवकाशः—भावस्य वचनं प्रतिषेधस्यावचनम्—ब्राह्मणत्वम्, ब्राह्मणता ।

नञ्समासस्यावकाशः—प्रतिषेधस्य वचनं भावस्यावचनम्—अब्राह्मणः, अवृषलः ।

उभयवचने उभयं प्राप्नोति—अब्राह्मणत्वम्, अब्राह्मणता ।

नञ्समासो भवति पूर्वविप्रतिषेधेन ।

स तर्हि पूर्वविप्रतिषेधो वक्तव्यः ॥

( प्रदीपः ) **त्वतल्भ्यामिति** । 'न ब्राह्मणस्य भावः' इति युगपद्भावनञर्थसंबन्धविवक्षायां यदि परत्वात्त्वतलोः कृतयोर्नञ्समासः स्यात्तदाऽव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वं प्रसज्येत । नञ्समासात्तु त्वप्रत्यये प्रत्ययस्वरेणान्तोदात्तं पदं भवति । तलि तु लित्स्वरेण मध्योदात्तमिति तदर्थं पूर्वविप्रतिषेध आश्रीयते ॥

( उद्द्योतः ) पूर्वविप्रतिषेधारम्भे फलं दर्शयति—**न ब्राह्मणस्येति** । युगपदुभाभ्यामेकार्थीभावविवक्षायामित्यर्थः ॥ **त्वतलोः कृतयोरिति** । ततः समासः—त्वाद्यन्तेन, एकदेशद्वारकं च सामर्थ्यं त्वाद्यन्तेनापि नञ इति बोध्यम् ॥

( पूर्वविप्रतिषेधाभावोपपादकं भाष्यम् )

न वक्तव्यः । नात्र त्वतलौ प्राप्नुतः ।

किं कारणम् ?

असामर्थ्यात् ।

कथमसामर्थ्यम् ?

सापेक्षमसमर्थं भवतीति । यावता ब्राह्मणशब्दः प्रतिषेधमपेक्षते ॥

नञ्समासोऽपि तर्हि न प्राप्नोति ।

किं कारणम् ?

असामर्थ्यादेव ।

कथमसामर्थ्यम् ?

सापेक्षमसमर्थं भवतीति । यावता ब्राह्मणशब्दो भावमपेक्षते ॥

प्रधानमत्र तदा ब्राह्मणशब्दः, भवति च प्रधानस्य सापेक्षस्यापि समासः ॥

( प्रदीपः ) **यावता ब्राह्मणशब्द इति** । प्रत्ययार्थस्य प्राधान्यात् ब्राह्मणार्थस्य नञर्थापेक्षत्वादसामर्थ्यादप्रधानस्य सापेक्षत्वे सति 'ऋद्धस्य राजपुरुषः' इत्यादाविव वृत्त्यभावात्त्वतलोरप्रसङ्गः ॥ **प्रधानमत्रेति** । उत्तरपदार्थप्रधानत्वात्तत्पुरुषस्य । यथा 'राजपुरुषोऽभिरूपः' इति प्रधानस्य सापेक्षत्वेऽपि वृत्तिर्भवति, एवं भावमपेक्षमाणस्यापि ब्राह्मणस्य नञ्समासो भवतीत्यर्थः ॥

( उद्द्योतः ) उपसर्जनस्यैव सापेक्षत्वे वृत्त्यभावेन ब्राह्मणपदार्थस्य यथोपसर्जनत्वं तथा दर्शयति—**प्रत्ययार्थस्येति** ॥ ननु ब्राह्मणभिन्न इति बोधादुत्तरपदार्थोऽप्रधानमेवेत्यत आह—**उत्तरपदार्थेति** । आरोपितो ब्राह्मण इति बोध इति भावः ॥ **राजपुरुषोऽभिरूप इति** । 'राज्ञः सुन्दरोऽश्वः' इत्यर्थे राजसुन्दरोऽश्व इतिवच्चेत्यपि बोध्यम् ॥

( पूर्वविप्रतिषेधप्रयोजनभाष्यम् )

इदं तर्हि प्रयोजनम्—नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थमिति वक्ष्यति, तत्र व्यवस्थार्थमिदं वक्तव्यम् ॥

( प्रदीपः ) **इदं तर्हीति** । न्यायेनैव पूर्वं नञ्समासे सिद्धे 'त्वतल्भ्याम्' इति वचनं नियमार्थम्—'त्वतलोरेव कर्तव्ययोः पूर्वं नञ्समासो नान्यत्र भावप्रत्यये' इत्यन्यो भावप्रत्ययः प्राग्भवति पश्चान्नञ्समासः । न्यायस्य नियमार्थेन वचनेन बाधनात् । ततश्च सति शिष्टत्वात् 'अप्रथिमा' इत्यादौ नञ्स्वरो भवति, 'अशौक्ल्यम्' इत्यादौ च नञः प्रकृत्यनेकदेशत्वादुत्तरपदवृद्धिः सिध्यति । यदि तु पूर्वं नञ्समासः स्यात् ततः 'न नञ्पूर्वात्—' इति प्रतिषेधात् ष्यञोऽप्रसङ्गात् 'अशौक्ल्यम्' इत्यादि न सिध्येत् ॥

( उद्द्योतः ) नन्वनेन वचनेनान्यभावप्रत्ययस्य पूर्वं प्रवृत्तिः कथं बोधयितुं शक्या, अशब्दार्थत्वादत आह—**न्यायेनैवेति** ॥ **तत्र व्यवस्थार्थमिति**—भाष्यस्य तत्र—अन्यत्वे प्रतियोगिसमर्पणार्थमित्यर्थः । एवञ्चैतन्नियमसिद्धार्थानुवाद एव स इति भावः । 'तद्व्यवस्थार्थम्' इति पाठे तदर्थलाभार्थमित्यर्थः । कैयटस्वरसस्त्वत्रैव पाठेऽर्थे च ॥ दूषणान्तरमप्याह—**यदि तु पूर्वमिति** ॥

( ५६९१ नञ्समासविकल्पबोधकवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ वा छन्दसि ॥ * ॥

( भाष्यम् ) वा छन्दसि नञ्समासो वक्तव्यः । निर्वीर्यतां वै यजमान आशास्ते अपशुतां । अयोनित्वाय । अशिथिलत्वाय । अगोतामनपत्यताम् ।

भवेदिदं युक्तमुदाहरणम्—अयोनित्वाय, अशिथिलत्वायेति ।

इदं त्वयुक्तम्—अपशुतामिति । नह्यसौ समासभावमाशास्ते ।

किं तर्हि ?

उत्तरपदाभावमाशास्ते—न पशोर्भाव इति ॥

( प्रदीपः ) **वा छन्दसीति** । छन्दोविषये क्वचित् पूर्वं त्वतलौ ततो नञ्समासः, क्वचित् तु विपर्ययः ॥ **अयोनित्वायेति** । प्रत्ययस्य पश्चान्नञ्समासे नञ्स्वरो भवति ॥ **भवेदिदमिति** । अत्र हि नञ्समासभावप्रत्यययोर्युगपत् प्राप्तिः ॥ **न ह्यसौ समासभाव इति** । समासशब्देन समासार्थो जात्यन्तरयुक्तं वस्तु उच्यते । तद्भावमसौ नाशास्ते—**अपशुः**—पशुसदृशो भूयासमिति ॥ **किं तर्हि ? उत्तरपदाभावमिति** । उत्तरपदार्थस्य पशुत्वस्याभावमाशास्ते—पशुर्मा भूवमिति । ततश्च पूर्वं भावप्रत्ययः पश्चान्नञ्समासो विनाऽपि 'वा छन्दसि' इति वचनेन सिध्यति ॥ **न पशोर्भाव इति** । भावस्य नञ्संबन्धात्, पशोरसंबन्धात् ॥

( उद्द्योतः ) ननु समासत्वाशासनस्य क्वापि न सत्त्वमत आह—**समासशब्देनेति** ॥ **पशोरिति** । पशोर्नञाऽसम्बन्धादित्यर्थः ॥

( ५६९२ प्रत्ययसमावेशे वार्तिकम् ॥ १० ॥ )

**॥ * ॥ नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् ॥ * ॥**

( भाष्यम् ) नञ्समासादन्यो भाववचनो भवति विप्रतिषेधेन ।

किं प्रयोजनम् ?

स्वरोत्तरपदवृद्ध्यर्थम् ।

स्वरार्थमुत्तरपदवृद्ध्यर्थं च ।

स्वरार्थं तावत्-अप्रथिमा,-अम्रदिमा ।

उत्तरपदवृद्ध्यर्थम्-अशौक्ल्यम्, अकार्ष्ण्यम् ॥

( ८८२ त्वतलोरधिकारसूत्रम् ॥ ५ । १ । २ आ. ५६ )

**२०७२ आ च त्वात् ॥ ५ । १ । १२० ॥**

( प्रदीपः ) वक्ष्यमाणैर्विशेषविहितैस्त्वतलौ मा बाधिषाताम्, गुणवचनादिभ्यः कर्मणि च यथा स्यातामिति सूत्रम् ॥

( उद्द्योतः ) 'ब्रह्मणस्त्वः' इत्यन्तं त्वतलावधिक्रियेते इति सूत्रार्थः, तत्फलमाह—**वक्ष्यमाणैरिति** । इमनिजादिभिरपवादैरित्यर्थः ॥ **गुणवचनादिभ्य इति** । येभ्य एव कर्मणि ष्यञादयो विहितास्तेभ्य एव त्वतलावपि कर्मणि यथा स्यातामित्येतदर्थमिदं सूत्रमित्यर्थः ॥

( चकाराक्षेपप्रयोजनभाष्यम् )

**किमर्थश्चकारः ?**

**अनुकर्षणार्थः, त्वतलावनुकृष्येते ।**

**नैतदस्ति प्रयोजनम्, प्रकृतौ त्वतलावनुवर्तिष्येते ॥**

**अत उत्तरं पठति—**

( प्रदीपः ) **किमर्थश्चकार इति** । वक्ष्यमाणोऽभिप्रायः । अथ त्वतलोरुत्तरत्राधिकारादेव सिद्धत्वात् सूत्रमेव कस्मान्नाक्षिप्तम् । नैतदस्ति । गुणवचनादिभ्यः कर्मणि विधानार्थत्वादनुवृत्तेरपवादैरसंदिग्धैः संदिग्धतदर्थोपस्थानौ त्वतलौ बाध्येयातामिति सूत्रमवश्यं कर्तव्यम् । किं चासत्यस्मिन् सूत्रे त्वतलोरुत्तरत्रानुवृत्तिर्दुर्ज्ञाना, उत्तरेषां प्रत्ययनिर्देशान्निराकाङ्क्षत्वात् । त्वतलोरपि पूर्वसूत्रेण प्रातिपदिकसामान्याद्भावे विधानादाकाङ्क्षाया अभावात् ॥ **अनुकर्षणार्थ इति** । अन्यथाऽभिधेयानुपादानादवधिमात्रनिर्देशोऽनर्थकः स्यात् ॥ **प्रकृताविति** । विधेयमन्तरेणावध्युपादानस्यानर्थक्यादेव साकाङ्क्षत्वात् प्रकृतौ त्वतलावपेक्षिष्येते इत्यर्थः ॥

( उद्द्योतः ) **सन्दिग्धतदर्थोपस्थानाविति** । सन्दिग्धं तत्तत्सूत्रोपात्तप्रकृतिनिमित्तमुपस्थानं ययोरित्यर्थः ॥ एतत्सूत्राभावे 'गुणवचन' आदिसूत्रेऽपि सम्बन्धो दुर्घट इत्याह—**किञ्चेति** ॥ ननु तेषामाकाङ्क्षाऽभावेऽपि त्वतलाकाङ्क्षयैव सम्बन्धः स्यादत आह—**त्वतलोरपीति** ॥

( ५६९३ चकारप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ आ च त्वादिति चकारकरणमपवादसमावेशार्थम् ॥ * ॥**

( भाष्यम् ) आ च त्वादिति चकारकरणं क्रियते, अपवादसमावेशार्थम् । इमनिच्प्रभृतिभिरपवादैः समावेशो यथा स्यात् ॥

( प्रदीपः ) **अपवादसमावेशार्थमिति** । नञ्स्नञ्समावेशार्थमित्यर्थः । भाष्यकारस्तु न्यायव्युत्पादनाय वक्ष्यमाणापवादसमावेशार्थत्वमुपन्यस्य दूषयित्वा च नञ्स्नञ्समावेशार्थत्वं विवरिष्यते ॥ **इमनिच्प्रभृतिभिरिति** । असति चकारे प्राक् त्वात् अर्थे त्वतलौ भवत इत्ययमेवार्थः स्यादिति कर्मण्येव गुणवचनादिभ्यस्त्वतलोर्विधिः स्यान्न त्वपवादेन समावेशः । चशब्दात्सोऽपि भवतीति भावः ॥

( उद्द्योतः ) **विवरिष्यत इति** । अस्य वार्तिकस्य व्याख्यास्यतीत्यर्थः । ननु 'आ त्वात्' इत्येव स सिद्धोऽत आह—**असतीति** ॥ **इत्ययमेवार्थ इति** । 'प्राग्दीव्यतः' इत्यादावर्थानामेवावधिमतां दर्शनादिति भावः ॥

( वार्तिकोक्तप्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । 'आ त्वात्' इत्येवेमनिच्प्रभृतिभिरपवादैः समावेशो भविष्यति ॥**

(प्रदीपः) **नैतदस्तीति** । आ त्वाद्याः प्रकृतयस्ताभ्यस्त्वतलौ भवत इति विज्ञायमाने सूत्रार्थे सिद्धोऽपवादैः समावेशः ॥

( उद्द्योतः ) आ त्वाद्याः प्रकृतय इति । लक्ष्यानुरोधादेवं विज्ञास्यत इति भावः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—आ त्वाद्याः प्रकृतयः—ताभ्यश्च त्वतलौ यथा स्यातां यतश्चोच्येते ॥**

( प्रदीपः ) **आ त्वाद्याः प्रकृतय इति** । गुणवचनब्राह्मणादिप्रकृतयः ॥ **ताभ्यश्चेति** । कर्मणीति भावः । अनेन सूत्रार्थो व्याख्यातः ॥ **यतश्चोच्येते इति** । अनेन चशब्दस्य प्रयोजनमाख्यायते । यतो विशेषप्रकृतेर्भावे पूर्वसूत्रेण प्रसक्ताविमनिजादिभिश्च बाधितौ ततोऽपि यथा स्यातामित्येवमर्थश्चशब्दः । अन्यथा कर्मणि त्वतल्विधावस्य सूत्रस्योपयोगात्त्वतलोरपवादैर्बाधः स्यात् ॥

( उद्द्योतः ) **गुणवचनेति** । 'आ त्वाद्याः प्रकृतयोऽप्राप्तत्वतल्कास्ताभ्यः' इत्यर्थादिति भावः ॥ **सूत्रार्थ इति** । सूत्रप्रयोजनमित्यर्थः ॥

( प्रयोजनाक्षेपभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । 'आ त्वात्' इत्येव आत्वाद्याः प्रकृतयः ताभ्यस्त्वतलौ भविष्यतः, यतश्चोच्येते ॥**

( प्रदीपः ) **एतदपि नास्तीति** । आ त्वात्प्रकृतीः सर्वा अपेक्ष्य त्वतलौ विधीयमानावपवादविषये कर्मणि च भविष्यत इति नार्थश्चशब्देनेत्यर्थः ॥

( उद्द्योतः ) आ त्वात्प्रकृतीरिति । अप्राप्तत्वतल्का इत्यर्थे मानाभावादिति भावः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—आ त्वाद्येऽर्थास्तत्र त्वतलौ यथा स्यातां, यत्र चोच्येते ॥**

( प्रदीपः ) **आ त्वाद्येऽर्था इति** । जातौ बहुवचनम् । कर्मण एकस्यैवार्थस्य वक्ष्यमाणत्वात् । **अयमर्थः**—यद्यवधिमत्यः प्रकृतय आश्रीयन्ते तदा अपवादैः समावेशः सिध्यति, प्रतिप्रसवार्थत्वादस्य सूत्रस्य । गुणवचनादिभ्यस्तु कर्मणि त्वतलोर्विधानं न सिध्यति । तस्मादवधिमदर्थपरिग्रहेण कर्मणि त्वतलौ सूत्रेण विधीयेते, चकारेण तु भावे अपवादैः समावेश्येते ॥ **यत्र चोच्येते इति** । भावे विशेषप्रकृतिभ्योऽपवादैः प्रसक्तबाधावित्यर्थः ॥

( उद्द्योतः ) **जाताविति** । 'कर्मणां बाहुल्यात्' इति वक्तुं युक्तम् ॥ **न सिध्यतीति** । प्रतिप्रसवापेक्षया विधित्वस्य गुरुत्वात्, उभयरूपत्वस्यैकवाक्येऽलाभाच्चेति भावः ॥ ननु यत्रोच्येते तत्र विधानं व्यर्थमत आह—**भावे विशेषेति** ॥

( प्रयोजनाक्षेपभाष्यम् )

**एतदपि नास्ति प्रयोजनम् । 'आ त्वात्' इत्येव आ त्वाद्येऽर्थास्तत्र त्वतलौ भविष्यतः, यत्र चोच्येते ॥**

( प्रदीपः ) **एतदपीति** । अर्थान् प्रकृतीश्चाविशेषेणावधिमत्त्वेनापेक्ष्य त्वतल्विधानान्नार्थश्चकारेणेत्यर्थः । **केचित्तु**—प्रातिपदिकसामान्यात्कर्मणि त्वतलाविच्छन्तो भाष्यमन्यथा व्याचक्षते । तत्त्वयुक्तम् । प्रकृतिविशेषसम्बद्धस्य कर्मार्थस्योपादानात् प्रकृत्यन्तरेण तस्य सम्बन्धायोग्यत्वात् । तस्माद् गुणवचनेत्यतः प्रभृति प्राक् त्वात् या विशेषप्रकृतयस्ताभ्य एव प्रकृतिभ्यः कर्मणि त्वतलौ भवतः, आपादपरिसमाप्तेर्भावकर्माधिकारात् । भावे तु प्राक्त्वादेतस्मात् सूत्रादूर्ध्वं याः प्रकृतयस्ताभ्यः । पूर्वसूत्रेण तु ङ्याप्प्रातिपदिकमात्रादिति सिद्धान्तः ॥

( उद्द्योतः ) **अर्थानिति** । अवधिसजातीयत्वस्य क्वाप्यभावेन विनिगमनाविरहादिति भावः ॥ **अन्यथा व्याचक्षत इति** । 'आ त्वाद्येऽर्थास्तत्र' इत्यस्य 'प्रातिपदिकमात्रादिति शेषः' इत्यादिरीत्येत्यर्थः ॥ **प्रकृत्यन्तरेणेति** । निराकाङ्क्षत्वादित्यर्थः ॥

( सिद्धान्तप्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—आ त्वाद्याः प्रकृतयस्ताभ्यश्च त्वतलौ यथा स्याताम्, यस्याश्च प्रकृतेरेतस्मिन् विशेषेऽन्यः प्रत्यय उत्पद्यते । किं कृतं भवति ?**

**स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानं चोदितं तन्न वक्तव्यं भवति ॥**

( प्रदीपः ) **यस्याश्चेति** । प्रकृतिविशेषान्नञ्स्नञौ प्राग्भवनात्सर्वेष्वर्थेषु विधीयमानौ त्वतलोर्बाधकौ प्राप्नुत इति तद्विषये त्वतलौ प्राप्येते । 'प्राग्भवनात्' इत्यवध्युपादानाच्च नञ्स्नञावपि भावे भवतः । अन्यथा प्राग्वतेरित्येव वक्तव्यं स्यात् । वत्यर्थे हि नञ्स्नञ्भ्यां 'पुंवत्' इति लिङ्गाच्च भाव्यम् ॥

( उद्द्योतः ) नन्वेवं भावे नञ्स्नञौ न स्यातामत आह—प्राग्भवनादिति । एतेन तद्वार्तिकशेषभूतं वावचनमपि प्रत्याख्यातम् ॥

---

( ८८२ निषेधसूत्रम् ॥ ५ । १ । २ आ. ५६ )

## २००३ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ॥ ५ । १ । १२१ ॥

( निषेधाधिकरणम् )

( निषेधप्रयोजनाक्षेपभाष्यम् )

**कस्यायं प्रतिषेधः ?**

**त्वतलोरित्याह ।**

**नैतदस्ति प्रयोजनम् ।**

**इष्येते नञ्पूर्वात्तत्पुरुषात्त्वतलौ—अब्राह्मणत्वम्, अब्राह्मणतेति ।**

**अत उत्तरं पठति—**

( प्रदीपः ) **कस्यायमिति** । प्रतिषेध्यस्यानुपादानात् अनन्तरयोश्च त्वतलोः प्रतिषेधस्यानिष्टत्वात् -**प्रश्नः** ॥ आचार्यदेशीय आह—**त्वतलोरिति** । 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति मन्यते ॥

( उद्द्योतः ) ननु त्वतलोरुपस्थितत्वात् 'कस्य ?' इति प्रश्नोऽनुपपन्नोऽत आह—**प्रतिषेध्यस्येति** ॥

( ५६९४ निषेध्यकथनवार्तिकम् ॥ १ ॥ )

**॥*॥ न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः ॥*॥**

( भाष्यम् ) **'न नञ्पूर्वात्' इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधः क्रियते ॥**

( प्रदीपः ) **उत्तरस्य प्रतिषेध इति** । अधिकारादस्य सूत्रस्येति भावः ॥

( उद्द्योतः ) ननु प्रतियोगिज्ञानपूर्वकत्वादभावज्ञानस्य कथमुत्तरस्य प्रतिषेधः ? अत एवोत्तरप्रतिषेधे 'नेड्वशि—' इत्यादौ प्रतिषेध्योपादानम्—अत आह—**अधिकारादिति** ॥

---

१ उत्तरप्रतिषेधे इति । अभावज्ञाने प्रतियोगिज्ञानस्य कारणत्वेन अस्मिन् सूत्रे निषेध्यग्रहणमावश्यकम्, सिद्धान्ते विवक्षितस्य निषेध्यस्याप्राप्त्युपपत्तेः । यथा 'नेड्वशि कृति' इति सूत्रे इड्ग्रहणम् । यदि 'आर्धधातुकस्येड्वलादेः' इत्यत ऊर्ध्वं नेड्वशीति सूत्रं प्रणीतं स्यात्तदाऽस्मिन्सूत्रे इड्ग्रहणमनावश्यकमेव । नेड्वशीति सूत्रप्रणयनसमये इट अभावात्प्रतियोगिज्ञानोपपत्त्यर्थमिड्ग्रहणम्, तद्वदत्रापि प्रतियोगिज्ञानोपपत्तये यत्नः कार्य इति भावः ॥

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् ।**

**परिगणिताभ्यः प्रकृतिभ्य उत्तरो भावप्रत्ययो विधीयते, न च तत्र काचिन्नञ्पूर्वा प्रकृतिर्गृह्यते।**

**तदन्तविधिना प्राप्नोति ।**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ।**

**यत्र तर्हि तदन्तविधिरस्ति-"पत्यन्तपुरोहितादिभ्यो यक्" ( ५।१।१२८ ) इति ।**

**यद्येतावत्प्रयोजनं स्यात्तत्रैवायं ब्रूयात्-पत्यन्ताद्यग्भवति, नञ्पूर्वात्तत्पुरुषान्नेति ॥**

( प्रदीपः ) **परिगणिताभ्य इति**—पृथ्वादिप्रभृतिभ्यो गणे सूत्रे च पठिताभ्यः ॥ **यत्र तर्हीति** । एतच्चोपलक्षणम् । 'हायनान्तयुवादिभ्योऽण्' 'इगन्ताच्च लघुपूर्वात्' 'योपधाद् गुरूपोत्तमाद् वुञ्' इत्येतैः सूत्रैर्नञ्पूर्वात्तत्पुरुषादस्त्येव प्रसङ्गः ॥ **यद्येतावदिति** । अत्र प्रदेशे प्रयोजनाभावात् 'पत्यन्त–' सूत्रस्य [1]परतः प्रतिषेधो विधेयः, स एवोत्तरत्रानुवर्तिष्यते ॥

( उद्द्योतः ) परिगणनस्याऽदर्शनादाह—**पृथ्वादीति** ॥ ननु पत्यन्तविषयकनिषेधेन कथं हायनान्तादिविषये सिद्धिः ? अत आह—**अत्र प्रदेशे इति** ॥

( प्रयोजनभाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः-उत्तरो भावप्रत्ययो नञ्पूर्वाद्बहुव्रीहेर्भवतीति ॥**

( प्रदीपः ) **एवं तर्हीति** । अत्र [2]प्रदेशे प्रतिषेधाधिकारस्योपादानादिमनिजादीनामपि प्रतिषेधो विज्ञायते । तत्र तदन्त[3]विध्यभावात् प्रसङ्गाभावात् किं प्रतिषेधेन ? कृतश्चासौ नञ्पूर्वाद्बहुव्रीहेरन्यपूर्वाच्च तत्पुरुषात्प्रत्ययविधानं ज्ञापयतीति **पूर्वः** पक्षः । अनिष्टत्वेन **तूत्तरम्** ॥

( उद्द्योतः ) ननु नञ्पूर्वाद्बहुव्रीहेस्तत्[4]सत्ताज्ञापनेऽपि कथमस्य सार्थक्यम् ? अत आह—**अत्र प्रदेशे प्रतिषेधेति** ॥ **इमनिजादीनामपीति** । तथा च तद्विषये तदन्तविधिर्ज्ञाप्यत इति भावः ॥

( आक्षेपभाष्यम् )

**नेष्यते । त्वतलावेवेष्येते । अविद्यमानाः पृथवोऽस्यापृथुः, अपृथोर्भावः-अपृथुत्वम्, अपृथुतेति ।**

( प्रयोजनभाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः-उत्तरो भावप्रत्ययोऽन्यपूर्वात्तत्पुरुषाद्भवतीति ।**

( आक्षेपभाष्यम् )

**नैवेष्यते । त्वतलावेवेष्येते । परमः पृथुः-परमपृथुः, परमपृथोर्भावः-परमपृथुत्वम्, परमपृथुता ।**

( प्रयोजनभाष्यम् )

**एवं तर्हि ज्ञापयत्याचार्यः-उत्तरो भावप्रत्ययः सापेक्षाद्भवतीति ।**

**किमेतस्य ज्ञापने प्रयोजनम् ? *नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम्* इत्युक्तं तदुपपन्नं भवति ॥**

( प्रदीपः ) **एवं तर्हीति** । प्रसङ्गा[5]भावात्प्रतिषेधो न वक्तव्यः। कृतस्तु ज्ञापयति–'[6]यत्रापि विषये उत्तरो भावप्रत्ययो न प्राप्नोति तत्रापि भवति'–न [7]पृथोर्भाव इति । अत्र[8] हि प्रकृत्यर्थस्य नञर्थापेक्षत्वात्सापेक्षत्वादसामर्थ्यादिमनिज्न प्राप्नोतीति ज्ञापकात् भवति–अप्रथिमेति । नञ्पूर्वस्य तत्पुरुषस्य प्रत्यासन्ना तदर्थविग्रहवाक्यावस्था–इति तद्विषयमेव ज्ञापनमाश्रीयते । त्वतलौ तु कृते नञ्समासे भवतो न तु सापेक्षात्, उत्तरप्रत्ययविषयत्वाज्ज्ञापनस्य ॥

( उद्द्योतः ) सापेक्षाद्भावप्रत्ययोत्पत्तौ ज्ञापकत्वं यथा तथा दर्शयति—**प्रसङ्गाभावादिति** । नञ्पूर्व[9]तत्पुरुषात्तदन्तविध्यभावेन प्रसङ्गाभाव इत्यर्थः ॥ **यत्राऽपि विषये इति** । सापेक्षे इत्यर्थः । **अयं भावः**-उत्तरपदार्थे युग[10]पदुभयसम्बन्धविवक्षायामसामर्थ्यादप्राप्तः प्रत्ययोऽनेन ज्ञाप्यते । न च ज्ञा[11]पितेऽपि कथं चारितार्थ्यम् ? 'नञ्पूर्वात्तत्पुरुषान्न किन्तु ततः प्रागेव' इति सूत्रार्थ इत्याशयात् । **ज्ञापयतीत्यस्य** च–बोधयतीत्यर्थः । तद्ध्वनयन्नाह—**अत्र हीत्यादि** ॥ ननु 'सापेक्षात्–' इत्यर्थज्ञापने 'राज्ञः पृथोर्भावः' इत्यर्थेऽपि स्यादत आह—**प्रत्यासन्नेति** ॥

भाष्ये—**सापेक्षादित्यस्य**–नञर्थसापेक्षादित्यर्थः । ननु त्वतला-

---

१ **पत्यन्तसूत्रस्य परत इति** । अस्मिन्प्रदेशेऽस्य प्रतिषेधस्यानुपयोगात् 'पत्यन्तपुरोहितादिभ्यो यक्' इति प्रदेशे तत्प्रकरणविषयकः प्रतिषेधो वक्तव्यः । तेन हायनान्तादिविषयेऽपि सिद्धिरिति भावः ॥

२ **अत्र प्रदेशे इति** । अस्य प्रतिषेधस्य अधिकारत्वाश्रयणेन प्रदेशविषयकत्वात् इमनिजादीनामप्ययं निषेधः प्राप्नोतीति भावः ॥

३ **तत्र तदन्तविध्यभावादिति** । 'पृथ्वादिभ्यः–' इत्यादिसूत्रैः प्रकृतीनामुपादानात् 'ग्रहणवता प्रातिपदिकेन–' इति तदन्तविधेर्निषेधाच्च इमनिजादीनां नञ्पूर्वात्तत्पुरुषात्प्राप्तिरेव नेति भावः ॥

४ **तत्सत्तेति** । नञ्पूर्वाद्बहुव्रीहेरिमनिजादिप्रत्ययसत्ताज्ञापनेऽपि–इत्यर्थः ॥

५ **कृतस्त्विति** । नञ्तत्पुरुषाद्भावप्रत्ययस्य कस्यापि प्राप्तिरेव नेति 'न नञ्पूर्वात्–' इति सूत्रं व्यर्थं सत् ज्ञापयतीति भावः ॥

६ ज्ञापनस्वरूपमाह—**यत्रापीति** ॥

७ तादृशं लक्ष्यमाह—**न पृथोरिति** ॥

८ न पृथोर्भाव इत्यत्र भावप्रत्ययस्याभात्रे हेतुमाह—**अत्र हीति** ॥

९ **नञ्पूर्वेति** । तदन्तविध्यभावेन नञ्तत्पुरुषात्प्रसंगाभाव इत्यन्वयः ॥

१० **युगपदिति** । न पृथोर्भाव इत्यत्र पृथुशब्दार्थे नञर्थस्य भावप्रत्ययार्थस्य च युगपदन्वयविवक्षायामित्यर्थः ॥

११ **ज्ञापितेऽपीति** । असामर्थ्यादप्राप्तः प्रत्ययो युगपदुभयसंबन्धविवक्षायामपि भवतीत्यर्थज्ञापनेऽपि तत्पुरुषसमकालमेव प्रत्ययः, तत्पुरुषोत्तरं निषेधश्चेति चारितार्थ्याभाव इत्यर्थः ॥

वपि तर्हि सापेक्षात्स्यातां, ततो नञ्समासे स्वरदोषोऽत आह—त्वतलौ त्विति ॥

(प्रयोजनाक्षेपभाष्यम्)

**एतदपि नास्ति प्रयोजनम्। आचार्यप्रवृत्तिर्ज्ञापयति—सर्वे एते तद्धिताः सापेक्षाद्भवन्तीति यदयं "नञो गुणप्रतिषेधे संपाद्यर्हहितालमर्थास्तद्धिताः" (६।२।१५५) इत्याह ॥**

(प्रदीपः) **यदयमिति** । 'वत्सेभ्यो[1] न हितः' इत्यादौ प्रतिषेधापेक्षणात्तद्धितानुत्पत्तौ नञः परस्य सम्पाद्याद्यर्थतद्धितान्तस्यान्तोदात्तविधानमनुपपन्नम्। तत्क्रियमाणं 'सामान्येन सर्वस्तद्धितो नञर्थापेक्षाद्भवति' इति ज्ञापयति । तदेवं सूत्रमेतत् प्रत्याख्यातम्। 'त्व[2]तल्भ्यां नञ्समासः—' इत्येतदिदानीं विध्यर्थं न नियमार्थम्। चतुरादिभ्यस्तु नञपेक्षेभ्योऽनभिधानात् ष्यञ्न भवति। कृते तु नञ्समासे ब्राह्मणादेराकृतिगणत्वात् ष्यञि सति 'आचतुर्यम्' इत्यादि भवति । 'यथातथयथापुरयोः पर्यायेण' इत्येतत् सूत्रं विवक्षाभेदेन रूपद्वयसिद्धिं मत्वा भाष्यकारेण प्रत्याख्यास्यते । यदा पूर्वं भावविवक्षा पश्चात्प्रतिषेधविवक्षा तदा—'अयाथातथ्यम्' अयाथापुर्य्यम्' इति भवति। पूर्वं तु प्रतिषेधविवक्षायाम् 'आयथातथ्यम्' 'आयथापुर्यम्' इति भवति। 'न पत्युर्भावः' इत्यत्र पतिशब्दः केवलं प्रातिपदिकं न पत्यन्तमिति यगभावे 'त्वतल्भ्यां नञ्समासः—' इति वचनान्नञ्समासे कृते त्वतलौ भवतः । 'न पटोर्भावः' 'न मनुष्यस्य भावः' 'न द्विहायनस्य भावः' इत्यादौ पूर्वोक्तज्ञापकान्नञर्थापेक्षत्वेऽपि पूर्वं प्रत्ययः पश्चान्नञ्समासः—'अपाटवम्' 'अमानुष्यकम्' 'अद्वैहायनम्' इति। अशुचिशब्दात्तु तत्पुरुषात् 'इगन्तात्—' ५।१।१३१ इतीष्यत एवाण्—'आशौचम्' 'अशौचम्' इति। 'नञः शुचीश्वर—' इति पूर्वपदस्य वा वृद्धिरुत्तरपदस्य नित्यम्। 'न शुक्रस्य भावः' इत्यादौ सापेक्षात् ष्यञुत्पत्तौ च 'अशौक्ल्यम्' इत्यादि भवति । तदेवं सूत्रेऽस्मिन् प्रत्याख्याते लक्ष्यदर्शनवशात् क्वचिद्भावनिषेधयोर्युगपद्विवक्षायां ज्ञापकात्—नञर्थापेक्षत्वेऽपि पूर्वं यथाप्राप्तं भावप्रत्ययः, पश्चान्नञ्समासः । त्वतलौ तु कृते नञ् समासे। क्वचित् पूर्वं भावविवक्षा क्वचित् पूर्वं निषेधविवक्षा ॥

(उद्द्योतः) **वत्सेभ्यो न हित इति** । अत्र नञ[3]मनपेक्ष्य तद्धितं कृत्वा नञ्तत्पुरुषे उत्तरपदार्थसदृशोऽन्यः प्रतीयते, न तु हितत्वादिगुणप्रतिषेध इति न सूत्रोदाहरणसम्भवः । यथार्थी[4] तत्प्रतीतिरस्तीत्युच्यते तदा ज्ञापकत्वासम्भवः । पूर्वं नञ्समासे तु तद्धितान्तोत्तरपदाभाव इति हितार्थे नञर्थप्रकृत्यर्थयोर्युगपदन्वयं विवक्षित्वा पूर्वं तद्धितं कृत्वा पश्चादवयवद्वारकसामर्थ्याश्रयेण तद्धितान्तेन नञ्समासे उदाहरणत्वं वाच्यम्, तत्र च हितार्थस्य सापेक्षत्वाद्वृत्त्यप्राप्तौ ज्ञापकत्वमित्यर्थः । 'वत्सार्थे[5] उभयविवक्षा' इति तु न युक्तं, गुणप्रतिषेधस्याप्रतीतेरिति भावः ॥ **इदं न युक्तम्[6]**, एवं हि प्रत्ययार्थस्य सापेक्षत्वं, न प्रकृत्यर्थस्य—इति सापेक्षाद्भवन्तीति ज्ञाप्यार्थासङ्गतिः । किञ्च हितार्थस्य प्रधानस्य प्रतिषेधसापेक्षत्वेऽप्यप्रधानस्य वत्सस्य न सापेक्षतेति कुतस्तद्धितानुत्पत्तिः ? इति। 'भवति च प्रधानस्य सापेक्षस्यापि समास' इत्यस्य '**उपमितम्—**' इति सूत्रे न्यायसिद्धतायाः कैयटे उक्तत्वेन वृत्त्यन्तरे[7]ऽपि प्राप्तेः, न्यायाप्राप्तौ[8] मानाभावात्। अत एव 'पिपठिषति भोक्तुम्' इत्यादौ सन्सिद्धिः, 'भोक्तुम्' इत्यस्य पठनकर्मकेच्छायामन्वयात्। 'गुण[9]प्रतिषेधग्रहणं ज्ञापकम्' इति तु वक्तुं युक्तं, तस्य हि 'अगार्दभरथिकः' इति प्रत्युदाहरणम् । तत्र हि गर्दभरथार्हणकर्तृभिन्न इत्यर्थे आर्थिकगुणप्रतिषेधसत्त्वात्प्रत्युदाहरणत्वासङ्गतिरेव, अन्यथा 'अवत्सीयः' इत्यत्रापि हिताद्यर्थे नञर्थवत्सयोर्युगपदन्वयविवक्षायामपि हितस्य धर्मित्वेन तत्र नञर्थात्यन्ताभावान्वये हिताभावः प्रतीयते, न गुणप्रतिषेधः । भेदार्थकत्वे तु न वाच्यवृत्त्या, अपि त्वार्थ्येवेति तस्याप्युदाहरणत्वं न स्यात्। 'वत्सहितत्वाभाववान्' इत्यर्थस्तु न, प्रवृत्तिनिमित्तस्यान्यत्र विशेषणतायास्तदाश्रयस्यान्यत्र विशेष्यतायाश्चादृष्टचरत्वादत्यन्तमव्युत्पन्नत्वाच्च। सूत्रं तु गुणप्रतिषेधगम्ये इत्येवं सुयोजमिति न तद्बलादीदृशव्युत्पत्त्यन्तरकल्पनाऽवकाशः । तस्माद्गर्दभरथे युगपदुभयविवक्षायां परत्वात्तद्धितोत्तरं समासे प्रत्युदाहरणत्वं वाच्यं, तदा हि 'गर्दभरथभिन्नार्हणकर्ता' इत्यर्थ इति गुणप्रतिषेधाभावः । तत्र च परत्वात्पूर्वं तद्धिते कृतेऽवयवद्वारकसामर्थ्यमाश्रित्य तद्धितान्तेनैव समासः, न तु तदवयवेन, अस्मादेव प्रतिषेधाज्ज्ञापकात्। अन्यथा तद्धितान्तस्योत्तरपदत्वाभावाद्विध्यप्राप्तौ निषेधवैयर्थ्यं स्पष्टमेवेति दिक् ॥ **प्रत्याख्यातमिति** । अत्रप्रदेशे प्रत्याख्यातमित्यर्थः । 'पत्यन्त' इत्यस्याग्रे तु 'न नञ्पूर्वात्' इति कर्तव्यमेवेति बोध्यम् ॥ **इदानीमिति** । सापेक्षादपि तद्धित इति ज्ञापने इत्यर्थः ॥ ननु सापेक्षादपि तद्धितोत्पत्तौ चतुरादिभ्यो युगपदुभयविवक्षायां परत्वात्प्रत्यये 'अचातुर्यम्' इति स्यात्, सूत्ररीत्या तु 'आचतुर्यम्' इति—इष्यते, अत आह—**चतुरादिभ्य इति** ॥ **न भवतीति**। 'ष्यञ्' इति शेषः । त्वतलौ तु भवत एव, 'त्वतल्भ्याम्' इति वचनात् ॥ नन्वेवं कृतनञ्समासात्ष्यञपि न

---

१ नञो गुणप्रतिषेधे इत्यस्य ज्ञापकत्वमुपपादयति—वत्सेभ्यो नेति ॥

२ 'तस्य भावस्त्वतलौ' इति सूत्रे 'त्वतल्भ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्धम्' इति वार्तिकम् । न्यायेनैव पूर्वं नञ्समासे सिद्धे 'त्वतल्भ्याम्' इति वचनं नियमार्थमिति च कैयटेनोक्तम् ॥

३ नञमनपेक्ष्येति । नञ्सम्बन्धात्प्राक् तद्धितप्रत्यये ततश्च नञ्समासे तत्र नञो गुणप्रतिषेधे विद्यमानत्वाभावेन न तादृशस्य 'नञो गुण—' इति सूत्रोदाहरणत्वं सम्भवतीत्यर्थः ॥

४ यथार्थीति । वत्सहितस्य निषेधेऽपि हितस्यापि तत्र निषेधः प्रतीयत एवेति नञोगुणप्रतिषेधार्थकत्वमपि संभवतीत्युक्तौ तु सूत्रोदाहरणस्य संभवेन वैयर्थ्याभावाज्ज्ञापकत्वासंभव इति भावः ॥

५ वत्सार्थे इति । नञर्थस्य हितार्थस्य चेति भावः ॥

६ इदं न युक्तमिति । कैयटेन हि हितार्थे नञर्थप्रकृत्यर्थयोरन्वयविवक्षायां सापेक्षत्वान्न प्राप्नोतीत्याद्युक्तं तन्न युक्तम् ॥

७ वृत्त्यन्तरेऽपि—तद्धितवृत्तावपि ॥

८ न्यायाप्राप्ताविति । न्यायेन प्राप्तस्य वस्तुनः अप्राप्तौ मानस्य-प्रमाणस्याभावादित्यर्थः ॥

९ गुणप्रतिषेधेति । प्रदीपे संपूर्णसूत्रस्य ज्ञापकत्वं यदुक्तन्तदपेक्षया गुणप्रतिषेधग्रहणमेव ज्ञापकमिति युक्तमिति भावः ॥

स्यादत आह—कृते त्विति ॥ नञ्समासात् ष्यञिष्यत इत्यत्र भाष्यं प्रमाणत्वेनोपन्यस्यति—यथातथेति । 'अचतुर–' इत्यादिसूत्रशेषोऽप्यत्र गमकः । स च ब्राह्मणादेराकृतिगणत्वात्प्रत्याख्यातव्य इत्यन्यत् । अन्यथा 'चतुर–' इत्यादिसूत्रशेषे कृतेऽपि ष्यञ्विधौ तदन्तविध्यभावात्तदप्राप्तिरेव स्यात् ॥

**न पत्यन्तमिति** । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति निषेधादिति भावः ॥ **त्वतलौ भवत इति** । नञ्समासे कृते यक् तु न, 'न नञ्पूर्वात्' इति निषेधात् । तत्र तत्कर्तव्यताया उक्तेः । अस्मात्कैयटात् एतत्प्रदेशे प्रत्याख्याने एव पूर्वकैयटतात्पर्यं न सर्वथा प्रत्याख्याने इति बोध्यम् ॥ **पूर्वं प्रत्यय इति** । कृतनञ्समासात्तु न, पूर्वोक्तयुक्तेः । बहुव्रीहेस्तु भवत्येव । अशुचिशब्दादिष्यत इत्यत्र प्रमाणमाह—**नञ इति** । आशौचशब्दात् भावप्रतीतेरिति भावः ॥

**तदेवमिति** । तदेवम्–अत्रप्रदेशे प्रत्याख्याते इत्यर्थः । 'पूर्वं निषेधविवक्षा' इत्यनन्तरम्–'एवं व्यवस्थामाश्रित्य सर्वथा सूत्रं प्रत्याख्येयम्' इति शेषः ॥ **लक्ष्यदर्शनवशादिति** । एवञ्च 'पत्यन्त'–इत्युत्तरमपीदं न कार्यमिति भावः ॥ **कृते नञ्समास इति** । 'भवतः' इति शेषः । **क्वचित्पूर्वमिति** । 'लक्ष्यदर्शनवशात्' इति अत्राप्यपेक्ष्यते । पत्यन्तादिविषये च पूर्वं भावविवक्षैवेति न नञ्तत्पुरुषात्तेषां प्रसङ्ग इति न तत्रापि प्रदेशे 'न नञ्पूर्वात्तत्पुरुषात्' इति वक्तव्यमिति भावः ॥

( ८८३ विधिसूत्रम् ॥ ५ । १ । २ आ. ५७ )

## २००४ पृथ्वादिभ्य इमनिज्वा ॥ ५ । १ । १२२ ॥

( विकल्पाधिकरणम् )

( वाप्रयोजनजिज्ञासाभाष्यम् )

**वावचनं किमर्थम्?**

**वाक्यमपि यथा स्यात् ।**

**नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा ( ४।१।८२ ) तया वाक्यमपि भविष्यति ।**

**इदं तर्हि प्रयोजनम्–त्वतलावपि यथा स्याताम् ।**

**एतदपि नास्ति प्रयोजनम् । 'आ च त्वात्' इत्येतस्माद्यत्नात् त्वतलावपि भविष्यतः ॥**

**अत उत्तरं पठति—**

( प्रदीपः ) **वावचनमिति** । वक्ष्यमाणेऽभिप्रायः । आचार्यदेशीयः परिहरति—**वाक्यमपीति** ॥

( ५६९५ वाप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ पृथ्वादिभ्यो वावचनमणसमावेशार्थम् ॥ * ॥**

( भाष्यम् ) **पृथ्वादिभ्यो वावचनं क्रियते, अण्समावेशो यथा स्यात् । पार्थवम्, प्रथिमा ॥**

( प्रदीपः ) **अण्समावेशार्थमिति** । यत्रोत्सर्गापवादौ विभाषा तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्तते, वाक्यानुज्ञानार्थत्वाद्विभाषायाः । लिङ्गं च 'पारे मध्ये षष्ठ्या वा' 'पीलाया वा' इत्यादिषु विकल्पवचनमसार्थकम्–इति अण्समावेशार्थमिह वावचनम् ॥

( ८८४ विधिसूत्रम् ॥ ५ । १ । २ आ. ५८ )

## २००६ गुणवचनब्राह्मणादिभ्यः कर्मणि च ॥ ५ । १ । १२४ ॥

( ष्यञ्प्रत्ययाधिकरणम् )

( ५६९६ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानं कर्तव्यम् । चातुर्वर्ण्यम् । चातुर्वैद्यम् । चातुराश्रम्यम् ॥**

( प्रदीपः ) **चातुर्वर्ण्यादीनामिति** । प्रत्ययान्तोच्चारणं भावकर्मसम्बन्धनिवृत्त्यर्थमिति स्वार्थे एव ष्यञ् भवति । चत्वारो वर्णाः–चातुर्वर्ण्यम् । चतुर्वेदमेव–चातुर्वैद्यम् । **अथ वा** चतस्रो विद्या अधीते, 'विद्यालक्षणकल्पसूत्रान्तादकल्पादेः' इति ठकः 'सर्वसादेर्द्विगोश्च लः' इति लुक् । चतुर्विद्य एव–चातुर्वैद्यम् । अनुशतिकादेराकृतिगणत्वादुभयपदवृद्धिः ॥

( उद्योतः ) 'चतुर्वर्णादिभ्यः' इत्येव वक्तुमुचितमत आह—**प्रत्ययान्तेति** ॥

( ५६९७ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अर्हतो नुम्च ॥ * ॥**

( भाष्यम् ) **अर्हतो नुम्च ष्यञ्च वक्तव्यः । अर्हतो भावः—आर्हन्त्यम् । आर्हन्ती ॥**

(प्रदीपः) **अर्हतो नुम् चेति** । 'अर्हः प्रशंसायाम्' इति शत्रन्तोऽर्हच्छब्दः पूजाद्यर्थाभिधायी ॥ **आर्हन्तीति** । षित्वकरणात् स्त्रियामपि ष्यञन्तः प्रयोगः । तथा च–औचिती, मैत्री–इत्यादि प्रयुज्यते ॥

( ८८५ विधिसूत्रम् ॥ ५ । १ । २ आ. ५९ )

## २००७ स्तेनाद्यन्नलोपश्च ॥ ५।१।१२५ ॥

( यत्प्रत्ययाधिकरणम् )

( नेति संघातग्रहणसमर्थकं भाष्यम् )

**किमिदं नलोपे वर्णग्रहणम्, आहोस्वित् संघातग्रहणम् ।**

कि चातः ?

यदि वर्णग्रहणम्, स्तेयम्, नलोपे कृते अयादेशः प्राप्नोति ।

अथ संघातग्रहणम्, अन्त्यस्य लोपः कस्मान्न भवति ।

सिद्धोऽन्त्यलोपः 'यस्य' ६।४।१४८ इत्येव । तत्रारम्भसामर्थ्यात्सर्वस्य भविष्यति ॥

(प्रदीपः) अयादेशः प्राप्नोतीति । 'यस्य-'इत्यकारलोपस्य पूर्वविधौ स्थानिवद्भावात् ॥ अथेति । 'नानर्थकेऽलोन्त्यविधिः-' इत्येषा परिभाषा प्रयोजनाभावान्नादृता ॥ आरम्भसामर्थ्यादिति । 'अलोऽन्त्यस्य' इत्यनुसंहारो बाध्यत इत्यर्थः ॥

( ८८६ विधिसूत्रम् ॥ ५ । १ । २ आ. ६० )

## २०१२ हायनान्तयुवादिभ्योऽण् ॥ ५ । १ । १३० ॥

( अणोऽधिकरणम् )

( ५६९८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अणुप्रकरणे श्रोत्रियस्य घलोपश्च ॥ * ॥

( भाष्यम् ) अणुप्रकरणे श्रोत्रियस्योपसंख्यानं कर्तव्यम्, घलोपश्च वक्तव्यः । श्रोत्रियस्य भावः श्रौत्रम् ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये पञ्चमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

॥ पादश्च समाप्तः ॥

( प्रदीपः ) घलोपश्चेति । यदा 'छन्दसः श्रोत्रभावो घंश्च प्रत्यय' इति पक्षस्तदा घस्य लोपः, यदा तु 'वाक्यार्थे पदवचनम्' इति दर्शनं तदा घशब्देन 'इय' इतिरूपं लक्ष्यते । क्वचित्तु 'यलोपश्च' इति पाठः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य प्रथमे पादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ।

( उद्द्योतः ) क्वचिदिति । तत्रे च 'य' इति सङ्घातग्रहणं, पश्चादिकारस्य 'यस्य'-इति लोपः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य प्रथमपादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ॥

१ क. पुस्तके 'यलोपश्च' इति पाठः ॥

२ तत्र चेति । 'यलोपश्च वक्तव्यः' इति भाष्यपाठे यस्य सङ्घातग्रहणं यलोपान्तरं च अणमाश्रित्य इकारलोप इति भावः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ८२६ | ३२ | २८ | ६० | ८८६ |
| अव्याख्यातसूत्राणि | १०५६ | २६ | ५० | ७६ | ११३२ |
| समुदितसूत्राणि | १८८२ | ५८ | ७८ | १३६ | २०१८ |
| वार्तिकानि | ५५८६ | ६१ | ५१ | ११२ | ५६९८ |

( ८८७ विधिसूत्रम् ॥ ५ । २ । १ आ. १ )

## २०२२ विभाषा तिलमाषोमाभङ्गाणुभ्यः ॥ ५ । २ । ४ ॥

( यतोऽधिकरणम् )

( उद्द्योतः ) खञि प्राप्ते वचनम् ॥

( ५६९९ पूर्वपक्षिविधिवार्तिकम् ॥ १ ॥ )

॥ * ॥ तिलादिभ्यः खञ्च ॥ * ॥

( भाष्यम् ) तिलादिभ्यः खञ्चेति वक्तव्यम् । तिल्यम् । तैलीनम् ।

किमर्थमिदमुच्यते, न यता मुक्ते 'धान्यानां भवने क्षेत्रे खञ्' ( ५।२।१ ) इत्येव सिद्धम् ।

न सिध्यति ।

किं कारणम् ?

( प्रदीपः ) न यता मुक्त इति । महाविभाषया वाक्ये सिद्धे विभाषाग्रहणमुत्सर्गप्राप्त्यर्थमेवेति भावः ॥

( उद्द्योतः ) यत्रोत्सर्गाऽपवादमिति न्यायात्खञप्राप्तेराह— महाविभाषयेति ॥

( ५७०१ समर्थकवार्तिकम् ॥ २ ॥ )

॥ * ॥ उमाभङ्गयोरधान्यत्वात् ॥ * ॥

( भाष्यम् ) 'धान्यानां भवने क्षेत्रे खञ्' इत्युच्यते, न चोमाभङ्गे धान्ये ।

चमेषु यत्पठ्यते तद्धान्यम्, न चैते तत्र पठ्येते ॥

( प्रदीपः ) उमाभङ्गयोरिति । निमित्ताभावात्ताभ्यां खञोऽप्राप्तिः । विभाषाग्रहणं तु तिलमाषाणुभ्य एव खञः प्राप्त्यर्थं स्यात् ॥ चमेष्विति । 'यवाश्च मे माषाश्च मे' इति चमेशब्दस्य पुनःपुनरुच्चारणाच्चमेशब्देन तद्वन्तोऽनुवाका उच्यन्ते । अथ वा 'च मे' शब्दस्य 'चम्' इति यन्मकारान्तं तदनुकरणं— चम्' इति । आगन्तुना चाकारेण चमशब्दो भवति । चमशब्दो विद्यते येष्वनुवाकेषु ते—चमाः । 'अध्यायानुवाकयोर्लुक्' इति छस्य लुक् ॥

( उद्द्योतः ) उमा—अतसी । भङ्गा—प्रसिद्धा ॥ निमित्ताभावादिति । धान्यत्वाभावादित्यर्थः ॥ ननु 'च मा' इति न किञ्चित्प्रसिद्धं, चकारमकारेषु च धान्यानां पाठोऽसम्भवीत्यत आह— यवाश्च मे इति ॥ ननु 'च मे'शब्देन तद्वदनुवाकोक्तौ मत्वर्थप्रत्ययं विनाऽसाधुत्वापत्तिरत आह—अथ वेति । एकारान्तानुकरणादेव छलुकि सिद्धे, आगन्तुकाकारपर्यन्तं धावनं किमर्थमिति चिन्त्यम् ॥

( खञ्ग्रहणाक्षेपभाष्यम् )

तत्तर्हि खञ्ग्रहणं कर्तव्यम् ?

न कर्तव्यम् ।

प्रकृतमनुवर्तते ।

क्व प्रकृतम् ?

धान्यानां भवने क्षेत्रे खञिति ॥

( अनुवर्तनाक्षेपभाष्यम् )

यदि तदनुवर्तते, "व्रीहिशाल्योर्ढक्" (२) "यवयवकषष्टिकाद्यत्" ( ३ ) इति खञ्चेति खञपि प्राप्नोति ॥

( आक्षेपपरिहारभाष्यम् )

सम्बन्धमनुवर्तिष्यते—धान्यानां भवने क्षेत्रे खञ् ।

व्रीहिशाल्योर्ढग्भवति, धान्यानां भवने क्षेत्रे खञ् ।

यवयवकषष्टिकाद्यद्भवति, धान्यानां भवने क्षेत्रे खञ्भवति ।

विभाषातिलमाषोमाभङ्गाणुभ्यः, भवने क्षेत्रे खञ्ग्रहणमनुवर्तते । धान्यानामिति निवृत्तम् ॥

( प्रदीपः ) सम्बन्धमनुवर्तिष्यत इति । धान्यग्रहणेन सम्बन्धमनुरोत्स्यत इत्यर्थः । अथ वा सम्बध्यत इति सम्बन्धः । धान्यग्रहणसम्बद्धमनुवर्तिष्यते इत्यर्थः । ततो धान्यसामान्यसम्बन्धं खञ्ग्रहणं व्रीह्यादिभिर्वाक्यविशेषैर्न सम्बध्यते । 'भवने क्षेत्रे' इत्येतत्तु प्रत्ययेनाभिधायकेन सम्बध्यते ॥

( उद्द्योतः ) सम्बन्धस्याप्रकृतत्वात्तदनुवृत्तिः कथमत आह— धान्येति । भावे घञिति भावः ॥ अनुरोत्स्यत इति । खञत्र कर्ता । धातूनामनेकार्थत्वादनुपूर्वकवृत्तेरनुरोधोऽप्यर्थ इति भावः ॥ अथ वेति । कर्मणि घञ् । एवञ्च 'अनुवर्त्तिष्यते' इति यथाश्रुतमेवेति भावः ॥ व्रीह्यादिभिरिति । तद्घटितैरित्यर्थः ॥ प्रत्ययेनेति । तस्यार्थाकाङ्क्षित्वादिति भावः । अत एव 'विभाषा—' इतिसूत्रे 'धान्यानाम्—' इत्यस्यैव निवृत्तिर्भाष्ये उक्ता ॥

( परिहारान्तरभाष्यम् )

अथ वा मण्डूकप्लुतयोऽधिकाराः ।

यथा—मण्डूका उत्प्लुत्योत्प्लुत्य गच्छन्ति, तद्वदधिकाराः ॥

( प्रदीपः ) अथ वेति । यत्रैवार्थित्वं तत्रैवाधिकाराः सम्बध्यन्ते, नान्यत्रेत्यर्थः ॥

( उद्द्योतः ) मण्डूकस्य चेतनत्वेन तथा गमनसम्भवेऽपि शब्दस्य कथं तथा गमनमत आह—यत्रैवेति ॥ अर्थित्वम्—आकाङ्क्षा । न तु नदीस्रोतोन्यायेनाधिकार इति भावः ॥

( परिहारान्तरभाष्यम् )

अथ वा अन्यवचनाच्चकाराकरणात् प्रकृतस्यापवादो विज्ञायते, यथोत्सर्गेण प्रसक्तस्यापवादः । अन्यस्य प्रत्ययस्य वचनाच्चकारस्य चानुकर्षणार्थस्याकरणात्प्रकृतस्य खञो ठग्यतौ बाधकौ भविष्यतः, यथोत्सर्गेण प्रसक्तस्यापवादो बाधको भवति ॥

( प्रदीपः ) यथोत्सर्गेणेति । उत्सर्गस्यान्यत्र चरिता-

र्थत्वादपवादविषये प्रवृत्तिः सन्दिग्धा—इति—असन्दिग्धेनापवादेनासौ बाध्यते । एवं खञ उत्तरार्थायामनुवृत्तौ नान्तरीयकोपस्थानसम्भवात्सन्दिग्धप्रवृत्तित्वादसन्दिग्धप्रवृत्तिभ्यां ढग्यद्भ्यां बाधः । 'धान्यानाम्–' इत्यनेन प्राप्तस्य खञो ढग्यतावपवादौ, न तु तत्रानुवृत्त्या सन्निहितस्येति साधर्म्यवैधर्म्यसम्भवात्—'यथोत्सर्गेण प्रसक्तस्य–' इत्युक्तम् ॥

**( उद्द्योतः )** अपवादेनासाविति । यथा केन अणिति भावः ॥ नन्वत्राप्युत्सर्गापवादभावसत्त्वात् दृष्टान्तदार्ष्टान्तिकभावोऽनुपपन्नोऽत आह—**धान्यानामित्यनेनेति** । सन्दिग्धप्रवृत्तिकत्वात्साधर्म्यं बोध्यम् । अनुवृत्त्या सन्निहितस्यानुवृत्तिसामर्थ्येन बाधासम्भवाद्वैधर्म्यं बोध्यम् ॥

( परिहारान्तरभाष्यम् )

**अथ वा एतज्ज्ञापयति—अनुवर्तन्ते नाम विधयो न चानुवर्तनादेव भवन्ति ।**

**किं तर्हि ?**

**यत्नाद्भवन्ति ॥**

**( प्रदीपः ) अथ वेति ।** विभाषाग्रहणमेव ज्ञापयति—'अनुवर्तमाना अप्यधिकारा यत्र यत्नो विभाषाग्रहणादिकस्तु तत्रैव भवन्ति नान्यत्र' इति । अन्यथा विभाषाग्रहणमनर्थकं स्यात्, अनुवर्तनादेव खञः सिद्धत्वात् ॥

( सिद्धान्तभाष्यम् )

**अथ वा यता मुक्ते 'धान्यानां भवने क्षेत्रे खञ्' इत्येव सिद्धम् ।**

**ननु चोक्तं न सिध्यति ।**

**किं कारणम् ?**

**उमाभङ्गयोरधान्यत्वादिति ।**

**नैष दोषः ।**

**धिनोतेर्धान्यम्, एते चापि धिनुतः ।**

**अथ वा शणसप्तदशानि धान्यानि ॥**

**( प्रदीपः ) धिनोतेरिति** । योगरूढिरियम्—उमाभङ्गयोरपीति भावः । चमकेषु तु—अधान्यान्यपि कानिचित्पठ्यन्ते, धान्यान्यपि कानिचिन्न पठ्यन्ते । न हि तद्धान्यपरिगणनार्थमिति तत्रापाठादुमाभङ्गयोरधान्यत्वं न भवति ॥ **शणसप्तदशानीति** । धान्यपरिगणनार्था स्मृतिरियम् ॥

**( उद्द्योतः )** नन्वतिप्रसङ्गोऽत आह—**योगरूढिरिति** । श्रूयते च—'धान्यमसि धिनुहि देवान्' इति ॥ ननु धान्यपरिगणनार्थचमकानुवाकविरोधोऽत आह—**अधान्यान्यपीति** । अस्मादीनीत्यर्थः ॥ **धान्यान्यपीति** । कोद्रवादीनि । भाष्ये—**धिनुत इति** । प्रीणीत इत्यर्थः ॥ **स्मृतिरिति** । उमाभङ्गयोरपि शणविशेषत्वाद्धान्यत्वमिति भावः ॥

---

( ८८८ विधिसूत्रम् ॥ ५ । २ । १ आ. २ )

## २०२४ यथामुखसंमुखस्य दर्शनः खः ॥ ५ । २ । ६ ॥

( खप्रत्ययाधिकरणम् )

( निपातनाभिप्रायशङ्काभाष्यम् )

**सममुखेति किं निपात्यते ?**

( ५७०२ निपातनार्थबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ संमुखेति समस्यान्तलोपः ॥ * ॥**

**( भाष्यम् ) संमुखेति समस्यान्तलोपो निपात्यते । सममुखस्य दर्शनः—संमुखीनः ॥**

**( प्रदीपः ) समस्यान्तलोप इति** । समं मुखं यत्रादर्शादौ प्रतिबिम्बाश्रये सति दृश्यते स हि—संमुखीन इति प्रयोगदर्शनान्निपातनमाश्रितम् । संशब्दस्य निपातस्यार्थसङ्गत्यभावादनाश्रयणम् । प्रत्ययसन्नियोगेनाकारलोपो निपात्यमानस्तदभावे न भवति । संमुखीनादर्शादिसादृश्याच्चान्योऽप्यभिमुखावस्थानः संमुखीन उच्यत इत्याहुः ॥

**( उद्द्योतः )** ननु समुपसर्गपूर्वात्खेनैव सिद्धे निपातनं व्यर्थमत आह—**समं मुखमिति** । सर्वं मुखमित्यर्थः । न चात्रार्थे 'सम्' इति निपातस्य सङ्गतिरस्तीति भावः ॥ **दर्शन इति**—अधिकरणे ल्युट् ॥ **न भवतीति** । अत एव भाष्ये 'सममुखस्य दर्शनः' इत्येव विग्रहो दर्शितः । तेन 'संमुखस्य दर्शनः' इति वृत्तिकारोक्तमयुक्तमिति भावः ॥ नन्वेवं 'संयुगे संमुखीनं तं' इत्यादिप्रयोगासङ्गतिरत आह—**संमुखीनादर्शादीति** ॥

---

( ८८९ विधिसूत्रम् ॥ ५ । २ । १ आ. ३ )

## २०२७ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ॥ ५ । २ । ९ ॥

( अयानयपदार्थबोधकं भाष्यम् )

**अयानयं नेय इत्युच्यते, तत्र न ज्ञायते कः—अयः, कः—अनय इति ॥**

**अयः प्रदक्षिणम् ।**

**अनयः प्रसव्यम् । प्रदक्षिणप्रसव्यगमिनां शाराणां यस्मिन् परैः पदानामसमावेशः सः—अयानयः । अयानयं नेयः—अयानयीनः, शारः ॥**

**(प्रदीपः) तत्र न ज्ञायत इति** । अयनं—'अयः' इति गमनमात्रमयशब्देनोच्यते । तत्र प्रतिषेधस्तु 'अनय'शब्देन—इति विरुद्धार्थाभिधानात् **'अयानयं नेयः'** इत्यसमन्वयाशङ्कया प्रश्नः ॥ **अयः प्रदक्षिणमिति** । एकद्यूतकारापेक्षया शारस्य प्रदक्षिणं गमनम्—अयः, द्वितीयापेक्षया प्रसव्यं वामापरपर्यायं गमनम्—'अनयः' रूढिवशादुच्यते ॥ **परैरिति** । द्वितीयद्यूत-

कारसम्बन्धिभिः शारैः **पदानां**–स्थानानां गृहापरपर्यायाणा-**मनाक्रमणम्**–अनध्यासनमित्यर्थः ।

**'ससहायस्य शारस्य परैर्नाक्रम्यते पदम् ।**
**असहायस्तु शारेण परकीयेण बाध्यते ॥'**

इति द्यूतव्यवहारः । अयसहितः–अनय इत्युत्तरपदलोपी समासस्तत्पुरुषः । **अथ वा**–अयश्चासावनयः–अयानय इत्येक-देशद्वारेण समुदायस्य कृताकृतादिवत् व्यपदेशात्समानाधिकरण-समासः, समाहारद्वन्द्वो वा ॥ **अयानयमिति** । नयतेर्द्विकर्म-कत्वात् 'अयानयम्' इत्यप्रधानेऽपि कर्मणि द्वितीया । प्रधाने तु कृत्यप्रत्ययः । तत्र **केचित्**–फलकशिरस्स्थस्यैव स्वशारवर्गमाने-यस्य 'अयानयीनम्' इत्यभिधानमिच्छन्ति । यस्तु शार एकपार्श्व एव संचरति तत्र न भवति प्रत्ययः, यो हि शारः पार्श्वात्पार्श्वा-न्तरमानीयते स एवायानयं नीयते । अन्यस्तु अयमेव नीयते, अनयमेव वा ॥

**( उद्योतः )** अयानययोर्धटाघटयोरिवार्थः प्रसिद्ध एवेत्यत आह—**अयनमिति** । एवञ्च प्रकृतान्वययोग्योऽर्थो न ज्ञायत इत्यर्थ इति भावः ॥ ननु प्रदक्षिणप्रसव्यगमनमेकस्य कथमत आह—**एक-द्यूतकारेति** ॥ ननु प्रदक्षिणप्रसव्यगमनमात्रे शब्दाल्लभ्येते, 'शारस्य' इति विशेषलाभः कथम्? अत आह—**रूढीति** ॥ **उच्यत इति** । अयानयशब्दाभ्यामित्यर्थः ॥

भाष्ये—**प्रदक्षिणेत्यादि** । अनेन गतिविशेषवाचि-अयानयश-ब्दाभ्यां सव्यापसव्यगामिशाराणां तादृशगत्या प्राप्यं स्थलविशेषं शारयुगादिस्थानं लक्षणयोच्यते । ये हि परशारभिया युग्मादिस्थानं प्रापणीयाः, ते–अयानयीना इत्युच्यन्ते इति भावः ॥ **पदानां**–स्थान-विशेषाणां मध्ये यस्मिन्स्थानविशेषे **परैः**–द्वितीयद्यूतकारसम्बन्धिभिः **शारैः**–श्नन्त्येभिर्द्यूतकाराः परस्परमिति–शारास्तैः, **असमावेशः**–अनतिक्रमणमित्यक्षरार्थः ॥ तं स्थलविशेषं दर्शयति—**ससहायस्येति** । अयानययोर्भेदात्कर्मधारयानुपपत्तेराह-**उत्तरपदलोपीति** ॥ **समु-दायस्य कृताकृतादिवदिति** । यथा तत्रैकदेशद्वारा समुदायस्य तत्त्वं, तथाऽत्र गतिसमुदायस्य किञ्चिदपेक्षया सव्यत्वम्, अन्यापे-क्षयाऽपसव्यत्वं चेति कर्मधारय इति भावः ॥ **समाहारद्वन्द्वो वेति** । **इदं चिन्त्यम्**, 'सोऽयानयः' इति भाष्ये पुँल्लिङ्गनिर्देशात् ॥

**फलकशिर इति** । आरम्भकाले यत्र स्थाने शाराः स्थाप्यन्ते तच्छिरः, तत्र स्थितः शारः परपार्श्वादात्मपार्श्वान्तरमानीयते तत्रै-वायं प्रयोग इष्यते इति भावः ॥ **अन्यस्त्वयमेवेति** । अस्योप-पत्तिश्चिन्त्या महद्भिः ॥

—————

( ८९० विधिसूत्रम् ॥ ५ । २ । १ आ. ४ )

## २०२८ परोवरपरम्परपुत्रपौत्रमनुभवति ॥ ५ । २ । १० ॥

( निपातनजिज्ञासाभाष्यम् )

**परोवरेति किं निपात्यते?**

( ५५०३ निपातनार्थबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ परोवरे परस्योत्ववचनम् ॥ * ॥**

**( भाष्यम् ) परोवरेति परस्यौत्वं निपात्यते ॥**

**( प्रदीपः ) परस्योत्ववचनमिति** । परशब्दस्यान्तस्य ओकारो निपात्यत इत्यर्थः । ततः 'एङः पदान्तादति' इति पूर्वैकादेशः ॥

**( उद्योतः )** 'उत्वं परशब्दान्तस्य' इत्यर्थे 'परोवर' इत्यसिद्धेराह—**ओकार इति** ॥

( सूत्रनिर्देशोपपादकं भाष्यम् )

**यद्येवं परस्यौत्ववचनमिति प्राप्नोति ।**
**शकन्ध्वादिन्यायेन निर्देशः ।**
**अथ वा नैवं विज्ञायते परस्यौत्वं निपात्यत इति ।**
**कथं तर्हि?**
**परस्य शब्दरूपस्यादेरुत्वं निपात्यत इति । परांश्चावरांश्चानुभवति—परोवरीणः ।**

**(प्रदीपः) शकन्ध्वादिन्यायेनेति** । 'शकन्ध्वादिषु पररूपं वक्तव्यम्' इति पररूपेण निर्देशः ॥ **परस्येति** । अवरशब्दस्या-देरकारस्येत्यर्थः । तत्राद्गुणः । तत्र **केचित्**सामान्येन निपातनमि-च्छन्ति । तेन खप्रत्ययाभावेऽपि प्रयोग उपपन्नो भवति–'पारो-पर्यवित्' इति, 'पारम्पर्यमविच्छिन्नम्' इति च । **अन्ये तु** परम्पराशब्दमव्युत्पन्नमाचक्षते । तस्मात्स्वार्थे ष्यञि–पारम्पर्य-मिति भवति । पारोवर्यविदित्यस्यासाधुत्वमाहुः प्रत्ययसंनियोगेनैव निपातनस्य युक्तत्वं मन्यमानाः ॥

**( उद्योतः ) मन्यमाना इति** । अत एव 'परांश्च अवरांश्च' 'परांश्च परतरांश्च' इत्यनादेशेनैव विग्रहो दर्शितो भाष्ये । 'पारो-वर्यवित्' इत्येष निरुक्ते दृश्यते प्रयोगः ॥

( निपातनजिज्ञासाभाष्यम् )

**अथ परम्परेति किं निपात्यते?**

( ५७०४ निपातनार्थबोधकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ परपरतराणां परम्परभावः ॥ * ॥**

**( भाष्यम् ) परपरतराणां परम्परभावो निपात्यते । परांश्च परतरांश्चानुभवति—परम्परीणः ॥**

—————

( ८९१ विधिसूत्रम् ॥ ५ । २ । १ आ. ५ )

## २०३० समां समां विजायते ॥५।२।१२॥

( आक्षेपभाष्यम् )

**इह–समांसमीना गौः "सुपो धातुप्रातिपदिकयोः" ( २।४।७१ ) इति सुब्लुक् प्राप्नोति ॥**

( ५७०५ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ समां समां विजायते इति यलोपवचनादलुग्विज्ञानम् ॥ * ॥**

**( भाष्यम् ) समां समां विजायते इति यलोप-**

वचनादलुग्विज्ञानं भविष्यति । यदयं यलोपं शास्ति तज्ज्ञापयत्याचार्यः—नात्र लुग्भवतीति ॥

( प्रदीपः ) विजायते-प्रसूयत इत्यर्थः । तत्र 'समायां समायाम्' इत्यस्मात्पदसमुदायात् प्रत्ययो वचनाद्भवति । तद्धितान्तत्वात् प्रातिपदिकत्वे सति तदवयवस्योत्तरपदवत् पूर्वपदेऽपि सुपो लुक् प्राप्तो यलोपवचनान्न भवति । याटः सुबभक्तत्वात्सुब्लुकैव यलोपे सिद्धे सूत्रे यलोपवचनं नियमार्थं—'यकारस्यैव लोपो भवति न तु सर्वस्य प्रत्ययस्य' इत्यर्थः ॥

( उद्द्योतः ) ननु सकृदुत्पन्नस्य न पुनरुत्पत्तिरत आह—प्रसूयत इति । प्रत्ययार्थोऽयम् ॥ ननु समुदायस्यासुबन्तत्वात्कथं प्रत्ययोऽत आह—पदसमुदायादिति । वीप्साद्विर्वचनमित्यन्ये ॥ ज्ञापकत्वमुपपादयति—तद्धितान्तत्वादिति । 'तदवयवस्य सुपः' इत्यन्वयः ॥

( ५७०६ प्रत्याक्षेपवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ समां समां विजायत इति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वचनम् ॥ * ॥

( भाष्यम् ) समां समां विजायत इति यलोपवचनादलुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वक्तव्यः ॥

( प्रदीपः ) उत्तरपदस्य लुग्वचनमिति । यलोपनिपातनात् पूर्वपदवदुत्तरपदेऽपि लुङ् न प्राप्नोतीति भावः ॥

( ५७०७ समाधानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ सिद्धं तु पूर्वपदस्य यलोपवचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

पूर्वपदस्य यलोपो वक्तव्यः ॥

( प्रदीपः ) सिद्धं त्विति । तेन पूर्वपद एव यलोपनिपातनादामः श्रवणं भवति । उत्तरपदे तु सुब्लुक् भवत्येवेत्यर्थः ॥

( उद्द्योतः ) भाष्ये—सिद्धं तु पूर्वपदस्येति-प्रत्ययसन्नियोगशिष्टम्[1] ॥

( ५७०८ पक्षान्तरेण समाधानवार्तिकम् ॥ ४ ॥ )

## ॥*॥ अनुत्पत्तावुत्तरपदस्य[2] वाचनम् ॥*॥

( भाष्यम् ) अनुत्पत्तौ पूर्वपदस्य उत्तरपदस्य च यलोपो वा वक्तव्यः ।

समां समां विजायते, समायां समायां विजायत इति ॥

( प्रदीपः ) अनुत्पत्ताविति । वाक्ये पूर्वोत्तरपदयोर्वा यलोपो वक्तव्यः । तेन द्वैरूप्यं भवति ॥

( उद्द्योतः ) नन्वेवं सौत्रनिर्देशासङ्गतिरत आह—भाष्ये—अनुत्पत्ताविति ॥ तद्व्याचष्टे—वाक्ये इति ॥ भाष्ये—समायामिति—अधिकरणत्वविवक्षायां सप्तमी ॥

( ८९२ निपातनसूत्रम् ॥ ५ । २ । १ आ. ६ )

## २०३२ आगवीनः ॥ ५ । २ । १४ ॥

( निपातनजिज्ञासाभाष्यम् )

आगवीन इति किं निपात्यते ?

( प्रदीपः ) किं निपात्यत इति । का प्रकृतिः कः प्रत्ययः कः प्रत्ययार्थ इति प्रश्नः ॥

( उद्द्योतः ) नन्वस्यैव शब्दस्य निपात्यत्वात् प्रश्नोऽनुपपन्नोऽत आह—केत्यादि ॥

( ५७०९ निपातनार्थबोधकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ गोराङ्पूर्वाद्वा तस्य गोः प्रतिदानात्कारिणि खः ॥ * ॥

( भाष्यम् ) गोराङ्पूर्वात् आ तस्य गोः प्रतिदानात् कारिणि खो निपात्यते । आ तस्य गोः प्रतिदानात्कर्मकारी—आगवीनः कर्मकरः ॥

( प्रदीपः ) गोराङ्पूर्वादिति । यो गवा भृत आ गोः प्रत्यर्पणात्कर्म करोति स आगवीन उच्यते । तत्र वृत्तिविषये गोशब्दो गोप्रत्यर्पणे वर्तते । तत्र—आङ्गोशब्दयोः 'आङ्मर्यादाभिविध्योः' इत्यव्ययीभावे ह्रस्वत्वे च कृते खो निपात्यते ॥

( उद्द्योतः ) भाष्ये—गोरित्यस्य गोशब्दादित्यर्थः ॥ प्रतिदानं—प्रत्यर्पणम् ॥ कारिणीत्यावश्यके णिनिः । 'कर्मणि' इत्यादिः ॥ तस्येति—'कारिणि' इत्यनेनान्वेति ॥ तस्य—गोस्वामिनः कर्मकारिणीत्यर्थः ॥ खो निपात्यत इति । खे—ओर्गुणः ॥

( ८९३ निपातनसूत्रम् ॥ ५ । २ । १ आ. ७ )

## २०३८ शालीनकौपीने अधृष्टाकार्ययोः ॥ ५ । २ । २० ॥

( शालीनकौपीनार्थबोधकभाष्यम् )

किं यः शालायामधृष्टः स शालीनः, कूपे वा यदकार्यं तत्कौपीनम् ।

नेत्याह ।

उत्तरपदलोपोऽत्र द्रष्टव्यः । शालाप्रवेशनमर्हत्यधृष्टः सः—शालीनः । कूपावतरणमर्हत्यकार्यं तत्—कौपीनम् ॥

१ प्रत्ययेति । समायां समायामित्यत्र मत्प्रत्ययसन्नियोगेनैव यलोपविधानमित्यर्थः ॥

२ 'पदस्य च वाचनम्' इति ङ. पाठः ॥

(प्रदीपः) **किं यः शालायामिति** । अस्यां कल्पनायां शालाकूपशब्दयोर्मुख्यार्थत्वमाश्रितं भवतीति भावः ॥ **शालायामधृष्ट इति** । अन्यत्र धृष्टः ॥ **कूप इति** । लङ्घनादिकमित्यर्थः ॥ **उत्तरपदलोप इति** । लोकप्रसिद्धार्थानुवादेन साधुत्वान्वाख्यानादधृष्टाकार्यमात्रे च शालीनकौपीनशब्दयोः प्रयोगादिति भावः । तत्र वृत्तिविषये शालाकूपशब्दौ तत्कर्मिकायां क्रियायां वर्तेते इति गम्यमानार्थत्वादप्रयोग एवोत्तरपदस्य लोपः ॥ **शालाप्रवेशनमिति** । अन्यत्र प्रागल्भ्याभावादासितुमशक्यत्वाच्छालामेव प्रवेष्टुमर्हतीत्यर्थः ॥ **कूपावतरणमिति** । यदकार्यं तत् प्रच्छादनीयत्वात् कूपावतरणमर्हतीत्यर्थः । अकार्ययोग्यत्वाच्च पुरुषलिङ्गमपि कौपीनमुच्यते । तत्साहचर्यात्तदाच्छादनमपि कौपीनम् । **अथवा**—अकार्यशब्दे करोतिः क्रियासामान्यवचनः । तेनाद्रष्टव्यत्वाल्लज्जाहेतुदर्शनत्वात्पुरुषलिङ्गं कौपीनम्, अस्पृश्यत्वाच्च तदाच्छादनम् ॥

(उद्योतः) नन्वीदृगर्थस्य लोकेऽसम्प्रत्ययात्कथमीदृशार्थविषयः प्रश्नोऽत आह—**अस्यामिति** । लक्षणैकशरणोऽयं प्रश्न ॥ **अन्यत्रेति** । शालायां तु सार्वाजितत्वादधृष्ट इत्यर्थः ॥ **लोकेति** । लक्ष्यैकचक्षुष्कतयोत्तरमिति भावः ॥ नन्वधृष्टस्य शालाप्रवेशनयोग्यत्वं कथमत आह—**अन्यत्रेति** ॥ **आसितुं**—स्थातुम् ॥ अद्रष्टव्यत्वे हेतुः—**लज्जाहेतुदर्शनत्वम्** ॥

(८९४ विधिसूत्रम् ॥ ५ । २ । १ आ. ८)

## २०३९ व्रातेन जीवति ॥ ५ । २ । २१ ॥

(व्रातपदार्थबोधकभाष्यम्)

**व्रातेन जीवतीत्युच्यते, किं व्रातं नाम ?**

**नानाजातीया अनियतवृत्तय उत्सेधजीविनः संघा व्राताः, तेषां कर्म-व्रातम् । व्रातकर्मणा जीवतीति-व्रातीनः ॥**

(प्रदीपः) **किं व्रातं नामेति** । व्रातशब्दस्तावत्संघवचनः । तत्र यः संघेन जीवति तत्र व्रातीनशब्दो न प्रयुज्यते । व्रातकर्मणा जीवति तु प्रयुज्यते । व्रातकर्मणि च व्रातीयशब्देन भाव्यमिति **प्रश्नः** ॥ **नानाजातीया इति**—एकजातीयक्षत्रियादिसङ्घनिराकरणम् ॥ **अनियतवृत्तय इति**—नियतवृत्ति–आयुधजीविसंघनिषेधः ॥ **उत्सेधजीविन इति** । **उत्सेधः**–शरीरं, तदायासेन–भारवहनादिना जीवन्ति न तु बुद्धिवैभवेनेत्यर्थः । तैतानां कर्म–इति–अत एव निपातनाच्छं बाधित्वाऽण् भवति । तेषामेवान्यतमो व्रातीन उच्यते । यस्तु अन्यस्तत्कर्मणा जीवति स नोच्यते ॥

(उद्योतः) ननु व्रातशब्दस्य सङ्घे लोकप्रसिद्धत्वात्प्रश्नानुपपत्तिराह—**व्रातशब्द इति** ॥ ननु व्रातशब्देन तत्कर्मैव गृह्यतामत आह—**व्रातीयशब्देनेति** । इदमर्थं छेन भाव्यमिति भावः ॥ अत एव निपातनादिति । एवञ्च सूत्रे योगेन व्रातशब्दस्तत्सम्बन्धिकर्मवृत्तिरिति भावः । लक्षणया व्रातसम्बन्धिकर्मपरत्वेऽसाधुत्वमिति तात्पर्यम् ॥ **यस्त्वन्य इति** । अनभिधानादिति भावः । इदं च वृत्तौ स्पष्टम् ॥

(८९५ निपातनसूत्रम् ॥ ५ । २ । १ आ. ९)

## २०४० हैयङ्गवीनं संज्ञायाम् ॥५।२।२३॥

(निपातनार्थजिज्ञासाभाष्यम्)

**हैयङ्गवीनमिति किं निपात्यते ?**

(प्रदीपः) **किं निपात्यत इति** । प्रकृतिसंदेहात्प्रश्नः ॥

(५७१० निपातनार्थबोधकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ ह्योगोदोहस्य हियङ्ग्वादेशः संज्ञायां तस्य विकारे ॥ * ॥

(भाष्यम्) **ह्योगोदोहस्य हियङ्ग्वादेशो निपात्यते संज्ञायां विषये 'तस्य विकारः' इत्येतस्मिन्नर्थे । ह्योगोदोहस्य विकारः—हैयङ्गवीनं घृतम् ।**

**संज्ञायामिति किमर्थम् ?**

**ह्योगोदोहस्य विकार-उदश्वित्—अत्र मा भूदिति ॥**

(प्रदीपः) **ह्योगोदोहस्येति** । 'ह्यस्'शब्दस्य गोदोहशब्देन 'सुप्सुपा' इति समासः । दुह्यत इति–दोहः, क्षीरमुच्यते । 'ह्यस्'शब्देन कालप्रत्यासत्तिः प्रतिपाद्यते । तेनाविकृतरूपगन्धमेव घृतं हैयङ्गवीनमुच्यते इत्याहुः ॥

(उद्योतः) **घृतमिति** । नवनीतमिति हरदत्तः ॥

(८९६ विधिसूत्रम् ॥ ५ । २ । १ आ. १०)

## २०४३ पक्षात्तिः ॥ ५ । २ । २५ ॥

(तिप्रत्ययाधिकरणम्)

(एकदेशिन उपसंख्यानभाष्यम्)

**'मूले' इति वक्तव्यम् । पक्षस्य मूलं पक्षतिः । तत्तर्हि वक्तव्यम् ॥**

(प्रदीपः) **मूल इति वक्तव्यमिति** । अन्यथा–अनिर्दिष्टार्थत्वात् स्वार्थे प्रत्ययप्रसङ्गः ॥

(उपसंख्यानानर्थक्यबोधकभाष्यम्)

**न वक्तव्यम् । 'मूले' इति वर्तते ।**

**क्व प्रकृतम् ?**

**"तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ" (५।२।२४) इति ।**

---

१ शालायामित्विति । पत्यधीनत्वात् गृहे अधृष्टः । बहिस्तु धृष्टः ॥

२ 'व्रातानां' इति क. ख. पाठः ॥

**यदि तदनुवर्तते, पाकेऽपि प्राप्नोति ।**

**मूल इत्यनुवर्तते, पाक इति निवृत्तम् ।**

**कथं पुनरेकयोगनिर्दिष्टयोरेकदेशोऽनुवर्तेत, एकदेशो वा निवर्तेत ।**

**एकयोगनिर्दिष्टानामप्येकदेशानुवृत्तिर्भवति ।**

**तद्यथा—"संख्याव्ययादेर्ङीप्" (४।१।२६) "दामहायनान्ताच्च" (२७) संख्यादेरित्यनुवर्तते, अव्ययादेरिति निवृत्तम् ॥**

( प्रदीपः ) **कथं पुनरिति** । एकस्मिन्नर्थे योगः—संबन्धः, तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थः । द्वन्द्वस्य तदर्थस्य चैकत्वादेकदेशानुवृत्तिर्न संभवतीति भावः । एकसूत्रनिर्दिष्टानां त्वेकदेशानुवृत्तिर्दृश्यते ॥ **एकयोगनिर्दिष्टानामपीति** । अर्थाधिकारपक्षे—अर्थस्यैकत्वाद्विच्छेदाभावान्न स्यादेकदेशानुवृत्तिः । शब्दाधिकारपक्षे तु—यस्यैव शब्दस्य स्वरितत्वं प्रतिज्ञातं तत्सदृशशब्दान्तरसंनिधानं योगान्तरे प्रतीयते इति दोषाभावः ॥

( उद्द्योतः ) नन्वेकसूत्रनिर्दिष्टनामेकदेशानुवृत्तेरदर्शनादाह—**एकस्मिन्निति** ॥ **दृश्यत इति** । यथा 'अत इञ्' इत्यादित इञ्पदमात्रस्योत्तरत्रानुवृत्तिः ॥ अर्थाधिकारमाश्रित्य पूर्वपक्षः, शब्दाधिकारमाश्रित्योत्तरमित्याह—**अर्थाधिकारेति** ॥ **पक्षतिः**—प्रतिपत्, पक्षिणां पक्षमूलञ्च ॥

( ८९७ विधिसूत्रम् ॥ ५ । २ । १ आ. ११ )

## २०४५ विनञ्भ्यां नानाञौ न सह ॥ ५ । २ । २७ ॥

( नानाञ्प्रत्ययाधिकरणम् )

( प्रत्ययार्थनिर्णायकभाष्यम् )

**इह नानेति सहार्थो गम्येत, द्वौ हि प्रतिषेधौ प्रकृतमर्थं गमयतः । न न सह—सहैवेति ।**

**नैष दोषः ।**

**नायं प्रत्ययार्थः ।**

**किं तर्हि ?**

**प्रकृतिविशेषणमेतत् । 'वि-नञ्' इत्येताभ्यामसहवाचिभ्यां नानाञौ भवतः ।**

**कस्मिन्नर्थे ?**

**स्वार्थे ॥**

( प्रदीपः ) **सहार्थो गम्येतेति** । 'न सह' इति प्रत्ययार्थनिर्देशं मन्यते । प्रकृत्यर्थेन प्रत्ययार्थो विशेषणीयः । ततः प्रतिषेधस्य[1] प्रतिषेधात् विधिना भाव्यमिति भावः ॥ **नायमिति** । लोकप्रसिद्धार्थानां शब्दानामिह साधुत्वान्वाख्यानात्, लोके च नानाशब्दस्य पृथग्भावाभिधायित्वात् 'न सह' इति प्रकृत्यर्थनिर्देशः । यद्येवं सहेत्येव प्रत्ययार्थो निर्देश्यः, विनञोः प्रतिषेधार्थत्वात्; विगार्दभरथिक इत्यादौ विशब्दस्य गुणप्रतिषेधवृत्तित्वदर्शनात् । नैतदस्ति । क्रियावाचिनोऽपि विशब्दात्सहार्थे प्रत्ययो विज्ञायेत—विगतौ सह, विकृतौ सहेति । इह तु विना देवदत्तेन नाना देवदत्तेनेति—अस्यासत्त्वभूतस्याप्यर्थस्य व्यतिरेकहेतुत्वं भवति, यथा[2] मातुः स्मरतीति ॥

( उद्द्योतः ) नन्वसहार्थे वर्तमाननञः स्वार्थे प्रत्यये कथं सहार्थावगतिरत आह—**प्रत्ययार्थेति** । प्रकृतिविशेषणत्वे प्रत्ययस्यार्थाकाङ्क्षा न शान्ता स्यादिति भावः ॥ भाष्ये 'न न सह' इत्यस्य व्याख्यानं—**सहैवेति** ॥ प्रत्ययार्थत्वाभावे हेतुमाह—**लोके इति** ॥ **विगार्दभरथिक इति** । 'नञो गुणप्रतिषेध–' इति सूत्रे नञित्यस्य प्रत्युदाहरणमिदम् ॥ नन्वेवं 'विनानाना'शब्दयोरसत्त्वभूतार्थाभिधायित्वेन चादिवद्व्यतिरेकहेतुत्वं न स्यादिति 'देवदत्तेन विना' इत्याद्यनुपपन्नमत आह—**इह त्विति** । द्योतकानामेव तत्स्वभावत्वमिति भावः । अत एव 'पृथग्विनानानाभिः' इति सङ्गच्छते ॥

( ८९८ विधिसूत्रम् ॥ ५ । २ । १ आ. १२ )

## २०४६ वेः शालच्छङ्कटचौ ॥ ५।२।२८ ॥

( शालच्शङ्कटच्प्रत्ययाधिकरणम् )

( प्रत्ययार्थनिर्णयभाष्यम् )

**कस्मिन्नर्थे शालजादयो भवन्ति ?**

**न सह इत्यनुवर्तते ।**

**भवेत्सिद्धम्—विशाले शृङ्गे, विशङ्कटे शृङ्गे इति ॥**

( प्रदीपः ) **कस्मिन्नर्थे शालजादय इति** । वक्ष्यमाणप्रत्ययापेक्षं बहुवचनम् । असहार्थस्य[3] सर्वत्रासंभवादर्थानुपादानाच्च **प्रश्नः** ॥ **विशाले इति** । नानादेशगमनादस्यत्रासहार्थत्वमिति भावः ॥

( उद्द्योतः ) **वक्ष्यमाणेति** । 'सम्प्रोदश्च कटच्' इतीत्यर्थः । **सर्वत्रेति** । कटज्विषये इत्यर्थः ॥

( आक्षेपभाष्यम् )

**इह खलु संकटमिति संगतार्थो गम्यते, प्रकटमिति प्रगतार्थो गम्यते, उत्कटमिति उद्गतार्थो गम्यते ॥**

( समाधानभाष्यम् )

**एवं तर्हि साधने शालजादयो भवन्ति ।**

**किं वक्तव्यमेतत् ?**

**न हि ।**

**कथमनुच्यमानं गंस्यते ?**

---

१ **प्रतिषेधस्येति** । प्रकृत्यर्थस्य प्रतिषेधस्य प्रत्ययार्थेन प्रतिषेधेनान्वये विधिना भाव्यमित्यर्थः । अभावाभावस्य प्रतियोगिरूपत्वनियमात् ॥

२ **यथा मातुरिति** । 'मातुः स्मरति' इत्यत्र स्मरणरूपार्थस्यासत्त्वभूतस्यापि यथा सम्बन्धहेतुत्वं तथा विना देवदत्तेनेत्यादावपि असत्त्वभूतार्थस्य विनापदार्थस्य संबन्धहेतुत्वं भवतीत्यर्थः । केचित् 'यथा वा मातुः–' इत्यादि पठन्ति । तेषां वाशब्दोऽज्ञानमूलक एव ॥

३ 'असहायार्थस्य' इति क. पाठः ॥

उपसर्गेभ्य इमे विधीयन्ते, उपसर्गाश्च पुनरेवमात्मकाः—यत्र कश्चित् क्रियावाची शब्दः प्रयुज्यते तत्र क्रियाविशेषमाहुः, यत्र हि न प्रयुज्यते ससाधनां तत्र क्रियामाहुः । त एते उपसर्गेभ्यो विधीयमानाः ससाधनायां क्रियायां भविष्यन्ति ॥

( प्रदीपः ) **किं वक्तव्यमिति** । शब्दान्तरवाच्यक्रियाविशेषस्य द्योतका उपसर्गाः । वाचका भावे द्योत्यार्थाभावादनर्थका एवेति भावः ॥ **ससाधनामिति** । क्रियोपसर्जनं साधनमाहुरित्यर्थः । नियतविषयाः शब्दानां शक्तयो दृश्यन्ते, यथा–द्विदशा इत्यादौ कृत्वोऽर्थाद्यभिधानमिति भावः ॥ **उपसर्गेभ्य इति** । अन्यत्रोपसर्गसंज्ञादर्शनाद्विषयान्तरेऽपि योग्यतामात्राश्रयं प्रादीनामिदमभिधानम् ॥

( उद्द्योतः ) **अनर्थका एवेति** । एवं च क्रियावृत्तित्वाभावात्कथं साधने प्रत्यय इति अक्रियावाचिनोऽपि साधने प्रत्ययो वक्तव्य इत्यर्थः ॥ नन्वेवं सति क्रियाया एव प्राधान्यं स्यादत आह—**क्रियोपसर्जनमिति** । साहित्यमेव सहार्थः । एवं च क्रियासाधने वर्तमान-वि-आदिभ्यः स्वार्थे प्रत्यय इति भावः ॥ नन्वीदृशेऽर्थे शक्तिग्राहकाभावोऽत आह—**नियतेति** ॥ नन्वत्र क्रियायोगाभावात्कथमुपसर्गत्वम्? अत आह—**अन्यत्रेति** । क्रियायोगे इत्यर्थः ॥

( आक्षेपभाष्यम् )

**एवमपि भवेत्सिद्धं-विशाले शृङ्गे इति ।**
**इदं तु न सिध्यति—विशालः, विशङ्कटः-इति॥**

( प्रदीपः ) **विशाल इति** । शृङ्गयोरेव विगमनक्रियाकर्तृत्वं न तु गोरिति भावः ॥

( उद्द्योतः ) **शृङ्गयोरेवेति** । विगमनक्रियाकर्तर्येव तत्साधनादिति भावः ॥

( समाधानभाष्यम् )

**एतदपि सिद्धम् ।**
**कथम्?**
**अकारो मत्वर्थीयः । विशाले अस्य स्तो विशालः । विशङ्कटे अस्य स्तो विशङ्कट इति ॥**

( प्रदीपः ) **विशाले अस्येति** । मतुप्प्रत्ययस्तु गव्यनभिधानान्न भवति । विशालवानित्युक्तेऽपि विशालगवयुक्तस्य गोष्ठादेरवगमो न तु गोरित्यर्थः । व्युत्पत्त्यनुसारेण चेदमुच्यते । गुणशब्दास्तु विशालादयः । साधुत्वान्वाख्यानाय तु कंचिदुपायमाश्रित्य व्युत्पत्तिः क्रियते । यथा–प्रतिलोमोऽनुलोम इति ॥

( उद्द्योतः ) ननु अच्प्रत्ययवन्मतुबपि कदाचित्स्यादत आह—**मतुबिति** ॥ परमार्थमाह—**गुणशब्दास्त्विति** । विशालत्वगुणबोधका इत्यर्थः ॥

( ८९९ विधिसूत्रम् ॥ ५ । २ । १ आ. १३ )

## २०४२ संप्रोदश्च कटच् ॥५ । २ । २९॥

( कटच्प्रत्ययाधिकरणम् )

( प्रदीपः ) अलाबूतिलोमाभङ्गाभ्य ओषधित्वादवयवेऽलाबूशब्दात् 'ओरञ्' इत्यञि प्राप्ते, तिलोमाशब्दाभ्यां घृतादित्वादन्तोदात्तत्वात् 'अनुदात्तादेश्च' इत्यञि प्राप्ते, भङ्गायाः 'तृणधान्यानां च द्व्यषाम्' इत्याद्युदात्तत्वादणि प्राप्ते रजसि कटज्विधिः ॥

( उद्द्योतः ) रजसोऽप्यवयवत्वं मन्यमान आह—**ओषधित्वादवयव इति** ॥ **तिलोमाशब्दाभ्यामिति** । अत्र तिलस्य घृतादित्वे न मानं, 'तिलाश्च मे' इत्यादावाद्युदात्तपाठादिति चिन्त्यम् ॥

( ५७११ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्यभिधेये उपसंख्यानं कर्तव्यम् । अलाबूकटः, तिलकटः, उमाकटः ॥**

( ५७१२ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ भङ्गायाश्च ॥ * ॥**

( भाष्यम् ) **भङ्गायाश्चेति वक्तव्यम् । भङ्गाकटः ॥**

( ५७१३ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ [1]गोष्ठादयः स्थानादिषु पशुनामादिभ्यः ॥ * ॥**

( भाष्यम् ) **गोष्ठादयः प्रत्ययाः स्थानादिष्वर्थेषु पशुनामादिभ्यो वक्तव्याः । [2]गवां स्थानं-गोगोष्ठम् । [3]अविगोष्ठम् ।**

**[4]संघाते कटच वक्तव्यः ।**

**अविकटः । उष्ट्रकटः ।**

**[5]विस्तारे पटच वक्तव्यः ।**

**अविपटः । उष्ट्रपटः ।**

**गो[6]युगशब्दश्च प्रत्ययो वक्तव्यः ।**

**उष्ट्रगोयुगम् । खरगोयुगम् ।**

**तैल[7]शब्दश्च प्रत्ययो वक्तव्यः ।**

**इङ्गुदतैलम् । सर्षपतैलम् ।**

**[8]शाकटशब्दश्च प्रत्ययो वक्तव्यः ।**

**इक्षुशाकटम् । मूलशाकटम् ।**

---

१ 'गोष्ठजादयः' इति च. झ. ञ. पाठः ॥
२ 'गवां स्थानं' इति छ. झ. पुस्तकयोर्न ॥
३ अस्य क. पुस्तके पाठो न ॥
४ 'संघे कटच-' इति च. पाठः । 'संघाते' इति नास्त्येव छ. पुस्तके ॥
५ 'विस्तारे' इति छ. पुस्तके नास्ति ॥
६ 'द्वित्वे गोयुगच्' इति च. झ. पाठः ॥
७ 'स्नेहने तैलच्-' इति च. झ. पाठः ॥
८ 'संभवने क्षेत्रे' इति च. झ. पाठः ॥

**शाकिनशब्दश्च प्रत्ययो वक्तव्यः ।**

**इक्षुशाकिनम् । मूलशाकिनम् ॥**

**( प्रदीपः ) गोष्ठादय इति ।** प्रयोगसमवायिप्रत्ययरूपं निर्दिष्टम् । चकारस्तु स्वरार्थोऽनुबन्ध आसङ्क्व्यः । तथा हि– समासाश्रयेण प्रत्ययाः प्रत्याख्यायन्ते । तत्र चित्स्वरसमासस्वरयोरभेदादेकफलत्वमारम्भप्रत्याख्यानयोरुपपद्यते । सर्वत्रादिशब्दः प्रकारे ॥ **गवां स्थानमिति ।** 'तस्येदम्' इत्यत्रार्थे 'सर्वत्र गोरजादिप्रत्ययप्रसङ्गे यत्' इति यति प्राप्ते गोष्ठप्रत्ययः ॥

**अविकट इति ।** अवीनां समूह इत्यणि प्राप्ते कटच् । अवीनां विस्तार इत्यर्थे पटच् । अप्रस्तुते समूहे–अविकटः, प्रस्तुते तु–अविपटः ॥ **उष्ट्रगोयुगमिति ।** द्वावुष्ट्रावित्यत्रार्थे गोयुगच्प्रत्ययः ॥

**अन्ये त्वाहुः**—उष्ट्रस्य ग्रीवाबन्धने यानाङ्गे युगे प्रत्ययः ॥ **इङ्गुदतैलमिति ।** 'लघावन्ते' इत्याद्युदात्तत्वात् 'तस्य विकारः' इत्यण्प्राप्तः । सर्षपशब्दस्य 'सादीनां शाकानाम्' इत्याद्युदात्तत्वे प्राप्ते परत्वात् 'अथ द्वितीयं प्रागीषात्' इत्यनुवर्तमाने 'यान्तानां च गुर्वादीनाम्' इति मध्योदात्तत्वं भवति । ततोऽनुदात्तत्वादञ् प्राप्तः ॥ **इक्षुशाकटमिति ।** इक्षूणां भवनं क्षेत्रमित्यर्थे शाकटशाकिनौ ॥

**(उद्द्योतः) सर्वत्रादिशब्द इति ।** [1]अत्रत्य–आदिशब्दविवरणभूतान्येवाग्रिमाणि वर्चांसि ॥

**अप्रस्तुते इति ।** उत्तरवार्तिकेष्वर्थानिर्देशेऽपि स्वभावगम्योऽयं विशेष इति भावः । अत एव **'प्रस्तीर्णः पटो यथा एवम्'** इत्यादिप्रत्याख्यानभाष्ये वक्ष्यति ॥ **द्वावुष्ट्राविति ।** 'द्वयं युगम्' इत्यादिवद् द्व्यवयवसङ्घाभिधायित्वादेकवचनम् 'उष्ट्रगोयुगम्' इत्यत्रेति बोध्यम् ॥

**यानाङ्गे युगे इति ।** उष्ट्ररथरूपयानेत्यर्थः ॥ **प्रत्ययः**–गोयुगच्प्रत्ययः ॥

**( ५७१४ गोष्ठादयः स्थानादिष्विलादेः प्रत्याख्यानवार्तिकम् ॥ ४ ॥ )**

**॥ * ॥ उपमानाद्वा सिद्धम् ॥ * ॥**

**( भाष्यम् ) उपमानाद्वा सिद्धमेतत् । गवां स्थानं –गोष्ठम् । यथा गवां तद्वदुष्ट्राणाम् ।**

**कटज् वक्तव्य इति । यथा नानाद्रव्याणां संघातः कटः, एवमवयः संहताः—अविकटः ।**

**पटच्च वक्तव्य इति ।** [2]**प्रस्तीर्णः पटो यथा, एवमवयः प्रस्तीर्णाः–अविपटः ।**

**गोयुगशब्दश्च प्रत्ययो वक्तव्य इति । गोर्युगं–गोयुगम् । यथा गोस्तद्वदुष्ट्रस्य–उष्ट्रगोयुगम् ।**

**तैलशब्दश्च प्रत्ययो वक्तव्य इति । प्रकृत्यन्तरं तैलशब्दो विकारे वर्तते, एवं च कृत्वा तिलतैलमित्यपि सिद्धं भवति ।**

**शाकटशब्दश्च प्रत्ययो वक्तव्य एव ।**

**शाकिनशब्दश्च प्रत्ययो वक्तव्य एव ॥**

**( प्रदीपः ) गवां स्थानमिति ।** गावस्तिष्ठन्ति यस्मिन्निति 'घञर्थे कविधानम्' इति कः । तत्र गोष्ठसाधर्म्यादुष्ट्रादिस्थानमपि गोष्ठशब्देनोच्यते । तत्र विशेषप्रतिपत्त्यर्थमुष्ट्रादीनामन्यतमेन विशेष्यते । मुख्यगोष्ठप्रतिपत्तये च गोभिरपि गोष्ठस्य विशेषणात्–गोगोष्ठमित्यपि भवति ॥

**नानाद्रव्याणामिति ।** रज्जुवीरणादीनामित्यर्थः । तत्साधर्म्यादन्योऽपि संघातः कटशब्दाभिधेयोऽविभिर्विशेषितः–अविकट इत्युच्यते ॥

**यथा पट इति ।** विस्तारसामान्यादन्योऽपि संघातः पटशब्दाभिधेयोऽविभिर्विशेष्यते—अविपट इति ॥

**गोयुगमिति ।** युगशब्देन द्वयमुच्यते–ग्रीवाबन्धनं काष्ठञ्च तत्र यानाङ्गे युगः पुंस्युक्त इति पुंस्त्वं प्रायिकं बोद्धव्यम् ॥

**प्रकृत्यन्तरमिति ।** अव्युत्पन्नं विशिष्टस्नेहद्रव्यवाचीत्यर्थः ॥ **तिलतैलमित्यपीति ।** अपिशब्दात्तैलमपीत्यर्थः । यदि तु तैलच्प्रत्ययो विधीयते तदा विशेषविहितेन तैलचा तिलशब्दादञ् बाध्येत, ततश्च तैलमिति न सिध्येत् । यदा त्वव्युत्पन्न एव तैलशब्दो विकारविशेषवाची तदा 'तिलानां तैलम्' इति समासे कृते–तिलतैलमिति भवति । तिलानां विकार इत्यत्राञि–तैलमिति । उपमानाश्रयेणापि 'इङ्गुदतैलम्' इत्यादि सिध्यति । तिलविकारो मुख्यं तैलं, तत्सादृश्यादन्यदपि तैलमिङ्गुदादिभिर्विशेष्यते । गौणसंभवे च मुख्यतैलप्रतिपादनाय तिलैर्विशेषणात्तिलतैलमित्यपि भवतीति **केचिदाहुः ।** व्युत्पत्त्युपाय एव– तिलानां विकारस्तैलमिति । रूढिशब्दश्चायं स्नेहद्रव्यवृत्तिः । तथा च सादृश्यानुकरणमन्तरेणेङ्गुदतैलादयः शब्दा प्रयुज्यन्ते । यथा प्रकृष्टो वीणायां–प्रवीण इति व्युत्पत्तिमात्रं क्रियते । कौशलं त्वस्य प्रवृत्तिनिमित्तम् । तेन वीणायां प्रवीण इत्यपि भवति ॥

**(उद्द्योतः)** नन्वेवं 'गोगोष्ठम्' इति न स्यादत आह—**मुख्यगोष्ठेति ।** यथा स्वामिमात्रपरतया प्रयुक्ते गोपतिशब्दे गवां विशेषणत्वं–'गवामसि गोपतिरेकः' इत्यादौ ॥

**द्वयं**–युग्ममित्यर्थः ॥

प्रकारान्तरेणापि इङ्गुदतैलादीन्साधयन्ति **केचित्–इत्याह—उप-**

---

१ अत्रत्यादीति । एतत्सूत्रस्थ **'गोष्ठादयः स्थानादिषु पशुनामादिभ्यः'** इत्येतद्वचनस्थादादिशब्दाल्लभ्योऽर्थ एव अग्रिमाणि–**'कटच्पटच्'** इत्यादीनि वचनानि–इत्यर्थः । यत्तु **'गोष्ठादयः स्थानादिषु–'** इति वार्तिकोदाहरणे **'उष्ट्रगोष्ठम्'** इति **'गौडाः पठन्ति'** इत्याहुः । तन्मन्दम् । प्राचीनपुस्तकेषु तादृक्पाठोपलम्भे **'गौडा आहुः'** इत्यस्य वैयर्थ्यम् । तादृक्पाठोपलम्भाभावे च अशोकवनिकान्यायेन **'महिषगोष्ठं'** इत्यस्यापि पाठं गौडाः कथं नेच्छति ? ननु अग्रे **'उष्ट्रकटः–उष्ट्रपटः'** इत्युदाहरणयोर्भाष्ये दर्शनादत्रापि 'उष्ट्रगोष्ठम्' इति पाठः स्वरसतः प्रतीयत इत्यपि न । तादृशस्वारस्येन 'उष्ट्रकटः' इत्यादौ **'गोकटः'** इत्युदाहरणस्यापि न्यूनता गौडैरुपपादनीयेति–चिन्त्यमेतत् । यदि च **'यथा गवां तद्वदुष्ट्राणाम्'** इति भाष्यदर्शनात्तथाऽभिप्राय इति तदपि न । गोष्ठादीनां सिद्धावपि उष्ट्रगोष्ठादीनां सिद्धिर्न स्यादित्यभिप्रायेण तदुक्तिर्भाष्यकृताम् ॥

२ इदानीन्तनोपलब्धपुस्तकेषु **'यथा पटः प्रस्तीर्णः'** इत्येव पाठ उपलभ्यते, तथाप्युद्योतदर्शनादवगतः पाठोऽस्माभिः स्थापितः ॥

मानाश्रयेणाऽपीति ॥ तद्दूषयति—व्युत्पत्त्युपाय एवेति ॥ स्नेहद्रव्यवृत्तिरिति । स्नेहवद्द्रव्यविशेषवृत्तिरित्यर्थः ॥ **सादृश्यानुकरणं**—सादृश्यप्रत्ययम् । एतेन "न हि 'तैलम्' इत्युक्ते सस्नेहद्रव्यरूपं विकारमात्रं प्रतियन्ति" इति हरदत्तः परास्तः ॥

( ९०० विधिसूत्रम् ॥ ५ । २ । १ आ. १४ )

## २०४६ इनच्पिटच्चिकचिच ॥ ५ । २ । ३३ ॥

( इनच्पिटजधिकरणम् )

( ५७१५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इनच्पिटच्ककाः चिकचिचिका-देशाश्च ॥ * ॥**

( भाष्यम् ) **इनच्पिटच्ककाः प्रत्ययाः वक्तव्याः, चिक चि चिक्-इत्येते च प्रकृत्यादेशा वक्तव्याः । चिकिनः । चिपिटः । चिक्कः ॥**

( प्रदीपः ) सूत्रे निशब्दस्य द्वावादेशौ प्रत्ययौ च विहिताविल्यादेशत्रयप्रत्ययत्रयविधानाय वार्तिकम् ॥

( उद्द्योतः ) ननु सूत्रे प्रत्ययद्वयादेशद्वययोर्विधानात्तयोर्वार्तिके उल्लेखोऽसङ्गतोऽत आह—**सूत्रे इति** । कसन्नियोगेन 'चिक्' इति कान्त आदेशः ॥

( ५७१६ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥*॥ क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी ॥*॥**

( भाष्यम् ) **क्लिन्नस्य चिल्पिल् इत्येतौ प्रकृत्यादेशौ वक्तव्यौ लश्च प्रत्ययः, अस्य चक्षुषी इत्यस्मिन्नर्थे । क्लिन्ने अस्य चक्षुषी—चिल्लः, पिल्लः ।**

**चुल् च वक्तव्यः । चुल्लः ।**

**यद्यस्येत्युच्यते, चिल्ले चक्षुषी पिल्ले चक्षुषी—इति न सिध्यति तस्मान्नार्थोऽस्य ग्रहणेन ।**

**कथं चिल्लः पिल्ल इति ?**

**अकारो मत्वर्थीयः । चिल्ले अस्य स्तः—चिल्लः । पिल्ले अस्य स्तः—पिल्ल इति ॥**

( प्रदीपः ) **तस्मान्नार्थ इति** । क्लिन्नशब्दाच्चक्षुर्विशेषार्थाभिधायिनः स्वार्थे लो विधेयः ॥ **अकारो मत्वर्थीय** इति । अर्श आदिषु—'स्वाङ्गाद्धीनात्' इति पाठात् । मतुप् तु अनभिधानान्न भवति ॥

( उद्द्योतः ) ननु 'अस्य' ग्रहणाभावे कस्मिन्नर्थे प्रत्ययः ? अत आह—**क्लिन्नशब्दादिति** ॥

( ९०१ विधिसूत्रम् ॥ ५ । २ । १ आ. १५ )

## २०५५ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ॥ ५ । २ । ३७ ॥

( द्वयसजादिप्रत्ययाधिकरणम् )

( 'प्रमाणे' इति प्रकृत्यर्थविशेषणं प्रत्ययार्थविशेषणं वेति निर्धारणे श्लोकवार्तिकम् )

**प्रमाण इति किमयं प्रत्ययार्थः ?**

**प्रमाणं प्रत्ययार्थो न ।**

**प्रमाणे इति नायं प्रत्ययार्थः । क्व तर्हि प्रत्यया भवन्ति ?**

**तद्वति ।**

**कुत एतत् ?**

**अस्येत्यनुवर्तनात् ।**

**क्व प्रकृतम् ?**

**'तदस्य संजातं, तारकादिभ्य इतच्" (५।२।३६) इति ॥**

( प्रदीपः ) **किमयमिति** । सप्तमीनिर्दिष्टस्येह शास्त्रे प्रकृत्यर्थप्रत्ययार्थत्वदर्शनादुभयसम्भवाच्च **प्रश्नः** ॥ **अस्येत्यनुवर्तनादिति** । [1]नन्वेवमपि प्रमेयवाचिनः प्रमाणे प्रत्ययप्रसङ्गः—उदकं प्रमेयमस्य—ऊरोरिति । नैष दोषः, [2]अनियतप्रमेयविषयत्वात् प्रमाणानामेकेन प्रमेयेण विशेषणे [3]दुःसम्बन्धात् । प्रमेयस्य तु नियतप्रमाणप्रतिपादनाय ऊरुमात्रादयः शब्दा लोके प्रयुज्यमानाः साधुत्वेनान्वाख्यायन्ते ॥

( उद्द्योतः ) न[4]नु सूत्राक्षरैः प्रत्ययार्थत्वस्यैव प्रतीतेः, तस्यार्थाकाङ्क्षायाः सत्त्वाच्च प्रश्नोऽनुपपन्नः अत आह—**सप्तमीति** । '[5]अतिशायने तमप्—' इत्यादौ प्रकृत्यर्थत्वं, 'कर्तरि कृत्' इत्यादौ प्रत्ययार्थत्वम् । प्रत्ययार्थत्वे च प्रमेयवाचिनः प्रमाणे प्रत्ययः स्यात्, षष्ठी च समर्थविभक्तिः, योग्यतावशादिति बोध्यम् ॥ **नन्विति** । [6]यत्तद 'अस्य' इति निर्दिष्टं प्रमाणं चेत्तद्वतीत्यर्थः स्यात्, प्रमाणस्य प्रमेयापेक्षत्वात्तद्वाचित्वं प्रकृतेरिति भावः ॥ **दुःसम्बन्धादिति** । इतरनिरूपितप्रमाणत्वप्रतीतिप्रतिबन्धादिति ॥

---

१ नन्वेवमपीति । तदस्येति सूत्रादस्येत्यनुवर्तमानेऽपि प्रमेये विद्यमानात्प्रथमान्तात् 'अस्य' इति निर्दिष्टे प्रमाणेऽर्थे त्रयः प्रत्ययाः स्युः । तथा च उदकं प्रमेयमस्येति—उदकशब्दात्प्रमेयवाचकात्प्रत्ययप्रसङ्ग इति भावः ॥

२ अनियतेति । प्रमाणानां यावत्प्रमेयपरिच्छेदकत्वं लोकसिद्धम् । तत्र यदि एकेन प्रमेयेण संबन्धः प्रमाणस्य विवक्ष्येत तदा उदकशब्दात्प्रमेयवाचकात् प्रत्यये कृतेऽपि ऊरुरूपप्रमाणसम्बन्धबोधो न स्यादिति न प्रमेयवाचकात्प्रत्ययः । प्रमेयवाचकात्प्रत्यये कृते तु उदकमात्रशब्दादूरुरूपप्रमाणस्य उदकमेव प्रमेयमित्यर्थः स्यात्—तदाह—उद्योते—इतरनिरूपितप्रमाणत्वप्रतीतिप्रतिबन्धादिति ॥

३ 'दुःसंबन्धत्वात्' इति क. झ. पाठः ॥

४ 'किमयं प्रत्ययार्थः' इत्यादि भाष्योक्तं प्रश्नमुपपादयति—ननु सूत्राक्षरैरित्यादिना ॥

५ सप्तमीनिर्दिष्टस्य प्रत्ययार्थत्वं प्रकृत्यर्थत्वं च प्रदर्शयति—अतिशायने तमबित्यादिना ॥

६ कैय्यटे 'नन्वेवमपि' इत्यादिना शङ्काकर्तृमतेन सूत्रार्थं प्रदर्शयति—यत्तदस्येति ॥

पित्तप्रमाणत्वप्रतीतिप्रतिबन्धादिति भावः । वस्तुतः शङ्केयं निर्दला, 'अस्य' इत्यनुवृत्तिवैयर्थ्यापत्तेरिति बोध्यम् ॥

( प्रत्ययार्थनिर्धारकं श्लोकवार्तिकम् )

**प्रथमश्च द्वितीयश्च ऊर्ध्वमाने मतौ मम ॥**

**ऊरुद्वयसम् । ऊरुदघ्नम् ।**

**प्रमाणे लः ।**

**प्रमाणे लो वक्तव्यः । शमः, दिष्टिः, वितस्तिः ।**

**द्विगोर्नित्यम् ।**

**द्विगोर्नित्यं लो वक्तव्यः । द्विशमम्, त्रिशमम् । द्विदिष्टिः, त्रिदिष्टिः । द्विवितस्तिः, त्रिवितस्तिः ।**

**किमर्थमिदमुच्यते ?**

**संशये श्राविणं वक्ष्यति तस्यायं पुरस्तादपकर्षः ।**

**डट् स्तोमे ।**

**डट् स्तोमे वक्तव्यः । पञ्चदशः स्तोमः ।**

**शच्शनोर्डिनिः ।**

**शच्शनोर्डिनिर्वक्तव्यः । त्रिंशिनो मासाः । पञ्चदशिनोऽर्धमासाः ।**

**विंशतेश्चेति वक्तव्यम् । विंशिनोऽङ्गिरसः ॥**

( प्रदीपः ) **प्रथमश्चेति** । यद्यायामवाच्येव प्रमाणशब्दः सूत्र उपात्तः, तदोर्ध्वमाने प्राप्तौ द्वयसज्दघ्नचौ प्रमाणादपकृष्य विधीयेते । अथ तु परिच्छेदमात्रं प्रमाणमिह गृह्यते, तदोर्ध्वमान एव यथा स्यातामिति नियमाय वचनम् ॥

**प्रमाणे ल इति** । प्रमाणशब्दा लोके ये प्रसिद्धा दिष्टिहस्तादयस्तेभ्यः परस्य प्रत्ययस्य लुग् भवति । स च सम्भवान्मात्रच एव । इतरयोरूर्ध्वमान एव हि विधानम् । मात्रचस्त्वविशेषेण परिच्छेदकमात्रवाचिनः स्मरणात् ॥

**द्विगोर्नित्यमिति** । तदन्तविध्यभावाल्लुगप्राप्तिः ॥

**किमर्थमिति** । नित्यग्रहणं प्रति **प्रश्नः** । न हि विकल्पः प्रकृत इति भावः ॥ **श्राविणमिति** । श्रवणं–श्रावः, स यस्यास्तीति–**श्रावी**—मात्रच्प्रत्ययः । तस्य परत्वाच्छ्रवणे प्राप्ते नित्यग्रहणाद् बाधकबाधनार्थाल्लुगेव भवति । द्वौ शमौ प्रमाणमस्य स्यात् न वा–द्विशममिति । प्रकरणादिवशाच्च निश्चयसंशयविषयप्रयोगावधारणम् ॥

**डट् स्तोम इति** । अत्रायामस्य प्रमाणस्यासंभवात्परिच्छेदोपाधिकायाः संख्यायास्तोमे डट्प्रत्ययः । पञ्चदशमन्त्राः परिमाणमस्य स्तोमस्य **पञ्चदशः** ॥

**विंशिन इति** । विंशतिशब्दात् संख्यामात्रवाचिनः संख्येये प्रमेये डिनिः । 'ति विंशतेर्डिति' इति तिलोपः, तस्य 'यस्येति च' इत्यकारलोपे कर्तव्ये 'असिद्धवदत्राभात्' इत्यसिद्धत्वं न भवति, भाष्यकारवचनात्तस्यासिद्धत्वात्[1] । 'तदस्य परिमाणं' 'संख्यायाः संज्ञा–' इत्यत्र 'स्तोमे डविधिः पञ्चदशाद्यर्थम्' इत्युक्तेऽपि स्त्रियां ङीबर्थमिह डड्विधीयते । स्तोमसाहचर्याच्च स्त्रियां प्रयोगः–सप्तदशी रात्रिरिति । तत्र तु डविधानं टाबर्थं यदि प्रयोगो दृश्यते । तददर्शने तु प्रपञ्चार्थम् । डिनेः सामान्यविधानात्तत्र 'शन्शतोर्डिनिश्छन्दसि वक्तव्यः' इति वचनं प्रपञ्चार्थमेव ॥

( उद्योतः ) ननु 'प्रस्थमात्रम्' इत्यादौ मात्रचो दर्शनाद् प्रमाणशब्देनात्र परिच्छेदकमात्रग्रहणादूर्ध्वमानेऽपि सिद्धावेतौ–अत आह—**यद्यायामेति** । अत एव चोत्तरसूत्रे परिमाणग्रहणं चरितार्थम् ॥ अत्र पक्षे 'प्रस्थमात्रम्' इत्याद्यसिद्धिः–इत्यरुचेराह—**अथ त्विति** । उत्तरत्र परिमाणग्रहणप्रयोजनं तु वार्तिककृदेव वक्ष्यति, तक्रकौण्डिन्यन्यायस्यापवादविषयत्वेनात्रानाश्रयणाच्च ऊर्ध्वमाने मात्रजपि–उरुमात्रमिति ॥

ननु 'प्रमाणे लः' इत्यत्रापि सूत्रवत्प्रमाणशब्देन परिच्छेदकमात्रग्रहणे 'ऊरुद्वयसम्' इत्याद्यनुपपन्नमत आह—**प्रमाणशब्दा इति** ॥ **मात्रचस्त्विति** । अत एव 'प्रस्थमात्रम्' इत्यादिसिद्धिः । अत एवोत्तरसूत्रस्थे वार्तिके 'मात्रादि' इत्यादिग्रहणं चरितार्थम् । आयामार्थकप्रमाणग्रहणानुवृत्तौ दघ्नादेर्बाधाप्राप्तेस्तद्वैयर्थ्यं स्पष्टमेव ।

पूर्वेणासिद्धिं दर्शयति—**तदन्तेति** । ननु 'प्रमाणे वर्तमानात्परस्य लुक्' इति तदर्थः, तत्र कस्तादन्तविधेरुपयोगः ? न च द्विगुर्न प्रमाणं, तर्हि प्रत्ययस्याप्यप्राप्तिरिति **चिन्त्यमिदम्** । तस्मात् '**किमर्थम्**' इति भाष्यस्य–पूर्वेण सिद्धेः 'द्विगोर्–' इत्यादि व्यर्थमित्येवाशयः । 'प्रमाणे वर्तमानादस्येत्यर्थे जातस्य प्रत्ययस्य लुक्' इति पूर्ववार्तिकार्थः । अस्य तु 'द्विगोः परस्य नित्यं सर्वत्रास्येत्यर्थे संशये चोत्पन्नस्य लुक्' इत्यर्थ इत्युत्तराशयः । **किञ्च** 'परत्वाल्लुको बाधकः संशये मात्रच्' इत्यप्यसङ्गतं, युगपत्प्राप्त्यभावात्[2] । नित्यग्रहणं तु 'सर्वत्र' इत्यर्थकमुभयोः समानम् । 'श्राव' इत्यत्र बाहुलकाद्घञ् । अन्यथा ॠदोरप्स्यात् ॥

ननु 'प्रमाणे' इत्यनुवृत्तेः 'पञ्चदश' इत्युदाहरणमयुक्तमत आह—**अत्रायामस्येति** । 'मात्रचः परिच्छेदकमात्रे स्मरणात्' इति

१ इदानीं सर्वेषु पुस्तकेषु प्रायः–'तस्य सिद्धत्वात्' इत्येव पाठः । उद्योताभिप्रायस्त्वसामी रक्षितः ॥

२ युगपत्प्राप्त्यभावादिति । सूत्रे प्रमाणशब्देन परिच्छेदकमात्रं गृह्यते इति सर्वसंमतम् । प्रमाणे ल इति वार्तिके तु प्रमाणत्वेन प्रसिद्धानामेव ग्रहणम् । न च वार्तिकेऽपि परिच्छेदकमात्रग्रहणमिति वाच्यम् । ऊरुद्वयसमित्याद्यसिद्धेः । तथा च द्विशममित्यादौ प्रमाणे ल इत्यस्याप्राप्तिः, द्विगोः प्रमाणत्वेन प्रसिद्धत्वाभावात् । ननु तथापि प्रमाणे ल इत्यत्र तदन्तविधिना प्राप्नोतीत्यत आह—कैयटे–तदन्तविध्यभावाल्लुगप्राप्तिरिति । 'परत्वाच्छ्रवणे प्राप्ते' इति कैयटेऽपि परत्वादिति न विप्रतिषेधसूत्रप्रवृत्त्युपपादकम् । किन्तु वस्तुस्थितिकथनम् । तथा च युगपत् प्राप्त्यभावादिति नास्ति दोषः । प्रमाणपरिमाणाभ्यामिति वार्तिके प्रमाणशब्देन न परिच्छेदकमात्रग्रहणम्, परिमाणग्रहणवैयर्थ्यापत्तेः । न च तत्र प्रमाणशब्देन प्रमाणत्वेन प्रसिद्धस्य ग्रहणे द्विशममात्रमित्यादौ संशये मात्रच् न स्यादिति वाच्यम् । तत्र वार्तिके प्रमाणपदेन यथाकथंचित्प्रमाणस्य ग्रहणेन मात्रच् सिद्धेः–इति कैयटाशयः–इति केषांचिन्मान्यानामभिप्रायः ॥

कैयटोक्तिरिदमुपलक्षणम्—उन्मानपरिमाणयोरपि, डिट्त्वन्तु एकविंशे तिलोपार्थम्, त्रयस्त्रिंशादौ टिलोपार्थं चेति बोध्यम् ॥ तस्यासिद्धत्वादिति । असिद्धवत्सूत्रस्यानित्यत्वादित्यर्थः ॥ तस्य सिद्धत्वादिति पाठे—तिलोपस्य सिद्धत्वादित्यर्थः ॥

( संशये मात्रच्प्रत्ययविधायकं श्लोकवार्तिकम् )

**प्रमाणपरिमाणाभ्यां**
**संख्यायाश्चापि संशये ॥**

**मात्रज्वक्तव्यः । शममात्रम् । दिष्टिमात्रम् । कुडवमात्रम् । पञ्चमात्राः । दशमात्राः ॥**

( प्रदीपः ) **प्रमाणपरिमाणाभ्यामिति** । रूढिशब्दौ भेदेनोपात्तौ ॥ **शममात्रमिति** । शमः प्रमाणमस्य स्यान्न वा, दिष्टिः प्रमाणमस्य स्यान्न वा, कुडवं प्रमाणमस्य स्यान्न वा—इत्यत्रार्थे मात्रच् ॥ **पञ्चमात्रा इति** । पञ्च स्युर्न वेति संशय्यमानार्थवाचिनः स्वार्थे प्रत्ययः । **अथ वा** वृत्तिविषये द्वयेकयोरित्यादिवत्संख्यामात्रवाचिनः षष्ठ्यर्थे प्रत्ययः । पञ्चत्वसंख्या प्रमाणमेषां स्यान्न [1]वेति—**पञ्चमात्राः ॥**

**(उद्योतः)** भेदेनेति । तेनोन्मानान्न ॥ **इत्यत्रार्थे इति** । संशयस्य प्रत्यासत्त्या तदस्येतिप्रत्ययार्थगतधर्मविषयस्यैव ग्रहणमुचितमिति भावः ॥ प्रत्ययार्थगतधर्मविषयसन्देहासम्भवादाह—**संशय्येति** ॥

( ५७१७ स्वार्थे प्रत्ययविधिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ॥ * ॥**

( भाष्यम् ) **वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलं वक्तव्यौ । तावदेव—तावद्द्वयसम्, तावन्मात्रम् । यावदेव—यावद्द्वयसम्, यावन्मात्रम् ॥**

( प्रदीपः ) **तावदेवेति** । तत्परिमाणं यस्य धान्यादेः तत्—तावद्धान्यादिकं, ततः स्वार्थे प्रत्ययः । उत्तरसूत्रे तु 'भावः सिद्धश्च डावतोः' इत्यर्थान्तरे वत्वन्तान्मात्रादिप्रतिपादनम् ॥

**प्रमाणं प्रत्ययार्थो न**
**तद्वत्यस्येति वर्तनात् ।**
**प्रथमश्च द्वितीयश्च**
**ऊर्ध्वमाने मतौ मम ॥**
**प्रमाणे लो द्विगोर्नित्यं**
**डट्स्तोमे शच्शनोर्डिनिः ।**
**प्रमाणपरिमाणाभ्यां**
**संख्यायाश्चापि संशये ॥**

———

१ 'इति संशय्य पञ्च—' इति च. पाठः ॥

( ९०२ विधिसूत्रम् ॥ ५ । २ । १ आ. १६ )

## २०५७ यत्तदेतेभ्यः परिमाणे वतुप् ॥ ५ । २ । ३९ ॥

( वतुप्प्रत्ययाधिकरणम् )

( परिमाणग्रहणाक्षेपभाष्यम् )

**किमर्थं परिमाण इत्युच्यते, न प्रमाण इति वर्तते ?**

( प्रदीपः ) **किमर्थमिति** । प्रमाणपरिमाणशब्दयोरेकार्थत्वं मत्वा **प्रश्नः ॥ न प्रमाण इति वर्तत इति** । काक्का नञः प्रयोगात्—वर्तत एवेत्यर्थः । **अथ वा**—अनेकार्थत्वान्निपातानां 'ननुशब्दस्यार्थे' नशब्दो वर्तते ॥

( उद्योतः ) **प्रमाणेत्यादि** । पूर्वसूत्रे प्रमाणशब्दः परिच्छेदकमात्रवाची, तत्साहचर्यात् 'यावानध्वा' इत्यादिप्रयोगदर्शनाच्चेह परिमाणशब्दोऽपि तथेति तदनुवृत्त्यैव सिद्धमिति भाव इति केचित् । अस्मादेव ज्ञापकात्तयोर्भेद इत्याचार्यदेशीयमतम् । ज्ञापकं विनाऽप्याहत्सूत्रोक्तरीत्या सिद्धोऽनयोर्भेद इत्याचार्यपक्षः ॥

( एकदेशिनः प्रयोजनभाष्यम् )

**एवं तर्हि सिद्धे सति यत्परिमाणग्रहणं करोति तज्ज्ञापयत्याचार्यः—अन्यत् प्रमाणम्, अन्यत्परिमाणमिति ॥**

( प्रदीपः ) आचार्यदेशीय आह—**एवं तर्हीति** ॥

( ज्ञापकासंभवप्रदर्शकं श्लोकभाष्यम् )

**डावतावर्थवैशेष्यान्निर्देशः पृथगुच्यते ।**

**नैतज् ज्ञापकसाध्यमन्यत्प्रमाणमन्यत्परिमाणमिति । उक्तोऽत्र विशेषः ॥**

**मात्राद्यप्रतिघाताय ।**

**एवं च कृत्वा मात्रादीनां प्रतिघातो न भवति ॥**

**भावः सिद्धश्च डावतोः ।**

**डावत्वन्ताच्च मात्रजादीनां भावः सिद्धो भवति ॥**

( प्रदीपः ) आचार्य आह—**डावताविति** । पूर्वाचार्यप्रक्रियाऽपेक्षो निर्देशः । इह तु वतुपं विधाय 'आ सर्वनाम्नः' इत्यात्त्वं विहितम् । पूर्वाचार्यास्तु—डावतुं विदधिरे ॥ **अर्थवैशेष्यादिति** । विशिष्यत इति विशेषः, विशेषस्य भावो वैशेष्यम्, अर्थस्य वैशेष्यम्—**अर्थवैशेष्यम्**=अर्थभेदस्तस्मात्परिमाणशब्दस्य पृथङ्निर्देशः क्रियते ॥

**उक्तोऽत्रेति** । 'आयामस्तु प्रमाणं स्यात्परिमाणं तु सर्वत' इति ॥

**मात्राद्यप्रतिघातायेति** । यदि 'प्रमाण' इत्यनुवृत्त्या प्रमाणोपाधिकेभ्यो यदादिभ्यो वतुब्विधीयते तदाऽसौ विशेषविहितत्वात्सामान्यविहितान् मात्रादीन् बाधेत । परिमाणग्रहणे तु सति भिन्नोपाधिविषयत्वाद्बाध्यबाधकभावाभावः । तेन

'तन्मात्रं' 'यन्मात्रम्' इत्यादि प्रमाणोपाधौ प्रकृत्यर्थे सिद्धं भवति ॥

**भावः सिद्धश्चेति** । तत्परिमाणमस्य धान्यस्य तत्—तावद्धान्यं राशीकृतं, तावत्प्रमाणमस्य कुड्यादेस्तावन्मात्रम् । यादृग्राशीकृतस्य धान्यस्य दैर्घ्यं तादृगस्यापीत्यर्थः । एकविषयत्वे तु वतुपैवोक्तत्वाद्विशिष्टस्य प्रमेयस्य तदन्तान्मात्रादयो न स्युः । यस्य हि तावत्प्रमाणं तस्य तत्—प्रमाणमिति तावच्छब्दस्यैव तत्रापि प्रयोगः स्यात् ॥

**( उद्द्योतः )** डावतोरप्रसिद्धत्वादाह—**पूर्वाचार्यैति** ॥ **पृथङ्निर्देश इति** । अत्र परिमाणशब्देन रूढस्यैव ग्रहणमिति भावः । 'यावानध्वा' 'यावती रज्जुः' 'अधिकरणैतावत्त्वे च' इत्यादिनिर्देशास्तु सादृश्याद्बोध्या इति तात्पर्यम् ॥ भाष्ये—**उक्तोऽत्रेति** । 'आर्हात्' इति सूत्रे इत्यर्थः ॥ **प्रमाणोपाधिकेभ्य इति** । प्रमाणशब्देन परिच्छेदकमात्रम् ॥ **प्रमाणोपाधौ**—आयामपरिच्छेदकत्ववदुपाधौ । सर्वतोमानोपाधौ तु 'यन्मात्रम्' इति नेष्यत एव, 'यावत्' इत्येवेष्यत इति भावः । इदमुपलक्षणम्—ऊर्ध्वमानोपाधौ 'तद्घ्नम्' इत्यादेः ॥ नन्वेतदर्थमत्र सूत्रे 'प्रमाणे' इति परिच्छेदकमात्रार्थकमनुवर्त्य 'यत्तदेतेभ्यो वतुप् च' इति सूत्र्यताम् । चेन—मात्रादयः । 'प्रथमश्च द्वितीयश्च'—इत्यनेनात्रापि नाव्यवस्था । सर्वप्रयोगाश्च लक्षणां विनैव सिध्यन्तीत्यपरमनुकूलम्, एवञ्च परिमाणग्रहणं व्यर्थमिति चेन्न, सर्वतोमाने 'यन्मात्रम्' इत्यस्यानिष्टस्य त्वन्मते आपत्तेरिति बोध्यम् ॥ फलान्तरमाह—भाष्ये—**भावः सिद्धश्चेति** ॥ **विशिष्टस्येति** । कुड्यादिरूपस्येत्यर्थः ॥ **तस्य तत्प्रमाणमिति** । साक्षात्—परम्परया वा परिच्छेदकमित्यर्थः ॥ **तावच्छब्दस्यैवेति** । 'न कर्मधारयान्मत्वर्थीयः' इति न्यायेनेति भावः । अत एव मात्रजाद्यन्तान्न प्रत्ययमाला, परिमाणग्रहणे सर्वतो मानत्वेन बोधाय वतुः, तदन्तात्कुड्यादिबोधाय मात्रजाद्यपीति सर्वमनवद्यम् ॥

( ५७१८ सादृश्ये वतुब्विधिवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ॥ * ॥

**( भाष्यम् ) वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानं कर्तव्यम् । न त्वावाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते । त्वावतः पुरुवसो । यज्ञं विप्रस्य मावतः । त्वत्सदृशस्य मत्सदृशस्येति ॥**

**डावतावर्थवैशेष्या-**
**न्निर्देशः पृथगुच्यते ।**
**मात्राद्यप्रतिघाताय**
**भावः सिद्धश्च डावतोः ॥**

**( प्रदीपः ) सादृश्य इति** । विषयनिर्देशोऽयं, सदृशस्तु प्रत्ययार्थः ॥

**( उद्द्योतः )** ननु सादृश्ये प्रत्ययं विधाय 'त्वत्सदृशस्य' इत्यर्थकथनमयुक्तमत आह—**विषयेति** । परे तु 'उक्तोऽत्र भेदः' इत्यत्रत्यभाष्यात्पूर्वसूत्रे प्रमाणशब्द आयामार्थक एव, अत्र परिमाणशब्दश्च सर्वतोमानार्थक एव, एवञ्च 'प्रस्थमात्रम्' इत्यादयः प्रयोगाः । 'मात्रचस्त्वविशेषेण परिच्छेदकमात्रे स्मरणात्' इति कैयटश्चिन्त्य एवेत्याहुः ॥



( ९०३ विधिसूत्रम् ॥ ५ । २ । १ आ. १७ )

## २०५८ किमिदंभ्यां वो घः ॥५।२।४०॥

( किमिदंभ्यां वतुब्ज्ञापकभाष्यम् )

**केन विहितस्य किमिदंभ्यां वतुपो वो घत्वमुच्यते ?**

**एतदेव ज्ञापयत्याचार्यः—'भवति किमिदंभ्यां वतुप्' इति, यदयं किमिदंभ्यामुत्तरस्य वतुपो[1] वो घत्वं शास्ति ॥**

**( प्रदीपः ) एतदेवेति** । आदेशविधानान्यथाऽनुपपत्त्या प्रत्ययोऽनुमीयते ॥

( योगविभागेन वतुप्साधकभाष्यम् )

**अथवा योगविभागः करिष्यते—**

**किमिदंभ्याम् ।**

**वतुब् भवति । ततः—**

**वो घः । इति ।**

**वश्चास्य घो भवतीति ॥**

( ९०४ विधिसूत्रम् ॥ ५ । २ । १ आ. १८ )

## २०५९ किमः संख्यापरिमाणे डति च ॥ ५ । २ । ४१ ॥

( पूर्वपक्षिण उपसंख्यानभाष्यम् )

**बहुष्विति वक्तव्यम् । इह मा भूत्—कियान्, कियन्तौ ।**

**तत्तर्हि वक्तव्यम् ॥**

**( प्रदीपः ) बहुष्विति वक्तव्यमिति** । का संख्या परिमाणमस्य वर्गस्येति यदा वर्गावयवगतसंख्याविशेषविषयः प्रश्नस्तदा प्रत्ययः प्राप्नोति—कति वर्ग इति, तदा 'पञ्चकः' इत्याद्युत्तरेण भाव्यम् । तस्मादत्र प्रत्ययनिवृत्तये 'बहुषु' इति वक्तव्यमिति भावः ॥

**( उद्द्योतः )** ननु 'कियान्' इति न सङ्ख्याप्रश्नः, किन्तु परिमाणमात्रप्रश्नः, तत्प्रश्ने तु तत्रापि बहुवचनमेव—कियन्तः—इतीत्यत आह—**का संख्येति** ॥

( सिद्धान्तभाष्यम् )

**न वक्तव्यम् । किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्न-**

[1] 'वतुपो घत्वं' इति क. पाठः ॥

**ज्ञानिर्ज्ञाते, अनिर्ज्ञातं च बहुषु । द्वयेकयोः पुनर्निर्ज्ञातम् । निर्ज्ञातत्वाद् द्वयेकयोः परिप्रश्नो न भवति । परिप्रश्नाभावात् किमेव तावन्नास्ति कुतः प्रत्ययः ॥**

( प्रदीपः ) **किमित्येतदिति** । इह 'अस्य'इत्यधिकाराद्यदीया संख्या पृच्छ्यते तत्रैव प्रत्ययेनोत्पत्तव्यम् । तत्र यदा वर्गावयवगतसंख्याविशेषप्रश्नस्तदाऽवयवेष्वेव प्रत्ययेन भाव्यं न तु व्यवहितसंख्यासम्बन्धे वर्गे । ततः 'कति गावोऽस्मिन् वर्गे' इति भवति, 'कति गावोऽयं वर्गः' इति वा संघसंघिनोरभेदविवक्षायाम् । 'कियान्' इति तु परिमाणोपाधौ प्रकृत्यर्थे प्रयुज्यते । संख्याप्रश्ने तु 'कियन्तः' इति बहुवचनान्तस्यैव प्रयोगः ॥

( उद्योतः ) उत्तराशयमाह—**इहेति** ॥ **व्यवहितसंख्यासम्बन्धे इति** । व्यवहितः प्रश्नविषयसंख्यया सम्बन्धो यस्येत्यर्थः । यथा प्रकृते वर्गावयवद्वारा वर्गेण सम्बन्ध इति भावः ॥ तत्र तदवयवसंख्याप्रश्ने यादृशप्रयोगस्तमाह—**कति गावोऽस्मिन्निति** ॥ प्रकारान्तरमाह—**कति गाव इति** । असमस्तमेतत् । तदुपपत्तिमाह—**सङ्घेति** ॥ **किमेव तावन्नास्ति**—इति भाष्यस्य सङ्ख्याप्रश्नार्थको नास्तीत्यर्थः ॥

( ९०५ विधिसूत्रम् ॥ ५ । २ । १ आ. १९ )

## २०६० संख्याया अवयवे तयप् ॥ ५ । २ । ४२ ॥

( तयप्प्रत्ययाधिकरणम् )

( संख्याशब्देन कस्याग्रहणमितिनिर्णयभाष्यम् )

**इह कस्मान्न भवति—बहवोऽवयवा अस्याः संख्याया इति ?**

**'अवयवे या संख्या' इत्युच्यते, न च काचित्संख्याऽस्ति यस्या बहुशब्दोऽवयवः स्यात् ।**

**ननु चेयमस्ति- संख्येत्येव ।**

**नैषा संख्या, संज्ञैषा ॥**

( प्रदीपः ) **बहवोऽवयवा इति** । उत्सृष्टभेदस्य संख्यालक्षणस्यार्थस्यैकत्वादीन् विशेषानवयवान्मत्वा **प्रश्नः** ॥ **अवयवे या संख्येति** । अवयवे यः संख्यावाची शब्दो वर्तते तस्मात् 'अस्य' इत्यधिकारादवयविनि प्रत्ययो भवति । न च सामान्यविशेषयोरवयवावयविभावः सम्भवतीति भावः ॥ **बहुशब्द इति** । बहुशब्दवाच्योऽर्थ इत्यर्थः । अथैवं कल्प्यते—बहव एकत्वगुणा अवयवा अस्या विंशतिसंख्यायास्तत्समुदायस्वरूपायाः सा बहुतयी विंशतिरिति, तथापि प्रत्ययार्थस्य प्रकृत्यर्थो विशेषणमव्यभिचारादनुपपन्नम् ॥ **संख्येत्येवेति** । संख्याशब्दवाच्या संख्याऽवयविनीत्यर्थः ॥ **नैषा संख्येति** । संख्याशब्देन संख्याविशेषो नाभिधीयत इत्यर्थः ॥ **संज्ञैषेति** । एकत्वादीनां संख्यात्वजातियुक्तानां 'संख्या' इत्येषा संज्ञा । तत्र संख्याशब्दप्रतिपाद्यस्य सामान्यविशेषस्यावयवित्वासम्भव इत्युक्तमेतत् । बहुतयं यूथमित्येतदवयवावयविभेदविवक्षायां भवति । बहुतयं रूपमित्येतच्चित्रस्य रूपस्यावयवित्वविवक्षायां भवति । यदा तु रूपसामान्यं विवक्ष्यते शुक्लादिविशेषविषयं तदा सामान्यविशेषयोरवयवावयविभावाभावान्न भवति ॥

( उद्योतः ) ननु संख्याया बह्ववयवासम्भवोऽत आह—**उत्सृष्टेति** । त्यक्तभेदस्येत्यर्थः ॥ ननु तथोक्तावपि दोषस्तदवस्थः, अवयवे एव बहुशब्दस्य वृत्तेरत आह—**अवयवे य इति** । शब्दस्यावयवत्वानुक्तेराह—**शब्दवाच्य इति** ॥ **एकत्वगुणा इति** । एकत्वसङ्ख्यारूपा गुणा इत्यर्थः ॥ **अव्यभिचारादिति** । विंशतिसङ्ख्याया बह्वेकत्वावयवकत्वाव्यभिचारादिति भावः । **इदं चिन्त्यं** । तत्तद्द्रव्यसमुदायरूपत्वस्य विंशत्यादीनां पङ्क्त्यादिसूत्रे भाष्ये उक्तत्वेऽपि एकत्वसमूहरूपत्वे न मानम् । किञ्चैवं विंशतिर्गावि इत्याद्यसिद्धिरिति ॥ **संख्याविशेष इति** । नियतपरिच्छेदहेतुर्हि सङ्ख्येति भावः । नापि संख्यासंज्ञकत्वं सङ्ख्याशब्दस्येत्यपि बोध्यम् ॥ **सामान्यविशेषस्येति** । संख्यात्वस्येत्यर्थः । तदाश्रयश्च एकत्वाद्यतिरिक्तो न कश्चिदिति भावः ॥ **चित्रस्य रूपस्येति** । तच्चातिरिक्तं, समूहोऽतिरिक्त इति वा । अवयवे वर्तमानो यः संख्यासंज्ञकस्तस्मात्त्ययबित्यर्थ इति भावः । एतेन 'बहुशब्दस्य संख्यावाचकत्वाभावात्कथं तयप्' इत्यपास्तम् ।

( ५७१९ अवयविनि तयब्विधिवार्तिकम् ॥ १ ॥ )

**॥*॥ अवयवविधानेऽवयविनि प्रत्ययः ॥*॥**

( भाष्यम् ) **अवयवविधानेऽवयविनि प्रत्ययो भवतीति वक्तव्यम् ।**

**इह मा भूत्—पञ्चावयवाः, दशावयवाः—इति ॥**

( प्रदीपः ) **अवयविनीति** । स्वार्थे प्रत्ययो मा भूदित्येवमर्थमवयविनीति वक्तव्यम् ॥

( उद्योतः ) भाष्ये—**अवयवविधाने इति** । अवयवे वर्तमानाद्विधाने इत्यर्थः ॥ अर्थानिर्देशादाह—**स्वार्थे इति** ॥

( आक्षेपपूर्वकं वार्तिकान्यथासिद्धिसाधकं भाष्यम् )

**अथ अवयविनीत्युच्यमानेऽवयवस्वामिनि कस्मान्न भवति—पञ्च पश्ववयवा देवदत्तस्येति ?**

**अवयवशब्दोऽयं गुणशब्दः, अस्येति च वर्तते । तेन यं प्रत्यवयवो गुणस्तस्मिन्नवयविनि प्रत्ययेन भवितव्यम् ।**

**कं च प्रत्यवयवो गुणः ?**

**समुदायम् ॥**

**यद्येवमवयविनीत्यपि न वक्तव्यम् ।**

**अवयवेषु कस्मान्न भवति ?**

**अस्येति वर्तते ॥**

( प्रदीपः ) **अवयवस्वामिनीति** । अवयवाः सन्त्यस्येति व्युत्पत्त्या स्वामिनोऽप्यवयविशब्देनाभिधानात्तत्रापि प्रत्ययेन

भाव्यमिति मत्वा प्रश्नः ॥ **अवयवशब्दोऽयमिति** । सम्बन्धिशब्दाश्चियत एव सम्बन्धिनि मत्वर्थीयो भवति । यथा पितृमानिति पुत्र एवाभिधीयते, पुत्रवानिति च पितैव। तथेहाप्यवयविशब्देनावयवारब्ध एवोच्यते न तु स्वामीत्यर्थः ॥ **अस्येति च वर्तत इति** । 'अत इनिठनौ' इत्यत्र 'तदस्यास्त्यस्मिन्निति मतुप्' इत्यतोऽस्येति वर्तते। सप्तम्यर्थे तु इनिठनोरभावः, 'सप्तम्यां च न तौ स्मृतौ' इति वचनात् ॥ **अस्येति वर्तत इति** । 'तदस्य संजातम्' इत्यतः ॥

(उद्योतः) अवयविशब्दस्य अवयवारब्धे एव प्रयोगादाह—**अवयवा इति** । 'कश्च प्रत्यवयवो गुणः? समुदायम्' इति भाष्येण अयुतसिद्धावयवानुगतस्तत्समूह एवावयवीति ध्वनितम् । 'स्त्रियां च' इति सूत्रे स्पष्टमेवैतदुक्तम् ॥ नन्वेवमपि सप्तम्यर्थे इनौ तदाधारभूम्यादावतिप्रसङ्गोऽत आह—**सप्तम्यर्थे त्विति** ॥

(९०६ विधिसूत्रम् ॥ ५ । २ । १ आ. २०)

## २०६२ उभादुदात्तो नित्यम् ॥५।१।४४॥

(प्रदीपः) उभयो मणिरित्यवयविनोऽवयवद्वित्वनिमित्तो व्यपदेशः । उभौ पीतलोहितावयवौ यस्य स उभयः । उभये देवमनुष्या इति वर्गद्वयापेक्षमतिरोहितभेदानां वर्गिणामभिधानम् ॥

(उद्योतः) अयजन्तस्य यथैकवचनान्तत्वं तथा दर्शयति—**उभय इति** । एवञ्चैकस्यावयविनः प्राधान्यादेकवचननिर्देश इति भावः ॥ 'उभये' इति बहुवचनोपपत्तिं दर्शयति—**वर्गद्वयेति** । द्विवचनं तु न, अनभिधानात् । तिरोहितावयवभेदवर्गद्वयाभिधाने हि तत्सम्भवः ॥

(उदात्तपदाक्षेपप्रयोजनभाष्यम्)

**किमर्थमुदात्त इत्युच्यते?**

**उदात्तो यथा स्यात् ।**

**नैतदस्ति प्रयोजनम्, प्रत्ययस्वरेणाप्येष स्वरः सिद्धः ।**

**न सिध्यति । चितोऽन्त उदात्तो भवतीति अन्तोदात्तत्वं प्रसज्येत ।**

(प्रदीपः) **किमर्थमिति** । किमप्राप्तमादेरुदात्तत्वं विधातुमुदात्तवचनम्? उतामन्त्रितस्वरबाधनार्थमन्तस्यैवोदात्तत्वं विधातुम्? इति प्रश्नः ॥ **उदात्त इति** । आदेरिति भावः । स्थानिवद्भावात्पित्त्वादनुदात्तत्वं प्राप्तं बाधित्वा चित्स्वरे प्राप्ते आदेरुदात्तत्वं विधीयते ॥ **प्रत्ययस्वरेणापीति** । स्थानिवद्भावात्प्रत्ययत्वात् । चित्स्वरं तु पूर्वपक्षवादित्वान्न पश्यति । सर्वदर्शित्वे पूर्वपक्षमेव न विदधीत ॥

(उद्योतः) **पूर्वपक्षवादित्वादिति** । 'अय—इति प्रत्ययान्तरं विधेयं, ङीपु मात्रजितिप्रत्याहाराश्रयणात्सिध्यतीत्याशयः । प्रत्ययान्तरविधाने गौरवं मन्यमान आह—**चितोऽन्त इति**'—इत्याशयमाह कश्चित् ॥

(उदात्तपदसामर्थ्यादिष्टार्थबोधकभाष्यम्)

**अथ उदात्त इत्युच्यमाने कुत एतत्—आदेरुदात्तत्वं भविष्यति न पुनरन्तस्येति ।**

**उदात्तवचनसामर्थ्यात् यस्याप्राप्तः स्वरस्तस्य भविष्यति ।**

**कस्य चाप्राप्तः?**

**आदेः ।**

**अन्तस्य पुनश्चित्स्वरेणैव सिद्धम् ॥**

(प्रदीपः) **कुत एतदिति** । स्वरान्तरबाधनार्थमन्तस्यैवोदात्तत्वमस्त्विति मन्यते । 'हे उभय' इत्यामन्त्रिताद्युदात्तत्वप्रसङ्गः ॥ **उदात्तेति** । 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते' इति चित् स्वर एवानेन बाध्यते, नामन्त्रितस्वरः ॥

(उद्योतः) **हे उभयेति** । 'हे'शब्दाप्रयोगे इदमुदाहरणम् । तत्प्रयोगे तु पदात्परत्वेनाष्टमिकनिघातप्रसङ्ग इति **चिन्त्यम्** ॥ **नामन्त्रितस्वर इति** । ननूभशब्दस्य 'उभे भद्रे' इत्यादिप्रयोगादन्तोदात्तत्वमावश्यकम्, एवञ्च चित्त्वादन्तोदात्तत्वेऽकारस्यानुदात्तत्वाय'यस्य—' इतिलोपे—'अनुदात्तस्य च यत्र—'इत्यनेनाद्युदात्तत्वसिद्धेरुदात्तग्रहणं व्यर्थमेव—इति चेन्न; प्रकृतेरपि शेषनिघातेनानुदात्तत्वात् । न चोभात् 'अय'इति निरनुबन्धकं प्रत्ययान्तरमस्तु किमुदात्तग्रहणेनेति वाच्यं, पदलाघवाभावात् । एतेन—'उभात्—अय इति निरनुबन्धकादेशान्तरमस्तु, तस्यान्तरतम्येनानुदात्तत्वात्, उभयशब्दस्यान्तोदात्ततया 'अनुदात्तस्य च—' इत्यनेनाद्युदात्तत्वसिद्धेरुदात्तग्रहणं व्यर्थमेव' इति परास्तम् ॥

(९०७ विधिसूत्रम् ॥ ५ । २ । १ आ. २१)

## २०६३ तदस्मिन्नधिकमिति दशान्ताड्डः ॥ ५ । २ । ४५ ॥

(डप्रत्ययाधिकरणम्)

(अधिकपदाक्षेपसमाधानभाष्यम्)

**इह कस्मान्न भवति—एकादश माषा अधिका अस्मिन् कार्षापणशत इति?**

**अधिके समानजातौ**

**समानजातावधिक इष्यते ।**

**अथेह कस्मान्न भवति—एकादश कार्षापणा अधिका अस्यां कार्षापणत्रिंशति—इति?**

**इष्टं शतसहस्रयोः ।**

**शतसहस्रयोरधिक इष्यते ।**

**अथेहैकादशं शतसहस्रमिति कस्याधिक्ये भवितव्यम्?**

**यस्य संख्या तदाधिक्ये**

**डः कर्तव्यो मतो मम ॥**

यदि तावच्छतानि संख्यायन्ते शताधिक्ये भवितव्यम्, अथ सहस्राणि संख्यायन्ते सहस्राधिक्ये भवितव्यम् ॥

( प्रदीपः ) अधिके समानजाताविति । समाना या जातिस्तस्यां सत्यामधिकेऽर्थे वर्तमानात् प्रत्ययः । प्रकृतिप्रत्ययार्थयोस्तुल्यजातीयत्वे प्रत्यय इत्यर्थः । न्यायप्राप्त एवायमर्थ उक्तः । तथा हि-एकादशाधिका अस्मिन् गोशत इति वाक्ये शतविशेषणत्वेनाप्युपात्ता गावः सन्निधानात् प्रकृत्यर्थमपि विशिंषन्ति । एवं वृत्तावपि 'एकादशं गोशतम्' इत्युक्ते गावः प्रकृत्यर्थतया प्रतीयन्ते । शब्दान्तरप्रयोगमन्तरेणाप्यधिकाधिकिभावस्तुल्यजातिविषय एव प्रसिद्धः । न च वृत्तौ भिन्नजातीयसंख्येयवाचिना शब्देन प्रकृत्यर्थो विशेष्टुं शक्यते, 'सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न' इति न्यायात् ॥ यस्य संख्येति । शतानां सहस्रं-शतसहस्रमिति व्युत्पत्तिः क्रियते, सहस्राणां शतं-शतसहस्रमिति च । 'संख्याया अल्पीयसः' इति द्वन्द्वे च स्मरणाच्छतस्य पूर्वनिपातः । तत्र शतानां सहस्रमिति शतानि संख्यायन्त इति तान्येव प्रकृत्यर्थतया विज्ञायन्ते-एकादशशतान्यधिकान्यस्मिञ्शतसहस्रे तदेकादशं शतसहस्रमिति । सहस्राणां शतं शतसहस्रमिति तु सहस्राणां संख्येयत्वात्तेषामेव प्रकृत्यर्थत्वम्-एकादश सहस्राण्यधिकान्यस्मिन्नेकादशमिति प्रकरणादिवशाच्छतानां सहस्राणां वा संख्येयत्वावसायः । 'यस्य संख्या तदाधिक्ये' इत्येतत्प्रत्ययार्थेन तुल्यजातीयस्य प्रकृत्यर्थस्याश्रयणाल्लभ्यत इति नायमपूर्वोऽर्थः ॥

( उद्योतः ) प्रत्ययार्थापेक्षया समानजातीये प्रकृत्यर्थेऽधिके सति प्रत्यय इत्यर्थस्तदाह—समाना येति । न्यायेति ॥ प्रत्यासत्तिन्यायेत्यर्थः ॥

शब्दान्तरेति । 'शब्दान्तरप्रयोगमन्तरेणापि' इत्यपिघटितः पाठोऽपपाठः । तत्प्रयोगे तु शब्दतः सन्निहितेन तेनार्थतः सन्निहितं सजातीयं बाध्यते, यथोदाहृते 'एकादश माषाः' इत्यादौ । न च तत्र वृत्तिः सम्भवतीत्याह—न चेति ॥ सविशेषणानामिति । इदमुपलक्षणं-सविशेष्याणामित्यस्यापि । अन्यथा प्रकृते माषाणां विशेष्यत्वात्तदसङ्गतिः स्पष्टैव । वस्तुतः प्रत्यासत्तिन्यायविरोधादनभिधानाच्च न तथा प्रयोग इति तत्त्वम् । अत एव भाष्ये 'इष्यते' इत्युक्तिः ॥ भाष्ये—कार्षापणत्रिंशतीति—सप्तमी ॥ उत्तरमाह—इष्टं शतेति । 'कस्याधिक्ये' इति पाठः ॥ प्रत्ययार्थेनेति । 'अस्मिन्' इत्यनेनेत्यर्थः ॥ भाष्ये—परिमाणशब्दानां—शतसहस्ररूपाणाम्, अधिकस्याधिकरणाभावात्—तत्त्वाभावात्—अनिर्देश इत्यर्थः ॥

(५७२० इष्टसिद्धौ सूत्रस्यासामर्थ्यबोधकवार्तिकम् ॥ १ ॥)

॥ * ॥ डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः ॥ * ॥

( भाष्यम् ) डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः । अगमको निर्देशोऽनिर्देशः । नह्येकादशानां शतमधिकरणम् ॥

( प्रदीपः ) न ह्येकादशानामिति । तेषां शतेऽनन्तर्भावादिति भावः ॥

( उद्योतः ) अनन्तर्भावादिति । अन्तर्भावे हि 'वृक्षे शाखा' इतिवत्स्यादधिकरणत्वमिति भावः ॥

( ५७२१ अन्यथानिर्देशेन समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं तु पञ्चमीनिर्देशात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम्? पञ्चमीनिर्देशः कर्तव्यः-तदस्मादधिकमिति ॥

( प्रदीपः ) पञ्चमीनिर्देश इति । 'यस्मादधिकम्' इति निपातनात्, बुद्धिप्रकल्पितापायाश्रयणाद्वा पञ्चमी ॥

( वार्तिकद्वयान्यथासिद्धिसाधकभाष्यम् )

स तर्हि पञ्चमीनिर्देशः कर्तव्यः ।

न कर्तव्यः । यद्यपि तावद्वैषयिके व्यापके वाऽधिकरणत्वे संभवो नास्ति, औपश्लेषिकमधिकरणं विज्ञास्यते—एकादश कार्षापणा उपश्लिष्टा अस्मिञ्छते—एकादशं शतम् ॥

---

अधिके समानजाताविष्टं शतसहस्रयोः ।
यस्य संख्या तदाधिक्ये डः कर्तव्यो मतो मम ॥ १ ॥

( प्रदीपः ) औपश्लेषिकमिति । एवं चाधिकसंबन्धे पञ्चमीसप्तम्यौ भवतः । अधिका खारी द्रोणेनेति कर्तरि तृतीयाऽपि भवति ॥

( उद्योतः ) औपश्लेषिकमिति । उप-समीपे श्लेषः-सम्बन्धः, तत्कृतमित्यर्थः ॥ एवञ्चेति । अत एवैतन्निर्देशोपपत्तिः ॥ कर्तरि तृतीयेति । अधिकशब्दार्थान्तर्गताध्यारोहणक्रियायाश्चान्वय इति भावः । एवं ह्यत्र षष्ठीव्यावृत्तये 'कर्तृकर्मणोः' इति सूत्रे कृद्ग्रहणस्यावश्यकत्वेन तत्सूत्रस्थभाष्यमसङ्गतं स्यात् । तस्मात् 'उपश्लिष्टाः' इति क्रियाऽपेक्षमधिकरणत्वमिति भाष्याशयः । कर्तृद्वारा चेदमधिकरणं, कर्त्रा चेदमुपश्लिष्टमिति । तृतीया तु प्रकृत्यादित्वादत्रेति तत्त्वम् । तद्ध्वनयन्नाह भाष्ये—एकादश कार्षापणा उपश्लिष्टा अस्मिन् शत इति ॥

---

१ 'द्वन्द्वे चा द्वन्द्वे च' इति झ. पाठः ॥
२ अपपाठ इति । स्वकल्पनयाऽपपाठ इति । वस्तुतस्तु 'अपि'घटितः पाठः सुयोज-इति स्पष्टमेव ॥
३ उत्तरमिति । अथेह कस्मान्न कार्षापणत्रिंशति-इति भाष्यप्रश्नस्योत्तरमित्यर्थः ॥

४ 'तृतीया भवति' इति क. पाठः ॥
५ क्रियापेक्षमिति । उपश्लिष्टशब्दवाच्य-उपश्लेषणक्रियापेक्षमधिकरणत्वमिति भावः ॥
६ तृतीया त्विति । अधिका खारी द्रोणेनेत्यत्र तृतीयेत्यर्थः ॥

( ९०८ विधिसूत्रम् ॥ ५ । २ । १ आ. २२ )

## २०६४ शदन्तविंशतेश्च ॥ ५।२।४६ ॥

( अन्तग्रहणाक्षेपभाष्यम् )

**किमर्थं शद्ग्रहणेऽन्तग्रहणम् ?**

( प्रदीपः ) **अन्तग्रहणमिति** । केवलस्य शतः प्रातिपदिकस्यासंभवात्प्रत्ययग्रहणपरिभाषया वा तदन्तविधिर्भविष्यतीति **प्रश्नः** ॥

( उद्द्योतः ) ननु 'ग्रहणवता–' इति निषेधात् 'दशान्तात्–' इतिवदिदमप्यन्तग्रहणमत आह—**केवलस्येति** । एवञ्च प्रातिपदिकग्रहणाभावान्न निषेधप्रवृत्तिरिति भावः । तदाह—**प्रत्ययग्रहणपरिभाषया चेति** । सामर्थ्यापेक्षो विकल्पः । त्रिंशदादिषु निपातनात् शत्प्रत्ययः ॥

( ५७२२ अन्तग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् ॥ * ॥

( भाष्यम् ) **शद्ग्रहणेऽन्तग्रहणं क्रियते प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणं भवतीति इह न प्राप्नोति—एकत्रिंशं शतम् । इष्यते चात्रापि स्यादिति । तच्चान्तरेण यत्नं न सिध्यतीति—अन्तग्रहणमेवमर्थमिदमुच्यते ।**

**अस्ति प्रयोजनमेतम् ।**

**किं तर्हीति ?**

( ५७२३ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ संख्याग्रहणं च ॥ * ॥

( भाष्यम् ) **संख्याग्रहणं च कर्तव्यम् । इह मा भूत्—गोत्रिंशदधिका अस्मिन् शत इति ॥**

( प्रदीपः ) **संख्याग्रहणं चेति** । 'संख्याया अवयवे तयप्' इत्यतः 'संख्यायाः' इत्यनुवर्तते इति व्याख्यानं कर्तव्यमित्यर्थः । एकत्रिंशदादयश्च शब्दाः संख्यान्तरस्य नरसिंहादय इव जात्यन्तरस्य वाचकाः, न तु संख्यासमूहस्य ॥

( उद्द्योतः ) नन्वेकत्रिंशदादयोऽपि सङ्ख्यासमूहवाचका न सङ्ख्यावाचका इति तेभ्यः प्रत्ययानुपपत्तिरत आह—**एकत्रिंशदादय इति** । सङ्ख्यान्तरस्य समूहविशेषरूपस्येत्यर्थः ॥ **न तु सङ्ख्यासमूहस्येति** । त्रिंशत्त्वैकत्वसमूहस्येत्यर्थः । अत एव 'नान्तादसंख्यादेः–' इति चरितार्थम् ॥

( ५७२४ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ विंशतेश्च ॥ * ॥

( भाष्यम् ) **विंशतेश्चान्तग्रहणं कर्तव्यम् । इहापि यथा स्यात्—एकविंशं शतम् । चकारात्संख्याग्रहणं च कर्तव्यम् । इह मा भूत्—गोविंशतिरधिका अस्मिञ्शत इति ॥**

( प्रदीपः ) **विंशतेश्चेति** । 'ग्रहणवता–' इति तदन्तविधिनिषेधात्तदन्तादपि यथा स्यादिति वचनम् ॥

( उद्द्योतः ) ननु विंशतिशब्दोत्तरमन्तग्रहणे व्यपदेशिवद्भावनिषेधात्केवलेऽप्राप्तौ 'इहापि' इति भाष्ये—अपिशब्दोऽनुपपन्न इति चेन्न; 'अन्तग्रहणं कर्तव्यम्' इत्यस्य 'तदन्ताच्च' इति वक्तव्यमित्यर्थात् ॥

---

( ९०९ विधिसूत्रम् ॥ ५ । २ । १ आ. २३ )

## २०६५ संख्याया गुणस्य निमाने मयट् ॥ ५ । २ । ४७ ॥

( मयट्प्रत्ययाधिकरणम् )

(प्रदीपः) 'तदस्य संजातम्–'इत्यतस्तदस्येत्यनुवर्तते । 'मेङ् प्रणिदाने' इत्यस्माद्धातोः करणे ल्युटि निमानशब्दः, स च मूल्यवाची । प्रकृत्यर्थविशेषणं चैतत् । निमाने वर्तमानात्संख्यावाचिनोऽस्येति षष्ठ्यर्थे मयट्प्रत्ययो गुणस्य चेन्निमानं भवति । गुणशब्दः समानावयववचनः । निमानस्य निमेयापेक्षत्वान्निमेयं प्रत्ययार्थः संपद्यते । निमानस्य च गुणत्वमन्तरेण निमेयस्य गुणत्वं नोपपद्यते इति सामर्थ्यान्निमानस्यापि गुणत्वं विज्ञायते । यवानां द्वौ भागौ निमानमस्योदश्विद्भागस्य–द्विमयमुदश्विद्यवानामित्युदाहरणम् । भागविशेषप्रतिपत्त्यर्थं यवादेः प्रकृत्यर्थविशेषणस्योपादानं, नित्यसापेक्षत्वाच्च वृत्तिर्भवति ॥ संख्याया इति किम् ? यवभागौ निमानमस्योदश्विद्भागस्य ॥ गुणस्येति किम् ? द्वौ कार्षापणौ निमानमस्य व्रीहेर्द्विमयो व्रीहिः कार्षापणयोरिति मा भूत् ॥ निमान इति किम् ? यवानां द्वौ भागौ समीपेऽस्योदश्विद्भागस्येत्यत्र मा भूत् ॥

( उद्द्योतः ) स्पष्टप्रतिपत्तये सूत्रार्थं पदप्रयोजनानि चाह—**तदस्येत्यादि** ॥ **समानावयववचन इति** । 'द्विगुणं' 'त्रिगुणम्' इत्यादौ तथा दर्शनात् । व्याख्यानं चात्र शरणम् ॥ **सामर्थ्यादिति** । **गुणत्वं**-समानावयवत्वम् । तद्घटकसमानत्वं निमेयस्य किमपेक्षमित्याकाङ्क्षायां सन्निधानान्निमानापेक्षमिति सामर्थ्यान्निमानस्यापि भागत्वमर्थसिद्धमिति भावः । केचित्तु–'गुणस्य' इति मध्यमणिन्यायेनोभयान्वयि, तेन गुणस्य निमाने वर्तमानाद्गुणगतसङ्ख्यावाचकात्प्रत्यय इत्यर्थमाहुः ॥ **भागविशेषेति** । भागिविशेषसम्बन्धिभागविशेषेत्यर्थः ॥ **नित्यसापेक्षत्वादिति** । वृत्तौ द्व्यादीनां भागरूपसङ्ख्येय एव वृत्तेरिति भावः । गमकत्वाद्वृत्तिरिति युक्तम् ॥

( ५७२५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ निमाने गुणिनि ॥ * ॥

( भाष्यम् ) **निमाने गुणिनीति वक्तव्यम् ।**

---

१ तदन्ताच्चेति वक्तव्यमिति । 'विंशतेश्च' इत्येतदपहाय विंशत्यन्तादित्युच्यमाने व्यपदेशिवद्भावनिषेधात्केवलान्न स्यात्—इति विंशतेश्चेत्युक्त्वा 'तदन्ताच्च' इति द्वितीयं कर्तव्यमित्यर्थः ॥

किं प्रयोजनम्?

गुणेषु मा भूत् ॥

( प्रदीपः ) **गुणिनीति** । 'द्विमयमुदश्वित्' इति गुणिनि निमेये प्रत्ययो यथा स्यादित्येवमर्थम् ॥ **गुणेषु मा भूदिति** । स्वार्थे मा भूदित्येवमर्थमित्यर्थः । अन्यथा द्वौ यवानां गुणौ निमानमस्योदश्विद्भागस्य द्विमयौ यवानामुदश्वित इति स्वार्थे मयट् प्रसज्येत ॥

( उद्द्योतः ) 'तदस्मिन्नधिकम्–' इत्यनेन विच्छेदात्तदस्येति नानुवर्तत इत्यभिप्रेत्य वार्तिकं—**गुणिनीति** । निमेये इत्यर्थः ॥ गुणेषु मा भूदिति । निमानरूपेषु इत्यर्थः ॥ तदाह—**स्वार्थे इति** ॥

( ५७२६ उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ भूयसः ॥ * ॥

( भाष्यम् ) भूयस इति च वक्तव्यम् ।

किं प्रयोजनम्?

भूयसो वाचिकायाः संख्याया उत्पत्तिर्यथा स्यात्, अल्पीयसो वाचिकायाः संख्याया उत्पत्तिर्मा भूदिति ॥

( प्रदीपः ) **भूयस इति** । निमेयभागसंख्याया निमानभागसंख्या यदाऽधिका भवति तदा प्रत्ययो यथा स्यात्, एको यवभागो निमानमस्योदश्विद्भागस्येत्यत्र मा भूदिति ॥

( उद्द्योतः ) ननु 'भूयसः' इत्युक्तेर्द्विमयमिति न स्यात्, भूयस्त्वञ्च किमपेक्षं आह्वमत आह—**निमेयेति** ॥ **यदाधिकेति** । आधिक्यमात्रं विवक्षितं, न तु बहुत्वं, नाप्यतिशय इत्यर्थः ॥

( ५७२७ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

## ॥ * ॥ एकोऽन्यतरः ॥ * ॥

( भाष्यम् ) एकश्चेदन्यतरो भवतीति वक्तव्यम् ।

इह मा भूत्—द्वौ यवानां त्रय उदश्वित इति ॥

( प्रदीपः ) **एकोऽन्यतर इति** । अन्यतरशब्देन निमेयमेव विवक्षितम् । एक एव यदि निमेयगुणो भवति तदा प्रत्ययः, द्वयोर्बहुषु च निमेयगुणेषु न भवति ॥ **द्वौ यवानां त्रय उदश्वित इति** । नन्वत्र भूयस्त्वाभावान्न भविष्यति । एवं तर्ह्युदाहरणदिगियम् । इदं त्वत्रोदाहरणं—त्रयो यवानां द्वावुदश्वित इति । **अथवा** द्वौ यवानां निमेयौ त्रय उदश्वितो भागा निमानमिति विवक्षायामुदाहरणम् ॥

( उद्द्योतः ) निमानेऽधिकत्वस्योक्तत्वात्सामर्थ्यमवलम्ब्याह—**अन्यतरशब्देनेति** ॥ 'द्वौ भागौ यवानां निमानम्, उदश्वितस्त्रयो भागा निमेयम्' इत्यर्थं मत्वा शङ्कते—**नन्विति** । निमाननिमेयभावस्य वैपरीत्ये तु न शङ्केति बोध्यम् ॥ भाष्ये—**समानानाञ्चेति** । निमेयभागस्य येन केनापि निमानभागेन समानत्वे सति यदा निमेयसङ्ख्या निमानसङ्ख्यातोऽधिका तदा प्रत्यय इत्यर्थः ॥

( ५७२८ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ समानानाम् ॥ * ॥

( भाष्यम् ) समानानां चेति वक्तव्यम् । इह मा भूत्—एको यवानामध्यर्धमुदश्वित इति ।

तत्तर्हीदं बहु वक्तव्यम् ।

न वक्तव्यम् ।

( प्रदीपः ) **एको यवानामध्यर्धमुदश्वित इति** । 'भूयसः' इत्येतदनपेक्ष्येदमुदाहरणम् । तदपेक्षायां तु—द्वौ यवानामर्द्धर्द्धमुदश्वित इत्युदाहार्यम् । **अन्ये** तु—अर्द्धर्द्धशब्दात्प्रत्ययनिवृत्त्यर्थमिदमुदाहरणमित्याहुः । तदयुक्तम् । अर्द्धर्द्धशब्दस्य समासकनोरेव संख्यासंज्ञात्वादन्यत्र संख्यात्वाभावात् प्रत्ययाप्रसङ्गात् । अर्द्धर्द्धपञ्चमादयोऽपि समासकनोरेव संख्यासंज्ञा, नान्यत्रेति तेभ्योऽपि प्रत्ययाप्रसङ्गः ॥

( उद्द्योतः ) **अन्ये त्विति** । पूर्वोक्त 'अथवा' इति प्रकारानुसारेणेति भावः ॥ सङ्ख्यात्वाभावादिति । एतेन 'एको यवानामर्धमुदश्वित' इति भाष्ये पाठ इत्यपास्तम् ॥

( प्रथमवार्तिकप्रत्याख्यानभाष्यम् )

यत्तावदुच्यते—गुणिनीति वक्तव्यमिति,

न वक्तव्यम् ।

गुणेषु कस्मान्न भवति?

अस्येति वर्तते ॥

( प्रदीपः ) **अस्येति वर्तत इति** । तेन स्वार्थे मयण्न भवति । किं तर्हि? निमेये क्षीरादौ स्वभागापेक्षया लब्धगुणिव्यपदेशे । निमेयगुणमात्रे तु प्रत्ययो न भवति, अनभिधानात् ॥

( उद्द्योतः ) ननु उदाहरणे 'द्विमयमुदश्वित्' इत्युक्तं, 'द्विमय उदश्विद्भागः' इत्येवोचितमत आह—**निमेयगुणमात्रे त्विति** । निमेये भागमात्रे इत्यर्थः ॥

( द्वितीयवार्तिकप्रत्याख्यानभाष्यम् )

यदुक्तं—'भूयस इति वक्तव्यम्' इति,

न वक्तव्यम् ।

अल्पीयसो वाचिकायाः संख्याया उत्पत्तिः कस्मान्न भवति?

अनभिधानात् ॥

( तृतीयवार्तिकप्रत्याख्यानभाष्यम् )

यदुक्तम्—'कश्चेदन्यतरो भवतीति वक्तव्यम्' इति,

न वक्तव्यम् ।

कस्मान्न भवति—द्वौ यवानां त्रय उदश्वित इति?

तन्त्रं विभक्तिनिर्देशः ॥

(प्रदीपः) तन्त्रमिति । पशुना यजेतेत्यादिवत् 'गुणस्य' इत्येकत्वसंख्या विवक्षिता[1]। एतदर्थमेव गुणनिमान इति लघुरपि[2] समासनिर्देशो न कृतः ॥

(उद्द्योतः) भाष्ये—तन्त्रमिति । विधेयगतत्वाभावेऽपि[3] लक्ष्यानुसाराद्विवक्षा, ग्रहैकत्ववदविवक्षाकारणाभावाच्चेति[4] भावः ॥

( चतुर्थवार्तिकप्रत्याख्यानभाष्यम् )

**यदप्युच्यते—समानानामिति वक्तव्यमिति, न वक्तव्यम् ।**

**कस्मान्न भवति—एको यवानामध्यर्द्धमुदश्वित इति ?**

**अनभिधानात् ॥**

(प्रदीपः) अनभिधानादिति । अन्यूनाधिकैकगुणमुदश्विदादिनिमेयं वक्तुं प्रत्ययान्तस्य सामर्थ्यादित्यर्थः ॥

(उद्द्योतः) अन्यूनेति । अन्यूनानधिकैकभागकमुदश्विदादिरूपं निमेयं । निमेयभागकमेव वक्तुं सामर्थ्यं तस्य, न तु तं भागं वक्तुमित्यर्थः ॥

( ५७२९ अतिव्याप्तिदर्शकं वार्तिकम् ॥ ५ ॥ )

**॥ * ॥ निमेये चापि दृश्यते ॥ * ॥**

**(भाष्यम्) निमेये चापि प्रत्ययो दृश्यते— द्विमया यवाः । त्रिमयाः ।**

(प्रदीपः) द्विमया यवा इति । उदश्वितो द्वौ गुणौ निमेयौ येषामेकगुणानां यवानां ते द्विमयाः ॥

( निमाननिमेयपदार्थबोधकं भाष्यम् )

**किं पुनरिह निमानम्, किं निमेयम् ?**

**यावता उभयं त्यज्यते ।**

**सत्यमेवमेतत् । कचित्तु काचित्प्रसृततरा गतिर्भवति । तद्यथा— समाने त्यागे धान्यं विक्रीणीते यवान् विक्रीणीते इत्युच्यते, न कश्चिदाह कार्षापणं विक्रीणीत इति ।**

**अथवा येनाधिगम्यते तन्निमानम्, यदधिगम्यते तन्निमेयम् ॥**

(प्रदीपः) यावतेति । तथा च निमेयस्यापि निमानत्वात् निमेये चापि दृश्यते इति न वक्तव्यमिति मन्यते ॥ **प्रसृततरा गतिरिति** । 'आशु' 'द्राक्' इति प्रतिपत्तिरित्यर्थः ॥

**अथवेति** । येन मूल्येन करणेन क्रय्यं प्राप्तुमिष्यते तन्निमानं, यत्प्रेप्स्यते तन्निमेयमित्यर्थः । देशकालापेक्षव्यवहारापेक्षत्वान्निमाननिमेयभावस्य ॥

(उद्द्योतः) भाष्ये—उभयं त्यज्यत इति । तदीयमुपादाय स्वीयं दीयत इत्यर्थः । एवञ्च स्ववस्तुदानपूर्वकं परवस्तूपादानस्योभयसाधारणत्वादुभयं निमानमिति भावः ॥ आशु द्रागिति । 'अत्याशु' इत्यर्थः । तरबर्थमपि व्याख्यातुं पर्यायद्वयोपादानम् । एवञ्च हट्टे लाभार्थिभिर्यद्दीयते तन्निमेयम्, तन्मूल्यं निमानमित्याद्यपक्षार्थः । यदपेक्षितं तन्निमेयं, येन च तत्प्राप्यं तन्निमानमित्यथवेत्यादेरर्थः । एवञ्च निमेयत्वाद्यनियतमित्याह—देशेति । देशकालापेक्षो यः क्रयविक्रयव्यवहारस्तदपेक्षत्वादित्यर्थः । एवञ्च यदा यन्निमेयं तदाऽपि तस्मिन्प्रत्ययदर्शनात् 'निमेये चापि—इत्यावश्यकमिति भावः ॥

---

( ९१० विधिसूत्रम् ॥ ५ । २ । १ आ. २४ )

## २०६६ तस्य पूरणे डट् ॥ ५।२।४८ ॥

( डटोऽधिकरणम् )

(प्रदीपः) तस्य-इति संबन्धमात्रं विवक्षितं नैकत्वम् । न ह्येकस्य पूरणं संभवतीति द्व्यादिभ्य एव द्विवचनबहुवचनान्तेभ्यः प्रत्ययविधिः ॥

(उद्द्योतः) 'गुणस्य'इत्यत्रेव सङ्ख्याविवक्षाभ्रमं व्यावर्तयति—सम्बन्धमात्रमिति ॥ न ह्येकमिति । तद्विवक्षायां कुतश्चिदेव प्रत्ययः स्यान्न सर्वत इति तदविक्षेति भावः ॥

युक्त्यन्तरमाह—न हीति ॥

( ५७३० अतिप्रसङ्गापादकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तस्य पूरण इत्यतिप्रसङ्गः ॥ * ॥**

**(भाष्यम्) तस्य पूरण इत्यतिप्रसङ्गो भवति । इहापि प्राप्नोति—पञ्चानामुष्ट्रिकाणां पूरणो घट इति ॥**

(प्रदीपः) तस्य पूरण इत्यतिप्रसङ्ग इति । 'संख्यावाचिनः शब्दात् पूरणे डट्प्रत्ययः' इत्येतावानेव सूत्रार्थः । तथा च लब्धपञ्चत्वसंख्यानां संख्येयानामुष्ट्रिकादीनां पूरणे घटे प्रत्ययोऽनिष्टः प्राप्नोति ॥

(उद्द्योतः) ननु सङ्ख्या-द्व्यादिसङ्ख्याव्याप्यकधर्मान्यतरवाचकात्पूरणे प्रत्यय इत्युक्ते प्रत्यासत्त्या सङ्ख्याया इति गम्यते, तत्कथमतिप्रसङ्गोऽत आह—सङ्ख्यावाचिन इति । प्रत्यासत्त्या हि प्रकृत्यर्थपूरणे इत्येव लभ्येतेति भावः । उष्ट्रिका—चर्मविकारः पात्रविशेषो मृण्मयो वा, यद्घटमितेनोदकेन पञ्च ताः पूर्यन्त इत्यर्थः ॥

---

१ पशुना यजेतेति । यथा पशुपदोत्तरतृतीयावाच्यस्यैकत्वस्य विवक्षणान्नानेकपशुकरणको यागः किन्त्वेकपशुकरणक एव, तथा गुणस्येति षष्ठ्या एकत्वस्य विवक्षणात् एकस्मिन्निमेयगुणे विवक्षिते प्रत्यय इत्यर्थस्य लाभात् द्वौ यवानां त्रय उदश्वित इत्यत्र दोषो नेति भावः ॥

२ लघुरपीति । 'गुणनिमाने' इति समासनिर्देशे मात्रालाघवं पदलाघवमपि समासे हि एकत्वसंख्याया अपि न भानं किन्तु संख्यासामान्याभाव एवेति भावः ॥

३ ननु पशुना यजेतेत्यादौ विधेयसमर्पकपदार्थगत संख्याविवक्षणेऽपि उद्देश्यगतसंख्याविवक्षणं न दृष्टचरमित्यत आह—विधेयगतत्वाभावेऽपीति ॥

४ ग्रहैकत्वेति । 'ग्रहं समार्ष्टि' इत्यत्र यद्येकत्वस्य विवक्षणं स्यात्तदा एकस्यैव ग्रहस्य संमार्जनं प्राप्नुयात् । तच्च समार्जनं कस्य ग्रहस्य? इतरेषां समार्जनाभावे एकसंमार्जनस्य दृष्टं फलमपि न स्यादिति तत्रैकत्वमविवक्षितमिति सर्वेषां संमार्जनं । अत्र तु एकत्वस्य विवक्षणेऽपि दोषाभावान्नाविवक्षा ॥

( ५७३१ अतिप्रसङ्गनिरासवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं तु संख्यापूरण इति वचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

संख्यापूरण इति वक्तव्यम् ।

एवमपि घटे प्राप्नोति, संख्येयं ह्यसावद्भिः पूरयति ।

संख्यापूरण इति ब्रूमः, न ब्रूमः संख्येयपूरण इति ॥

( प्रदीपः ) एवमपीति । आधारधर्मेण पूरणेनाधेयायाः संख्यायास्तद्वारेण संस्पर्शादिति भावः ॥ संख्यापूरण इति ब्रूम इति । द्वे संख्याग्रहणे अनुवर्तेते । तत्रैकं प्रकृतिविशेषणम्, अपरं पूरणविशेषणम् । ततश्च येन पञ्चत्वादिसंख्या संपद्यते स प्रत्ययार्थः । अथ वा—एकस्मिन्नेव संख्याग्रहणेऽनुवर्तमाने प्रत्यासत्त्या संख्यापूरण एव प्रत्ययो भवति न तु विप्रकृष्टे पञ्चत्वादिसंख्यासंख्येयेऽनन्तर्भूते ॥

( उद्योतः ) ननु 'संख्यापूरणे' इत्युक्तेः संख्येयपूरणे कथं प्रसङ्गोऽत आह—आधारेति । 'सङ्ख्यापूरणे' इत्यस्य 'सङ्ख्याबोधकशब्दबोध्यपूरणे' इत्यर्थ इत्याशय इत्यन्ये ॥ नेदमपूर्वमित्याह—द्वे इति । 'सङ्ख्याया अवयवे—' इत्यतः 'सङ्ख्याया गुणस्य—' इत्यतश्च ॥ तत्रैकमिति । सङ्ख्याबोधकाच्छब्दात्षष्ठ्यन्तात्तदर्थसङ्ख्यापूरणे डडिति सूत्रार्थ इति भावः ॥ प्रत्यासत्त्येति । प्रवृत्तिनिमित्तसङ्ख्यापूरणे तत्सङ्ख्यासङ्ख्येयभूते एव प्रत्ययो न तु तत्सङ्ख्यासङ्ख्येयानन्तर्भूते पूरणे इत्यर्थः ॥

( ५७३२ प्रकारान्तरेणातिप्रसङ्गनिरासवार्तिकम् ॥ ३ ॥ )

॥*॥ [1]यस्य वा भावादन्यसंख्यत्वं तत्र ॥*॥

( भाष्यम् ) अथ वा यस्य भावादन्या संख्या प्रवर्तते तत्रेति वक्तव्यम् । एवमपि द्वितीयेऽध्याये अष्टम इति प्राप्नोति, सर्वेषां हि तेषां भावात्संख्या प्रवर्तते ।

[2]चरमोपजाते पूर्वस्मिंश्चानपगते इति वक्तव्यम् ।

[3]एवमपि एकादशीद्वादश्यौ सौविष्टकृती, इदं द्वितीयमिदं तृतीयं, दश दशमानि—इति न सिध्यति, सूत्रं च भिद्यते ॥

( प्रदीपः ) यस्य वेति । न्यासान्तरं वा कर्तव्यमित्यर्थः । तेन पञ्चत्वसंख्या भवत्यनेनेत्यत्रार्थे पञ्चम इति भवति ॥ एवमपीति । प्रसिद्धसंनिवेशविशेषस्य ग्रन्थस्य यो द्वितीयोऽध्यायः, यथेह—'समर्थः पदविधिः' इत्यादिस्तस्याप्यष्टमशब्देनाभिधानं प्राप्नोति । तद्भावेऽष्टत्वसंख्याया भावात् । तदभावेऽभावात् । द्वितीयग्रहणं चोपलक्षणं, न्यायस्य तुल्यत्वात्प्रथमाध्यायादावप्यष्टमाद्यभिधानप्रसङ्गात् । यदा तु व्युत्क्रमेण गणना क्रियते तदा द्वितीयोऽध्यायः पश्चाद्गण्यमानोऽष्टमादिव्यपदेशत्वेनेष्यत एव । तथा च भाष्यकारो वक्ष्यति—'भवत्येव' इति । पूरणग्रहणे तु क्रियमाणे चरमोपजातस्य गणनापेक्षायां पूरणत्वात् संनिवेशमात्रापेक्षया द्वितीयेऽष्टमव्यपदेशाभावः ॥

द्वितीयं न्यासान्तरमाह—चरमोपजात इति । गणनायां क्रियमाणायां पूर्वस्मिन् संख्येयेऽनपगते—बुद्ध्या परिगृहीतत्वादपेक्षिते यत् बुद्धौ पश्चादुपजायते तत्र प्रत्यय इत्यर्थः ॥

एकादशीद्वादश्याविति । द्वादशीसंनिधावेकादश्याश्चरमोपजातत्वाभावः । एवं तृतीयसंनिधौ द्वितीयस्य चरमत्वाभावः ॥

दश दशमानीति । शततमस्यैव चरमोपजननाद्दशानां दशमानां चरमत्वाभावः ॥ सूत्रं चेति । न च केवलमव्याप्तिदोषः, यावत् सूत्रभेदोऽपीति चशब्दस्यार्थः ॥

( उद्योतः ) भाष्ये—अन्यसङ्ख्यत्वमिति—बहुव्रीहेस्त्वः । अन्या सङ्ख्येत्यर्थः ॥ ननु व्युत्क्रमेण गणने तस्याप्यष्टमत्वमिष्टमेवेत्यत आह—प्रसिद्धेति ॥ यो द्वितीय इति । प्रसिद्धसन्निवेशक्रमीयगणनाक्रमेणेत्यर्थः । एवं च न्यासान्तरमपि दुष्टमित्यत्र तात्पर्यम् ॥ अष्टमादिव्यपदेश्यत्वेनेति । तच्छब्दव्यवहार्यत्वेनेत्यर्थः । 'अष्टमादिव्यपदेशत्वेन' इति पाठे बहुव्रीहेस्त्वः । यथान्यासे तु नायं दोष इत्याह—पूरणग्रहणे त्विति । प्रथमत्वादिना या गणना तदपेक्षायां पूर्वस्मिन् बुद्धिस्थे एव यश्चरमसमुपजातस्तस्यैव पूरणत्वमित्यर्थः ॥

सन्निवेशमात्रेति । सन्निवेशः—निर्माणक्रमः । भाष्ये—

---

१ यस्य वा भावादिति । 'अष्टमः' इत्यादौ अष्टसंख्यावयवकसमुदाये योऽन्त्योऽवयवस्तस्य भावात् अष्टशब्दाभिधेयाऽन्या संख्या यत्र प्रवर्तते तत्र पूरणार्थः प्रत्ययः प्रवर्तते इति वार्तिकार्थः । एवं च यस्य भावादन्या संख्या प्रवर्तते तस्मात्पूरणे प्रत्यय इत्यर्थको न्यासः कर्तव्य इत्यर्थः । अस्मिन्न्यासे च द्वितीयस्यापि भावात् अष्टसंख्या प्रवर्तत इति द्विशब्दादपि पूरणप्रत्ययः प्राप्नुयादित्येवं दोष आपद्येत, अतोऽस्यैव वार्तिकस्य 'चरमोपजाते—' इत्यादिरर्थो भाष्यकृता प्रदर्श्यते ॥

२ चरमोपजाते—इत्यादेश्च पूर्वस्मिन् संख्येये अनपगते यः संख्येयः पश्चादुपजायते तस्मात् प्रत्यय इत्यर्थः । एवञ्च द्वितीयेऽध्याये अष्टम इति न प्राप्नुयात् । यतः एकादीनां सप्तमपर्यन्तानां संख्येयानामवगतौ यस्याष्टमस्य पश्चादवगतिस्तस्मैव प्रत्यय इत्यर्थावगतिः । द्वितीयस्य च तथात्वाभावान्न तस्मात्प्रत्यय इति भावः ॥

३ चरमोपजात इत्यर्थ स्वीकारेऽपि दोषस्थलमाह—भगवान्—एवमपीत्यादिना । 'एकादशीद्वादश्यौ सौविष्टकृती' इत्यत्र एकादशी द्वादश्यावित्येवोदाहरणम् । एकादशीत्यत्र पूरणप्रत्ययो न स्यात्, अस्याः संख्याया द्वादशीसान्निध्येन चरमोपजातत्वाभावात् ॥

४ दश दशमानीति । शतेषु दशानामेको भाग इत्येवं दशभागा भवन्ति । तत्रैकस्मिन् भागे यश्चरमः स दशमो भवति । एवञ्च शतेषु दश दशमानि भवन्तीत्यर्थः ॥

५ 'चरमोपजाते—' इत्याद्यर्थस्वीकारे दोषमाह—पूरणग्रहणे तु क्रियमाण इति । 'तस्य पूरणे' इत्याद्युच्यमाने द्वितीयेऽपि अष्टमादिव्यपदेशो न स्यात्, अष्टमस्यैव पूरणत्वेन द्वितीयस्य च तत्त्वाभावात् । चरमोपजात इत्यादिन्यासे तु पश्चाद्गण्यमानोऽपि द्वितीयोऽष्टमो भवत्येवेत्यपरमनिष्टमिति भावः ॥

सौविष्टकृती[1]—इत्यत्र प्रथमाद्विवचनस्य लुक् ॥ शततमस्येति । दशमदशद्वर्गीयदशमस्येत्यर्थः । यद्यपि तत्तत्सङ्ख्याऽवच्छिन्नेभ्योऽन्येभ्य-स्तत्तत्सङ्ख्यापूरकस्य चरमोपजातत्वान्नायं दोषस्तथाऽपि दोषान्तरमाह भाष्ये—सूत्रं चेति ॥

( वार्तिकप्रत्याख्यानभाष्यम् )

यथान्यासमेवास्तु । ननु चोक्तं 'तस्य पूरण इत्य-तिप्रसङ्गः' इति ।

परिहृतमेतत्—सिद्धं तु संख्यापूरण इति वच-नादिति ।

तत्तर्हि संख्याग्रहणं कर्तव्यम् ?
न कर्तव्यम् । प्रकृतमनुवर्तते ।
क्व प्रकृतम् ?
'संख्याया गुणस्य निमाने मयट्' (४७) इति ।
एवं तर्हि नेयं वृत्तिरुपालभ्यते ।
किं तर्हि ?
वृत्तिस्थानमुपालभ्यते ॥
वृत्तिरेवात्र न प्राप्नोति ।
किं कारणम् ?
प्रत्ययार्थाभावात् ।
नैष दोषः ।
वचनात्स्वार्थिको भविष्यति ।

अथवा पूर्वस्याः संख्यायाः परापेक्षयोत्पत्ति-र्वक्तव्या । उत्तरा च संख्या आदेशो वक्तव्यः ॥

अथवा न्यूनेऽयं कृत्स्नशब्दो द्रष्टव्यः । चतुर्षु पञ्चशब्दः ॥

अथवा सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्ते ।
यद्येवं द्वितीयेऽध्याये अष्टम इति प्राप्नोति ।
भवत्येव ॥

( वृत्त्युपालम्भमारभ्यार्थस्य संग्रहश्लोकाः )

प्रकृत्यर्थाद्बहिः सर्वा वृत्तिः प्रायेण लक्ष्यते ।
पूरणे स्यात्कथं वृत्तिर्वचनादिति लक्ष्यताम् ॥ १ ॥
तस्याः पूर्वा तु या संख्या तस्यां भवतु तद्धितः ।
आदेशश्चोत्तरा संख्या तथा न्याय्या भविष्यति ॥२॥
न्यूने वा कृत्स्नशब्दोऽयम्पूर्वस्यामुत्तरा यदि ।
सामर्थ्यं च तया तस्यास्तथा न्याय्यं भविष्यति ॥ ३ ॥
अन्योन्यं वा व्यपाश्रित्य सर्वेस्मिन् द्व्यादयो यदि ।
प्रवर्तन्ते तथा न्याय्या वृत्तिर्भवति पूरणे ॥ ४ ॥
बहूनां वाचिका संख्या पूरणश्चैक इष्यते ।
अन्यत्वादुभयोर्न्याय्या वार्क्षी शाखा निदर्शनम् ॥५॥

( प्रदीपः ) एवं तर्हीति । वृत्तिः—परार्थाभिधानमुच्यते, उपसर्जनपदानां प्रधानार्थाभिधानात् । तदयमर्थः—इष्टविषय-वदनिष्टेऽपि विषये वृत्तिः प्राप्नोति—एवमुपालम्भो न क्रियते । किं तर्हि ? इष्टे विषये प्रत्ययो न सिध्यति, अनिष्ट एव प्राप्नोतीत्युच्यते ॥

वृत्तिस्थानमिति । प्रत्ययार्थ इत्यर्थः । प्रत्ययार्थे हि स्वार्थोपसर्जने प्रकृतिर्वर्तेत इति प्रत्ययार्थः—वृत्तिस्थानम् । अयमत्रार्थः—प्रकृत्यर्थव्यतिरिक्तेन प्रत्ययार्थेन भवितव्यम्, यथा—औपगवमिति । इह तु पञ्चमः पञ्चशब्दार्थेऽन्तर्भूतः । तथाहि—पञ्चानीयतामित्युक्ते पञ्चमस्याप्यानयनं भवति । ततश्चात्र प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावात्पञ्चानामुष्ट्रिकाणां पूरणो घट इत्यत्रैवानिष्टे विषये प्रत्ययप्रसङ्गः ॥

वचनादिति । प्रकृत्यर्थान्तर्भावमात्रेण स्वार्थिकत्वं न तु सर्वात्मना, तत्र संख्याग्रहणद्वयानुवर्तनादन्तरङ्गत्वाद्वा संख्या-संप्रतिपत्तिहेतौ प्रकृत्यर्थान्तर्भूतेऽपि प्रत्ययो भविष्यतीत्यर्थः ॥

पूर्वस्या इति । चतुःशब्दादिभ्यः प्रत्ययो विधेयः, पञ्चादयश्चादेशाः कर्तव्या इत्यर्थः । तेन चतुर्णां पञ्चत्वसंख्यो-पजननद्वारेण पूरणः पञ्चमः ॥

न्यूने इति । यथा अर्धतृतीया द्रोणा इत्यत्रार्धद्रोणोऽपि द्रोणशब्देनाभिधीयते, तथा च 'द्रोणाः' इति बहुवचनम्, अवयवेन विग्रहः, समुदायः समासार्थः, तथेहापि वृत्तिविषये चतुर्षु पञ्चशब्दो वर्तते । तेन न्यूनानां पञ्चानां पूरणः पञ्चमः । न्यूनाश्च पञ्च—चत्वारो भवन्ति । तथा हि—पञ्चसु लब्ध-व्येषु चतुरो लब्ध्वा ब्रवीति—'न्यूनानि पञ्च लब्धानि' इति ॥

अथ वेति । सर्वेष्वेव पञ्चशब्दो वर्तते इत्येकैकमन्तरेण पञ्च न भवन्तीति पञ्चभ्यो बुद्ध्या एकतमं निष्कृष्य प्रत्ययो विधीयते । पञ्चानां पूरणः पञ्चसंख्यानिमित्तत्वात्पञ्चमः ॥

भवत्येवेति । गणनापेक्षायां । यथा पूर्वं व्याख्यातम् ॥

प्रकृत्यर्थादिति—पूर्वोक्तार्थसंग्रहश्लोकाः ॥ बहिरिति । बाह्येऽर्थे सर्वा वृत्तिर्न तु स्वार्थे इत्यर्थः ॥ वचनादिति । स्वार्थे इत्यर्थः ॥ १ ॥

पूर्वस्यामुत्तरेति[2] । यदोत्तरसंख्यावाची पञ्चादिशब्दः पूर्वस्यां संख्यायां वर्तत इत्यर्थः ॥ सामर्थ्यं चेति । तस्या न्यूनार्थाभिधायिन्याः संख्यायाः प्रत्ययार्थेन संबद्धत्वं न्याय्य-मित्यर्थः ॥ ३ ॥

अन्योन्यं वेति । अपेक्षितपरस्पराः संख्येयाः पञ्चादिश-ब्दवाच्यास्तेषामन्यतमे पञ्चत्वादिसंख्याहेतौ प्रत्ययः ॥ ४ ॥

बहूनामिति । पूर्वस्मात्पक्षादयं भेदः—पूर्वत्र पक्षे सर्व एवातिरोहितभेदाः पञ्चशब्दार्थः । उत्तरत्र[3] तु समुदायः शब्दार्थः । अवयवस्तु नोपात्तो न च त्यक्तः । प्रत्ययेन त्वभिधी-यते ॥ अन्यत्वादुभयोरिति । समुदायावयवयोर्भेदात्समुदायः प्रकृत्यर्थः, अवयवः प्रत्ययार्थः ॥ यथा—'वार्क्षी शाखा' इति प्रत्यस्तमितमूलाद्यवयवभेदः समुदायः प्रकृत्यर्थः । अवयवस्तु शाखाप्रत्ययार्थः, 'अनुदात्तादेश्च' इत्यञ्प्रत्ययः ॥ ५ ॥

[1] सौविष्टकृतीति । स्विष्टकृच्छब्दात्तद्धितान्तात्स्त्रीप्रत्यये रूपमिदम् । तत्र एकादशीद्वादश्यावित्यस्य सामानाधिकरण्यात् प्राप्तस्य द्विवचनस्य लुगित्यर्थः ॥

[2] पूर्वत्रेति । न्यूने वा कृत्स्नशब्दोऽयमित्यादिपक्षे ॥

[3] उत्तरत्रेति । बहूनां वाचिका संख्येति पक्षे इत्यर्थः ॥

(उद्योतः) प्रधानार्थाभिधानम्—प्रधानार्थसंसृष्टस्वार्थोपस्थापकत्वम् ॥ अतिव्याप्त्या वृत्तेरेवोपालम्भात् 'नेयं वृत्तिरुपालभ्यते' इत्यनुपपन्नमत आह—अयमर्थ इति । 'पञ्चानामुष्ट्रिकाणाम्' इत्यनेनातिव्याप्तिरेव नोच्यते, किन्तर्हि? अव्याप्तिरपीत्यर्थः, तदाह अनिष्टे एवेति ॥

ननु प्रकृतिमात्रेणाप्रतीतस्य पञ्चत्वसङ्ख्यापूरकत्वस्यापि प्रतीतेः कथं स्वार्थिकत्वमत आह—प्रकृत्यर्थान्तर्भावेति ॥ सम्प्रतिपत्तिहेताविति । पञ्चत्वादिसम्प्रतिपत्तिहेताविस्यर्थः । पञ्चत्वादिसङ्ख्यापूरण इति यावत् ॥

चतुःशब्दादिभ्य इति । सङ्ख्यावाचकात्स्वार्थवृत्तिसङ्ख्यान्तरपूरणे प्रत्यय इत्यर्थः सूत्रस्य—इति भावः ॥ तदाह भाष्ये—परापेक्षयेति । परसङ्ख्यापेक्षपूरणत्वे इत्यर्थः । चतुर्णां पञ्चत्वसङ्ख्यापूरकः पञ्चम इति तात्पर्यम् ॥

भाष्ये—न्यूनेऽयं कृत्स्नशब्द इति । अधिकवाचकः शब्द इत्यर्थः ॥

अधिकवाचकस्य न्यूने वृत्तिं दृष्टान्तव्यवहाराभ्यां दर्शयति—यथेति ॥ नन्वेवं वर्तिपदार्थसमासार्थयोर्भेदाभावोऽत आह—अवयवेन विग्रह इति । अवयवार्थकेन वर्तिपदार्थबोधनमित्यर्थः । तदाह—समुदायः समासार्थ इति । अत्रापि पक्षे चतुर्णां पञ्चत्वसंख्यापूरक इत्येव पञ्चमशब्दार्थो द्रष्टव्यः । 'सर्वेष्वेव पञ्चशब्दो वर्तते इति' इति पाठे—इतिहेतोः सर्व एव द्व्यादयोऽन्योन्यमपेक्षन्त इति भाष्येणान्वयः । प्रायेण 'इति'शब्दरहित एव पाठः । अत्र 'सर्वेष्वेव'—इत्युक्त्वा प्रत्येकं द्व्यादिसङ्ख्यासम्बन्धाभावो दर्शितः । यथा—महतो भारस्योत्थापनशक्तिः प्रत्येकमसम्बद्धा, समुदायेनैव सम्बद्धा; तद्वत् । यथा वा विशिष्टं गुरुत्वं प्रत्येकासम्बद्धं, समुदाये सम्बद्धं; तद्वदित्याहुः ॥ सर्वेष्वेव वृत्तौ हेतुमाह—एकैकमन्तरेणेति ॥ गणनापेक्षायामिति । यथाकथञ्चिद्गणनमात्रापेक्षायामित्यर्थः । निर्माणापेक्षायां तु 'द्वितीय एव' इति बोध्यम्, तदा प्रागुक्तपूरणत्वाभावादिति भावः ॥

पूर्वोक्तार्थसङ्ग्रहेति—पचाद्यजन्तसङ्ग्रहशब्देन षष्ठीसमासः ॥१॥

भाष्ये—'यदि' इत्यसन्दिग्धे सन्दिग्धवचनं, तदाह—यदेति । यत इत्यर्थः । तथा सति तस्याः—प्रकृत्यभिहितसङ्ख्यायाः, तया—प्रत्ययाभिहितव्यक्त्या, सामर्थ्यं—सम्बन्धश्चतुर्वृत्तिपञ्चत्वसङ्ख्यापूरक इत्यर्थात् । एवं हि वृत्तिर्न्याय्येत्यर्थः ॥ ३ ॥

'अन्योन्यं वा व्यपाश्रित्य' इति पाठो भाष्ये । अपेक्ष्येत्यर्थः ॥४॥

अतिरोहितभेदा इति । अवयवमात्रवृत्तिधर्मेण भासमानाः पञ्चादिशब्दवाच्या इत्यर्थः ॥ नोपात्त इति । अवयवमात्रवृत्तिधर्मेण प्रकृत्या नोपात्त इत्यर्थः ॥ न च लक्ष्य इति । साधारणरूपेणोपात्तत्वादित्यर्थः । अत एव बहुवचनम् ॥ प्रत्ययेन त्वभिधीयत इति । अवयवमात्रवृत्तिधर्मेणाभिधीयते इत्यर्थः ॥

परे तु—सर्वस्मिन् प्रत्ययवाच्यसहिते द्व्यादयः प्रवर्तन्ते, अतः पूरणे न्याय्या वृत्तिः । तदेव न्याय्यत्वमुपपादयति—बहूनां—समुदितानाम्, वाचिका सङ्ख्या—प्रकृतिः पूरणः—तदर्थश्च तदन्तर्गत एकः, अत उभयोः—प्रकृतिप्रत्ययार्थयोरन्यत्वाद्न्याय्या । 'वृत्तिः' इति शेषः । 'पूर्वत्र पक्षे' इत्यादिकैयटस्तु चिन्त्यः, पक्षद्वयेऽप्यतिरोहितभेदस्यैव समूहस्य पञ्चादिशब्दवाच्यतावश्यकत्वात् । अत एव बहुवचनम्, एकैकस्मिन् कदाऽप्यप्रवृत्तेश्च । प्रकृत्यर्थान्तर्भावमात्रेण प्रकृतिप्रत्ययार्थयोर्भेदाभावशङ्कायां तमभ्युपेत्य पूर्वसमाधानम् । प्रकृत्यर्थतावच्छेदकप्रत्ययार्थतावच्छेदकभेदेन तदवच्छिन्नभेदेन च भेद एवेत्यवलम्ब्यान्त्यः पक्ष इत्येव युक्तमाभातीत्याहुः ॥

(९११ आगमविधिसूत्रम् ॥ ५ । २ । १ आ. २५)

## २०६७ नान्तादसंख्यादेर्मट् ॥५।२।४९॥

(५७३३ निर्देशानुपपत्तिबोधकवार्तिकम् ॥ १ ॥)

### ॥*॥ मडादिषु यस्यादिस्तन्निर्देशः ॥*॥

(भाष्यम्) मडादिषु यस्यादिः क्रियते तन्निर्देशः कर्तव्यः । अस्यादिर्भवतीति वक्तव्यम् । अक्रियमाणे प्रत्ययाधिकारात्प्रत्ययोऽयं विज्ञायते । तत्र को दोषः?

(प्रदीपः) मडादिष्विति । 'षष्ठीस्थाने योगा' इत्यत्र षष्ठीति योगविभागात् तत्र च 'आद्यन्तौ टकितौ' इत्यस्यानुवर्तनात् षष्ठीनिर्दिष्टस्यागामिनोऽभावात् 'चरेष्टः' इत्यादिवन्मडादयो डटपवादाः प्रत्ययाः प्राप्नुवन्ति । तत्र मट्थट्तथुकामागमत्वप्रत्ययत्वयोर्विशेषाभावः । तमट् तु प्रत्ययत्वे सत्याद्युदात्तः स्यात्, आगमत्वे त्वनुदात्तो भवतीति डट्स्वरेण विंशतितम इत्यन्तोदात्तत्वं भवति ॥

(उद्योतः) ननु यस्माद्विहितस्तस्यादिरेवास्तु, न हि 'आद्यन्तौ' इत्यत्र षष्ठीनिर्देशोऽस्तीत्यत आह—षष्ठीस्थान इति । मट्थट्थुकामिति त्वपपाठः । एवं मट्थुकोरिति च । थुकः प्रत्ययत्वे 'चतुर्थः' इत्यादावकारश्रवणानापत्तिर्विसर्गापत्तिश्च । मट्थटोरित्येव पाठः । मट्डटोरिति पाठे तयोर्मध्ये मट इत्यर्थः ॥

(५७३४ तादृशे निर्देशे दोषवार्तिकम् ॥ २ ॥)

### ॥*॥ प्रत्ययान्तरे हि सति स्वरे दोषः ॥*॥

(भाष्यम्) प्रत्ययान्तरे हि सति स्वरे दोषः

१ 'निर्माणापेक्षायां द्वितीयः' इति तु शब्दरहितः पाठो ज-पुस्तके ॥

२ अत एव बहुवचनमिति । शब्दशक्तिस्वाभाव्यादेव बहुवचनमिति कैय्यटाशयः । अत एव—बहुवचनोपपत्तेरेवंप्रकारेण कृतत्वादेव ॥

३ पूर्वसमाधानमिति । न्यूने वा कृत्स्नशब्दस्येति पक्षे समाधानमेतदिति उद्योताभिप्रायः । तन्मतेन च बहूनां वाचिका संख्येति पक्षः प्रकृत्यर्थतावच्छेदकेत्याद्यालम्ब्येति भावः ॥

४ तत्र मडिति । इदानींतनोपलब्धपुस्तकेषु 'मट्थट्थुकां' इत्येव पाठो दृश्यते इति स एवात्र निर्दिष्टः ॥

५ मट्थट्थुकामिति, मट्थुकोरिति पाठद्वयस्याप्यसामञ्जस्ये हेतुमाह—थुकः प्रत्ययत्वे इति । थुकः प्रत्ययत्वे हि स डटोऽपवादः स्यात् । ततश्च चतुरः शब्दात्थुकि थकारोत्तरमकारश्रवणानापत्तिः । थुकः प्रत्ययत्वे तस्मिन् परे पूर्वस्य पदत्वात् चतुरिति रेफस्य विसर्गापत्तिश्चेति भावः ॥

स्यात् । विंशतितमः—एष स्वरः प्रसज्येत । विंशतितम इति चेष्यते ।

स तर्हि तथा निर्देशः कर्तव्यः ॥

( वार्तिकद्वयप्रत्याख्यानभाष्यम् )

न कर्तव्यः । प्रकृतं डड्ग्रहणमनुवर्तते ।

क्व प्रकृतम् ?

"तस्य पूरणे डट्" (४८) इति ॥

तद्वै प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ॥

नान्तादित्येषा पञ्चमी डडितिप्रथमायाः षष्ठीं प्रकल्पयिष्यति "तस्मादित्युत्तरस्य" (१।१।६७) इति ॥

प्रत्ययविधिरयम् । न च प्रत्ययविधौ पञ्चम्यः प्रकल्पिका भवन्ति ।

नायं प्रत्ययविधिः । विहितः प्रत्ययः प्रकृतश्चानुवर्तते ॥

( प्रदीपः ) प्रकृतमिति । स्वरितत्वादिति भावः ॥ विहित इति । न ततो विधानार्था डट इहानुवृत्तिः, अपि त्वागमसंबन्धप्रतिपत्त्यर्थैत्यर्थः ॥

( ९१२ आगमविधिसूत्रम् ॥ ५ । २ । १ आ. २६ )

## २०६९ षट्कतिकतिपयचतुरां थुक् ॥ ५ । २ । ५१ ॥

( ५७३५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ चतुरश्छयतावाद्यक्षरलोपश्च ॥ * ॥

( भाष्यम् ) चतुरश्छयतौ वक्तव्यौ, आद्यक्षरलोपश्च वक्तव्यः । तुरीयम् । तुर्यम् ॥

( प्रदीपः ) आद्यक्षरलोप इति । अक्षरशब्देनाच्सहितं व्यञ्जनमुच्यते । छयद्भ्यां च डट् न बाध्यते, डटि चतुरस्थुग्विधानात् ॥

( उद्योतः ) नन्वाद्यक्षरस्य चकारस्य लोपेऽकारस्य श्रवणं स्यादत आह—अक्षरशब्देनेति । 'व्यञ्जनसहितोऽच्' इति तु नोक्तं, तकारस्यापि लोपापत्तेः ॥

( वार्तिकावतरणभाष्यम् )

अथ किमर्थं थट्थुकौ पृथक् क्रियेते । न सर्वं थडेव वा स्यात् थुगेव वा ॥

( प्रदीपः ) न सर्वमिति । सर्वं थकाररूपं थडेव क्रियतां थुगेव वेत्यर्थः ॥

( उद्योतः ) नपुंसकप्रयोगोपपत्तय आह—सर्वं थकारेति ॥

( ५७३६ पृथगनुबन्धप्रयोजनवार्तिकम् ॥ २ ॥ )

॥ * ॥ थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् ॥ * ॥

( भाष्यम् ) थट्थुकोः पृथग्ग्रहणं क्रियते पदान्तविधिप्रतिषेधार्थम् । पदान्तविध्यर्थम्, पदान्तप्रतिषेधार्थं च ।

पदान्तविध्यर्थं तावत्—पर्णमयानि पञ्चथानि भवन्ति, रथः सप्तथः । पदान्तस्येति नलोपो यथा स्यात् ।

पदान्तप्रतिषेधार्थम्-षष्ठः । पदान्तस्येति जश्त्वं मा भूत् ।

इह-चतुर्थ इति, पदान्तस्येति विसर्जनीयो मा भूदिति ॥

( प्रदीपः ) पदान्तविधिप्रतिषेधार्थमिति । विधिप्रतिषेधौ नलोपादीनां पदान्तकार्याणां विषयविभागेन व्यवतिष्ठेयातामित्यर्थः ॥ पञ्चथानीति । थटि सति 'स्वादिषु' इति पदत्वात्तन्निबन्धनो नलोपो भवति । थुकि तु सति थकारान्तस्य भत्वं स्यात् ॥

षष्ठ इति । यद्यत्र थट् क्रियेत ततः षकारान्तस्य पदत्वात्तन्निबन्धनं जश्त्वं स्यात्, थुकि तु तदन्तस्य भत्वात्पदत्वाभावः ॥

( उद्योतः ) ननु पदान्तविधिप्रतिषेधौ नैतदपेक्षावत आह—विधीति । पदान्तकार्यनलोपादीनां विधिप्रतिषेधौ विषयविभागेन व्यवस्थितौ भवेतामित्यर्थं भिन्नानुबन्धकरणमित्यर्थः ॥ तदन्तस्य भत्वादिति । अत्र 'भत्वात्' इत्यस्योपयोगश्चिन्त्यः ॥

( ९१३ आगमविधिसूत्रम् ॥ ५ । २ । १ आ. २७ )

## २०७० बहुपूगगणसङ्घस्य तिथुक् ॥ ५ । २ । ५२ ॥

( ५७३७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः ॥ * ॥

( भाष्यम् ) बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिर्वक्तव्या । इहापि यथा स्यात्—बह्वीनां पूरणी बहुतिथी । कतिपयानां पूरणी कतिपयतिथी । तावतीनां पूरणी तावतिथी ॥

( प्रदीपः ) लिङ्गविशिष्टादिति । लिङ्गसहचरितः प्रत्ययो लिङ्गं, तदधिकादित्यर्थः ॥

---

१ एष स्वरइति । तमटः प्रत्ययान्तरत्वे हि तस्य 'आद्युदात्तश्च' इत्यनेन तकाराकार उदात्तः स्यात् । आगमत्वे तु डटः प्रत्ययत्वेन स आद्युदात्त इति मकाराकार उदात्त इति स्वरे भेदः ॥

२ चिन्त्य इति । थुकि षकारान्ते पदत्वाभावः । थकारान्तस्य तु भत्वात्पदत्वाभावः । तेन थकारस्य न जश्त्वमिति कैय्यटाशयः ॥

३ तदधिकादिति । लिङ्गप्रत्ययविशिष्टादित्यर्थः ॥

( उद्योतः ) नाम्नां लिङ्गवैशिष्ट्यस्याव्यभिचरितत्वादाह—लिङ्गसहचरित इति ॥

( वार्तिकान्यथासिद्धिसाधकभाष्यम् )

बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः सिद्धा।

कथम्?

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणं भवतीति ॥

( ५७३८ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ पुंवद्वचनं च ॥ * ॥

( भाष्यम् ) पुंवद्भावश्च वक्तव्यः । बह्वीनां पूरणी बहुतिथी ।

किमर्थम्? न भस्याढे तद्धिते पुंवद्भवतीति सिद्धम् ।

भस्येत्युच्यते, यजादौ च भं भवति । न चात्र यजादिं पश्यामः ।

किं कारणम्? तिथुका व्यवहितत्वान्न प्राप्नोति ॥

( प्रदीपः ) तिथुकेति । तिथुकि कृते तदन्तस्य भत्वं, न तु स्त्रीप्रत्ययान्तस्येत्यर्थः ॥ उत्पत्तिसंनियोगेनेति । यदैव प्रकृतयः पूरणविषयाः प्रत्ययोत्पत्तिनिमित्तं तदैवागम इत्यर्थः ॥

( उद्योतः ) यदैवेति । एषां 'तस्य पूरणे' इत्यनेन वाक्यैकवाक्यता—'षष्ठ्यन्तात्पूरण इत्यर्थे एभ्यो डट्, एषां तिथुक् च' इत्यर्थ इति भावः ॥

( वार्तिकान्यथासिद्धौ सिद्धान्तभाष्यम् )

इदमिह संप्रधार्यम्—तिथुक् क्रियतां पुंवद्भाव इति ।

किमत्र कर्तव्यम्?

परत्वात्पुंवद्भावः ।

नित्यस्तिथुक्, कृतेऽपि पुंवद्भावे प्राप्नोति, अकृतेऽपि प्राप्नोति ।

तिथुगप्यनित्यः । अन्यस्य कृते पुंवद्भावे प्राप्नोत्यन्यस्याकृते, शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति ।

अन्तरङ्गस्तर्हि तिथुक् ।

काऽन्तरङ्गता?

उत्पत्तिसंनियोगेन तिथुगुच्यते, उत्पन्ने प्रत्यये प्रकृतिप्रत्ययावाश्रित्य पुंवद्भावः ।

पुंवद्भावोऽप्यन्तरङ्गः ।

कथम्?

उक्तमेतत् *सिद्धश्च प्रत्ययविधौ* इति ।

उभयोरन्तरङ्गयोः परत्वात्पुंवद्भावः, पुंवद्भावे कृते पुनः प्रसङ्गविज्ञानात् तिथुक् सिद्धः । बहुतिथी ॥

( प्रदीपः ) प्रकृतिप्रत्ययाविति । भस्येति वचनादुभयमाश्रीयते ॥ सिद्धश्चेति । तेन प्राक् प्रत्ययोत्पत्तेः पुंवद्भाव इत्यर्थः ॥

( उद्योतः ) तेनेति । 'भसंज्ञानिमित्ते तद्धिते विवक्षिते पुंवत्' इति वार्तिकार्थ इति भावः ॥

—०—

( ९१४ आगमविधिसूत्रम् ॥ ५ । २ । १ आ. २८ )

## २०७६ षष्ट्यादेश्चासंख्यादेः ॥ ५ । २ । ५८ ॥

( पदकृत्यभाष्यम् )

असंख्यादेरिति किमर्थम्?

इह मा भूत्—एकषष्टः, द्विषष्टः ॥

(प्रदीपः) किमर्थमिति । इह प्रत्यासत्त्या 'पङ्क्ति-'आदिसूत्रनिपातिताः षष्ट्यादयो गृह्यन्ते, न लोकप्रसिद्ध्या विप्रकृष्टाः । तथा चानर्थकः प्रतिषेधः इति मत्वा प्रश्नः ॥

( उद्योतः ) ननु लौकिकषष्ट्यादिग्रहणेन एकषष्टेरपि तत्त्वात्प्राप्त्या प्रश्नोऽनुपपन्नोऽत आह—इहेति ॥

( असङ्ख्यादिपदस्य वैयर्थ्यबोधकभाष्यम् )

असंख्यादेरिति शक्यमवक्तुम् ।

कस्मान्न भवति—एकषष्टः, द्विषष्ट इति?

षष्टिशब्दात्प्रत्ययो विधीयते, कः प्रसङ्गो यदेकषष्टिशब्दात्स्यात् । नैव प्राप्नोति नार्थः प्रतिषेधेन ।

तदन्तविधिना प्राप्नोति ।

ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ॥

( प्रदीपः ) इतरो व्याप्तिन्यायाश्रयाल्लौकिकग्रहणादतिप्रसङ्ग इति मत्वाऽऽह—एकषष्ट इति ॥ प्रत्यासत्तिन्यायाश्रयेणाह—षष्टिशब्दादिति । षष्टिशब्दस्योपलक्षणत्वात्सप्तत्यादयोऽपि गृह्यन्ते ॥ प्रत्यय इति । प्रत्ययभक्तत्वात्तदवयवत्वादागम एव प्रत्ययशब्देनोक्तः ॥ तदन्तविधिनेति । शास्त्रीयाणामपि षष्ट्यादीनां ग्रहणे तैः संख्याया विशेषणात्तदन्तविधौ सति षष्ट्याद्यन्तस्य संख्यावाचिनो ग्रहणप्रसङ्गः ॥

(उद्योतः) नन्वस्यागमविधित्वात् 'प्रत्ययो विधीयते' इत्ययुक्तमत आह—प्रत्ययभक्तत्वादिति । प्रत्ययविधिरप्यनेनैवेत्यन्ये ॥

( असङ्ख्यादिपदस्य ज्ञापकत्वबोधकभाष्यम् )

एवं तर्हि ज्ञापयत्याचार्यः—भवतीह तदन्तविधिरिति ।

किमेतस्य ज्ञापने प्रयोजनम्?

एकविंशतितमः—एतत्सिद्धं भवति ॥

(प्रदीपः) भवतीहेति । इह प्रकरण इत्यर्थः । तत्र यदि लौकिकसंख्याग्रहणं ज्ञाप्यते तदा 'एकान्नविंशति' शब्दात्तमट्

न प्राप्नोतीति भाष्यकारेण शास्त्रीयग्रहणाभ्युपगमेन तदन्तविधिज्ञापनमुक्तम्। एवं चैकान्नविंशतितम इति भाव्यमिति लक्ष्यते। यत्र च ज्ञापकात्तदन्तविधिस्तत्र व्यपदेशिवद्भावात् केवलानामपि ग्रहणं भवति। ज्ञापकेन सामान्येन 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति' 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति परिभाषाद्वयस्यानुपस्थानज्ञापनात्। **अथवा**-सूत्रोपात्तानां केवलानां प्रथमं ग्रहणं भवति। ततो ज्ञापकेन लक्षणविशेषो वाक्यान्तरमनुमीयत इति तदन्तस्यापि ग्रहणं भवति। तेन विंशतितम इति भवति। एकषष्ट्यादिभ्यो 'विंशत्यादिभ्यः-' इति विकल्पेन तमड् भवति। **केचित्तु**-असंख्यादेरिति प्राप्तिमात्रापेक्षया निषेधाश्रयणादसंख्यादेरिति योगविभागाद्वा विकल्पितस्यापि तमटो निषेधमिच्छन्त एकषष्टितम इति न भवितव्यमित्याहुः। एतच्च[2] भाष्यकारेणानुक्तत्वादसम्बन्धम्। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्येतच्च त्यागहेतुत्वाभावात् कथं त्यज्येत॥

(उद्द्योतः) **तमण्न प्राप्नोतीति**। सहस्रादिभ्यः प्राप्नोतीत्यपि बोध्यम्॥ ननु वैयर्थ्ये सति ज्ञापकं भवति, न हि व्यपदेशिवद्भावनिषेधप्रवृत्तावप्यसंख्यादेरित्यस्य वैयर्थ्यमत आह—**अथवेति**। वस्तुतस्तु सूत्रोपात्तान्तादिशब्दविषय एव स निषेध इति नात्र तस्य प्राप्तिः। स्पष्टं चेदं 'येन विधिः-' इत्यत्र—प्रदीपे॥ **लक्षणविशेष इति**। विधायकं विशेषभूतं वाक्यान्तरमित्यर्थः। 'लक्षणशेषः' इति क्वचित्पाठः। 'विंशत्यादिभ्यस्तमड्' 'तदन्तेभ्यश्च' इत्येवमिति भावः। 'त्यागे हेत्वभावात्' इति पाठः॥

(९१५ विधिसूत्रम्॥ ५।२।१ आ. २९)

## २०७७ मतौ छः सूक्तसाम्नोः॥५।२।५९॥

(छप्रत्ययाधिकरणम्)

(प्रदीपः) **मतुशब्देन** साहचर्यान्मत्वर्थ उच्यते। तद्विशेषणे सूक्तसाम्नी। प्रधानानुयायित्वाच्च गुणानां प्रथमा समर्थविभक्तिः, अस्त्युपाधिकत्वं च प्रकृते गम्यते। अच्छावाकशब्दोऽस्मिन्नस्ति—अच्छावाकीयं सूक्तमित्युदाहरणम्॥

(उद्द्योतः) अन्यशब्दस्यान्यशब्दे वृत्त्यसम्भवादाह-**मत्वर्थ इति॥ तद्विशेषणे इति**। सूक्तसामरूपे सम्बन्धिनि प्रथमान्ताच्छ इत्यर्थ इति भावः॥ नन्वेवमपि समर्थविभक्त्यादिकं न लभ्येतेत्यत आह—**प्रधानेति**। प्रधानं प्रत्ययार्थः, गुणाः समर्थविभक्त्यादयः। प्रधान उपस्थापिते तद्गुणभूतमुपस्थाप्यत एवेति भावः। यथा 'ब्राह्मणा भोज्यन्ताम्' इत्युक्तेऽनुक्ता अप्याचमनादय आक्षिप्यन्त इति तात्पर्यम्॥

(५७३९ एकदेशिवार्तिकम्॥ १॥)

### ॥ * ॥ छप्रकरणे अनेकपदादपि ॥ * ॥

(भाष्यम्) **छप्रकरणेऽनेकपदादपीति वक्तव्यम्। इहापि यथा स्यात्-अस्यवामीयम्। कयाशुभीयम्। किं पुनः कारणं न सिध्यति? अप्रातिपदिकत्वात्॥**

(प्रदीपः) **अनेकपदादपीति**—कर्मधारयो बहुव्रीहिर्वा। पदसमुदायादित्यर्थः। 'अस्य वामः' इत्यस्मिन्नस्तीति षष्ठीप्रथमयोरुपलम्भात्पदसमुदायात्मकत्वात्प्रातिपदिकत्वाभावात्प्रत्ययो न प्राप्नोतीति वचनम्॥

(उद्द्योतः) एकपदभिन्नादपीत्यर्थे वर्णमात्रादपि प्रत्ययः स्यादत आह—**कर्मधारय इति**। पराभ्युपगमेनेदम्। यं भवाननेकपदरूपं समुदायं मन्यते तस्मादपीत्यर्थः॥ **षष्ठीप्रथमयोरिति**। 'अस्य' इति षष्ठी, 'वामः' इति प्रथमा॥

(५७४० सिद्धान्तवार्तिकम्॥ २॥)

### ॥*॥ सिद्धं तु प्रातिपदिकविज्ञानात्॥*॥

(भाष्यम्) **सिद्धमेतत्।**
**कथम्?**
**प्रातिपदिकविज्ञानात्।**
**कथं प्रातिपदिकविज्ञानम्?**

(प्रदीपः) **सिद्धं त्विति**। 'अस्य वामस्य' इति वेदे यत् पठ्यते तदेकदेशस्य 'अस्यवाम' शब्दस्य यदनुकरणमस्यवामशब्दोऽनुकार्येणार्थेनार्थवत्त्वाल्लब्धप्रातिपदिकसंज्ञस्तस्मादेतत्प्रत्ययविधानमित्यर्थः॥

(५७४१ सिद्धान्तोपपादकवार्तिकम्॥ ३॥)

### ॥ * ॥ स्वं रूपं शब्दस्याशब्दसंज्ञेति वचनात्॥ * ॥

(भाष्यम्) **स्वं रूपं शब्दस्याशब्दसंज्ञा भवतीति। एवं योऽसावाम्नाये अस्यवामशब्दः पठ्यते सोऽस्य पदार्थः॥**

(प्रदीपः) **स्वं रूपमिति**। दृष्टान्तत्वेनास्योपन्यासः। यथा 'स्वं रूपम्' इति वचनात् 'अग्नेर्ढक्' इत्यत्राग्निशब्दस्वरूपमग्निशब्दस्य प्रत्यायकम्, एवमाम्नायपठितस्यास्यवामशब्दस्य छप्रत्ययप्रकृतिरस्यवामशब्दः प्रत्यायक इत्यर्थवत्त्वात्पदसमुदायरूपत्वाभावाच्च प्रातिपदिकमित्यर्थः। न त्वनुकरणविषये[4] 'स्वं रूपम्' इत्युपतिष्ठते। स्वशास्त्रविषयत्वादस्य, लौकिकत्वाच्चानुकार्यानुकरणभावस्य॥ **एवं योऽसाविति**। एवंशब्दस्तथाशब्दस्यार्थे। यथाऽत्र शास्त्रे वचनात् स्वं रूपं शब्दस्य प्रत्यायकं तथाऽनुकार्यस्यानुकरणमित्यर्थः॥

(उद्द्योतः) **पदसमुदायरूपत्वाभावाच्चेति**। अनेन 'पदसमुदायस्य चेत् समासस्यैव' इति नियमाप्राप्तिर्दर्शिता। पदघटित-

---

१ 'लक्षणे विशेषः' इति क. पाठः॥
२ 'एतत्तु' इति च. झ. पाठः॥
३ **षष्ठीति**। पूर्वपक्षाभिप्रायेण षष्ठीप्रथमयोरुपलब्धिर्वर्ण्यते। सिद्धान्ते तु अस्य अनुकरणत्वेन न तयोरुपलब्धिरिति अग्रे स्फुटम्॥
४ 'न त्वनुकार्यानुकरणविषये' इति च. झ. पाठः॥

समुदायरूपत्वाभावादिति तदर्थः । 'अस्य' इत्यस्यापि न पदत्वं, तत्रत्य'स्य'शब्दस्य विभक्त्यर्थाप्रतिपादकत्वेनासुबन्तत्वादिति भावः । एवंशब्दस्य 'अनेन प्रकारेण' इति नार्थः, सूत्रस्याप्राप्त्याऽसङ्गतत्वात्, किन्त्वन्य इत्याह—तथाशब्दस्येति ॥ स्वं रूपं शब्दस्येति । 'शब्दः स्वरूपस्य' इति वक्तुमुचितम् । वस्तुतो भाष्ये सूत्रकथनं तत्प्रत्याख्यानप्रकारोपलक्षणम्, अर्थे बाधादुपस्थितशब्दस्यैव ग्रहणं भविष्यतीति व्यर्थं सूत्रमिति सः । लोकेऽप्यर्थबाधे एवानुकरणत्वमिति दिक् ॥

( आम्नायशब्दानां आन्यभाव्यावतरणभाष्यम् )

**किं पुनरन्ये आम्नायशब्दाः, अन्य इमे ।**

**ओमित्याह ।**

**कुत एतत् ?**

( प्रदीपः ) **किं पुनरिति**—अभिन्नरूपत्वादनुकार्यानुकरणयोरभेदं मन्यमानः पृच्छति ॥

( उद्योतः ) नन्वर्थभेदाद्भिदविषयः प्रश्नोऽनुपपन्नोऽत आह—अभिन्नरूपत्वादिति । एवं च भेदनिबन्धनार्थवत्त्वानुपपत्तिरित्यर्थः ॥

( ५७४२ आम्नायशब्दानां भेदोपपादकवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ आम्नायशब्दानामान्यभाव्यं स्वरवर्णानुपूर्वीदेशकालनियतत्वात् ॥ * ॥**

( भाष्यम् ) **आम्नायशब्दानामान्यभाव्यम्–अन्यभावः सिद्धः ।**

**कथम् ?**

**स्वरवर्णानुपूर्वीदेशकालनियतत्वात् ।**

**स्वर–स्वरो नियत आम्नाये–अस्यवामशब्दस्य ।**

**वर्णानुपूर्वी–वर्णानुपूर्वी खल्वप्याम्नाये नियता–अस्यवामशब्दस्य ।**

**देशः–देशः खल्वप्याम्नाये नियतः, श्मशाने नाध्येयम्, चतुष्पथे नाध्येयमिति ।**

**कालः–कालः खल्वप्याम्नाये नियतः, नामावास्यायामधीयीत, न चतुर्दश्यामिति ॥**

( प्रदीपः ) **आम्नायशब्दानामिति** । अन्यस्य भावोऽन्यभावः । अन्यभाव एवान्यभाव्यम् । ब्राह्मणादिषु प्रतिपदपाठात् स्वार्थे ष्यञ् । अथवा अन्यो भावः–अन्यभावोऽन्यद्वस्तु, तस्य भावः–आन्यभाव्यम् । अन्यवस्तुत्वमित्यर्थः । यद्यप्यनुकार्यानुकरणयोरर्थभेदादन्यत्वनिश्चयस्तथाप्यन्यत्वस्य दार्ढ्याय स्वरादिभेदोपन्यासः ॥

**स्वर इति** । अस्येति 'ऊडिदम्'–इत्यन्तोदात्तत्वम् । वामशब्दः 'कर्षात्वतः–' इत्यन्तोदात्तः । **अथवा** 'ज्वलितिकसन्तेभ्यो णः' इति णान्तः प्रत्ययस्वरेणान्तोदात्तः । अनुकरणं तु अस्यवामशब्दः प्रातिपदिकस्वरेणान्तोदात्तः । 'प्रकृतिवदनुकरणम्' इत्येतत्तु विरोधादत्र स्वरे नाश्रीयते । अनुकरणे एकस्मिन् पदे उदात्तद्वयविरोधात् ॥ **वर्णानुपूर्वीति** । अनुकरकरणं तु व्युत्क्रमेणाप्युच्चार्यमाणं सादृश्यादनुकार्यस्य प्रत्यायकं भवति ॥ **देश इति** । अनुकरणस्य तु देशकालनियमाभावः ॥

( उद्योतः ) **अर्थभेदादिति** । अनुकार्यस्य बाह्योऽर्थः, अनुकरणस्य तु अनुकार्यशब्दरूपमेवेत्यर्थभेदः ॥

अस्येतीति । इत्यस्येत्यर्थः । ननु लोकेऽपि स्वरस्य नियतत्वाद्वेदे एव स्वरनियमकथनं भाष्यस्थमसङ्गतमिति चेन्न । लोके एकश्रुतेरपि सत्त्वेन तदनियम इति भाष्याशयात् ॥ (भाष्ये) **वर्णानुपूर्वी**······ **नियतेति** । तत्तत्कल्पे यादृशी ऋषिभिः कृता सा तत्कल्पसमाप्तिपर्यन्तं नियतेत्यर्थः ॥ **नियमाभाव इति** । अनुकरणं शृण्वतः शूद्रस्य प्रायश्चित्ताभाव इत्यपि बोध्यम् । अध्ययनकालेऽर्थपराणामपि अर्थाबोधात् अध्येतॄणां शब्दपरत्वभ्रमः । नाप्यनुकरणत्वं, शब्दतात्पर्यकत्वस्याभावात् । स्वरवर्णानुपूर्वीभेदाभावाच्च तत्त्वबुद्ध्या तद्धर्माः सर्वेऽत्रापीत्याहुः ॥

( ५६४३ आम्नाये भेदोपपादकवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ पदैकदेशसुबलोपदर्शनाच्च ॥ * ॥**

( भाष्यम् ) **पदैकदेशः खल्वप्याम्नाये दृश्यते–अस्यवामीयम् ।**

**ननु चैष सुब्लोपः स्यात् ।**

**सुबलोपदर्शनाच्च । सुबलोपः खल्वपि दृश्यते–अस्यवामीयमिति ।**

**( तस्मादन्ये आम्नायशब्दा अन्य इमे । )**

**यदि तर्हि अन्य आम्नायशब्दा अन्य इमे, मत्वर्थो नोपपद्यते–अस्यवामशब्दोऽस्मिन्नस्तीति ।**

**न संज्ञा संज्ञिनं व्यभिचरति ॥**

( प्रदीपः ) **पदैकदेशेति** । आम्नाये 'अस्य वामस्य–' इति प्रयुज्यते, तदेकदेशस्यास्यवामशब्दस्यानुकरणमेकदेश एवास्यवामशब्दो दृश्यते–अस्यवामीयशब्दे प्रकृतिरित्यर्थः ॥ **सुबलोपदर्शनाच्चेति** । यदि षष्ठ्या लुकि कृते रूपमेतद्भवतीत्युच्यते तदा पूर्वपदेऽपि लुक्प्रसङ्गः । अनुकरणस्य तु विभक्त्यर्थाप्रतिपादनात् सुबभावाल्लुगभावः ॥ **मत्वर्थो नोपपद्यत इति** । अनुकार्येण सूक्तनाम्नोस्तद्वत्ता, न त्वनुकरणेनेति भावः ॥ **न संज्ञेति** । अनुकरणं प्रत्यायकत्वात्संज्ञा । अनुकार्यं तु प्रत्याय्यत्वात् संज्ञि । अव्यभिचारश्चावश्यप्रत्याय्यत्वात्संज्ञिनः, तत्र यथा गवादयः शब्दाः सास्नावदर्थं प्रत्याययन्तस्तेनार्थेन तद्वति मतुपमुत्पादयन्ति–गोमानिति । तथा अनुकरणशब्दाः प्रथमासमर्थाः स्वेनार्थेनानुकार्येण तद्वति छप्रत्ययमिति न कश्चिद्दोषः । अनुकरणशब्दश्चानुकार्यं स्वजातिसमवेतं वक्तीति जातिशब्द इति लृकारवार्तिकेऽभिहितम् ॥

१ स इति । प्रत्याख्यानप्रकार इति भावः ॥
२ 'अथवा अन्यो भावोऽन्यद्वस्तु' इत्येव च. झ. पाठः ॥
३ छ. पुस्तके ( ) एतच्चिह्नस्थस्य पाठो न ॥
४ 'शब्दोऽत्रास्तीति' इति च. झ. पाठः ॥

( उद्द्योतः ) आम्नाये पदैकदेशादर्शनादाह—आम्नाये इति–भाष्ये आम्नाये पठ्यमानस्य यः पदैकदेशः स छप्रत्ययप्रकृतिभूतेऽनुकरणे दृश्यत इत्यन्वयः ॥ ननूत्तरभागे सुब्लोपो दृश्यत एवेत्यत आह—यदीति ॥ नन्वनुकरणस्यापि कुतो न सुत्वं, कुतो वा न लुगत आह—अनुकरणस्य त्विति ॥ भाष्ये उत्तरयति—न संज्ञेति ॥ संज्ञासंज्ञिनोरव्यभिचारे यथा मत्वर्थोपपत्तिस्तथा दर्शयति—तत्र यथेति ॥ स्वजातिसमवेतमिति । अनुक्रियमाणनिष्ठजातिसम्बद्धमनुकार्यमित्यर्थः ॥

( ९१६ विधिसूत्रम् ॥ ५ । २ । १ आ. ३० )

## २०७८ अध्यायानुवाकयोर्लुक्

## ॥ ५ । २ । ६० ॥

( लुगधिकरणम् )

( ५६४४ विकल्पोपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥*॥ अध्यायानुवाकाभ्यां वा लुक् ॥*॥**

( भाष्यम् ) अध्यायानुवाकाभ्यां वा लुग्वक्तव्यः । स्तम्भः, स्तम्भीयः । गर्दभाण्डः, गर्दभाण्डीयः । अनुकः, अनुकीयः[2] ॥

( प्रदीपः ) अध्यायानुवाकाभ्यामिति । तादर्थ्ये एषा चतुर्थी । अध्यायानुवाकार्थौ यश्छस्तस्य वा लुग्वक्तव्यः । तेन पक्षे श्रवणं भवति । लुग्विधानमेव ज्ञापकम्–अध्यायानुवाकयोश्छो भवतीति । तत्र मतुप्प्रकरण एवास्मिन् सूत्रे कर्तव्ये यदत्र छस्य लुग्विधानं तस्मात्पाक्षिको लुगनुमीयते इत्याहुः ॥

( उद्द्योतः ) नन्वेतौ प्रत्ययार्थौ, न त्वाभ्याम्परः प्रत्यय इत्यत आह—तादर्थ्य इति ॥ ननु पूर्वसूत्रे 'सूक्तसाम्नोः' इत्युक्त्या तयोश्छ एव नास्ति, कस्य लुगत आह—लुग्विधानमेवेति ॥ मतुप्प्रकरण एवेति । तथा च 'मतुप्'प्रत्ययस्यैवानेन लुक्सिद्धेरत्र करणं पाक्षिकत्वार्थम्, तत्र न्यासे च प्रत्ययानुमानं नेति भावः ॥

( ९१७ विधिसूत्रम् ॥ ५ । २ । १ आ. ३१ )

## २०८३ धनहिरण्यात्कामे

## ॥ ५ । २ । ६५ ॥

( कन्प्रत्ययाधिकरणम् )

( ५६४५ एकदेश्युपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ धनहिरण्यात्कामाभिधाने ॥ * ॥**

( भाष्यम् ) धनहिरण्यात्कामाभिधान इति वक्तव्यम् ॥

( प्रदीपः ) कामाभिधान इति । इच्छामात्राभिधान इत्यर्थः ॥

( ५६४६ अनिष्टोपपत्तिप्रदर्शकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः ॥ * ॥**

( भाष्यम् ) षष्ठ्यर्थे हि सति अनिष्टं प्राप्नोति । धने कामोऽस्येति ।

तत्तर्हि वक्तव्यम् ?

( प्रदीपः ) षष्ठ्यर्थे हीति । यद्यप्यत्र षष्ठ्यर्थो न प्रकृतस्तथापि कामयत इति काम इति कर्तृसाधनकामशब्दोपादाने धनस्य कामयिता देवदत्तादिर्धनकशब्देनाभिधीयत इति सामर्थ्यात् षष्ठ्यर्थ एव प्रत्ययः स्यादित्यर्थः ॥

( सिद्धान्तभाष्यम् )

न वक्तव्यम् ।

कस्मान्न भवति—धने कामोऽस्येति ।

अनभिधानात् ॥

( प्रदीपः ) अनभिधानादिति । कामशब्देनेच्छामात्रमभिधीयते, न तु कामयिता । ततश्च 'तत्र' इत्यधिकाराद्धनहिरण्याभ्यां सप्तम्यन्ताभ्यामिच्छामात्रे प्रत्ययो भवति–धनको देवदत्तस्येति, न तु तद्वतीति भावः ॥

( उद्द्योतः ) अनभिधानादित्यस्य—कामशब्देन कर्त्रनभिधानादित्यर्थं इत्याह—कामशब्देनेति ॥

( ९१८ विधिसूत्रम् ॥ ५ । २ । १ आ. ३२ )

## २०९० शीतोष्णाभ्यां कारिणि

## ॥ ५ । २ । ७२ ॥

( शीतोष्णशब्दयोर्मुख्यार्थेऽनिष्टापत्तिदर्शकभाष्यम् )

किं यः शीतं करोति स शीतकः, यो वा उष्णं करोति स उष्णकः ?

किं चातः ?

तुषारे आदित्ये च प्राप्नोति ॥

( प्रदीपः ) किं यः शीतमिति । शीतोष्णशब्दयोः स्पर्शविशेषो मुख्योऽर्थ इति तत्संप्रत्ययेनैव भाव्यमिति मत्वा प्रश्नः ॥

( सिद्धान्तभाष्यम् )

एवं तर्हि—उत्तरपदलोपोऽत्र द्रष्टव्यः । शीतमिव शीतम् । उष्णमिवोष्णम् । य आशु कर्तव्यानर्थांश्चिरेण करोति स उच्यते–शीतक इति । यः पुनराशु कर्तव्यानर्थानाश्वेव करोति स उच्यते–उष्णक इति ॥

---

1 पदैकदेश इति । पदसमुदायैकदेश इत्यर्थः । विशिष्टस्य पदत्वाभावात् । पदरूप एकदेश इति तु नार्थः । एकदेशस्य पदत्वाभावात् ॥

2 'अनुवाकः, अनुवाकीयः' इति च. ग. पाठः ॥

( प्रदीपः ) **उत्तरपदलोप इति** । नात्र समासावयव उत्तरपदमभिप्रेतं, समासस्यासंभवात् । किं तर्हि? उत्तरं यत्पदं-द्योतक इवशब्दः, तस्यापि गतार्थत्वाद्वृत्तिविषयेऽप्रयोग इत्यर्थः । यथा-मन्दतायुक्तं शीतं, सति शीते कार्यकरणे पाटवाभावात्तद्वन्मन्दकरणं शीतमित्युच्यते । एवमाशुकरणमुष्णम् । तत्र क्रियाविशेषणाभ्यां कर्मभ्यां प्रत्ययः-शीतं कारी-शीतकः, अलस इत्यर्थः । उष्णं कारी-उष्णकः, दक्षः । प्रयोगदर्शनाच्च गौणस्याप्यर्थस्येह क्वचिद्भवति ॥

( उद्योतः ) समासाभावेनोत्तरपदासम्भवादाह—**नात्रेति** ॥ **समासासम्भवादिति** । 'इवेन समासो विभक्त्यलोपश्च' इत्यस्य सम्भवाच्चिन्त्यमिदम्[1] ॥ **गतार्थत्वादिति** । वृत्तौ शीतादिपदं तत्सदृशपरमिति भावः ॥ **मन्दतायुक्तं**—तत्समानाधिकरणं । 'मन्दकरणं शीतम्' इत्यादिना मन्दाद्यर्थशीतादिपदं क्रियाविशेषणमिति सूचितं, तदाह—**क्रियाविशेषणाभ्यामित्यादि** ॥ **गौणस्यापीति** । 'अपिः' एवार्थे ॥ **इह**—शास्त्रे । '**क्वचित्**' इत्यस्य ग्रहणमिति शेषः । सूत्रविशेष इत्यर्थः ॥

( ९१९ निपातनसूत्रम् ॥ ५ । २ । १ आ. ३३ )

## २०९१ अधिकम् ॥ ५ । २ । ७३ ॥

( एकदेशिन आक्षेपभाष्यम् )

**अधिकमिति किं निपात्यते?**

( प्रदीपः ) **किं निपात्यत इति** । यद्यधिशब्दात्ससाधनक्रियावचनात् कन्निपात्यते तदा कर्तृकर्मणोऽरन्यतरस्य साधनस्याभिधानेन भाव्यम् । तत्र कर्तुरङ्गीकरणे कर्मणोऽभिधानं न प्राप्नोति,कर्माश्रयणे कर्तुरभिधानस्याप्रसङ्ग इति मत्वा **प्रश्नः** ॥

( उद्योतः ) **ससाधनेति**—साहित्यमात्रं विवक्षितं, तेन क्रियाविशिष्टसाधनवाचकादित्यर्थः ॥

( समाधानभाष्यम् )

**अध्यारूढस्योत्तरपदलोपः कंश्च प्रत्ययः । अध्यारूढम्-अधिकम्-इति ।**

**भवेत्सिद्धम्-अध्यारूढो द्रोणः खार्याम्, अधिको द्रोणः खार्यामिति ।**

**इदं तु न सिध्यति—अध्यारूढा द्रोणेन खारी, अधिका द्रोणेन खारीति । गत्यर्थानां हि क्तः कर्तरि विधीयते ।**

**गत्यर्थानां वै क्तः कर्मण्यपि विधीयते ॥**

( प्रदीपः ) **अध्यारूढस्येति** । लौकिके प्रयोगे अधिकशब्देन विषयभेदेन कर्तृकर्मणोरनभिधानदर्शनादनङ्गीकृतसाधनभेदमध्यारूढस्येदं निपातनं, स चोभयार्थ इति न कश्चिद्दोषावसरः ॥ **खार्यामिति** । यदा कर्तरि क्तस्तदा कर्मणोऽनभिधानाद् द्वितीयायां प्राप्तायां 'यस्मादधिकम्–' इति ज्ञापकात्पञ्चमी भवति । औपश्लेषिकाधिकरणविवक्षायां तु सप्तमी, तथा 'तदस्मिन्नधिकम्–' इति निर्देशः कृतः ॥

( उद्योतः ) **अनङ्गीकृतेति** । अनाश्रितार्थशब्दस्वरूपमात्रस्य निपातनमित्यर्थः ॥

**द्वितीयायामिति** । 'अध्यारूढो द्रोणः खारीम्'इतिवत् । भाष्येऽप्यध्यारूढपदयुक्तप्रयोगे 'खारीम्'इति द्वितीयान्तपाठ इति भावः । कर्मणः शेषत्वविवक्षया षष्ठ्यन्तपाठोऽपि क्वचित् । वस्तुतोऽधिकशब्दार्थस्य क्रियात्वाभावात्तद्योगे द्वितीयाप्राप्तिश्चिन्त्यैव । अन्यथा 'देवदत्तेन शत्योऽश्वः' इत्यादौ षष्ठीवारणाय 'कर्तृकर्मणोः–'इति सूत्रे कृद्ग्रहणस्यावश्यकतया तत्सूत्रस्थभाष्यविरोधापत्तिः । भाष्यं तूभयविधाध्यारूढशब्दार्थे एतन्निपातनमित्यर्थमात्रपरमिति स्पष्टमेव तद्विदाम् । किञ्च 'रहिर्गत्यर्थः' इति 'यद्धितुपरम्–' इति सूत्रे भाष्यम्, न च सा क्रियाऽधिकशब्दजबोधे भासते, 'अस्य परिमाणादस्य परिमाणमधिकम्' इत्यादावप्रतीतेः । नाप्यन्या, तथा सति 'गत्यर्थत्वात्कर्तरि कर्मणि च क्तः' इति भाष्यासङ्गतिः । आधिक्यगुणप्रवृत्तिनिमित्तकश्चायम् । पञ्चमी तु षष्ठीबाधिका ज्ञापकादेव स्वतन्त्रा । सप्तमी तु उपश्लिष्टपदाध्याहारेण औपश्लेषिकेऽधिकरण इत्यन्ये ॥ **औपश्लेषिकेति** । एतच्च 'तदस्मिन्'इति सूत्रे व्याख्यातम् । 'अधिका खारी द्रोणेन'इत्यत्र तृतीया प्रकृत्यादित्वात्, हेतौ वा, 'कृता'इतिपदाध्याहारेण कर्तरि वा ॥

( ९२० विधिसूत्रम् ॥ ५ । २ । १ आ. ३४ )

## २०९३ पार्श्वेनान्विच्छति ॥ ५।२।७५ ॥

( एकदेशिभाष्यम् )

**किं यः पार्श्वेनान्विच्छति स पार्श्वकः?**

**किं चातः?**

**राजपुरुषे प्राप्नोति ॥**

( प्रदीपः ) **राजपुरुष इति** । स हि राजपार्श्वाश्रयेणार्थमिच्छतीति भावः ॥ **ऋजुनेति** । यथा पार्श्वं तिर्यगवस्थानादनृजु, तथाऽन्योऽप्यनृजुरुपायः पार्श्वमित्यर्थः ॥

( उद्योतः ) भाष्ये 'राजपुरुषे' इति पाठः । 'राजपुरुषेऽपि'इति पाठे 'अपिः' एवार्थः ॥

( सिद्धान्तभाष्यम् )

**एवं तर्हि उत्तरपदलोपोऽत्र द्रष्टव्यः । पार्श्वमिव पार्श्वम् । य ऋजुनोपायेनान्वेष्टव्यानर्थाननृजुनोपायेनान्विच्छति स उच्यते-पार्श्वक इति ॥**

---

1 चिन्त्यमिति । 'इवेन समास–' इत्यस्य छान्दसत्वमित्यभिमानेन कैय्यटः ॥

( ९२१ विधिसूत्रम् ॥ ५ । २ । १ आ. ३५ )

## २०९४ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ॥ ५ । २ । ७६ ॥

( ठक्ठञोरधिकरणम् )

( आक्षेपभाष्यम् )

**किं योऽयःशूलेनान्विच्छति स आयःशूलिकः ?**

**किं चातः ?**

**शिवभागवते प्राप्नोति ॥**

( प्रदीपः ) **शिवभागवत इति** । भगवान् भक्तिरस्य भागवतः । शिवस्य भागवत इति षष्ठीसमासः । अवयवसंस्पर्शद्वारेण समुदायार्थं विशेषणाच्छिवो भगवान्भक्तिर्यस्य स प्रतीयते ॥

( उद्द्योतः ) शिवभागवते एतद्भाष्यप्रामाण्यादेव गमकत्वाद्वृत्तिः, अन्यथा भगवत्पदार्थस्य शिवरूपविशेष्यसापेक्षत्वेनासामर्थ्याद्वृत्तिर्न स्यात् ॥ ननु शिवस्य भगवता सामर्थ्येऽपि भागवतेनासामर्थ्यात्कथं समासोऽत आह—**अवयवेति** ॥ **भक्तिः**—सेव्यः । कर्मणि क्तिन् ॥ **शिवभागवताः**—कापालिकाः । ते हि शूलहस्ताः प्रायेण भिक्षां चरन्ति ॥

( समाधानभाष्यम् )

**एवं तर्हि उत्तरपदलोपोऽत्र द्रष्टव्यः । अयः शूलमिव-अयःशूलं । यो मृदुनोपायेनान्वेष्टव्यानर्थान् रभसेनान्विच्छति स उच्यते-आयःशूलिकः ॥**

( प्रदीपः ) **एवं तर्हीति** । यथा-अयःशूलं तीक्ष्णम्, एव अन्योऽपि तीक्ष्ण उपायोऽयःशूलमुपचाराडुच्यते ॥

(उद्द्योतः) **तीक्ष्ण उपाय इति** । भाष्ये रभसपदेनाप्ययमेव ॥

( ९२२ विधिसूत्रम् ॥ ५ । २ । १ आ. ३६ )

## २०९५ तावतिथं ग्रहणमिति लुग्वा ॥ ५ । २ । ७७ ॥

( कनोऽधिकरणम् )

(प्रदीपः) **तावतिथमिति**—पूरणप्रत्ययान्तनिर्देशः । गृह्यतेऽनेनेति ग्रहणम् । तत्रायमर्थः—पूरणप्रत्ययान्ताद् ग्रहणोपाधिकात् स्वार्थे कन् भवति, तस्य च कनो वा लुग् भवति—पञ्चमं ग्रहणं पञ्चमकमिति । एतत्सूत्रार्थाश्रयेण वार्तिकारम्भः ॥

( उद्द्योतः ) तावतिथस्यैव सूत्रे निर्देशात् 'षट्कः' इत्युदाहरणं कथमत आह—**पूरणेति** ॥ **अनेनेतीति** । अत एव सूत्रे सामानाधिकरण्येन निर्देशः ॥

( ५७४७ लुग्ग्रहणाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाप्रकरणात् ॥ * ॥**

( भाष्यम् ) **तावतिथं ग्रहणमिति लुग्वावचनमनर्थकम् ।**

**किं कारणम् ?**

**विभाषाप्रकरणात् । प्रकृता महाविभाषा, तयैतत्सिद्धम् ॥**

( प्रदीपः ) **तावतिथमिति** । महाविभाषाऽधिकाराद्विकल्पेन प्रत्ययोत्पादनाद्रूपद्वयस्य सिद्धत्वादित्यर्थः । यदा तु पूरणप्रत्ययस्य वा लुग्विधीयते—पञ्चकं ग्रहणं, पञ्चमकं ग्रहणमिति, तदा लुग्वाग्रहणं च कर्तव्यमेव । अन्यथा रूपद्वयं कथं सिद्ध्येत् ?

( उद्द्योतः ) **यदा त्विति** । अत एव 'षष्ठेन गृह्णाति षट्कः' इति भाष्यं सङ्गच्छते । एवञ्चेदं वार्तिकं प्रौढ्यैवेति भावः । 'पञ्चकम्' इत्यस्य च ग्रहणकरणं पञ्चमं रूपमित्यर्थः ॥

( ५७४८ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥*॥ तावतिथेन गृह्णातीति लुक् च ॥*॥**

( भाष्यम् ) **तावतिथेन गृह्णातीत्युपसंख्यानं कर्तव्यं लुक् च वक्तव्यः । षष्ठेन गृह्णाति षट्कः ॥**

( प्रदीपः ) **तावतिथेनेति** । स्वार्थे प्रत्ययो विधीयमानो ग्रहीतरि न प्राप्नोतीति वचनम् । लुक्च पूरणप्रत्ययस्यैव, न तु कनः ॥

( ९२३ विधिसूत्रम् ॥ ५ । २ । १ आ. ३७ )

## २०९७ शृङ्खलमस्य बन्धनं करभे ॥ ५ । २ । ७९ ॥

( ५७४९ निर्देशाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ शृङ्खलमस्य बन्धनं करभ इत्यनिर्देशः ॥ * ॥**

( भाष्यम् ) **'शृङ्खलमस्य बन्धनं करभे' इत्यनिर्देशः । अगमको निर्देशोऽनिर्देशः । न हि तस्य शृङ्खलं बन्धनम्, शृङ्खलवत्याऽसौ रज्ज्वा बध्यते ॥**

( प्रदीपः ) **शृङ्खलमिति** । बध्यते-अस्वतन्त्रीक्रियतेऽनेनेति-बन्धनमुच्यते । रज्जोश्चास्वतन्त्रीकरणे करणत्वं, न तु शृङ्खलस्येति भावः । काष्ठमयं पाशकं पादे यत् व्यतिषज्यते तत् **शृङ्खलमुच्यते** । बाल उष्ट्रः-**करभः** ॥

( उद्द्योतः ) ननु संयोगविशेषरूपस्य बन्धनस्य शृङ्खलमपि करणमेवेत्यत आह—**अस्वतन्त्रीक्रियत इति** ॥ **व्यतिषज्यते**—रज्ज्वादिना बध्यते इत्यर्थः । '**शृङ्खलम्**' इति क्वचित्पाठः ॥

( ५७५० समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ सिद्धं तु तद्वन्निर्देशाल्लुक् च ॥ * ॥**

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

तद्वन्निर्देशः कर्तव्यः, लुक् च वक्तव्यः–श्रृङ्खलवद्बन्धनमिति ।

स तर्हि तद्वन्निर्देशः कर्तव्यः ।

न कर्तव्यः ।

इह यन्नान्तरेण यस्य प्रवृत्तिर्भवति तत्तस्य निमित्तत्वाय कल्पते । न चान्तरेण श्रृङ्खलं बन्धनं प्रवर्तते ।

अथवा साहचर्यात्ताच्छब्द्यं भविष्यति–श्रृङ्खलसहचरितं बन्धनं श्रृङ्खलं बन्धनमिति ॥

( प्रदीपः ) **इहेति** । यद्यपि रज्जोः करणत्वं तथापि श्रृङ्खलस्य करणत्वमस्त्येव, तदन्तरेण बन्धनस्याभावात् ॥ **अथवेति** । रज्जुः श्रृङ्खलशब्देन तत्साहचर्यादुच्यत इत्यर्थः ॥

( उद्द्योतः ) भाष्ये—यं नान्तरेणेति । यं विना यस्य प्रवृत्तिर्नेत्यर्थः ॥

( ९२४ विधिसूत्रम् ॥ ५ । २ । १ आ. ३८ )

## २१०० तदस्मिन्नन्नं प्राये संज्ञायाम् ॥ ५ । २ । ८२ ॥

( ५७५१ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्राये संज्ञायां वटकेभ्य इनिः ॥ * ॥**

( भाष्यम् ) प्राये संज्ञायां वटकेभ्य इनिर्वक्तव्यः । वटकिनी पौर्णमासी ॥

( प्रदीपः ) **वटकेभ्य इनिरिति** । कनि प्राप्ते वचनम् । मत्वर्थीयस्त्विनिः 'सप्तम्यां च न तौ स्मृतौ' इति नास्ति ॥

( ९२५ विधिसूत्रम् ॥ ५ । २ । १ आ. ३९ )

## २१०२ श्रोत्रियंश्छन्दोऽधीते ॥ ५ । २ । ८४ ॥

( घप्रत्ययनिपातनाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

किं निपात्यते ?

( ५७५२ सूत्रार्थोपोद्घलकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ श्रोत्रियंश्छन्दोऽधीत इति वाक्यार्थे पदवचनम् ॥ * ॥**

( भाष्यम् ) छन्दोऽधीत इत्यस्य वाक्यस्यार्थे 'श्रोत्रियन्' इत्येतत्पदं निपात्यते ॥

( प्रदीपः ) **वाक्यार्थ इति** । वाक्यार्थस्य सम्बन्धरूपस्य क्रियारूपस्य[1] चाऽसत्त्वभूतत्वात् श्रोत्रियशब्दस्य च सत्त्वभूतार्थाभिधायित्वात् वाक्यार्थग्रहणेन तदाश्रयः'छन्दोऽध्यायी' उपचारादभिहितः । तत्राविद्यमानप्रकृतिप्रत्ययविभागः श्रोत्रियशब्दो निपात्यते । नकारः स्वरार्थः । तेनाद्युदात्तत्वं नित्करणसामर्थ्यात् व्यपवर्गाभावेऽपि भवति ॥

( उद्द्योतः ) ननु वाक्यार्थे वृत्तावसत्त्वभूतार्थत्वा[2]दव्ययत्वापत्तिरत आह—**वाक्यार्थस्येति** ॥ ननु सम्बन्धस्य[3] न वाक्यार्थत्वं, 'वाक्यार्थे' इत्यस्य 'तज्जन्यबोधविशेष्ये' इत्यर्थादत आह—**क्रियारूपस्य चेति** ॥ **व्यपवर्गाभावेऽपीति** । 'निति[4] परे इत्यर्थः' इत्यभिमानः । वस्तुतस्तु 'निदन्ते पदे' इत्यर्थाद्व्यपदेशिवद्भावेनेदं सिद्धम् ॥

( ५७५३ प्रकारान्तरवर्णनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ छन्दसो वा श्रोत्रभावः, तदधीत इति घंश्च ॥ * ॥**

( भाष्यम् ) छन्दसो वा श्रोत्रभावो निपात्यते, 'तदधीते' इत्यस्मिन्नर्थे घंश्च प्रत्ययः । छन्दोऽधीते—श्रोत्रियः ॥

(प्रदीपः) **छन्दसो वेति** । तस्मिन् पक्षे 'घना'अणो बाधप्रसङ्गात् छान्दसशब्दो न सिध्यतीति 'तावतिथं ग्रहणम्–' इत्यतो वाग्रहणमनुवर्त्यम् । **अथ वा** विशेषतः[5]–छन्दोऽध्यायिनि तदर्थानुष्ठायिनि श्रोत्रियशब्दस्य निपातनादध्येतृमात्रे छान्दसशब्दस्य नास्ति बाधः ॥

( उद्द्योतः ) **विशेषे छन्दोऽध्यायिनीति** । छन्दोऽध्यायित्व-तदर्थानुष्ठायित्वरूपविशेषवतीत्यर्थः । 'विशेषतः' इति पाठे 'निपातनात्' इत्यनेनान्वयः । विशेषमेव दर्शयति—**छन्दोऽध्यायिनीत्यादिना** ॥

१ 'क्रियारूपस्य वाऽसत्व' इति घ. च. पाठः ॥

२ 'भूतार्थकत्वात्' इति ख. घ. झ. पाठः ॥

३ ननु सम्बन्धस्येति । 'सम्बन्धस्य वाक्यार्थत्वं' इति नञ्रहितपाठोऽपि ख. ग. घ. पुस्तकेषु दृश्यते, तथापि प्रामाणिके अशुद्धिरहिते ज. पुस्तके नञ्सहितपाठदर्शनात्सोऽनुसृतः । सम्बन्धस्य वाक्यार्थत्वं नास्तीत्यत्र हेतुमाह—वाक्यार्थे इत्यादि । भाष्यस्थ 'वाक्यार्थे' इतिपदस्य 'वाक्यजन्यबोधविशेष्ये' इत्यर्थकरणान्न वाक्यार्थः सम्बन्धः किन्तु वाक्यजन्यमुख्यविशेष्य एव वाक्यार्थ इति भावः । नञ्रहित पाठस्तु नैवं सामञ्जस्येन संगच्छते ॥

४ निति परे इति । ञ्नित्यादिर्नित्यम् ६।१।१९७। इति सूत्रे निति परे इत्यर्थकरणमभिमान इति भावः । 'भीह्रीभृहुमदजन–' इति सूत्रे पूर्वग्रहणात्सौवर्यः सप्तम्यस्तादन्तसप्तम्य इति ज्ञापनान्निति परे इत्येवमर्थो न भवति ॥

५ विशेषत इति । उद्योतदर्शनात् 'विशेषे छन्दो–' इति पाठोऽनुमीयते । अस्मदुपलब्धपुस्तकेषु विशेषतः' इत्यस्यैव दर्शनात्तथा स्थापितः ॥

( ९२६ विधिसूत्रम् ॥ ५ । २ । १ आ. ४० )

## २१०३ श्राद्धमनेन भुक्तमिनिठनौ ॥ ५ । २ । ८५ ॥

( इनिठनोरधिकरणम् )

( ५७५४ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इनिठनोः समानकालग्रहणम् ॥ * ॥**

( भाष्यम् ) इनिठनोः समानकालग्रहणं कर्तव्यम् । अद्य भुक्ते श्वः श्राद्धिक इति मा भूत् ॥

( प्रदीपः ) **समानकालग्रहणमिति** । भुजिना समाने काले प्रत्ययप्रयोगो यथा स्यात् । यस्मिन् काले भुजिक्रियाऽऽहिततृप्तिलक्षणविशेषानुवृत्तिस्तस्मिन्नेव श्राद्धिश्राद्धिकशब्दयोरुच्चारणम्, न तु कालान्तरे । स च समानः कालो लोकप्रसिद्ध्यनुसारेणाद्यतन एव द्रष्टव्यः । तेन यदा द्वितीयेऽहनि कस्यचिदन्नमपरिणतं तदा प्रत्ययाभावः ॥

( उद्द्योतः ) द्वयोः प्रत्यययोः समानकालत्वासम्भवादाह— **भुजिनेति** ॥ नन्वेवं भोजनोत्तरं तद्दिनेऽपि प्रयोगो न स्यादित्यत आह—**यस्मिन्निति** । '**लोकप्रसिध्यनुसारेण**' इति पाठः ॥

( ५७५५ सिद्धान्तवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) किमुक्तम् ?

अनभिधानादिति ॥

( ९२७ विधिसूत्रम् ॥ ५ । २ । १ आ. ४१ )

## २१०९ साक्षाद् द्रष्टरि संज्ञायाम् ॥ ५ । २ । ९१ ॥

( सूत्रार्थनिश्चायकभाष्यम् )

**संज्ञायामिति किमर्थम् ?**

**त्रिभिः साक्षाद् द्रष्टव्यं भवति-यश्च ददाति, यस्मै च दीयते, यश्चोपद्रष्टा, तत्र सर्वत्र प्रत्ययः प्राप्नोति । संज्ञाग्रहणसामर्थ्याद्धनिकान्तेवासिनोर्न भवति ॥**

( प्रदीपः ) संज्ञायत इति **संज्ञा**-इति-अर्थ एवंव्यपदिश्यमानोऽभिधीयते । **अथ वा** संज्ञायतेऽनयेति-**संज्ञा** । निपातनात् ल्युडभावः । ततः शब्द एव संज्ञाशब्देनोच्यते । संज्ञायां विषये कार्यं भवतीत्यर्थः । लक्ष्यानुसारिप्रतिपन्नपेक्षया **प्रश्नः**—**संज्ञाग्रहणं किमर्थमिति** ॥ लक्षणानुसारिप्रतिपन्नपेक्षया **उत्तरम्**—**त्रिभिरिति** ॥ **अन्तेवासि**शब्देन शिष्यसाधर्म्यात्पारतन्त्र्यादधमर्ण उच्यते ॥

( उद्द्योतः ) एवंव्यपदिश्यमान इति । 'संज्ञायते'इत्यर्थकसंज्ञाशब्देन साक्षाद्द्रष्टृत्वेन व्यवह्रियमाणोऽर्थोऽभिधीयत इत्यर्थः । एवंव्यवह्रियमाणेऽर्थे इनिप्रत्यय इत्यर्थः ॥ **अनयेति** । शब्दव्यवयेत्यर्थः । तदाह—**शब्द एवेति** ॥ **संज्ञायां विषये इति** । तदर्थप्रतिपादकशब्दविषये इत्यर्थः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य द्वितीयपादे प्रथममाह्निकम् ॥

( ९२८ निपातनसूत्रम् ॥ ५ । २ । १ आ. ४२ )

## २११० क्षेत्रियच्परक्षेत्रे चिकित्स्यः ॥ ५ । २ । ९२ ॥

( निपातनाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

किं निपात्यते ?

( ५७५६ सूत्रार्थज्ञापकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ क्षेत्रियः श्रोत्रियवत् ॥ * ॥**

( भाष्यम् ) क्षेत्रियः श्रोत्रियवन्निपात्यते । परक्षेत्रे चिकित्स्य इत्येतस्य वाक्यस्यार्थे 'क्षेत्रियच्' इत्येतत्पदं निपात्यते ॥

( प्रदीपः ) **परक्षेत्रे**—जन्मान्तरशरीरे चिकित्स्यो व्याधिरसाध्यत्वात् **क्षेत्रियः** । तथा परक्षेत्रे—धान्यार्थे क्षेत्रे यानि तृणानि जातानि विनाश्यानि तानि **क्षेत्रियाणि** । तथा परदारे निग्राह्यः—**क्षेत्रियः** । तथा परशरीरेषु संक्रमय्य यद्विषं चिकित्स्यते तत्—**क्षेत्रियम्** ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

( ५७५७ प्रकारान्तरेण सूत्रार्थज्ञापकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ परक्षेत्राद्वा तत्र चिकित्स्य इति परलोपो घंच[1] ॥ * ॥**

( भाष्यम् ) परक्षेत्राद्वा तत्र चिकित्स्य इत्येतस्मिन्नर्थे परलोपो निपात्यते घंच प्रत्ययः । परक्षेत्रे चिकित्स्यः—क्षेत्रियः ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य द्वितीये पादे प्रथममाह्निकम् ॥

१ 'घंश्च' इति च. ज्ञ. पाठः ॥

( ९२९ विधिसूत्रम् ॥ ५ । २ । २ आ. ४३ ).

## २११२ तदस्यास्त्यस्मिन्निति मतुप् ॥ ५ । २ । ९४ ॥

( मतुप्प्रत्ययाधिकरणम् )

( पदकृत्यभाष्यम् )

**किमर्थमिमावर्थावुभौ निर्दिश्येते-अस्य अस्मिन्निति, न यद्यस्य भवति तस्मिन्नपि तद् भवति, यच्च यस्मिन् भवति तत्तस्यापि भवति?**

**नैतयोरावश्यकः समावेशः। भवन्ति हि देवदत्तस्य गावः, न च तास्तस्मिन्नाधृता भवन्ति। भवन्ति च पर्वते वृक्षा न च ते तस्य भवन्ति। तस्मात् 'अस्यास्मिन्' ग्रहणम् ॥**[1]

( प्रदीपः ) 'शाखावान् वृक्षः' इत्यादौ वृक्षादेराधारभावोऽप्यस्ति, तत्पूर्वकं संबन्धित्वं च-इत्यन्यतरोपादानेनेष्टविषये सिद्धिं मत्वा पृच्छति—**किमर्थमिति**। कस्मा इदं-किमर्थम्। कोऽर्थोऽस्येति वा-किमर्थम्। एतच्च निर्देशक्रियाविशेषणं, न तु निर्दिश्यमानविशेषणमिति[2] नपुंसकैकवचननिर्देशः ॥ **न यद्यस्येति**[3]। नञ्शब्दः काका प्रयुक्तः 'भवत्येव' इति विधिं गमयति ॥

**नैतयोरावश्यक इति**। अवश्यं भाव आवश्यकम्। मनोज्ञादेराकृतिगणत्वात् 'ओरावश्यके' इति निपातनाद्वा वुञ् प्रत्ययः। 'अव्ययानां भमात्रे' इति टिलोपः। आवश्यकमस्मिन्नस्तीत्यावश्यकः, अर्शआदेराकृतिगणत्वादच्प्रत्ययः। इह यदा संबन्धः सर्वकारकपूर्वः, नाधारपूर्वक एव; यथा 'देवदत्तस्य गाव' इति क्रयप्रतिग्रहादिक्रियाविषये कर्तृत्वपूर्वकः स्वस्वामिसंबन्धः, तदा सप्तम्युपादाने कारकान्तरपूर्वसंबन्धाग्रहणादस्येति षष्ठ्यर्थोऽप्युपपादनीयः। तथा षष्ठ्यर्थमात्रनिर्देशे यत्राधिकरणं शेषसंबन्धनिमित्तसंबन्धित्वेनाविवक्षितम्-'वृक्षा अस्मिन् पर्वते सन्तीति' तत्र प्रत्ययो न स्यात्। न ह्यत्र क्रियाकारकपूर्वः शेषसंबन्धो दृश्यते। वृक्षैः पर्वतस्यानारम्भात् नावयवावयविभावः, आनन्तर्यादिसंबन्धसंभवेऽपि तत्र मत्वर्थीयैर्न भाव्यम्, तस्मादुभयोपादानम्। ननु किमुच्यते-न च तास्तस्मिन्नाधृता भवन्तीति? यावता 'यस्य चेश्वरवचनम्' इत्येतत्प्रत्याख्यानायाधिब्रह्मदत्ते पञ्चाला इति सप्तमीसिद्ध्यर्थं भाष्यकारेणाभिहितम्-'परिग्रहीतव्यं परिग्रहीत्रधीनम्' इत्यादि। तथा च देवदत्ते गाव इत्यपि भवितव्यम्। कारकप्रकरणे हि गौणमुख्यन्यायस्यानाश्रयणाद् गौणस्याधारस्याप्यधिकरणसंज्ञया भाव्यम्। यथा 'गङ्गायां घोषः' कूपे गर्गकुलम्' इति। ततश्च सप्तम्युपादानेऽपि 'गोमान् देवदत्तः' इति सिध्यत्येव। नैतदस्ति। सप्तमीमात्रनिर्देशे मुख्य एवाधिकरणे मत्वर्थीयाः स्युः-'वृक्षवान् पर्वतः' इत्यादौ, न तु गौणे-'गोमान् देवदत्तः' इत्यादौ। कारकप्रकरणे हि गौणमुख्यन्यायानाश्रयणम्। अयं तु प्रत्ययविधिरिति स्यात् न्यायाश्रयणमिति षष्ठीनिर्देशोऽपि कृतः ॥

**(उद्योतः)** नन्वाधारत्वसम्बन्धित्वयोर्भेदात्प्रश्नानुपपत्तेराह—**शाखावानिति**। 'वृक्षे शाखा' 'वृक्षस्य शाखा' इत्युभयदर्शनादिति भावः ॥ **तत्पूर्वकं सम्बन्धित्वं चेति**। **सम्बन्धित्वं**—सम्बन्धः, अवयवावयविभावरूपमिति[4] भावः। बोधविषयधर्मभेदसत्त्वेन[5] 'मत्वा' इत्युक्तम् ॥ द्वयोरर्थयोर्विशेष्यत्वान्नपुंसकैकवचननिर्देशानुपपत्तेराह—**एतच्चेति** ॥ नञो निषेधार्थत्वेऽसङ्गतेराह—**नञ्शब्द इति ॥ भवत्येवेति**। तस्मिन्नपि तद्भवत्येवेत्यर्थः ॥

भावप्रत्ययान्तस्य नपुंसकत्वदर्शनादन्वयासम्भवाच्चाह—**अवश्यम्भाव इत्यादि**। अवश्यं यद्भवति तस्य भावस्तद्बोधकशब्दः, स चावश्यंशब्द एव, सोऽर्थद्वारा यत्रास्तीत्यावश्यकः। एवं च,—'आवश्यक' इत्यस्य—अवश्यं समावेश इत्यर्थः ॥ वृक्षशाखयोस्तत्समावेशदर्शनादाह—**इहेत्यादि ॥ यदेति**-यत इत्यर्थे ॥ **तदेति** च-तत इत्यर्थे ॥ **कर्तृत्वपूर्वक इति**। कर्मत्वस्याऽप्युपलक्षणम् ॥ **सम्बन्धनिमित्तेति**। सम्बन्धनिमित्ते=सम्बन्धनिरूपके सम्बन्धित्वेनाविवक्षितम्, किन्त्वधिकरणत्वेन विवक्षितमित्यर्थः ॥

तत्त्वेनाऽविवक्षा च सम्बन्धासम्भवादेवेत्याह—**न ह्यत्रेति**। कारकाणां शेषत्वविवक्षा हि तत्पूर्वकसम्बन्धसत्त्वे, न च प्रकृते कश्चित्तादृशः सम्बन्धोऽस्तीति भावः ॥ तदेवोपपादयति—**वृक्षैरिति ॥ आनन्तर्यादिसम्बन्धेति**। अनन्तरादिसमभिव्याहारं विना तेषां षष्ठ्यर्थत्वाभावः, तत्समभिव्याहारे तु सापेक्षत्वान्मत्वर्थीयो नेति भावः ॥ **कारकप्रकरणे इति**। 'साधकतमम्' इति तमप्ग्रहणादिति भावः ॥ **अयन्त्विति**। न चेह गौणग्रहणे ज्ञापकमस्तीति भावः। **अन्ये तु**-एवं हि 'घोषवती गङ्गा' 'काकवद्धृदम्' इत्याद्यनापत्तिः, व्यापकाधारस्यैव मुख्याधिकरणत्वमिति 'स्वरितेन-' 'साधकतमम्-' इत्यादौ भाष्ये स्पष्टमुक्तेः। तस्मादधिब्रह्मदत्ते पञ्चाला इत्यादौ 'आधृताः' इत्यध्याहारेण बौद्धमाधारत्वम्, तच्च यत्र तथा बुद्धिरस्ति तत्राऽस्तु, सा चाधिशब्दयोग एव, नान्यत्रेति भाष्याशयः ॥ भाष्ये—**भवन्ति च पर्वते इति**। न च तेऽपि तस्य

---

1 'तस्मात् 'अस्यास्मिन्' ग्रहणम्' इत्यस्य छ. क. पुस्तके न पाठः ॥

2 निर्दिश्यमानविशेषणमिति। निर्दिश्यमानौ यौ अर्थौ तयोः 'किमर्थं' इत्येतन्न विशेषणम्। तयोर्विशेषणत्वे हि द्विवचनपुल्लिङ्गनिर्देशश्चापद्येत। किन्तु क्रियाविशेषणमेतदिति निर्देश उपपन्न इति भावः ॥

3 'न यद्यस्य' इति भाष्ये नञो निषेधार्थकत्वे 'किमर्थम्' इति प्रश्नोऽनुपपद्येत, अत आह—न शब्दः काक्केति ॥

4 सम्बन्धित्वस्य नपुंसकनिर्दिष्टस्य विशेषणान्नपुंसकनिर्देशमाह—अवयवावयविभावरूपमिति। शाखावान् वृक्ष इत्यादौ ॥

5 बोधविषयधर्मभेदसत्त्वेनेति। शाखा अस्ति अस्य, शाखा अस्ति अस्मिन्नित्युभयत्रापि विशेष्यस्य वृक्षस्यैव प्रतीतेः 'इष्टविषये सिद्धिं मत्वा' इति प्रदीपे मत्वाशब्दोऽनुपपन्नस्तमुपपादयति—बोधविषयेति। अस्ति अस्य, अस्ति अस्मिन्नित्यत्र अधिकरणत्वसम्बन्धित्वरूपबोधविषये धर्मभेदस्य सत्त्वात् 'मत्वा' इत्युक्तमिति भावः ॥

संयोगवन्तो भवन्तीति वाच्यं, संयोगसम्बन्धेन सम्बन्धिनि मतुपः षष्ठ्याश्चानङ्गीकारात् । न हि कथञ्चित्संयुक्तयोर्घटयोः 'घटवान् घट'इति 'घटस्य घटः' इति वा भवति । संयोगविशेष एव च भवति, तत्र च आधाराधेयभाव एव इत्याहुः ॥

( अस्तिग्रहणाक्षेपभाष्यम् )

**अथास्तिग्रहणं किमर्थम् ?**

( प्रदीपः ) **अथास्तिग्रहणमिति** । संभवे व्यभिचारे च विशेषणविशेष्यभावो भवति, यथा नीलोत्पलमिति । सत्तां तु पदार्थो न व्यभिचरति, तामन्तरेण पदोच्चारणासंभवात् तस्या एव सर्वशब्दप्रवृत्तौ कारणत्वादिति **प्रश्नः** ॥

( उद्द्योतः ) 'अस्ति' इति प्रकृत्यर्थविशेषणम्, तत्र प्रश्नाशयमाह—**सम्भवे इति** ॥ **तामन्तरेण**—बुद्धौ पदार्थसत्तामन्तरेणार्थबोधाय **पदोच्चारणासम्भवादित्यर्थः** ॥ **तस्या एव**—बुद्धिसत्ताया एव ॥ **प्रवृत्तौ**—प्रयोगे ॥

( अस्तिग्रहणप्रयोजनभाष्यम् )

**सत्तायामर्थे प्रत्ययो यथा स्यात् ॥**

( प्रदीपः ) **सत्तायामर्थे प्रत्ययो यथा स्यादिति** । सत्तायां वर्तमानात्सत्तोपाधिकार्थाभिधायिनः प्रत्ययो यथा स्यादित्यर्थः ॥

( उद्द्योतः ) ननु 'न सत्ता प्रकृत्यर्थः' इति 'सत्तायां वर्तमानात्' इत्यसङ्गतमतस्तदर्थमाह—**सत्तोपाधिकेति** । वृत्तौ प्रकृतेस्तदर्थान्तर्भावेण वृत्तिरिति भावः ॥

( प्रयोजनाक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । न सत्तां पदार्थो व्यभिचरति ॥**

( प्रदीपः ) **न सत्तां पदार्थो व्यभिचरतीति** । यावत् बुद्ध्या पदार्थो न विषयीकृतस्तावत्पदस्य प्रयोगाभावः । तस्माद्बुद्धिसत्तासमाविष्टोऽर्थो विधिनिषेधजननादिभिः संबध्यते—वृक्षोऽस्ति वृक्षो नास्ति वृक्षो जायत इति । अत्यन्तासतोऽपि बहिः शशविषाणादीनर्थान् बुद्ध्या विषयीकृत्य शशविषाणादिप्रयोगः, तस्माद्बुद्ध्यारूढोपचरिता सत्ता शब्दप्रयोगाश्रयत्वादव्यभिचारेत्यर्थः । सैव तु बुद्धिसत्ता प्रयोक्तृप्रतिपत्तॄणां बहीरूपतयाऽवभासते । यदि तु वृक्षादीनां बाह्यसत्तासमाविष्टं वस्तु वाच्यं स्यात्तदा 'वृक्षः' इत्यतः सत्ताऽवगमादस्तीत्यस्य गतार्थत्वात् प्रयोगो न स्यात् । नास्तीत्यस्य च सत्ताविरोधात्प्रयोगाप्रसङ्गः । 'अङ्कुरो जायते इति च प्रयोगो न स्यात्, सतो जन्मविरोधात् । उपचारसत्तायां त्वेते दोषा नावतरन्ति, बुद्धिसत्तासमाविष्टस्य बहिःसत्त्वासत्त्वजननप्रतिपादनायास्ति नास्ति जायत इति प्रयोगयोगात् । **अन्ये तु** वर्णयन्ति—यत्र क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यत इत्येतदाश्रयणेन 'न सत्तां पदार्थो व्यभिचरति'इत्युक्तम् । तेषां 'सम्प्रति सत्तायां यथा स्यात्' इति परिहारग्रन्थो नोपपन्नः' । 'राजपुरुषः' इत्यादौ च सम्बन्धप्रतिपादनेऽस्तेराक्षेपाभावादनैकान्तिकमेतत् ॥

( उद्द्योतः ) ननु वर्तमानार्थशत्रन्तप्रकृतिकसत्तापदार्थो न भूतभविष्यतोरिति कथं पदार्थस्तां न व्यभिचरतीत्यत आह—**यावदिति** ॥ **सम्बध्यत इति** । 'बहिःसत्त्वासत्त्वादिप्रतिपादनाय' इति शेषः ॥

नन्वत्यन्तासत् शशविषाणादिः सत्तां व्यभिचरतीत्यत आह—**अत्यन्तेति** ॥ **उपचरितेति** । बाह्यसत्ताया एव मुख्यत्वादियं गौणीत्यर्थः, तयैव सर्वव्यवहारात् ॥ **शब्दप्रयोगाश्रयत्वात्**—तत्प्रयोगनिमित्तत्वात् ॥ ननु तस्या न शब्दजबोधविषयत्वं, तद्विशिष्टस्य नयनाद्यसम्भवादत आह—**सैव त्विति** । बहिःसत्तासत्त्वे तु तत्समानाधिकरणतया, असत्त्वे तु केवलायास्तस्या एव बहीरूपत्वेन भानम्, अत एव घटशून्यादपि गेहाद्घटमानयेत्युक्ते आनयने प्रवर्तते, पश्चात्तदभावनिर्णये वक्तृज्ञानस्य भ्रमत्वं कल्पयतीति भावः । अन्तःकरणस्य रागादिदोषवशेन तस्या एव तत्त्वेन भानमिति तात्पर्यम् ॥ बाह्यसत्ताया एव प्रयोगनियामकत्वे दोषमाह—**यदि त्विति** ॥ **सतो जन्मविरोधादिति** । 'सूक्ष्मरूपेण स्थितस्यैव स्थूलरूपापत्तिर्जन्म' इति मतेऽपि अङ्कुरशब्दोपात्तस्थूलरूपावच्छिन्नस्यासत एव जन्मेति भावः ॥ **उपचारसत्तायां त्विति** । उपचारसत्तायाः शब्दप्रयोगनिमित्तत्वाश्रयणे त्वित्यर्थः ॥ नन्वेवं बुद्धिसत्तायाः सर्वत्र भाने 'अस्ति' इत्यादिप्रयोगो न स्यादत आह—**बुद्धीति** । तया च बाह्यसत्ताऽभावस्य जननस्य चाविरोधादिति भावः ॥ **नोपपन्न इति** । अस्तिना सम्प्रति सत्ताया एव प्रतीतेरिति भावः ॥ दोषान्तरमप्याह—**राजपुरुष इत्यादौ चेति** ॥ **आक्षेपाभावादिति** । 'राजपदार्थे' इति शेषः ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—संप्रति सत्तायां यथा स्यात्, भूतभविष्यत्सत्तायां मा भूत् । 'गावोऽस्यासन्' 'गावोऽस्य भवितारः' इति ॥**

( प्रदीपः ) **सम्प्रति सत्तायामिति** । वर्तमानसत्तायां बाह्यायां सत्तायामित्यर्थः ॥ **भूतभविष्यत्सत्तायामिति** । भूतभविष्यतोर्या सत्ता अतीतानागतवस्तुपरामर्शिबुद्धितत्त्वोत्प्रेक्षितोपचरितरूपा तस्यां मा भूदित्यर्थः । या तु मुख्या सत्ता सा भूतभविष्यत्सत्तेति व्यपदेष्टुं न शक्यते । 'सत्' इत्यस्य लडन्तस्य वर्तमानकालविषयत्वाद् 'भूतभविष्यतोः सत्ता' इति सम्बन्धायोगात् । नापि 'भूता सत्ता' 'भविष्यन्ती सत्ता' इति सामानाधिकरण्येन सम्बन्धोपपत्तिः । अथाश्रयस्य भूतभविष्यत्वात् 'भूता सत्ता' 'भविष्यन्ती सत्ता' इत्युच्यते तथाप्यसौ वर्तमाना न भवतीति तत्र प्रत्ययाभावः । तेन 'गावोऽस्यासन्' 'गावोऽस्य भवितारः' इत्यत्रार्थे गोमानिति प्रयोगो न भवति ॥

( उद्द्योतः ) ननु बुद्धिसत्ता सर्वा व्यवहारकाले सम्प्रतिसत्तैवेत्यत आह—**बाह्यायामिति** । मुख्यायामित्यर्थः ॥ **वस्तुपरामर्शी**—वस्तुग्राहकम् ॥ **बुद्धितत्त्वम्**—अन्तःकरणम् । **तदु-**

१ बुद्ध्येति । बुद्ध्यारूढेषु=बौद्धपदार्थेषु उपचरिता—इत्यर्थः ।

२ 'बहिः सत्वादिप्रति' इति ग. पाठः ॥

त्प्रेक्षिता—तद्वृत्तिविषयीकृता ॥ ननु मुख्यायामेव वर्तमानायां यथा स्यात्, भूतभविष्यन्त्यां मा भूदित्येव भाष्यं कुतो न व्याख्यायतेऽत आह—**या त्विति** ॥ **सम्बन्धायोगादिति** । सत्तावर्त्तमानकालत्वस्याश्रयगतभूतत्वादिना विरोधात् । सत्तावर्तमानत्वस्याश्रयवर्तमानत्वनियतत्वात् । सामानाधिकरण्येनापि न सम्बन्धः, स्वगतवर्तमानत्वस्य स्वगतभूतत्वादिना विरोधादिति भावः ॥ अथ कर्मधारयं समर्थयते—**अथाश्रयस्येति** । सत्ताशब्दश्च केवलरूढ एव, न तु वर्तमानकालावच्छिन्नसत्ताप्रतिपादक एवेति भावः ॥ **तथाप्यसाविति** । तथापि न दोषो यतोऽसावित्यन्वयः । 'सम्प्रतिसत्तायाम्' इति भाष्यस्य—वर्तमानाश्रयकसत्तायामित्यर्थकरणादिति भावः ॥

( अनिष्टनिवारकभाष्यम् )

**न तर्हीदानीमिदं भवति—गोमानासीत्, गोमान् भवितेति ।**

**भवति, न त्वेतस्मिन् वाक्ये ।**

**यद्येतस्मिन् वाक्ये स्यात्—यथेहास्तेः प्रयोगो न भवति 'गोमान्' 'यवमान्' इति, एवमिहापि न स्यात्—गोमानासीत्, गोमान् भवितेति ।**

**सति चाप्यस्तेः प्रयोगे यथेह बहुवचनं श्रूयते—गावोऽस्यासन्, गावोस्य भवितार इति, एवमिहापि स्यात्—गोमानासीत्, गोमान् भवितेति ।**

**का तर्हीयं वाचोयुक्तिः-गोमानासीत् गोमान् भवितेति ।**

**एषैषा वाचो युक्तिः—नैषा गवां सत्ता कथ्यते ।**

**किं तर्हि ?**

**गोमतस्त्वैषा कथ्यते । अस्त्यत्र वर्तमानकालोऽस्तिः ।**

**कथं तर्हि भूतभविष्यत्सत्ता गम्यते ?**

**"धातुसम्बन्धे प्रत्ययाः" इति ॥**

**(प्रदीपः) न तर्हीति** । विद्यमान एव देवदत्ते तद्गवीनामतीतानागतत्वप्रतिपादनाय 'गोमानासीत्' 'गोमान् भविता' इति प्रयुज्यते । तत्र प्रकृत्यर्थस्य सम्प्रति सत्ताया अभावात् प्रत्ययाप्रसङ्गः । गुणधर्मस्य च प्रधान आरोपादासीद्भवितेति प्रत्ययार्थस्यातीतानागतव्यपदेश इति चोदको मन्यते ॥ **भवतीति** । अवस्थातुर्विद्यमानत्वेऽप्यवस्थाविशेषस्य भूतभविष्यत्वादासीद्भवितेति व्यपदेशः, यथा—'ईश्वरोऽयमासीत्' इति सिद्धान्तवादिनोऽभिप्रायः ॥ **न त्वेतस्मिन् वाक्य इति** । 'गावोऽस्यासन्' गावोऽस्य भवितारः' इत्यत्रार्थे 'गोमान्' इति न प्रयुज्यते इत्यर्थः ॥ **यथेति** । प्रत्ययान्तेनैव प्रकृत्यर्थोपाधेः प्रतीतत्वात्तदुपाधिवाचिनः प्रयोगाभावः, यथा—दाण्डा क्रीडेति प्रहरणशब्दस्येति भावः ॥

**सति चेति** । सामान्याभिधाने विशेषावगमाय दृश्यते प्रयोगः । यथा—उत्पुच्छयते इत्यादावसनविशेषप्रतिपादनाय व्युत्परीणाम्, अभिमनायत इत्यादौ च प्रत्ययार्थभवनविशेषावगमाय सुष्ठुरभीनामिति भावः ॥ **एवमिहापीति** । प्रकृत्यर्थसत्ताकालविशेषावधारणाय वाक्यवत् बहुवचनान्तस्यास्तेः प्रयोगप्रसङ्गः ॥

**का तर्हीति** । गोमतो वर्तमानत्वादासीद्भवितेति प्रयोगानुपपत्तिरिति मत्वा **प्रश्नः** ॥ **एषैषेति** । या एषा शिष्टैः प्रयुक्ता सैषैव वाचोयुक्तिः, यथाऽस्माभिर्व्याख्यायते न त्वन्यथेत्यर्थः ॥ **नैषेति** । साक्षादित्यर्थः ॥ **गोमतस्त्वेति** । अतीतानागता वेति शेषः । अवस्थाविशेषस्यातीतानागतत्वादवस्थातुरतीतानागतत्वमिति प्रागेवोक्तम् ॥ **अस्त्यत्रेति**—चोदकः । गोमानित्यादौ वर्तमानसत्तायुक्तः प्रकृत्यर्थः प्रतीयत एव, अस्तिर्भवन्तीपर इत्यन्तरङ्गत्वात्सत्तायाः । तथा च प्रत्ययान्तादेव शब्दशक्तिस्वाभाव्यात् प्रकृत्यर्थसत्तावगमात् सत्तावाचिपदाप्रयोगः । तस्मादङ्गीकृतसत्तः प्रकृत्यर्थः प्रत्ययार्थमवच्छिनत्तीति न कर्तव्यमस्तिग्रहणम् । चोदक एव **'कथं तर्हि'** इत्याशङ्क्य **'धातुसम्बन्धे'** इति परिहरति । तत्रारम्भपक्षे प्रत्ययाधिकारे प्रत्ययग्रहणस्येदं प्रयोजनम्—'अधात्वधिकारविहितानामपि तद्धितानां कालान्तरे धातुसम्बन्धे साधुत्वं यथा स्यात्' इति । यदा तु तत्सूत्रं प्रत्याख्यायते तदा हि स्वकाल एव प्रत्यया विधीयन्ते । तत्र 'अग्निष्टोमयाज्यस्य पुत्रो जनिता' इति विरुद्धकालक्रियासम्बन्धादग्निष्टोमयाजित्वस्यैव वाक्यार्थवशाद्भावित्वं गम्यते, तथेहापि 'गोमानासीद् गोमान् भविता' इति विरुद्धकालक्रियासंबन्धाद् गोमत्सत्तालक्षणावस्थाविशेषविषयातीतानागतत्वप्रतीतिरवस्थातुः सत्वे, असत्वे च । तत्र प्रकृत्यर्थस्य वर्तमानसत्ताभावप्रतीतावपि शब्दसंस्कारस्यान्तरङ्गस्यानिवृत्तिः, यथा—ग्रामान्नागच्छतीति ॥

**( उद्द्योतः )** ननु 'गोमानासीत्'इत्यादौ सम्बन्धिनोऽतीतादिसत्ता प्रतिपाद्यते, न गवामिति नायं दोषोऽत आह—**विद्यमान एवेति** ॥ ननु गवां सत्ताया एवातीतत्वादिप्रतिपादने 'आसन्' इत्यादि बहुवचनं स्याद्गावोऽस्यासन्नितिवदत आह—**गुणधर्मस्य चेति** । विशेषणगोगतातीतत्वस्येत्यर्थः । **प्रधाने**—गोमति । 'आसीद्भवितेतिशब्दाभ्याम्' इति शेषः ॥ **प्रत्ययार्थस्य**—मतुप्प्रत्ययार्थगोसम्बन्धिकर्तृकसत्ताया इत्यर्थः ॥

ननु गोमतो विद्यमानत्वेन कथं भूतादिप्रयोगोऽत आह—**अवस्थातुरिति** ॥ **अवस्थाविशेषस्य**—बाह्यसत्ताविशिष्टगोसम्बन्धस्य ॥ **यथेति** । यथा च विशेष्यस्य विद्यमानत्वेऽपि शिखासम्बन्धरूपविशेषणनाशाद्विशिष्टनाशमादाय 'शिखी नष्टः' इत्यादिव्यवहारः, तद्वदेव चार्थाद्विशिष्टवेषेण मत्वन्तार्थस्य सम्बन्धिनोऽतीतत्वादिप्रतीतिरिति बोध्यम् ॥

ननु मतुपः सम्बन्धिमात्रार्थकत्वेन तत्राप्यस्तेः प्रयोगः कुतो नेत्यत आह—**प्रत्ययान्तेनैवेति** । प्रत्ययान्तप्रकृत्येत्यर्थः ॥ ननूक्तत्वादप्रयोग एव न्याय्योऽत आह—**विशेषावगमायेति** । सत्तागतातीतत्वाद्यवगमायेत्यर्थः । प्रत्ययेन हि प्रकृत्यर्थोपाधितया सत्तामात्रावगतेरिति भावः ॥ **असनविशेषेति** । व्यसनोदसनपर्यसनरूपेत्यर्थः ॥ **प्रत्ययार्थभवने इति** । 'मनस्वी सुष्ठु भवति'इत्याद्यर्थ-

प्रतीतिरित्यभिमानः । भाष्ये-का-किमर्थिका, वाचोयुक्तिः,-वाचः-शब्दस्य युक्तिः-प्रयोग इत्यर्थः । अलुक्समासः ॥ नन्वर्थतोऽतीतगोसत्ताया अपि प्रतीतेः 'नैषा' इत्यनुपपन्नमत आह-साक्षादिति ॥ अवस्थाविशेषस्येति । उक्त एवार्थः । तस्माद्वाह्यसत्तायामेव-यथा स्यादित्यर्थं 'अस्ति'इत्युक्ते तत्प्रत्याख्यानाय चोदक आह-भाष्ये-अस्त्यत्रेति ॥ तद्व्याचष्टे—गोमानित्यादाविति ॥ प्रतीयत एवेति । सूत्रे 'अस्ति' इति पदं विनाऽपि शब्दशक्तिस्वभावादित्यर्थः । यथा सुजर्थे बहुव्रीहिरित्यनुक्तावपि 'द्विदशाः' इत्यादौ सुजर्थे बहुव्रीहिरिति भावः ॥

तत्र हेतुमाह—अस्तिर्भवन्तीति । अन्यनिवृत्तिपरवाक्येऽपि प्रथमायाः साधुत्वाय तत्सम्बन्ध आवश्यक इति भावः । असति बाधके ज्ञानसामान्यसामर्थ्येव वर्तमानसत्ताभासिकेति तात्पर्यम् ॥ सत्ताया इति । वर्तमानसत्ताया इत्यर्थः ॥ इत्याशङ्क्येति । 'गोमानासीत्' इत्यादौ वर्तमानसत्ताया अतीतत्वादिना विरोधाद्गोसत्ताऽतीतत्वस्याप्यर्थतस्ततः प्रतिपत्तेरिति भावः ॥ ननु 'धातुसम्बन्धे' इत्यत्र धात्वधिकारात्कथं मतुपूनियामकताऽस्येत्यत आह—तत्रेति ॥ विरुद्धकालक्रियासम्बन्धादिति । धर्मिणि विशेषणगतकालविरुद्धकालक्रियासम्बन्धाद्यथा तद्धर्मे यागे भावित्वप्रतीतिः, अतीततद्यागकर्तरि[1] भावित्वान्वयबाधेन तद्वाक्यार्थानुपपत्तिवशादित्यर्थः ॥ तथेहापीति । अतीते सम्बन्धिनि विद्यमानगोसम्बन्धस्य वक्तुमशक्यत्वाद्गोसत्तायामप्यतीतत्वप्रतीतिरित्यर्थः । अयं भावः—वाक्यार्थानुपपत्तिवशाद्विशेषणगतकालस्य शाब्दबोधेऽभानमिति । यदाऽपि गोमति विद्यमाने 'गोमानासीत्' इति प्रयोगस्तदापि विशिष्टावस्थाविशिष्टस्यैव[2] गोसम्बन्धित्वादवस्थानाशेऽपि तत्र विद्यमानगोसम्बन्धो वक्तुमशक्य इति तदतीतत्वप्रतीतौ न बाधकम् ॥ ननु गोमति गोषु च विद्यमानासु तत्सम्बन्धातीतत्वेऽपि 'गोमानासीत्' इति प्रयोगो दृश्यते इति कथं तत्र तदतीतत्वप्रतीतिरत आह—गोमत्सत्तालक्षणेति । गोमत्सम्बन्धलक्षणस्य गोनिष्ठस्यावस्थाविशेषस्यातीतत्वेन तत्रापि गवामतीतत्वादिप्रतीतिर्गोमत इव ॥ अवस्थातुरिति । गवादेरित्यर्थः । असत्त्वे तु स्फुटैव तत्रातीतत्वप्रतीतिरिति बोध्यम् ॥ नन्वेवं सत्ताया वर्तमानत्वप्रतीतिनिवृत्तौ तन्निबन्धनमतुपोऽपि निवृत्तिः स्यादत आह—प्रकृत्यर्थस्येति ॥ अन्तरङ्गस्येति । 'अस्ति'इत्यस्य प्रत्याख्यानेऽपि शब्दशक्तिस्वभावबलात्तस्य तत्संस्कारनिमित्तत्वं बोध्यम् ॥

( प्रयोजनभाष्यम् )

**इदं तर्हि प्रयोजनम्—अस्तियुक्ताद्यथा स्यात्, अनन्तरादियुक्तान्मा भूदिति । गावोऽस्यानन्तराः, गावोऽस्य समीप इति ॥**

( प्रदीपः ) अस्तियुक्तादिति । अस्तिनैव युक्तादित्यर्थः । पूर्वोक्तेन न्यायेनास्त्युपाधिकत्वे लब्धे पुनरस्तिग्रहणं विशेषणान्तरयुक्तप्रकृत्यर्थनिराकरणार्थम् ॥ गावोऽस्येति । अनन्तरम्-अव्यवहितं, समीपं तु व्यवहितमपीति भावः ॥

( उद्योतः ) अस्तिनैवेति । 'अस्तिना युक्तादेव' इति वक्तुमुचितम्, 'अथ क्रियमाणेऽपि' इत्युत्तरभाष्यस्वरसात् ॥

( आक्षेपभाष्यम् )

**अथ क्रियमाणेऽप्यस्तिग्रहण इह कस्मान्न भवति—गावोऽस्य सन्त्यनन्तराः, गावोऽस्य सन्ति समीप इति ?**

(प्रदीपः) गावोऽस्य सन्त्यनन्तरा इति । केवलानामनन्तरादीनां भवत्वस्तिग्रहणान्निरासः । इह तु सत्तासद्भावात् प्राप्नोत्येव प्रत्यय इति भावः ॥

( उद्योतः ) नन्वत्रास्तिनैव न योगोऽतः कथं प्राप्तिः? अत आह—केवलानामिति । 'अस्तियुक्तादेव'इति नियम इति भावः । ननु 'गावः' इत्यस्य सत्तारूपविशेष्यान्वये यथा मतुपः साधुत्वं तथाऽनन्तरान्वयेऽपि भविष्यतीत्यत आह—इहेति । 'इह तु' इति पाठे तुशब्दार्थश्चिन्त्यः ॥ प्रकृत्यर्थोपाधिरिति । ननु तस्य षष्ठ्यर्थत्वात्प्रत्ययार्थत्वं वक्तुं युक्तं न तु प्रकृत्यर्थोपाधित्वमिति चेन्न; आनन्तर्यादीनामनन्तरादिपदप्रयोगाभावे षष्ठ्यर्थत्वाभावात्, न ह्यनन्तरादिप्रयोगमन्तरा 'ब्राह्मणस्य कम्बलः' इत्यादौ सत्यपि प्रकरणादौ आनन्तर्यप्रतीतिरस्ति । 'अस्तेरनन्तरे समीपे वा' इत्यादिभाष्यं तु अनन्तरादिपदाध्याहारेण तन्निरूपितसम्बन्धार्थिका षष्ठीत्येतत्परम् । अत एवासामर्थ्याद्वृत्तिर्नेति भाष्यं सङ्गच्छते । यत्र तु प्रकरणादिना वाक्यैकदेशन्यायेनानन्तर्यादिप्रतीतिः, तत्रापि 'गावः' इति सुबुत्पत्तिर्गोशब्दात्स्वार्थपरादेवेति न समर्थप्रकृतिकता सुबन्तस्येति न मतुबिति ध्वनितं 'कर्मणि च' इति सूत्रे भाष्य इति बोध्यम् । एवञ्च 'अनन्तराः' इत्यनेन सविशेषणत्वादत्र न वृत्तिरिति भावः ॥

( समाधानभाष्यम् )

**असामर्थ्यात् ।**

**कथमसामर्थ्यम् ?**

**सापेक्षमसमर्थं भवतीति ॥**

( प्रदीपः ) असामर्थ्यादिति । इह यः प्रकृत्यर्थोपाधिः प्रत्ययान्तेनान्तर्भावयितुं शक्यस्तदुपाधेरेव प्रत्ययेन भाव्यम् । न च गोमानित्येतत्प्रकृत्यर्थस्यानन्तर्यं गमयितुं शक्नोतीति तदभिधानाय वाक्यमेव प्रयुज्यते । स्वस्वामिभावस्तु सत्तयैवान्तर्भावित इति तत्प्रतीतिर्भवत्येव ॥

( प्रत्याक्षेपभाष्यम् )

**यथैव तर्हि क्रियमाणेऽस्तिग्रहणेऽसामर्थ्यादनन्तरादिषु न भवति, एवमक्रियमाणेऽपि न भविष्यति ॥**

( प्रदीपः ) क्रियमाण इति । प्रकृत्यर्थविषयपदापेक्षं तृतीयत्वम्-गावः सन्त्यनन्तरा अस्येति । तत्रास्तिग्रहणे क्रिय-

---

[1] अतीततद्यागकर्तरीति । भूतकालयागसम्बन्धिनि पुत्रे भूतकालविरुद्धभविष्यत्कालक्रियासम्बन्धानुपपत्तिवशात्, पुत्रविशेषणे यागक्रियायां भावित्वप्रतीतिः, अतीतयागकर्तरि भावित्वबाधात् वाक्यार्थानुपपत्तिवशात्-इत्यर्थः ॥

[2] विशिष्टावस्था-गोमत्त्वावस्था ॥

माणे केवल एवास्त्यर्थं उपाधिभावेन प्रत्ययान्तेऽन्तर्भवति । असति तु अस्तिग्रहणे धर्मान्तरावच्छिन्नस्याप्यस्त्यर्थस्यान्तर्भाव आशङ्क्येतेत्यर्थः । तत्र क्रियमाणेऽस्तिग्रहणेऽस्त्यर्थस्यैवान्तर्भावावगमाद्वाक्ये यत् तृतीयं पदम्—'अनन्तराः' इति तद्वृत्तौ स्वार्थप्रतिपादनायावश्यं प्रयोक्तव्यम् । तत्प्रयोगे चासामर्थ्यम् । अक्रियमाणे त्वस्तिग्रहणेऽनेकस्याप्युपाधेरन्तर्भावसम्भावनया वृत्तावनन्तरपदप्रयोगमन्तरेणाप्यानन्तर्यावगमादसामर्थ्यं न स्यादित्यर्थः ॥

( उद्द्योतः ) ननूक्तोदाहरणे 'अनन्तराः' इत्यस्य चतुर्थत्वात्तृतीयस्येत्ययुक्तमत आह—**प्रकृत्यर्थविषयेति** ॥ **केवल एवेति** । अस्तिनैव युक्तादित्यर्थादिति भावः ॥ **असति त्विति** । तदा हि सूत्रानुपात्तास्त्यर्थान्तर्भावेण यथा वृत्तिस्तथाऽन्यान्तर्भावेणापि स्यादित्यर्थः ॥ भाष्ये—**अक्रियमाणे पुनरिति** वाक्यस्य 'गम्यन्ते' इत्यस्य गम्येरन्नित्यर्थः । तदाह—**असामर्थ्यं न स्यादिति** । 'अस्तिनैव युक्तात्' इत्यनेन अस्तिसहितेतरयुक्तः, केवलेतरयुक्तश्च वारित इति बोध्यम् ॥

**( प्रत्याक्षेपनिरासभाष्यम् )**

**अस्त्यत्र विशेषः । क्रियमाणेऽस्तिग्रहणे नान्तरेण तृतीयस्य पदस्य प्रयोगमनन्तरादयोऽर्था गम्यन्ते । अक्रियमाणे पुनरस्तिग्रहणे अन्तरेणापि तृतीयस्य पदस्य प्रयोगमनन्तरादयोऽर्था गम्यन्ते ॥**

**( मतुप्प्रत्ययातिव्याप्तिनिवारकभाष्यम् )**

**अथेह कस्मान्न भवति—चित्रगुः शबलगुरिति ?**

**बहुव्रीहिणोक्तत्वान्मत्वर्थस्य[2] ॥**

( प्रदीपः ) **चित्रगुरिति** । सत्ताविशिष्टचित्रगवार्थः षष्ठ्यर्थश्चास्तीति **प्रश्नः** ॥ **बहुव्रीहिणेति** । षष्ठ्यर्थ एव बहुव्रीहिविधानादित्यर्थः ॥

( उद्द्योतः ) तस्मान्नियमायास्तिग्रहणमित्युक्ते पूर्वपक्षी चोद्यान्तरे आवश्यकेन परिहारेणास्यापि परिहारादेतदर्थं तन्नावश्यकमिति वक्तुं चोदयति—भाष्ये—**अथेह कस्मादिति** ॥

**( प्रत्ययातिव्याप्तिनिवारकभाष्यम् )**

**अथेह कस्मान्न भवति—चित्रा गावो यस्य सन्तीति ?**

**कुतः कस्मान्न भवति ? किमवयवात्, आहोस्वित्समुदायात् ?**

**अवयवात्कस्मान्न भवति ?**

**असामर्थ्यात् ।**

**कथमसामर्थ्यम् ?**

**सापेक्षमसमर्थं भवतीति ॥**

**समुदायात्तर्हि कस्मान्न भवति ?**

**अप्रातिपदिकत्वात् ।**

**ननु च भो आकृतौ शास्त्राणि प्रवर्तन्ते । तद्यथा—सुप्सुपेति वर्तमाने अन्यस्य चान्यस्य च समासो भवति ।**

**सत्यमेवमेतत् । आकृतिस्तु प्रत्येकं परिसमाप्यते । यावत्येतत्परिसमाप्यते ङ्याप्प्रातिपदिकादिति तावत उत्पत्त्या भवितव्यम् । अवयवे चैतत्परिसमाप्यते न समुदाये ॥**

( प्रदीपः ) **कुतः कस्मादिति** । समुदायावयवसन्निधानात्प्रश्नः ॥ **सापेक्षमिति** । चित्रा इति गुणपदं विशेष्यापेक्षं द्रव्यद्वारेणैव चित्रार्थस्य देवदत्तादिना सम्बन्धाद् गाव इत्येतदपि गुणापेक्षमित्येकार्थीभावं प्रतिपत्तुं न शक्नोति । तस्माद्वृत्तौ चित्रादिगुणानपेक्षप्रकृत्यर्थोपसर्जनप्रत्ययार्थावगमात्तत्समानार्थमेव वाक्यं प्रदर्शयितव्यं—गावोऽस्य सन्तीति ॥

**अप्रातिपदिकत्वादिति** । यदा—'सुबन्तात्प्रत्ययोत्पत्तिः, 'समर्थात् प्रत्ययः, प्रातिपदिकात्तु परः श्रूयते' इत्येवमाश्रयणं तदा सुबन्तसमुदायस्य समासग्रहणान्नियमार्थादप्रातिपदिकत्वम् । सुबन्तत्वमपि नास्ति, समुदायात्सुपोऽविधानात् । प्रातिपदिकसमुदायस्याप्यर्थान्तरोपजनाभावादेका प्रातिपदिकसंज्ञा नास्तीत्यप्रातिपदिकत्वम् । विशेषणविशेष्यभावस्य हि पदावस्थायां प्रादुर्भावः, न प्रातिपदिकावस्थायाम् ॥

**आकृताविति** । जातौ कार्यमुच्यमानमनपेक्षितव्यक्तिगतसंख्याविशेषं सर्वतः प्रवर्तते, यथा—ब्राह्मणो न हन्तव्य इति । ततश्च प्रातिपदिकसमुदायादपि प्रत्ययोत्पत्तिप्रसङ्गः ॥ **अन्यस्यान्यस्य चेति** । अनेन जात्याश्रयत्वं कार्याणां समर्थ्यते । यदि हि व्यक्तिः पदार्थः, तदा कस्यचिदेवैकस्य सुबन्तस्य समासः प्रसज्येत, न तु सर्वस्येत्यर्थः ॥ **प्रत्येकमिति** । आश्रयगतैकत्वसंख्याविशिष्टा जातिः कार्य आश्रीयते, यथा—पशुना यजेतेति भावः । ङ्याप्प्रातिपदिकादित्यत्रैकवचनान्तानां समाहारनिर्देशाद् गुणे संख्याया विवक्षितत्वादेकैकस्मात्प्रातिपदिकात्प्रत्ययोत्पत्तिः, न तु तत्समुदायादित्यर्थः ॥

**(उद्द्योतः)** यद्यपि 'चित्रा गावो यस्य सन्ति' इत्यत्रानवकाशेन बहुव्रीहिणा बाधोऽपि वक्तुं शक्यस्तथापि तदप्राप्तिमेव दर्शयितुमाह—**कुत इत्यादि** ॥ उभयोरप्यवयवयोर्यथा सापेक्षत्वं तथा दर्शयति—**चित्रा इतीति** ॥ **एकार्थीभावमिति** । 'मत्वर्थेन' इति शेषः ॥ ननु प्रातिपदिकप्रकृतिकसुबन्तात्प्रत्यय इति 'अप्रातिपदिकत्वात्' इत्ययुक्तम्, 'असुबन्तत्वात्' इति वक्तुं युक्तमत आह—**यदेति** ॥ उक्तार्थेऽप्यदोष इत्याह—**सुबन्तत्वमपीति** ॥ नन्वेवमपि प्रातिपदिकसमुदायादेकसुपि स्यादेव दोष इत्यत आह—**प्रातिपदिकसमुदायस्यापीति** । एवञ्च न ततः सुबिति भावः ॥ ननु विशेषणविशेष्यभावरूपसम्बन्ध एवाधिकोऽर्थ उपजायतेऽत आह—**विशेषणविशेष्यभावस्येति** ॥ **प्रातिपदिकसमुदायादपीति** । सुबन्तसमुदायादपीत्यपि बोध्यम् ॥

---

१ च. झ. पुस्तकयोः 'भवति नत्वानन्तर्यादिविशिष्ट इति प्रतीतिर्भवति । असति' इत्येवं पाठो दृश्यते ॥

२ 'मतुप्प्रत्ययार्थस्य' इति च. पाठः ॥

ननु जातेः प्रत्येकं समाप्तत्वेऽपि एकत्वस्याविवक्षणेन तत्समुदायात्स्यादेवेत्यत आह—आश्रयगतैकत्वेति ॥ ननु 'ङ्याप्प्रातिपदिकात्'इत्यस्य समाहारे एकवचनस्य सत्त्वात्कथं तद्विवक्षया निर्वाहोऽत आह—ङ्याबिति । अत्र यद्वक्तव्यं तत्समर्थसूत्र उक्तम् ॥

( प्रत्ययातिव्याप्तिनिवारकभाष्यम् )

**अथेह कस्मान्न भवति-पञ्च गावः सन्त्यस्य-पञ्चगुर्दशगुरिति ?**

**प्रत्येकमसामर्थ्यात्, समुदायात्-अप्रातिपदिकत्वात्, समासात्-समासेनोक्तत्वात् ॥**

( आक्षेपभाष्यम् )

**नैतत्सारम् । उक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितः । तद्यथा-द्वैमातुरः, पाञ्चनापितिरिति ॥**

(प्रदीपः) **उक्तेऽपीति** । द्विगोर्लुगविधानात् 'तद्धितार्थ-' इत्यत्र स्यादर्थस्यार्थशब्दस्य ग्रहणाद्वा तद्धितार्थाद् द्विगोस्तद्धितो भवति । पञ्चगुशब्दं च द्विगुं मन्यते न बहुव्रीहिम् ॥

( उद्द्योतः ) उक्तेऽप्युत्पत्तौ बीजमाह—**द्विगोरिति** ॥ **स्यादर्थस्येति** । 'तद्धितः स्यात्' इति समासः कार्य इति तत्सूत्रार्थ इति भावः । अत्र पक्षे तद्धितार्थस्य द्विगुनाऽभिधाने मानं चिन्त्यम् । तस्मादाद्यमेव[1] युक्तम् ॥ **मन्यत इति** । समासान्तस्तु अनित्यत्वान्नेति तदाशयः । 'द्विगोर्लुक्' इति तु मतोर्न लुक्, अप्राग्दीव्यतीयत्वादिति बोध्यम् । वस्तुतो न द्विगुरत्र, 'मत्वर्थे प्रतिषेधः' इति वचनादिति भावः ॥ अत्र प्रत्येकमित्यादि सिद्धान्तिनोक्ते पूर्वपक्ष्याह—**नैतत्सारमित्यादि** ॥ ततः सिद्धान्त्याह—**नैष द्विगुरित्यादि** ॥ पूर्वपक्ष्याह—**अपवादत्वादित्यादि** । तमवकाशमसौ नाज्ञासीत् । 'पञ्चसु कपालेषु संस्कृतः पुरोडाशः' इत्यादौ द्विगोः सावकाशत्वात्परत्वेन बहुव्रीहिरित्याशयः ॥

( समाधानभाष्यम् )

**नैष द्विगुः ।**

**कस्तर्हि ?**

**बहुव्रीहिः ।**

**अपवादत्वाद् द्विगुः प्राप्नोति ।**

**अन्तरङ्गत्वाद्बहुव्रीहिर्भविष्यति ।**

**काऽन्तरङ्गता ?**

**अन्यपदार्थे बहुव्रीहिर्वर्तते, विशिष्टेऽन्यपदार्थे तद्धितार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियते ॥**

( प्रदीपः ) **अपवादत्वादिति** । अन्यपदार्थमात्रे[2] सुबन्तमात्रस्य विधीयमानस्य बहुव्रीहेः संख्यायास्तद्धितार्थे 'पञ्चगुः' इत्यादौ विधीयमानो द्विगुर्विशेषविषयत्वाद्बाधकः प्राप्नोतीत्यर्थः ॥

**अन्तरङ्गत्वादिति** । ननु चानवकाशेनान्तरङ्गमपि बाध्यते । नैष दोषः । यत्रैकनिमित्ता द्विगुबहुव्रीहिप्राप्तिस्तत्र द्विगुना बहुव्रीहिर्बाध्यताम् । इह तु द्विगुरस्त्यर्थमधिकमपेक्षते । तदाह—**तस्मिंश्चास्येति** । तेन विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽवश्यापेक्षो द्विगुना, षष्ठ्यर्थमात्रापेक्षस्तु बहुव्रीहिः ॥

( उद्द्योतः ) ननु द्विगोरप्यन्यै[3]तद्धितार्थे सावकाशत्वात्कथमपवादत्वमत आह—**अन्यपदार्थमात्र इति** ॥ (भाष्ये) सिद्धान्त्येकदेश्याह—**अन्तरङ्गत्वादित्यादि-अस्तिग्रहणं क्रियत** इत्यन्तम् । तत्र शङ्कते—**ननु चेति** ॥ **नैष दोष इति** । अपवादोऽपि यद्यन्यत्र चारितार्थस्तर्ह्यन्तरङ्गेण बाध्यत एवेति भावः । 'पञ्चसु कपालेषु संस्कृतः पञ्चकपाल इत्यादौ तद्धितार्थद्विगुः सावकाशः' इति वक्तुं युक्तम् । पूर्वपक्षिणस्तु[4] मतुब्विषयवाक्यविहितो द्विगुरपवाद इत्यभिमानः । पृथक्तद्विषयवाक्यकल्पनैव न-इत्युत्तराशयः । कैयटस्तु चिन्त्यः, एकनिमित्ताया द्विगुबहुव्रीहिप्राप्तेरसम्भवात् ॥ भाष्ये—**तस्मिंश्चास्य तद्धित इति** । अस्य द्विगोरर्थद्वारा निमित्तभूते तद्धित इत्यर्थः । एवञ्च 'पञ्चगुः' इत्यादिर्न द्विगुः, किन्तु बहुव्रीहिरेवेति न ततो मतुबिति बोध्यम् । नैषा सिद्धान्त्युक्तिः, तावताऽप्यपवादत्वाहानेः । अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात् । यत्तु 'सामान्यापेक्षं विशेषापेक्षादन्तरङ्गम्' इति-एतद्भाष्येण सूचितमिति, तन्न । अधिकापेक्षत्वेन बहिरङ्गत्व एवैतद्भाष्यतात्पर्यात् । अत एव 'सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षो द्विगुः' इति भाष्ये नोक्तम् । तस्मादुक्तस्थले द्विगोः सावकाशत्वेन परत्वादत्र बहुव्रीहिरेवेति सिद्धान्तितात्पर्यम् ॥

( प्रत्याक्षेपभाष्यम् )

**यदि तर्हि अतिप्रसङ्गाः[5] सन्तीति तद्धितविधावस्तिग्रहणं क्रियते, बहुव्रीहावप्यस्तिग्रहणं कर्तव्यमस्तियुक्ताद्यथा स्यादनन्तरादियुक्तान्मा भूदिति ।**

**अथ न[6] सन्ति, तद्धितविधावपि नार्थोऽस्तिग्रहणेन ॥**

( प्रदीपः ) **यदि तर्हीति** । यदि वचनमन्तरेणानन्तरादीनां निवृत्तिर्नास्तीत्यर्थः ॥ **अथ न सन्तीति** । अनभिधानादेवानिष्टाप्रसङ्गादिति भावः ॥

( उद्द्योतः ) **अथ न सन्तीति** भाष्यस्य—'बहुव्रीहावतिप्रसङ्गाः' इति शेषः ॥ तत्र हेतुमाह—**अनभिधानादेवेति** ॥

( प्रत्याक्षेपसमाधानभाष्यम् )

**सत्यमेवमेतत् । क्रियते त्विदानीं तद्धितविधावस्तिग्रहणम् । तद्धै क्रियमाणमपि प्रत्ययविध्यर्थं, नोपाध्यर्थम् । अस्तिमानिति मतुब् यथा स्यात् ।**

१ आद्यमेवेति । 'द्विगोर्लुगविधानात्' इत्येव युक्तमित्यर्थः ॥

२ द्विगुबहुव्रीह्योः सामान्यविशेषभावमुपपादयति—अन्यपदार्थमात्रे—इत्यादिना । अन्यपदार्थसामान्ये बहुव्रीहिः, संख्यायास्तद्धितार्थरूपविशेषे द्विगुरिति तयोः सामान्यविशेषभावः । तथा च द्विगोरपवादत्वमित्याशयः । निरवकाशत्वादपवादत्वं न, किन्तु विशेषविहितत्वादिति पूर्वपक्षी ॥

३ अन्यतद्धितार्थे-संस्कृतः पुरोडाश इत्यर्थे ॥

४ पूर्वपक्षिणस्त्विति । अपवादत्वाद्द्विगुः प्राप्नोतीति वादिनः ॥

५ 'अतिप्रसङ्गाः सन्ति बहुव्रीहाव-' इति छ. पाठः ॥

६ 'अथ बहुव्रीहौ दोषा न सन्ति तद्धित' इति च. पाठः ॥

**किं च कारणं न स्यात् ?**

**अप्रातिपदिकत्वात् ।**

**नैष दोषः । अव्ययमेषोऽस्तिशब्दः, नैषोऽस्तेर्लट्[1] ।**

**कथमव्ययत्वम् ?**

**विभक्तिस्वरप्रतिरूपकाश्च निपाता भवन्तीति निपातसंज्ञा, निपातोऽव्ययमित्यव्ययसंज्ञा ।**

**एवमपि न सिध्यति ।**

**किं कारणम् ?**

**अस्तिना सामानाधिकरण्ये मतुब् विधीयते, न चास्तेरस्तिना सामानाधिकरण्यम् ॥**

**तदेतत् क्रियमाणमपि प्रत्ययविध्यर्थं नोपाध्यर्थम् । तस्माद् द्विगोस्तद्धितस्य प्रतिषेधो वक्तव्यः, यदि तत्रास्ति 'सर्वत्र मत्वर्थे प्रतिषेधः' इति । सति हि तस्मिंस्तेनैतत्सिद्धम्[2] ॥**

( प्रदीपः ) **प्रत्ययविध्यर्थमिति** । 'अस्ति' इति लुप्तपञ्चमीकः प्रकृतिनिर्देश इति भावः ॥ **अव्ययमिति** । कर्तृविशिष्टसत्तावाचीति भावः । तथा च 'अस्तित्वम्' इति भावप्रत्ययप्रयोगोपपत्तिः ॥ **न चास्तेरिति** । गवादीनां सम्भवव्यभिचाराभ्यामस्तीति सामानाधिकरण्यं सम्भवति, अस्तेस्त्वव्यभिचारादस्तिसामानाधिकरण्याभावः । तत्रास्तिमानिति वृत्तिविषयेऽस्तिक्रियायाः कर्तृविशेषे धनेऽस्तिशब्दो वर्तते, कर्तृसामान्येन प्रत्ययार्थस्य विशेषणायोगात् ॥ **तस्माद् द्विगोरिति** । उपाध्यनुपादानेऽपि शब्दशक्तिस्वाभाव्यान्मतुपो बहुव्रीहेश्चास्त्युपाधिकार्थविषयत्वाद् द्विगुबहुव्रीह्योस्तुल्याश्रयत्वादन्तरङ्गबहिरङ्गभावाभावाद्विशेषविहितेन द्विगुना बहुव्रीहेर्बाधनाद् द्विगोर्मतुबादेस्तद्धितस्य प्रतिषेधो वक्तव्यः ॥ **तेनैतत्सिद्धमिति** । द्विगौ प्रतिषिद्धे बहुव्रीहेर्भावात् द्विगुप्रतिषेध एव युक्तः । पञ्चखट्व इत्यादौ 'बहुव्रीहौ प्रकृत्या–'इति पूर्वपदप्रकृतिस्वरो भवति । द्विगौ तु समासान्तोदात्तत्वप्रसङ्गः ॥

**(उद्द्योतः)** भाष्ये—**सत्यमेवमेतदिति** । कृते उपायेऽनभिधानाश्रयणमयुक्तमिति भावः ॥ किञ्चान्यार्थं तदित्याह—**तद्धे इति** ॥ **कर्तृविशिष्टेति** । कर्तृसहितेत्यर्थः । सत्ताऽऽश्रयकर्तृवाचीति तात्पर्यम् ॥ नन्वेवम् 'अस्ति–भवति' इत्यस्यापि सम्भवात्कुतो नास्तेरस्तिसामानाधिकरण्यमत आह—**गवादीनामिति** । 'अस्ति' इत्यतः सत्तावत एव प्रतीतेस्तत्सत्ताप्रतिपादनं विफलमिति भावः ॥ **अस्तिशब्द इति** । विशेष्यविशेषणभावव्यत्यासादिति भावः ॥ **कर्तृसामान्येन**—सत्ताकर्तृसामान्येन ॥ **प्रत्ययार्थस्य**—मत्वर्थसम्बन्धिनः ॥ **विशेषणायोगादिति** । अव्यभिचारादिति भावः ॥ **तुल्याश्रयत्वादिति** । उभयोरप्यस्त्युपाधिकत्वस्यावश्यकत्वात्, सूत्रेऽनुपादानाच्चेति भावः ॥ **विशेषविहितेनेति** । तदप्राप्तिविषये तद्धितार्थद्विगोश्चारितार्थ्याभावादित्यभिमानः । यदि तु 'पञ्चकपालः' इत्यादौ द्विगोश्चारितार्थ्यं, तदोक्तरीत्याऽपवादत्वं मन्यमानस्य पूर्वपक्षिण इदं वचनम् । 'सर्वत्र मत्वर्थे प्रतिषेधः' इति च तस्यैव । वस्तुतो द्वयोः समानाश्रयत्वेन सावकाशत्वेन च परत्वाद्बहुव्रीहेरेव युक्तत्वमित्यन्ये ॥ तत्र द्विगुप्रतिषेधवचनमेवावश्यकमित्याह—**पञ्चखट्व इति** । 'पञ्चखट्वा' इत्यादौ ङीबापत्तिः, 'पञ्चगुः' इत्यादौ टजापत्तिश्चेत्यपि बोध्यम् ॥

( मतुबन्तान्मतुप्प्रत्ययाभावोपपादकभाष्यम् )

**अथ मत्वर्थीयान्मत्वर्थीयेन भवितव्यम् ?**

**न भवितव्यम् ।**

**किं कारणम् ?**

**अर्थगत्यर्थः शब्दप्रयोगः । अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते । तत्रैकेनोक्तत्वात्तस्यार्थस्य द्वितीयस्य प्रयोगेण न भवितव्यम् ।**

**किं कारणम् ?**

**उक्तार्थानामप्रयोग इति ॥**

( प्रदीपः ) **अथेति** । 'यवमानस्यास्ति' इत्यादौ ॥ **अर्थगत्यर्थ इति** । यस्य यवमानस्ति तस्य यवैरपि तत्सम्बन्धद्वारेण[3] सम्बन्धोऽस्तीति यवमानित्यनेनैव[4] यवमत्सम्बन्धावगमादिति भावः ॥

( उद्द्योतः ) ननु 'यवसम्बन्धी' इति 'यवमान्' इत्यस्यार्थः, 'यवसम्बन्धिसम्बन्धी' इति 'यवमानस्यास्ति' इत्यस्यार्थ इत्यर्थभेदात् 'एकेनोक्तत्वात्' इत्यसङ्गतमत आह—**यस्येति** । साक्षात्परम्परासाधारणसम्बन्धिनि मतुप्साधुरिति भावः ॥

( आक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—दण्डिमती शाला, हस्तिमत्युपत्यकेति ॥**

( प्रदीपः ) **दण्डिमतीति** । यस्यां शालायां दण्डिनः पुरुषाः सन्ति, दण्डा अपि तस्यां सन्ति–इति दण्डवतीत्यनेनैव[5] पूर्वोक्तेन न्यायेन दण्डिसम्बन्धावगमान्मतुन्न प्राप्नोतीति भावः ॥

( समाधानभाष्यम् )

**भवति, अर्थान्तरे वृत्तादर्थान्तरे वृत्तिः । षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते, सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते ॥**

( प्रदीपः ) **'अर्थान्तरे वृत्तात्'** इति यदुक्तं तदेव विभजति—**षष्ठ्यर्थे वेति** । एकजातीये हि सम्बन्धे मतुन्न

---

१ 'नैषास्तेर्लट्' इति छ. पाठः ॥

२ 'तेनैवैतत्' इति च. झ. पाठः ॥

३ तत्सम्बन्धद्वारेण–यवमत्सम्बन्धद्वारेण ॥

४ अनेनैवेति । यवमान् इत्येकेनैव यत्नेन यवैः, यवमता च सम्बन्धः प्रतीयत इति न मतुबन्तान्मतुबिति भावः ॥

५ दण्डवतीत्यनेनैवेति । यथा यवमानित्येकेन यत्नेन यवैर्यवमद्भिश्च सम्बन्धः प्रतीयते तथा दण्डवतीति एकेनैव यत्नेन दण्डेन दण्डिना च सम्बन्धः प्रतीयेतेति दण्डिमतीति न स्यादिति भावः ॥

भवति। यस्य हि यवमान् विद्यते तस्य यवा अपि सन्ति। इह तु यस्यां शालायां हस्तिनो गोमन्तश्च तस्यां नावश्यं हस्ता गावश्च सन्ति, छिन्नहस्तानामपि हस्तित्वजातिसम्बन्धात् तद्देशासंनिहितगोरपि गोमत्त्वाच्च॥

( उद्द्योतः ) नन्वेवमन्यषष्ठ्यर्थे वृत्तस्यान्यषष्ठ्यर्थेऽपि वृत्तिः प्राप्नोतीत्यतो भाष्ये–अर्थान्तरं विभज्य दर्शयति—**षष्ठ्यर्थे वेलादिना**॥ तत्र बीजं दर्शयति–**एकजातीये हीति**। गोमदुल्लेखस्त्वग्रिमभाष्यपूर्वपक्षोपपादनायेति बोध्यम्। 'तद्देशासन्निहितगवीभिः' इति पाठः। 'तद्देशासन्निहितगोरपि' इति पाठे बहुव्रीहिः॥

## ( प्रत्याक्षेपभाष्यम् )

**अथ मत्वन्तान्मतुपा भवितव्यम्—गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति?**

( प्रदीपः ) **अथ मत्वन्तादिति**। पूर्वोक्तन्यायस्य मतुप्यपि सद्भावात् **प्रश्नः**॥ **यस्य गोमन्त इति**। गावो विद्यन्ते येषु ते गोमन्तः=ग्रामाः, ते यस्य सन्तीत्यर्थः॥

( उद्द्योतः ) **पूर्वोक्तन्यायस्येति**। दण्डिमच्छब्दे उपपादितन्यायस्येत्यर्थः॥

## ( प्रत्याक्षेपसमाधाने भाष्यम् )

**न भवितव्यम्।**

**किं कारणम्?**

**यस्य गोमन्तः सन्ति, गावोऽपि तस्य सन्ति, तत्रोक्तो गोभिरभिसम्बन्धे प्रत्यय इति कृत्वा तद्धितो न भविष्यति।**

**न तर्हीदानीमिदं भवति–दण्डिमती[1] शाला, हस्तिमत्युपत्यकेति।**

**भवति, अर्थान्तरे वृत्ताद् अर्थान्तरे वृत्तिर्भविष्यति। षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे[2] वर्तते, सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते॥**

(प्रदीपः) **गावोऽपीत्ति**। द्विविधो हि गोभिः सम्बन्धः–साक्षात् पारम्पर्येण वेति भावः। ततो गोमानित्ययं शब्दो द्विविधमपि सम्बन्धं शब्दप्रवृत्तिनिमित्तत्वेनान्तर्भावयितुं शक्तः। तत्र पारम्पर्येण गोसम्बन्धेऽभिधित्सिते गोमत्सम्बन्धोऽप्याक्षिप्त एव, तद्द्वारकत्वाद्गोसम्बन्धस्य॥

**न तर्हीति**। न्यायस्य तुल्यत्वादिति भावः॥

**इहापीति**। मत्वन्तादपि मतुप्प्रसङ्गः, न्यायस्य तुल्यत्वादित्यर्थः॥

( उद्द्योतः ) ननु गोमद्ग्रामस्वामिनः कथं गोभिः सम्बन्धोऽत आह—**द्विविधो हीति**॥

## ( समानन्यायेनाक्षेपभाष्यम् )

**इहापि–सप्तम्यर्थे वा वृत्तं षष्ठ्यर्थे वर्तते, षष्ठ्यर्थे वा वृत्तं सप्तम्यर्थे वर्तते। अन्यथाजातीयकः खल्वपि गोभिरभिसम्बन्धे प्रत्ययः, अन्यथाजातीयकस्तद्वता। येनैव खल्वपि हेतुना एतद्वाक्यं भवति–गोमन्तोऽस्य सन्ति यवमन्तोऽस्य सन्तीति तेनैव हेतुना वृत्तिरपि प्राप्नोति॥**

(प्रदीपः) **अन्यथाजातीयक इति**। सम्बन्धे प्रत्ययः, अवगम इत्यर्थः। गोमानित्युक्ते साक्षाद्गोभिः सम्बन्धः प्रतीयते। गोमत्सम्बन्धेऽपि गोसम्बन्धो नावश्यंभावी। न हि गोमत्स्वामिना गोस्वामिना भाव्यमिति नियम इत्यर्थः॥ **येनैवेति**। वृत्तिवाक्ययोस्तुल्यार्थत्वाद्वृत्तेरिव वाक्यस्याभावः स्यात् वाक्यवद्वा वृत्तिप्रसङ्गः॥

( उद्द्योतः ) ननु मतुप एवापाद्यत्वात् 'अन्यथाजातीयकः··· प्रत्ययः' इत्यनुपपन्नमत आह—**अवगम इति**। सम्बन्धविषयो बोध इत्यर्थः। परम्परासम्बन्धो न मतुब्नियामकः, नापि षष्ठीनियामक इति भावः। एवञ्च सप्तम्यर्थषष्ठ्यर्थभेदात्, गोमच्छब्देन गोसम्बन्धस्येव तद्वत्सम्बन्धस्य प्रत्याययितुमशक्यत्वाच्च, वृत्तिसमानार्थकवाक्यदर्शनाच्च–इति हेतुत्रयेण मत्वन्तान्मतुपमापाद्य भाष्ये समाधत्ते—**तस्मादिति**॥

## ( प्रतिषेधेन समाधानभाष्यम् )

**तस्मान्मत्वर्थीयान्मतुबादेः प्रतिषेधो वक्तव्यः।**

**तं चापि ब्रुवता 'समानवृत्तौ[1] सरूप' इति वक्तव्यम्। भवति हि—दण्डिमती[2] शाला, हस्तिमत्युपत्यकेति।**

## शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः। सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते॥

( प्रदीपः ) **मत्वर्थीयान्मतुबादेः प्रतिषेध इति**। न केवलं मत्वन्तान्मतुप् नेष्यते,यावता ठन्नन्तादिनिठनावपि नेष्यते इति सामान्येनोक्तम्॥ सामान्येन प्रतिषेधं विधाय विशेषप्रतिपादनायाह—**तं चापीति**॥ **समानवृत्ताविति**। समाने प्रत्ययार्थे–षष्ठ्यर्थे वृत्तं षष्ठ्यर्थे न वर्तते, सप्तम्यर्थे वृत्तं सप्तम्यर्थे न वर्तते इत्यर्थः। तेन 'सप्तम्यां[3] च न तौ स्मृतौ' इति वचनात् षष्ठ्यर्थे इनिठनोर्विधानात्समानवृत्तित्वाद्विरूपोऽपि[4] इनिष्ठन्नन्तान्न भवति–दण्डिका अस्य सन्तीति। तथा भिन्नवृत्तावपि सरूपो न भवति–यवमन्तो ग्रामा अस्य सन्तीति। अथ हस्तिमान्[5] राजेति समान-

१ समानवृत्ताविति। षष्ठ्यर्थे वृत्ताद्विरूपोऽपि षष्ठ्यर्थे प्रत्ययो न। भिन्नवृत्तौ–षष्ठ्यर्थात्सप्तम्यर्थे, सप्तम्यर्थाद्वा षष्ठ्यर्थे सरूपात्सरूपः प्रत्ययो न भवति, विरूपस्तु भिन्नवृत्तौ भवत्येव। अत एव दण्डिमतीत्याद्युपपन्नम्॥

२ दण्डिमतीति। दण्डोऽस्ति यस्येति षष्ठ्यर्थे वृत्तो मत्वर्थीयः प्रत्ययः। तस्मात् 'दण्डी अस्ति यस्यां' इति सप्तम्यर्थे वर्तनमुचितं न तु 'दण्डी अस्ति यस्य' इत्यर्थे प्रत्ययवर्तनमिति भावः॥

३ सप्तम्यामिति। 'अत इनि ठनौ' इति सूत्रे वार्तिककृता सप्तम्यां तयोर्निषेध उक्तः॥

४ समानवृत्तित्वादिति। सप्तम्यां तयोर्निषेधादेकैव वृत्तिस्तयोरवशिष्यत इति इनिठनोः समानवृत्तित्वमित्यर्थः॥

५ ननु हस्तो यस्यास्ति स हस्ती, हस्ती यस्यास्ति स हस्तिमानिति समानवृत्तित्वाद्विरूपोऽपि प्रत्ययोऽत्र न स्यादित्याह—अथ हस्तिमानिति॥

वृत्तित्वात्कथं प्रत्ययः ? हस्तिशब्दस्य जातिशब्दत्वान्न सम्बन्धः प्रवृत्तिनिमित्तमित्यदोषः । अत एव 'अहस्ती' इति कृते मत्वर्थीये नञ्समासः क्रियते, न बहुव्रीहिः । न ह्यहस्त इत्युक्ते जातिपर्युदासप्रतीतिः । यत्र तु समानार्थत्वं तत्र बहुव्रीहिरेव भवति, यथा-'अगुः' 'अनश्वः' इति । न तु 'अगोमान्' 'अनश्ववान्' इति । यत्रापि मत्वर्थीयेनार्थविशेषप्रतीतिस्तत्रापि तदन्तेन नञ्समासः, यथा-अदण्डी, अपुच्छी, अवाग्मी-इति । दण्डपुच्छसंयोगनिषेधस्य सम्यग्भाषित्वनिषेधस्य च बहुव्रीहेरनवगमात् ॥

**शैषिकादिति** । शैषिकाच्छैषिकः सरूपो नेष्टः । यथा-शालायां भवः शालीयो घटः । 'तत्र भवः' 'तस्येदम्' इति वा छान्ताच्छो न भवति । विरूपस्तु भवत्येव—अहिच्छत्रे भव आहिच्छत्रः, तत्र भव आहिच्छत्रीय इति । तथा मतुबर्थीयान्मतुबर्थीयः सरूपो नेष्टः, यथा-यवमानस्यास्तीति-मत्वन्तान्मतुब् न भवति । 'समानवृत्तौ' इति तु श्लोकानुरोधान्नोक्तम् । पूर्वमेव च विषयः प्रविभक्तः ॥ **सन्नन्तादिति** । 'सरूपः' इत्यपेक्ष्यते । सारूप्यं चाव्यभिचारात् । तेन समानत्वं लक्ष्यते । तच्चार्थकृतम् । तेनेच्छासन्नन्तादिच्छासन्न भवति । अर्थान्तराभिधायिनस्तु भवत्येव-जुगुप्सिषते-मीमांसिषत इति ॥

**( उद्द्योतः ) नेष्येते इति** । 'सप्तम्याश्च न तौ स्मृतौ' इत्युक्तेः षष्ठ्यर्थे वृत्तस्य षष्ठ्यर्थे वृत्त्यभावादित्यर्थः ॥ तं चाऽपीति-**भाष्यस्य**-समानवृत्तौ मत्वर्थान्मत्वर्थप्रतिषेधो वक्तव्यः, भिन्नवृत्तावपि समानाकारस्य प्रतिषेधो वक्तव्य इत्यर्थस्तदाह—**समाने इति** ॥ **अर्थविशेषेति** । भूमादिरूपेत्यर्थः ॥ **संयोगेति** । भूमादिषु संसर्गपदेन संयोगो गृहीतः । गृहावस्थितदण्डे दण्डस्वामिनि 'दण्डी' इत्यप्रयोगात् । स च न बहुव्रीहिणा बोधयितुं शक्यः, स्वस्वामिभावेऽपि तद्विधानात् । 'अदण्डः' इत्युक्ते हि स्वामित्वाभावस्यापि प्रतीतेः । 'अदण्डी' इति तु स्वामिन्यपि दण्डसंयोगाभाववतीष्यत इत्यर्थः ॥

**श्लोकानुरोधादिति** । तदनुरोधादत्र तन्नोक्तं, किन्तु पूर्वमेवेत्यर्थः । यत्तु-अत्र सरूपपदस्य 'समानार्थौ विरूपोऽपि न, अर्थभेदे समानाकारोऽपि न' इत्यर्थद्वये तात्पर्यमिति । तन्न, सरूपपदेन समानार्थत्वस्यालाभात्-तत आह—**सारूप्यञ्चाव्यभिचारादिति** । 'विशेषणत्वेनान्वयायोग्यम्' इति शेषः । एवञ्च-अयं श्लोकः कस्यचिच्छात्रस्येति बोध्यम् ॥

**( प्रत्ययोद्देश्यतावच्छेदकनिर्धारणोपक्रमभाष्यम् )**

**किं पुनरिमे मतुप्प्रभृतयः सन्मात्रे भवन्ति ?**

**एवं भवितुमर्हति ॥**

**( प्रदीपः ) किं पुनरिति** । विशेषानुपादानात् सन्मात्रस्य सर्वत्रानिष्टप्रसङ्गात् **प्रश्नः** ॥ अभिधानतो व्यवस्था वक्ष्यामीत्याह—**एवं भवितुमर्हतीति** ॥

**( उद्द्योतः )** 'विशेषानुपादानात्सर्वत्र चानिष्टत्वात्' इति पाठः । 'विशेषानुपादानात्सन्मात्रस्य सर्वत्र' इति क्वचित्पाठः । तत्र सत्तामात्रप्रतिपादकस्येत्यर्थः ॥

( ५७५८ अतिप्रसंगापादकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ मतुप्प्रभृतयः सन्मात्रे इति चेदतिप्रसङ्गः ॥ * ॥**

**( भाष्यम् ) मतुप्प्रभृतयः सन्मात्र इति चेदतिप्रसङ्गो भवति ।**

**इहापि प्राप्नोति—व्रीहिरस्य, यवोऽस्येति ॥**

**( एकदेशिसमाधानभाष्यम् )**

**तस्माद् भूमादिग्रहणं कर्तव्यम् ॥**

**( प्रदीपः ) भूमेति** । यद्यपि त्रिप्रभृतिषु बहुत्वं व्यवस्थितं तथाऽप्यभिधानमाश्रयणीयम् । न हि यस्य त्रयो यवाः सन्ति स यवमानित्युच्यते ॥

**( भूमादिनिर्वचनभाष्यम् )**

**के पुनर्भूमादयः ?**

**भूमनिन्दाप्रशंसासु**
**नित्ययोगेऽतिशायने ।**
**संबन्धेऽस्तिविवक्षायां**
**भवन्ति मतुबादयः ॥**

**भूम्नि-गोमान् यवमान् ।**
**निन्दायाम्-ककुदावर्ती । संखादकी ।**
**प्रशंसायाम्—रूपवान् । वर्णवान् ।**
**नित्ययोगे-क्षीरिणो वृक्षाः । कण्टकिनो वृक्षा इति ।**
**अतिशायने-उदरिणी कन्या ।**
**संसर्गे-दण्डी । छत्री ।**
**तर्हि भूमादिग्रहणं कर्तव्यम् ?**
**न कर्तव्यम् ।**
**कस्मान्न भवति—व्रीहिरस्य, यवोऽस्येति ॥**

**(उद्द्योतः) भूमेत्यादिश्लोकस्य**-'येऽस्तिविवक्षायां मतुबादय उक्तास्ते भूमादिषु भवन्तीति वक्तव्यम्' इत्यर्थः । भूमादिषु **संसर्गपदेन**-संयोगः, स च सम्बन्धान्तरे सत्येव तन्नियामको न तु केवल इत्युक्तम् ॥

---

१ उत्तरमाह—**हस्तिशब्दस्येति** । अयमाशयः—'**हस्तिमान्**' इत्यत्र हस्तो यस्यास्तीति हस्तीत्येवं न सम्बन्धबोधकत्वमिति षष्ठ्यर्थे वृत्तं नास्तीति मतुप्प्रत्ययस्य न किञ्चिद्बाधकम् । हस्तिशब्दे तादृशव्युत्पत्तिसम्भवेऽपि जातिवाचकानां शब्दानां रूढार्थकत्वमेवेति सम्बन्धबोधकत्वं नास्तीति ॥

२ **अत एवेति** । सम्बन्धस्य प्रवृत्तिनिमित्तत्वाभावादेवेत्यर्थः । यत्र मत्वर्थीये मत्वर्थे नञ्समासे च कृते योऽर्थः प्रतीयते स यदि बहुव्रीहिणा प्रतीयेत तत्र बहुव्रीहिरेव लाघवात्कार्यः, न तु मत्वर्थीयो नञ्समासश्चेति । यथा गोशब्दान्मतुपि नञ्समासे च योऽर्थः प्रतीयते सः 'अगुः' इति बहुव्रीहिणाऽपि लभ्यत इति तत्र बहुव्रीहिरेव, न तु '**अगोमान्**' इति । अत्र तु हस्तशब्दान्मत्वर्थीये नञ्समासे हस्त्यभावरूपो योऽर्थः प्रतीयते सोऽर्थः केवलहस्तशब्देन नञा च बहुव्रीहौ कृते न लभ्यत इति तस्य सम्बन्धवाचित्वं नास्ति किन्तु जातिवाचित्वमिति भावः ॥

( ५७५९ सिद्धान्तवार्तिकम् ॥ २ ॥ )

**॥ * ॥ उक्तं वा ॥ * ॥**

( भाष्यम् ) किमुक्तम् ?

अनभिधानादिति ।

इतिकरणः खल्वपि क्रियते ततश्चेद्विवक्षा, भूमादियुक्तस्यैव च विवक्षा ।

गोमान्-यवमान्-भूमादियुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्यवो नास्ति ।

संखादकी-ककुदावर्ती—निन्दायुक्तस्यैव सत्ता कथ्यते, न हि कश्चिन्न संखादकी ।

रूपवान्-वर्णवान्—प्रशंसायुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्रूपं नास्ति ।

क्षीरिणो वृक्षाः-कण्टकिनो वृक्षा इति—नित्ययुक्तस्यैव सत्ता कथ्यते, न हि कस्यचित् क्षीरं नास्ति ।

उदरिणी कन्येति—अतिशायनयुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिदुदरं नास्ति ।

दण्डी-छत्री—संसर्गयुक्तस्यैव सत्ता कथ्यते, न हि कस्यचिद्दण्डो नास्ति।[1]

यावतीभिः खल्वपि गोभिर्वाहदोहप्रसवाः कल्पन्ते तावतीषु सत्ता कथ्यते । कस्यचिच्चतसृभिः कल्पन्ते । कस्यचिच्छतेनापि न प्रकल्पन्ते ॥

**सन्मात्रे चर्षिदर्शनात् ।**

सन्मात्रे च पुनः ऋषिर्दर्शयति मतुपम्—यवमतीभिरद्भिर्यूपं प्रोक्षतीति ॥

( प्रदीपः ) इतिकरण इति । इतिशब्दस्य बह्वर्थत्वादिह विवक्षार्थत्वमिति भावः ॥

**न हि कस्यचिदिति** । मत्वर्थीयान्तानभिधेयस्यापि संबन्धोऽस्तीत्येवंपरमेतत् ॥

**न हि कश्चिन्न संखादकीति । संखादकः**-दशनः, स च सर्वस्यास्तीति विशेषणोपादानान्निन्दाप्रतीतिः ॥

**न हीति** । रूपमात्रसंबन्धेऽवगते रूपवानयमिति विशेषणोपादानात् प्रशंसाप्रतीतिः ॥

**यावतीभिरिति** । क्रियमाणेऽपि भूमादिग्रहणे विशिष्टमेव बहुत्वमभिधानवशादाश्रयणीयम् । ततश्चाकरणमेव भूमादीनां ज्याय इति भावः ॥

**यवमतीभिरिति** । संस्कारस्यादृष्टार्थत्वाज्जातिमात्रसंबन्धोऽत्र विवक्षितः ॥

( उद्योतः ) **बह्वर्थत्वादिति** । निपातत्वादिति भावः ॥

ननु यवनामापि यत्र नास्ति तादृशदेशानामपि सत्त्वात् '**न हि कश्चित्**' इत्यनुपपन्नमत आह—**मत्वर्थीयान्तेति** ॥

**संखादक इति**—दन्त्यादिपाठः ॥ **दशनः**—'अश्वस्य' इति शेषः । तदाह—**सर्वस्याश्वस्येति** । क्वचित्तु 'स च सर्वस्यास्ति' इत्येव पाठः ॥

**विशिष्टमेवेति** । लोकव्यवहारानुसारादिति भावः ॥

नन्वत्रापि भूम्न्येव मतुबत आह—**संस्कारस्येति** ॥

( ५७६० उपसंख्यानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ गुणवचनेभ्यो मतुपो लुक् ॥ * ॥**

( भाष्यम् ) **गुणवचनेभ्यो मतुपो लुग्वक्तव्यः । शुक्लः । कृष्ण इति ॥**

( प्रदीपः ) **गुणवचनेभ्य इति** । शुक्लादय एवाभिन्नरूपा गुणे तद्वति च द्रव्ये वर्तमाना गृह्यन्ते, न तु रूपादयः सर्वदा गुणमात्रवाचिनः ॥

( उद्योतः ) नन्वेवं 'रूपवान्' इति प्रयोगो न स्यादत आह—**शुक्लादय एवेति** । गुणे तद्वति च द्रव्ये ये लोकेऽभिन्नरूपाः=समानरूपा वर्तमाना दृश्यन्ते ते गृह्यन्त इत्यर्थः, वचनग्रहणादिति भावः ॥

( उपसंख्यानाक्षेपभाष्यम् )

**अव्यतिरेकात्सिद्धम् । न गुणो गुणिनं व्यभिचरतीति ॥**

( प्रदीपः ) **अव्यतिरेकादिति** । गुणगुणिनोः सोऽयमित्यभिसंबन्धादभेदाध्यवसायादुत्पत्तिरेव मतुपो नास्तीत्यर्थः ॥

**न गुण इति** । गुणगुणिनोर्जातितद्वतोरिव युतसिद्धभावात्सोऽयमित्यभेदात्संबन्ध इत्यर्थः ॥

( उद्योतः ) नन्वव्यतिरेकेऽपि मतुपोऽश्रवणं कुतोऽत आह—**गुणगुणिनोरिति** । भेदनिबन्धने षष्ठ्यर्थे मतुपो विधानात्तस्य चात्राभावात्तदनुत्पत्तिरित्यर्थः ॥ **सोऽयमित्यभिसम्बन्धादिति** । एवंरूपसम्बन्धादित्यर्थः ॥ अभेदाध्यवसाने हेतुर्भाष्ये—**न गुण** इत्यादि ॥ ननु 'यो यदव्यभिचारी स तदभिन्नः' इति न नियमः, धूमवह्न्योर्व्यभिचारादत आह—**गुणेत्यादि** । '**न सम्बन्धः**' इति पाठः । 'अभेदात्सम्बन्धः' इति पाठे ततो विशेष्यविशेषणभावरूपः सम्बन्ध इत्यर्थः । एवञ्च मतुप्प्रवृत्तियोग्यो भेदसम्बन्धो नास्तीति भावः । अभेदसमानाधिकरणो भेदो न मतुन्नियामक इति भावः ॥

( ५७६१ समाधानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अव्यतिरेकात्सिद्धमिति चेद् दृष्टो व्यतिरेकः ॥ * ॥**

( भाष्यम् ) **अव्यतिरेकात्सिद्धमिति चेत् दृश्यते व्यतिरेकः । तद्यथा—पटस्य शुक्ल इति ॥**

( प्रदीपः ) **दृश्यते व्यतिरेक इति** । जातिरुत्पत्तिप्रभृत्याऽऽविनाशाद् द्रव्यं न जहाति, तदात्मैव प्रतीयते । शब्देन चाभिधीयते-गोः शाबलेय इति, न तु शाबलेयस्य गौरिति । गुणाः पुनरुपायिनश्चापायिनश्चेति द्रव्याद्भेदेन प्रतीयन्ते-शब्देन चाभिधीयन्त इत्यर्थः ॥ **पटस्य शुक्ल इति** । ततश्चाभेदविवक्षायाः सद्भावात् मतुपः श्रवणं स्यादिति लुग्वक्तव्य एव ॥

1 नास्तीत्यस्याग्रे—'छत्रं वा' इत्यधिकः पाठः च. झ. पुस्तकयोः ॥

(उद्योतः) एतदजानान एकदेश्याह—दृश्यत इति ॥ नन्वनयैव रीत्या जातिशब्दादपि मतुपो लुग्वक्तव्यः स्यादत आह—जातिरिति ॥ विपक्षे बाधकं दर्शयति—रूढित्वे त्विति। भाष्ये—यदसौ द्रव्यमित्यादिना—मतुब्लोपेऽपि लिङ्गादिसिद्धिर्दृश्यते, तेन प्रत्याख्यानस्यैव युक्तत्वं दर्श्यते, अन्यथाऽस्य ग्रन्थस्यात्रासङ्गतिरित्याहुः ॥

(५७६२ सिद्धान्तसाधकवार्तिकम् ॥ ५ ॥)

॥ * ॥ तथा च लिङ्गवचनसिद्धिः ॥ * ॥

(भाष्यम्) एवं च कृत्वा लिङ्गवचनानि सिद्धानि भवन्ति—शुक्लं वस्त्रम्। शुक्ला शाटी। शुक्लः कम्बलः। शुक्लौ कम्बलौ। शुक्लाः कम्बला इति।

यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद् गुणस्यापि भवति ॥

(प्रदीपः) तथा चेति। यस्मात् द्रव्ये वर्तमानाः शुक्लादयो यौगिकाः, न तु वरणपञ्चालादिवद्रूढिशब्दास्ततो द्रव्यगतलिङ्गसंख्योपादायिनः। रूढित्वे तु नियतलिङ्गसंख्यत्वम्, सर्वत्र वा सर्वलिङ्गसंख्यत्वं प्रसज्येत ॥

(९३० विधिसूत्रम् ॥ ५ । २ । २ आ. ४४)

## २११३ रसादिभ्यश्च ॥ ५ । २ । ९५ ॥

(आक्षेपभाष्यम्)

किमर्थमिदमुच्यते न "तदस्यास्त्यस्मिन्–" इत्येव मतुप्सिद्धः?

(५७६३ एकदेशिवार्तिकम् ॥ १ ॥)

॥ * ॥ रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ * ॥

(भाष्यम्) रसादिभ्यः पुनर्वचनं क्रियते-अन्येषां मत्वर्थीयानां प्रतिषेधार्थम्। मतुबेव यथा स्यात्, येऽन्ये मत्वर्थीयाः प्राप्नुवन्ति ते मा भूवन्निति।

(सिद्धान्तप्रत्यायकभाष्यम्)

नैतदस्ति प्रयोजनम्। दृश्यन्ते ह्यन्ये रसादिभ्यो मत्वर्थीयाः—रसिको नटः। उर्वशी वै रूपिण्यप्सरसाम्। स्पर्शिको वायुरिति ॥

(प्रदीपः) दृश्यन्ते हीति। प्रयोगमूलत्वाल्लक्षणस्य नियमार्थत्वायोगात्सूत्रं प्रत्याख्यातम् ॥

(९३१ विधिसूत्रम् ॥ ५ । २ । २ आ. ४५)

## २११४ प्राणिस्थादातो लजन्यतरस्याम् ॥ ५ । २ । ९६ ॥

(प्रदीपः) लोकप्रसिद्धशरीरादिसंघातः प्राणी, तत्र चैतन्यापगमेऽपि प्राणिव्यवहारस्य रूढत्वान्मृतावस्थायामपि चूडालादिव्यपदेशप्रवृत्तिः ॥

(अतिव्याप्त्याशंकाभाष्यम्)

इह कस्मान्न भवति—चिकीर्षाऽस्यास्ति, जिहीर्षाऽस्यास्तीति?

(एकदेशिसमाधानभाष्यम्)

प्राण्यङ्गादिति वक्तव्यम्।

तत्तर्हि वक्तव्यम्।

न वक्तव्यम् ॥

(उद्योतः) प्राण्यङ्गादिति। चूडाकर्णिकाशब्दौ शिखाकर्णालङ्कारसदृशावयववाचकौ, न त्वापीडाख्यालङ्कारकर्णालङ्कारवाचकाविति भावः ॥

(सिद्धान्तभाष्यम्)

कस्मान्न भवति—जिहीर्षाऽस्यास्ति, चिकीर्षाऽस्यास्तीति?

अनभिधानात् ॥

(९३२ विधिसूत्रम् ॥ ५ । २ । २ आ. ४६)

## २११५ सिध्मादिभ्यश्च ॥ ५ । २ । ९७ ॥

(विकल्पेन लज्विधायकत्वे शंकाभाष्यम्)

सिध्मादिषु यान्यकारान्तानि तेभ्यो लचा मुक्ते इनिठनौ प्राप्नुतः। इनिठनौ च नेष्येते। कथं तौ न भविष्यतः?

(प्रदीपः) 'प्राणिस्थादातो–' इत्यतोऽन्यतरस्यांग्रहणं विकल्पार्थमनुवर्तते इति मत्वाऽऽह—सिध्मादिष्विति ॥

(५७६४ समुच्चयबोधकत्वेनोत्तरवार्तिकम् ॥ १ ॥)

॥ * ॥ लजन्यतरस्यामिति समुच्चयः ॥ * ॥

(भाष्यम्) लजन्यतरस्यामिति समुच्चयोऽयं, न विभाषा। लच्च मतुप् च।

कथं पुनरेतज्ज्ञायते—लजन्यतरस्यामिति समुच्चयो न विभाषेति?।

(प्रदीपः) समुच्चय इति। अनेकार्थत्वान्निपातानां समुच्चये-अन्यतरस्यांशब्दः। अथवा विकल्पार्थ एव। तत्र लचा मुक्ते प्रकृत एव मतुब् भवति न तु इनिठनौ। वक्ष्यमाणज्ञापकात्–इति–सामर्थ्यात्समुच्चयः संपद्यते ॥

(उद्योतः) भाष्ये—समुच्चयोऽयं न विभाषेति। समुच्चयार्थो न विकल्पार्थ इत्यर्थः ॥ अथ चेति। अत्राप्रत्याख्यैव युक्ता॥ मतुबिति। 'अत इनि' इत्यत्राप्यन्यतरस्यांग्रहणानुवृत्तिरिति भावः ॥

( ५७६५ समुच्चयसमर्थकवार्तिकम् ॥ २ ॥ )

॥ * ॥ पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकमसमावेशस्य ॥ * ॥

( भाष्यम् ) यदयं पिच्छादिभ्यस्तुन्दादीनां नानायोगं करोति तज् ज्ञापयत्याचार्यः—समुच्चयोऽयं न विभाषेति ।

यदि विभाषा स्यात् नानायोगकरणमनर्थकं स्यात्, तुन्दादीन्यपि पिच्छादिष्वेव पठेत् ।

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम् ।

किम् ?

तुन्दादिषु यानि अनकारान्तानि तेभ्य इनिठनौ यथा स्याताम् ॥

यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः ?

ज्ञापकार्थ एव ॥

( प्रदीपः ) पिच्छादिभ्य इति । 'तुन्दादिभ्य इलच्' इत्यत्र चत्वारः प्रत्यया इष्यन्ते—इलच् इनिठनौ मतुबिति । तत्र यद्यन्यतरस्यांग्रहणानुवृत्त्या पिच्छादिभ्यः प्रत्ययचतुष्टयं स्यात्तदा तुन्दादिष्वेव पिच्छादयः पठितव्याः, पिच्छादिष्वेव वा तुन्दादयः । पृथक्पाठात्तु ज्ञायते—अन्यतरस्यांग्रहणेन मतुप् समुच्चीयते, न यथाप्राप्तमभ्यनुज्ञायते । तेन सिध्मादिपिच्छादिभ्य इनिठनौ न भवतः ॥

( उद्योतः ) अपर आहेत्यादिना वक्ष्यमाणस्य भाष्यस्याशयमाह—तुन्दादिष्वेवेति ॥

( प्रकारान्तरेण ज्ञापकसाधकभाष्यम् )

अपर आह—तुन्दादिभ्यः पिच्छादीनां नानायोगकरणं ज्ञापकम्—असमावेशस्य ।

यदयं तुन्दादिभ्यः पिच्छादीनां नानायोगं करोति तज्ज्ञापयत्याचार्यः—समुच्चयः, न विभाषेति ।

यदि विभाषा स्यान्नानायोगकरणमनर्थकं स्यात् । पिच्छादीन्यपि तुन्दादिष्वेव पठेत् ॥

नैतदस्ति ज्ञापकम् । अस्ति ह्यन्यन्नानायोगकरणे प्रयोजनम् ।

किम् ?

पिच्छादिषु यान्यनकारान्तानि तेभ्य इनिठनौ मा भूतामिति ।

यानि तर्ह्यकारान्तानि तेषां पाठः किमर्थः ।

ज्ञापकार्थ एव ॥

(प्रदीपः) नैतदस्तीति । तुन्दादिभ्योऽनकारान्तेभ्योऽपि इनिठनाविष्येते । तत्र यदि तुन्दादिषु पिच्छादयः पठ्येरंस्तदा पिच्छादिभ्योऽनकारान्तेभ्य इनिठनौ स्याताम् । अथ पिच्छादिषु तुन्दादयः पठ्येरंस्तदा तुन्दादिभ्योऽनकारान्तेभ्य इनिठनौ न स्याताम्मित्यर्थः ॥

यानि तर्हीति । कानिचिदकारान्तानि पिच्छादिषु पठितानि, कानिचित् तुन्दादिषु पठितानि । तत्र भेदेन पाठो ज्ञापक एव—यथोक्तार्थस्येत्यर्थः ॥

( उद्योतः ) प्रथमभाष्याशयमाह—पिच्छादिष्विति ॥ इनिठनौ न स्याताम्मिति । पिच्छादिसूत्रे तदसम्बन्धादिति भावः ॥

( ५७६६ समुच्चयबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ वस्य च पुनर्वचनं सर्वविभाषार्थम् ॥ * ॥

( भाष्यम् ) वस्य खल्वपि पुनर्वचनं क्रियते सर्वविभाषार्थम्—"केशाद्वोऽन्यतरस्याम्" (५।२।१०९) इति । एतदेव ज्ञापयत्याचार्यः—समुच्चयोऽयं, न विभाषेति ॥

( प्रदीपः ) वस्य च पुनर्वचनमिति । 'केशाद्वः' इत्येव वक्तव्यम् । तत्र प्रकृतान्यतरस्यांग्रहणानुवृत्त्या ठन्—इनि—मतुपो भविष्यन्तीति किमन्यतरस्यांग्रहणेन ठन्—इनिप्राप्त्यर्थेन ? तत्पुनः क्रियमाणम्—पूर्वस्यान्यतरस्यांग्रहणस्य मतुप्समुच्चयार्थत्वं ज्ञापयतीत्यर्थः ॥

( उद्योतः ) भाष्ये ज्ञापकान्तरमाह—वस्य च पुनर्वचनमिति । वस्य विधायके शास्त्रेऽन्यतरस्यांग्रहणानुवृत्त्यैव सिद्धे पुनरन्यतरस्यामिति वचनं सर्वेषामिनादीनां विभाषार्थम्—पक्षे प्राप्त्यर्थं सदेतदर्थज्ञापकमित्यर्थः । तदाह—तत्रेत्यादि ॥

( अन्यतरस्यांग्रहणस्य ज्ञापकाभावबोधकं भाष्यम् )

द्युद्रुभ्यां नित्यार्थमेकेऽन्यतरस्यांग्रहणमिच्छन्ति ।

कथम् ?

विभाषामध्येऽयं योगः क्रियते । विभाषामध्ये ये विधयो नित्यास्ते भवन्तीति ॥

( प्रदीपः ) द्युद्रुभ्यामिति । सति प्रयोजने ज्ञापकं न भवतीति पूर्वोक्तमेव ज्ञापकमाश्रयणीयम् ॥

( उद्योतः ) सतीति । वस्तुतस्तु 'द्युद्रुभ्यां मो नित्यम्' इत्येव सिद्धे 'अन्यतरस्यां'ग्रहणं ज्ञापकमेव । इदमेव भाष्ये—'एके' इत्यत्रारुचिबीजम् ॥

( ९३३ विधिसूत्रम् ॥ ५ । २ । २ आ. ४७ )

## २११८ लोमादिपामादिपिच्छादिभ्यः शनेलचः ॥ ५ । २ । १०० ॥

( ५७६७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ नप्रकरणे दद्रवा ह्रस्वत्वं च ॥ * ॥

( भाष्यम् ) नप्रकरणे दद्रवा उपसंख्यानं कर्तव्यम्, ह्रस्वत्वं च वक्तव्यम् । दद्रुणः ।

अत्यल्पमिदमुच्यते ।

**शाकीपलालीदद्रूणां ह्रस्वत्वं चेति वक्तव्यम् ।**

**शाकिनम् । पलालिनम् । दद्रुणम् ॥**

(प्रदीपः) **न प्रकरण इति । प्रकरणं**—प्रस्तावः । महच्छाकं—**शाकी** । नानाजातीयकशाकसमाहारो वा—**शाकी** । **पलाली**—पलालक्षोदः । अथवा भिन्नानि शालिकोद्रवादिपलालानि—**पलाली** ॥

(उद्द्योतः) ननु[1] नस्योत्तरत्रानुवृत्तेः 'नप्रकरणे' इत्ययुक्तमत आह—**प्रस्ताव इति** । शाकीपलाल्योर्महत्त्वाद्युपाधौ[2] लोकप्रयोगात् 'ङीष्' गौरादिपाठादित्याहुः ॥

(५७६८ उपसंख्यानवार्तिकम् ॥ २ ॥)

## ॥ * ॥ विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ * ॥

(भाष्यम्) **विष्वगित्युपसंख्यानं कर्तव्यम्, उत्तरपदलोपश्चाकृतसन्धेर्वक्तव्यः । विष्वग्गतान्यस्य विषुणः ॥**

(प्रदीपः) **विष्वगिति** । विषु—नाना अञ्चन्तीति, विषु-अञ्चितानि सन्त्यस्येति विषुणम् ॥ **विष्वग्गतानीति** । अर्थप्रदर्शनपरमेतत्[3] । यानि हि **विष्वञ्चितानि**=विष्वग्गतानि, विष्वक् गतं गमनमेषामित्यर्थः । तत्र विषुणशब्देन विषुवदाख्यः काल उच्यते । तस्य हि नानागतानि दिनानि सन्ति, तदाश्रयत्वाद्दिवसान्तराणां न्यूनाधिकभावस्य । तथा वायुर्मृत्युश्च=विषुणस्तथाऽन्योऽप्यनवस्थितप्रकृतिर्मनुष्यादिः=विषुणः, तत्र वृत्तिविषये गमनक्रियाऽन्तर्भावात् 'विष्वक् गमनमस्यास्ति'इत्येवं वाय्वादेरभिधानमित्याहुः ॥

(उद्द्योतः) ननु 'विष्वग्गतानि'इतिभाष्ये 'गतानि' इत्यधिकमत आह—**अर्थप्रदर्शनेति** ॥ तदेवोपपादयति—**यानि हीति** ॥ **विष्वगिति** । नानाप्रकारमित्यर्थे रूढमपीति तद्घटितेन 'विष्वग्गतानि' इत्यनेन नानाप्रकारगमनकर्त्रर्थकविष्वक्शब्दस्यार्थकथनमिति भावः । वार्तिके द्वयोरपि विष्वक्शब्दयोर्ग्रहणं, तत्र वाय्वादिविषये विषुणप्रकृतिर्नानाप्रकारार्थक इत्यभिप्रायेणाह—**गमनक्रियाऽन्तर्भावादिति** । केचित्तु भावक्विबन्तो नानाप्रकारगमनार्थो विष्वक्शब्दस्तत्र प्रकृतिरित्याहुः ॥

(९३४ विधिसूत्रम् ॥ ५ । २ । २ आ. ४८)

## २११९ प्रज्ञाश्रद्धार्चाभ्यो णः ॥५।२।१०१॥

(णप्रत्ययाधिकरणम्)

(५७६९ उपसंख्यानवार्तिकम् ॥ १ ॥)

## ॥ * ॥ वृत्तेश्च ॥ * ॥

(भाष्यम्) **वृत्तेश्चेति वक्तव्यम् । वार्तम् ॥**

(प्रदीपः) **वार्तमिति** । वृत्तिशब्दः—अविच्छेदप्रतिविधानादिषु वर्तते । इह प्रज्ञशब्दात् स्वार्थेऽणि विहिते 'प्राज्ञो व्याकरणम्' इति भाष्यम् । यथा[4]—'कृतपूर्वी कटम्'इति—कृद्ग्रहणात्तद्धितप्रयोगे षष्ठ्यभावः । यदा तु प्रज्ञाशब्दान्मत्वर्थीयो णो विधीयते तदा प्रज्ञावतः प्राधान्यात्प्रज्ञानक्रियाया उपलक्षणत्वादनाविर्भावाद्व्याकरणादिभिः कर्मभिः सम्बन्धाभावः । केचित्तु अत्रापि गुणभूतया प्रज्ञानक्रियया व्याकरणादीनां सम्बन्धमिच्छन्तः[5] 'प्राज्ञो व्याकरणम्' इति भवितव्यमित्याहुः । विषयत्वविवक्षायां तु—'प्राज्ञो व्याकरणे' इति ॥

(उद्द्योतः) **अविच्छेदप्रतिविधानेति । अविच्छेदेति**—छेदः कर्मणि घञ्, षष्ठीसमासः । **प्रतिविधानं**—जीविकोपायः । अविच्छिन्नजीविकोपाय इत्यर्थः । **आदिना** ग्रन्थविवरणम्[6] ॥ कर्त्रर्थे 'क'-प्रत्ययान्तप्रज्ञशब्दात्स्वार्थिकाणैव सिद्धे सूत्रे प्रज्ञाशब्दग्रहणस्य फलं दर्शयति—**इह प्रज्ञशब्दादिति** । 'प्रज्ञाशब्दात्' इत्यपपाठः ॥ **केचित्त्विति** । इदमेव युक्तं, कारकाणां गुणभूतक्रियायामप्यन्वयात् । 'प्रज्ञा' इत्यादौ ङीबभावार्थमिदमिति[7] तत्त्वम् । 'कर्तृकर्मणोः' इति सूत्रस्थभाष्यानुगृहीतमदुक्तरीत्या तूभयत्रापि 'प्राज्ञो व्याकरणस्य' इत्येव भाव्यमिति चिन्त्यम्[8] । **विषयत्वविवक्षायामिति** । वैषयिकाधारत्वविवक्षायामित्यर्थः ॥

(९३५ विधिसूत्रम् ॥ ५ । २ । २ आ. ४९)

## २१२० तपःसहस्राभ्यां विनीनी ॥ ५ । २ । १०२ ॥

(९३६ विधिसूत्रम् ॥ ५ । २ । २ आ. ५०)

## २१२१ अण् च ॥ ५ । २ । १०३ ॥

(अण्प्रत्ययाधिकरणम्)

(तपःशब्दाक्षेपे भाष्यम्)

**किमर्थं 'तपः' शब्दाद्विनिर्विधीयते । नासन्तादित्येव सिद्धम् ?**

---

१ ननु अनेकैः सूत्रैर्यस्यैकस्य विधानं क्रियते तत्र प्रकरणशब्द उच्यते यथा—णत्वप्रकरणम्—षत्वप्रकरणमिति । अत्र तु तथा नास्तीति प्रकरणशब्दो वार्तिककृतां भाष्यकृतां चानुपपन्न इत्यत आह—**ननु नस्योत्तरेति** ॥

२ शाकी-पलालीशब्दयोर्जातिवाचकत्वाभावान्ङीषनुपपत्तिं मत्वाऽऽह—**शाकीपलाल्योरिति** ॥

३ **अर्थप्रदर्शनपरमेतदिति** । विष्वग्गतानि अस्येति न विग्रहप्रदर्शनमिति भावः । विषु अञ्चितानीति विग्रहः ॥

४ **यथा कृतेति** । कर्तृकर्मणोः कृतीति सूत्रे कृद्ग्रहणात्कृतपूर्वीकटमित्यत्र तद्धितान्तत्वात् यथा षष्ठ्यभावस्तथा प्राज्ञो व्याकरणमित्यत्रापि तद्धितान्तत्वात्र षष्ठीति भावः ॥

५ **सम्बन्धमिच्छन्त इति** । क्रियाकारकभावसम्बन्धविवक्षायां कर्मणि द्वितीयैव । विषयत्वरूपसम्बन्धविवक्षायां तु सप्तमीति भावः ॥

६ **ग्रन्थविवरणमिति** । अविच्छेदप्रतिविधानादिषु वर्तमानस्य वृत्तिशब्दस्य ग्रन्थविवरणमित्यप्यर्थः ॥

७ इदमिति । णप्रत्ययविधानमित्यर्थः । अन्यथा 'अण्च' इति विधीयमानोऽणेव प्रज्ञाश्रद्धेत्यादौ विधीयताम् । णप्रत्ययफलं तु ङीनभाव इति ॥

८ **चिन्त्यमिति** । '**प्राज्ञो व्याकरणम्—प्राज्ञो व्याकरणे**' इत्येतत्प्रदीपोक्तं चिन्त्यमित्याशयः ॥

( ५७७० समाधानवार्तिकम् ॥ १ ॥ )

**॥*॥ तपसो विन्वचनमणूविधानात् ॥*॥**

**( भाष्यम् ) तपसो विन्वचनं क्रियते ।**

**किं प्रयोजनम् ?**

**अण्विधानात् । तपःशब्दादण् विधीयते, स विशेषविहितः सामान्यविहितं विनं बाधेत ॥**

( ५७७१ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ अणप्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) अणप्रकरणे ज्योत्स्नादिभ्य उपसंख्यानं कर्तव्यम् । ज्यौत्स्नः । तामिस्रम् । कौण्डलः । कौतपः । वैपादिकः ॥**

( प्रदीपः ) **तामिस्रमिति** । तमःसमूहस्तमिस्रम्, तद्यत्रास्ति, तमिस्रा रात्रिर्वा यस्मिन्नस्ति तत्—**तामिस्रम्** । कुण्डलार्हः—**कौण्डल** इत्याहुः ॥

( उद्द्योतः ) तमिस्त्रे पृषोदरादित्वादित्त्वम्, 'तद्धिताः' इति बहुवचनाद्प्रत्ययः ॥ **कुण्डलार्ह इति** । मत्वर्थस्तु कथञ्चिदुपपाद्यः । संसक्तकुण्डले तु नेष्यत इति भावः ॥

( ९३७ विधिसूत्रम् ॥ ५ । २ । २ आ. ५१ )

## २१२५ ऊषसुषिमुष्कमधो रः ॥ ५ । २ । १०७ ॥

( रप्रत्ययाधिकरणम् )

( मधुशब्दप्रत्यायकभाष्यम् )

**अयं मधुशब्दोऽस्त्येव द्रव्यपदार्थकः, अस्ति रसवाची । आतश्च रसवाची अपि, मधुन्येव हि 'मधु–इदम्–मधुरम्' इति प्रयुज्यते । तद्यो रसवाची तस्येदं ग्रहणम् ॥**

**यदि हि द्रव्यपदार्थकस्य ग्रहणं स्यादिहापि प्रसज्येत–मधु अस्मिन् घटेऽस्ति ॥**

( प्रदीपः ) **द्रव्यपदार्थ इति** । माक्षिके माध्वीके च प्रसिद्ध इत्यर्थः ॥ **आतश्चेति** । रसमात्रे मधुशब्दस्य वृत्त्यभावात् वृत्तिविषय एव यत्प्रतिपाद्यं रसवाचित्वं मन्यते ॥ **मधुन्येवेति** । न हि तदेव तस्मिन्विद्यत इति सामर्थ्यात् वृत्तिविषये रसविशेषवाची मधुशब्द इत्यर्थः ॥ **तद्यो रसवाचीति** । अभिधानशक्तिस्वाभाव्यादिति भावः । मतुबपि[3] रसवाचिनोऽनभिधानान्न भवति ॥

( उद्द्योतः ) ननु 'अस्ति च रसवाची' इत्युक्ते पुनः 'आतश्च' इत्यस्य नोपयोगोऽत आह—**रसमात्रे इति** । 'केवलस्य' इति शेषः । अतः 'आतश्च' इति यत्नेन प्रतिपादनमिति भावः ॥ **न हि तदेवेति** । व्यपदेशिवद्भावेन व्यवहारे तु मधुमात्रे तथा व्यवहारापत्तिरिति भावः । तद्ध्वनयन्नाह—भाष्ये—**मध्विदमिति** ॥ **अभिधानशक्तीति** । बोधजनकशब्दशक्तीत्यर्थः ॥ **मतुह्विति** । द्रव्यवाचिनस्तु भवत्येव–'मधुमान्नो वनस्पतिः' इत्यादौ ॥

( ५७७२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानं कर्तव्यम् । खरः । मुखरः । कुञ्जरः ॥**

( प्रदीपः ) **खर इति** । शब्दनिष्पत्तिकारणं कण्ठविवरं महदस्यास्तीत्यर्थः ॥ **मुखर इति** । खव्यापारे शब्दोच्चारणेऽप्रतिबन्धं मुखमस्येत्यर्थः ॥ **कुञ्जर इति** । वृत्तिविषये कुञ्जशब्देन हस्तिहनुरुच्यते । तेन तद्वान् कुञ्जरः, हस्तिशब्दवज्जातिशब्दोऽयम्[4] ॥

( उद्द्योतः ) **महदिति** । शब्दशक्तिस्वभावान्महत्त्वस्य वृत्तावन्तर्भावः ॥ **खव्यापारेति** । खव्यापारसाध्यशब्दोच्चारणे इत्यर्थः ॥ **अप्रतिबन्धमिति** । वक्तव्यावक्तव्यविवेकाभावादित्यर्थः ॥

( ५७७३ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ नगाच्च[5] ॥ * ॥**

**( भाष्यम् ) नगाच्चेति वक्तव्यम् । नगरम् ॥**

( प्रदीपः ) **नगरमिति** । नगाः–वृक्षाः पर्वताश्च । नगरशब्दोऽपि जातिशब्द एव । नगशब्दोऽश्मादिषु पठ्यत इति 'वुञ्छणकठच्–' इत्यादिना नगरशब्दस्य सिद्धत्वात् 'नगाच्च' इति न वक्तव्यम् ॥

( उद्द्योतः ) **जातिशब्द इति** । अत एव नगरीत्यादौ ङीषि[6] ॥ न वक्तव्यमिति । तत्र 'देशे तन्नाम्नि' इत्युक्तेः–अतन्नामकेऽपि तस्य साधुत्वार्थमिदमावश्यकमिति **चिन्त्यम्** ॥

( ९३८ विधिसूत्रम् ॥ ५ । २ । २ आ. ५२ )

## २१२७ केशाद्वोऽन्यतरस्याम् ॥ ५ । २ । १०९ ॥

( वप्रत्ययाधिकरणम् )

( ५७७४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानं कर्तव्यम् । मणिवः । हिरण्यवः ॥**

---

१ संसक्तकुण्डल इति । धृतकुण्डले 'कौण्डलः' इति प्रयोगो न भवतीति भावः ॥

२ 'प्रवृत्त्यभावात्' इति च. झ. पाठः ॥

३ 'मतुप्तु' इति च, पाठः ॥

४ जातिशब्दोऽयमिति । तेन 'कुञ्जरवान् राजा' इति मत्वर्थीयान्मतुप्प्रत्ययः 'मत्वर्थीयान्मतुबादेः प्रतिषेधे समानवृत्तौ सरूपे च' इत्युक्तत्वात् 'हस्तिमान्' इत्यादिवद्भवतीति भावः ॥

५ वार्तिकमेतद्भाष्यं वेत्यत्र सन्देहः । छ. पुस्तके नैतद्वार्तिकम् । च. झ. पुस्तकयोस्तु वार्तिकमेतदिति दृश्यते । क. पुस्तकेऽपि वार्तिकत्वेनोल्लेखः ॥

६ ङीषिति । नगरशब्दान्मतुप्प्रत्ययोऽपि भवतीति ज्ञेयम् ॥

( प्रदीपः ) **मणिव इति** । नागविशेषस्येयं संज्ञा ॥ **हिरण्यव इति**—निधिविशेषस्य । केचित्तु कुञ्जरस्येत्याहुः ॥

( ५७७५ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ छन्दसीवनिपौ च ॥ * ॥**

( भाष्यम् ) **छन्दसि ईवनिपौ च वक्तव्यौ वश्च मतुप् च । रथीरभून्मुद्गलानी गविष्ठौ । सुमङ्गलीरियं वधूः । ऋतावानम् । मघवानमीमहे । उद्वा च उद्वती च ॥**

( प्रदीपः ) **छन्दसीवनिपौ चेति**—चशब्दो वस्य समुच्चयार्थः । अन्यतरस्यांग्रहणस्य सर्वसंबन्धान्मतुबपि भवतीति मत्वाऽऽह—**वश्च मतुप् चेति** ॥ **रथीरिति** । रथोऽस्यास्तीत्यर्थः ॥ **सुमङ्गलीरिति** । लाघवाद्बहुव्रीहिणा भाव्यमिति न्यायश्छान्दसत्वादत्र नाश्रितः ॥ **मघवेति** । मघमस्यास्तीति मघवा । मतुपि तु 'मघवत्' शब्दः । 'मघवा बहुलम्' इत्येतन्न कर्तव्यम्, 'श्वन्नुक्षन्–' इति निपातनान्मघशब्दान्मतुपा च भाषायामपि शब्दद्वयस्य सिद्धत्वात् ॥ **उद्वा चेति** । उद्गतमस्यास्तीति ससाधनक्रियावचनादुपसर्गात् प्रत्ययः ॥

(उद्योतः) ननु 'ईवनिपौ च' इति चेन प्रकृतस्यैव समुच्चयः स्यादिति 'वश्च मतुप् च'इत्ययुक्तमत आह—**चशब्द इत्यादि** ॥ **सर्वसम्बन्धादिति** । सर्वत्र सम्बन्धादित्यर्थः । क्वचित्तु तथैव पाठः ॥ **भाषायामपीत्यादि** । 'मघोनस्त्वन्तस्य छान्दसत्वम्' इति 'मघवा बहुलम्' इति सूत्रभाष्योक्तेः, 'नियतविषया अपि शब्दाः' इति तत्रैव स्वोक्तेश्च **चिन्त्यमिदम्** ॥ **प्रत्यय इति** । 'वो मतुप्च' इत्यर्थः ॥

( ५७७६ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ मेधारथाभ्यामिरनिरचौ ॥ * ॥**

( भाष्यम् ) **मेधारथाभ्यामिरनिरचौ वक्तव्यौ । मेधिरः । रथिरः ।**

( प्रदीपः ) **मेधारथाभ्यामिति** । एतदपि छन्दोविषयम् ॥

( प्रकारान्तरबोधकभाष्यम् )

**अपर आह—वप्रकरणे 'अन्येभ्योऽपि दृश्यते' इति वक्तव्यम् । बिम्बावम् । कुररावम् । इष्टकावम् ॥**

( प्रदीपः ) **बिम्बावम् । कुररावमिति** । 'अन्येषामपि दृश्यते' इति दीर्घः ॥

---

( ९३९ विधिसूत्रम् ॥ ५ । २ । २ आ. ५३ )

## २१३० रजःकृष्यासुतिपरिषदो वलच् ॥ ५ । २ । ११२ ॥

( वलच्प्रत्ययाधिकरणम् )

( ५७७७ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥*॥ वलचप्रकरणेऽन्येभ्योऽपि दृश्यते ॥*॥**

( भाष्यम् ) **वलचप्रकरणे अन्येभ्योऽपि दृश्यत इति वक्तव्यम् । भ्रातृवलः । पुत्रवलः । उत्सङ्गवलः ॥**

( प्रदीपः ) **भ्रातृवल इति** । 'वले' इत्यत्राणुग्रहणानुवर्तनाद्दीर्घाभावः ॥ **पुत्रवल इति** । दीर्घत्वं 'वनगिर्योः संज्ञायाम्–' इत्यतः संज्ञाऽनुवृत्त्या संज्ञायां विधीयते । तेन 'पुत्रावलः, उत्सङ्गावलः' इति संज्ञायां भवतीत्यसंज्ञायां दीर्घाभावः ॥

( ९४० विधिसूत्रम् ॥ ५ । २ । २ आ. ५४ )

## २१३२ अत इनिठनौ ॥ ५ । २ । ११५ ॥

( इनिठनोरधिकरणम् )

( ५७७८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ इनिठनोरेकाक्षरात्प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **इनिठनोरेकाक्षरात्प्रतिषेधो वक्तव्यः ॥ स्ववान्, खवान् ।**

**अत्यल्पमिदमुच्यते ॥**

( उपसंख्याने श्लोकभाष्यम् )

**एकाक्षरात्कृतो जातेः**
**सप्तम्यां च न तौ स्मृतौ ॥**

**एकाक्षरात्—स्ववान् । खवान् ।**

**कृतः—कारकवान् । हारकवान् ।**

**जातेः—वृक्षवान् । प्लक्षवान् । व्याघ्रवान् । सिंहवान् ।**

**सप्तम्यां च न तौ—दण्डा अस्यां शालायां सन्तीति ॥**

( उद्योतः ) भाष्ये—**एकाक्षरात्कृतो जातेरिति** । दण्डशब्दस्तु दमनकरणत्वेन बोधक इति न जातिशब्द इति तत्र भवत्येवेति भावः ॥

( एकाक्षरादित्यादेः प्रत्याख्यानभाष्यम् )

**यदि कृतो नेत्युच्यते, कार्यी—कार्यिक इति न सिध्यति ।**

---

१ न्याय इति । सुमङ्गलीरित्यत्र सुष्ठु मङ्गलं यस्या इति बहुव्रीहिणाऽपि इष्टार्थस्य लाभात् कर्मधारयान्मत्वर्थीयो नोपपद्यते इत्येतन्मूलकः—न कर्मधारयान्मत्वर्थीय इति न्यायः ॥

२ वो मतुप्चेत्यर्थ इति । 'उद्वा' इत्यत्र वप्रत्ययः, 'उद्वती' इत्यत्र मतुप्प्रत्यय इत्यर्थः ॥

३ 'मिरन्निरचौ' इति च. झ. पाठः ॥

४ 'उच्यते–एकाक्षरादिति' इति च. झ. पाठः ॥

तथा जातेर्नेत्युच्यते, तण्डुली-तण्डुलिक इति न सिध्यति ॥

एवं तर्हि नायं समुच्चयः—कृतश्च जातेश्चेति ।

किं तर्हि ?

जातिविशेषणं कृद्ग्रहणम्—कृद्या जातिरिति ।

कथं कारकवान्, हारकवान् ?

अनभिधानान्न भविष्यति ॥

यद्येवं, नार्थोऽनेन ।

कथं—खवान्, खवान्, वृक्षवान्, सिंहवान्, व्याघ्रवान्, प्लक्षवान्, दण्डा अस्यां शालायां सन्तीति ?

अनभिधानान्न भविष्यति ॥

( ९४१ विधिसूत्रम् ॥ ५ । २ । २ आ. ५५ )

## २१३४ व्रीह्यादिभ्यश्च ॥ ५ । २ । ११६ ॥

( उपसंख्यानभाष्यम् )

### शिखादिभ्य इनिर्वाच्य इकन् यवखदादिषु ॥

किं प्रयोजनम् ?

नियमार्थम् । इनिरेव शिखादिभ्यः, इकन्नेव यवखदादिभ्यः ॥

( ५७७९ प्रत्याख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ शिखायवखदादिभ्यो नियमस्यावचनं निवर्तकत्वात् ॥ * ॥

( भाष्यम् ) शिखायवखदादिभ्यो नियमस्यावचनम् ।

किं कारणम् ?

निवर्तकत्वात् ।

किं निवर्तकम् ?

अनभिधानम् ॥

( ९४२ विधिसूत्रम् ॥ ५ । २ । २ आ. ५६ )

## २१३६ एकगोपूर्वाट्ठञ् नित्यम् ॥ ५ । २ । ११८ ॥

( ठञ्प्रत्ययाधिकरणम् )

( नित्यपदप्रयोजनभाष्यम् )

नित्यग्रहणं किमर्थम् ?

विभाषा मा भूत् ।

नैतदस्ति प्रयोजनम् ।

पूर्वस्मिन्नेव योगे विभाषाग्रहणं निवृत्तम् ।

एवं तर्हि सिद्धे सति यन्नित्यग्रहणं करोति तज्ज्ञापयत्याचार्यः—प्रागेतस्माद्योगात् 'विभाषा' इत्यनुवर्तत इति ॥

( उद्योतः ) भाष्ये—प्रागेतस्मादिति । एवञ्चात्रापि वाग्रहणानुवृत्त्या पक्षे मतुप्स्यादिति तन्निवृत्त्यर्थं नित्यग्रहणमिति भावः ॥

( अनुवृत्तिनिश्चायकभाष्यम् )

अथ 'अतः' इत्यनुवर्तते, उताहो न ।

किं चातः ?

यद्यनुवर्तते, ऐकगविको न सिध्यति ।

समासान्ते कृते भविष्यति ।

एवमपि गौशकटिको न सिध्यति ॥

अथ निवृत्तम् ।

इहापि प्राप्नोति—गोविंशतिरस्यास्तीति ।

निवृत्तम् ॥

इह कस्मान्न भवति—गोविंशतिरस्यास्तीति ?

अनभिधानान्न भविष्यति ॥

( उद्योतः ) समासान्ते कृते इति । न च तत्पुरुषे सिद्धावपि बहुव्रीहिद्वन्द्वयोर्न सिध्यतीति वाच्यम् । अनभिधानेन तत्राप्रवृत्तेः ॥ गौशकटिक इति । शकटिशब्देन समास इति भावः । यद्यप्यकारान्तशकटशब्देनेदं सिध्यति, तथापीकारान्तेन विग्रहे 'गोशकटिमान्' इत्यस्यापत्तिरिति भावः ॥ निवृत्तमिति । 'द्वन्द्वोपताप-' इत्यादौ तु मण्डूकानुवृत्त्याऽत इत्यस्य सम्बन्ध इति भावः । इदं च 'समासान्ताः' इति सूत्रे भाष्ये स्पष्टम् । वृत्तिकृतस्तु प्रमाद इति बोध्यम् ॥

( ९४३ विधिसूत्रम् ॥ ५ । २ । २ आ. ५७ )

## २१३८ रूपादाहतप्रशंसयोर्यप् ॥ ५ । २ । १२० ॥

( यप्प्रत्ययाधिकरणम् )

( ५७८० उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥*॥ यप्प्रकरणेऽन्येभ्योऽपि दृश्यते ॥ * ॥

( भाष्यम् ) यप्प्रकरणेऽन्येभ्योऽपि दृश्यते इति वक्तव्यम् । हिम्याः पर्वताः । गुण्या ब्राह्मणाः ॥

( ९४४ विधिसूत्रम् ॥ ५ । २ । २ आ. ५८ )

## २१४० बहुलं छन्दसि ॥ ५ । २ । १२२ ॥

( विनिप्रत्ययाधिकरणम् )

( ५७८१ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजाहृदयानां दीर्घश्च ॥ * ॥

( भाष्यम् ) छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभय-

रुजाहृदयानां दीर्घश्चेति वक्तव्यम् । अष्ठ्रावी । मेखलावी । द्वयावी । उभयावी । रुजावी । हृदयावी ॥

मर्मणश्चेति वक्तव्यम् ।

मर्मावी ॥

( उद्द्योतः ) भाष्ये—दीर्घश्चेति । द्वयोभयहृदयार्थमिदम् ॥

( ५७८२ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ सर्वत्रामयस्य ॥ * ॥

( भाष्यम् ) सर्वत्रामयस्योपसंख्यानं कर्तव्यम् । आमयावी ॥

( ५७८३ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ शृङ्गवृन्दाभ्यामारकन् ॥ * ॥

( भाष्यम् ) शृङ्गवृन्दाभ्यामारकन् वक्तव्यः । शृङ्गारकः । वृन्दारकः ॥

( ५७८४ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ फलबर्हाभ्यामिनच् ॥ * ॥

( भाष्यम् ) फलबर्हाभ्यामिनच् वक्तव्यः । फलिनः । बर्हिणः ॥

( ५७८५ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ हृदयाचालुरन्यतरस्याम् ॥ * ॥

( भाष्यम् ) हृदयाचालुर्वक्तव्योऽन्यतरस्याम् । हृदयालुः । हृदयी । हृदयिकः । हृदयवान् ॥

( ५७८६ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ शीतोष्णतृप्रेभ्यस्तन्न सहते ॥ * ॥

( भाष्यम् ) शीतोष्णतृप्रेभ्यस्तन्न सहत इति चालुर्वक्तव्यः । शीतालुः । उष्णालुः । तृप्रालुः ॥

( ५७८७ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ हिमाच्चेलुः ॥ * ॥

( भाष्यम् ) हिमाच्चेलुर्वक्तव्यः, तन्न सहत इत्येतस्मिन्नर्थे । हिमेलुः ॥

( उद्द्योतः ) चालुचेलू चितावित्येके । अचितौ । अत एव '—चैलुः' इत्यत्र क्वचित्पुस्तके वृद्धिर्दृश्यते ॥

( ५५८८ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ बलाचोलः ॥ * ॥

( भाष्यम् ) बलाच्च ऊलो वक्तव्यस्तन्न सहत इत्येतस्मिन्नर्थे । बलूलः ॥

( ५७८९ उपसंख्यानवार्तिकम् ॥ ९ ॥ )

॥ * ॥ वातात्समूहे च ॥ * ॥

( भाष्यम् ) वातात्समूहे च तन्न सहते इत्येतस्मिन्नर्थे च ऊलो वक्तव्यः । वातूलः ॥

( ५७९० उपसंख्यानवार्तिकम् ॥ १० ॥ )

॥ * ॥ पर्वमरुद्भ्यां तप् ॥ * ॥

( भाष्यम् ) पर्वमरुद्भ्यां तप् वक्तव्यः । पर्वतः मरुत्तः ॥

( उद्द्योतः ) पर्वमरुद्भ्यां तबिति । पिदयम् । नित्पाठस्तु लेखकप्रमादात् । मरुत्तस्य मध्योदात्तस्यैवेष्टेः ॥

( ५७९१ तप्प्रत्याख्यानवार्तिकम् ॥ ११ ॥ )

॥ * ॥ ददातिवृत्तं वा ॥ * ॥

( भाष्यम् ) ददातिवृत्तं वा पुनरेतद्भविष्यति । मरुद्भिर्दत्तो मरुत्तः ॥

( उद्द्योतः ) तदेव ध्वनयन् तपं प्रत्याचष्टे—ददातिवृत्तं वेति । अत्र पक्षे उपसर्गसंज्ञायां मरुच्छब्दस्योपसंख्यानात् 'अच उपसर्गात्' इति तत्वम् । अन्यच्चोपसर्गकार्यमस्य नेति तत्रैव निरूपितम् । अत्र पक्षे 'तृतीया कर्मणि' इति पूर्वपदप्रकृतिस्वरेण मध्योदात्तत्वं स्पष्टमेव ।

केचित्तु—एवं हि तत्वविधावेव मरुत्त इति पठेत् । तस्मात्संज्ञाप्रकरणे प्रथमाध्याये पाठोऽनेकसंज्ञालाभाय । 'अनेकफलाय' इति तु न युक्तम्, उपसर्गत्वस्य फलान्तराय चारितार्थ्येऽजन्तत्ववैकल्यात्तत्वानापत्त्या मरुत्त इत्युदाहरणपरभाष्यविरोधापत्तेः । एवञ्च निपातत्वमप्यस्येति तन्मूलकमाद्युदात्तत्वं दुर्वारमेव । तच्च तत्वविषये एवेति 'मरुद्भिः' इत्यादिप्रयोगोपपत्तिः । एवञ्च नित्पाठ एवोचितः । वेदे क्वचिन्मध्योदात्तत्वं तु छान्दसत्वाद्बोध्यम् । मरुच्छब्दान्मतुप् न, ततो रूढ्यर्थाप्रतीतेः—इति प्रत्याख्यानाशय इत्याहुः ॥

---

( ९४५ विधिसूत्रम् ॥ ५ । २ । २ आ. ५९ )

## २१४३ आलजाटजौ बहुभाषिणि ॥ ५ । २ । १२५ ॥

( आलजाटच्प्रत्ययाधिकरणम् )

( एकदेशिभाष्यम् )

कुत्सित इति वक्तव्यम् ।

यो हि सम्यग्बहु भाषते वाग्मीत्येव स भवति । तर्त्तार्हि वक्तव्यम् ॥

---

१ 'इदम्'—दीर्घविधानमित्यर्थः ॥

२ 'हृदयाचालुः—हिमाच्चेलुः' एतौ प्रत्ययौ चितौ वर्तेते इति एके । 'आलुः—एलुः' इत्येतावेवाचितौ प्रत्ययावित्यपरे । क्वचित्पुस्तके 'हिमाच्चेलुः' इति समुच्चयार्थकचकारसहितो वार्तिकपाठो दृश्यते इत्यर्थः ॥

३ तदेव ध्वनयन्निति । तपः पित्त्वेन मरुत्तशब्दस्य मध्योदात्तत्वस्यैवेष्टत्वं ध्वनयन्नित्यर्थः ॥

४ अत्र पक्षे—तप्प्रत्याख्यानरूपे ददातिवृत्तमिति पक्षे ।

५ संज्ञाप्रकरणे इति । उपसर्गाः क्रियायोगे ( १।४।५८ ) इति सूत्रे हि वार्तिककृता 'मरुच्छब्दस्योपसंख्यानम्' इत्युक्तम् ॥

६ अनेकसंज्ञालाभायेति । गतिनिपातोपसर्गसंज्ञालाभायेत्यर्थः ॥

( समाधानभाष्यम् )

**न वक्तव्यम् ।**

**नानायोगकरणसामर्थ्यान्न भविष्यति ॥**

( उद्द्योतः ) नानायोगेति । पूर्वसूत्रेऽपि 'बहुभाषिणि' इति सम्बध्यत[1] इति भावः ॥

( ९४६ निपातनसूत्रम् ॥ ५ । २ । २ आ. ६० )

## २१४४ स्वामिन्नैश्वर्ये ॥ ५ । २ । १२६ ॥

( निपातनाधिकरणम् )

( अतिव्याप्त्याक्षेपनिरासभाष्यम् )

**इह कस्मान्न भवति—स्वमस्यास्तीति ?**

**नैष दोषः ।**

**नायं प्रत्ययार्थः ।**

**किं तर्हि ? ।**

**प्रकृतिविशेषणमेतत्—'स्वामिन्नैश्वर्ये निपात्यते' इति ॥**

( प्रदीपः ) **स्वमस्येति** । धनवाच्यत्र स्वशब्दः ॥ **नायं प्रत्ययार्थ इति** । प्रत्ययार्थविषयत्वात्प्रत्ययार्थ उच्यते ॥ **ऐश्वर्ये इति**—यदि विषयसप्तमी स्यात्तदा ईशितरि धनवाचिनोऽपि प्रत्ययः स्यात् । प्रकृत्यर्थस्त्वैश्वर्यमिहोपात्तमिति वृत्तिविषय एव च स्वशब्द ऐश्वर्ये वर्तते । तेन धनवान्निर्धनो वा ईशिता स्वामिशब्दाभिधेयः ॥

( उद्द्योतः ) 'स्वशब्दादामिनज्भवति अस्त्यर्थे, षष्ठ्यर्थश्चेदैश्वर्यविषयोऽर्थादैश्वर्यवान्भवति' इति सूत्रार्थं मत्वा पूर्वपक्षः । यस्य धनमस्ति स तदैश्वर्यवानिति भावः ॥ नन्वैश्वर्यवान्प्रत्ययाऽर्थो न त्वैश्वर्यमत आह—**प्रत्ययार्थविषयादिति** । प्रत्ययार्थे विशेषणत्वादित्यर्थः ॥ भाष्ये—**प्रकृतिविशेषणमिति** । प्रकृत्यर्थबोधकमित्यर्थः ॥ **स्वामिन्नैश्वर्ये इति** । ऐश्वर्ये वर्तमानस्वशब्दस्य 'स्वामिन्' इति निपात्यत इत्यर्थः ॥ **यदि विषयेति** । प्रत्ययार्थविशेषणं यदि स्यादित्यर्थः ॥ नन्वन्यत्रापि स्वशब्दस्यैश्वर्ये प्रयोगापत्तिरत आह—**वृत्तिविषये इति** । स चैतद्वृत्तिविषये एव । अत एव 'धनस्य स्वामी' इत्यपि भवति । धनवाचिनस्तु मतुबेव ॥

( ९४७ विधिसूत्रम् ॥ ५ । २ । २ आ. ६१ )

## २१४७ वातातीसाराभ्यां कुक्च ॥ ५ । २ । १२९ ॥

( इनिप्रत्ययाधिकरणम् )

( उपसंख्यानभाष्यम् )

**पिशाचाच्चेति वक्तव्यम् । पिशाचकी वैश्रवणः ॥**

( ९४८ विधिसूत्रम् ॥ ५ । २ । २ आ. ६२ )

## २१५३ पुष्करादिभ्यो देशे ॥ ५ । २ । १३५ ॥

( ५७९२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ इनि प्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम् ॥ * ॥

**( भाष्यम् ) इनि प्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानं कर्तव्यम् । बाहुबली । ऊरुबली ॥**

( ५७९३ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सर्वादेश्च ॥ * ॥

**( भाष्यम् ) सर्वादेश्चेनिर्वक्तव्यः । सर्वधनी । सर्वबीजी । सर्वकेशी ॥**

( ५७९४ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अर्थाच्चासंनिहिते ॥ * ॥

**( भाष्यम् ) अर्थाच्चासन्निहिते इनिर्वक्तव्यः । अर्थी ॥**

**असंनिहित इति किमर्थम् ?**

**अर्थवान् ॥**

( प्रदीपः ) **अर्थाच्चेति** । विरोधात् 'अस्ति' इति न संबध्यते । अर्थोऽसंनिहितोऽस्येत्यर्थेऽप्राप्त एवेनिर्विधीयते । तक्रकौण्डिन्यन्यायेनास्त्युपाधिकादिनेरभावः ॥

( उद्द्योतः ) **असन्निहित इति** । असन्निधानमत्र कालकृतम्, अत एव विरोधादस्तीत्यस्यासम्बन्धः, असन्निहितकर्तृकवर्तमानसत्ताया असम्भवात् ॥ ननु सन्निहितेऽप्यर्थशब्दात् 'अत इनिठनौ' इति दुर्वारमत आह—**तक्रेति** । 'अर्थी समर्थो विद्वान्' इति तु छान्दसत्वाद्बोध्यम् ॥

( ५७९५ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ तदन्ताच्च ॥ * ॥

**( भाष्यम् ) तदन्ताच्चेति वक्तव्यम् । धान्यार्थी । हिरण्यार्थी ॥**

( प्रदीपः ) **धान्यार्थीति** । धान्यमर्थ इति कर्मधारयः, धान्यार्थोऽसंनिहितोऽस्येति प्रत्ययः ॥

**( एकदेशिनः 'तदन्ताच्च' इति वार्तिकाक्षेपसमाधानभाष्यम् )**

**किमर्थं तदन्तादित्युच्यते न तदन्तविधिना सिद्धम् ? ।**

**ग्रहणवता प्रातिपदिकेन तदन्तविधिः प्रतिषिध्यते ।**

---

1 सम्बध्यत इति । बहुभाषिणीत्यस्य पूर्वसूत्रेऽपि सम्बन्धात् गिमिनिः प्रत्यय आलजाटौ च समानार्थौ इति एकयोगेनैवैते प्रत्यया विधेयाः । योगविभागसामर्थ्याच्चोत्तरसूत्रस्य कुत्सितार्थत्वम् । योगविभागो हि इष्टसिद्ध्यर्थ इति न विपरीतं शङ्कनीयमित्याशयः ॥

**एवं तर्हि—इनन्तेन सह समासो भविष्यति । धान्येनार्थी—धान्यार्थी ।**

**स हि समासो न प्राप्नोति ॥**

**यदि पुनरयमर्थयतेर्णिनिः स्यात्, एवमपि क्रियामेव कुर्वाणे स्यात् । तूष्णीमप्यासीनो यस्तत्समर्थान्याचरति सोऽभिप्रायेण गम्यते-अर्थी-अयमनेनेति ॥**

(प्रदीपः) **एवं तर्हीति** । धान्येनार्थी–धान्यार्थी, तृतीयासमासो भविष्यतीत्यर्थः ॥

**स हीति** । 'तृतीया तत्कृतार्थेन–' इत्यनेनार्थशब्देन समासो विधीयमानोऽर्थिशब्देन न प्राप्नोतीत्यर्थः । 'सुप्सुपा' इत्येतन्नाश्रितम्, न्याय्यस्य परिहारस्याभिधास्यमानत्वात् ॥

**एवमपीति** । कृतामुद्भूतक्रियासाधनाभिधायित्वात् । न ह्यगच्छन् 'गन्ता' इत्यभिधीयते ॥

(उद्द्योतः) भाष्ये—**धान्येनार्थीति** । नन्वत्र कथं तृतीया ? न करणे, अर्थिशब्दस्याक्रियावाचित्वात् । नापि प्रकृत्यादित्वात्, प्रथमार्थे एकदेशान्वयेऽपि विशिष्टेनासामर्थ्यात्समासाप्राप्तेः, 'धान्येन' इत्यस्यैकदेशान्वयानौचित्याच्चेति चेत्, न । हेतौ सत्त्वात् । अर्थवत्त्वे च धान्यं हेतुः । एतेन 'सापेक्षत्वादीदृशे विषये तद्धितस्यैव न प्राप्तिः, द्रव्यवाची तु न नित्यसाकाङ्क्ष इति स्पष्टमेव' इति परास्तम् । एवमेव 'धान्येन धनी' इत्याद्युपपत्तिः ॥

(भाष्ये) **अर्थयतेरिति** । एवञ्च करणतृतीयाऽन्तेन 'कर्तृकरणे–' इति समास इति भावः ॥ (भाष्ये) **तत्समर्थानीति** । प्रार्थना हि–लाभानुकूलः स्फुटं लाभेच्छाव्यञ्जको व्यापारः 'देहि' इत्यादिशब्दप्रयोगादिरूपः । तत्कर्तैव च णिन्यन्तस्यार्थः । यस्तु तदकुर्वन् तत्फललाभजनकक्रियान्तरमाचरति तत्रापीष्यतेऽयम्प्रयोग इति न णिन्यन्तस्यायं प्रयोग इति भावः । एतेन 'तत्समर्थाचरणकर्तरि 'पञ्चभिर्हलैः कृषति' इतिप्रयोगवदत्राप्ययं प्रयोगः सुलभः' इत्यपास्तम् । णिनिविग्रहरूपे 'अर्थयते' इति प्रयोगे तादृशव्यापारस्यैव प्रतीतेर्णिन्नन्तोऽपि तादृशार्थक एवेति तात्पर्यम् । **अर्थनम्–अर्थ** इत्यत्र तु लाभेच्छार्थक इति न दोष इत्युत्तरम् । कैयटोऽप्येतत्तात्पर्यक एव ॥ भाष्ये—**सोऽभिप्रायेणेति** । सोऽपीत्यर्थः ॥

**(सिद्धान्तभाष्यम्)**

**एवं तर्हि अयमर्थशब्दोऽस्त्येव द्रव्यपदार्थकः । तद्यथा—अर्थवानयं देश इत्युच्यते, यस्मिन् गावः सस्यानि च वर्तन्ते ।**

**अस्ति क्रियापदार्थको भावसाधनः—अर्थनमर्थ इति ।**

**तद्यः क्रियापदार्थकस्तस्येदं ग्रहणम् । एवं च कृत्वाऽर्थिकप्रत्यर्थिकावपि सिद्धौ भवतः ॥**

**इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥**

**॥ पादश्च समाप्तः ॥**

(प्रदीपः) **तद्यः क्रियापदार्थक इति** । नन्वत्रापि निरीहे न प्राप्नोति । नैष दोषः । णिनिपक्ष एव दोषस्यावतारः, णिनेः कर्तरि विधानात् । क्रियां हि कुर्वन् कर्तेत्युच्यते । मत्वर्थीयस्तु शेषसंबन्धे भवति । तत्र क्रियाकारकभावस्य न्यग्भावान्निरीहेऽपि सिद्धः प्रत्ययः ॥ **एवं च कृत्वेति** । यदि 'अर्थाच्चासंनिहिते' इत्युच्यते तदा–इनेरेव विधानाट्ठन्न स्यात् । अथापि णिनिना 'अर्थी' इति साध्यते, तथाऽप्यार्थिक इति न सिध्येदिति । क्रियापदार्थकत्वे 'अत इनिठनौ' इति प्रत्ययद्वयं सिध्यति । मतुप्तु क्रियापदार्थकादनभिधानान्न भवति । धनवाचिनोऽप्यनभिधानादिनिठनोरभावः ॥

**इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥**

**पादश्च समाप्तः ।**

(उद्द्योतः) भाष्ये—**तस्येदं ग्रहणमिति** । तद्धटितस्येदं[1] ग्रहणम् ॥

**अयं[2] प्रयोगः**, धान्यार्थीति[3] प्रयोग इत्यर्थः । एवञ्च धान्यशब्दस्य उक्तार्थकार्थशब्देन समासं कृत्वा धान्यार्थशब्दात् 'अत इनिठनौ' इतीनौ सिद्धः प्रयोगः । 'अर्थाच्च–' इति वार्तिके तु रूढत्वाद्द्रव्यवाचिन एव ग्रहणम् । एवञ्च क्रियावाचकादत इनिठनौ भवत एव । अत[4] एव 'अर्थिनश्च राजानो हिरण्येन' इति भाष्यप्रयोगः सङ्गच्छत इति भावः । तद्ध्वनयन्नाह—**एवञ्च कृत्वेति** ॥ **यद्यर्थाच्चासन्निहिते इत्युच्यत इति** । अत्र वार्तिके यद्युभयोरर्थशब्दयोर्ग्रहणमुच्यत इत्यर्थः ॥ **यद्वा**—एतदेवोच्यते[5]–क्रियापदार्थकस्तु अर्थशब्दो नास्त्येवेति यद्युच्यत इत्यर्थः ॥ **ठन्न स्यादिति** । अर्थादिनिरेव, स चासन्निहित एवेत्याश्रयणादिति भावः ॥ **अथापि णिनिनेति** । 'बहुलमाभीक्ष्ण्ये' इति बहुलग्रहणात्सुबन्तोपपदाभावेऽपीत्यर्थः । एतदुपयोगश्चिन्त्यः । न च 'अर्थाच्च' इति वार्तिकप्रत्याख्यानं फलम्, अनिच्छोरप्यसन्निहितधनस्यार्थिशब्देनाभिधानार्थं तदावश्यकत्वादित्याहुः । अत एव भाष्ये–अपिना अर्थीति–इनन्तसङ्ग्रहः ॥ नन्वेवं क्रियाशब्दान्मतुबपि

१ ननु 'तस्येदं ग्रहणम्' इति भाष्यमनुपपन्नं, 'धान्यार्थी' इत्येतन्नार्थशब्दस्य ग्रहणमत आह—तद्धटितस्येदं ग्रहणमिति ॥

२ भाष्यस्थग्रहणपदस्यार्थमाह—अयं प्रयोग इति ॥

३ तं च प्रयोगं प्रदर्शयति—धान्यार्थीतीति ॥

४ अत एव=क्रियावाचकादर्थशब्दादिनिठनोर्भवनादेव । 'अर्थिनश्च राजानो' इत्यत्र हि अर्थाच्चेति वार्तिकेनैवेनिप्रत्यये राजसविधे अर्थोऽसन्निहित इत्येवमाश्रयणीयं स्यात्, तच्चायुक्तमिति भावः ॥

५ एतदेवोच्यत इति । इत्युच्यत इत्यस्य एतदेवोच्यत इत्यर्थः ॥

स्यादत आह—मतुप्त्विवति । तदेवं भाष्ये 'तदन्ताच्च' इति वार्तिकं प्रत्याख्यातम्[1] ॥ नन्वेवं धनवाचकादस्त्युपाधिकादिनिठनौ स्यातामेव, ततश्च क्रियापदार्थकाभावेऽपि आर्थिकः सिद्धोऽत आह—धनेति । इनिग्रहणं दृष्टान्तार्थम् । तक्रकौण्डिन्यन्यायेनेनेरिवानभिधानाट्ठनोऽभाव इति तात्पर्यम् । अन्ये तु तक्रकौण्डिन्यन्यायस्य विधेयविषयत्वादनुवाद्योपाधिबाधे मानाभावाद्येननाप्राप्त्यभावाच्च उभयोरप्यनभिधानेनाभाव इत्याहुः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य द्वितीये पादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ॥

---

१ प्रत्याख्यातमिति । अर्थशब्दौ द्वौ—एको द्रव्यपदार्थकः, अपरश्च अर्थनमर्थ इति क्रियापदार्थकः । 'अर्थाच्चासन्निहिते' इति वार्तिके हि द्रव्यपदार्थकस्य ग्रहणम् । क्रियापदार्थकाच्च 'अत इनिठनौ' इत्यनेन इनिठनौ प्रत्ययौ भवतः । तेन च धान्यार्थी, आर्थिक इत्येतौ प्रयोगावुपपन्नौ । अनभिधानाच्च द्रव्यवाचकादिनिठनोरभावः । एवञ्च 'तदन्ताच्च' इति वार्तिकं भाष्यकृता प्रत्याख्यायते इति भावः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ८८६ | ४२ | २० | ६२ | ९४८ |
| अव्याख्यातसूत्राणि | ११३२ | ५१ | २७ | ७८ | १२१० |
| समुदितसूत्राणि | २०१८ | ९३ | ४७ | १४० | २१५८ |
| वार्तिकानि | ५६९८ | ६० | ३७ | ९७ | ५७९५ |



# पञ्चमाध्यायस्य तृतीय पादे

## प्रथममाह्निकम् ।

( तद्धितेषु प्राग्दिशीयाः )

( ९४९ संज्ञासूत्रम् ॥ ५ । ३ । १ आ. १ )

## २१५९ प्राग्दिशो विभक्तिः ॥ ५।३।१ ॥

( विभक्तिसंज्ञाऽधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**विभक्तित्वे किं प्रयोजनम् ?**

( प्रदीपः ) **किं प्रयोजनमिति** । प्रयोजनसामान्यविवक्षायामेकवचननिर्देशः ॥

( उद्द्योतः ) प्रयोजनानां बहूनामग्रे वक्ष्यमाणत्वात् किंप्रयोजनमित्येकवचनमनुपपन्नमत आह—**प्रयोजनसामान्येति** ॥

(५७९६ विभक्तिसंज्ञाप्रयोजनबोधकवार्तिकम् ॥ १ ॥)

**॥ * ॥ विभक्तित्वे प्रयोजनमित्प्रतिषेधः ॥ * ॥**

( भाष्यम् ) **इदानीम्, 'न विभक्तौ तुस्माः' १।३।४ इतीत्वप्रतिषेधः सिद्धो भवति ।**

**यद्येवं 'किमोत्' ५।३।१२ 'क प्रेप्सन् दीव्यसे, काद्र्ध्मासाः' अत्रापि प्राप्नोति ॥**

( प्रदीपः ) **इत्प्रतिषेध इति** । अन्यथा 'मिदचोऽन्त्यात्परः' इति देशविध्यर्था दानीमो मकारस्य 'हलन्त्यम्' इतीत्संज्ञा स्यात् ॥

( उद्द्योतः ) ननु फलाभावादेव नेत्संज्ञेत्यत आह—**अन्यथेति** । ईदानीमिति[1] स्यादिति भावः ॥

( ५७९७ प्रयोजनवार्तिकम् ॥ २ ॥ )

**॥ * ॥ तौ चोक्तम् ॥ * ॥**

( भाष्यम् ) **किमुक्तम् ?**

**विभक्तौ तवर्गप्रतिषेधः 'अतद्धिते' इति ॥**[2]

( प्रदीपः ) **तौ चोक्तमिति** । तवर्गस्य चोक्तमित्यर्थः । थमोरित्संज्ञापरित्राणार्थमुकारकरणमित्संज्ञायाः प्रतिषेधस्यानित्यत्वं ज्ञापयतीति तद्धितपर्युदासोऽपि न वक्तव्यः ॥

( उद्द्योतः ) तवर्गस्येत्त्वनिषेधात्ताविल्ययुक्तमत आह—**तवर्गस्येति** । 'तौ' इति विषयसप्तमीति भावः ॥ ननु तद्धितप्रतिषेधवचनारंभे गौरवमत आह—**थमोरिति** । 'न विभक्तौ–' इतिसूत्रभाष्ये तु प्राग्दिशीयेष्वस्याप्रवृत्तावुदित्वं ज्ञापकम् । दानीमो मस्य 'लोपो व्योः'इति लोपेन यकारं प्रश्लिष्य 'इत्संज्ञा न' इत्युक्तम् । वार्तिकानुसारेण त्वत्र प्रयोजनत्वोक्तिरिति बोध्यम् ॥

( ५७९८ सूत्रप्रयोजनवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ इदमो विभक्तिस्वरश्च ॥ * ॥**

( भाष्यम् ) **इदमो विभक्तिस्वरश्च प्रयोजनम् । इतः । इह । 'इदमस्तृतीयादिर्विभक्तिरुदात्ता भवति' इत्येष स्वरः सिद्धो भवति ॥**

( प्रदीपः ) **इतः । इहेति** । 'इतः' इति मुख्यमुदाहरणम् । अत्र हि लित्स्वरे प्राप्ते विभक्तेः 'ऊडिदम्–' इत्युदात्तत्वं भवति । 'इह' इत्यत्र तु प्रत्ययस्वरेणान्तोदात्तत्वं सिद्ध्यति ॥ ननु मध्येऽपवादा इति न्यायात् 'अनुदात्तौ सुप्पितौ' इत्येतं स्वरं विभक्तिस्वरो बाधते न लित्स्वरम्, लित्स्वर एव तु परत्वाद्विभक्तिस्वरं बाधते । नैष दोषः । 'ऊडिदम्' इत्येतत्सूत्रं 'लिति' इत्यत्रानुवर्तते । तेन लित्स्वरं बाधित्वा विभक्तिस्वरो भवति । तृतीयादिग्रहणेन च तृतीयामारभ्य प्राग्दिशः प्रत्यया विभक्तिसंज्ञा गृह्यन्ते ॥

( उद्द्योतः ) **लितीत्यत्रानुवर्तत इति** । अत्र चेदमेव भाष्यं मानम् । हरदत्तस्तु–'ऊडिद–' इत्यत्र 'अन्तोदात्तात्' इति वर्तते, तत्र निमित्तमेव लित्स्वरो विभक्तिस्वरस्येत्याह । तं विनाऽपि अन्तोदात्त एव इदम्शब्द इत्यन्ये ॥

( ५७९९ सूत्रप्रयोजनवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ त्यदादिविधयश्च ॥ * ॥**

( भाष्यम् ) **त्यदादिविधयश्च प्रयोजनम् । यतः, यत्र । कुतः, कुत्र । 'विभक्तौ' इति त्यदादिविधयः सिद्धा भवन्ति ॥**

( ९५० अधिकारसूत्रम् ॥ ५ । ३ । १ आ. २ )

## २१६० किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ॥ ५ । ३ । २ ॥

( ५८०० उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ बहुग्रहणे संख्याग्रहणम् ॥ * ॥**

( भाष्यम् ) **बहुग्रहणे संख्याग्रहणं कर्तव्यम् । इह मा भूत्—बहौ, बहोः–इति ॥**

( आक्षेपभाष्यम् )

**अथ किमर्थं किम उपसंख्यानं क्रियते न सर्वनाम्न इत्येव सिद्धम् ?**

( ५८०१ समाधानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ द्व्यादिप्रतिषेधात्किम उपसंख्यानम् ॥ * ॥**

( भाष्यम् ) **द्व्यादिप्रतिषेधात्किम उपसंख्यानं**

[1] इददानीमितीति । दानीमो मकारस्येत्संज्ञायां मिदचोऽन्त्यादित्यनेन इदमो मकारात्प्राक् 'दानी'स्यादिति इददानीमिति रूपसिद्धिरिति भावः ॥

[2] क. पुस्तके 'प्रतिषेधो न तद्धिते इति' इति पाठः ॥

क्रियते । 'अद्व्यादिभ्यः' इति प्रतिषेधे प्राप्ते किम उपसंख्यानं क्रियते ॥

( प्रदीपः ) किम उपसंख्यानमिति । उपेत्य सङ्ख्यानं=प्रतिपदं सूत्र उच्चारणमित्यर्थः । द्व्यादिषु किंशब्दस्य पाठे प्रयोजनं कश्च भवांश्च-'कौ' इति त्यदादीनां यद्यत् परं तच्छिष्यत इति किमः शेषः, द्व्यादिभ्यस्तु प्राक् पाठे भवतः शेषः स्यात् ॥

(उद्द्योतः) ननु किमः सूत्रे पाठात् उपसंख्यानं इत्ययुक्तमत आह—उपेत्येति ॥ ननु द्व्यादिभ्यः पूर्वमेव किम्शब्दः कुतो न पठ्यतेऽत आह—द्व्यादिष्विति । 'पूर्वशेषोऽपि दृश्यते' इति सत्त्वात् किम्ग्रहणं चिन्त्यप्रयोजनमिति कश्चित् । तन्न, भवतः शेषस्य कदाऽप्यदर्शनात् ॥

( ९५१ आदेशविधिसूत्रम् ॥ ५ । ३ । १ आ. ३ )

## २१६३ एतदोऽन् ॥ ५ । ३ । ५ ॥

( आदेशाधिकरणम् )

( नकारप्रयोजनभाष्यम् )

**क्वायं नकारः श्रूयते ?**

**न क्वचित् श्रूयते, लोपोऽस्य भवति 'नलोपः प्रातिपदिकान्तस्य' ८।२।७ इति ।**

**यदि न क्वचित् श्रूयते, किमर्थमुच्चार्यते ?**

**'अनेकाल्शित्सर्वस्य' १।१।५५ इति सर्वादेशो यथा स्यात् ॥**

( प्रदीपः ) इह केचिदशं पठन्ति, केचिदनम् । तत्रोत्तरपाठापेक्षो विचारः—क्वायं नकार इति । इत्कार्याभावादित्संज्ञायामसत्यां श्रवणेन भाव्यमिति प्रश्नः ॥ लोपोऽस्येति । नेत्संज्ञाद्वारेण लोपः । किं तर्हि ? संपादितानेकाल्व्यपदेशस्य कृतकार्यत्वाल्लक्षणान्तरेणेति भावः ॥

( उद्द्योतः ) केचिदिति—वृत्तिकृतः । अत्र द्वितीयपाठ एव सूत्रकृत्कृतः, भाष्यसम्मतेः ॥ नन्वनुबन्धानां सर्वत्राश्रवणेन किमस्यैव श्रवणविचारोऽत आह—इत्कार्याभावादिति ॥ नन्वित्त्वाभावे कथं लोपः ? उच्चारणसामर्थ्याच्चेत्यत आह—नेत्संज्ञेत्यादि ॥ लक्षणान्तरं-'नलोपः प्रातिपदिकान्तस्य' इति ॥

( प्रयोजनाक्षेपभाष्यम् )

**क्रियमाणेऽपि वै नकारे सर्वादेशो न प्राप्नोति ।**

**किं कारणम् ?**

**नलोपे कृते एकाल्त्वात् ।**

**इदमिह संप्रधार्यम्—नलोपः क्रियताम्, सर्वादेश इति ।**

**किमत्र कर्तव्यम् ?**

**परत्वान्नलोपः ।**

**असिद्धो नलोपः, तस्यासिद्धत्वात्सर्वादेशो भवति ॥**

(प्रदीपः) क्रियमाणेऽपीति । ननु यावदेतदः स्थाने आदेशो न प्रवृत्तस्तावत् प्रातिपदिकान्तत्वाभावान्नलोपाप्रसङ्गः । प्रवृत्तिकाले त्वनेकाल्त्वात्सिद्धः सर्वादेशः । एवं मन्यते—स्वरूपेणार्थेनार्थवत्त्वादप्रवृत्तोऽप्येतदः स्थाने बुद्धिस्थ इति प्रातिपदिकं भवत्येव । ततश्च नलोपे कृते अनेकाल्त्वाभावात्सर्वादेशो न प्राप्नोति ॥

(उद्द्योतः) ननु प्रयोगार्थं शास्त्रं, तत्र यावत् स्थाने न जातः, तावत् प्रयोगेऽनोऽभावात् कस्य प्रातिपदिकत्वमित्यत आह—एतदः स्थाने बुद्धिस्थ इति । बुद्धिविषयतया सत्त्वमिति भावः ॥

( समाधानभाष्यम् )

**परिगणितेषु कार्येषु नलोपोऽसिद्धः, न चेदं तत्र परिगण्यते ।**

**एवं तर्ह्यानुपूर्व्या सिद्धमेतत् । नात्राकृते सर्वादेशे प्रातिपदिकसंज्ञा प्राप्नोति, न चाकृतायां प्रातिपदिकसंज्ञायां नलोपः प्राप्नोति ।**

**तदानुपूर्व्या सिद्धमेतत् ॥**

( प्रदीपः ) आनुपूर्व्या सिद्धमिति । यदुक्तं 'स्वरूपेणार्थेनार्थवत्त्वात् प्रातिपदिकम्' इति । तदयुक्तम् । सर्वत्र स्वरूपप्रतिपत्तिसंभवादर्थवद्ग्रहणसामर्थ्याद्व्यतिरिक्तबाह्यार्थग्रहणात् । अन्यथा न क्वचिन्नकारस्य श्रवणं स्यात् ॥ नात्राकृत इति । अर्थवतः संज्ञाविधानात् स्थान्यर्थेनार्थवत्त्वमेष्टव्यमित्यर्थः ॥

( उद्द्योतः ) बाह्यार्थेति । अनुकरणानामप्यनुकार्यं बाह्यपदार्थ इति भावः । इदं तु नानुकरणम्, अनुकार्याभावादिति तात्पर्यम् ॥

( एकदेशिनो नकाराक्षेपभाष्यम् )

**नैतदस्ति प्रयोजनम् । अलोऽन्त्यस्य विधयो भवन्तीति—अकारस्याकारवचने प्रयोजनं नास्तीति कृत्वाऽन्तरेण नकारं सर्वादेशो भविष्यति ॥**

( प्रदीपः ) अकारस्याकारवचन इति । त्यदाद्यत्वं कृत्वाऽऽदेशं मन्यते । बाध्यबाधकभावमनपेक्ष्यैतदुक्तम् । तदपेक्षायां हि दकारस्य स्थाने त्यदाद्यत्वस्यास्य चात्वस्य विशेषो नास्तीति वक्तव्यम् ॥

( उद्द्योतः ) बाध्यबाधकेति । येन नाप्राप्तिन्यायेनेति भावः ॥ तदपेक्षायां हीति । अकारस्य प्राप्तावकारवचने फलं नास्तीति भाष्यं व्याचक्षते परे ॥

( समाधानभाष्यम् )

**अस्त्यन्यदकारस्याकारवचने प्रयोजनम् ।**

**किम् ?**

**येऽन्येऽकारादेशाः प्राप्नुवन्ति तद्बाधनार्थम् ।**

तद्यथा—'मो राजि समः क्वौ' ८।३।२५ इति मकारस्य मकारवचनसामर्थ्यादनुस्वारादयो न भवन्ति।

तस्मान्नकारः कर्तव्यः॥

(प्रदीपः) येऽन्य इति। एतच्छब्दाकारेण सह पररूपं लित्स्वरश्च बाध्येत॥

(सिद्धान्तिनो नकारप्रत्याख्यानभाष्यम्)

न कर्तव्यः।

क्रियते न्यास एव। प्रश्लिष्टनिर्देशोऽयम्-अ-अ-अ इति। सः 'अनेकाल्शित्सर्वस्य' इति सर्वादेशो भविष्यति॥

(५८०२ योगविभागे वार्तिकम्॥ १॥)

॥ * ॥ एतद् इति योगविभागः ॥ * ॥

(भाष्यम्) एतद् इति योगविभागः कर्तव्यः। एतदः 'एत' 'इत्' इत्येतावादेशौ भवतो रथोः।

ततः—अन्। अंश्च भवति एतद् इति॥

(प्रदीपः) योगविभाग इति। अन्बाधनार्थम्। तत्र रेफादिः 'अनद्यतने र्हिलन्यतरस्याम्' इति र्हिल्प्रत्ययः॥

(वार्तिकावतरणभाष्यम्)

केन विहिते थकारे एतद आदेश उच्यते॥

(५८०३ उपसंख्यानवार्तिकम्॥ २॥)

॥ * ॥ एतदश्च थम उपसंख्यानम् ॥ * ॥

(भाष्यम्) एतदश्च थम उपसंख्यानं कर्तव्यम्। एतत्प्रकारमित्थम्॥

तत्तर्हि उपसंख्यानं कर्तव्यम्?

(उपसंख्यानानुपयोगे भाष्यम्)

न कर्तव्यम्। एतज्ज्ञापयति—भवत्यत्र थमुरिति यदयं थकारादावादेशं शास्ति।

कुतो नु खल्वेतत्—ज्ञापकादत्र थमुर्भविष्यति, न पुनरयं एवासावविशेषविहितस्थकारादिस्तस्मिन्नादेशः स्यात्। इदमा थकारादिं विशेषयिष्यामः। इदमो यस्थकारादिरिति॥

(प्रदीपः) अविशेषविहित इति। 'प्रकारवचने थाल्' इति भावः॥ इदमेति। एवं च थमुना थाल् बाध्यते॥

(उद्द्योतः) भाष्ये-इदमो यस्थकारादिरिति। इदम इदम्शब्दमुच्चार्य विहितो यस्थकारादिरित्यर्थः। तथा च तत्सामर्थ्यात् 'एतदस्थमुः' इति वचनमनुमीयत इति भावः॥ नन्वेवमपि थाल् दुर्वारोऽत आह—एवञ्चेति॥

(९५२ विधिसूत्रम्॥ ५। ३। १ आ. ४)

२१६५ पञ्चम्यास्तसिल् ॥ ५ । ३ । ७ ॥

(९५३ विधिसूत्रम्॥ ५। ३। १ आ. ५)

२१६८ सप्तम्यास्त्रल् ॥ ५ । ३ । १० ॥

(त्रल्तसिलोरधिकरणम्)

(त्रल्तसिलोः प्रत्ययत्वादेशत्वविचारकभाष्यम्)

इदं विचार्यते—इमे तसिलादयो विभक्त्यादेशा वा स्युः परे वेति।

कथं च आदेशाः स्युः, कथं वा परे?

यदि 'पञ्चम्याः' 'सप्तम्याः' इति षष्ठी, तदा—आदेशाः।

अथ पञ्चमी, ततः—परे।

कुतः संदेहः?

समानो निर्देशः।

कश्चात्र विशेषः?

(५८०४ आदेशपक्षे दोषवार्तिकम्॥ १॥)

॥ * ॥ तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वस्मायादिविधिप्रतिषेधः ॥ * ॥

(भाष्यम्) तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वस्मायादिविधीनां[1] प्रतिषेधो वक्तव्यः।

सुब्लुक्—ततस्त्यः, यतस्त्यः। तत्रत्यः, यत्रत्यः। 'सुपो धातुप्रातिपदिकयोः' २।४।७१ इति सुब्लुक् प्राप्नोति। सुब्लुक्॥

स्वर—यदा। तदा। 'अनुदात्तौ सुप्पितौ' ३।१।४ इत्येष स्वरः प्राप्नोति। स्वर॥

गुण—कस्मात्, कुतः। 'घेर्ङिति' ७।३।१११ इति गुणः प्राप्नोति। गुण॥

दीर्घ—तस्मिन्, तर्हि। 'अतो दीर्घो यञि' 'सुपि च' ७।३।१०१; १०२ इति दीर्घत्वं प्राप्नोति। दीर्घ॥

एत्व—तेषु, तत्र। 'बहुवचने झल्येत्' ७।३।१०३ इत्येवं प्राप्नोति। एत्व॥

औत्त्व—कस्मिन्, कुत्र। 'इदुद्भ्यामौत्' 'अच्च घेः' ७।३।११७; ११९ इत्यौत्वं प्राप्नोति। औत्त्व।

स्मायादिविधिः—तस्मात्-ततः, तस्मिन्-तत्र। 'ङसिङ्योः स्मात्स्मिनौ' ७।१।१५ इति स्मायादयः प्राप्नुवन्ति॥

(उद्द्योतः) भाष्ये—कस्मिन् कुत्रेति। 'वा ह च च्छन्दसि' इत्यत्र 'वा' इति योगविभागाल्लोकेऽपि किमत्त्वलिति भावः। न च

[1] 'गुणदीर्घत्वैत्त्वौत्त्वस्मायादि-' इति क. च. झ. पाठः॥

च्छान्दसमेव भाष्ये उदाहृतमिति भ्रमितव्यम्, छन्दस्यापाद्यरूपाभावादिति कश्चित्। परे तु छान्दसमेवेदं, छन्दस्यपि न्यायविचारस्य कर्तुं योग्यत्वात्। अत एव छान्दसेषु शास्त्रेषु तत्तदुपाधिनिर्देशः सार्थक इत्याहुः ॥

( ५८०५ प्रत्ययत्वपक्षोपपादकवार्तिकम् ॥ २ ॥ )

**॥ * ॥ पञ्चमीनिर्देशात्सिद्धम् ॥ * ॥**

( भाष्यम् ) **सन्तु परे ॥**

( प्रदीपः ) **पञ्चमीनिर्देशादिति ।** आदेशपक्षस्य बहुदोषत्वात् प्राथम्यात्पञ्चम्याश्रयेण प्रत्ययपक्षाश्रयणमित्यर्थः ॥

( उद्योतः ) 'पञ्चमीनिर्देशात्सिद्धम्' इत्येतल्लब्धार्थस्य दूषणाय 'सन्तु परे' इत्यनुवादः ॥

( प्रत्ययत्वाक्षेपे भाष्यम् )

**यदि परे समानशब्दानां प्रतिषेधो वक्तव्यः। तस्मात्तस्यति । यस्मात्तस्यति । पञ्चम्यन्तात्परस्य तसेस्तसिल्भवतीति तसिल् प्राप्नोति ॥**

(प्रदीपः) **तस्मात्तस्यतीति ।** पञ्चमीनिर्देशे 'तसेश्च' इत्यस्यायमर्थः—पञ्चम्याः परस्य तसेस्तसिलादेशो भवतीति । तसेरिति च निर्देशे इकार उच्चारणार्थः । ततश्च धातोरपि तस्यतेः पञ्चम्याः परस्य तसिलादेशस्तद्धितादेशवत्प्रसज्येत । तद्विधानसामर्थ्याच्चाप्रत्ययत्वेऽपि लित्स्वरप्रसङ्गः । आदेशपक्षे तु नायं दोषः । 'अपादाने चाहीयरुहोः' इत्यत्राप्यादेशपक्षाश्रयणात्, ततश्च पञ्चम्याः स्थाने यस्तसिस्तस्य तसिल्विधानाद्धातोः प्रसङ्गाभावः ॥

( उद्योतः ) ननु इकारोच्चारणसामर्थ्याद्धातोर्न भविष्यतीत्यत आह—**इकार इति ॥ प्रसङ्ग इति**—कर्मणि घञ्, तसिलादेशः प्रसज्यत इत्यर्थः । 'प्रसज्येत' इति वा पाठः ॥ ननु षष्ठीपक्षेऽपि पञ्चमीस्थानिकतसिरप्रसिद्ध इति पञ्चम्या विशेषणासम्भवात् सर्वत्र प्रसङ्गस्तदवस्थ इति **'यदि परे'** इति भाष्यानुपपत्तिरत आह—**आदेशपक्षे त्विति ॥ नायं दोष इति ।** एतेन लुब्लुक्स्वरादिदोषाः सन्त्येवेति ध्वनितम्॥ **आदेशपक्षाश्रयणादिति ।** अपादाने वर्तमानपञ्चम्याः स्थाने तसिरित्यर्थ इति भावः ॥

( ५८०६ समाधानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ अनादेशे स्वार्थविज्ञानात्समानशब्दाप्रतिषेधः ॥ * ॥**

( भाष्यम् ) **अनादेशे स्वार्थविज्ञानात्समानशब्दानामप्रतिषेधः। अनर्थकः प्रतिषेधोऽप्रतिषेधः ।**

**तसिल्कस्मान्न भवति ?**

**स्वार्थविज्ञानात् । पञ्चम्यन्तात्परस्य तसेः स्वार्थे वर्तमानस्य तसिला भवितव्यम् । न चात्र पञ्चम्यन्तात्परस्तसिः स्वार्थे वर्तते ॥**

( प्रदीपः ) **स्वार्थे वर्तमानस्येति ।** पञ्चम्यन्तप्रकृत्यर्थे इत्यर्थः । इह स्वार्थिकैः साहचर्यात्तसिलादेशोऽपि स्वार्थिको विज्ञायते । यदि च स्वार्थिकस्य स्थाने भवति, ततः स्वार्थिको भवति । अथ वा 'तसेः' इतीकारो विवक्षितो न तूच्चारणार्थः ॥

( उद्योतः ) ननु तसुधातुरपि स्वस्यैवार्थे वर्ततेऽत आह—**पञ्चम्यन्तेति ।** पञ्चम्यन्तायाः प्रकृतेरर्थे इत्यर्थः ॥ ननु 'स्वार्थे' इति पदाभावात्स्वार्थे वर्तमानस्येत्यर्थालाभोऽत आह—**इहेति ।** वाक्यैकदेशन्यायेन तल्लाभ इति भावः ॥ **अथ वेति ।** 'स्वार्थे वर्तमानस्य' इत्यनेनेकारो विवक्षित इत्येव भाष्ये बोधितम्, इकारविशिष्टस्य तथात्वादिति भावः ॥

---

( ९५४ आदेशविधिसूत्रम् ॥ ५ । ३ । १ आ. ६ )

## २१६६ तसेश्च ॥ ५ । ३ । ८ ॥

( तसिलादेशाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**किमर्थं तसेस्तसिलुच्यते ?**

( ५८०७ प्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ तसेस्तसिल्वचनं स्वरार्थम् ॥ * ॥**

( भाष्यम् ) **तसेस्तसिल्वचनं क्रियते ।**

**किं प्रयोजनम् ?**

**स्वरार्थम्[2] । 'लिति' ६।१।१९३ प्रत्ययात्पूर्वमुदात्तं भवतीत्येष स्वरो यथा स्यात् ॥**

( प्रदीपः ) **स्वरार्थमिति ।** ननु त्यदाद्यत्वाद्यर्थत्वाद्रूपार्थमपि तसिल्वचनम् । न च विभक्त्यादेशपक्षाश्रयेण त्यदादिविधिसिद्धिः, आदेशपक्षस्य सदोषत्वात्परित्यागात् । एवं तर्हि स्थान्यादेशभावः किमर्थं आश्रितः । तसिश्चेति प्रत्यय एव परत्वात्तसेर्बाधकस्य तसिलो बाधकः कर्तव्यः । तस्य च विभक्तिसंज्ञकत्वात्त्यदादिविधिः सिध्यतीत्याशङ्क्य स्वरार्थमित्युक्तम् ॥

( उद्योतः ) **विभक्त्यादेशपक्षाश्रयेणेति ।** 'अपादाने चाहीयरुहोः' इत्यत्र–इति शेषः ॥ **सदोषत्वादिति ।** 'कुत आगच्छति' इत्यादौ गुणप्रसङ्गो दोषः ॥ **परत्वात्तसेर्बाधकस्य तसिलो बाधक इति ।** परत्वात्तसिलो बाधक इत्यन्वयः । 'अहीयरुहोः' इति पर्युदासेन क्रियानिमित्तकत्वाश्रयणात्स बहिरङ्गः, अयन्तु अन्तरङ्ग इति तसेरयं बाधक इत्यर्थः । अर्थकृतबहिरङ्गत्वाश्रयणमत्र न–इतीदं चिन्त्यम् । अत एव भाष्ये 'तसिलः परत्वात्तसिः' इत्युक्तम् । तस्मात्पूर्वत्रानुक्तं लित्वफलं वक्तुं 'स्वरार्थम्' इत्युक्तम् । तच्च पूर्वोक्तत्यदाद्यत्वादीनामप्युपलक्षणम् ॥

---

१ इदानींतनोपलब्धमदीपपुस्तकेषु 'प्रसज्येत' इत्येव पाठः, न 'प्रसङ्ग' इति पाठ उपलभ्यते ॥

२ 'क्रियते स्वरार्थम्' इति क. पाठः ॥

( सूत्राक्षेपे समाधानभाष्यम् )

ननु चायं तसिल् तसिं बाधिष्यते ।

न सिद्ध्यति ।

परत्वात्तसिः प्राप्नोति ।

तसिलोऽवकाशः—ततो हीयते, ततोऽवरोहति ।

तसेरवकाशः—ग्रामत आगच्छति, नगरत आगच्छति ।

इहोभयं प्राप्नोति—तत आगच्छति, यत आगच्छतीति । परत्वात्तसिः प्राप्नोति ।

तस्मात्सुष्ठूच्यते तसेस्तसिल्वचनं स्वरार्थमिति ॥

( ९५५ विधिसूत्रम् ॥ ५ । ३ । १ आ. ७ )

## २१६७ पर्यभिभ्यां च ॥ ५ । ३ । ९ ॥

( तसिलोऽधिकरणम् )

( ५८०८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पर्यभिभ्यां च सर्वोभयार्थे ॥ * ॥

( भाष्यम् ) पर्यभिभ्यां चेति यदुच्यते तत्सर्वोभयार्थे द्रष्टव्यम् । यावत्सर्वतस्तावत्परितः । यावदुभयतस्तावदभितः ॥

( उद्योतः ) भाष्ये—सर्वोभयार्थेति । अभिधानस्वभावमूलकमेतत् । 'ओदनं परिषिञ्चति' इत्यादौ वावचनानुवृत्तेः पक्षे तसिलभावो बोध्यः ॥

( ९५६ विधिसूत्रम् ॥ ५ । ३ । १ आ. ८ )

## २१७२ इतराभ्योऽपि दृश्यन्ते ॥ ५ । ३ । १४ ॥

( अतिव्याप्त्याशंकाभाष्यम् )

इह कस्मान्न भवति—सः, तौ, ते ॥

( उपसंख्यानभाष्यम् )

भवदादिभिर्योगे इति वक्तव्यम् ।

के पुनर्भवदादयः ?

भवान्, दीर्घायुः, देवानांप्रियः, आयुष्मानिति ।

स भवान्, तत्र भवान्, ततो भवान् ।

तं भवन्तम्, ततो भवन्तम्, तत्र भवन्तम् ।

तेन भवता, तत्र भवता, ततो भवता ।

तस्मै भवते, तत्र भवते, ततो भवते ।

तस्माद्भवतः, तत्र भवतः, ततो भवतः ।

तस्य भवतः, तत्र भवतः, ततो भवतः ।

तस्मिन् भवति, तत्र भवति, ततो भवति ॥

स दीर्घायुः, तत्र दीर्घायुः, ततो दीर्घायुः ।

तं दीर्घायुषम्, तत्र दीर्घायुषम्, ततो दीर्घायुषम् ॥

स देवानांप्रियः, तत्र देवानांप्रियः, ततो देवानांप्रियः ।

तं देवानांप्रियम्, तत्र देवानांप्रियम्, ततो देवानांप्रियम् ॥

स आयुष्मान्, तत्रायुष्मान्, तत आयुष्मान् ।

तमायुष्मन्तम्, तत्रायुष्मन्तम्, तत आयुष्मन्तम् ॥

( ९५७ विधिसूत्रम् ॥ ५ । ३ । १ आ. ९ )

## २१७५ अधुना ॥ ५ । ३ । १७ ॥

( अधुनाऽधिकरणम् )

( व्युत्पादकभाष्यम् )

अधुनेति किं निपात्यते ?

इदमोऽश्भावो धुना च प्रत्ययः,

इदमो वा लोपः, अधुना च प्रत्ययः । अस्मिन् काले-अधुना ॥

( ९५८ विधिसूत्रम् ॥ ५ । ३ । १ आ. १० )

## २१७६ दानीं च ॥ ५ । ३ । १८ ॥

( दानींप्रत्ययाधिकरणम् )

( प्रदीपः ) केचित्—इदानीम्—इति सूत्रं पठन्ति । अन्ये तु—दानीं च-इति ॥

( उद्योतः ) अन्ये त्विति । अयमेव पाठो 'न विभक्तौ-' इति सूत्रस्थभाष्यसंमतः ॥

( अतिव्याप्त्याशङ्काभाष्यम् )

इदानीम् । इदमस्तृतीयादिर्विभक्तिरुदात्ता भवतीत्येष स्वरः प्राप्नोति ॥

( प्रदीपः ) एष स्वर इति । 'अलोऽन्त्यस्य' इति वचनादन्त्यस्योदात्तत्वं प्राप्नोति ॥

( उद्योतः ) ननु तेनाप्याद्युदात्तत्वात्को भेदोऽत आह—अलोऽन्त्यस्येतीति ॥

( ५८०९ अतिव्याप्तिनिरासवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ दानीमिति निपातनात्स्वरसिद्धिः ॥ * ॥

( भाष्यम् ) दानीमिति निपातनात्स्वरसिद्धिर्भविष्यति । आद्युदात्तनिपातनं करिष्यते स निपातनस्वरो विभक्तिस्वरस्य बाधको भविष्यति ॥

( ५८१० प्रकारान्तरेण सिद्धिसाधकवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उक्तं वा ॥ * ॥

किमुक्तम् ?

आदौ सिद्धमिति ॥

( प्रदीपः ) आदौ सिद्धमिति । 'आदेः परस्य' इति वचनात् ॥

( ९५९ विधिसूत्रम् ॥ ५ । ३ । १ आ. ११ )

## २१७७ तदो दा च ॥ ५ । ३ । १९ ॥

( दाप्रत्ययाधिकरणम् )

( ५८११ सूत्रप्रत्याख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तदो दावचनमनर्थकं विहितत्वात् ॥ * ॥

( भाष्यम् ) तदो दावचनमनर्थकम् ।

किं कारणम् ?

विहितत्वात् ।

विहितोऽत्र दाप्रत्ययः—'सर्वैकान्यकिंयत्तदः काले दा' ५।३।१५ इति ॥

( प्रदीपः ) दावचनमिति । सूत्रकारेण तु 'अदाप्रत्ययः' कृत इत्याहुः । स्वरे च विशेषः, अदाप्रत्यये तदाशब्द आद्युदात्तो भवति । दाप्रत्यये त्वन्तोदात्तः ॥

( उद्योतः ) इत्याहुरिति । अत्रारुचिबीजं भाष्यविरोधः ॥

( ९६० विधिसूत्रम् ॥ ५ । ३ । १ आ. १२ )

## २१७८ तयोर्दार्हिलौ च च्छन्दसि ॥ ५ । ३ । २० ॥

( ५८१२ 'तयोः' इत्यस्यार्थनिर्देशवार्तिकम् ॥ १ ॥ )

॥*॥ तयोरिति प्रातिपदिकनिर्देशः ॥*॥

( भाष्यम् ) तयोरिति प्रातिपदिकनिर्देशो द्रष्टव्यः॥

द्वेष्यं विजानीयात्—तयोः-योगयोर्वा प्रत्यययोर्वेति ।

तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे—तयोरिति प्रातिपदिकनिर्देश इति ॥

( प्रदीपः ) योगयोर्वेति । तत्र पूर्वयोर्योगयोर्विषये दार्हिलौ भवतः । चशब्दाद्योगद्वयविहितौ प्रत्ययाविति सूत्रार्थः स्यात् । तत्र यदि यथासंख्यमाश्रीयते तत इदमश्छन्दसि 'इदा' 'इदानीम्' इति रूपद्वयमेव स्यात्, न तु 'अधुना—एतर्हि' इति, विशेषविहिताभ्यां छन्दोविषयाभ्यां दा-दानीभ्यां र्हिल्–अधुनाप्रत्यययोर्बाधप्रसङ्गात् । तदस्तु तदानीं तदा तर्हीतिरूपत्रयं सिद्ध्यत्येव । अथापि यथासंख्यानाश्रयणादिदमो र्हिल्विधीयते तथाप्यधुनेति छन्दसि न स्यादेव । अथ तयोरिति प्रत्ययपरामर्शः, तयो=पूर्वसूत्रविहितयोर्विषये दार्हिलौ भवतः, तदाऽऽनन्तर्यात्तद एव दार्हिलौ स्यातामिति इदमः 'इदा' इति न सिध्येत् ।

प्रातिपदिकपरामर्शे तु चकारेण यथाप्राप्त्यभ्यनुज्ञाने न कश्चिद्दोषः ॥

( उद्योतः ) 'योगयोः प्रत्यययोर्वा' इत्यर्थे दोषं दर्शयति—तत्रेति ॥ र्हिलधुनाप्रत्यययोरिति । अनद्यतने र्हिलः प्राप्तिः ॥

( ९६१ निपातनसूत्रम् ॥ ५ । ३ । १ आ. १३ )

## २१८० सद्यः परुत्परार्यैषमः परेद्यव्यद्य पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ॥५।३।२२॥

( निपातनाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

सद्य इति किं निपात्यते ?

( ५८१३ निपातने प्रकृतिप्रत्ययबोधकवार्तिकम् ॥ १ ॥ )

॥*॥ समानस्य सभावो द्यश्चाहनि ॥*॥

( भाष्यम् ) समानस्य सभावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये । समानेऽहनि सद्यः ॥

( वार्तिकावतरणभाष्यम् )

परुत्परारीति किं निपात्यते ?

( ५८१४ निपातने प्रकृतिप्रत्ययबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे ॥ * ॥

( भाष्यम् ) पूर्वपूर्वतरयोः परभावो निपात्यते, उदारी च प्रत्ययौ संवत्सरेऽभिधेये । पूर्वस्मिन् संवत्सरे परुत् । पूर्वतरे संवत्सरे परारि ॥

( वार्तिकावतरणभाष्यम् )

ऐषम इति किं निपात्यते ?

( ५८१५ निपातने प्रकृतिप्रत्ययबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ इदमः समसण् ॥ * ॥

( भाष्यम् ) इदमः समसण्प्रत्ययो निपात्यते संवत्सरेऽभिधेये । अस्मिन् संवत्सरे-ऐषमः ॥

( वार्तिकावतरणभाष्यम् )

परेद्यवीति किं निपात्यते ?

( ५८१६ निपातने प्रकृतिप्रत्ययबोधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ परस्मादेद्यव्यहनि ॥ * ॥

( भाष्यम् ) परस्मादेद्यविप्रत्ययो निपात्यतेऽहन्यभिधेये । परस्मिन्नहनि—परेद्यवि ॥

( वार्तिकावतरणभाष्यम् )

अद्येति किं निपात्यते ?

( ५८१७ निपातने प्रकृतिप्रत्ययबोधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ **इदमोऽश्भावो द्यश्च** ॥ * ॥

( भाष्यम् ) इदमोऽश्भावो निपात्यते द्यश्च प्रत्ययोऽहन्यभिधेये । अस्मिन्नहनि–अद्य ॥

( वार्तिकावतरणभाष्यम् )

पूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युरिति किं निपात्यते ?

( ५८१८ निपातने प्रकृतिप्रत्ययबोधकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ **पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्** ॥ * ॥

( भाष्यम् ) पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच्प्रत्ययो निपात्यतेऽहन्यभिधेये । पूर्वस्मिन्नहनि–पूर्वेद्युः । अन्यस्मिन्नहनि–अन्येद्युः । अन्यतरस्मिन्नहनि–अन्यतरेद्युः । इतरस्मिन्नहनि–इतरेद्युः । अपरस्मिन्नहनि–अपरेद्युः। अधरस्मिन्नहनि–अधरेद्युः। उभयोरह्नोः–उभयेद्युः । उत्तरस्मिन्नहनि–उत्तरेद्युः ॥

( ५८१९ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ **द्युश्चोभयात्** ॥ * ॥

( भाष्यम् ) उभयशब्दाद् द्युश्च वक्तव्यः । तस्मान्मनुष्येभ्य उभयद्युः ॥

( तद्धितेषु प्राग्दिवीयाः )

( ९६२ विधिसूत्रम् ॥ ५ । ३ । १ आ. १४ )

## २१८५ दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ॥ ५ । ३ । २७ ॥

( अस्तातिप्रत्ययाधिकरणम् )

( अतिव्याप्त्याशङ्काभाष्यम् )

**इह कस्मान्न भवति—पूर्वस्मिन् देशे वसतीति ?**

( प्रदीपः ) दिशां शब्दाः–दिक्शब्दाः, ये रूढ्या दिशो वाचकाः पूर्वादयस्ते गृह्यन्ते । न त्वैन्द्र्यादयो यौगिकाः । तत्र दिश उपलक्षणत्वेनोपादानादिहापि प्राप्नोति–पूर्वस्मिन् गुरौ वसतीति। अत्र हि देशसम्बन्धात्कालसम्बन्धाद्वा पूर्वशब्दो गुरौ वर्तते, तदर्थं विशेषणोपादानं–**दिग्देशकालेष्विति** । विभक्तीनामुपाधीनां च साम्येऽपि यथासंख्याभावः, तदर्थं स्वरितत्वाप्रतिज्ञानात् । तत्र यथा पूर्वादयः स्वभावाद्दिशि वर्तन्ते तथा देशकालयोरपि । यथा काले वर्तमाना दिशं नापेक्षन्ते तथा देशेऽपि दिगनपेक्षा–इति । '[१]ननु दिगवच्छिन्नत्वात्पूर्वे गुरवः पूर्वे ब्राह्मणाः–इति । एवं दिगवच्छिन्नत्वाद्देशोऽपि पूर्वादिः, तत्कथ मुच्यते–दिगनपेक्षेति चेत्; उच्यते । देशावच्छिन्ना दिगेव पूर्वादिरिति विनिगमनाविरहात्सुष्ठूक्तं देशेऽपि दिगनपेक्षा–इति' । यद्यपि भिन्नार्थे वृत्तित्वाद्भिन्ना एव पूर्वादयो दिग्देशकालेषु, तथापि तत्त्वव्यपदेशनिबन्धनसादृश्याश्रयो **दिक्शब्देभ्य** इति व्यपदेशः । अनिर्दिष्टार्थत्वाच्च स्वार्थेऽयं प्रत्ययः । एवं स्थिते चोदकः पृच्छति—**इह कस्मान्न भवति पूर्वस्मिन् देशे वसतीति** । पूर्वशब्दस्य दिक्छब्दत्वाद्देशवृत्तित्वाच्च प्रसङ्गः ॥

( **उद्योतः** ) स्पष्टप्रतिपत्तये उत्तरचोद्यावतारणाय च सूत्रार्थं निरूपयति–**दिशां शब्दा इति** ॥ शब्दग्रहणसामर्थ्यलभ्यमाह—**ये रूढ्येति** ॥ **दिश उपलक्षणत्वेनेति** । अत एव 'दिग्देशकालेषु' इति तद्विशेषणम्॥ **तथा देशेऽपीति** । वक्तृसंमुखदेशत्वादेस्तत्प्रवृत्तिनिमित्तत्वात् । न च दिशि पूर्वादयष्टाबन्ताः, देशकालयोस्त्वदन्ता इति देशकालवृत्त्योः कथं दिक्शब्दत्वेन व्यवहार इति वाच्यम् । टापः स्वार्थिकत्वेन द्योतकतया वाचकरूपे भेदाभावान्न दोषः । देशकालाभ्यां व्यपदेशस्तु न कृतः, गौरवापत्तेः ॥ **तत्त्वव्यपदेशेति** । तत्त्वव्यपदेशः—प्रत्यभिज्ञाप्रत्ययः, तस्य **निबन्धनं यत्सादृश्यं** तदाश्रयः=तन्निमित्तक इत्यर्थः ॥

( अतिव्याप्तिनिरासभाष्यम् )

**नैष देशः, देशविशेषणमेतत्** ॥

( प्रदीपः ) आचार्य आह—**नैष देशः, देशविशेषणमेतदिति** । अयमर्थः–विशेषणविशेष्ययोः काणखञ्जवत् कामचारात्तदा पूर्वार्थो विशेष्यत्वेन प्रक्रम्यते देशो विशेषणत्वेन तदा प्रत्ययो भवति । वृत्तौ विशेष्यं प्राधान्याद्विशेषणमन्तर्भावयितुं शक्नोति । सत्यपि चान्तर्भावे दिग्देशकालानामविशेषेणान्तर्भावाद्विशेषाभिव्यक्तये देशादिशब्दप्रयोगो भवति—'परस्ताद्दिश आगतो देशात्कालाद्वा' इति । यदा तु देशो विशेष्यत्वेन प्रक्रम्यते,पूर्वार्थो विशेषणत्वेन, तदा प्रत्ययाभावः। दिग्देशकालेष्वित्यनेन हि उपाधिभावो दिगादीनां समर्थितो न तु प्राधान्यं, नापि वृत्तौ गुणः प्रधानमन्तर्भावयितुं शक्नोति ॥ **नैष देश इति** । नैष पूर्वार्थो देशेन विशेष्यत इत्यर्थः । यो हि देशेन विशेष्यमाणो देशो भवति, ततः प्रत्ययः; न तु विशेषणादित्यर्थः ।

**अन्ये त्वाहुः**—अवध्यपेक्षार्थाभिधायिभ्यः पूर्वादिभ्यः प्रत्ययेन भवितव्यम् । इह तु पूर्वदेशेऽवधिनिरपेक्ष एव पूर्वशब्दः प्रयुज्यते । **तथा हि**—पूर्वदेशाद्दक्षिणापथं गच्छन् कुत आगतस्त्वमिति पृष्टः पूर्वदेशादागतोहमिति प्रतिवक्ति । प्रत्यागच्छंश्च दक्षिणपथादिति । तत्र **'नैष देशः'** इत्यस्यायमर्थः—नायमवधिमत्त्वेन देश उपात्तः । किं तर्हि? अवधिनिरपेक्षदेशस्यैतद्विशेषणम् । वास्तवी तु व्यवस्था विद्यत इति सर्वनामसंज्ञा प्रवर्तत एव ॥

( **उद्योतः** ) समानाधिकरणविशेषणत्वेन देशार्थकत्वमस्त्येवेत्यत आह—**विशेषणविशेष्ययोरिति । अत्रेदं चिन्त्यम्–गुणश-**

[१] क. पुस्तके '...' एतच्चिह्नस्थो ग्रन्थो दृश्यते । अन्यत्र न ।

ब्दयोः क्रियाशब्दयोर्विशेषणविशेष्यभावे कामचारेऽपि गुणद्रव्यशब्दयोस्तत्त्वे कामचाराभावः, 'पुरस्तादेशे इदं कृतम्'इत्यादौ देशस्य विशेषणत्वाननुभवाच, बहुव्रीह्यादौ प्रधानान्तर्भावेणापि वृत्तेर्दर्शनाच्च । तस्मादयमत्र भाष्यार्थः—नैष देशः=न देशत्वेन देशबोधकः, किन्तु देशविशेषणस्य पूर्वार्जितत्ववतः पूर्वाध्युषितत्ववतो वा बोधकः । ईदृशे चार्थे 'पुरस्तात्'शब्दस्यासाधुत्वं स्पष्टमेव—इति ॥ ननु वृत्तौ देशाद्यन्तर्भावे 'पुरस्ताद्दिशः' इति प्रयोगो न स्यादत आह—सत्यपि चेति ॥ देशो भवतीति । देशवाचको भवतीत्यर्थः ॥

'अन्ये तु' इति मतन्तु अक्षरस्वारस्याननुगुणत्वादरुचिग्रस्तमिति स्पष्टमेव । किञ्च वास्तवव्यवस्थामादायोपात्तव्यवस्थापदकं सर्वनामत्वं भवति, अनुपात्तव्यवस्थापदकः प्रत्ययो न प्रवर्तेत इत्यत्र मानाभावः ॥

( ९६३ विधिसूत्रम् ॥ ५ । ३ । १ आ. १५ )

## २१८६ दक्षिणोत्तराभ्यामतसुच् ॥ ५ । ३ । २८ ॥

( अतसुच्प्रत्ययाधिकरणम् )

( न्यासाक्षेपभाष्यम् )

**किमर्थमतसुच् क्रियते, न तसुजेव क्रियेत ?**

**तत्रायमप्यर्थः-स्वरार्थश्चकारो न कर्तव्यो भवति, प्रत्ययस्वरेणैव सिद्धम् ।**

**का रूपसिद्धिः—दक्षिणतो ग्रामस्य, उत्तरतो ग्रामस्य ?**

**दक्षिणोत्तरशब्दावकारान्तौ तसुशब्दः प्रत्ययः ॥**

( एकदेशिनः प्रयोजनभाष्यम् )

**भवेत्सिद्धम्—यदा अकारान्तौ ॥**

**यदा तु खलु आकारान्तौ तदा न सिद्ध्यति ॥**

( उद्द्योतः ) भाष्ये—आकारान्ताविति । यदा दिग्वाचकावित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**तदाऽपि सिद्धम् ।**

**कथम् ?**

**पुंवद्भावेन ।**

**कथं पुंवद्भावः ?**

**'तसिलादिष्वाकृत्वसुचः' ६।३।३५ इति ॥**

( प्रत्याक्षेपसमाधानभाष्यम् )

**न सिध्यति । भाषितपुंस्कस्य पुंवद्भावः, न चैतौ भाषितपुंस्कौ ॥**

( दक्षिणोत्तराशब्दयोर्भाषितपुंस्कत्वाभावबोधकभाष्यम् )

**ननु च भोः दक्षिणशब्द उत्तरशब्दश्च पुंसि भाष्येते ।**

**समानायामाकृतौ यद्भाषितपुंस्कमित्युच्यते, आकृत्यन्तरे चैतौ भाषितपुंस्कौ—**

**दक्षिणोत्तरेति दिक्शब्दौ,**

**दक्षिण उत्तर इति व्यवस्थाशब्दौ ॥**

(प्रदीपः) **आकृत्यन्तर इति ।** अन्या दिगाकृतिः, अन्या व्यवस्थाकृतिरिति भावः । दिशि वर्तमानाः पूर्वादयो निमित्तान्तरनिरपेक्षाः । देशकालयोस्तु व्यवस्थाऽपेक्षाः ॥

( उद्द्योतः ) अन्येति । दिशि वाच्यायामन्या आकृतिः, व्यवस्थाविषयदेशादौ वाच्येऽन्या आकृतिः प्रवृत्तिनिमित्तमित्यर्थः ॥ आकृतिभेदमेव दर्शयति—**दिशीत्यादि** । अवधिसापेक्षत्वासापेक्षत्वाभ्यामाकृतिभेदो गम्यत इत्यर्थः ॥ **निमित्तान्तरनिरपेक्षा इति ।** अवधिनिरपेक्षप्रवृत्तिनिमित्तकाः, प्रवृत्तिनिमित्ताभाव एव वेत्यर्थः ॥ **व्यवस्थापेक्षा इति ।** अवधिसापेक्षप्रवृत्तिनिमित्ता इत्यर्थः । तत्तदवधिकोदयाचलसन्निहितदेशत्वादिसमनियतं पूर्वदेशत्वादि दिग्वाचकेषु शब्द एव प्रवृत्तिनिमित्तम्, तदभाव एव वा-'तस्य भावः-' इति सूत्रोक्तरीत्या डित्थादिशब्देष्विव, अन्यत्र तु अवधिसाकाङ्क्षधर्म इति तात्पर्यम् ॥ भाष्ये—दिक्शब्दावित्यस्य दिग्बोधकपूर्वादिशब्दप्रवृत्तिनिमित्तकावित्यर्थः ॥

( व्यवस्थावाचित्वेऽपि दिग्वाचकत्वव्यवस्थाभाष्यम् )

**यदि पुनर्दिक्शब्दा अपि व्यवस्थाशब्दाः स्युः, कथं यानि दिगपदिष्टानि कार्याणि ?**

**दिशो यदा व्यवस्थां वक्ष्यन्ति ॥**

( प्रदीपः ) **यदि पुनरिति ।** सर्वत्र व्यवस्थाशब्दाः सन्त्विति भावः । **व्यवस्था-मर्यादेति केचिदाहुः ।** एवं तु 'उत्तराः कुरवः' इति संज्ञायां मर्यादाऽनपेक्षणात् कुरूनुत्तरेणाप्यासीनानाम् 'उत्तराः कुरवः' इति प्रयोगाद्व्यवस्थाभावादसंज्ञायामिति प्रतिषेधानर्थक्यप्रसङ्गात्—**यावद्द्रव्यमनपायो व्यवस्थेत्यपरे मन्यन्ते ।** दक्षिणा गाथका इति—सत्स्वेव गाथकेषु प्रावीण्यलक्षणस्य दाक्षिण्यस्य कादाचित्कत्वाद् व्यवस्थाऽभावः, दिग्देशकालसंज्ञासु तु व्यवस्थासद्भावः । **मर्यादालक्षणव्यवस्थावादिनस्तु**—'उत्तराः कुरवः' इत्यत्रापि

---

१ स्वोक्तमवधिनिरपेक्षप्रवृत्तिनिमित्तकत्वं पूर्वादिशब्दानामुपपादयति—तत्तदवधिकेत्यादि ॥

२ प्रवृत्तिनिमित्ताभाव एव वा-इत्यर्थमुपपादयति—तदभाव एव वेति । डित्थादिशब्देषु प्रवृत्तिनिमित्तस्याभावः 'तस्य भावः' इति सूत्रे प्रतिपादितः ॥

३ अन्यत्र-दिगतिरिक्तस्थले ॥

४ अवधिसाकाङ्क्षधर्म इति । प्रवृत्तिनिमित्तमिति शेषः । एवञ्च दिशि वाच्यायां शब्दः प्रवृत्तिनिमित्तम्, अन्यत्र तु धर्म इति तात्पर्यम् ॥

मेरुं जम्बुद्वीपं वाऽपेक्ष्योत्तरत्वविज्ञानात् प्रयोगकाले निरूढत्वाद्व्यवहारस्य प्रयोक्तृभिरनपेक्ष्यमाणाऽपि वस्तुतो व्यवस्थाऽस्तीति मन्यन्ते ॥

**अन्ये तु**—परस्परापेक्षात्मस्थितिर्व्यवस्थेत्याहुः ॥

**कथं यानीति** । 'दिक्शब्देभ्यः सप्तमी-' इत्यादिविहितानि । व्यवस्थाशब्दत्वे हि दिश उपलक्षणत्वं न स्यात्, तस्या निमित्तत्वाभावादिति भावः ॥

**दिशो यदेति** । निमित्तवतोऽप्यर्थस्योपलक्षणत्वात् । तथा च संख्याशब्दाः कालवृत्तयः कालशब्दत्वात्कालाधिकारविहितप्रत्ययभाजः—षष्टिवर्षाणि भूतः षाष्टिक इति भावः ॥

( **उद्योतः** ) **सर्वत्र व्यवस्थेति** । देशे इव दिश्यपि पृथ्वीमध्यावधिकोदयाचलसन्निहितत्वादिकमेव प्रवृत्तिनिमित्तमित्यभिमानः ॥ **मर्यादा**—अवधिः ॥ **यावद्द्रव्यमिति** । द्रव्योत्पत्तिक्षणमारभ्य नाशपर्यन्तं यत्र पूर्वादिव्यवहारानपाय इति हि तदर्थः ॥ **दिग्देशकालसंज्ञासु स्विति** । तद्वाचकेष्वित्यर्थः । [1]इदमपि 'अधरे ताम्बूलरागः' इत्यादावतिव्याप्तं, देशकालयोरव्याप्तं च, तद्धनयन्पुनः प्रागुक्तमेव लक्षणमाश्रयति—**मर्यादालक्षणेति** ॥ **मेरुं जम्बूद्वीपं चेति** । 'ये केचन परेण हिमवन्तं जनपदा उत्तरकुरव उत्तरमद्राः' इति श्रुतिविरुद्धमेतत् ॥ नन्वेवं तत्प्रयोगोऽपि स्यादत आह—**निरूढत्वाद्व्यवहारस्येति** ॥ **परस्परेति** । यावत्सुमेरुव्यवहारमेव पूर्वादिव्यवहारः, सुमेरुस्थितिपर्यन्तमेव 'उत्तराः कुरवः, दक्षिणा दिक्' इत्यादिव्यवहारा इति भावः । **आत्मा**—व्यवहारः । एवं यावद्दिग्व्यवहारमेव सुमेरुव्यवहार इति मन्यन्ते । देशादिवाचकेषु कथमस्योपपत्तिरिति चिन्त्यम् । इदमेवात्रारुचिबीजम् ।

**व्यवस्थाशब्दत्वे हीति** । दिक्शब्दानामपि व्यवस्थाऽपेक्षप्रवृत्तिनिमित्तकत्वे इत्यर्थः । **अयं भावः**—प्रवृत्तिनिमित्तमादाय हि तत्तच्छब्दत्वव्यवहारः । यथा—जातिशब्दो गुणशब्द इत्यादौ । एवञ्च 'दिक्शब्दत्वम्' इत्यस्य 'दिगुपलक्षितः शब्दः' इत्यर्थो वाच्यः, स च न सम्भवति, तदेवाह—**उपलक्षणत्वं न स्यादिति** ॥ तत्र हेतुमाह—**निमित्तत्वाभावादिति** । प्रवृत्तिनिमित्तत्वाभावादित्यर्थः । प्रवृत्तिनिमित्तस्य हि शब्दोपलक्षणत्वं दृष्टम् । एवञ्च व्यवस्थाशब्दत्वे दिक्शब्दत्वाभावात्तानि कार्याणि न स्युरिति भावः ॥ भाष्ये—**दिशो यदा व्यवस्थां वक्ष्यन्तीति** । आकाशवदेकस्यैव दिक्पदार्थस्य व्यवस्थामौपाधिकं भेदं यदा वक्ष्यन्तीत्यर्थः । उपाधिश्च मध्याह्नसूर्यसंयोगिदेशावधिकोदयाचलास्ताचलसन्निहितदेशतात्कालिकसूर्यसम्मुखयावद्देशतात्कालिकतत्पृष्ठस्थयावद्देश इति वदन्ति । मध्याह्ने सूर्यस्योदङ्मुखत्वात् । एवं च तत्राऽपि उदयाचलसन्निहितत्वादिकमेव प्रवृत्तिनिमित्तम्, अवधिः परं पृथिवीमध्यमेकमेवेति समानायामाकृतौ भाषितपुंस्कत्वमक्षतमेव । एवञ्च विशेष्यतया दिग्बोधकशब्दत्वमेव दिक्शब्दत्वमिति भावः ॥ तदेवाह—**निमित्तवतोऽपीति** । विशेष्यभूतस्यापीत्यर्थः ॥

( व्यवस्थावाचित्वेऽतिप्रसङ्गापादकभाष्यम् )

**यदि तर्हि यो यो दिशि वर्तते स स दिक्शब्दः । रमणीयादिष्वतिप्रसङ्गो भवति—रमणीया दिक्, शोभना दिगिति ॥**

( प्रदीपः ) एतत्पक्षाश्रयेऽतिप्रसङ्गमाह—**यदि तर्हीति** । रमणीयादयो गुणक्रियानिमित्ता दिशि वर्तमाना दिक्शब्देन व्यपदिश्येरन्नित्यर्थः ॥

( अतिप्रसङ्गनिरासभाष्यम् )

**अथ मतमेतत्—दिशि दृष्टो दिग्दृष्टः, दिग्दृष्टः शब्दो दिक्शब्द इति दिशं यो न व्यभिचरति न रमणीयादिष्वतिप्रसङ्गो भवति ।**

**पुंवद्भावस्तु न प्राप्नोति ।**

**एवं तर्हि सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वक्तव्यः—दक्षिणोत्तरपूर्वाणामित्येवमर्थम् ॥**

( प्रदीपः ) **दिशं यो न व्यभिचरतीति** । व्यवस्थानिमित्तो यो न भवति, स्वभावत एव यो दिशि वर्तत इत्यर्थः । 'दिशि दृष्टः' इत्यर्थप्रदर्शनं 'दिशां शब्दः' इति तु षष्ठीसमासः । स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो दिशो यो वाचकः पूर्वादिशब्दः स दिक्शब्द आश्रीयते, शब्दग्रहणात् । अन्यथा दिग्भ्य इत्येव ब्रूयादित्यर्थः । यद्येवं, दिशः पूर्वादीनि नामधेयानि—इति 'असंज्ञायाम्' इति सर्वनामसंज्ञानिषेधात् 'पूर्वस्यां दिशि वसति' इत्यादि न सिध्यति, पौरुषेयसंज्ञाश्रयणात् । इह च तदभावाददोषः ॥

**पुंवद्भावस्त्विति** । दिशि वर्तमानानां प्रवृत्तिनिमित्तानपेक्षणात् समानायामाकृतौ भाषितपुंस्कत्वाभावात् ॥

**सर्वनाम्न इति** । यद्यपि दिशि वर्तमानानां व्यवस्था न प्रवृत्तिनिमित्तं तथापि वास्तवी व्यवस्था विद्यत इति सर्वनामसंज्ञायाः प्रवर्तनात् ॥ तदेत्रं 'व्यवस्थायाम्' इति विषयो निर्दिश्यते न तु प्रवृत्तिनिमित्तं, 'सर्वनाम्नः' इत्येतच्चावश्यं कर्तव्यमित्याह—**दक्षिणोत्तरपूर्वाणामिति** । अयं समानाकृतित्वानपेक्षः पुंवद्भावः । दिग्वाचिनां त्रयं द्वन्द्वः ॥ **वृत्तिमात्र इति** । तद्धितवृत्तिः समासवृत्तिश्च ॥

( **उद्योतः** ) ननु व्यवस्थाविषयप्रवृत्तिनिमित्तकस्यापि टाबन्तस्य दिश्येव वृत्तेस्तस्यापि दिग्व्यभिचाराभावात् 'पुंवद्भावस्तु न सिध्यति' इत्यग्रिमभाष्यमसङ्गतमत आह—**व्यवस्थानिमित्त इति** ॥ **स्वभावत एवेति** । दिगतिरिक्तप्रवृत्तिनिमित्तभूतार्थानपेक्षयेत्यर्थः । एवं च 'दिशं यो न व्यभिचरति' इति भाष्यस्य—दिगतिरिक्तमर्थं प्रवृत्तिनिमित्तत्वेनापि यो नाश्रयत इत्यर्थः । **दिशि दृष्ट** इति भाष्यस्य—दिशि रूढ्या दृष्ट इत्यर्थः । तदाह—**स्वरूपव्यतिरिक्तेति** । **स्वरूपं**—वाचकशब्दस्वरूपम् । यद्वा—**स्वरूपं**—वाच्यदिक्स्वरूपम् । तस्यैव विषयताद्वयेन भानमिति बोध्यम् ॥ **पौरुषेयेति** । दिक्षु त्वैश्वरः सङ्केत इति भावः । अत एव 'विश्वेषां देवानाम्' इति

1 इदमपीति । यावद्द्रव्यमनपायो व्यवस्थेति व्यवस्थालक्षणमपीत्यर्थः ॥

सिद्धम् । एवं च दिग्वाचकानां व्यवस्थाऽपेक्षप्रवृत्तिनिमित्तकत्वाभाव इति स्थितम् । नन्वेषां व्यवस्थाप्रवृत्तिनिमित्तकत्वेऽपि 'दिशमेव यो विशेष्यतयाऽऽह स दिक्शब्दः' इत्याश्रयणान्न रमणीयादिष्वतिप्रसङ्गः, पुंवत्त्वस्य च सिद्धिः, इति चेन्न; अतिरिक्तार्थरूपप्रवृत्तिनिमित्तप्रकारकबोधाननुभवेन तथा वक्तुमशक्यमिति भाष्याशयात् । किञ्च तादृशप्रवृत्तिनिमित्तमाश्रित्य देशकालयोरपि बोधात्त्वदुक्तार्थो वक्तुमशक्यः । मम तु स्वरूपव्यतिरिक्तप्रवृत्तिनिमित्तनिरपेक्षो दिग्बोधको दिक्शब्दः । न हि तथा देशादिबोधः, किन्तु प्रवृत्तिनिमित्तान्तरसापेक्ष एवेति न दोषः ॥ **प्रवृत्तिनिमित्तानपेक्षणादिति** । दिग्व्यतिरिक्तार्थरूपप्रवृत्तिनिमित्तानपेक्षणादित्यर्थः ॥ **व्यवस्था नेति** । व्यवस्थासापेक्षं न प्रवृत्तिनिमित्तमित्यर्थः ॥ **तथापि वास्तवीति** । पृथ्वीमध्यभागादुदयाचलपर्यन्तदेशरूपोपाध्यायवच्छिन्नायां दिशि रूढिस्वीकारादित्यर्थः । तादृशोपाधिविशिष्टाया दिशो बोधात्तदन्तर्गततया व्यवस्थाऽस्त्येवेति भावः ॥

**न तु प्रवृत्तिनिमित्तमिति** । व्यवस्थाऽपेक्षप्रवृत्तिनिमित्ते सतीति नार्थ इति भावः ॥ ननु भाषितपुंस्कत्वाभावेऽयमपि पुंवद्भावः कथमत आह—**अयमिति** ॥ तत्र बीजं दर्शयति—**दिग्वाचिनां त्विति** ॥

( न्यासप्रयोजनभाष्यम् )

**विशेषणार्थं तर्हि ।**

**क्व विशेषणार्थेनार्थः ?**

**'षष्ठ्यतसर्थप्रत्ययेन' २।३।३० इति । षष्ठी तसर्थप्रत्ययेनेत्युच्यमाने इहापि स्यात्—ततो ग्रामात्, यतो ग्रामादिति ॥**

( प्रदीपः ) **ततो ग्रामादिति** । अन्यादियोगे पञ्चमीं बाधित्वा षष्ठी स्यात् । यदा ग्रामस्यापादानत्वं तदा 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' इति न्यायादप्रसङ्गः षष्ठ्याः ॥

(उद्द्योतः) ननु 'ततो ग्रामात्' इत्यस्य 'आगच्छति' इत्यादावन्वयेऽपादानत्वात्पञ्चमी सिद्धा । न च तदा षष्ठ्याः प्रसङ्गः, पञ्चम्याः कारकविभक्तित्वादत आह—**अन्यादीति** ॥

---

( ९६४ निपातनसूत्रम् ॥ ५ । ३ । १ आ. १६ )

## २१८९ उपर्युपरिष्टात् ॥ ५ । ३ । ३१ ॥

( निपातनाधिकरणम् )

( वार्तिकावतरणभाष्यम् )

**उपर्युपरिष्टादिति किं निपात्यते ?**

( ५८२० सूत्रार्थनिर्देशवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ऊर्ध्वस्योपभावो रिलृरिष्टातिलौ च ॥ * ॥

( भाष्यम् ) **ऊर्ध्वस्योपभावो रिलृरिष्टातिलौ च प्रत्ययौ निपात्येते । उपरि, उपरिष्टात् ॥**

---

( ९६५ निपातनसूत्रम् ॥ ५ । ३ । १ आ. १७ )

## २१९० पश्चात् ॥ ५ । ३ । ३२ ॥

( वार्तिकावतरणभाष्यम् )

**पश्चादिति किं निपात्यते ?**

( ५८२१ सूत्रार्थप्रत्यायकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अपरस्य पश्चभाव आतिश्च प्रत्ययः ॥ * ॥

( भाष्यम् ) **अपरस्य पश्चभावो निपात्यते, आतिश्च प्रत्ययः । पश्चात् ॥**

( उद्द्योतः ) भाष्ये—अपरस्येति । लिङ्गविशिष्टपरिभाषयाऽपराशब्दस्यापि ॥

( ५८२२ उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ दिक्पूर्वपदस्य च ॥ * ॥

( भाष्यम् ) **दिक्पूर्वपदस्य चापरस्य[1] पश्चभावो वक्तव्यः, आतिश्च प्रत्ययः । दक्षिणपश्चात्, उत्तरपश्चात्[2] ॥**

( उद्द्योतः ) दक्षिणपश्चादिति । दक्षिणाया अपरस्याश्चान्तरालं दिगिति विग्रहः । तस्यामित्यातिप्रत्ययः ॥

( ५८२३ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ अर्धोत्तरपदस्य च समासे ॥ * ॥

( भाष्यम् ) **अर्धोत्तरपदस्य च समासे अपरस्य पश्चभावो वक्तव्यः । दक्षिणपश्चार्धः, उत्तरपश्चार्धः ॥**

( उद्द्योतः ) समासे इति । 'दिग्वाचकैः' इति शेषः ॥

( ५८२४ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ अर्धे च ॥ * ॥

( भाष्यम् ) **अर्धे च परतोऽपरस्य पश्चभावो वक्तव्यः । पश्चार्धः ॥**

( उद्द्योतः ) अर्धे चेति । 'विनाऽपि दिग्वाचकपूर्वपदम्' इति शेषः ॥

---

( ९६६ विधिसूत्रम् ॥ ५ । ३ । १ आ. १८ )

## २१९३ एनबन्यतरस्यामदूरेऽपञ्चम्याः ॥ ५ । ३ । ३५ ॥

( एनप्प्रत्ययाधिकरणम् )

( ५८२५ अनुवृत्तिनिर्द्धारकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अपञ्चम्या इति प्रागसः[3] ॥ * ॥

( भाष्यम् ) **अपञ्चम्या इति यदुच्यते प्रागसस्तद् द्रष्टव्यम् ।**

---

१ 'दिक्पूर्वपदस्यापरस्य' इति क. पाठः ॥

२ 'उत्तरपश्चात्' इत्यस्य क. पुस्तके न पाठः ॥

३ 'प्रागसेः' इति क. पाठः ॥

द्वेष्यं विजानीयात् अविशेषेण इत उत्तरमपञ्चम्या इति । तदाचार्यः सुहृद् भूत्वाऽन्वाचष्टे—'अपञ्चम्या इति प्रागसः' इति ॥

( ९६७ विधिसूत्रम् ॥ ५ । ३ । १ आ. १९ )

## २१९४ दक्षिणादाच् ॥ ५ । ३ । ३६ ॥

( आच्प्रत्ययाधिकरणम् )

( चकारप्रयोजनभाष्यम् )

किमर्थश्चकारः ?

स्वरार्थः,

चितोऽन्त उदात्तो भवतीति अन्तोदात्तत्वं यथा स्यात् ॥

( प्रयोजनाक्षेपभाष्यम् )

नैतदस्ति प्रयोजनम् । एकाजयं, तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् ॥

( सिद्धान्तिनः समाधानभाष्यम् )

विशेषणार्थस्तर्हि ।

क्व विशेषणार्थेनार्थः ?

'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' २।३।२९ ॥

( प्रदीपः ) विशेषणार्थ इति । वाक्यस्मरणयोर्य आकारोऽननुबन्धकस्तद्व्यावृत्तय इत्यर्थः ॥

( उद्योतः ) वाक्येत्यादि । यद्यपि स आकारो न प्रत्ययस्तथाप्यन्यादिसाहचर्यादप्रत्ययस्य तस्यैव ग्रहणापत्तिरिति भावः ॥

( ९६८ विधिसूत्रम् ॥ ५ । ३ । १ आ. २० )

## २२०० संख्याया विधार्थे धा ॥ ५ । ३ । ४२ ॥

( धाप्रत्ययाधिकरणम् )

( प्रदीपः ) यदा विधाशब्दः स्त्रीलिङ्ग उपादीयते तदा तस्यानेकार्थत्वादनिष्टेऽपि विषये प्रसङ्गः । यदा तु विधानं विध इति 'घञर्थे कविधानम्' इति के कृते पुल्लिङ्गनिर्देशस्तदा तस्यैकार्थत्वान्नानिष्टप्रसङ्गः ॥

( उद्योतः ) विधशब्दार्थः प्रकार एव प्रसिद्ध इति संशयानुपपत्तेराह—यदेति ॥ एकार्थत्वादिति । प्रकाररूपपृथग्भावमात्रार्थकत्वादित्यर्थः ॥ पृथग्भावः—भेदः ॥

( विधार्थजिज्ञासाभाष्यम् )

विधार्थ इत्युच्यते, को विधार्थो नाम ?

विधाया अर्थो विधार्थः ॥

यद्येवम्—एका गोविधा, एका हस्तिविधा—अत्रापि प्राप्नोति ।

एवं तर्हि—

( प्रदीपः ) विधाया अर्थ इति—आचार्यदेशीयवचनम् ॥ गोविधेति । अन्नं-विधा—उच्यते ॥

( ५८२६ विधार्थनिर्धारकवार्तिकम् ॥ १ ॥ )

॥ * ॥ धाविधानं धात्वर्थपृथग्भावे ॥ * ॥

( भाष्यम् ) धाविधानं धात्वर्थपृथग्भाव इति वक्तव्यम् ।

( धात्वर्थपृथग्भावजिज्ञासाभाष्यम् )

कः पुनर्धात्वर्थपृथग्भावः ?

किं यत्तद्देवदत्तः कंसपात्र्यां पाणिना ओदनं भुङ्क्ते इति ।

नेत्याह ।

कारकपृथक्त्वमेतत् ॥

यत्तर्हि तत्-कल्ये भुङ्क्ते, सायं भुङ्क्ते इति ।

नेत्याह ।

कालपृथक्त्वमेतत् ॥

यत्तर्हि शीतं भुङ्क्ते, उष्णं भुङ्क्ते इति ।

नेत्याह ।

गुणपृथक्त्वमेतत् ॥

( प्रदीपः ) कः पुनरिति । किं धातुकृतोऽर्थो धात्वर्थ इति कारकं विवक्षितम्, अथ वा धातोरर्थो धात्वर्थः=क्रिया विवक्षितेति प्रश्नः ॥ कल्य इति । कल्यमहर्मुखमुच्यते । कालपृथग्भावात् पृथग्भावं मन्यते ॥

( उद्योतः ) धातुकृत इति । धात्वर्थकृत इत्यर्थः । तेन कारकं कर्मादिव्यपदेशयुक्तं क्रियत इति तद्धात्वर्थकृतमिति भावः । अत्र कारककालगुणेषु स्वतो भेदः, क्रियायां तु स्वतोऽसम्भवात्प्रकारकृतः, क्रियाया धातुना निवृत्तभेदाया एवोक्तेरिति बोध्यम् ॥ पृथग्भावं मन्यत इति । 'क्रियायाः' इत्यादिः । उत्तरं तु कालस्यैव पृथक्त्वं=भेदो गम्यते, न तु तत्कृतः क्रियाया इति ॥

( धात्वर्थपृथग्भावनिर्धारकभाष्यम् )

कस्तर्हि धात्वर्थपृथग्भावः ?

कारकाणां प्रवृत्तिविशेषः-क्रिया ॥

यद्येवं क्रियाप्रकारेऽयं भवति । विध्युक्तगताश्च प्रकारे भवन्ति । एवंविधम्, एवंयुक्तम्, एवंगतम्—एवंप्रकारमिति ॥

( प्रदीपः ) कारकाणामिति । पूर्वपदार्थविषये एव प्रश्नप्रतिवचने, पृथग्भावस्य सुज्ञानत्वात्तद्विषयप्रश्नायोगात् । तत्र पञ्चधा गच्छतीत्येकस्या गमनक्रियायाः शब्देन निवृत्तभेदायाः प्रकारलक्षणपृथग्भावप्रतिपत्तिः ॥

यद्येवमिति । सूत्रन्यासेनैव सिद्धे वार्तिकं नारम्भणीयमित्यर्थः । तथा हि—सामान्यस्य भेदको विशेषः प्रकार उच्यते । न च गुणकालकारकपृथक्त्वे किंचित्सामान्यमुपात्तं, यस्य प्रकारः स्यात् ॥

ननु सूत्रन्यासे 'पञ्चधा श्लोकाः' इत्यादावपि प्रत्ययेन भाव्यम्, वार्तिकन्यासे तु न भाव्यम्। 'एकधा भुङ्क्ते' इति च पृथग्भावाभावात्प्रत्ययस्य न प्रसङ्ग इति भिन्नं फलं सूत्रवार्तिकयोः। नैष दोषः। 'पञ्चधा श्लोकाः' इत्यादौ क्रियापदाप्रयोगेऽपि 'अस्ति' इति क्रियापदानुषङ्गादस्ति क्रियापृथग्भावः। 'एकधा भुङ्क्ते' इत्यादावनेकप्रकारभुजिक्रियापेक्ष एकप्रकारस्य भुजेरस्त्येव पृथग्भावः। 'एकः पाकः' इत्यादौ प्रकारस्याविवक्षितत्वात् प्रत्ययाभावः। प्रकारविवक्षायां तु भवत्येव 'एकधा पाकः' इति। 'पञ्च पाकाः' इत्यादौ भिन्ना एव पाकाः, न त्वेकस्य प्रकारवत्त्वं विवक्षितमिति प्रत्ययो न भवति। 'पञ्चधा पाकः' इत्यादौ तु भवत्येव ॥

( उद्द्योतः ) ननु विशिष्टप्रश्ने विशेषणांशमात्रप्रत्युत्तरमयुक्तमत आह—**पूर्वपदार्थेति** ॥ भाष्ये—**प्रवृत्तिविशेष** इत्यस्य विवरणं—**क्रियेति** ॥ **शब्देनेति**। 'आख्यातशब्देनोपस्थितायाः' इति शेषः। अनेन क्रियाया एकत्वं समर्थितम् ॥ **प्रकारलक्षणेति**। पञ्चशब्देनेति भावः। एतेन पञ्चशब्दस्य क्रियापृथग्भाववृत्तित्वमुक्तम्। 'चैत्रमैत्रदेवदत्ताः पचन्ति'इत्यादौ त्रिधेति न, शब्दत एकत्वेनोपस्थिताया यत्र सङ्ख्यया भेदप्रतिपादनं तत्रैव धाप्रत्ययोत्पत्तेरिति बोध्यम्। तदुक्तं—**निवृत्तभेदाया** इत्यादि ॥ **भेदको विशेष इति**। पञ्चसङ्ख्यारूपभेदकधर्मवद्गमनमिति बोधः ॥ नन्वेवं कारकादिपृथक्त्वेऽपि 'द्विधा चतुर्धा भुङ्क्ते' इत्याद्यापत्तिरत आह—**न च गुणेति**। उक्तेष्विति भावः ॥

**पञ्चधा श्लोक इति**। अस्य पञ्चप्रकारः श्लोक इत्यर्थः। अत्र भेदकः=विशेषः=छन्दआदिः ॥ **क्रियापदानुषङ्गादिति**। एवञ्च सत्तायाः पञ्चप्रकारत्वं कर्तुः पञ्चप्रकारत्वादेव—इति श्लोकस्यापि तत्त्वमर्थसिद्धमिति भावः ॥ **अस्तीति**-योग्यक्रियोपलक्षणम्। एवञ्च सूत्रेऽप्यभिधानस्वाभाव्यात्क्रियाविषय एव प्रकारो गृह्यत इति भावः। 'द्विधा गच्छति' इत्यादावेकस्या एव क्रियाया अवान्तरप्रकारः प्रतीयत इति बोध्यम् ॥ **प्रकारस्याविवक्षितत्वादिति**। पाकव्यक्तेरेकत्वमेव विवक्षितम्, न त्ववान्तरप्रकारभेदाभावेनैकप्रकारकत्वमित्यर्थः ॥ **इत्यादौ त्विति**। एकस्यैवानेकप्रकारवत्त्वविवक्षणादिति भावः ॥

( ९६९ विधिसूत्रम् ॥ ५ । ३ । १ आ. २१ )

## २२०२ एकाद्धो ध्यमुञन्यतरस्याम् ॥ ५ । ३ । ४४ ॥

( ध्यमुञोऽधिकरणम् )

( प्रदीपः ) धाग्रहणेऽनुवर्तमाने पुनर्धाग्रहणं धामात्रस्यादेशार्थम्। अन्यथाऽऽनन्तर्यादधिकरणविचाल एव ध्यमुञ् विज्ञायेत। ततश्च विधार्थे न स्यात्—ऐकध्यं भुङ्क्ते इति ॥

( उद्द्योतः ) **धाग्रहण इति**। अनुवर्तमानस्य च पूर्वमेव विहितस्य पुनर्विधानासम्भवात्स्थानित्वमेव विज्ञास्यत इति भावः ॥ **धामात्रस्येति**। विधार्थे विहितस्यापीत्यर्थः। एतदर्थमेव स्थान्यादेशभावाश्रयणम्, प्रत्ययान्तरेऽप्येतद्दोषात्। अनन्तरत्वात् 'अधिकरणविचाले' इत्यस्यैव सम्बन्धात् ॥

( ५८२७ पूर्वपक्षिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ सहभावे ध्यमुञ् ॥ * ॥

( भाष्यम् ) **सहभावे ध्यमुञ् वक्तव्यः। ऐकध्यं राशिं कुरु।**

**स तर्हि वक्तव्यः ?**

( प्रदीपः ) **सहभाव इति**। अनेकस्यार्थस्यैकीकरणं सहभावः। इहाधिकरणविचालः=एकस्य द्रव्यस्य विभागेनावस्थापनम्। यथा—एकं राशिं पञ्चधा कुरु इति। 'ऐकध्यं राशिं कुरु' इत्यत्र त्वेकस्य विभागावस्थापनाभावान्नास्त्यधिकरणविचाल इति मन्यते। वचनं तु विधार्थमेव स्यात्। धाग्रहणं तूत्तरार्थमेव स्यात्, द्वयोरर्थयोर्धमुञर्थम्—द्वैधं भुङ्क्ते, एकं राशिं द्वैधं कुर्विति ॥

( उद्द्योतः ) ननु तत्रापि 'अधिकरणविचाले' इत्येव सिद्धमत आह—**इहेति** ॥ **नास्त्यधिकरणेति**। एवञ्च 'अधिकरणविचाले' इत्यस्यासम्भवादत्रासम्बन्ध एवेति भावः। तदाह—**वचनं त्विति** ॥ नन्वेवं 'धः'इति व्यर्थमत आह—**धाग्रहणं त्विति**। 'द्वित्र्योश्च धमुञ्'इत्यादौ। तत्रार्थद्वयेऽपि धः सम्भवादिति भावः ॥

( समाधानभाष्यम् )

**न वक्तव्यः। 'अधिकरणविचाले' इत्युच्यते, न चावश्यं स एवाधिकरणविचालः—यदेकमनेकं क्रियते, यदप्यनेकमेकं क्रियते सोऽप्यधिकरणविचालः ॥**

( प्रदीपः ) **न चावश्यमिति**। **अधिकरणं**-द्रव्यमुच्यते। तस्य विचालः—अन्यथाकरणम्। तच्चैकस्यानेकीकरणमनेकस्य वा एकीकरणमिति सूत्रेणैवेष्टसिद्धिरित्यर्थः। अनेकस्य यदेकीकरणं तत्र प्रकाराभावात्तदर्थमेव 'अधिकरणविचाले च' इति सूत्रम्' एकस्यानेकीकरणे प्रकारस्यापि सम्भवात् पूर्वेणैव सिद्धत्वादित्याहुः ॥

( उद्द्योतः ) **इत्याहुरिति**। अत्रारुचिबीजं त्वनेकस्यैकीकरणेऽपि प्रकारसम्भवः, अत एव 'एकधा' इति सिद्धिरित्यन्ये ॥

( ९७० विधिसूत्रम् ॥ ५ । ३ । १ आ. २२ )

## २२०३ द्वित्र्योश्च धमुञ् ॥ ५।३।४५ ॥

( धमुञोऽधिकरणम् )

( ५८२८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ धमुञन्तात् स्वार्थे डदर्शनम् ॥ * ॥

( भाष्यम् ) **धमुञन्तात्स्वार्थे डो दृश्यते, स च विधेयः। पथि द्वैधानि। संशये द्वैधानि ॥**

( प्रदीपः ) **पथि द्वैधानीति**। स्वार्थिकत्वेऽपि स्वभावात्सत्ववाचित्वात् लिङ्गसंख्यायोगः, तत्रैकशेषेण बहुवचनम्। क्वचित्तु 'मतिद्वैधानि' इति पाठः ॥

(उद्द्योतः) ननु धमन्तस्याव्ययत्वात्ततः स्वार्थे डे तदन्तस्याप्यसत्त्वधर्मतया 'द्वैधानि' इत्ययुक्तमत आह—**स्वार्थिकत्वेऽपीति** ॥ **सत्त्ववाचित्वादित्यस्य**—प्रकारवद्वाचित्वादित्यर्थः ॥ बहुवचनं कथमत आह—**एकशेषेणेति** । पथि द्वैधानीत्यस्य—तद्विषये द्विप्रकाराणि ज्ञानानि, यद्वा पथि राशीन्द्वैधं कुर्वित्यर्थः । संशये द्विप्रकाराणि ज्ञानानीत्यन्त्यार्थः ॥

(९७१ विधिसूत्रम् ॥ ५ । ३ । १ आ. २३)

## २२०५ याप्ये पाशप् ॥ ५ । ३ । ४७ ॥

(पाशपोऽधिकरणम्)

(५८२९ याप्यार्थबोधकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ पाशपि कुत्सितग्रहणम् ॥ * ॥

(भाष्यम्) **पाशपि कुत्सितग्रहणं कर्तव्यम् । वैयाकरणपाशः । याज्ञिकपाशः ।**

**यो हि 'यापयितव्यो याप्यः' तत्र मा भूदिति ॥**

(प्रदीपः) याप्यशब्दोऽयमस्त्यपादानसाधनो यापिता अस्माद् गुण इति याप्यः=कुत्सितः । अस्ति कर्मसाधनो यापयितव्यो याप्यः, देशान्तरं प्रापयितव्य इत्यर्थः । तत्र विशेषानुपादानादतिप्रसङ्गं मत्वाऽऽह—**पाशपीति** ॥

(अतिप्रसक्तिनिवारकभाष्यम्)

**अथ वैयाकरणः शरीरेण कृशो व्याकरणेन च शोभनः, कर्तव्यो वैयाकरणपाश इति ।**

**न कर्तव्यः ।**

**कथम् ?**

**यस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने-तद्गुणे वक्तव्ये प्रत्ययेन भवितव्यम् । न च कार्श्यस्य भावात् द्रव्ये वैयाकरणशब्दः ॥**

(प्रदीपः) **तद्गुण इति** । कुत्सितत्वेन प्रतिपाद्य इत्यर्थः । एतच्चान्तरङ्गत्वाल्लभ्यते, प्रवृत्तिनिमित्तस्य प्रत्यासन्नत्वात् कुत्साश्रयणस्य न्याय्यत्वात् । यत्र तु प्रवृत्तिनिमित्तस्य कुत्सा न संभवति—अश्वको देवदत्तकः, सकः—इत्यादौ, तत्र सहचरितगुणक्रियाकुत्साश्रयेण प्रत्ययो भवत्येव । एवं च देवदत्तपाश इत्याद्यपि भवति, यद्यभिधानमस्ति ॥

(उद्द्योतः) भाष्ये—तदभिधानेत्यस्य व्याख्या—**तद्गुणे वक्तव्ये इति** ॥ ननु न वैयाकरणत्वरूपे गुणेऽयं प्रत्ययः, प्रकृत्यैवेतरनिरपेक्षशक्त्योक्तत्वादत आह—**कुत्सितत्वेनेति** ॥ **प्रत्यासन्नत्वादिति** । शब्दवाच्यत्वेनेति भावः । **कुत्साश्रयणस्येत्यस्य**—'तत्र' इत्यादिः ॥ **यत्र त्विति** । जातौ कुत्साद्यसम्भवादिति भावः । देवदत्तक इत्यादौ 'कुत्सिते' इति कन् ॥

(९७२ विधिसूत्रम् ॥ ५ । ३ । १ आ. २४)

## २२०६ पूरणाद्भागे तीयादन् ॥ ५ । ३ । ४८ ॥

(अन्प्रत्ययाधिकरणम्)

(पूरणग्रहणप्रयोजनभाष्यम्)

**पूरणग्रहणं शक्यमकर्तुम्, न ह्यपूरणस्तीयशब्दोऽस्ति यत्र दोषः स्यात् ।**

**ननु चायमस्ति—मुखतीयः, पार्श्वतीय इति ।**

**अर्थवद्ग्रहणे नानर्थकस्य—इत्येवमस्य न भविष्यति ।**

**उत्तरार्थं तर्हि पूरणग्रहणं कर्तव्यम्—'प्रागेकादशभ्योऽच्छन्दसि' (४९) इति पूरणाद्यथा स्यात् ॥**

(९७३ विधिसूत्रम् ॥ ५ । ३ । १ आ. २५)

## २२१० एकादाकिनिच्चासहाये ॥ ५ । ३ । ५२ ॥

(आकिनिचोऽधिकरणम्)

(५८३० पूर्वपक्षिण उपसंख्यानवार्तिकम् ॥ १ ॥)

### ॥ * ॥ एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम् ॥ * ॥

(भाष्यम्) **एकादाकिनिचि द्विबह्वर्थे प्रत्ययो विधेयः । एकाकिनौ[1] । एकाकिन इति ।**

**किं पुनः कारणं न सिध्यति ?**

**एकशब्दोऽयं संख्यापदम्, संख्यायाश्च संख्येयमर्थः ॥**

(प्रदीपः) **एकादाकिनिचीति** । एकशब्दः संख्यावाच्येवेति मन्यते । असहायग्रहणं च तदर्थस्य विशेषणत्वान्नाभिधेयनिर्देशः, अविद्यमानतुल्यजातीयैककार्यसहायार्थवाचिनः प्रत्ययो यथा स्यात्, एकमाकाशमित्यादौ मा भूदिति ॥

(उद्द्योतः) नन्वसहायार्थैकशब्दात्प्रत्ययविधानेन द्विबहोरपि सिध्यत्येवेत्यत आह—**एकशब्द इति** । प्रसिद्धतरत्वात्स एवात्र गृह्यत इतिमन्यत इत्यर्थः । एवञ्च शास्त्रे सर्वत्र एकशब्दानुवादे तस्यैव ग्रहणं न्याय्यम्, अन्यथा 'एकेऽल्पप्राणाः', 'तेनैकदिक्' इति भाष्यसूत्राज्ञानमपि[2] पूर्वपक्षिणः कल्प्यं स्यात् ॥ नन्वेवमसहायग्रहणं किमर्थमत आह—**असहायग्रहणमिति ॥ तदर्थस्य विशेषणत्वादिति** । एकशब्दार्थविशेषणत्वादित्यर्थः ॥ **नाभिधेयनिर्देश इति** । नैकशब्दार्थनिर्देश इत्यर्थः । अस्य 'मा भूत्'इत्यनेनान्वयः ॥ अर्थविशेषणत्वमुपपादयति—**अविद्यमानेति** । अविद्यमानस्तुल्यजातीय एककार्ये सहायो यस्यार्थस्य,

1 'एकाकी । एकाकिनौ । एकाकिन' इत्येवं पाठः क. पुस्तके ॥

2 भाष्यसूत्राज्ञानमपीति । एकेऽल्पप्राणा इत्यत्र एकशब्दस्य प्रथमार्थकत्वम्, तेनैकदिगित्यत्र च एकशब्दस्य समानार्थत्वम् । अत्रोभयत्रापि अनुवादाभावात्संख्यावाचकत्वाभावेऽपि न दोष इति भावः ॥

तादृशार्थवाचिन इत्यर्थः। एवं च संप्रयोगवद्विप्रयोगस्यापि विशेषावगतिहेतुत्वात् 'एकमाकाशम्' इत्यादिव्यावृत्तिरिति बोध्यम् ॥

( ५८३१ समाधानवार्तिकम् ॥ २ ॥ )

॥ * ॥ सिद्धं तु संख्यादेशवचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत्।

कथम्?

द्विबह्वर्थायाः संख्याया एकशब्द आदेशो वक्तव्यः ॥

( प्रदीपः ) कथं पुनर्द्विबह्वर्थे प्रत्ययो विधीयते? न ह्येकशब्दो द्विबह्वर्थे वर्तत इत्याह—**सिद्धं त्विति**। संख्यैवादेशः संख्यादेशः, स च द्विबहुशब्दयोरसहायस्य वेत्यर्थः। द्विबहुशब्दयोरप्यसहायग्रहणं विशेषणमाश्रयणीयमेव ॥

( उद्योतः ) इत्याहेति। पूर्ववार्तिकमसङ्गतमित्यत आहेत्यर्थः ॥ **आश्रयणीयमेवेति**। 'द्वौ कालाकाशौ' इत्यादौ व्यावृत्त्यर्थमित्यर्थः ॥

( ५८३२ प्रकारान्तरेण समाधानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ असहायस्य वा ॥ * ॥

( भाष्यम् ) असहायस्य वा एकशब्द आदेशो वक्तव्यः। असहायः-एकाकी। असहायौ-एकाकिनौ। असहायाः-एकाकिनः।

सिद्ध्यति।

सूत्रं तर्हि भिद्यते ॥

( सिद्धान्तभाष्यम् )

यथान्यासमेवास्तु।

ननु चोक्तमेकादाकिनिच्चि द्विबह्वर्थे प्रत्ययविधानमिति।

नैष दोषः।

अयमेकशब्दोऽस्त्येव संख्यापदम्। तद्यथा-एकः, द्वौ, बहव इति।

अस्त्यन्यार्थे वर्तते। तद्यथा—'सधमादो द्युम्न एकास्ताः'। अन्या इत्यर्थः।

अस्त्यसहायवाची। तद्यथा—ऐकाग्न्यः, एकहलानि, एकाकिभिः क्षुद्रैर्जितमिति।

तद्योऽसहायवाची तस्यैष प्रयोगः ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये पञ्चमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( प्रदीपः ) **अयमेकशब्द इति**। उपलक्षणं चैतदर्थप्रदर्शनम्। प्राथम्येऽपि हि वर्तते-'एके अल्पप्राणाः' 'एको गोत्रे' इति। समानार्थेऽपि वर्तते-'तेनैकदिक्' इति। साधारणेऽपि वर्तते-'देवदत्तयज्ञदत्तयोरेका माता' इति ॥ **एकाग्न्य इति**। अत्राकिनिचः कनो वा लुग्विज्ञेयः ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य तृतीये पादे प्रथममाह्निकम् ॥

( उद्योतः ) नन्वेकाग्न्य इति कथं? कनाकिनिचोः प्राप्तेरत आह—**अत्रेति**। 'आकिनिच्' इति चेन 'मानपश्वङ्गयोः—'इत्यतो लुगप्यनुकृष्यते, स च कनाकिनिचोरेव। विधानसामर्थ्यात्पक्षे श्रवणं, तच्च भाष्यप्रयोगादभिधानाच्च व्यवस्थितमित्याहुः ॥ भाष्ये—**तद्योऽसहायेति**। एवञ्च 'असहाय' इत्यभिधेयनिर्देश इति भावः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते पञ्चमाध्यायस्य तृतीयपादे प्रथममाह्निकम् ॥

---

॥ अथ द्वितीयमाह्निकम् ॥

( ९७४ विधिसूत्रम् ॥ ५। ३। २ आ. २६ )

# २२१३ अतिशायने तमबिष्ठनौ ॥ ५। ३। ५५ ॥

( तमपोऽधिकरणम् )

( अतिशयनार्थबोधकभाष्यम् )

**अतिशायन इत्युच्यते-किमिदमतिशायन इति? देश्याः सूत्रनिबन्धाः क्रियन्ते। यावद् ब्रूयात्प्रकर्षे अतिशय इति तावदतिशायन इति ॥**

( प्रदीपः ) **किमिदमिति**। किमयं ण्यन्तस्य निर्देश आहोस्विदण्यन्तस्य, कश्चेह शेत्यर्थ इति सन्दिहानः पृच्छति ॥ **देश्या इति**। देष्टव्याः=देश्याः=साधुत्वेन प्रतिपाद्याः, एते सूत्रे निबध्यन्ते प्रसङ्गेन साधुत्वप्रतिपादनार्थम्, ततो निपातनादीर्घत्वमित्युक्तं भवति ॥ **यावदिति**। यावत्तावच्छब्दौ परिमाणोपाधिकावपि परिच्छेदसाधर्म्यादन्यत्रापि प्रयुज्येते ॥ **प्रकर्ष इति**। अनेकार्थत्वाद्धातूनां शेतिरभिभवे, अतिशब्दस्तु द्योतकस्तस्यैवार्थस्य। यथा-तिष्ठतिर्गतिनिवृत्तौ वर्तते, स एव गतावपि, प्रशब्दस्तु तद्गतस्य प्रारम्भस्य द्योतकः-प्रतिष्ठत इति ॥

( उद्योतः ) यद्यपि वृत्त्या ण्यन्तनिर्देशनिश्चयस्तथाऽपि तत्रार्थासङ्गतिरित्याशयेन सन्देह इत्याह—**किमयमिति**। ण्यन्तेऽर्थासङ्गतिर्भाष्ये स्फुटीभविष्यति ॥ अर्थानुसारान्निर्णय इत्याशयेनोत्तरं—**देश्या इति** ॥ यत्तदेतेभ्यः परिमाणे वतुपो विधानादाह—**यावदिति**। यावत्तावच्छब्दाविमौ निपातावखण्डावित्यन्ये। कर्तरि ल्युडिति भावः। 'अतिशये' इत्यत्र कर्तर्यच् ॥ ननु शेतेः कथं प्रकर्षोऽर्थोऽत आह—**अभिभवे इति**। स्वापेक्षयेतरस्य न्यूनीकरणरूपे इत्यर्थः। अत एव 'शुक्लमतिशेते' इति सकर्मकत्वमुपपद्यते, ण्यन्तार्थासङ्गतेः। अण्यन्तस्य तु नैतद्रूपं संभवतीति ण्यन्तत्वाभावेऽपि 'अतिशायने' इत्येतद्रूपं निपात्यत इत्यर्थः ॥

---

१ असङ्गतमिति। सूत्रेणैव सिद्धे न्यासान्तरं ते वृथेत्यसङ्गतत्वमिति भावः ॥
२ कर्तरीति। 'अतिशायनशब्दे' इत्यादिः ॥
३ देष्टव्या देश्या इति। 'अतिशायने' इत्ययं ण्यन्तस्य निर्देश इत्येतन्नो-

त्वम् ॥ तस्यैवार्थस्येति । तद्गताऽऽत्यन्तिकत्वरूपार्थस्येत्यर्थः, दृष्टान्तोपपादनबलेन तथैव लाभात् ।

( प्रकर्षान्वयबोधकभाष्यम् )

**कस्य पुनः प्रकर्षे प्रत्यय उत्पद्यते ?**

**'ङ्याप्प्रातिपदिकात्' ( ४।१।१ ) इति वर्तते, ङ्याप्प्रातिपदिकस्य प्रकर्षे ।**

**ङ्याप्प्रातिपदिकं वै शब्दः, न च शब्दस्य प्रकर्षापकर्षौ स्तः ।**

**शब्देऽसंभवादर्थे कार्यं विज्ञास्यते ॥**

( प्रदीपः ) **कस्य पुनरिति** । द्रव्यवाचिनीह प्रकृतिः, न च द्रव्यस्य प्रकर्षोऽस्तीति मत्वा प्रश्नः ॥

**ङ्याप्प्रातिपदिकादिति वर्तत इति** । ननु सुबन्तसमानाधिकरणवृत्तिभिरेतैस्तद्धितैर्भवितव्यम् । यदुक्तम्[1]–'प्रियकुत्सनादिषु[2] पुनः प्रवर्ततेऽसौ विभक्त्यन्तः' इति । 'घकालतनेषु कालनाम्नः' इत्यलुग्विधानाल्लिङ्गाच्च । नैष दोषः । प्रकृतेरिदमुपलक्षणम्[3] । सा च प्रकृतिः सुबन्ता वा भवतु, ङ्याप्प्रातिपदिकं वेति विशेषे तात्पर्याभावः ॥

**न च शब्दस्येति** । शब्दस्याभिधानत्वादभिधानस्य चाभिधेये गुणभावाद् गुणस्य च स्वोपकार्यं प्रत्यनपेक्षत्वादिति भावः । यदा तु तस्य गुणभावो नास्ति तदा भवत्येव प्रकर्षयोगः–उच्चतरः शब्दः, नीचतरः शब्द इति । ननु च यथा शुक्लतरः पट इति गुणस्यापि प्रकर्ष आश्रीयते द्रव्यप्रकर्षहेतुत्वेन, तथा शब्दस्याप्याश्रीयताम् । नैतदस्ति । शुक्लादयो द्रव्यसमवेताः स्वयं प्रकृष्टा द्रव्यप्रकर्षहेतवो भवन्तीति युक्तस्तत्र गुणप्रकर्षाश्रयः, शब्दस्तु वाचकत्वादभिधेयासमवायात् स्वगतेन प्रकर्षेणाभिधेयं प्रकर्षयुक्तं न शक्तोऽवगमयितुमिति तत्प्रकर्षं प्रत्यनपेक्ष एव ॥

**(उद्द्योतः)** ननूपस्थितत्वात्प्रकृत्यर्थप्रकर्षे प्रत्यय उत्पत्स्यत इति 'कस्य पुनर्' इति प्रश्नोऽनुपपन्नोऽत आह-**द्रव्यवाचिनीति**। द्रव्यस्य स्वतः प्रकर्षाभावमग्रे स्वयमेव वदिष्यति ॥

**ननु सुबन्तेति** । सुबन्तेन समानाधिकरणा वृत्तिर्येषां तैरित्यर्थः । अनेन 'अतिशायने' इत्यस्य प्रकृत्यर्थविशेषणत्वं सूचयति । **एतैस्तद्धितै**रित्यनेनात्यन्तस्वार्थिकानामन्येषां चोक्तानां समानाधिकरणवृत्तित्वाभावं ध्वनयति ॥

ननु शब्दस्यापि तारतारतरत्वादिप्रकर्षोऽस्त्येवेत्यत आह—**शब्दस्येति ॥ अभिधानत्वादिति** । अभिधायकत्वादित्यर्थः ॥ **अभिधेये गुणभावादिति** । अभिधेयप्रतिपादने व्यग्रत्वात्स्वगतप्रकर्षप्रतिपादने तस्य तात्पर्याभावादिति भावः ॥ **उच्चतर इति** । अत्र हि शब्द एव वाच्य इति न तस्य गुणत्वमिति भावः । वस्तुतस्तत्रापि तद्गतगुणस्योच्चत्वादेरेव प्रकर्षः, न तु स्वरूपतः शब्दे इति बोध्यम् ॥ ननु गुणभूतगुणादिप्रकर्षे यथा प्रत्ययस्तथा गुणभूतशब्दप्रकर्षेऽप्यस्तु-इति शङ्कते—**ननु च यथेति ॥ शब्दस्यापीति** । वाचकस्यापीत्यर्थः ॥ **शुक्लादय इति** । तेषां हि द्रव्याश्रितत्वेन तत्प्रकर्षस्य द्रव्यप्रकर्षप्रयोजकताया वक्तुं शक्यत्वेऽपि शब्दगतस्य तस्य तत्प्रकर्षं प्रति अप्रयोजकत्वादिति भावः ॥ **गुणप्रकर्षाश्रय इति** । द्रव्यप्रकर्षहेतुत्वेन तदाश्रयणं युक्तमित्यर्थः ॥ **तत्प्रकर्षं प्रति**—द्रव्यप्रकर्षं प्रति, **अनपेक्ष एव**—तदनुपपादक एवेत्यर्थः । यद्यपि शब्दार्थयोरपि तादात्म्याध्यासः 'तस्य भावः' इति सूत्रे कैयटेनोक्तः, पातञ्जलसूत्रतद्भाष्यादौ च स्पष्टः, शब्दालिङ्गितैव चार्थप्रतीतिर्हर्यादिभिरुक्तेत्यस्त्येव तस्याप्यभिधेयसमवायः, तथापि स्वरूपत उच्चत्वादिरूपेण तद्गतप्रकर्षेण द्रव्यस्य प्रकर्षो न प्रतीयत इति तात्पर्यम् । **न च शब्दस्य**—प्रकर्षाप्रकर्षाभ्यां तदर्थस्य **प्रकर्षाप्रकर्षौ स्तः**–प्रतीतिविषयौ भवत इति भाष्याक्षरार्थः ॥

( प्रातिपदिकार्थप्रदर्शकभाष्यम् )

**कः पुनर्ङ्याप्प्रातिपदिकार्थः ?**

**द्रव्यम् । न वै द्रव्यस्य प्रकर्ष इष्यते ।**

**एवं तर्हि—गुणः ॥**

( प्रदीपः ) **द्रव्यमिति** । यत्किंचिदिदं तदिति सर्वनामपरामर्शयोग्यं वस्तु तद्द्रव्यत्वेन विवक्षितम् । तेन जातिगुणक्रिया अपि गृह्यन्ते ॥ **न वै द्रव्यस्येति** । यद्वस्तु स्वातन्त्र्येणाभिधीयते तस्य प्रकर्षो नास्तीत्यर्थः । तथा हि—'शुक्लतरं रूपम्' इत्यत्र गुणस्यापि प्राधान्येनाश्रयणाद् द्रव्यस्याश्रितादेव निमित्तान्तरात् प्रकर्षः ॥

**एवं तर्हीति** । आश्रितोऽभिधेयधर्मो गुणः, स कश्चिच्छब्दप्रवृत्तिनिमित्तं, शुक्लतरः पट इति यथा । पटस्य स्वतो न शुक्लस्य नाप्यशुक्लस्य शुक्लो गुणो व्यपदेशे हेतुः, एवं स्वगतप्रकर्षद्वारेण द्रव्यस्य स्वतोऽप्रकृष्टस्य प्रकृष्टव्यपदेशहेतुर्भवति । तदुक्तं हरिणा—

**द्रव्यस्याव्यपदेश्यस्य य उपादीयते गुणः ।**
**भेदको व्यपदेशाय तत्प्रकर्षोऽभिधीयते ॥**
**अरूपं पररूपेण द्रव्यमाख्यायते यथा ।**
**अप्रकर्षं प्रकर्षेण गुणस्यापीष्यते तथा ॥** इति ॥

यद्यपि द्रव्ये तत्र बहवो गुणाः सन्ति, तथाऽप्यन्तरङ्गत्वात्प्रवृत्तिनिमित्तगुणप्रकर्षाश्रयः प्रत्ययः । क्रियाशब्देभ्यः पाचकादिभ्यः क्रियायाः प्रवृत्तिनिमित्तत्वात् तत्प्रकर्षे प्रत्ययः । जातिशब्देभ्यस्तु जातेः प्रकर्षाभावात्तत्सहचरितप्रसिद्धवाहदोहादिप्रकर्षे प्रत्ययः । उपाधिसंसर्गेण तु विना द्रव्यस्य न प्रकर्षो नापि शब्दवाच्यत्वमस्ति । तदुक्तम्—

**सत्वस्यैव[4] प्रधानस्य न विना भेदहेतुना ।**
**प्रकर्षो विद्यते नापि शब्दस्योपैति वाच्यताम् ॥** इति ॥

तत्र वास्तवः प्रकर्षो द्रव्ये भवतु मा वा, आश्रितधर्मद्वारकस्तु तत्प्रकर्षः शब्देनाभिधीयते, न तु तन्निरपेक्षः स्वगतः । 'अद्रव्यप्रकर्षे[5]' इति निषेध उपचरितगुणक्रियागतप्रकर्षद्रव्यविषयो द्रष्टव्यः ॥

१ यदुक्तमिति । 'कुत्सिते' ५।३।७४ इति सूत्रे भाष्ये इत्यर्थः ॥
२ 'प्रियकुत्सनादिषु ततः प्रवर्ततेऽसौ' इति क. च. झ. पाठः ॥
३ अनेन-प्रकृतेरिदमुपलक्षणमिति प्रदीपग्रन्थेन ॥

४ च. झ. पुस्तकयोः 'सर्वस्यैव' इति पाठः ॥
५ अद्रव्यप्रकर्ष इति । किमेत्तिङव्ययघादिति सूत्रे ॥

( उद्योतः ) ननु रूपादिशब्दानां गुणोऽप्यर्थ इति 'प्रातिपदिकार्थो द्रव्यम्' इत्यनुपपन्नमेवेत्यत आह—**यत्किञ्चिदिदमिति** । विशेष्यभूतमित्यर्थः ॥ **स्वातन्त्र्येणेति** । प्राधान्येन, विशेष्यत्वेनेत्यर्थः ॥ ननु 'शुक्लतरं रूपम्' इत्यत्र प्रधानस्य स्वतः प्रकर्षोऽस्त्येवेत्यत आह—**गुणस्यापीति** । प्राधान्येनाश्रयणात्—द्रव्यरूपस्य गुणस्यापि आश्रितात् रूपाश्रिताद्धर्मान्तरादेव प्रकर्षः । किं पुनस्तान्त्रिकसम्मतद्रव्यस्येत्यर्थः ॥ **निमित्तान्तरादिति** । गुणगतशुक्लत्वादिजातिसमानाधिकरणनैर्मल्यादेरित्यर्थः । न तु स्वत एवेति भावः । 'एवं तर्हि गुणः' इति भाष्यस्य—'ङ्याप्प्रातिपदिकार्थः' इति शेषः ॥

ननु गुणप्रकर्षे आश्रीयमाणे 'पाचकतरः' इति न स्यादत आह—**आश्रित इति** ॥ **स्वतः**—विशेष्यभूतेन स्वरूपेण ॥ **न शुक्लस्य**—न शुक्लव्यवहारविषयस्य ॥ **नाप्यशुक्लस्य**—नापि तद्व्यवहारविषयस्य ॥ **शुक्लो गुण इति** । प्रवृत्तिनिमित्तभूत इत्यर्थः ॥ **व्यपदेशहेतुः**—'शुक्लः' इत्यादिव्यवहारहेतुः । **स्वगतप्रकर्षद्वारेणेति** । स्वाश्रिताश्रितत्वसम्बन्धेनेत्यर्थः ॥ **प्रकृष्टव्यपदेशहेतुः**—प्रकृष्टव्यवहारहेतुरित्यर्थः ॥

**अव्यपदेश्यस्य**—धर्मयोगमन्तरा स्वरूपेणाव्यवहार्यस्य ॥ **व्यपदेशाय**—व्यवहाराय यो भेदको गुण उपादीयते तत्प्रकर्षस्तरबादिभिरभिधीयत इत्यर्थः ॥ **अरूपम्**—स्वतस्तद्रूपाभाववत्, स्फटिकादि जपादिरूपेण रक्तत्वादिगुणमाख्यायत इत्यर्थः । यद्वाऽद्वैतिमते ब्रह्मैव द्रव्यं पररूपेण मायाकार्यरूपादिसम्बन्धेन तत्तद्रूपादिमत्त्वेन व्यवह्रियत इत्यर्थः ॥

**क्रियायाः प्रवृत्तिनिमित्तत्वादिति** । प्रवृत्तिनिमित्तसम्बन्धप्रतियोगित्वादित्यर्थः । सम्बन्धेऽपि स्वतः प्रकर्षासम्भवात्तत्प्रतियोगिगतप्रकर्षाश्रयणमिति तात्पर्यम् ॥ **वाहदोहादीति** । यथा गोतर इत्यादौ ॥ ननु द्रव्यस्य स्वत एव प्रकर्षः किं नाङ्गीक्रियतेऽत आह—**उपाधीति** । स्वभावादिति भावः ॥

**शब्देनेति** । तरबादिनेत्यर्थः । शब्दशक्तिस्वभावादिति भावः ॥ नन्वेवम् 'अद्रव्यप्रकर्षे' इत्यसङ्गतं स्यादत आह—**अद्रव्यप्रकर्ष इति** । उपचरितो गुणक्रियागतप्रकर्षेण प्रकर्षो यत्र तादृशद्रव्येत्यर्थः । 'उच्चैस्तरस्तरुः' इत्युदाहरणम् । अत्र उच्चैःशब्द उच्चत्वादिविशिष्टद्रव्यपरः । 'उच्चैस्तमाम्' इत्यत्र त्वधिकरणशक्तिपर इति । अत्र उच्चत्वप्रकर्षेण तदाश्रयस्य प्रकर्षेऽपि तस्य न द्रव्यत्वम्, अधिकरणशक्तिप्रधानतया शक्तिविशेषणत्वेनैव तस्य भानेनाप्रधानतया सर्वनामपरामर्शायोग्यत्वात् । एवं 'पूर्वाह्णेतमाम्' इत्यादावपीति बोध्यम् । अत्रापि विभक्त्यर्थसम्बन्धनिरूपिता विशेषणतैव तत्प्रकृत्यर्थस्येति वदन्ति ॥

( एकदेशिन गुणोपसंख्यानभाष्यम् )

**एवमपि गुणग्रहणं कर्तव्यम् । द्रव्यमपि ङ्याप्प्रातिपदिकार्थो गुणोऽपि । तत्र कुत एतत्—गुणस्य प्रकर्षे भविष्यति, न पुनर्द्रव्यस्य प्रकर्ष इति ॥**

( प्रदीपः ) **एवमपीति** । यथा गुणस्य नित्यस्य नित्यद्रव्यसमवेतस्य कस्यचिन्महत्त्वादेः स्वतः प्रकर्षः, अनित्यस्य तु कारणकृतः, तथा द्रव्यस्यापीति मन्यते ॥

( उद्योतः ) **महत्त्वादेरिति** । 'आकाशं परममहत्' 'परमाणुः' इत्यादिप्रयोगादिति भावः ॥ **कारणकृत इति** । रञ्जनद्रव्यप्रकर्षकृत इत्यर्थः ॥

( एकदेशिनः समानोपसंख्यानभाष्यम् )

**क्रियमाणे चापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम्, शुक्लात्कृष्णे मा भूदिति ॥**

( प्रदीपः ) **समानगुणग्रहणमिति** । द्वयोः परिपूर्णयोर्भिन्नजातीययोर्गुणयोरेकस्य परिपूर्णतरत्वे सति प्रकर्षसद्भावात् कृष्णाच्छुक्लतर इति मा भूदित्येवमर्थमित्यर्थः ॥

( उद्योतः ) ननु भिन्नजातीययोः कथं स्पर्धेत्यत आह—**द्वयोरिति** ॥ भाष्ये—**शुक्लात्कृष्णे इति** । कृष्णावधिकप्रकर्षे शुक्लशब्दान्मा भूदित्यर्थः ॥

( प्रत्याक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—अध्वर्युर्वै श्रेयान्, पापीयान् प्रतिप्रस्थाता, अन्धानां काणतम इति ?**

( प्रदीपः ) **अध्वर्युर्वै श्रेयानिति** । अध्वर्योः परिपूर्णं प्रशस्यत्वं, प्रतिप्रस्थातुरपि पापत्वं, तयोः परस्परापेक्षः प्रकर्ष इति मन्यते ॥ **अन्धानां काणतम इति** । अन्धा नेत्रद्वयेन न पश्यन्ति । काणस्त्वेकेनेति तदपेक्षं काणस्य प्रकर्षं मन्यते ॥

( उद्योतः ) नन्वध्वर्योरन्येभ्यः प्रशस्येभ्यः प्रशस्यतरत्वमस्त्येवेत्यत आह—**अध्वर्योरिति** ॥ **तदपेक्षमिति** । वैजात्येऽपि प्रकर्षं मन्यत इति भावः ॥

( प्रत्याक्षेपपरिहारभाष्यम् )

**समानगुणे एषा स्पर्धा भवति—अध्वर्युर्वै श्रेयान् अन्येभ्यः प्रशस्येभ्यः । पापीयान् प्रतिप्रस्थाता अन्येभ्यः पापेभ्यः । अन्धानां काणतम इति कणिरयं सौक्ष्म्ये वर्तते । सर्वे इमे किंचित्पश्यन्ति, अयमेषां काणतम इति ॥**

( प्रदीपः ) **समानगुण इति** । समानगुणे भिन्नाश्रयवर्तिनि विवक्षिते तदाश्रया स्पर्धेत्यर्थः ॥ **कणिरयमिति** । ततश्चान्धानामपि वास्तवं काणत्वं विद्यते, न तु लोकप्रसिद्धम् । तत्र दर्शनप्रकर्षाश्रयः प्रत्ययः । तथा च लोके प्रसिद्धिरन्धानां काणो राजेति ॥

(उद्योतः) **वास्तवं काणत्वमिति** । दृष्टिसौक्ष्म्यमित्यर्थः, 'अन्ध दृष्ट्युपघाते' 'कण निमीलने' इति धात्वनुसारादिति भावः ॥ **न तु लोकेति** । तर्हि एकचक्षुर्नाशवानेव काणत्वेन व्यवह्रियते । तत्र अन्धा अल्पद्रष्टारः, काणोऽपि अल्पद्रष्टा, तत्रायं किञ्चिदधिकमल्पद्रष्टेति काणतम उच्यत इति भावः । अन्धकाणशब्दौ पर्यायावित्येषाऽपि समानगुण एव स्पर्धेति तात्पर्यम् ॥ **दर्शनप्रकर्षेति** । अल्पदर्शनप्रकर्षेत्यर्थः । 'अदर्शनप्रकर्ष' इति पाठे—अदर्शनशब्देनाप्यल्पदर्शनमेव ॥

( एकदेशिन उपसंख्यानभाष्यम् )

**अदूरविप्रकर्ष इति वक्तव्यम् ।**

**इह मा भूत्—महान् सर्षपः, महान् हिमवानिति ॥**

( प्रदीपः ) **महान् हिमवानिति** । सर्षपा[1]न्महीयान् हिमवानिति मा भूदित्यर्थः ॥

( एकदेशिन उपसंख्यानभाष्यम् )

**जातेर्नेति वक्तव्यम् ।**

**इह मा भूत्—वृक्षोऽयम्, प्लक्षोऽयमिति ॥**

( प्रदीपः ) **जातेरिति** । आश्रयप्रकर्षाज्जातेः प्रकर्षं मन्यते ॥

( उद्योतः ) भाष्ये—जातेर्नेति । जातेः प्रकर्षे प्रत्ययो नेत्यर्थः ॥ ननु जातौ कथं प्रकर्षोऽत आह—**आश्रयेति** । यथा आश्रितगुणप्रकर्षाद्द्रव्यप्रकर्षः, तथा लब्धप्रकर्षद्रव्यगतत्वेन जातेः प्रकर्षं मन्यत इति भावः ॥

( प्रत्याक्षेपभाष्यम् )

**न तर्हीदानीमिदं भवति—गोतरः, गोतरा, अश्वतरः, अश्वतरा-इति ।**

( प्रत्याक्षेपसमाधानभाष्यम् )

**नैष जातेः प्रकर्षः ।**

**कस्य तर्हि?**

**गुणस्य ।**

**गौरयं यः शकटं वहति, गोतरोऽयं यः शकटं वहति सीरं च ।**

**गौरियं या समां समां विजायते, गोतरेयं या समां समां विजायते स्त्रीवत्सा च ।**

**अश्वोऽयं यश्चत्वारि योजनानि गच्छति, अश्वतरोऽयं योऽष्टौ योजनानि गच्छति ॥**

( प्रदीपः ) **कस्य तर्हीति—प्रश्नः ॥ गुणस्येति—**परिहारः । अभिधेयसहचरितलोकप्रसिद्धगुणप्रकर्षाश्रयो द्रव्यस्य प्रकर्ष इत्यर्थः । **केचित्तु** गुणसमुदाये शब्दप्रवृत्तिं मन्यमानाः शब्दार्थान्तर्भूतस्यैवायं गुणस्य प्रकर्ष इत्याहुः ॥

( उद्योतः ) **अभिधेयसहचरितेति** । प्रवृत्तिनिमित्तजातिसहचरितेत्यर्थः ॥ **केचित्त्विति** । पातञ्जला इत्यर्थः । 'स्त्रियाम्' (४।१।२) इति सूत्रे भाष्येऽपि स्पष्ट[2]मेतत् ॥ **गुणसमुदाये इति** । वाहदोहादिगुणसमुदाये इत्यर्थः ॥

( एकदेशिन उपसंख्यानभाष्यम् )

**तथा "तिङश्च" ५।३।५६ इत्यत्र क्रियाग्रहणं कर्तव्यम्, साधनप्रकर्षे मा भूत् ॥**

( प्रदीपः ) **साधनप्रकर्षे मा भूदिति** । ननु च साधनस्य गुणभावात् प्रधानस्य च क्रियायाः प्रकर्षसंभवात्तत्प्रकर्ष एव प्रत्ययो भविष्यति । एवं मन्यते—प्रधानानि स्वगतेनापि धर्मेण तद्वत्त्वेन व्यपदिश्यन्ते । गुणगतेनापि तत्र साधनप्रकर्षाश्रये क्रियाप्रकर्षे प्रत्ययो मा भूत्, स्वगते यथा स्यादित्येवमर्थं क्रियाग्रहणं कर्तव्यम् ॥

( उद्योतः ) **एवं मन्यत इति** । स्व[3]गतप्रकर्षसंभवे गुणप्रकर्षेण तद्वत्त्वव्यवहारे न मानमित्यत एवमुक्तिः ॥ **स्वगते इति** । स्वगत एव यथा स्यादित्यर्थः ॥

( एकदेशिमतानां समाधानभाष्यम् )

**नैष दोषः ।**

**यत्तावदुच्यते—'गुणग्रहणं कर्तव्यम्' इति ।**

**न कर्तव्यम् । यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति । गुणस्य चैव प्रकर्षो न द्रव्यस्य ।**

**कथं ज्ञायते ?**

**एवं हि दृश्यते लोके—इह समाने आयामे विस्तारे पटस्यान्योऽर्घो भवति काशिकस्य, अन्यो माथुरस्य ।**

**गुणान्तरं च खल्वपि शिल्पिन उत्पादयमाना द्रव्यान्तरेण प्रक्षालयन्ति । अन्येन शुद्धं धौतकं कुर्वन्ति, अन्येन शैफालिकम्, अन्येन माध्यमिकम् ॥**

( प्रदीपः ) **नैष दोष इति** । बहूनामपि दोषाणां प्रक्रमे सामान्यस्य विवक्षितत्वादेकवचननिर्देशः ॥ **यस्य प्रकर्षोऽस्तीति** । सं[4]भवव्यभिचारापेक्षत्वादुपाधिनिर्देशस्येति भावः ॥ **काशिकस्येति** । काशिषु भव इति ठञ्ञिठयोरेकतरः प्रत्ययः ॥ **गुणान्तरमिति** । पूर्वं मूल्यान्तरदर्शनाद्गुणप्रकर्षः प्रतिपादितः, अत्र तु प्रयत्नभेददर्शनादिति विशेषः ॥

( उद्योतः ) ननु द्रव्यस्य स्वतः प्रकर्षोऽस्त्वत आह—**संभवेति** । यदि त[5]स्य स्वतः प्रकर्षस्तर्हि सर्वस्यापीति व्यभिचाराभावः, अन्यथाऽसम्भव इति भावः ॥ **पूर्वं मूल्यान्तरेति** । यदि स्वत एव द्रव्ये प्रकर्षः स्यात्तदा देशभेदमात्रेण मूल्यान्तरं न स्यात्, तदर्थो यत्नभेदश्च न स्यादिति भावः । तस्माद्देशभेदकृतगुणप्रकर्षकृतमेव मूल्यान्तरं, गुणप्रकर्षाय च यत्नभेद इति तस्यैव प्रकर्ष इति तात्पर्यम् ॥ **गुणप्रकर्ष इति** । देशभेदकृतगुणप्रकर्ष इत्यर्थः । धौतकशैफालिकादयः प्रक्षालनवैजात्यकृता वस्त्रस्य गुणविशेषाः ॥

( एकदेश्याक्षेपस्य समाधानभाष्यम् )

**यदप्युच्यते—'क्रियमाणे चापि गुणग्रहणे समानगुणग्रहणं कर्तव्यम्, शुक्लात्कृष्णे मा भूत्' इति ।**

---

१ सर्षपादिति । सर्षपहिमवतोरदूरविप्रकर्षो नास्तीति न तथा प्रयोग इति भावः ॥

२ तत्र हि—'द्रव्ये च भवतः कः संप्रत्ययः? यदि तावद्गुणसमुदायो द्रव्यम्' इति भगवतोक्तम् ॥

३ 'एवं मन्यते' इत्युक्त्या तत्र किञ्चिद्गौणत्वं प्रदर्शयति । तत्र गौणत्वे बीजमाह—स्वगतप्रकर्षसंभव इति ॥

४ संभवेति । यथा वासलस्य नीलाद्यनेकगुणवत्त्वसंभवे नीलाद्युपाधिप्रदर्शनं तथेति भावः ॥

५ यदि तस्येति । द्रव्यस्य स्वतः प्रकर्षसंभवे हि सर्वस्य—गुणस्य द्रव्यस्य च प्रकर्षसंभवाद्व्यभिचाराभावः । द्रव्यस्य प्रकर्षासंभवे तु संभवाभाव इति उपाधिप्रदर्शनमनर्थकमिति भावः ॥

न कर्तव्यम् ।

समानगुण एव स्पर्धा भवति, न ह्याढ्याभिरूपौ स्पर्धेते ।

वाचकेन खल्वप्युत्पत्तव्यम्, न च शुक्लात्कृष्णे प्रत्यय उत्पद्यमानो वाचकः स्यात् ॥

( प्रदीपः ) शुक्लादिति । कृष्णे प्रतियोगिनि विवक्षिते शुक्लशब्दात्प्रत्ययो मा भूदित्यर्थः ॥ न ह्याढ्याभिरूपाविति । स्पर्धाहेतोर्गुणस्य शब्देनानाश्रयणात् । शब्दाश्रितस्पर्धाहेतुप्रकर्षे तु भवत्येव प्रत्ययः—आढ्याभिरूपयोराढ्यः श्रेयानिति । शुक्लकृष्णयोरपि तदा भवति प्रत्ययः—उज्ज्वलतरोऽयं कृष्णाच्छुक्ल इति ॥ न च शुक्लादिति । शुक्लतर इत्युक्ते शब्दप्रवृत्तिनिमित्तप्रत्यासन्नशुक्लगुणान्तरापेक्षः प्रकर्षः, शुक्लगुणनिमित्तद्रव्यप्रकर्षावगमादिति भावः ॥

( उद्द्योतः ) नन्वाढ्याभिरूपयोरपि प्रशस्तत्वे स्पर्धा भवत्येवेत्यत आह—स्पर्धाहेतोरिति । तत्प्रशस्तत्वस्य प्रकर्षे हि तदा प्रत्ययः । न च तदुपात्तमस्ति । आढ्यादभिरूपतर इति तु न भवत्येवेत्यर्थः ॥ शब्दप्रवृत्तिनिमित्तेति । न तु कृष्णावधिकप्रकर्षेण द्रव्यप्रकर्षावगम इत्यर्थः । शब्दप्रवृत्तिनिमित्तभूतं अत एव प्रत्यासन्नं यच्छुक्लगुणान्तरं—द्रव्यान्तरीयशुक्लगुणस्तदपेक्षः प्रकर्षो यस्य तादृशो यः शुक्लगुणस्तन्निमित्तेत्यक्षरार्थः ॥

( एकदेश्याक्षेपस्य समाधानभाष्यम् )

यदप्युच्यते—'अदूरविप्रकर्षे इति वक्तव्यम्' इति ।

न वक्तव्यम् ।

अदूरविप्रकर्षे एव स्पर्धा भवति, न हि निष्कधनः शतनिष्कधनेन स्पर्धते ॥

( प्रदीपः ) न हि निष्कधन इति । अदूरतरयोरेव[1] संप्रधारणविषयत्वादिति भावः ॥

( उद्द्योतः ) अदूरान्तरयोरिति । अल्पविशेषयोरित्यर्थः ॥

( एकदेश्याक्षेपस्य समाधानभाष्यम् )

यदप्युच्यते—'जातेर्नेति वक्तव्यम्' इति ।

न वक्तव्यम् ।

जननेन या प्राप्यते सा जातिः, न चैतस्यार्थस्य प्रकर्षापकर्षौ स्तः ॥

( प्रदीपः ) जननेनेति । अयत्नलभ्यत्वप्रतिपादनपरमेतत् । नित्यानां परमाण्वादीनां जननाभावात् तद्गताया जातेर्जननेनाप्राप्यत्वाद् अयत्नलभ्यश्चायमर्थः—सत्तादिः—न प्रकर्षापकर्षभाक्[2] । घटादिके च द्रव्ये यत्नेनोत्पद्यमाने बलाकादिगतस्य पुरुषप्रयत्नेन विना नित्या जातयो व्यक्तिमायान्ति । यद्यपि शौक्ल्यादेरयत्नलभ्यत्वं तथाप्याश्रयभेदाद् गुणस्य भेदावगमादस्ति प्रकर्षापकर्षयोगः, जातेस्त्वाश्रयभेदेऽपि भेदाभावात्प्रकर्षापकर्षायोगः ॥

( उद्द्योतः ) नित्यगतजातेर्जननेनाप्राप्यत्वादाह—अयत्नेति । परमाण्वादीनामिति । साङ्ख्यादिमते प्रधानावयवसत्त्वादिपरमाणवो बोध्याः ॥ 'प्रकर्षापकर्षभाक्' इति पाठः ॥ व्यक्तिमायान्तीति । तत्राभिव्यक्ता भवन्तीत्यर्थः ॥ अयत्नलभ्यत्वमिति । तथा च तद्वाचकादिष्ठस्तरप् न स्यादिति भावः । ईश्वरयत्नस्तु सर्वत्राव्यावर्तक इति भावः ॥ तथापीति । जनने[1] प्राप्यत्वोक्त्या एकत्वं नित्यत्वमनेकवृत्तित्वं च सूचितमिति भावः ॥ आश्रयभेदादिति । एवं च शुक्लगुणत्वावच्छिन्नस्यायत्नलभ्यत्वाभावेन क्वचिद्यत्नेनापकर्षे जाते तदपेक्षः प्रकर्षो बलाकाशौक्ल्ये इति तात्पर्यम् ॥ भेदाभावादिति । आश्रयभेदकृतारोपविषयभेदस्याप्यभावादित्यर्थः । केचित्तु—'जननेन प्राप्यते' इति लक्षणमद्वैतिमते, तेषां ब्रह्मातिरिक्तं सर्वं जन्यमेव । ब्रह्मणस्तु निर्धर्मकत्वात्तत्र जातिरेव नास्ति । जीवानामप्युपाधिजन्यत्वेन विशिष्टानां जन्यत्वमेवेत्याहुः ॥

( एकदेश्याक्षेपस्य समाधानभाष्यम् )

यदप्युच्यते—"तिङश्च" इत्यत्र क्रियाग्रहणं कर्तव्यम्, साधनप्रकर्षे मा भूत्-इति ।

न कर्तव्यम् ।

साधनं वै द्रव्यं, न च द्रव्यस्य प्रकर्षापकर्षौ स्तः ॥

( प्रदीपः ) साधनं वै द्रव्यमिति । ननु च शक्तिः साधनम्, अस्ति च तत्प्रकर्षः, यदाह-'साधकतमं करणम्' इति । नैष दोषः । 'पचति देवदत्तः' इति सामानाधिकरण्यदर्शनाच्छक्तिद्रव्ययोस्तिङन्तेन भेदस्यानवगमादभेदमाश्रित्य निर्देशः । न च प्रधानस्य क्रियायाः स्वतः प्रकर्षसंभवे गुणभूतसाधनप्रकर्षापेक्षाऽस्ति । पचतितरामिति चोक्ते क्रियाप्रकर्षो गम्यते न तु साधनप्रकर्षः, प्रकर्षयुक्तेऽपि साधने कदाचित् क्रियाप्रकर्षाभावात् । क्रियाप्रकर्षे तु कार्यस्य कारणाव्यभिचारान्नियमेन साधनप्रकर्षानुमानात् क्रियाप्रकर्ष एव प्रत्ययः । एको द्वौ त्रय इत्यादिकायाः संख्यायाः सर्वत्र परिच्छेदकत्वाविशेषात् प्रकर्षाभावः । बहुत्वसंख्यायास्त्वनियतसंख्येयत्वाद्भवति प्रकर्षः—बहुतरा इति । एवमुन्मानप्रमाणपरिमाणानामपि प्रकर्षाभावो विज्ञेयः । भाष्यकारेण तु जातिप्रकर्षाभावोक्त्यायानुसारेण गम्यमानत्वान्नोक्तः ॥

( उद्द्योतः ) भेदस्यानवगमादिति । द्रव्येणाभेदमापन्नैव शक्तिस्तिङाऽभिधीयत इति भावः । नन्वभेदेऽपि द्रव्याभेदाच्छक्तौ प्रकर्षाभावो वा कल्प्यः, शक्त्यभेदाद्द्रव्ये प्रकर्षो वा कल्प्य इत्यत्र विनिगमकाभाव इति चेन्न; शक्तिप्रकर्षेण द्रव्यप्रकर्षे 'परशुतरेण' इत्यापत्तिः, करणे सर्वकारकेभ्यः प्रकर्षसत्त्वात् । तस्माच्छक्तिप्रकर्षो न द्रव्यप्रकर्षकः, सुतरां तद्द्वारा न क्रियाप्रकर्षक इत्याशयात् ॥ स्वयं युक्त्यन्तरमाह—न च प्रधानस्येति ॥ प्रकर्षयुक्तेऽपीति ।

१ 'अदूरान्तरयोः' इति च. पाठः ॥

२ इदानींतनोपलभ्यमप्रदीपपुस्तकेषु तथैव पाठ उपलभ्यते ॥

१ 'जननेन' इति घ. ङ. पुस्तकयोः पाठः ॥

साधनप्रकर्षेण क्रियाप्रकर्षो न नियत इति न तत्प्रकर्षेण्यवहारेण क्रियाप्रकर्षव्यवहार इति भावः ॥ उक्तन्यायेति । एकत्वरूपेत्यर्थः । 'वाचकेन खल्वप्युत्पत्तव्यमिति न्यायः' इति वक्तुं युक्तम् । तत्तत्समूहरूपद्रिव्यस्य भेदो नास्तीति न वक्तुं शक्यमित्यन्ये ॥

( शौक्ल्यगुणस्यैकत्वप्रस्थापकभाष्यम् )

**किं पुनरेकं शौक्ल्यमाहोस्विन्नाना ?**

**किं चातः ?**

**यद्येकं, प्रकर्षो नोपपद्यते । न हि तेनैव तस्य प्रकर्षो भवति ।**

**अथ नाना, समानगुणग्रहणं कर्तव्यम्—शुक्लात् कृष्णे मा भूदिति ।**

**अस्त्वेकं शौक्ल्यं, तत्तु विशेषवत् ॥**

( प्रदीपः ) **किं पुनरेकमिति** । ननु समानधर्मोपलम्भाद्विशेषाग्रहणाच्च संशयः, न चैकानेकयोर्विशेषाग्रहणम् । नैष दोषः । एकस्यापि भेदव्यवहारो दृश्यते, यथा—परुद्भवान् पटुरासीत्, पटुतरश्चैषमः—अन्य एवायं संवृत्त इति । तथाऽनेकस्मिन्नप्येकव्यवहारो दृश्यते, यथा—भिन्नाऽपि क्रिया निवृत्तभेदाऽऽख्यातेनाभिधीयते इत्येकोच्यते । तत्त्वतो हि 'भवद्भिरास्यते' 'भवन्त आसते' इत्यादौ भिन्नैः कर्तृभिः साध्यानि स्वसमवेतानि भिन्नान्येवासनानि । एकत्वं चाश्रित्योक्तं—'न तिङन्तान्येकशेषारम्भं प्रयोजयन्ति क्रियाया एकत्वात्' इति । एवं च किमेकं शौक्ल्यमाश्रयभेदादुपचरितभेदम्, उतानेकमेव ? इति संशयात् प्रश्न उपपन्नः ॥

**यद्येकमिति** । एकत्वे जातिवद् गुणस्य प्रकर्षानुपपत्तिः ॥

**समानगुणग्रहणमिति** । तुल्ये भेदे यथा शौक्ल्यस्य शौक्ल्यान्तरापेक्षः प्रकर्षः, एवं कृष्णाद्यपेक्षोऽपीति तदपेक्षे प्रकर्षे प्रत्ययनिवृत्त्यर्थं समानगुणग्रहणं कर्तव्यमित्यर्थः । ननु यस्याप्येकं शौक्ल्यं तेनापि भिन्नगुणापेक्षे प्रकर्षे प्रत्ययस्य निवृत्तिर्विधेया । नैष दोषः । एकत्ववादिनो यथा शौक्ल्यस्यात्मापेक्षप्रकर्षानुपपत्तिः, एवं गुणान्तरापेक्षोऽपि प्रकर्षो नोपपद्यते । यथा गोत्वं नात्मापेक्षया, नापि जात्यन्तरापेक्षया प्रकृष्यते, गुणभेदवादी तु भेदनिबन्धनं प्रकर्षं सर्वत्रेच्छतीति तेनैव समानगुणग्रहणं कर्तव्यम् ॥

**विशेषवदिति** । ततो विशेषाश्रयत्वादन्यत्वादुपपन्नः प्रकर्षः ॥

( उद्योतः ) **समानधर्मः**—साधारणधर्मः । **विशेषः**—वैधर्म्यम् । उक्तसंशयबीजं चात्र नास्तीत्याह—**न चैकानेकयोरिति** । एकत्वानेकत्वरूपवैधर्म्यस्य स्पष्टत्वादिति भावः ॥ एकत्वानेकत्वयोर्वैधर्म्यत्वस्यैवाभाव इत्युत्तरयति—**एकस्यापीति** ॥ **एकत्वे इति** । आश्रयभेदसत्त्वेऽपि न स प्रकर्षप्रयोजक इत्यभिमानः ॥ भाष्ये—**न हि तेनैवेति** । तत्प्रतियोगिक एवेत्यर्थः । 'अस्मादयं शुक्लतरः' इत्यस्यैतद्वृत्तिशुक्लगुणप्रतियोगिकातिशयवच्छुक्लगुणवानयमिति बोध इति भावः ॥ ननु भिन्नयोः कथं प्रकर्षः ? अन्यथा आढ्याभिरूपयोरपि स स्यादत आह—**तुल्ये भेदे इति** ॥

**प्रकर्षो नोपपद्यत इति** । एकत्वं स्ववाचकात्तरबुत्पत्तिनियामकप्रकर्षविरोधीति भावः । तदेव दृष्टान्तेनोपपादयति—**यथेति** ॥ **जात्यन्तरापेक्षयेति** । जातिवाचकात्तरबुत्पत्तिनियामकस्तदर्थगतः प्रकर्षो ? नास्तीत्यर्थः । एतेन 'ब्राह्मणत्वाच्छूद्रत्वं प्रशस्ततरमिति प्रकर्षोऽस्त्येव'इत्यपास्तम् ॥ **सर्वत्रेति** । सजातीये विजातीये चेत्यर्थः ॥ **विशेषाश्रयत्वादिति** । स च प्रकर्षः सजातीयापेक्ष एव, न तु विजातीयकृष्णाद्यपेक्ष इति भावः । **'रूपादि सावयवम्'** इति साङ्ख्यानुसारेणेदम् । अत एव **'अल्पत्वमहत्त्वकृतः'** इत्युक्तिः सङ्गच्छते । अग्रे—**निर्विशेषमित्यस्य**—निरवयवमित्यर्थः ॥

( गुणे विशेषप्रतिपादकभाष्यम् )

**किं कृतो विशेषः ?**

**अल्पत्वमहत्त्वकृतः ।**

**अथवा पुनरस्त्वेकं निर्विशेषं च ।**

**ननु चोक्तं 'प्रकर्षो नोपपद्यते न हि तेनैव तस्य प्रकर्षो भवति' इति ।**

**गुणान्तरेण प्रच्छादनात् प्रकर्षो भविष्यति ॥**

( प्रदीपः ) **अल्पत्वमहत्त्वकृत इति** । क्वचिदाश्रयेऽल्पं शौक्ल्यं क्वचित्तु महदित्यर्थः ॥ **गुणान्तरेण प्रच्छादनादिति** । संभेदात्, मिश्रीकरणादित्यर्थः । यथा जात्युत्पलादिवासिताया मल्लिकायाः ॥

( उद्योतः ) **संभेदादिति** । गुणान्तरेण कृष्णादिना प्रच्छादितत्वादपकर्षः । औज्ज्वल्यादिगुणान्तराच्छादितस्य च प्रकर्ष इति भावः । 'न हि आढ्याभिरूपौ' इति भाष्यं स्वभावमूलकतया प्राग्व्याख्यातम् । एवं च भेदेऽपि स्वभावादेव सजातीयभिन्नापेक्ष्यैव प्रकर्षः, न तु भिन्नजातीयापेक्षः प्रकर्षः शुक्लादिभ्यस्तरबुत्पत्तिनिमित्तमिति भावः । अत्र भगवता शुक्लादिगुणेष्वनेकपक्षकथनेन व्यवहारोपपादकपदार्थानामवास्तवत्वं सूचितम् ॥

( नानात्वेऽपि दोषाभावप्रतिपादकभाष्यम् )

**अथवा पुनरस्तु नाना । ननु चोक्तं—'समानगुणग्रहणं कर्तव्यम्, शुक्लात् कृष्णे मा भूत्' इति ।**

**न कर्तव्यम् । समानगुण एव स्पर्धा भवति । न ह्याढ्याभिरूपौ स्पर्धेते ॥**

**वाचकेन खल्वप्युत्पत्तव्यम्, न च शुक्लात्कृष्णे उत्पद्यमानो वाचकः स्यात् ॥**

( अतिशायनार्थस्य प्रत्ययार्थत्वं प्रकृतिविशेषणत्वं वेतिविचारभाष्यम् )

**किमन्तात्पुनरुत्पत्त्या भवितव्यम् ?**

( प्रदीपः ) **किमन्तादिति** । 'अतिशायने' इति किं

---

१ इति भाव इति । तत्र भगवतो भाष्यकृतोऽयमभिप्रायः—एकमपि शौक्ल्यमाश्रयभेदाद्भिन्नत एव, अतस्तत्र प्रकर्ष उपपद्यते इति ॥

प्रत्ययार्थनिर्देशः, आहोस्वित्प्रकृत्यर्थस्य विशेषणमिति समर्थविभक्तिप्रश्नद्वारेण विचारः ॥

( उद्द्योतः ) किंप्रत्ययार्थेति । आद्ये[1] द्वितीयान्तात्, अन्त्ये प्रथमान्तादिति बोध्यम् ॥

( अतिशायनार्थस्य प्रत्ययार्थत्वप्रस्थापकभाष्यम् )

**द्वितीयाऽन्तात् अतिशय्यमानात् । शुक्लमतिशेते–शुक्लतरः। कृष्णमतिशेते–कृष्णतरः ॥**

( प्रदीपः ) **द्वितीयान्तादिति** । यदा तिङन्तेन विस्पष्टार्थं विग्रहवाक्यं प्रदर्श्यते, तदा द्वितीयान्तादुत्पत्तिः। कृदन्तेन तु वाक्यप्रदर्शने षष्ठ्या भाव्यम्—'शुक्लस्यातिशायनः' इति । तदा षष्ठ्यादौ संदेहो भवति—कर्तरि षष्ठी वा स्यात्, कर्मणि वा; करणे ल्युट् स्यात्, कर्तरि वेति । **अथवा** द्वितीयाग्रहणमुपलक्षणार्थम्–इति षष्ठ्यपि गृह्यते । प्रत्ययार्थसामर्थ्यलभ्या च समर्थविभक्तिः ॥

( उद्द्योतः ) नन्वतिशायनशब्दस्य कृदन्तत्वात्तद्योगे षष्ठ्या भाव्यमिति 'द्वितीयान्तात्' इत्यसङ्गतमत आह–**यदा तिङन्तेनेति** ॥ कृदन्तेन विग्रहे यथाऽस्पष्टार्थत्वं तथा दर्शयति—**तदा षष्ठ्यादाविति** । आदिना ल्युट्। षष्ठ्यादिविषये इत्यर्थः । तत्र यद्यपि 'कर्तरि षष्ठी, करणे ल्युट्' इति पक्षे शुक्लकर्तृकाभिभवकरणमित्यर्थः स्यात्, स च शुक्लतरशब्दान्नावगम्यते[2], तथापि लक्षणशरणस्य सन्देहः स्यादेवेति भावः ॥ **कर्तरि वेति** । कर्तरि ल्युट्, कर्मणि षष्ठीत्यर्थः । अत एव 'आढ्यतमो देवदत्तः' इति सामानाधिकरण्योपपत्तिः ॥ **अथ वेति** । अत्र पक्षे 'कर्मणि षष्ठी, कर्तरि ल्युट्' इति निर्णयो व्याख्यानादिति भावः । तदाह—**प्रत्ययार्थेति** ॥

( प्रत्ययार्थत्वे दोषदर्शकभाष्यम् )

**यदि द्वितीयान्ताद[3]तिशय्यमानात्—**

**कालोऽतिशेते कालीम्–कालितर इति प्राप्नोति, कालतर इति चेष्यते ।**

**तथा काली अतिशेते कालम्—**

**कालतरा इति प्राप्नोति, कालितरेति चेष्यते ।**

**तथा गार्ग्योऽतिशेते गर्गान्—**

**गर्गतर इति प्राप्नोति, गार्ग्यतर इति चेष्यते ।**

**तथा गर्गा अतिशेरते गार्ग्यं—गार्ग्यतरा इति प्राप्नोति, गर्गतरा इति चेष्यते ॥**

(प्रदीपः) **कालितर इति**। 'घरूपकल्प–' इति ह्रस्वः ॥

**गर्गतर इति प्राप्नोतीति** । वृत्तावपि लुग्विधानात्संख्याविशेषसंप्रत्ययाद्बहुवचनान्तात्प्रत्ययोत्पत्तिरविरुद्धा ॥

( उद्द्योतः ) ननु वृत्तावभेदैकत्वसङ्ख्याऽवगमात्कथं बहुवचनान्तात्प्रत्ययोऽत आह—**वृत्तावपीति** ॥ **लुग्विधानादिति** । यञो लुग्दर्शनादित्यर्थः । वस्तुतः सङ्ख्याविशेषानवगमेऽपि गर्गापत्यत्वेन बहुत्व[4]प्रतीतिरिति बोध्यम् ॥

( अतिशायनार्थस्य प्रकृत्यर्थविशेषणत्वाभिप्रायकभाष्यम् )

**एवं तर्हि प्रथमान्तात्स्वार्थिको भविष्यति—कालोऽतिशेते—कालतरः। काली अतिशेते—कालितरा। गार्ग्योऽतिशेते—गार्ग्यतरः । गर्गा अतिशेरते—गर्गतराः ॥**

( उद्द्योतः ) भाष्ये—**प्रथमान्तादिति** । 'अतिशायने' इति कर्तृल्युडन्तं प्रकृत्यर्थविशेषणमिति भावः । 'काली अतिशेते' इत्यादेर्दीव्यत्यादिवद्विशेष्यविशेषणभावव्यत्यासात्–अतिशयकर्त्री काली–इत्यादिक्रमेणार्थः ॥

( प्रकृत्यर्थविशेषणत्वे दोषदर्शकभाष्यम् )

**यदि प्रथमान्तात्स्वार्थिकः—कुमारितरा, किशोरितरा—अव्यतिरिक्तं[5] वय इति कृत्वा "वयसि प्रथमे" ४।१।२० इति ङीप् प्राप्नोति ।**

**तरपोक्तत्वात् स्त्रीत्वस्य प्रत्ययो न भविष्यति ।**

**टाबपि तर्हि न प्राप्नोति ।**

**उक्तेऽपि हि भवन्त्येते टाबादयः । उक्तमेतत्—स्वार्थिकाष्टाबादय इति ।**

**ङीबपि तर्हि प्राप्नोति ॥**

( प्रदीपः ) **अव्यतिरिक्तं वय इति** । प्रत्ययार्थपक्षे तु आर्थी वयःप्रतिपत्तिः, वयःप्रकर्षेणैवासौ कुमारीमतिशेते न तु गुणान्तरेण, तस्य विप्रकर्षात् । शाब्दी[6] तु वयःप्रतिपत्तिर्नास्तीति ङीपोऽप्रसङ्गः । स्वार्थिकत्वे तु शाब्दयेव वयःप्रतिपत्तिरिति ङीप्प्राप्तिः ॥ **तरपोक्तत्वादिति** । तरपः स्वार्थिकत्वात् सर्वः प्रकृत्यर्थस्तेन द्योत्य इति भावः ॥ **ङीबपीति** । टाबपवादत्वात् ङीप इति भावः ॥ **अन्ये त्वाहुः**—कुमारशब्दादुत्पन्नेन ङीपा प्रथमवयोविशिष्टार्थगतस्य स्त्रीत्वस्याभिव्यक्तत्वात्तरबन्तात् स्त्रीत्वमात्रमभिव्यक्तव्यमिति टाबेव भविष्यति । यथा 'यत्र–तत्र' इत्यादौ त्रलाऽधिकरणस्याभिव्यक्तत्वात्तद्द्वितान्तात्सामयिकी प्रथमैवोत्पद्यते, न सप्तमी ॥

---

१ आद्ये–अतिशायने इति प्रत्ययार्थनिर्देशे द्वितीयान्तात्प्रत्ययोत्पत्तिः । अन्त्ये–अतिशायने इति प्रकृत्यर्थस्य विशेषणमिति पक्षे च प्रथमान्तादित्यर्थः ॥

२ नावगम्यत इति । कृदन्तेन विग्रहे षष्ठ्यादौ सन्देहः प्रदर्शितः स च सन्देह एव नास्ति, यतः कर्तरि षष्ठी, करणे ल्युडिति पक्षे योऽर्थः संपद्यते स शुक्लतरशब्दान्न प्रतीयत इति षष्ठ्यादौ सन्देह एव नोपलभ्यते, तदर्थमाह—लक्षणशरणस्य सन्देह इति । लक्षणशरणैर्हि–अर्थो भवतु मा वा, शास्त्रेण विधीयमानं भवत्येवेति तैः सन्देहः कर्तव्य एवेति भावः ॥

३ अतिशय्यमानादिति । यदि द्वितीयान्तात् अतिशय्यमानात्=अतिशयवत्त्वप्रतियोगिकाद्गुणवाचकात् प्रत्ययो भविष्यतीत्यर्थस्तदा 'कालोऽतिशेते कालीं' इत्यादौ अतिशय्यमानात्कालीशब्दाद्द्वितीयान्तात्प्रत्ययः स्यात्, इष्यते च कालशब्दादित्यर्थः ॥

४ बहुत्वप्रतीतिरिति । गर्गापत्यानि अतिशय्यमानानि बहूनीति बहुत्वप्रतीतिरिति भावः ॥

५ अव्यतिरिक्तं वय इतीति । प्रथमान्तात्स्वार्थे प्रत्ययो भवतीति पक्षे वयोवाचकात्कुमारीशब्दात्स्वार्थे जायमानस्तरप् वयोवाचक एवेति वयोवाचकात्तरबन्तान्ङीप्प्रसङ्ग इत्यर्थः ॥

६ शाब्दी त्विति । प्रत्ययार्थपक्षे हि शब्दतोऽर्थोऽतिशायनरूपः प्रतीयते, वयोरूपार्थस्तु गम्यते, न तु शब्दमर्यादया लभ्यत इत्यर्थः ॥

( उद्योतः ) ननु प्रत्ययार्थपक्षेऽपि प्रवृत्तिनिमित्तगुणप्रकर्षे एव प्रत्ययोत्पत्तेस्तत्रापि वयोवाचकत्वं दुर्वारमत आह—**प्रत्ययार्थेति** । तत्र अतिशयितुर्विशेष्यत्वेन वयसस्तद्विशेषणत्वाभावान्न प्रवृत्तिनिमित्तत्वमिति भावः ॥ **विप्रकर्षादिति** । गुणान्तरस्य शब्दतोऽनुपस्थित्या विप्रकर्ष इति भावः ॥ भाष्ये—**अव्यतिरिक्तं वय इति** । **वयः**—प्रकृष्टं वयः केवलवयसोऽ**व्यतिरिक्तम्**—अनतिरिक्तमित्यर्थः ॥ **तरप इति** । वस्तुतस्तरपा—तत्प्रकृतिभूतेन तदन्तघटकेन कुमारीशब्दादिनेत्यर्थः । तेन वयोविशिष्टार्थगतस्त्रीत्वस्योक्तत्वेन तद्द्योतको ङीप् पुनर्नेति भावः ॥ **स्त्रीत्वस्य** । वयोरूपप्रवृत्तिनिमित्तविशिष्टार्थगतस्त्रीत्वस्येत्यर्थः । तरबन्तस्य तु प्रकर्षः प्रवृत्तिनिमित्तम्, अतस्तद्विशिष्टार्थगते स्त्रीत्वे न 'वयसि—'इति ङीबिति भावः । अत एव 'गोतरा'इत्यादौ न ङीप्, तदाह—**स्त्रीत्वमात्रमिति** । न तु वयोमात्रविशिष्टार्थगतं, तदेव हि 'वयसि प्रथमे' इत्यस्य प्रवृत्तौ निमित्तमिति भावः ॥ **यथेति** । सा[2] हि प्रातिपदिकेनोक्तेऽप्यर्थे भवतीति भावः । इममाशयमजानान आह—भाष्ये—**टाबपीति** । उक्तेनैवाशयेनोत्तरम् ॥ पुनस्तमजानान आह—**ङीबपीति** ॥

**( अतिशायनशब्देन प्रकृत्यर्थगतगुणाभिधानप्रस्तावभाष्यम् )**

**एवं तर्हि गुणोऽभिधीयते ॥**

( प्रदीपः ) **भाष्यकारस्तु**—निमित्तस्य सन्निधानादपवादेनैवात्र ङीपा भाव्यं न तु टापेति पक्षान्तरमाश्रयति—**एवं तर्हि गुण इति** । अतिशेतेऽनेनेति अतिशायनो गुणोऽभिधीयते । करणे ल्युट् । आश्रयद्रव्यवाचिनः स्वसमवेते गुणे प्रत्ययविधिः । ततो व्यतिरिक्तार्थाभिधानात्[3] घान्ताद्वयोलक्षणङीबभावः । गुणाभिधाने कालितर इति सामानाधिकरण्याभावात् घादिष्विति ह्रस्वो न प्राप्नोतीति चेत्, वचनाद्वैयधिकरण्येऽपि भविष्यति ॥

( उद्योतः ) **भाष्यकारस्त्विति** । भाष्यकारैकदेशी त्वित्यर्थः ॥ **गुणोऽभिधीयत इति** । प्रकृष्टकालत्वादिगुण इति भावः ॥ **करणे ल्युडिति** । अतिशायने गुणे प्रत्यय इत्यर्थः । शुक्लस्यातिशायनो गुण इति विग्रहः । शुक्लनिष्ठः स्वेतराभिभवकरणं शुक्लो गुण इत्यर्थः । एवं च न प्रागुक्ता दोषा इति तात्पर्यम् ॥

**ङीबभाव इति** । वयोविशिष्टद्रव्यवाचकाद्धि ङीप्, न चायं तथा, किन्तु वयोमात्रवाचक इति भावः ॥ **वचनादिति** । 'घरूप—' इति सूत्रे 'घ' इति वचनादित्यर्थः[4] ॥

**( गुणाभिधाने दोषदर्शनपूर्वकं तन्निराकरणभाष्यम् )**

**एवमपि लिङ्गवचनानि न सिध्यन्ति—शुक्लतरम् । शुक्लतरा । शुक्लतरः । शुक्लतरौ । शुक्लतरा इति । आश्रयतो लिङ्गवचनानि भवन्ति । गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा—शुक्लं वस्त्रं, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति ।**

**यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भविष्यति ॥**

( प्रदीपः ) **एवमपीति** । षष्ठीप्रसङ्गस्तु द्रव्यवचनान्न चोदितः, सोऽयमित्यभेदस्य गुणगुणिनोः सर्वदाऽत्र विवक्षितत्वात् । सत्यामपि त्वभेदविवक्षायां मञ्चादिवत्[5] स्वलिङ्गसंख्याऽपरित्यागप्रसङ्गः ॥ **आश्रयत इति** । 'विशेषणानां चाजातेः' इति वचनात् । तत्र हि विशेषणशब्देन परोपकारायोपात्ताः शेषभूताः शुक्लादयो गुणा गृह्यन्ते ॥

(उद्योतः) **षष्ठीप्रसङ्गस्त्विति** । 'न चोदितः' इत्यत्रान्वयः । **द्रव्यवचनात्**—पटादिशब्दात्, पटस्य शुक्लतर इत्येवमित्यर्थः । तत्र हेतुमाह—**सोऽयमिति** ॥ ननु सर्वथाऽभेदविवक्षायां कथं लिङ्गवचनासिद्धिरत आह—**सत्यामपि त्विति** ॥ **मञ्चादिवदिति** । मञ्चस्थस्त्रीणां मञ्चपदेन मञ्चाभेदेन बोधनादिति भावः । 'गङ्गायां घोषः' इतिवच्चेत्यपि बोध्यम् ॥ भाष्ये—**आश्रयत इति** । भेदसंबन्धमूलकेन तत्त्वारोपेण लक्षणायामेव स्वलिङ्गाद्यत्यागः । अभेदेनैव तत्प्रतीतौ तु तत्त्याग इति भावः । तदुक्तम्—'अभेदस्य सर्वदाऽत्र विवक्षितत्वात्'इति ॥ **विशेषणानां चेति** । **विशेषणानां**—गुणानां, **युक्तवत्**—स्वयुक्ताश्रयवल्लिङ्गवचनानीति तदर्थः । तदाह—**तत्र हीति** ॥ **परोपकाराय**—**परस्य**—द्रव्यस्येतरेभ्यो व्यवच्छेदाय । तस्यैव व्याख्यानं—**शेषभूता इति** ॥

**( अतिशायनशब्देन प्रकृत्यर्थगतक्रियाऽभिधानप्रस्तावभाष्यम् )**

**अथवा क्रियाऽभिधीयते ॥**

(प्रदीपः) **अथवा क्रियेति** । अतिशयः—अतिशायनमिति भावे ल्युड्विधानात् ॥

( उद्योतः ) **भावे ल्युडिति** । शुक्लवृत्तिरितराभिभव इति बोधः ॥

**( क्रियाऽभिधाने दोषदर्शनपूर्वकं तन्निराकरणभाष्यम् )**

**एवमपि लिङ्गवचनानि न सिध्यन्ति ।**

**आश्रयतो लिङ्गवचनानि भविष्यन्ति ।**

**एवमपि द्विवचनं प्राप्नोति—यश्च हि अतिशेते यश्चातिशय्यते उभौ तौ तस्याश्रयौ[6] भवतः ।**

---

1 ननु स्वार्थिकप्रत्ययानां प्रकृत्यर्थबोधकत्वे बोधस्यावृत्तिप्रसङ्गः स्यादत आह—वस्तुतस्तरपेति ॥

2 सा हि—प्रथमेत्यर्थः ॥

3 व्यतिरिक्तार्थाभिधानादिति । तरप्प्रत्ययस्य गुणमात्रवाचकत्वे वयोविशिष्टद्रव्यमात्रवाचकात्कुमारीशब्दाद्भिन्नार्थकत्वं तस्य स्यादिति द्रव्यवाचकत्वाभावात् 'वयसि प्रथमे' इत्यस्य न प्राप्तिरिति भावः ॥

4 घ इति वचनादिति । तरप्तमोर्गुणमात्रवाचकत्वे घस्य समानाधिकरणस्यासंभवात् घवचनसामर्थ्यमिति भावः ॥

5 मञ्चादिवदिति । यथा मञ्चस्थस्त्रीणां मञ्चेन सहाभेदेऽपि मञ्चगतं पुंस्त्वं न परित्यज्यते तद्वदत्रापि गुणगुणिनोरभेदेऽपि लिङ्गवचनस्यापरित्यागः स्यादित्यर्थः ॥

6 तस्याश्रयाविति । तरप्तमपोः क्रियावाचित्वे आश्रयतो लिङ्गवचनानि भविष्यन्तीति चेत् क्रियाया आश्रये कर्तृकर्मणी, तयोर्द्वित्वेन तरबन्ताद्द्विवचनप्रसङ्ग इत्याशयः ॥

नैष दोषः ।

कथं ?

शेतिरकर्मकः ।

अकर्मका अपि धातवः सोपसर्गाः सकर्मका भवन्ति ।

कर्मापदिष्टा विधयः कर्मस्थभावकानां कर्मस्थक्रियाणां वा भवन्ति, कर्तृस्थभावकश्च शेतिः ॥

( प्रदीपः ) **आश्रयो भवत इति** । उभयोर्निर्वर्तकत्वादिति भावः ॥ **अकर्मका अपीति** । अर्थान्तरवृत्तित्वात् ॥ **कर्मापदिष्टा इति** । अतिशयक्रिया कर्तर्येव समवेता, न तु कर्मणि—इति कर्माश्रयलिङ्गसंख्याभाव इत्युक्तं भवति—**कर्मापदिष्टा इति**—द्विवचनमिह कर्मापदिष्टो विधिः, कर्माश्रित्य तस्य चोदितत्वात् ॥ **आश्रयतो लिङ्गवचनानि**—इत्यत्र समवाय्याश्रयो गृह्यते न तु निर्वर्तक इत्यर्थः ॥

( उद्द्योतः ) **निर्वर्तकत्वादिति** । तत्त्वमेव चाश्रयत्वमित्यभिमानः ॥ **अर्थान्तरेति** । अभिभवार्थत्वादिति भावः ॥ तत्त्वादिविधिः कर्मापदिष्टत्वाभावादाह—**अतिशयक्रियेत्यादि** । एवञ्च पटाभिन्नः शुक्लवृत्तिरितराभिभव इति बोधात्तद्गतलिङ्गसङ्ख्ये । कर्त्रैवाभेदविवक्षा न तु कर्मणा, स्वभावादिति तात्पर्यम् ॥

भाष्याक्षराणि योजयितुमाह—**द्विवचनमिहेति** । तच्च यत्र कर्मण्यपि मुख्यव्यापाराश्रयत्वविवक्षा तत्र भवति, यथा—देवदत्तत-ण्डुलौ पचत इति, न चैवं प्रकृते इति तात्पर्यम् ॥

( एकेनैव न्यासेन पक्षद्वयस्याप्युपपादनपरं भाष्यम् )

अथ यद्येव द्वितीयान्तादुत्पत्तिः, प्रथमान्ताद्वा स्वार्थिकः, अथापि गुणोऽभिधीयते, अथापि क्रिया, किं गतमेतदियता सूत्रेण आहो स्विदन्यतरस्मिन् पक्षे भूयः सूत्रं कर्तव्यम् ?

गतमित्याह ।

कथम् ?

यदा तावद् द्वितीयान्तादुत्पत्तिः प्रथमान्ताद्वा स्वार्थिकः, तदा "कृत्यल्युटो बहुलम्" ३।३।११३ इत्येवमत्र ल्युट् भविष्यति ॥

यदा गुणोऽभिधीयते तदा न्यायसिद्धमेव ॥

यदाऽपि क्रिया तदाऽपि न्यायसिद्धमेव ॥

अथवाऽतिशाययतीत्यतिशायनम् ।

कः प्रयोज्यार्थः ?

गुणा गुणिनं प्रयोजयन्ति, गुणी वा गुणान् प्रयोजयति ।

कः पुनरिह शेत्यर्थः ?

१ उभयोः—कर्तृकर्मणोः, निर्वर्तकत्वात्—क्रियानिर्वर्तकत्वादित्यर्थः ॥

इह यो यत्र भवति शेतेऽसौ तत्र गुणाश्च गुणिनि शेरते ॥

शेत्यर्थः कारितार्थो वा निर्देशोऽयं समीक्षितः ।
शेत्यर्थे नास्ति वक्तव्यं कारितार्थे ब्रवीमि ते ॥
गुणी वा गुणसंयोगाद् गुणो वा गुणिना यदि ।
अभिव्यज्येत संयोगात्कारितार्थो भविष्यति ॥

( प्रदीपः ) **ल्युट् भविष्यतीति** । कर्तृसाधनः ॥ **कः प्रयोज्यार्थ इति** । अचेतनत्वाद् गुणानां प्रयोजकत्वानुपपत्तिं मन्यते ॥ **गुणा गुणिनमिति** । अस्माभिः प्रकृष्टैस्त्वं-मतिशेष्वेति तत्समर्थाचरणलक्षणश्चाचेतनानामपि प्रयोजकव्यापार इति कारकप्रकरणे प्रतिपादितम् ॥

**कः पुनरिति** । शेतेरनेकार्थत्वात्प्रश्नः ॥ **यो यत्रेति** । स्थानार्थः शेतिः, यथा 'जलाशयः' इत्यत्रेति भावः ॥ **गुणा गुणिनीति** । अवतिष्ठन्त इत्यर्थः । तान् गुणान् गुणी अतिशाययति, अतिशयेनावस्थापयतीत्यर्थः । पूर्वं गुणानां प्रयोजकत्वमुक्तं पश्चाद्गुणिनः ॥

**शेत्यर्थ इति** । प्रकृत्यर्थो ण्यर्थोऽपि चात्र गृह्यत इत्यर्थः । **शेत्यर्थे नास्तीति** । तस्य प्रसिद्धत्वात् ॥ **गुणी वेति** । गुणसंबन्धात् गुणवानतिशेते, गुणिसंबन्धात् गुणो वा ॥ **अभिव्यज्येतेति** । प्रकृष्टत्वेनेति भावः ॥ **कारितार्थ इति** । गुणो गुणिनमतिशाययति, गुण्यपि गुणमिति—अस्ति ण्यर्थोपपत्तिः ॥

( उद्द्योतः ) भाष्ये—**यदा गुण इति** । करणे तदा ल्युट् ॥ **यदा क्रियेति** । भावे तदा ल्युट् । तत्र कर्तरि ल्युटि प्राप्ताप्राप्तविवेकेनाभिभवकर्तृत्वस्यैव द्योत्यत्वात्तस्य च विशेषणत्वात् प्रकृत्यर्थविशेषणत्वोक्तिः ॥ 'गुणोऽभिधीयते' इति पक्षं 'प्रथमान्ताद्वा स्वार्थिकः' इति पक्षं च प्रकारान्तरेण साधयति—भाष्ये—**अथ वेति** ॥ 'गुणोऽभिधीयते' इति पक्षे प्रयोज्यार्थं दर्शयति—**गुणा गुणिनमिति** । **प्रयोज्यार्थ** इत्यस्य—प्रयोज्यत्वविशिष्टोऽर्थः—प्रयोजनं यस्य सः, प्रयोजक इत्यर्थः । गुणानां प्रयोजकत्वेऽभिभवप्रेरणाकर्तरि गुणे प्रत्ययः ॥ **तत्समर्थाचरणलक्षणश्चेति** । अचेतनत्वात्तद्विरुद्धानाचरणरूपमेवात्र तत्समर्थाचरणं बोध्यम् ॥ अन्ते उपपत्तिमाह—**गुणी वेति** । गुणिनः प्रयोजकत्वेऽभिभवप्रेरणाकर्तरि वर्तमानात्प्रत्यय इति बोध्यम् ॥ **कः पुनरिहेति** । 'गुणी वा' इति पक्ष इत्यर्थः । अभिभवार्थोऽत्र न सम्भवति, गुणविशिष्टो हि गुणी स्ववृत्तिगुणसजातीयगुणविशिष्टमितरमभिभवति न गुणा इति **प्रश्नः** ॥ **अतिशयेनावस्थापयतीति** । अतिशयवैशिष्ट्येनावस्थापयतीत्यर्थः । अतिशयवैशिष्ट्येन गुणावस्थापनकर्तरि गुणिनि वर्तमानात्प्रातिपदिकात्प्रत्ययः स्वार्थे इत्यर्थः । तथात्वञ्च—अतिशयविशिष्टतया गुणबोध एव—इति शब्दात्तत्प्रतीतिरुपपन्ना ॥ **कारितेति** । हेतुमण्ण्यन्तस्य प्राचां सञ्ज्ञा ॥ भाष्ये—**गुणी गुणेन संयोगात्**—सम्बन्धात्, **गुणिना संयोगात्**—सम्बन्धाद्गुणो वा इतराभिभवकर्तृत्वेनाभि**व्यज्येत**—प्रतीयेतेत्यर्थः, तदाह—**प्रकृष्टत्वेनेति** । इतराभिभवकर्तृत्वेन प्रतीयत इत्यर्थः । प्रेरणाऽस्य स्पष्टैवेत्याशयः । अत्र पक्षे निपातनानाश्रयणम् ॥

( वार्तिकावतरणभाष्यम् )

इहास्यापि सूक्ष्माणि वस्त्राणि, अस्यापि सूक्ष्माणि वस्त्राणीति परत्वादातिशायिकः प्राप्नोति ॥

( प्रदीपः ) परत्वादिति । 'सूक्ष्मतरवस्त्रः' इति प्राप्नोति । सूक्ष्मवस्त्रतर इति चेष्यते । प्रकर्षस्य—अन्यपदार्थं प्रति विशेषणत्वस्य च युगपद्विवक्षायां विप्रतिषेधोपपत्तिः ॥

( उद्द्योतः ) परत्वादिति । 'बहुव्रीह्यपेक्षया' इति शेषः ॥

( ५८३३ अतिव्याप्तिप्रत्याक्षेपे वार्तिकम् ॥ १ ॥ )

॥ * ॥ अतिशायने बहुव्रीहावुक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

'*पूर्वपदातिशये आतिशायिकाद्बहुव्रीहिः सूक्ष्मवस्त्रतराद्यर्थः*' *उत्तरपदातिशये आतिशायिको बहुव्रीहेर्बह्वाढ्यतराद्यर्थः* इति ॥

( प्रदीपः ) आतिशायिकादिति । पूर्वविप्रतिषेधेनेति भावः ॥ उत्तरपदातिशय इति । परविप्रतिषेधेन । तत्र स्वरे विशेषः—तरबन्तेन समासे 'बहोर्नञ्वदुत्तरपदभूम्नि' इति बह्वाढ्यतरशब्दोऽन्तोदात्तो भवति, बहुव्रीहेस्तरपि सति तरपः पित्त्वादनुदात्तत्वान्मध्योदात्तत्वप्रसङ्गः । तथा कपि विशेषः—बह्वाढ्यतरक इति तरबन्तेन समासे भवति, बहुव्रीहेस्तरपि बह्वाढ्यकतर इति स्यात् । यदा त्वत्रैव पूर्वपदार्थातिशयस्तदा बहुव्रीहौ कृते तरप् वेदितव्यः ॥

( उद्द्योतः ) ननु पूर्वं तरपि बहुव्रीहौ वा न रूपे विशेष इत्यत आह—तत्र स्वरे इति ॥

( वार्तिकावतरणभाष्यम् )

इह त्रीणि शुक्लानि वस्त्राणि प्रकर्षापकर्षयुक्तानि । तत्र पूर्वमपेक्ष्य उत्तरे द्वे तरबन्ते । तत्र द्वयोस्तरबन्तयोरेकस्मात्प्रकर्षयुक्ताच्छुक्लतरशब्दादुत्पत्तिः प्राप्नोति, शुक्लशब्दादेवेष्यते ॥

( प्रदीपः ) प्रकर्षापकर्षयुक्तानीति । अवयवधर्मेण समुदायस्य व्यपदेशः । तत्र प्रथममपकर्षयुक्तं, मध्यमं पूर्वापेक्षया प्रकर्षयुक्तमन्त्यापेक्षयाऽपकर्षयुक्तम्, अन्त्यन्तु प्रकर्षयुक्तमेवेति योज्यम् ॥ तत्रेति । पूर्वापेक्षया द्वयोरपि प्रकृष्टत्वाच्छुक्लतरत्वम्, तयोस्त्वेकतरस्यान्यतरापेक्षया प्रकर्षविवक्षायां तरबन्तात्तरबुत्पत्तिप्रसङ्गः ॥

( उद्द्योतः ) त्रयाणामपि प्रकर्षापकर्षोभययोगः कथमत आह—अवयवधर्मेणेति । क्वचिदवयवे प्रकर्षयोगः, क्वचिदपकर्षस्यैव, क्वचिदुभयोरिति त्र्यात्मकसमुदाये तदुपपत्तिः ॥ भाष्ये—प्रकर्षयुक्तादिति । प्रकर्षयुक्तवाचकादित्यर्थः । शब्दार्थयोरभेदाच्च भगवतः प्रायेणेदृशो व्यवहार इति बोध्यम् ॥

( ५८३४ अतिव्याप्तिनिरासवार्तिकम् ॥ २ ॥ )

॥ * ॥ शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् ॥ * ॥

( भाष्यम् ) शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययो विज्ञायते । शुक्लतरशब्दे शुक्लशब्दोऽस्ति तस्मादुत्पत्तिर्भविष्यति ।

नैतद्विवदामहे शुक्लतरशब्दे शुक्लशब्दोऽस्ति नास्तीति ।

किं तर्हि ?

शुक्लतरशब्दोऽप्यस्ति तत उत्पत्तिः प्राप्नोति ॥

( प्रदीपः ) शुक्लतरस्येति । न्यूनमध्यमोत्कृष्टानां सर्वेषां शौक्ल्यसम्भवाच्छुक्लव्यपदेशाच्छुक्लशब्दादेव तरबुत्पत्स्यत इत्यर्थः ॥ शुक्लतरशब्द इति । शुक्लतरशब्दो वाचको यस्यार्थस्य तस्मिन्नर्थे शुक्लशब्दो वाचकत्वेनास्तीत्यर्थः ॥ उत्पत्तिः प्राप्नोतीति । अनिष्टमपि प्राप्नोति सत्यामपीष्टासिद्धावित्यर्थः ॥

( उद्द्योतः ) ननु शुक्लतरशब्दे विद्यमानशुक्लशब्दस्यैकार्थीभावापन्नत्वात्कथं तत उत्पत्तिप्रसङ्गः ? अत आह—शुक्लतरशब्द इति ॥

( ५८३५ अतिव्याप्तिनिरासवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति ॥ * ॥

( भाष्यम् ) तदन्तादातिशायिकान्तात्स्वार्थे छन्दसि आतिशायिको दृश्यते—'देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे' ॥

( प्रदीपः ) श्रेष्ठतमायेति । श्रेष्ठायेत्यर्थः ॥

( उद्द्योतः ) ननु 'श्रेष्ठतमाय'इत्यादावातिशायनिकात् दृश्यत एव स इति कथं तस्यानिष्टता ? इत्यतो भाष्ये—तदन्ताच्च स्वार्थे इति । एवञ्च लोकेऽन्यत्र च तरबाद्यन्तादतिशये तरबादि अनिष्टमेवेति भावः ॥

( अतिव्याप्तिनिरासभाष्यम् )

एवं तर्हि—मध्यमात् शुक्लशब्दात्पूर्वपरापेक्षादुत्पत्तिर्वक्तव्या । मध्यमश्च शुक्लशब्दः पूर्वमपेक्ष्य प्रकृष्टः, परमपेक्ष्य न्यूनः । न च न्यूनः प्रवर्तते ॥

अथ वा उत्पद्यताम्, लुग्भविष्यति ॥

वाचकेन खल्वप्युत्पत्तव्यम्,

न च शुक्लतरशब्दादुत्पद्यमानो वाचकः स्यात् ॥

न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम् ।

केन तर्हि ?

तमपा ।

पूर्वेण स्पर्धमानोऽयं मध्यमो लभते सितः ।
परस्मिन् न्यूनतामेति न च न्यूनः प्रवर्तते ॥
अपेक्ष्य मध्यमः पूर्वमाधिक्यं लभते सितः ।
परस्मिन्न्यूनतामेति यथाऽमात्यः स्थिते नृपे ॥

अस्तु वाऽपि तरस्तस्मान्नापशब्दो भविष्यति ।
वाचकश्चेत्प्रयोक्तव्यो वाचकश्चेत्प्रयुज्यताम् ॥

(प्रदीपः) **मध्यमादिति** । मध्यमवाचिनः शुक्लादन्येऽभिधेये प्रत्ययो वक्तव्यः—शुक्लमतिशेते शुक्लतर इति । अनेन च वक्तव्येन तक्रकौण्डिन्यन्यायेन तृतीयशुक्लवाचिनः शुक्लतरशब्दादुत्पत्तिर्बाध्यते । मध्यमश्च शुक्लः पूर्वापेक्षया शुक्लतरो भवति, तृतीयापेक्षया तु न्यूनत्वाच्छुक्ल एव भवति न शुक्लतर इति शुक्लशब्दादेव मध्यमशुक्लवाचिनः प्रत्ययो वक्तव्य इत्यर्थः ॥ **न च न्यूनः प्रवर्तत इति** । स्वगतप्रकर्षापेक्षायां तद्धितोत्पत्ताविल्यर्थः । ततश्च पूर्वमतद्धितान्त एव शुक्लशब्दस्तृतीये शुक्लेऽभिधेये प्रत्ययमुत्पादयति ॥

**लुग्भविष्यतीति** । गतार्थत्वादप्रयोग एव लुक् । एकेनैव तरपा आद्यमध्यमशुक्लापेक्षतृतीयप्रकर्षस्य प्रतिपादनात् ॥

**न चेति** । शुक्लतरतरशब्दस्य प्रयोगाभावादवाचकत्वम् ॥

**न खल्वपीति** । यदि तावत् त्रयाणामन्यतमस्य प्रकर्षो विवक्ष्यते तदा शुक्लतममिति भाव्यम्, न तु शुक्लतरमिति । अथ पूर्वमनपेक्ष्य द्वयोरन्यतरस्य प्रकर्षविवक्षा तदा पूर्वानपेक्षायां मध्यमं शुक्लमेव भवति, न तु शुक्लतरमिति शुक्लशब्दादेवोत्पत्तिः सिद्धा—शुक्लतर इति न कश्चिद्दोषः ॥

पूर्वोक्तार्थसंग्रहश्लोकाः—**पूर्वेणेति** । **सितः**—शुक्लः ॥ **पूर्वेण स्पर्धमानः**—तदपेक्ष्योत्तरः[1] प्रकर्षं लभते । तृतीयापेक्षया न्यून एवेत्यर्थः ॥ **अपेक्ष्येति** । पूर्वेण समानार्थः, दृष्टान्तोपादानाय तु पुनरुक्तः ॥ **नापशब्द इति** । गतार्थत्वात् लुग्भावात्[2] । वाचकश्चेत्प्रयोक्तव्य[3] इति त्वं मन्यसे, तदा शुक्लतरतरमिति यदि वाचकस्ततः प्रयुज्यताम्, न तु वाचकः, तस्मान्न प्रयोक्तव्य इत्यर्थः ॥

(उद्योतः) **शुक्लादन्येऽभिधेये इति** । अतिशय्यमानादतिशयकर्तरि प्रत्यय इति पक्षे[4] इदम् । तदेवाह—**शुक्लमतिशेते इति** ॥ नन्वेवमपि तरबन्तादुत्पत्तिः कथं वारितेत्यत आह—**अनेन चेति** ॥ **तृतीयशुक्लवाचिनः**—तृतीयेनातिशय्यमानशुक्लवाचिन[5] इत्यर्थः । वस्तुत उभाभ्यामप्युत्पत्तिसिद्धाविदं[6] वचनं नियमार्थं—शुक्लशब्दादेव न शुक्लतरादिति वक्तुं युक्तम् । न्यायस्तु नानुवाद्यविषय इत्यसकृदावेदितम् ॥ ननु मध्यमस्यापि पूर्वापेक्षया प्रकृष्टत्वात्तरपा भाव्यमिति मध्यमः शुक्लशब्द एव दुर्लभोऽत आह—भाष्ये—**मध्यमश्चेति** ॥ **तृतीयापेक्षया तु न्यूनत्वादिति** । विद्यमानोऽपि पूर्वापेक्षः प्रकर्षोऽकिञ्चित्करः, यथा राजसन्निधावमात्यस्येति[7] भावः । ननु **न्यूनः**—अतिशय्यमानवाचक एव **प्रवर्तते**—वृत्तिं लभतेऽत आह—**स्वगतेति** । पूर्वाभिभवकर्तृत्वेन विवक्षायां मध्यमेऽर्थे प्रथमवाचकात्प्रत्ययो नेत्यर्थः ॥

'प्रकृत्यर्थविशेषणम्' इति पक्षे आह—भाष्ये—**अथवेति** । तद्व्याचष्टे—**एकेनैवेति** । तृतीयादुत्पन्नेनेत्यर्थः । मध्यमात्तु न, विद्यमानस्यापि प्रकर्षस्योत्कर्षेरीत्याऽकिञ्चित्करत्वादिति भावः ॥

ननु युगपदुपस्थितौ तृतीयापेक्षापकर्षेणाद्यापेक्षोत्कर्षस्य तिरोधानेऽपि क्रमेण प्रकर्षविवक्षायां ततस्तरपि तदन्तात्पुनः स दुर्वारः, अतः[8] पक्षान्तरमाह—भाष्ये—**वाचकेन खल्वपीति** । वक्ष्यमाणेऽपीयमापत्तिर्दुर्वारेत्ययमेव समाधिर्मुख्यः[9] । अत एवाग्रे सङ्ग्रहश्लोकेषु तदुक्तिः[10] । एतदन्तेन समासिश्चेति ध्येयम् । 'श्रेष्ठतमाय' इति तु च्छान्दसम्, लोके त्वसाधुरेवेति निष्कर्षः ॥

'अपेक्ष्य–' इति श्लोकस्य पौनरुक्त्यमाशङ्क्याह—**पूर्वेणेति** ॥ 'अस्तु वा–' **इति** भाष्यस्य—प्राप्नोतु इत्यर्थः । क्रमेण प्रकर्षविवक्षायां प्राप्तिः । **वाचकः**—लोके बोधकश्चेत्**प्रयोक्तव्य** इत्यस्य 'इति सिद्धान्तः' इति शेषः । अतो यदि बोधकः शिष्टसंमतस्तदा प्रयुज्यताम्, न तु तादृश इति न प्रयुज्यत इत्यर्थः । अनेन शास्त्रसिद्धोऽपि लोकाप्रयुक्तोऽसाधुरिति बोधितम् ॥

---

(९७५ विधिसूत्रम् ॥ ५ । ३ । २ आ. २७)

## २२१५ द्विवचनविभज्योपपदे तरबीयसुनौ ॥ ५ । ३ । ५७ ॥

(तरप्प्रत्ययाधिकरणम्)

(प्रदीपः) द्विवचनं[11] च विभज्यं च द्विवचनविभज्यम् । निपातनाद्भजेर्विपूर्वाद् यत्प्रत्ययः, द्विवचनविभज्यं च तदुपपदं चेति कर्मधारयः । तस्मिन् सति तिङन्तात्सुबन्ताच्चातिशायने तरबीयसुनौ भवतः । तच्चोपपदं विग्रहवाक्य एव प्रयुज्यते । वृत्तौ तु गतार्थत्वान्नावश्यं प्रयुज्यते । एवं चोपपदग्रहणं विस्पष्टार्थम् ॥

(उद्योतः) **निपातनादिति** । एवं च लोके विभाज्यशब्दस्य साधुत्वं चिन्त्यम्, ण्यत्यपि विभाग्यमित्यस्यापत्तेः[12] ॥ **वृत्तौ त्विति** । द्व्यर्थादेर्बुद्धिस्थत्व एव तरबुत्पत्तेरिति भावः ॥

---

१ तदपेक्ष्योत्तरः–मध्यम इत्यर्थः ॥

२ ह. पुस्तके 'लुगभावात्' इति पाठो दृश्यते स चायुक्त इति स्पष्टं तद्विदाम् ॥

३ 'वाचकश्चेत्प्रयोक्तव्यो–' इत्यादिकारिकार्थं विवृणोति—वाचकश्चेदित्यादि ॥

४ इति पक्षे इति । द्वितीयान्तादतिशायनेऽर्थे प्रत्यय इति पक्षे इत्यर्थः ॥

५ तृतीयेनेति । तृतीयेन शुक्लेनातिशय्यमानं शुक्लं यस्य, एतादृशान्मध्यमशुक्लशब्दात्तरपि तदन्तान्मध्यमशुक्लवाचिन इत्यर्थः ॥

६ इदं वचनमिति । 'एवं तर्हि मध्यमाच्छुक्लशब्दात्' इत्यादि न च न्यूनः प्रवर्तते–इत्यन्तं भाष्यवचनमित्यर्थः । नैतत्तक्रकौण्डिन्यन्यायेन सिद्धम्, अस्य वचनस्य नियमार्थत्वेनैवैतत्साध्यमिति भावः ॥

७ उत्करीत्येति । मध्यमे पूर्वापेक्षया प्रकर्षेऽपि उत्तमापेक्षया न्यूनत्वं यथा राजसन्निधावमात्यस्येतिरीत्येत्यर्थः ॥

८ तदन्तात्–तरबन्तात्, तरबन्तात्पुनस्तरप्प्रत्ययवारणाय 'वाचकेन खलु–' इत्यादि भाष्योक्तं समाधानमेवाश्रयणीयम् ॥

९ वक्ष्यमाणेऽपीति । वक्ष्यमाणश्च–'न खल्वपि बहूनां प्रकर्षे तरपा भवितव्यम्' इति भाष्योक्तः समाधिः । तस्मिन्नपि समाधौ पूर्वापेक्षया प्रकृष्टात् मध्यमात् तरपि तरबन्तादतिशय्यमानादतिशायनेऽर्थे तरप्, तमप् वा कस्मान्न–इत्याद्याशङ्काया वाचकेन खल्वप्युत्पत्तव्यमित्येव समाधानं बोध्यमिति भावः ॥

१० तदुक्तिः–न खल्वपि बहूनां प्रकर्षे इत्याद्युक्तिः । यदीयं निर्दुष्टा स्यात्तदा संग्रहश्लोके तस्या अप्युपादानमावश्यकं स्यादित्यर्थः । एवञ्च प्रकृत्यर्थविशेषणपक्ष एव ज्यायान्, स्वार्थे चार्थे प्रत्यय इति सिद्धान्तः ॥

११ सूत्रार्थं विस्तरेणाह—द्विवचनं चेत्यादि ॥

१२ विभाग्यमित्यस्यापत्तेरिति । णित्वाज्जतो कुत्वं ण्यतोरिति प्राप्तेरिति भावः ॥

( न्यासाक्षेपभाष्यम् )

**'द्विवचन' इत्युच्यते, तत्रेदं न सिध्यति—'दन्तोष्ठस्य[1] दन्ताः स्निग्धतराः' 'पाणिपादस्य पादौ सुकुमारतरौ' 'अस्माकं च देवदत्तस्य च देवदत्तोऽभिरूपतरः' इति ॥**

( प्रदीपः ) **तत्रेदं न सिध्यतीति** । पारिभाषिकद्विवचनाश्रयः पूर्वः पक्षः । अर्थाश्रयस्तूत्तरः पक्षः ॥ **अस्माकं चेति** । 'अस्मदो द्वयोश्च' इत्येकस्मिन् बहुवद्भावः ॥

( उद्योतः ) ननु 'अस्माकम्' इत्यस्य बहुत्वार्थकत्वात्कथं सिद्धान्तेऽपि तरबत आह—**अस्मद इति** ॥

( न्यासान्तरोपपादकभाष्यम् )

**यदि पुनर् 'द्व्यर्थोपपदे' इत्युच्येत, तत्रायमप्यर्थः—विभज्योपपदग्रहणं न कर्तव्यं भवति । इहापि—'सांकाश्यकेभ्यः पाटलिपुत्रका अभिरूपतराः' इति 'द्व्यर्थोपपदे' इत्येव सिद्धम् ॥**

( प्रदीपः ) **यदि पुनरिति** । पूर्वोक्तेषूदाहरणेषु क्वचिद्राशिद्वयापेक्षस्य क्वचिदर्थद्वयापेक्षस्य द्व्यर्थस्य विद्यमानत्वात्प्रत्ययः सिद्ध इति भावः ॥ **इहापीति** । सांकाश्यकपाटलिपुत्रकराशिद्वयसंभवात् ॥

( उद्योतः ) क्वचिदिति । 'दन्तोष्ठस्य' इत्यादौ । क्वचित्—'अस्माकं च देवदत्तस्य' इत्यादौ ॥ द्व्यर्थस्य—द्व्यर्थस्य शब्दस्य ॥

( न्यासान्तराक्षेपभाष्यम् )

**नैवंजातीयिका द्व्यर्थता शक्या विज्ञातुम् ।**

**इहापि प्रसज्येत—'सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमाः' इति ॥**

**अवश्यं खल्वपि विभज्योपपदग्रहणं कर्तव्यम् । यो हि बहूनां विभागस्तदर्थम्—'सांकाश्यकेभ्यश्च पाटलिपुत्रकेभ्यश्च माथुरा अभिरूपतराः' इति ।**

**तत्तर्हि द्व्यर्थोपपद इति वक्तव्यम् ॥**

( प्रदीपः ) **सांकाश्यकानामिति** । अत्रापि राशिद्वयस्य सद्भावात्तरप् स्यात् । सांकाश्यकावयवः समुदायः सांकाश्यकशब्देनोच्यते, पाटलिपुत्रकावयवश्च पाटलिपुत्रकशब्देन । एवं निर्धारणमुपपद्यते ॥ **बहूनां विभाग इति** । बहूनां राशीनां मध्यादेकस्य राशेर्यत्र विभागस्तत्र राशित्रयादिसद्भावात्तरप्न स्यात् ॥ **तत्तर्हीति** । ननु 'नैवंजातीयिका द्व्यर्थता' इत्यादिनाऽतिप्रसङ्गोद्भावनेनास्य पक्षस्य दूषितत्वात्कथं पुनरङ्गीकरणम् ? नैष दोषः । इह राशिद्वयापेक्षां द्व्यर्थतामाश्रित्याचार्यदेशीयेन 'यदि पुनर्' इत्याद्युक्तं तत्रायमप्यर्थ इति च । तत आचार्येण 'नैवंजातीयिका' इतिराशिद्वयापेक्षा द्व्यर्थता दूषिता । ततोऽन्या द्व्यर्थताऽऽचार्य्यस्याभिमतेति ज्ञात्वा शिष्य आह—**तत्तर्हीति** ॥

( उद्योतः ) ननु 'साङ्काश्यकानाम्' इत्यत्र साङ्काश्यकेभ्य इत्यत्र च बहुत्वावगमात् कथं द्व्यर्थोपपदत्वमत आह—**राशिद्वयेति** ॥ **समुदाय इति** । उद्भूतावयवभेद इत्यर्थः । अत एव बहुवचनम् । वस्तुतो राश्योर्द्वित्वात्तरबापत्तिः । तस्माद्वस्तुतो राशिद्वयगतद्वित्वमाश्रित्य न तरबिति 'विभज्योपपदे' इत्यवश्यवाच्यमिति तात्पर्यम् ॥ फलान्तरमपि तस्याह-भाष्ये—**अवश्यं खल्वपीति** । तद्व्याचष्टे—**बहूनामिति** ॥

( न्यासान्तरनिराकरणभाष्यम् )

**न वक्तव्यम् । नेदं पारिभाषिकस्य द्विवचनस्य ग्रहणम् ।**

**किं तर्हि ?**

**अन्वर्थग्रहणम्—उच्यते इति वचनम्, द्वयोरर्थयोर्वचनं द्विवचनमिति ।**

**एवमपि—**

( प्रदीपः ) आचार्य्य आह—**न वक्तव्यमिति** । इयमाचार्यस्य द्व्यर्थताऽभिमता-इह 'दन्तोष्ठस्य' 'पाणिपादस्य' इति तिरोहितावयवभेदः समूहः समासार्थः । तत्रैतस्यां वृत्तावभेदैकत्वसंख्योपादायित्वाद्वर्तिपदस्य परित्यक्तभेदाङ्गीकृताभेदलक्षणैकत्वसंख्यदन्तोष्ठलक्षणार्थद्वयाश्रया द्व्यर्थताऽस्ति । यदा त्वितरेतरयोगद्वन्द्वस्तदाऽवयवार्थभेदसद्भावात् द्व्यर्थता नास्तीति तरब्न भवति—'प्लक्षन्यग्रोधानां प्लक्षाः स्निग्धतमाः' इति । 'अस्माकं च देवदत्तस्य च' इत्यत्राप्यर्थद्वयसद्भावादस्ति द्व्यर्थत्वम् । 'सांकाश्यकानां च पाटलिपुत्रका अभिरूपतमाः' इत्यपरित्यक्तभेदाः समूहिनः शब्देन प्रत्याय्यन्ते । न च राशिद्वयापेक्षा द्व्यर्थता शब्देन प्रतिपादिता, राशिद्वयस्याप्रयोगादिति द्व्यर्थत्वाभावात्तरबभावः । अथात्र 'यतश्च निर्धारणम्' इति कथं षष्ठी ? यावता 'पञ्चमी विभक्ते' इति पञ्चम्या तदपवादेन भाव्यम् । नैष दोषः । सर्वत्रैव निर्धारणे विभागोऽस्तीति विभक्तग्रहणसामर्थ्याद्यत्र विभाग एव शब्देन प्रतिपाद्यते स एव पञ्चम्या विषयः स एव च विभज्योपपदनिमित्तस्य प्रत्ययस्य—'माथुराः पाटलिपुत्रकेभ्य आढ्यतराः' इति । समुदायशब्दप्रयोगे तु 'गवां कृष्णा संपन्नक्षीरतमा' इत्येवमादौ विभागाविभागसंभवान्न पञ्चमी, नापि तरप्प्रत्ययः । निर्धारणाश्रये तु षष्ठीसप्तम्यौ भवतः । यस्मान्निर्धार्यते—यश्चैकदेशो निर्धार्यते—यश्च निर्धारणहेतुरेतत्त्रयसंनिधाने निर्धारणं भवतीति तत्रैव षष्ठीसमासप्रतिषेधः[2] । इह तु 'नागानामुत्तमो नागोत्तमः' इति त्रयसंनिधानाभावात्संबन्धसामान्ये षष्ठीति समासो भवत्येव । 'सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमाः' इत्यत्रापि शब्देन समुदायस्य प्रतिपादनाद्विभज्यमानस्य द्विरुपादानाद्विभागाविभागसद्भावाद्विभागविषयकार्याभावः । प्रतियोग्यपेक्षत्वात् प्रकर्षस्य, विप्रकर्षे आक्षिप्ते विभज्यग्रहणादिहाप्यवधारणमाश्रीयते । तेन समुदायशब्द उच्चार्यमाणे विभज्योपपदनिमित्तप्रत्ययाप्रसङ्गः ॥

( उद्योतः ) तत्र आचार्याभिमतां द्व्यर्थतां स्फुटीकृत्य दर्शयति—**इयमित्यादिना** ॥ **एतस्यां वृत्तौ**—समाहारद्वन्द्ववृत्तौ ।

---

१ दन्तोष्ठस्येति । द्विवचनपदस्य पारिभाषिकद्विवचनपरत्वे 'दन्तोष्ठस्य' 'पाणिपादस्य' इत्यादौ तदभावात्तरप्न स्यादिति भावः ॥

२ 'षष्ठीसमासनिषेधो भवति' इति च. पाठः ॥

वर्तिपदस्य—दन्तपद—ओष्ठपदरूपस्य, अभेदैकत्वसंख्योपादायित्वात्—तदभिधायकत्वाद्विद्यमानस्यापि दन्तादिगतबहुत्वादेरप्रत्ययाद् व्यर्थतेत्यन्वयः ॥ बहुत्वाप्रत्यायकत्वमेवोपपादयति—**परित्यक्तेति** । परित्यक्तो व्यक्तिगतो भेदो येन, अङ्गीकृतो धर्मकृताभेदो येन तल्लक्षणैकत्वेत्यर्थः । व्यक्तीनामभेदेन भानादेकत्वेन भानमिति व्यवहारः, न तु तत्र सङ्ख्यारूपैकत्वभानम्-इत्यनेन सूचयति ॥ **व्यर्थताऽस्तीति** । वास्तवी व्यर्थताऽस्ति, न तु दन्तोष्ठयोर्द्वित्ववैशिष्ट्येन भानमिति भ्रमितव्यम्, सङ्ख्याविशेषाणां सर्वथा भानाभावात् । पदद्वयोपस्थाप्यत्वेनार्थस्य द्वित्वव्यवहार इति तत्त्वम् ॥ **यदा त्विति** । यत्र त्वित्यर्थः ॥ **तदा**—तत्रेत्यर्थः ॥ **अवयवार्थभेदसद्भावादिति** । तत्कृतबहुत्वसङ्ख्याभानादित्यर्थः ॥ तत्रोदाहरणं दर्शयति—**प्लक्षन्यग्रोधानामिति** ॥ 'अपरित्यक्तभेदाः समूहिनः' इति पाठः । **समूहिनः**—अवयवाः । उद्भूतावयवभेदः समूह इति यावत् ॥ **समुदायशब्दप्रयोगे त्विति** । तद्बोधकशब्दप्रयोगे त्वित्यर्थः ॥ **गवां कृष्णेत्यत्र**–गोशब्दः समुदायबोधकः ॥ प्रसङ्गादाह—**यस्माभिर्धार्यत इति तत्रैव षष्ठीत्यादि** । तत्रैव षष्ठीसमासप्रतिषेधश्चेत्यर्थः, विनापि चं तात्पर्यवशात्समुच्चयप्रतीतेः । समासश्च षष्ठीसमास एव, प्रत्यासत्तेः, निर्धारणे षष्ठीसमासनिषेधस्यैवोक्तेश्च । तद्ध्वनयन्नाह—**इह त्विति** । ध्वनितं चेदं 'हलादिः शेषः' इति सूत्रे भाष्ये ॥ 'सांकाश्यकानाम्' इति प्रकृतोदाहरणे यथा षष्ठी तदाह—**साङ्काश्यकानामिति** ॥ **शब्देन समुदायस्येति** । चशब्देनेत्यर्थः । 'चशब्देन समुदायस्य' इति पाठान्तरम् ॥ **द्विरूपादानादिति** । **विभज्यमानस्य**—निर्धार्यमाणस्य निर्धारणावधिकोटावप्युपादानात्समुदायरूपेणाविभागस्य, प्रत्येकरूपेण च विभागस्य सद्भाव इत्यर्थः । 'प्रतियोग्यपेक्षत्वात्प्रकर्षस्य विभागे आक्षिप्ते' इति पाठः । 'विकर्षे' इति पाठे विभागप्रयोजकीभूते धर्मे इत्यर्थः, सर्वं वाक्यं सावधारणमिति न्यायेन व्याख्यानादिति भावः ॥ **विभज्यग्रहणादिति** । विभागे इत्येव वाऽर्थः । विभज्यं चात्र विभागावधिभूतमेव गृह्यत इति बोध्यम् ॥

( ५८३६ एकदेशिन उपसंख्यानवार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) **तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानं कर्तव्यम् । 'परुद्भवान् पटुरासीत्, पटुतरश्चैषमः' इति ॥**

( प्रदीपः ) **परुद्भवानिति** । पाटवस्यातिशयेऽपि प्रतियोग्यपेक्षत्वात् प्रकर्षस्य, स एवायमिति प्रत्यभिज्ञानात् गुणिन एकत्वात्तस्यैव प्रतियोगित्वायोगात् प्रकर्षप्रत्ययाप्रसङ्गः ॥

( उद्योतः ) ननु पाटवातिशये प्रत्ययः, तच्च भिन्नमेवेति व्यर्थमुपसङ्ख्यानमत आह—**पाटवस्येति** ॥ स्वस्यैव स्वगतधर्मातिशये प्रतियोगित्वासम्भव इत्याह—**स एवायमितीत्यादि** । गुणिन एकत्वे गुणस्याप्येकत्वात्स्वगतगुणस्य स्वगतातिशये प्रतियोगित्वासम्भव इत्यपि बोध्यम् ॥

( ५८३७ सिद्धान्तवार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ सिद्धं तु गुणप्रधानत्वात् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**गुणप्रधानत्वात् । गुणप्रधानोऽयं निर्देशः क्रियते, गुणान्तरयोगाच्चान्यत्वं भवति । तद्यथा—तमेव गुणान्तरयुक्तं वक्तारो भवन्ति—अन्यो भवान् संवृत्त इति ॥**

( प्रदीपः ) **सिद्धं त्विति** । यद्यपि शब्देन गुणी प्राधान्येनोच्यते तथापि गुणाश्रयप्रकर्षनिमित्तत्वात्प्रत्ययोत्पत्तेस्तां प्रति गुणस्य प्राधान्यमाश्रित्य गुणप्रधानत्वादित्युच्यते । तत्र गुणभेदेन गुणिनो भेदारोपादुपपन्नो भेदाश्रयप्रकर्षनिमित्तः प्रत्ययः ॥

( उद्योतः ) **प्राधान्येनेति** । विशेष्यत्वेनेत्यर्थः ॥ **गुणस्य प्राधान्यमिति** । आर्थमित्यर्थः । वस्तुतः पाटवातिशयेन द्रव्यस्यातिशये प्रतिपाद्ये प्रत्यय इति स्पष्टं पूर्वमुक्तमिति यथाश्रुतमेव भाष्यमित्यन्ये ॥

---

( ९७६ नियमसूत्रम् ॥ ५ । ३ । २ आ. २८ )

## २२१६ अजादी गुणवचनादेव ॥ ५ । ३ । ५८ ॥

( नियमाधिकरणम् )

( एवकारप्रयोजनभाष्यम् )

**एवकारः किमर्थः ?**

**नियमार्थः ।**

**नैतदस्ति प्रयोजनम् ,**

**सिद्धे विधिरारभ्यमाणोऽन्तरेणैवकारं नियमार्थो भविष्यति ॥**

**इष्टतोऽवधारणार्थस्तर्हि । यथैवं विज्ञायेत—अजादी गुणवचनादेवेति ।**

**मैवं विज्ञायि—अजादी एव गुणवचनादिति ।**

**किं च स्यात् ?**

**न व्यञ्जनादी गुणवचनात्स्याताम् ॥**

( प्रदीपः ) **नियमार्थ इति** । अन्यथा प्रकर्षेऽजाद्योर्विधानादप्रकर्षे विधिः स्यात् ॥ **सिद्धे विधिरिति** । स्वरितत्वादतिशायनस्यानुवर्तनात्तत्रैव पुनर्विधानं नियमार्थमित्यर्थः ॥

---

1 इदानीमयमेव पाठ उपलभ्यते नान्य उपलभ्यते ॥

2 विभागे इत्येव वाऽर्थो विकर्षे इत्यस्य, अत एव विकल्पः । अत एव वाऽऽह—वीति ।' इत्यधिकः पाठो श. पुस्तके ॥

( ९७७ विधिसूत्रम् ॥ ५ । ३ । २ आ. २९ )

## २२१८ प्रशस्यस्य श्रः ॥ ५ । ३ । ६० ॥

( आदेशाधिकरणम् )

( सूत्रार्थोपपादकभाष्यम् )

इदमयुक्तं वर्तते ।

किमत्रायुक्तम् ?

"अजादी गुणवचनादेव" ५८ इत्युक्त्वा अगुणवचनानामपि अजाद्योरादेशा उच्यन्ते ।

नैष दोषः। एतदेव ज्ञापयति-भवत एतेभ्योऽगुणवचनेभ्योऽपि अजादी इति, यदयमजाद्योः परत आदेशान् शास्ति ।

एवमपि 'तयोः' इति वक्तव्यं स्यात्, तयोः परत इति ॥

यदि पुनरयं विधिर्विज्ञायेत ।

नैवं शक्यम्, व्यञ्जनादी हि न स्याताम्, उपाधीनां च संकरः स्यात् पुनर्विधानादजाद्योः ।

ननु चैते विशेषा अनुवर्तेरन् ।

यद्यप्येते अनुवर्तेरन् व्यञ्जनादी तर्हि न स्याताम् ॥

एवं तर्हि आचार्यप्रवृत्तिर्ज्ञापयति—'भवत एतेभ्योऽगुणवचनेभ्योऽप्यजादी' इति-यदयमजाद्योरादेशं शास्ति ।

ननु चोक्तं तयोरिति वक्तव्यमिति ।

न वक्तव्यम् । प्रकृतमजादिग्रहणमनुवर्तते ।

क्व प्रकृतम् ?

अजादी गुणवचनादेवेति ।

तद्वै प्रथमानिर्दिष्टम्, सप्तमीनिर्दिष्टेन चेहार्थः ।

अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा—उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनम्; देवदत्तमिति गम्यते ।

देवदत्तस्य गावोऽश्वा हिरण्यम्, आढ्यो वैधवेयः; देवदत्त इति गम्यते ।

पुरस्तात्षष्ठीनिर्दिष्टं सदर्थात्प्रथमानिर्दिष्टं द्वितीयानिर्दिष्टं च भवति ।

एवमिहापि—पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्सप्तमीनिर्दिष्टं भविष्यति ॥

( प्रदीपः ) **एवमपीति** । अन्यथा तरप्तमपोरादेशविधानं स्यादिति न ज्ञापकं स्यादजादिभावस्य ॥

**यदिपुनरिति** । 'अजादी' इति अत्रानुवर्त्य प्रशस्यशब्दादजादी भवतः, आदेशश्च-इत्येवं व्याख्यानात् ॥

**व्यञ्जनादी इति** । विशेषविहिताभ्यामजादिभ्यां बाधनात् । ज्ञापकत्वे तु नियमाप्रवृत्तिज्ञापनात् स्वशास्त्रेणैवाजाद्योर्विधानात् व्यञ्जनाद्योर्बाधस्याप्रसङ्गः । द्विवचनविभज्योपपदे ईयसुन्, अन्यत्रेष्ठन्-इत्युपाधिसंकरो न भवति ॥

**ननु चैत इति** । 'अतिशायन इष्ठन्' 'द्विवचनविभज्योपपदे ईयसुन्' इत्यनुवर्तिष्यत इत्यर्थः ॥

**व्यञ्जनादी तर्हीति** । यदि च तरप्तमपावनुवर्तेयातां तदा तयोरपि आदय आदेशाः स्युः । तस्मात्तौ नानुवर्त्यौ । ततश्च विशेषविहिताभ्यां तयोर्बाधप्रसङ्ग एव ॥

**आचार्यप्रवृत्तिरिति** । नियमाप्रवृत्तिज्ञापनद्वारेण अजादिभावो ज्ञाप्यते न तु साक्षात्, अन्यथा पुनरपि व्यञ्जनाद्योर्बाधः स्यात् ॥

**क्व प्रकृतमिति** । अजाद्योरिति सप्तम्यन्तं न प्रकृतं, यत्तु प्रकृतं-अजादी इति न तदेवात्र सम्बध्यत इति **प्रश्नः** ॥

**अर्थादिति** । सामर्थ्यादित्यर्थः । ननु च 'अजादी' इति यथाश्रुतविभक्तिसम्बन्धे अजादिविधानार्थे सम्भवति कथं विभक्तिविपरिणामः शक्य आश्रयितुम्? नैष दोषः । 'प्रशस्य' इति षष्ठीश्रवणात् स्थान्यादेशभावावगमादादेशस्य विधीयमानत्वात् प्राधान्यं प्रतीयते । तत्र 'अजादी' इत्यनुवर्तनादादेशविधौ प्रत्यययोर्गुणभावः । ततः सामर्थ्याद्विभक्तिविपरिणामः । विभक्तिशब्देन विभक्त्यन्तार्थ उच्यते । तस्य पूर्वशक्तित्यागेन शक्त्यन्तरोपजनेन विपरिणामव्यवहारः । प्रातिपदिकार्थ एव हि नानाशक्तियोगात् कर्मादिशब्दवाच्य इति स एव विशिष्टशक्तियुक्तो विभक्त्यन्तरवाच्यः । अथवा तात्त्विकेऽपि भेदे शब्दस्य सारूप्यात्तत्त्वाध्यवसायाश्रयेण विभक्तिप्रत्ययत्यागोपादानाभ्यां प्रातिपदिकस्य विपरिणामव्यवहारोऽवसीयते । विभक्तेस्तूपचरितो विपरिणामव्यवहारः । न हि प्रथमायाः सप्तमीरूपेण विपरिणामसम्भवः ॥

( उद्योतः ) भाष्ये—**अगुणवचनानामिति** । प्रशस्यशब्दस्य गुणकृता स्तुतिः प्रवृत्तिनिमित्तं, न तु गुणा इति भावः ॥

नन्वयमादेशस्य विधिरिति विज्ञायेतेत्ययुक्तं, सिद्धान्तेऽपि तद्विधित्वस्येष्टत्वादत आह—**अजादी इतीति** ॥

ननु ज्ञापकेनाप्यजादिविधानेन तरप्तमपी न स्यातामत आह—**नियमाप्रवृत्तीति** ॥ **उपाधिसंकरो नेति** । अत्रापि नियमाप्रवृत्तिज्ञापनादित्येव हेतुः ॥

**न तदेवात्र सम्बध्यत इति** । अयोग्यत्वादिति भावः ॥

**गुणभाव इति** । 'उक्तिः' इति शेषः ॥ **ततः सामर्थ्यादिति** । गुणभावौचित्यरूपात्सामर्थ्यादित्यर्थः ॥ ननु प्रथमायाः सप्तमीरूपेण विपरिणामासम्भवात् कथं विभक्तिविपरिणामोऽत आह—**विभक्तिशब्देनेति** ॥ नन्वजादी इति प्रथमान्तस्य प्रातिपदिकार्थ एवार्थो, न तु शक्तिविशिष्ट इति कथं पूर्वशक्तित्यागपूर्वकशक्त्यन्तरोपजननकृतो विपरिणामव्यवहारोऽत आह—**प्रातिपदिकार्थ एवेति** । एवञ्च स्वरूपेण प्रातिपदिकार्थस्य कर्मादिव्यवहारविषयत्वाभावेन सकलशक्तियुक्तः प्रातिपदिकबोध्यत्वात्प्रातिपदिकार्थः । ताः शक्तयस्तु न सर्वदा तद्बोध्याः, सहकार्यभावादिति भावः ॥ **स एवेति** । एवं च तदितरसकलशक्तिपरित्यागपूर्वकं यत्किञ्चिच्छक्तिवैशिष्ट्येन **विभक्त्यन्तवाच्यः,—**प्रथमातिरिक्तविभक्त्यन्तवाच्य इत्यर्थः । एवं च प्रकृते औपश्लेषिकाधिकरणशक्तिमत्त्वेन बोधाद्विपरिणामव्यवहार इति भावः ॥

**तात्विकेऽपि भेदे इति** । प्रथमाप्रकृतेः सप्तमीप्रकृतेश्चेत्यर्थः ॥

**विभक्तीत्यादि** । विभक्तिरूपप्रत्ययेत्यर्थः । एवञ्च प्रथमाविशिष्टस्य

प्रातिपदिकस्य सप्तमीविभक्तिवैशिष्ट्येन विपरिणाम इति भावः ॥ **उपचरित इति** । प्रातिपदिकगतविपरिणामारोपाश्रय इत्यर्थः ॥

( ९७८ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३० )

## २२२४ प्रशंसायां रूपप् ॥ ५ । ३ । ६६ ॥

( रूपप्प्रत्ययाधिकरणम् )

( प्रशंसायामित्यस्य प्रकृत्यर्थविशेषणबोधकं भाष्यम् )

**स्त्रीलिङ्गेनायं निर्देशः क्रियते, एकवचनान्तेन च । तेन स्त्रीलिङ्गादेवोत्पत्तिः स्यादेकवचनान्ताच्च । पुंनपुंसकलिङ्गात् द्विवचनबहुवचनान्ताच्च न स्यात् ।**

**नैष दोषः । नायं प्रत्ययार्थः ।**

**किं तर्हि ?**

**प्रकृत्यर्थविशेषणमेतत्—प्रशंसायां यत्प्रातिपदिकं वर्तते तस्माद्रूपप्भवति ।**

**कस्मिन्नर्थे ?**

**स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥**

( प्रदीपः ) इह प्रत्ययस्य विधीयमानतया प्राधान्यात्तदङ्गत्वाच्च प्रकृतेः प्रधानेन प्रशंसायाः सम्बन्धस्य न्याय्यत्वात्तस्याः प्रत्ययार्थत्वं मत्वाऽऽह—**स्त्रीलिङ्गेनायमिति** । ततश्च पटोः प्रशंसा–पटुरूपेति प्राप्नोति ।

अथ पटुरूपो देवदत्त इति सामानाधिकरण्याप्रसङ्गः कस्मान्न चोदितः ? तत्र **केचिदाहुः**–दोषोपलक्षणायैतदुक्तम् ।

**अन्ये त्वाहुः**—सोऽयमित्यभेदविवक्षायां सामानाधिकरण्यं भविष्यति । भेदविवक्षा तु तथालक्षणप्रयोगाभावान्न क्रियते ।[1]

यद्येवं गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्तीत्यतिशायनप्रत्ययान्तवदभिमतलिङ्गवचनयोगाद्दोषाभावः । **अत्राहुः**—प्रकृत्यर्थविशेषणपक्षस्योभयानुग्रहात् न्याय्यत्वादयं परिहारो भाष्यकारेण नाश्रितः ।

**अन्ये त्वाहुः**—प्रशंसामात्रे प्रत्ययविधानादन्तरङ्गत्वात् स्त्रीप्रत्ययेन भाव्यम् । पश्चात्सोऽयमित्यभिसंबन्धात्तद्वदभिधानेऽप्यन्तरङ्गः स्त्रीप्रत्ययो न निवर्तेत । प्रत्ययार्थविशेषणपक्षे 'कुमारिरूपा' इत्यव्यतिरिक्तं वय इति ङीप् कस्मान्न भवति ? कुमारशब्दादुत्पन्नेन ङीपा वयोविशिष्टार्थगतस्य स्त्रीत्वस्य द्योतितत्वाद्रूपबन्तात् स्त्रीत्वमात्रमभिव्यङ्क्तुं टाबेव क्रियते ।

ननु ङीपैव तदभिव्यक्तमिति टान्न प्राप्नोति । नैतदस्ति । 'कुमारिरूपः' इत्युच्यमाने कुटीरादिवल्लिङ्गान्तरं प्रतीयेत । तस्मादवश्यमभिव्यङ्क्तव्यं स्त्रीत्वमिति टाबुत्पद्यते । अयमेव च परिहार आतिशायिकप्रत्ययानां स्वार्थिकत्वपक्षे 'कुमारितरा'इत्यादावभिधानीयः ॥

( उद्योतः ) **ननु** स्वार्थिकत्वादेषां प्रकृत्यर्थविशेषणत्वात्कथमेतदत आह—**इहेति** । 'गुणानां च परार्थत्वादसंबन्धः समत्वात्' इति न्यायादिति भावः । यद्यपि 'भावे तस्यापत्यम्–इत्यादौ लिङ्गवचनस्याविवक्षितत्वात्'इत्युक्तरीत्याऽत्रापि समाधानं कर्तुं शक्यम्, तथापि वास्तवं समाधानान्तरं वक्तुं पुनरत्रोपन्यासः ॥

**अभेदविवक्षायामिति** । ईदृशलक्षणायां च स्वलिङ्गादिपरित्यागोऽपीति पटुरूप इत्यादिसिद्धिरिति भावः । तद्ध्वनयन्नाह—**भेदविवक्षा त्विति** । वक्ष्यमाणं **'अन्ये तु'** इत्यादि त्वरुचिग्रस्तमिति बोध्यम् ॥ भाष्ये—**स्त्रीलिङ्गादेवेत्यादि** पञ्चमी–हेतौ । फलं चेह हेतुः । स्त्रीलिङ्गफलिकोत्पत्तिः प्राप्नोतीत्यर्थः । एकवचनान्तादिपदानि धर्मपराणि ॥ **'तथालक्ष्यप्रयोगाभावात्'** इति पाठः । **'तथालक्षणप्रयोगाभावात्'** इति पाठे–भेदज्ञापकप्रयोगाभावादित्यर्थः ॥

**अतिशायनप्रत्ययान्तवदिति** । गुणोऽभिधीयते क्रिया वाऽभिधीयत इति पक्षयोरित्यर्थः ॥ **दोषाभाव इति** । 'पटुरूपेति प्राप्नोति'इति दोषाभाव इत्यर्थः ॥ **उभयानुग्रहादिति** । प्रकृतिप्रत्यययोरुभयोरप्यर्थानुग्रहणादित्यर्थः । अनेन प्रकृत्यर्थविशेषणत्वे [2]बीजं कथितम् । [1]अन्यथा गुणत्वात्तेनासम्बन्धः स्यादिति बोध्यम् ॥

**अन्ये त्विति** । इदमरुचिग्रस्तमित्युक्तमेव ॥ **स्त्रीत्वमात्रमिति** । प्राशस्त्यविशिष्टार्थगतं स्त्रीत्वम्, न तु वयोमात्रविशिष्टार्थगतं स्त्रीत्वमित्यर्थः । अत एव 'गोरूपा'इत्यादौ न ङीष् ॥ **तदभिव्यक्तमिति** । वयोविशिष्टार्थगते तस्मिन्नभिव्यक्ते उक्तं स्त्रीत्वमात्रमप्यभिव्यक्तमेवेत्यभिमानः ॥

**लिङ्गान्तरमिति** । न च तादृशप्रतीतिरनुभवसिद्धा–इति टाबवश्यमुत्पाद्य इत्य**भिमानः** । मदुक्तव्याख्यानरीत्या तु शङ्कैव नेति ध्येयम् ॥

( ५८३८ पूर्वपक्षिण उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ प्रकृतेर्लिङ्गवचनाभावात् तिङ्प्रकृतेरम्भाववचनम् ॥ * ॥

**( भाष्यम् ) प्रकृतेर्लिङ्गवचनाभावात्तिङ्प्रकृते रूपपोऽम्भावो वक्तव्यः । पचतिरूपम्, पचतोरूपम्, पचन्तिरूपमिति ॥**

( प्रदीपः ) **तिङ्प्रकृतेरिति** । तिङ् प्रकृतिर्यस्य रूपपः, ततः परस्या विभक्तेरम्भावो वक्तव्यः ॥

( ५८३९ सिद्धान्तवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ सिद्धं तु क्रियाप्रधानत्वात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम् ?**

**क्रियाप्रधानत्वात् ।**

**क्रियाप्रधानमाख्यातं भवति, एका च क्रिया । द्रव्यप्रधानं नाम ॥**

( प्रदीपः ) **एका च क्रियेति** । आख्यातशब्दात् क्रियाभेदस्यानवगमात् क्रियाया एकत्वमुच्यते, 'भवद्भिरास्यते' इत्यादौ तु केवलक्रियावचने द्विवचनबहुवचनादर्शनात् । 'पचतः-पचन्ति' इत्यादौ लकारवाच्यकर्तृसमवेतद्वित्वबहुत्वाश्रयो वचनभेद इति न ततः क्रियाभेदसिद्धिः । एकत्वाच्च

१ इदानींतनोपलब्धप्रदीपपुस्तकेषु 'लक्षणप्रयोगाभावात्' इत्येव पाठ उपलभ्यते ॥

२ बीजमिति । उभयार्थानुग्रहणरूपमित्यर्थः ॥

१ अन्यथा–एतद्बीजकथनाभावे गुणत्वात्–प्रकृत्यर्थस्याप्रधानत्वात्तेनासंबन्ध इति भावः ॥

क्रियाया रूपप्प्रत्ययान्ताद्द्विवचनबहुवचनाभावः ॥ **द्रव्यप्रधानं नामेति**-प्रसङ्गेनोक्तम्, न त्वस्य कश्चित्प्रकृतोपयोगः ॥

**( उद्योतः )** ननु साधनभेदात्क्रियाया भेदेन कथमेका क्रिया, किञ्च तस्यां सङ्ख्याया अभावात् एका–इत्यप्ययुक्तमत आह—**आख्यातशब्दादिति** । आख्यातशब्दस्तिङन्ते शक्तः, लोकव्यवहारात् । तेन तदन्तशब्दादित्यर्थः । स्वतस्तस्यां भेदानवगमेन द्वित्वाद्यभावः, एकत्वसत्ता च आकाश इवेति भावः ॥ तत्र द्वित्वाद्यभावे एकत्वसत्त्वे च युक्तिमाह—**भवद्भिरित्यादि** ॥ **वचनादर्शनादिति** । एकवचनदर्शनाच्चेत्यपि बोध्यम् ॥ **कर्तृसमवेतद्वित्वेति** । तदारोपाश्रय इत्यर्थः । तस्यैवारोपः शब्दशक्तिस्वभावात्, न कालादिगतस्य, नापि तद्वाच्यकारकगतस्य । अत एव 'दश दिनानि देवदत्तः पचति' 'भवद्भिरास्यते' 'तण्डुलान् पचति' इत्येकवचनमेव, तत्कृतं रूपाद्यन्तात् द्विवचनादि तु न, तस्य तिङैवोक्तत्वादिति भावः । एतेन 'ङ्याप्प्रातिपदिकात्' इति सूत्रस्थया हरिभाष्यसंमतस्वोक्त्या विरुद्धोऽयं ग्रन्थ–इति परास्तम् । क्रियाया असत्त्वलिङ्गैकत्वेतरसङ्ख्याराहित्यमेवेति बोध्यम् ॥

**( आख्यातस्य क्रियाप्राधान्यसाधकं भाष्यम् )**

**कथं पुनर्ज्ञायते क्रियाप्रधानमाख्यातं भवति, द्रव्यप्रधानं नामेति ?**

**यत्क्रियां पृष्टस्तिङाऽऽचष्टे—किं देवदत्तः करोति ? पचतीति ।**

**द्रव्यं पृष्टः कृताऽऽचष्टे—कतरो देवदत्तः ? यः कारको हारक इति ॥**

**(प्रदीपः) किं देवदत्तः करोतीति** । करोतिरत्र क्रियासामान्यवचनः । तत्र विशेषपरिज्ञानाय किंशब्दः क्रियाविशेषणं प्रवर्तते, क्रियाविशेषणत्वाच्च 'किम्' इत्येतद्द्वितीयान्तं नपुंसकं च । प्रकरणादिवशाच्च क्रियाप्रश्नावगतिः, गुणद्रव्यविषयस्यापि प्रश्नस्य संभवात्–'वायकः किं शुक्लं वस्त्रं करोति ? अथ कृष्णं ? तथा किं शाटकं करोति ? अथ प्रावारकम् ?' इति ।

**केचित्तु**-क्रियाप्रश्नेऽप्यभूततद्भाववचनं करोतिं मन्यन्ते, **किं करोति**-कां क्रियां निर्वर्त्तयतीत्यर्थः । तत्राख्यातवति प्रश्नवाक्ये प्रकरणादिवशात् क्रियाप्रश्नावगमादाख्यातेनैवोत्तरोपादानात्कालसंख्यासाधनोपग्रहाभिधानेऽप्याख्यातस्य क्रियाप्रधानत्वावगमः । [1]एकपदोपात्तार्थापेक्षं च क्रियाप्रधानत्वमभिधीयते । 'व्रीहीनवहन्ति' इत्यादौ व्रीहिद्रव्यसंस्कारार्थत्वादवघातस्याप्राधान्यम् । **अथ वा** यद्यप्यार्थं व्रीहीणां प्राधान्यं तथापि साध्यत्वात् क्रियायाः शाब्दं प्राधान्यं, न तु व्रीहीणां, साधनत्वात् ॥

**द्रव्यं पृष्ट इति** । यद्यपि 'यः पचति' इति तिङन्तेनापि उत्तरं भवति तथापि सर्वनाम्ना परामृश्य पाकक्रियाया यः कर्ता स देवदत्त इत्यभिधानात् केवलेनाख्यातेनोत्तरस्य अदानादाख्यातस्य [2]साधनत्वाप्रसङ्गः । पदान्तरेण हि द्रव्योपलक्षणाय गुणभावं क्रिया नीयते ॥

**( उद्योतः )** भाष्ये—**द्रव्यप्रधानं नामेति** । **नाम**शब्देन सुबन्तम्, तस्य सत्तालिङ्गसङ्ख्याकारकद्रव्यार्थकत्वेन तदपेक्षया द्रव्यस्य प्राधान्यम् । तस्य विभक्त्यर्थसम्बन्धं प्रति विशेषणत्वेन 'काण्डे' इत्यादौ विभक्त्यर्थप्रधानत्वोक्तिरविरुद्धा ॥ ननु 'देवदत्तः किं करोति' इति कर्मविषयप्रश्ने कथं क्रियामात्रवाचकेनोत्तरम् ? । किं च कृञ् उत्पत्त्यनुकूलव्यापारवाचित्वेन तद्विषयप्रश्ने कथं 'पचति' इत्युत्तरमत आह—**करोतिरत्रेत्यादि** ॥ **द्वितीयान्तमिति** । प्रथमान्तमिति वक्तुं युक्तम्, फलविशेषणत्वाभावेन मुख्यव्यापारविशेषणत्वेन च कर्मत्वाप्राप्तेः ॥ **प्रश्नावगतिरिति** । जिज्ञासाविषया देवदत्तकर्तृका क्रियेति बोधः ॥ **प्रकरणादिवशाच्चेत्यस्य** कृत्यं दर्शयति—**गुणद्रव्येत्यादि** ॥

**अभूतेति** । अभूततद्भावः–उत्पत्तिः, तदनुकूलो व्यापारो धात्वर्थः ॥ **कां क्रियामिति** । किंपदं च कर्मपरम् । तच्च प्रकरणादित एव क्रियारूपकर्मपरमिति भावः ॥ **उपग्रहः**—परस्मैपदात्मनेपदनिमित्तविशेषः । अत एव 'भावकालकारकसङ्ख्याश्चत्वारोऽर्था आख्यातस्य' इति निरुक्तभाष्य उक्तम् । आख्यातेनोत्तरोपादाने हेतुः-**क्रियाप्रश्नावगमः** । तत्र हेतुः-**प्रकरणादि** । तत्र क्रियाप्रश्नावगमेन प्रश्ने क्रियाप्रधानत्वावगमः, तत एवोत्तरेऽपि तत्त्वावगमः ॥ 'पश्य मृगो धावति' इत्यादौ धावनाद्यर्थस्य दृशिं प्रति विशेषणत्वादाह—**एकपदोपात्तार्थापेक्षं चेति** । तदुपात्तकारकापेक्षं प्राधान्यमित्यर्थः ॥ तत्फलमन्यदप्याह—**व्रीहीति** । तथा च भिन्नपदोपात्तव्रीह्यपेक्षयाऽप्राधान्येऽपि न क्षतिः ॥ नन्वेवं 'पच्यते' इत्यादौ स्वपदोपात्तकर्मकारकापेक्षयाऽपीदृशमप्राधान्यं दुर्वारमत आह—**अथ वेति** । 'क्रियाप्रधानम्'इत्यत्र शाब्दमेव प्राधान्यं विवक्षितमित्यर्थः ॥

**यः कर्तेति** । यत्कर्तृका पाकक्रिया स इत्यर्थः । **परामृश्येत्यस्य**—बुद्धिस्थीकृत्येत्यर्थः ॥ **इत्यभिधानादिति** । इत्यर्थकस्योत्तरस्याभिधानात्–कथनादित्यर्थः ॥ **स** इत्यनेन पाकक्रियाकर्तृत्वविशिष्टस्य बोधात् क्रियायाः प्राधान्यानुपपत्तिमाशङ्क्याह—**पदान्तरेणेति** । आख्यातपदे एव स नियम इति भावः ॥

**( क्रियाप्राधान्येऽपि द्विवचनबहुवचनसाधकभाष्यम् )**

**यदि तर्ह्येका क्रिया द्विवचनबहुवचनानि न सिद्ध्यन्ति—पचतः, पचन्तीति ।**

**नैतानि क्रियाऽपेक्षाणि,**

**किं तर्हि ?**

**साधनापेक्षाणि ।**

**इहापि तर्हि प्राप्नुवन्ति—पचतिरूपम्, पचतोरूपम्, पचन्तिरूपमिति ।**

**तिङोक्तत्वात्तस्याभिसंबन्धस्य न भविष्यति ।**

**एकवचनमपि तर्हि न प्राप्नोति ?**

**समयात् भविष्यति ।**

**द्विवचनबहुवचनान्यपि तर्हि समयात्प्राप्नुवन्ति ।**

**एवं तर्हि—एकवचनमुत्सर्गतः करिष्यते, तस्य द्विबह्वोरर्थयोर्द्विवचनबहुवचने अपवादौ भविष्यतः।**

---

१ ननु द्रव्यक्रिययोरुभयोरपि प्राधान्याप्राधान्ये दृश्येते । व्रीहिभिर्यजेतेत्यादौ व्रीहिकरणिका भावनेति बोधः, तत्र द्रव्यमप्रधानं क्रियायाश्च प्राधान्यम् । व्रीहीनवहन्तीत्यादौ तु व्रीहीणां संस्कार्यत्वात्प्राधान्यं भावनायाश्चाप्राधान्यं । तत्कथमुच्यते–आख्यातस्य क्रियाप्रधानत्वावगमः ? इत्याशङ्क्याह—एकपदोपात्तेति ॥

२ 'साधनप्रधानत्वाप्रसङ्गः' इति ग. पाठः ॥

**एवमपि नपुंसकत्वं वक्तव्यम् ।**

**न वक्तव्यम् ।**

**लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥**

( प्रदीपः ) **यदि तर्हीति** । क्रियागतसंख्याऽपेक्षं वचनभेदं मन्यते ॥ **नैतानीति** । लकारादिवाच्यकर्तृकर्मगतसंख्याऽपेक्षो वचनभेद इत्यर्थः ॥

**तिङोक्तत्वादिति** । उक्तार्थानामप्रयोग इति न्यायात् ॥ **एकवचनमपीति** । पचतिरूपमित्यत्र, तिङोक्तत्वादिति भावः ॥ **समयादिति** । 'परश्च' इति नियमात् 'न केवला प्रकृतिः प्रयोक्तव्या' इत्येवं रूपात् ॥

**द्विवचनबहुवचनान्यपीति** । तैरपि समयस्य परिपालनात् ॥ यद्यपि प्राथम्यादेकवचनेनैव समयः पाल्यत इति परिहारसंभवः, तथापि परिहारान्तरमाह—**एकवचनमिति** । 'द्व्येकयोर्द्विवचनैकवचने' इत्यत्रैकवचनग्रहणं न कर्तव्यम् । 'द्वयोर्द्विवचनम्' इत्येव कर्तव्यम् । तत्र ङ्याप्प्रातिपदिकात् स्वादयो भवन्तीति संख्यानिरपेक्षमेकवचनमुत्सर्गो भवति । तस्य द्वित्वबहुत्वयोर्द्विवचनबहुवचनयोरपवादयोर्विधानादेकत्ववत्यर्थे-अभेदैकत्ववति च संख्यारहितेऽव्ययाद्यर्थे चावस्थितमेकवचनम् । तस्मादेकवचनेनैवात्र समयः पाल्यते न तु द्विवचनबहुवचनाभ्यां तिङोक्तार्थाभ्यामित्यर्थः ॥

**लिङ्गमशिष्यमिति** । शास्त्रोपदेशेन विनाऽपि सिद्धिर्लिङ्गस्य लोकव्यवहारगम्या ॥

( उद्द्योतः ) **क्रियागतेति** । 'अनारोपित' इत्यादिः ॥ **सङ्ख्यापेक्ष इति** । साधनगतसङ्ख्यारोपापेक्ष इत्यर्थः । यत्त्विदं भाष्यमाख्यातार्थसङ्ख्यायाः कारकेऽन्वय इत्येवं परतया व्याख्येयमिति, तन्न, प्रागुक्तेन 'एका क्रिया' इत्यनेन एकत्वस्य प्रकृत्यर्थेऽन्वयलाभेन द्वित्वादीनां कारकेऽन्वये वैरूप्यापत्तेः । तस्मादारोपपरमेव भाष्यं व्याख्यातुमुचितम् । अत एव भाष्ये द्विवचनाद्यसिद्धिरेव शङ्किता, न तु वचनमात्रासिद्धिरिति दिक् । तत्र 'गौणी मुख्या चोत्तरा सङ्ख्या पूर्वसङ्ख्यां बाधते' इत्यइउण्सूत्रभाष्योक्तेर्न 'पचत' इत्यादौ स्वगतैकत्वप्रयुक्तं कार्यमिति बोध्यम् ।

ननु क्रियाया एकत्वाश्रयत्वे 'तद्धितश्च' इति सूत्रस्थेन—'किञ्चिदव्ययं विभक्त्यर्थप्रधानं, किञ्चित्क्रियाप्रधानं, न चैतयोरर्थयोर्लिङ्गसङ्ख्याभ्यां योगोऽस्ति' इत्यनेन विरोधः । अव्ययवाच्ययोरेतयोरर्थयोर्न ताभ्यां योग इति तदर्थेनाविरोधात् ॥ **उक्तार्थानामिति** । आरोपितसङ्ख्याया उक्तत्वान्न तदाश्रयं वचनं रूपाद्यन्तात्, किन्तु स्वगतैकत्वाश्रयमेवेति भावः ॥ **न केवलेति** । प्रातिपदिकत्वेनास्यापि तत्र प्रकृतित्वादिति भावः ॥ **तैरपीति** । अनुवादकविभक्तेर्न्याय्यत्वाच्चेत्यपि बोध्यम् । एवं च[1] 'यद्यपि—' इत्यादि **चिन्त्यम्** ॥

**न कर्तव्यमिति** ॥ 'तद्धितश्च' इति सूत्रे तु एकग्रहणं न कर्तव्यम्, 'एकवचनम्' इत्येवाप्राप्तप्रापणार्थं सूत्रं कर्तव्यमित्युक्तम् । 'पचतिरूपम्' इत्यादौ सर्वैकवचनं त्वनभिधानाद्वारणीयं तत्पक्षे इति बोध्यम् ॥ **अभेदैकत्ववतीति** । यथा 'राजपुरुषः' इत्यादिवृत्तेरर्थबोधनाय प्रयुक्ते 'राज्ञः पुरुषः' इत्यादौ ।

नन्वेवं द्विशब्दादावप्युत्सर्गेणैकवचनेनैव समयपालनाद्विवचनाद्यनापत्तिः, अनुवादकविभक्तेर्न्याय्यत्वे तु प्रकृतेऽपि तुल्यमिति चेन्न, 'द्वयोः' 'एकस्य' 'बहुषु' 'निर्जां त्रयाणाम्' इत्यादिनिर्देशैरुत्सर्गेणैव नियमपालनमिति नियमस्य सङ्ख्याशब्देऽनङ्गीकारेण तत्रार्थतो व्यवस्थयैव 'अनभिहित—' सूत्रोक्तया समयपालनाङ्गीकारेणादोषात् । तदाह—**एकवचनेनैवात्र समय इति** ॥

**( ५८४० पूर्वपक्षिण उपसंख्यानवार्तिकम् ॥ ३ ॥ )**

## ॥ * ॥ वृषलादिभ्य उपसंख्यानम् ॥ * ॥

**( भाष्यम् ) वृषलादिभ्य उपसंख्यानं कर्तव्यम् । वृषलरूपः, दस्युरूपः, चोररूप इति ॥**

( प्रदीपः ) **वृषलादिभ्य इति** । वृषलादीनां निकृष्टत्वादुत्कृष्टविषयत्वाच्च प्रशंसायास्तत्राभावं मन्यते ॥

( उद्द्योतः ) ननु वृषलत्वस्य पूर्णत्वे प्रशंसा भवत्येवेति सूत्रेणैव सिद्धमत आह—**वृषलादीनां निकृष्टत्वादिति** । न च वृषलत्वस्य जातित्वात्कथं निकृष्टत्वमिति वाच्यं, सहचरितधर्मनिकृष्टत्वेन तथा व्यवहारात् ॥

**( ५८४१ समाधानवार्तिकम् ॥ ४ ॥ )**

## ॥ * ॥ सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् ॥ * ॥

**( भाष्यम् ) सिद्धमेतत् ।**

**कथम् ?**

**प्रकृत्यर्थस्य वैस्पष्ट्य इति वक्तव्यम्[2] । वृषलरूपोऽयम्, अप्ययं पलाण्डुना सुरां पिबेत् । चोररूपोऽयम्, अप्ययमक्ष्णोरञ्जनं हरेत् । दस्युरूपोऽयम्, अप्ययं धावतो लोहितं पिबेत् ॥**

(प्रदीपः) न्यासान्तरेण सिद्धिं मत्वाऽऽह—**सिद्धं त्विति** । ननु प्रशंसायामित्येव सिद्धः प्रत्ययः, सर्वस्य हि वस्तुनः स्वव्यापारेऽतिशयात् प्रशंसा क्रियते, वृषलादीनामप्यसावस्ति । एवं तर्हि यदा निन्दाप्रतिपादनाय चोररूप इत्युच्यते तदा प्रत्ययाप्रसङ्गाद्ज्ञापकं वैस्पष्ट्यग्रहणमेव कर्तव्यम् । सत्येव पाटवादेर्वैस्पष्ट्ये प्रशंसासद्भावाद् विवक्षावशाच्च येषामेव प्रशंसावाचित्वं तेषामेव निन्दावचनत्वं दृश्यते, यथा 'राक्षसः' इति पुरुषातिशयप्रतिपादने प्रशंसा गम्यते, निर्घृणत्वप्रतिपादने तु निन्दा ।

अथ तमबादीनां रूपपश्च को विषयविभागः ? यावता अतिशयनमपि पूजानिन्दाविषयं—पटुतमः, पापीयानिति । रूपप्प्रत्ययोऽप्युभयविषयः—पटुरूपः, चोररूप इति । उच्यते—अतिशायनं समानप्रतियोग्यपेक्षं, वैस्पष्ट्यं तु तन्निरपेक्षमिति स्पष्ट एव विषयविभागः । 'अप्ययं पलाण्डुना' इत्यादौ गर्हायामपिशब्दः कर्मप्रवचनीयसंज्ञः ॥

---

[1] एवं चेति । अनुवादकविभक्तेर्न्याय्यत्वात् एकवचनेन समयपरिपालनाभावात् 'यद्यपि—' इत्यादिचिन्त्यमिति भावः ॥

[2] 'वक्तव्यम्' इति क. पाठः ॥

( उद्द्योतः ) वैरूप्यग्रहणस्य व्यापकत्वमुपपादयितुं वैरूप्ये सत्येव प्रशंसेत्याह—सत्येवेत्यादि ॥ सूत्रेणैवासुमर्थं साधयितुमाह—विवक्षावशाच्च येषामेवेति । एवं च प्रकृत्यर्थतावच्छेदकस्य तत्सहचरितगुणानां वा पूर्णत्वमेवात्र प्रशंसा, तस्य परिपूर्णत्वेन क्वचिन्निन्दाप्रतीतिस्तु प्रकरणादिवशाद्गम्येति न दोषः ॥ प्रशंसापराणामपि निन्दावचनत्वे दृष्टान्तमाह—यथेति ॥

उदाहरणे—पलाण्डुना—इति सहयोगे तृतीया । पलाण्डुभोजनेऽपि वृषलत्वं, तत्सहितसुरापाने तु तदधिकमिति बोध्यम् । अपिः—गर्हायाम् । सर्वत्र सम्भावनायां लिङ् । दस्युः—हिंसकः सन् परस्वापहर्ता ॥ वैरूप्यमिति । प्रशंसाया अप्युपलक्षणमेतत् ॥

( ९७९ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३१ )

## २२२५ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ॥ ५ । ३ । ६७ ॥

( कल्पप्प्रत्ययाधिकरणम् )

( ५८४२ एकदेशिवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः ॥ * ॥

( भाष्यम् ) **ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनयोरनुपपत्तिः । पटुकल्पः, पटुकल्पौ, पटुकल्पा इति ।**

**एकोऽयमर्थ ईषदसमाप्तिर्नाम, तस्यैकत्वादेकवचनं प्राप्नोति ॥**

( प्रदीपः ) प्रत्ययानां विधेयतया प्राधान्यात्तदर्थत्वमीषदसमाप्तेर्मत्वाऽऽह—ईषदसामाप्ताविति । ईषदसमाप्तौ यथेष्टं लिङ्गवचनासिद्धिरित्यर्थः ॥ एकवचनमिति । एकत्वादीषदसमाप्तेः । षष्ठीप्रसङ्गं तु न चोदयति, गुणगुणिनोरिह सर्वदा सोऽयमित्यभेदसम्बन्धस्य विवक्षितत्वात् भेदनिबन्धनायाः षष्ठ्या अप्रसङ्गात् ।

यद्येवं गुणवचनानामाश्रयतो लिङ्गवचनानीति लिङ्गवचनदोषोऽपि नास्ति । नैवं शक्यम् । इह गुडकल्पा द्राक्षा—बहुगुडा द्राक्षेति यदि ईषदसमाप्तेर्द्राक्षाश्रयत्वं तदा बहुगुड इति न सिध्यति ।

अथ गुडाश्रयत्वं ततो गुडकल्पेति न सिध्यति । का पुनर्द्राक्षायां[1] गुडस्येषदसमाप्तिः ? येन माधुर्येण गुणेन द्राक्षायां गुडशब्दो वर्तते तस्येषदसमाप्त्या गुडस्येषदसमाप्तिः ॥

( उद्द्योतः ) भाष्ये—क्रियाप्रधानत्वादिति । स्त्रीत्वविशिष्टक्रियाप्रधानत्वादित्यर्थः ॥ ईषदसमाप्तिः—आरोपिता-ईषत्समाप्तिः । भावे क्तिन्—इति भावः । (भाष्ये)—एकोऽयमर्थ इति । सूत्रे एकवचनान्तत्वेनोपादानादित्यर्थः । इदमुपलक्षणं 'स्त्रीलिङ्ग' इत्यस्यापि—'एकवचनम्' इति स्त्रीप्रत्ययस्यापि ॥ षष्ठीप्रसङ्गमिति । 'देवदत्तस्य पटुकल्प' इति स्यादिति भावः ॥

द्राक्षाश्रयत्वमिति । गुडस्येषदसमाप्तिरिति विग्रहः । गुडाश्रयत्वे वृत्तित्वं सम्बन्धः षष्ठ्यर्थः । द्राक्षाश्रयत्वे प्रतियोगित्वं सम्बन्धः ॥ गुडकल्पेति न सिध्यतीति । गुडाश्रयत्वेऽनुभवविरोधोऽपि बोध्यः ॥ का पुनरिति । द्रव्यस्येषदसमाप्त्यसम्भवादिति भावः ॥ येन माधुर्येणेति । गुडशब्दप्रयोगप्रयोजकमाधुर्यगुणप्रतियोगिकत्वं सम्बन्धः षष्ठ्यर्थ इति भावः ॥

( ५८४३ सिद्धान्तवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ प्रकृत्यर्थविशेषणत्वात्सिद्धम् ॥ * ॥

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**नायं प्रत्ययार्थः ।**

**किं तर्हि ?**

**प्रकृत्यर्थविशेषणमेतत्—ईषदसमाप्तौ यत्प्रातिपदिकं वर्तते तस्मात्कल्पबादयो भवन्ति ।**

**कस्मिन्नर्थे ?**

**स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥**

( प्रदीपः ) प्रकृत्यर्थविशेषणत्वादिति । उभयानुग्रहादेव हि प्रकृतिरप्यनुगृहीताभवति, प्रत्ययोऽपि, द्योतकत्वात्तस्य । एवं च स्वार्थिकत्वात्प्रकृतितो लिङ्गवचनानि सिध्यन्ति । यत्र तु नेष्यते तत्र 'णचः स्त्रियामञ्' इति ज्ञापकेन तदतिवृत्तिरिति वक्ष्यते ॥

( उद्द्योतः ) उभयानुग्रहादिति । ईषदसमाप्तिपदं तद्विशिष्टे औपचारिकम् । एवं पूर्वत्र प्रशंसापदं बोध्यम् ॥ यत्र त्विति । 'गुडकल्पा द्राक्षा' इत्यादौ ॥ अभेदविवक्षायामिति । तादृशविवक्षायां शुक्लादौ स्वगतलिङ्गादिपरित्यागदर्शनादिति भावः ॥

( ५८४४ प्रकृत्यर्थाक्षेपवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः ॥ * ॥

( भाष्यम् ) **प्रकृत्यर्थे चेल्लिङ्गवचनयोरनुपपत्तिः । गुडकल्पा द्राक्षा । तैलकल्पा प्रसन्ना । पयस्कल्पा यवागूरिति ॥**

( प्रदीपः ) प्रकृत्यर्थे चेदिति । ननु 'गुडकल्पा द्राक्षा' इत्यादौ 'गुड इयं द्राक्षा' इत्यभेदविवक्षायां गुडादयो द्राक्षादिषु वर्तमानाः प्रत्ययमेनुत्पादयन्तीति[2] द्राक्षादिगतलिङ्गवचनोपपत्तौ नास्त्यव्याप्तिदोषः । नैतदस्ति । गुडादयः शब्दा इवार्थाभ्यन्तरीकरणेन सोऽयमित्यभेदसम्बन्धेन द्राक्षादिषु वर्तमाना अपरित्यक्तस्वलिङ्गसंख्या एव वर्तन्ते, तत्र 'बहुगुडो द्राक्षा' इत्यादि सिध्यति । गुणशब्देभ्यश्च पट्वादिभ्यः कल्पादिषु दोषाभावः, जातिशब्देभ्यस्तु कल्पादिषु भिन्नलिङ्गसंख्यजात्यभिधाने गुडकल्पा द्राक्षेत्यादौ दोषः ॥

१ 'द्राक्षायां' इति छ. झ. पाठः ॥

२ 'प्रत्ययमुत्पादयन्तीति' इति झ. पाठः स च प्रामादिकः ॥

(उद्योतः) इवार्थाभ्यन्तरीकरणेनेति । अभ्यन्तरीकरणं—मूलत्वेनाश्रयणम्, इवार्थस्याभ्यन्तरीकरणं यत्रेति 'अभेदसम्बन्धेन' इत्यस्य विशेषणम्। तन्मूलकाभेदसम्बन्धेनेति यावत्। सादृश्यमूलकातिरिक्ताभेदसम्बन्धेन वृत्तौ हि तत्त्यागः । तन्मूलकाभेदसम्बन्धेनान्यत्र वृत्तौ तु न स्वलिङ्गादित्याग इति भावः ॥ गुणशब्देभ्यः पद्वादिभ्यश्चेति । तेषां त्रिलिङ्गत्वेनापरित्यक्तलिङ्गादीनामेव प्रवृत्तेरिति भावः। ईषन्न्यूनौ पटू पटुकल्पाविति द्विवचनादेरपि सिद्धिः ॥ जातिशब्देभ्यस्त्विति । प्रायेण ते नियतलिङ्गाः । ईषन्न्यूनो गुड इत्यर्थेऽपि 'गुडकल्पे द्राक्षे' इतीष्यत इति भावः ॥

दोष इति । प्रकृतिलिङ्गातिक्रमो दोषः ॥

(५८४५ समाधानवार्तिकम् ॥ ४ ॥)

॥ * ॥ सिद्धं तु तत्संबन्ध उत्तरपदार्थे प्रत्ययवचनात् ॥ * ॥

(भाष्यम्) सिद्धमेतत् ।

कथम् ?

तत्संबन्धे=ईषदसमाप्तिसंबन्धे उत्तरपदार्थे प्रत्ययो भवतीति वक्तव्यम् ।

सिध्यति । सूत्रं तर्हि भिद्यते ।

यथान्यासमेवास्तु ॥

(प्रदीपः) सिद्धं त्विति । यद्यप्युत्तरपदशब्दः समासावयवे रूढस्तथापीह प्रकृत्यर्थस्य पश्चात्प्रत्ययार्थस्य भावात् प्रत्ययार्थविशेषवाचिनि द्राक्षादिपदे यौगिको वर्तते । तेन गुडादिभ्य उपमानवाचिभ्य उपमेये द्राक्षादौ प्रत्यय इत्युक्तं भवति—गुड इवेयं द्राक्षेषदसमाप्ता गुडकल्पेति । यद्यप्युपमानग्रहणं नोपात्तं तथापि सामर्थ्यादत्रोपमानोपमेयभाव आश्रीयते । पट्वादिभ्योऽपि तत्रैव प्रत्ययोत्पत्तिर्यस्य परिपूर्णं पाटवं स लोके पटुरिति प्रसिद्धः । तेन तुल्य ईषदसमाप्तः पटुकल्पो देवदत्त इति तत्सम्बन्ध इति वचनादीषत्सादृश्ये प्रत्ययाभावः ॥

सिध्यतीति । यद्यप्यस्मिन् पक्षे 'बहुगुडो द्राक्षा' इत्यादि न सिध्यति, द्राक्षादिगतलिङ्गवचनप्रसङ्गात्, तथाप्युक्तदोषपरिहारात् सिध्यति—इत्युक्तम् ॥

(उद्योतः) वार्तिके—तत्सम्बन्ध इति बहुव्रीहिरिति ध्वनयन्व्याचष्टे भाष्ये—तत्सम्बन्धे इति ॥ पश्चात्प्रत्ययार्थस्येति । प्रत्ययार्थस्य विशेष्यत्वमेवेति सूचयति ॥ प्रत्ययार्थस्य द्रव्याभेदेनैव प्रतीतेराह—प्रत्ययार्थविशेषवाचिनीति ॥ नन्वीषदसमाप्तिसम्बन्धेतरपदार्थे प्रातिपदिकात्प्रत्ययस्योपमानवाचकातिरिक्तात्कर्तुमशक्यत्वेनाह—तेनेत्यादि ॥ गुड इवेयं द्राक्षेषदसमाप्तेति । ईषदसमाप्तेत्युक्तिर्बहुसादृश्यबोधनाय। तद्ध्वनयन् वक्ष्यति—ईषत्सादृश्ये प्रत्ययाभाव इति ॥ सामर्थ्यादिति । अन्यपदस्यार्थे अन्यपदात्प्रत्ययस्य सादृश्यमगर्भीकृत्यान्वयबोधनेऽसामर्थ्यादित्यर्थः ॥ वचनादिति । ईषत्सादृश्ये ईषदसमाप्तिसम्बद्धत्वाभावादित्यर्थः ॥ अथ वेति । 'तु'ग्रहणप्रत्याख्यानपरम् ॥

(यथान्यासे समीहितार्थसाधकभाष्यम्)

ननु चोक्तम् '*ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः*' इति । परिहृतमेतत्—'*प्रकृत्यर्थविशेषणत्वात्सिद्धम्*' इति ।

ननु चोक्तं—'*प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः*' इति ।

नैष दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति यदयं "णचः स्त्रियामञ्" (५।४।१४) इति स्त्रीग्रहणं करोति ।

यद्येतज्ज्ञाप्यते—बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूरिति, अत्रापि प्राप्नोति ।

नाप्यतिवर्तन्ते ॥

(प्रदीपः) स्त्रीग्रहणमिति । 'कर्मव्यतिहारे णच् स्त्रियाम्' इति स्त्रीलिङ्गे भावे णचो विधानात्तदन्तादञ्प्रत्ययः स्वार्थिकत्वात् स्त्रियामेव भविष्यतीति स्त्रीग्रहणं न कर्तव्यम् । तत् क्रियमाणं लिङ्गवचनातिवृत्तिं ज्ञापयति ॥

नापीति । उत्तरसूत्रे तुग्रहणाद्वक्ष्यमाणनियमार्थात्प्रकृतेर्ये लिङ्गवचने ते एव बहुव्युत्पन्ने भवतः । अथ वा स्त्रीग्रहणेनानुवृत्तिनियमाभावो ज्ञाप्यत इत्यनुवृत्त्यतिवृत्ती यथाप्रयोगं भवतः । अथ वा 'कासूगोणीभ्यां ष्टरच्' इति षित्करणेन स्त्रियां ङीषर्थेनानुवृत्तिरपि ज्ञाप्यत इत्युभयसिद्धिः ॥

(सूत्रोदाहरणसंपादकभाष्यम्)

किं पुनरिहोदाहरणम् ?

पटुकल्पो मृदुकल्प इति ।

नैतदस्ति । निर्ज्ञातस्यार्थस्य समाप्तिर्वा भवति, विसमाप्तिर्वा, गुणश्चानिर्ज्ञातः ।

इदं तर्हि—गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरिति ।

द्रव्यमप्यनिर्ज्ञातम् ।

इदं तर्हि—कृतकल्पम्, भुक्तकल्पम्, पीतकल्पम्—इति ॥

(प्रदीपः) किं पुनरिति । गुणशब्दानामनवक्लृप्तपरिमाणविषयत्वाद् गुणसम्बन्धमात्रेण मन्दमध्यमोत्कृष्टगुणे सर्वत्र वर्तनादीषदसमाप्तेरभावं मत्वा प्रश्नः ॥ निर्ज्ञातस्येति । 'अयमेव' इत्येवं निश्चितस्येत्यर्थः ॥ विसमाप्तिश्चेति । नञर्थे विशब्दः ॥ गुणश्चानिर्ज्ञात इति । इयदेव पाटवमितीयत्तया न ज्ञायते गुणः ॥

द्रव्यमिदानीमुपन्यस्यति—इदं तर्हीति । नन्वत्र न गुडादय ईषदसमाप्ताः । किं तर्हि ? द्राक्षादयः—इति द्राक्षादिभ्य

१ भाष्ये 'तत्सम्बन्धे' इत्येव पाठ इदानींतनपुस्तकेषु दृश्यते । उपकृत्योद्द्योतपुस्तकेषु तु 'तत्सम्बद्धे' इत्येवं प्रतीकं दृश्यते ॥

एव प्रत्ययेन भाव्यम् । नैष दोषः । यदपेक्षया परस्येषदसमाप्तिर्भवति तद्वाचिनः प्रत्ययेन भाव्यम् । तत्रैवार्थमभ्यन्तरीकृत्याभेदोपचाराद् गुड इव गुडो द्राक्षेति माधुर्याद् द्राक्षायां गुडत्वस्यारोपादारोपनिमित्तस्य माधुर्यस्येषदसमाप्तत्वाद् गुडादिभ्यः प्रत्ययोत्पत्तिरविरुद्धा ॥ **द्रव्यमपीति** । इयता माधुर्येण द्राक्षा गुड उच्यते इत्येवमपरिज्ञानात् देशभेदेन च गुडस्य भेदात् कं गुडमपेक्ष्य द्राक्षा गुड ईषदसमाप्ता उच्यत इत्येवमपरिज्ञानम् ॥ **कृतकल्पमिति** । आशंसायां भूतवद्भविष्यति प्रत्ययविधानादस्तिक्रियाया ईषदसमाप्तिरुपाधिरिति भावः ॥

(उद्योतः) ननु शुक्लादीनामल्पत्वमहत्त्ववत् पाटवादीनामपि तत्त्वसम्भवादीषदल्पत्वमेवेषदसमाप्तिरत आह—**गुणशब्दानामिति** ॥ भाष्ये—**निर्ज्ञातस्येति** । 'एतावानेव' इति निर्ज्ञातस्येत्यर्थः । तदाह—**अयमेवेति** । इयानेवेत्यर्थः । क्वचित्तु तथैव पाठः । अत एवाग्रे 'इयत्तया न ज्ञायते गुणः' इति वक्ष्यति ॥ **अत्र**—'गुडकल्पा' इत्यादौ ॥ **ईषदसमाप्तः**—माधुर्येषदसमाप्त्याश्रयाः ॥ **किन्तर्हीति** । द्राक्षादिगतमाधुर्येषदसमाप्तेरेव प्रतीतेरीषदसमाप्तमाधुर्यवती द्राक्षेति बोधादिति भावः ॥ **यदपेक्षयेति** । यन्निरूपितसादृश्यप्रयोजकधर्मस्येषदसमाप्तिस्तद्वाचिन इत्यर्थः । शब्दशक्तिस्वभावादिति भावः । एवञ्च सूत्रवार्तिकयोः समफलता भवति । ईषदसमाप्तमाधुर्यवद्गुडाभिन्ना द्राक्षेति बोध इति द्राक्षामाधुर्यस्यापीषदसमाप्तत्वमर्थलब्धमिति तयोः समफलतेति दिक् ॥ ननु द्रव्यमव्यक्तपरिमाणमिति कथं द्रव्यमनिर्ज्ञातमत आह—**इयतेति** ॥

(५८४६ कृतकल्पस्योदाहरणत्वाभावबोधकं वार्तिकम् ॥५॥)

**॥ * ॥ क्तान्तात्प्रत्ययविधानानुपपत्तिः, क्तस्य भूतकाललक्षणत्वात्कल्पादीनां चासमाप्तिवचनात् ॥ * ॥**

**(भाष्यम्) क्तान्तात्प्रत्ययविधेरनुपपत्तिः ।**

**किं कारणम्?**

**'क्तस्य भूतकाललक्षणत्वात्' भूतकाललक्षणः क्तः । 'कल्पादीनां चासमाप्तिवचनात्' विसमाप्तिवचनाश्च कल्पादयः । न चास्तिसंभवो यद्भूतकालश्च स्यादसमाप्तिश्चेति ॥**

(प्रदीपः) इतरो यथोक्तमभिप्रायमप्रतिपद्याह—**क्तान्तादिति** । क्रियाफलनिर्वृत्तौ क्रियाऽपवर्गो भवति, सति च क्रियाऽपवर्गे कुतः क्रियाया ईषदसमाप्तिरित्यर्थः ॥

(५८४७ कृतकल्पस्योदाहरणत्वसंपादकवार्तिकम् ॥ ६ ॥)

**॥ * ॥ सिद्धं तु आशंसायां भूतवद्वचनात् ॥ * ॥**

**(भाष्यम्) सिद्धमेतत् ।**

**कथम्?**

**"आशंसायां भूतवच्च" (३।३।१३२) इत्येवमत्र क्तो भविष्यति ॥**

(प्रदीपः) **सिद्धं त्विति** । भविष्यत्कालाया ईषदसमाप्तायाः क्रियाया आशंस्य मानत्वादित्यर्थः । 'ञीतः क्तः' 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमानकालविषयक्तान्तादपि प्रत्ययैर्भाव्यं—ज्ञातकल्पं, पूजितकल्पमिति । तथा तिङन्तादपि—पचतिकल्पमिति । यदाऽपि क्रियैकदेशापवर्गाश्रयेण भूते क्तो विधीयते तदाऽपि कल्पादयो भवन्ति—कृतकल्पं वस्त्रमिति । एवञ्च कृताकृतादय एकदेशाकरणाकरणाश्रयाः प्रयोगा उपपन्नाः । सकलक्रियाऽपवर्गाश्रयभूतकालविषयक्तप्रत्ययापेक्षे तु चोद्यप्रतिसमाधाने । एवञ्च कालत्रयविषयेभ्यस्तिङन्तेभ्यः कल्पादयो भवन्ति—पचतिकल्पं, पक्ष्यतिकल्पम्, अपाक्षीत्कल्पमिति ॥

(उद्योतः) स्वयमुदाहरणान्तराण्याह—**ञीतः क इति** ॥ **यदाऽपीति** । यथा 'प्रकृतः कटम्' इत्यादौ ॥ एकदेशापवर्गेण भूते प्रत्यये मानमाह—**कृताकृतेति** ॥ नन्वेवं भाष्योक्तशङ्कासमाधाने निर्दले अत आह—**सकलेति** ॥ स्वोक्तेऽर्थे युक्त्यन्तरमाह—**एवञ्चेति** ॥

(उदाहरणसंपादकं भाष्यम्)

**इदं चाप्युदाहरणं—पटुकल्पः, मृदुकल्प इति ।**

**ननु चोक्तं 'निर्ज्ञातस्यार्थस्य समाप्तिर्वा भवति विसमाप्तिर्वा गुणश्चानिर्ज्ञातः' इति ।**

**लोकतो व्यवहारं दृष्ट्वा गुणस्य निर्ज्ञानम् । तद्यथा—पटुरयं ब्राह्मण इत्युच्यते—यो लघुनोपायेनार्थान् साधयति । पटुकल्पोऽयमित्युच्यते—यो न तथा साधयति ।**

**इदं चाप्युदाहरणम्—गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरिति ।**

**ननु चोक्तं 'द्रव्यमप्यनिर्ज्ञातम्' इति ।**

**लोकतो द्रव्यमपि निर्ज्ञातम् ॥**

(प्रदीपः) **लोकत इति** । यावता माधुर्येण लोके द्राक्षायां गुडव्यवहारस्तावदाश्रय ईषदसमाप्तिसम्भवः । **अथवा** गुडगतमाधुर्याश्रयेण द्राक्षायां गुडत्वारोपात् गुडजात्यभावाद्वेषदसमाप्तं गुडत्वं द्राक्षायाम्, गुड इयं द्राक्षा—गुडकल्पा द्राक्षेति प्रयोगः ॥

(उद्योतः) **तावदाश्रये इति** । तावन्माधुर्याश्रये इत्यर्थः ॥ **ईषदसमाप्तीति** । माधुर्येषदसमाप्तीत्यर्थः ॥ **अथ वेति** । अत्र पक्षे ईषदसमाप्तगुडत्ववती द्राक्षेति बोधः । सादृश्यं तु पर्यवस्यति, पश्चान्मानसबोधविषय इति तत्त्वम् ॥ **गुडत्वारोपादिति** । आरोपविषयत्वमेवेषदसमाप्तत्वमिति भावः । आद्यमेव तु युक्तम् ॥

( ९८० विधिसूत्रम् ॥ ५ । ३ । ३ आ. ३२ )

## २२२६ विभाषा सुपो बहुच्पुरस्तात्तु ॥ ५ । ३ । ६८ ॥

( बहुजधिकरणम् )

( विभाषापदप्रयोजनभाष्यम् )

विभाषाग्रहणं किमर्थम् ?

विभाषा बहुज्यथा स्याद्, बहुचा मुक्ते वाक्यमपि यथा स्यात् ।

नैतदस्ति प्रयोजनम् । प्रकृता महाविभाषा, तया वाक्यमपि भविष्यति ॥

इदं तर्हि प्रयोजनम्—'कल्पादयोऽपि यथा स्युः' इति ।

एतदपि नास्ति प्रयोजनम्, बहुजप्युच्यते कल्पादयोऽपि, तदुभयं वचनाद्भविष्यति ।

नैवं शक्यम् । अक्रियमाणे हि विभाषाग्रहणेऽनवकाशो बहुच् कल्पादीन् बाधेत ।

कल्पादयोऽप्यनवकाशाः, ते वचनाद्भविष्यन्ति ।

सावकाशाः कल्पादयः ।

कोऽवकाशः ?

तिङन्तान्यवकाशः ॥

( सुप्पदप्रयोजनखण्डनभाष्यम् )

अथ सुब्ग्रहणं किमर्थम् ?

सुबन्तादुत्पत्तिर्यथा स्यात्, प्रातिपादिकान्मा भूदिति ।

नैतदस्ति प्रयोजनम् । नास्त्यत्र विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा ॥

यद्येवम्—इहापि नार्थः सुब्ग्रहणेन—"सुप आत्मनः क्यच्" ३।१।८ इति । इहापि नास्ति विशेषः सुबन्तादुत्पत्तौ सत्यां प्रातिपदिकाद्वा ।

अयमस्ति विशेषः—सुबन्तादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा भवति । प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा न प्राप्नोति ।

ननु च प्रातिपदिकादुत्पत्तौ सत्यां पदसंज्ञा सिद्धा ।

कथम् ?

आरभ्यते "नः क्ये" १।४।१५ इति ।

तच्चावश्यं वक्तव्यम्—सुबन्तादुत्पत्तौ सत्यां नियमार्थम्, तदेव प्रातिपदिकादुत्पत्तौ सत्यां विध्यर्थं भविष्यति ॥

१ 'ननु च बहुजप्युच्यते कल्पादयोऽप्युच्यन्ते' इति क. पाठः ॥



इदं तर्हि प्रयोजनम्—सुबन्तादुत्पत्तिर्यथा स्यात्, तिङन्तान्मा भूदिति ।

एतदपि नास्ति प्रयोजनम् । "ङ्याप्प्रातिपदिकात्"( ४।१।१ ) इति वर्तते ।

अत उत्तरं पठति—

( प्रदीपः ) अथ सुब्ग्रहणमिति । सुबन्तस्य प्रियकुत्सनादिषु वर्तनादर्थलभ्यं सुबन्तत्वमिति प्रश्नः ॥ प्रातिपदिकान्मा भूदिति । अन्वयव्यतिरेकाभ्यां प्रकृतिप्रत्ययानामिह शास्त्रेऽर्थवत्तापरिकल्पनात् प्रातिपदिकमपि स्वार्थादिपञ्चके प्रवर्तमानं प्रियकुत्सनादिषु प्रवर्तत इति ततोऽपि प्रत्ययप्रसङ्ग इति भावः ॥ नास्त्यत्र विशेष इति । ननु सुबन्तादुत्पत्तौ सत्यां 'बहुसेचः' इत्यादौ 'सात्पदाद्योः' इति षत्वप्रतिषेधः सिध्यति । प्रातिपदिकात्तूत्पत्तौ षत्वप्रसङ्गः । नैष दोषः । सुबन्तादुत्पत्ताववश्यं पदसंज्ञानिबन्धनकुत्वादिनिषेधार्थो यत्नः कर्तव्यः । बहुच्पूर्वस्य लुमता लुप्ते पदादिविधौ प्रत्ययलक्षणमिति तन्नियमार्थं—पदादिविधावेव, न पदान्तविधाविति । एवं च प्रातिपदिकादप्युत्पत्तौ यत्नः करिष्यते—सात्पदाद्योर्बहुचश्चेति । अत एव तुल्यन्यायतया 'सुप आत्मनः क्यच्' इत्यस्य सुब्ग्रहणस्याक्षेपः ॥

( उद्योतः ) सुबन्तस्येति । इदं च 'कुत्सिते' इत्यत्र भाष्ये स्पष्टम् ॥ ननु सुबन्तस्यैवेषदसमाप्त्यादौ वृत्तिः, न प्रातिपदिकस्येत्यत आह—अन्वयेति । शास्त्रकल्पितावन्वयव्यतिरेकौ, तत्कल्पितार्थवत्ता च शास्त्रव्यवहारोपयोगिन्येवेति बोध्यम् ॥ इति भाव इति । इत्यभिमान इत्यर्थः ॥ नियममेव दर्शयति—पदादीति ॥ अत एव तुल्यन्यायेति । तत्रत्येनास्य तुल्यन्यायतां बोधयितुमित्यर्थः ॥ आक्षेपः—तत्सारणम् ॥

( ५८४८ सुप्प्रयोजनवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ बहुचि सुब्ग्रहणात्पूर्वत्र तिङो विधानम् ॥ * ॥

( भाष्यम् ) बहुचि सुब्ग्रहणं क्रियते, पूर्वत्र तिङो विधिर्यथा विज्ञायेत ।

नैतदस्ति प्रयोजनम् । प्रकृतं तिङ्ग्रहणमनुवर्तते ।

क प्रकृतम् ?

"अतिशायने तमबिष्ठनौ" ५।३।५५ "तिङश्च" ५६ इति ॥

( प्रदीपः ) पूर्वत्र तिङो विधिरिति । अस्यैवार्थस्य ज्ञापनार्थमिह सुब्ग्रहणं । तेन पूर्वत्र प्रातिपदिकात्तिङन्ताच्च कल्पादयः सिध्यन्तीत्यर्थः ॥ नैतदस्तीति । ज्ञापकमन्तरेणापि तिङोऽनुवृत्तिः सिध्यतीत्यर्थः ॥

( वार्तिके न्यासान्तरबोधकभाष्यम् )

एवं तर्हि—'बहुचि सुब्ग्रहणं पूर्वत्र तिङो विधानात्' बहुचि सुब्ग्रहणं क्रियते ।

किं कारणम् ?

पूर्वत्र तिङो विधानात्। पूर्वत्र तिङश्चेत्यनुवर्तते, तदिहापि प्राप्नोति ।

ननु च तिङ्ग्रहणं निवर्तते ।

अवश्यमुत्तरार्थमनुवर्त्यन्ते—"अव्ययसर्वनाम्नामकच्प्राक् टेः" ५।३।७१ इति । पचतकि, जल्पतकीत्येवमर्थम् ॥

यदि सुब्ग्रहणं क्रियते, स्वरो न सिध्यति । 'बहुपटवः' एवं स्वरः प्रसज्येत, बहुपटव इति चेष्यते ।

पठिष्यति ह्याचार्य्यः—'*चितः सप्रकृतेर्बह्वकजर्थम्*' इति स्वरः कथम् ?

( प्रदीपः ) एवं स्वर इति । जस उदात्तत्वं स्यात्, पटुशब्दोकारस्य चेष्यत इत्यर्थः ॥

( उद्योतः ) ननु चितोऽन्तोदात्तत्वविधानात्कथं जसः, कथं वा पटोरुकारस्वरोऽत आह—भाष्ये—पठिष्यति हीति ॥ इति स्वरः कथमिति । हि—यत इति पठिष्यति—अतो हेतोः सुब्ग्रहणे कृते पटोरुकारस्य कथं स्वर इत्यर्थः ॥

( ५८४९ स्वरसाधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ स्वरः प्रातिपदिकत्वात् ॥ * ॥

( भाष्यम् ) सुब्लुकि कृते प्रातिपदिकत्वात्स्वरो भविष्यति ॥

( प्रदीपः ) स्वरः प्रातिपदिकत्वादिति । बहुचि कृते प्रकृतिप्रत्ययसमुदायस्यार्थवत्त्वात्समुदायाच्च जसोऽविधानात्तस्याप्रत्ययान्तत्वात्प्रातिपदिकसंज्ञायां सत्यां पूर्वोत्पन्नाया विभक्तेर्लुकि कृते पटुशब्दस्योकारस्योदात्तत्वं भवति । या तु अन्या विभक्तिरुत्पद्यते न सा प्रकृत्यवयव इति तस्या उदात्तत्वाप्रसङ्गः ।

ननु समासग्रहणस्य नियमार्थत्वात्प्रकृतिप्रत्ययसमुदायस्य प्रातिपदिकसंज्ञा न प्राप्नोति । नैष दोषः । 'अप्रत्ययः' इति प्रतिषेधो ज्ञापयति—प्रकृतिप्रत्ययसमुदायस्य समासग्रहणेन प्रातिपदिकसंज्ञा न निवर्त्यत इति । अन्यथा 'अप्रत्ययः' इति निषेधोऽनर्थकः स्यात् ॥

( उद्योतः ) ननु तद्धितान्तत्वाभावात्कथं प्रातिपदिकत्वमत आह—बहुचीति ॥ अप्रत्यय इति प्रतिषेध इति । स च प्रत्ययान्तविषय एव, न प्रत्ययविषय इति भावः । एतच्च तत्रैव निरूपितम् ॥

( तुपदाक्षेपभाष्यम् )

अथ तुग्रहणं किमर्थम् ॥

( ५७५० तुपदप्रयोजनवार्तिकम् ॥ ३ ॥ )

॥ * ॥ तुग्रहणं नित्यपूर्वार्थम् ॥ * ॥

( भाष्यम् ) तुग्रहणं क्रियते—नित्यं पूर्वो यथा स्यात्, विभाषा मा भूदिति ।

नैतदस्ति प्रयोजनम् । न विभाषाग्रहणेन पूर्वमभिसंबध्यते ।

किं तर्हि ?

बहुजभिसंबध्यते—विभाषा बहुज्भवतीति । यदा च भवति तदा नित्यं पूर्वो भवतीति ॥

इदं तर्हि प्रयोजनम्—प्रागुत्पत्तेर्यल्लिङ्गं वचनं च तदुत्पन्नेऽपि प्रत्यये यथा स्यात् । बहुगुडो द्राक्षा, बहुतैलं प्रसन्ना, बहुपयो यवागूरिति ।

एतदपि नास्ति प्रयोजनम् ।

स्वार्थिकोऽयम्, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥

एवं तर्हि सिद्धे सति यत्तुग्रहणं करोति तज्ज्ञापयत्याचार्यः—स्वार्थिका अतिवर्तन्ते अपि लिङ्गवचनानीति ।

किमेतस्य ज्ञापने प्रयोजनम् ?

गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत्सिद्धं भवति ॥

( प्रदीपः ) नित्यपूर्वार्थमिति । पुरस्तादेव—इत्येवमवधारणार्थं तुग्रहणमित्यर्थः । अन्यथा प्रत्ययवत् पूर्वत्वस्यापि विधेयतया प्राधान्याद्विभाषाग्रहणेन संबन्धः स्यादिति भावः ॥ किं तर्हि बहुजिति । बहुजेव विधेयत्वात् प्रधानं विभाषाग्रहणेन संबध्यते । तस्य तु परदेशव्यावृत्तये पुरस्तादित्यनेन विशेषणेन देशविशेषो निर्दिश्यते । ततश्च विभाषाग्रहणेन पुरस्तादित्यस्य संबन्धाभावः, गुणानां च परार्थत्वादसंबन्धः समत्वात्स्यादिति न्यायात् ॥ प्रागुत्पत्तेरिति । तुशब्दो नियमार्थः—पुरस्तादेव सर्वं भवतीति । तेन लिङ्गसंख्ये प्रकृतिगते भवतः । प्रयोगश्च प्राक् प्रकृतेः—पटुकल्पतर इति ॥ ननु परत्वात्कल्पबादिभिर्बाधितत्वात्तरप्तमब्भ्यां न भाव्यम् । नैष दोषः । कल्पबादिभिः प्रकर्षस्याद्योतनात्पुनः प्रसङ्गविज्ञानात् कल्पबाद्यन्तात् प्रकर्षद्योतनाय तरप्तमपौ भवतः ॥

( उद्योतः ) ननु 'तु'ग्रहणेन पूर्वत्वस्य नित्यत्वं कथं बोधयितुं शक्यम्, अवाचकत्वादित्यत आह—पुरस्तादेवेति ॥ विशेष इति । देशविशेष इत्यर्थः ॥ ननु देशविशिष्टप्रत्ययस्य विधेयत्वात्तस्यापि विधेयतालक्षणं प्राधान्यमस्त्येवेत्यत आह—ततश्चेति ॥ गुणस्येति । विधेयांशे विशेषणत्वाद्गुणस्येत्यर्थः ॥ पुरस्तादेव सर्वमिति । यत्सर्वं लिङ्गादि प्रत्ययोत्पत्तेः पुरस्ताद्वर्तते तदेव सर्वं भवतीत्यक्षरार्थः ॥ प्रयोगश्चेति । पुरस्तात्पदमावर्तत इति भावः ॥ भाष्ये—यत्तुग्रहणमिति । यदि तु पूर्वसूत्रोक्तरीत्या स्त्रीग्रहणमत्रार्थे ज्ञापकमित्युच्यते तदेदं प्रत्याख्येयम् ॥

( ५८५१ विप्रतिषेधोपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ तमादिभ्यः कल्पादयो विप्रतिषेधेन ॥ * ॥

( भाष्यम् ) तमादिभ्यः कल्पादयो भवन्ति विप्रतिषेधेन ।

तमादीनामवकाशः—प्रकर्षस्य वचनम्, ईषदसमाप्तेरवचनम् । पटुतरः, पटुतमः ।

कल्पादीनामवकाशः—ईषदसमाप्तेर्वचनं, प्रकर्षस्यावचनम् । पटुकल्पः, मृदुकल्पः ।

उभयवचने उभयं प्राप्नोति—पटुकल्पतरः, मृदुकल्पतरः । कल्पादयो भवन्ति विप्रतिषेधेन ॥

( उद्योतः ) उभयं प्राप्नोतीति । 'पटुतरकल्पः' इत्यपि कदाचित्स्यादिति भावः ॥

( वार्तिकोक्तविप्रतिषेधाक्षेपभाष्यम् )

यद्येवमीषदसमाप्तेः प्रकर्षे तमादिः प्रत्ययः प्राप्नोति, प्रकृतेरेव च प्रकर्ष इष्यते ॥

( ५८५२ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ तमादिरीषत्प्रधानत्वात्[1] ॥ * ॥

( भाष्यम् ) तमादिरीषत्प्रधानादपि भवन् यस्य प्रकर्षोऽस्ति तस्य प्रकर्षे भविष्यति ।

कस्य च प्रकर्षोऽस्ति ?

प्रकृतेरेव ॥

( प्रदीपः ) प्रकृतेरेवेति । कल्पबादीनां या प्रकृतिः पट्वादिः, तदर्थस्यैव प्रकर्षः संभवति; न त्वीषदसमाप्तेः । असमाप्तिप्रकर्षे समाप्तावीषदर्थाभावान्नास्तीषदसमाप्तेः प्रकर्षः ॥

( उद्योतः ) भाष्ये—तमादिरीषत्प्रधानत्वादिति । कल्पान्तस्येषदसमाप्तिप्रत्यायकत्वादित्यर्थः । प्रधानत्वं तु कल्पप्रयोगस्य तन्मात्रबोधकफलकत्वादिति बोध्यम् । तत्र च प्रकर्षासम्भवात् तत्प्रकृत्यर्थप्रकर्षे एव तमादिः प्रत्यय इत्यर्थः ॥ न त्वीषदसमाप्तेरिति । न हीषदर्थस्यासमाप्तेर्वा प्रकर्षे ईषदसमाप्तिर्भवतीति भावः ॥

( ९८१ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३३ )

## २२२९ अव्ययसर्वनाम्नामकच्प्राक् टेः ॥ ५ । ३ । ७१ ॥

( ९८२ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३४ )

## २२३० कस्य च दः ॥ ५ । ३ । ७२ ॥

( अकजधिकरणम् )

( अकच्प्रकृतिनिर्धारकभाष्यम् )

किमयं सुबन्तस्य प्राक् टेर्भवति, आहोस्वित् ङ्याप्प्रातिपदिकस्य ?

कुतः संदेहः ?

उभयं प्रकृतम्, अन्यतरच्छक्यं विशेषयितुम् ।

किं चातः ?

यदि सुबन्तस्य—युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोरिति न सिध्यति ।

अथ प्रातिपदिकस्य—त्वयका, मयका, त्वयकि, मयकि-इत्यत्रापि प्राप्नोति ।

अस्तु सुबन्तस्य ।

कथं-युष्मकाभिः, अस्मकाभिः, युष्मकासु, अस्मकासु, युवकयोः, आवकयोरिति ?

### अनोकारसकारभकारादाविति वक्तव्यम् ॥

( प्रदीपः ) अन्यतरदिति । प्रातिपदिकस्य प्राक् टेरकज् भवति, सुबन्तस्य वा प्राक् टेः-इत्येवं प्राक् टेरित्यनेनान्यतरच्छक्यते विशेषेऽवस्थापयितुमित्यर्थः ॥

( उद्योतः ) भाष्ये—उभयं प्रकृतमिति । एकमधिकारात्, सुबन्तं तु सामर्थ्यादिति बोध्यम् । ननु 'प्राक्टेः' इत्यस्य सुबन्तं प्रातिपदिकं वा विशेषणम्, न तु 'प्राक्टेः' इत्येतत्तस्य-इति 'अन्यतरच्छक्यं विशेषयितुम्' इत्यसङ्गतम्, 'अन्यतरेण शक्यं विशेषयितुम्' इत्युचितमत आह—विशेषेऽवस्थापयितुमिति । तत्र सुबन्तस्येति युष्मदस्मद्विषयकमेव, अन्यत्र तु प्रातिपदिकस्यैव टेरिति बोध्यम्, उदाहरणपरभाष्यप्रामाण्यात् ॥

( ५८५३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ अकच्प्रकरणे तूष्णीमः काम् ॥ * ॥

( भाष्यम् ) अकच्प्रकरणे तूष्णीमः काम्वक्तव्यः ।

### आसितव्यं किल तूष्णीकामेतत्पश्यत चिन्तितम् ॥

( प्रदीपः ) तूष्णीमः कामिति । मित्त्वादचोऽन्त्यात्परः काम् भवति । अज्ञाताद्यर्थाविवक्षायां तूष्णीम्-इत्येव भवति ॥

( ५८५४ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ शीले को मलोपश्च ॥ * ॥

( भाष्यम् ) शीले को मलोपश्च वक्तव्यः । तूष्णीं शीलः—तूष्णीकः ॥

( प्रदीपः ) शीले क इति । शीलं स्वभावो नियमश्च । अज्ञाताद्यपवादः शीलं, शब्दशक्तिस्वभावाच्च तद्वांस्तूष्णीक उच्यते ॥

( उद्योतः ) अज्ञाताद्यपवादः शीलमिति । तक्रकौण्डिन्यन्यायादिति भावः । विधेयविषयत्वात्तस्य न्यायस्येदं चिन्त्यम् । यदि नेष्यते तत्र कः, तदाऽनभिधानान्न ॥ तद्वानिति । 'शीले' इत्यर्शआद्यजन्तं बोध्यम् ॥ तूष्णीक इति । 'केऽणः' इति ह्रस्वाभावः, अणन्ताद्विहिते के एव ह्रस्वविधानात् ॥

( नानादेशप्रत्ययानां बाध्यबाधकभावबोधकभाष्यम् )

इह-भिनत्ति, छिनत्तीति श्नमि कृते शप् प्राप्नोति ।

बहुकृतम्, बहुभुक्तं, बहुपीतं—बहुचि कृते कल्पादयः प्राप्नुवन्ति ।

उच्चकैः, नीचकैः—अकचि कृते कादयः प्राप्नुवन्ति ।

[1] 'ईषत्प्रधानात्' इति च. छ. झ. पाठः ॥

ननु च श्रम्बहुजकचोऽपवादास्ते बाधका भविष्यन्ति ॥

( प्रदीपः ) इह भिनत्तीति । भिन्नदेशत्वाद्विरोधाभावादनेकेनापि प्रत्ययेन प्रदीपेनेव घटादेर्गार्ग्यायण्यां ष्फङीष्भ्यां स्त्रीत्वस्येवाज्ञातादेरेकस्यार्थस्य द्योतनमविरुद्धं मन्यमानो वार्तिककार उत्सर्गप्रतिषेधं शास्ति । भाष्यकारस्तु विरोधमन्तरेणापि सामान्यविधेर्बाधकं विशेषविधिमन्यत्रादीदृशत् ॥

( उद्द्योतः ) भाष्यकारस्त्विति । 'सत्यपि सम्भवे बाधनं भवति' इत्यादिना ॥

( ५८५५ नानादेशानां बाधकत्वबोधकवार्तिकम् ॥ ३ ॥ )

॥ * ॥ श्रम्बहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेधः ॥ * ॥

( भाष्यम् ) श्रम्बहुजकक्षु नानादेशत्वादुत्सर्गस्य प्रतिषेधो वक्तव्यः । समानदेशैरपवादैरुत्सर्गाणां बाधनं भवति, नानादेशत्वान्न प्राप्नोति ॥

( ५८५६ पूर्वविप्रतिषेधबोधकवार्तिकम् ॥ ४ ॥ )

॥ * ॥ कविधेस्तमादयः पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) कविधेस्तमादयो भवन्ति पूर्वविप्रतिषेधेन ।

कविधेरवकाशः—कुत्सादीनां वचनं प्रकर्षस्यावचनम्—पटुकः, मृदुकः ।

तमादीनामवकाशः—प्रकर्षस्य वचनं कुत्सादीनामवचनम्—पटुतरः, पटुतमः । उभयवचने उभयं प्राप्नोति—पटुतरकः, पटुतमकः ।

तमादयो भवन्ति पूर्वविप्रतिषेधेन ॥

( प्रदीपः ) कविधेरिति । अज्ञातः-प्रकृष्टः पटुरित्यर्थद्वयविवक्षायां पटुतमक इति भवति ॥

( ५८५७ विप्रतिषेध बोधकवार्तिकम् ॥ ५ ॥ )

॥ * ॥ कदाचित् छिन्नकतरादयः ॥ * ॥

( भाष्यम् ) कदाचित् छिन्नकतरादयो भवन्ति विप्रतिषेधेन । छिन्नकतरं, छिन्नकतमम् ॥

( प्रदीपः ) छिन्नकतरमिति । 'अनत्यन्तगतौ क्तात्' इति कनि कृते तरप् ॥

( ५८५८ पूर्वविप्रतिषेधबोधकवार्तिकम् ॥ ६ ॥ )

॥ * ॥ एकदेशिप्रधानश्च समासः ॥ * ॥

( भाष्यम् ) एकदेशिप्रधानश्च समासः कविधेर्भवति पूर्वविप्रतिषेधेन । अर्धपिप्पलिका, अर्धकोशातकिका ॥

( प्रदीपः ) अर्धपिप्पलिकेति । कुत्सितमर्धपिप्पल्या इत्याद्यर्थविवक्षायां समासे कृते ततः कप्रत्ययः ॥

( उद्द्योतः ) कुत्सितमर्धमिति । अन्यथा 'अर्धकपिप्पली' इति स्यादिति भावः ॥

( ५८७९ पूर्वविप्रतिषेधबोधकवार्तिकम् ॥ ७ ॥ )

॥ * ॥ उत्तरपदार्थप्रधानश्च संज्ञायां कन्विध्यर्थम् ॥ * ॥

( भाष्यम् ) उत्तरपदार्थप्रधानश्च समासो भवति पूर्वविप्रतिषेधेन ।

किं प्रयोजनम् ?

संज्ञायां कन्विध्यर्थम् । संज्ञायां कन् यथा स्यात् । नवग्रामकम्, नवराष्ट्रकं, नवनगरकम् ॥

( प्रदीपः ) नवग्रामकमिति । समासात् 'संज्ञायां कन्' इति कुत्सायां ह्रस्वत्वे वा कनि सत्याद्युदात्तत्वं भवति । पूर्वं तु कनि सति पश्चात्समासे क्रियमाणे अन्तोदात्तत्वप्रसङ्गः । अत्र संज्ञा कुत्सनादिहेतुका विषयभावेनास्ति, सामानाधिकरण्यं च पदयोरिति युगपत्कार्यद्वयप्रसङ्गादस्ति विप्रतिषेधः ॥

( उद्द्योतः ) पूर्वं समासे स्वरे विशेषं दर्शयति—समासादिति । 'दिक्सङ्ख्ये संज्ञायाम्' इति समासः । यद्वा नवश्चासौ ग्रामश्चेति समासः । 'संज्ञायां कन्' इति सूत्रद्वयम्, एकं 'कुत्सिते' इत्युत्तरम्, अपरं 'ह्रस्वे' इत्युत्तरम् । कुत्सायां ह्रस्वत्वे च कन्भवति तदन्तेन चेत्संज्ञा गम्यत इति तयोरर्थः ॥ उभयोर्युगपत्प्राप्तिमुपपादयति—अत्र संज्ञेति ॥

( ५८८० पूर्वविप्रतिषेधबोधकवार्तिकम् ॥ ८ ॥ )

॥ * ॥ कदाचिद्द्वन्द्वः ॥ * ॥

( भाष्यम् ) कदाचिद्द्वन्द्वः कविधेर्भवति पूर्वविप्रतिषेधेन । प्लक्षकन्यग्रोधकौ, प्लक्षन्यग्रोधकाविति वा ॥

---

( ९८३ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३५ )

## २२३२ कुत्सिते ॥ ५ । ३ । ७४ ॥

( प्रत्ययानुपपत्तिप्रतिपादकभाष्यम् )

इह—कुत्सितकः, अनुकम्पितक इति स्वशब्देनोक्तत्वात्तस्यार्थस्य प्रत्ययो न प्राप्नोति ॥

( प्रदीपः ) स्वशब्देनोक्तत्वादिति । अनिर्धारितविशेषेऽर्थे यदा प्रकृतिर्वर्तते तदा तद्विशेषद्योतनाय स्वार्थिकः प्रत्ययो विधीयते । यदा तु निर्ज्ञातविशेषे एवार्थे कुत्सितादयः शब्दा वर्तन्ते तदा विशिष्टस्यार्थस्य[1] प्रतीतत्वाच्चरितार्थत्वात्प्रत्ययाप्रसङ्गः । प्रतीतप्रत्यायनेऽनवस्थाप्रसङ्गादिति भावः ॥

१ 'विशिष्टस्यार्थस्याप्रतीतत्वात्' इति च.छ. पाठः । यदा निर्ज्ञातविशेषे कुत्सितादयस्तदा विशिष्टोऽर्थः प्रत्ययात्प्राक् प्रकृत्या प्रतीत इति प्रत्ययाभाव इति मूलोक्तः पाठः साधुः ॥

( उद्योतः ) नन्वेषां स्वार्थिकत्वेन प्रकृत्युक्त एवार्थे एते प्रत्यया इति किमुच्यते 'स्वशब्देनोक्तत्वात्' इत्यत आह—**अनिर्धारितेति** ॥ **विशेषाः**—कुत्सादयः । अश्वादयश्च जातिविशिष्टमेवार्थं कप्रत्ययरहिताः प्रतिपादयन्तीति भावः । तत्र कुत्साविशिष्टार्थबोधकताद्योतकः प्रत्यय उचितः, न प्रकृते; प्रत्ययं विनाऽपि तद्विशिष्टार्थबोधकत्वादिति तात्पर्यम् ॥ **चरितार्थत्वादिति** । उक्तार्थत्वादिति भावः ॥ **अनवस्थेति** । पुनः पुनः कप्रत्ययापत्तिरिति भावः ॥

( प्रत्ययोपपादकं भाष्यम् )

**नैष दोषः ।**

**कुत्सितस्यानुकम्पायां भवि-**
**ष्यत्यनुकम्पितस्य कुत्सायाम् ॥**

( प्रदीपः ) **कुत्सितस्येति** । अर्थान्तराश्रयः प्रत्यय इत्यर्थः ॥

( प्रकारान्तरेणापि प्रत्ययोपपादकं भाष्यम् )

**अथ वा—**

**स्वार्थमभिधाय शब्दो निर-**
**पेक्षो द्रव्यमाह समवेतम् ।**
**समवेतस्य च वचने**
**लिङ्गं वचनं विभक्तिं च ॥**
**अभिधाय तान् विशेषान-**
**पेक्षमाणश्च कृत्स्नमात्मानम् ।**
**प्रियकुत्सनादिषु पुनः**
**प्रवर्ततेऽसौ विभक्त्यन्तः ॥**

( प्रदीपः ) **अथ वेति** । कुत्सितकुत्सायामपि कुत्सितक इति भवतीत्यर्थः । स्वशब्दोऽत्रात्मीयवचनः, अर्थशब्दोऽभिधेयवचनः । स्वोऽर्थः—**स्वार्थः**, स चानेकप्रकारो जातिगुणक्रियासंबन्धस्वरूपलक्षणः—गौः, शुक्लः, पाचकः, राजपुरुषः, डित्थ इति । तं **स्वार्थमभिधाय** तेन स्वार्थेन[1] **समवेतं** संबद्धं **द्रव्यमाह शब्दो निरपेक्ष** इत्यनेनैतद्दर्शयति—यथा द्रव्येऽभिधातव्ये स्वार्थोऽपेक्ष्यते[2] न तथा स्वार्थेऽभिधातव्येऽर्थगतं निमित्तान्तरमपेक्षते । 'द्रव्यम्'शब्देन च इदं तदिति परामर्शयोग्यं वस्त्वभिधीयते ।

**तत्र** जातिशब्दो यदा जातौ वर्तते तदारोपितस्वरूपां स्वरूपेणैकीकृतां जातिमाहेति तदा तेषां स्वरूपं स्वार्थः, जातिस्तु द्रव्यम् ।

**यदा तु** जातिविशिष्टं द्रव्यमाह तदा जातिः स्वार्थः ।

**शुक्लादयो यदा** गुणजातौ वर्तन्ते तदा तेषां स्वरूपं स्वार्थः, जातिर्द्रव्यम् ।

**यदा तु** गुणे वर्तन्ते तदा गुणसामान्यं स्वार्थः, गुणो द्रव्यम् ।

**यदा** द्रव्ये वर्तन्ते तदा गुणः स्वार्थः । **समवेतस्य** द्रव्यस्याभिधाने सति **लिङ्गं वचनं विभक्तिं** चाहेति संबन्धः ॥

**तान् विशेषानिति**—लिङ्गादीनामेव परामर्शः । **लिङ्गं**—स्त्रीत्वादि, **वचनं**—संख्या, **विभक्तिः**—कारकं कर्मादि । क्वचिल्लिङ्गसंख्याकारकाण्येव स्वार्थः, यथा—स्त्री पुमान्नपुंसकम्, एको द्वौ बहवः, कर्म करणं संप्रदानमिति । प्रवृत्तिनिमित्तलिङ्गसंख्याव्यतिरिक्तलिङ्गसंख्याऽभिधानं यत्र, यथा—स नपुंसकोऽभवत्, गावो विंशतिः—इति तत्रायमेव क्रमः । यत्र तु प्रवृत्तिनिमित्तव्यतिरिक्तलिङ्गसंख्याऽसंभवः—'स्त्री पुमानेको द्वौ बहवः' इति तत्र पुनर्लिङ्गसंख्ययोरभिधानाभावः । यद्यपि लोके पदादुच्चरितात्युगपत्पञ्चार्थाः प्रतीयन्ते, शब्दस्य विरम्य व्यापाराभावात्; तथाप्यन्वयव्यतिरेकाभ्यां शास्त्रे संव्यवहाराय कल्पिताभ्यां प्रातिपदिकस्याप्रयोगार्हस्य कल्पितामर्थवत्तां कल्पितन्यायवशात् क्रमवतीमाश्रित्येदमुच्यते । **तथा हि**—'नागृहीतविशेषणा विशेष्ये बुद्धिः' इति न्यायात् पूर्वं स्वार्थाभिधानेन भाव्यम् । पश्चात्तद्विशिष्टस्य लिङ्गाद्याश्रयस्य द्रव्यस्याभिधानेन । ततो भेदापेक्षबहिरङ्गसंख्याऽपेक्षया लिङ्गमन्तरङ्गमिति तदभिधीयते । ततः संख्या, सा हि विजातीयक्रियापेक्षसाधनापेक्षया तुल्यजातीयक्रियाऽपेक्षाऽन्तरङ्गा । संख्याऽभिधानानन्तरं तु कारकाभिधानम् । एतान् विशेषानभिधाय स्वार्थादिपञ्चकवृत्तं कृत्स्नमात्मानमपेक्षमाणः शब्दः प्रिय कुत्सनादिषु विभक्त्यन्तः पुनः प्रवर्तते । **पुनः**शब्दस्तुशब्दस्यार्थे वर्तते, विभक्त्यन्तस्तु इत्यर्थः । तत्र कुत्सितशब्दप्रवृत्तिनिमित्तव्यतिरिक्तायां कुत्सितत्वस्य कुत्सायां कप्रत्यय उपपन्नो भवति । यथा—प्रकृष्टतम इति प्रकृष्टस्य प्रकर्षे तमप्प्रत्ययः । तथा कुत्सितत्वं यदा कुत्स्यते नास्य सम्यक् कुत्सितत्वमिति तदा प्रत्ययः ।

**अन्ये त्वाहुः**—अनिर्धारितविशेषधर्मनिबन्धना कुत्सा कुत्सितशब्दप्रवृत्तिनिमित्तम्, ब्रह्महत्यादिविशेषनिबन्धना कुत्सा तु प्रत्ययनिबन्धनम् । अनुकम्पितक इत्यत्रापि प्रयोक्तृधर्मे अनुकम्पायां प्रवृत्तिनिमित्तव्यतिरिक्तायां कप्रत्ययः ।

**केचित्तु**—निरपेक्षत्वं शब्दस्य स्वार्थादिपञ्चकाभिधाने मुख्यसत्तानपेक्षणाद् बुद्ध्युपारूढोपचरितार्थसत्तामात्रापेक्षणाद्व्याचक्षते । तत्र परिसमाप्तस्वार्थादिपञ्चकस्य पदस्य कुत्सादिषु प्रवृत्तिर्यस्मात् स्वार्थादयः[3] कुत्सादिहेतवः । **तथा हि—कश्चित्** स्वार्थकुत्सया कुत्स्यते—पटुकः, पण्डितक इति । **कश्चिल्लिङ्गेन**, यथा—

**प्राप्य गाण्डीवधन्वानं विद्धि कौरवकाः स्त्रियः**—इति ।

**कदाचित्** संख्यया, यथा—इदमेककमेव शतमिति । शतभरणे यत् दुःखं तदेकस्य भरण इति शतत्वारोपेण कुत्सा । यत्र प्रवृत्तिनिमित्तकुत्सा न संभवति—देवदत्तकः, डित्थक इति, तत्राभिधेयसहचरितधर्मान्तराश्रयकुत्साश्रयः प्रत्ययः ॥

( उद्योतः ) **कुत्सितकुत्सायामपीति** । अपिनाऽनुकम्पायाम् ॥ **जातीति** । 'नागृहीतविशेषण—'न्यायेन तस्यैव पदशक्यत्वादिति भावः ॥ **क्रियासम्बन्धेति** । यद्यपि पाचकशब्देऽपि क्रियासम्बन्ध एव प्रवृत्तिनिमित्तमिति 'तस्य भावः—' इति सूत्रे उक्तम्, तथापि **वसिष्ठब्राह्मण**न्यायेन 'क्रियासम्बन्ध' इत्युक्तिः ॥ **स्वरूपेति** । स्वरूपपदेन पदस्वरूपं व्यक्तिस्वरूपं चेति बोध्यम् ॥

१ 'स्वार्थमभिधानेन स्वार्थेन' इति क. पाठः ॥
२ 'द्रव्ये स्वार्थोऽपेक्ष्यते' इति क. पाठः ॥
३ 'यत्स्वार्थादयः' इति क. पाठः ॥

'सम्बद्धं' इत्यर्थकस्य नियमेन प्रतियोगिसाकाङ्क्षत्वादाह—**तेन स्वार्थेनेति** ॥ **समवेतं**—समवायेन सम्बद्धमित्यर्थः ॥ **यथा द्रव्ये इति** । शब्दान्निष्प्रकारकोपस्थितेरभावादित्यर्थः ॥

**स्वार्थेऽभिधातव्ये इति** । विशेषणतयेत्यर्थः । **केचित्तु** 'एवं व्याख्याने क्त्वोऽनुपपत्तिः, न हि प्रातिपदिकमात्रात्प्रक्रियादशायामपि प्रवृत्तिनिमित्ततदाश्रययोः क्रमेण बोधो भवति, तस्मात्**स्वार्थं**—जात्यादिकं, **शब्दः**—तद्विषयकाभिधाग्रहविषयो भूत्वा **निरपेक्षः**—तच्छक्तिग्रहेतरानपेक्षः **सम्बद्धं द्रव्यमाह**त्यर्थः । तस्यैव शक्तिग्रहविषयत्वेन तत्रैव स्वार्थत्वव्यवहारः' इत्याहुः ॥ **स्वरूपेण**—शब्दस्वरूपेण ॥ **एकीकृतामिति** । मिश्रीकृतां, तादात्म्येन विशिष्टामित्यर्थः । जातिप्राधान्येऽपि यथा भावप्रत्ययानुत्पत्तिस्तथोक्तम् । 'घटसम्बन्धी धर्मः' इत्येवं बोधाननुभवाच्च न तदुत्पत्तिः ॥ **गुणसामान्यं**—गुणगता जातिरित्यर्थः ॥ **समवेतस्येति** । संबद्धस्य समवायिन इत्यर्थः । तदभिधाने सति तत्तत्प्रत्ययसापेक्षो लिङ्गाद्याहेत्यन्वयः ॥

**लिङ्गादीनामेवेति** । स्वार्थद्रव्ययोर्विशेषत्वाभावादिति भावः । **यत्र यथेति** । नपुंसकपदस्य प्रवृत्तिनिमित्तं नपुंसकत्वं, तद्व्यतिरिक्तं च पुंस्त्वम् । एवं विंशतिरित्यत्रैकत्वम् । '**यत्र प्रवृत्तिनिमित्तातिरिक्त**लिङ्गाद्यभिधानं यथा नपुंसकः—इत्यादि तत्रायमेव **क्रमः**' इत्यन्वयः ॥ **तत्र पुनर्लिङ्गेत्यादि** । तत्र तु प्रवृत्तिनिमित्तातिरेकेण लिङ्गाद्यभिधानाभाव इत्यर्थः ॥ **कल्पितन्यायवशादिति** । 'अर्थवत् प्रातिपदिकं, प्रातिपदिकान्ङीप्, ङ्यन्तात्स्वादयः' इत्येवं कल्पितन्यायलब्धक्रमेत्यर्थः । यद्वा प्रत्यक्षस्थले किञ्चिदंशे दृष्टक्रमस्यात्रारोपेण क्रमवत्त्वाभिमान इति भावः ॥ **नागृहीतेति** । 'नागृहीतविशेषणा बुद्धिर्विशेष्ये उपजायते' इति न्यायादिति भावः ॥ **तद्विशिष्टस्येति**—अत्यनेन उक्ते द्रव्यस्य लिङ्गादितः प्रथममभिधाने बीजकथनम् ॥ **लिङ्गाद्याश्रयस्येति** । न चैवमुक्तन्यायेन लिङ्गस्यापि प्रथमतो बोधापत्तिः । 'रमा' इत्यादौ लिङ्गस्य प्रत्ययं विना बोधाभावेन तस्य प्रथमतो बोधस्य वक्तुमशक्यत्वमिति भावात् । '**तुल्यजातीयापेक्षान्तरङ्ग**—' इति पाठः । एकत्वमपि द्वित्वादिव्यवच्छेदबुद्धिजननात्तदपेक्षमिति बोध्यम् । **स्वार्थादिपञ्चके वृत्तं**—वर्तनं वृत्तिर्यस्येत्यर्थः । रूपमर्थश्च शब्दस्यात्मेति तज्ज्ञाने कृत्स्नात्मलाभ इति भावः । 'प्रियकुत्सनादिबोधनाय कृत्स्नमात्मानं यतोऽपेक्षमाणो भवत्यतस्ताान्विशेषानभिधाय तद्गतकुत्सनादिबोधनाय विभक्त्यन्तरतु प्रवर्तते' इत्यन्वयः । अनेन 'पञ्चकं प्रातिपदिकार्थः' इत्युक्तम् ॥ **विभक्त्यन्तस्त्विति** । तत्तत्प्रयुक्तकार्यस्यान्तरङ्गत्वात्पूर्वं प्रवृत्तेरिति भावः । अत्रैवार्थे—'घकालतनेषु' इति लिङ्गम् ॥ **प्रवृत्तिनिमित्तकुत्सातिरिक्तायामिति** । यथा सर्वोऽपि शब्दः स्वार्थव्यतिरिक्तां स्वार्थादिगतां कुत्सामभिधातुं प्रत्ययं लभते, तथाऽयमपीत्यर्थः ॥ **नास्य सम्यकुत्सितत्वमिति** । कुत्साप्रयोजकसकलानाचरणादिति भावः ॥

**अन्ये त्वाहुरिति** । अत्रारुचिर्भाष्यस्वरसासिद्धत्वाऽभावः ॥

**केचित्त्विति** । एतन्मते 'अनपेक्षमाण' इत्यस्य बहिःसत्तामनपेक्षमाण इत्यर्थः । तत्तत्प्रत्ययानपेक्षत्वस्यैव 'अपेक्षमाणश्च कृत्स्नमात्मानम्' इति भाष्यतो लाभादिदमप्यरुचिग्रस्तम् ॥ स्वार्थादिपञ्चकपूर्णस्तेत्र वृत्तिरित्युपपादनस्य प्रकृतोपयोगं दर्शयति—**तत्र परिसमाप्तेत्यादि** ॥ **कुत्सादिहेतव इति** । 'आश्रयतया' इति शेषः ॥ **स्वार्थः**—प्रवृत्तिनिमित्तम् ॥ **यथा गाण्डीवेति** । तत्र हि 'अर्जुनसन्निधौ किमेते पुमांसः' इति प्रतीयत इति भावः ॥ **यत्र प्रवृत्तिनिमित्तेति** । इदं लिङ्गादीनामुपलक्षणम् । एवं प्रकृतेऽपि कुत्सितशब्दार्थनिष्ठकुत्सान्तरविवक्षायां प्रत्ययः सुलभ इति भावः ॥

( कुत्सितस्य प्रकृतिप्रत्ययविशेषणत्वाक्षेपभाष्यम् )

**कथं पुनरिदं विज्ञायते—कुत्सितादीनामर्थ इति, आहोस्वित् कुत्सितादिसमानाधिकरणात्प्रातिपदिकादिति ।**

**कश्चात्र विशेषः ?**

( प्रदीपः ) **कथं पुनरिति** । यदा कुत्सितशब्दो भावसाधनः, कुत्सा—कुत्सितमिति तदा **प्रत्ययार्थपक्षः** । यदा तु कर्मसाधनः, कुत्स्यत इति—कुत्सितं 'मति—' आदिसूत्रे चकारस्यानुक्तसमुच्चयार्थत्वात् वर्तमाने क्तः, क्रियाऽवयवव्यपवर्गाश्रयो भूते वा तदा कुत्सितार्थवाचिनः कः प्रत्ययो भवतीति **सामानाधिकरण्यपक्षोपपत्तिः** । **कः** पुनर्वक्ष्यमाणस्य प्रकृत्यर्थविशेषणसमानाधिकरणपक्षस्य च **विशेषः** उच्यते । समानाधिकरणपक्षपक्षस्य उपात्तकुत्सोऽनुपात्तकुत्सो वा कुत्सितत्वोपलक्षितार्थवृत्तिः प्रत्ययमुत्पादयति । प्रकृत्यर्थविशेषणपक्षे तु अङ्गीकृतकुत्सादेव प्रत्ययेन भाव्यम् । तत्र प्रकृत्यर्थविशेषणपक्षे अनुगृहीतकुत्सापदसामानाधिकरण्येऽव्ययसर्वनामशब्देभ्यः प्रत्ययेन भाव्यम्—पट्टको नीचैरयं देवदत्त इति । यदा तु अङ्गीकृतकुत्सपदान्तराप्रयोगः, तदा तेभ्य एवाश्रितकुत्सेभ्यः प्रत्ययो भवति—नीचकैरसकौ देवदत्तक इति ॥

(उद्योतः) पक्षद्वयोपपत्तिद्वारेण संशये बीजमाह—**यदेति** ॥ ननु 'कुत्सितम्' इति भूते क्ते अतीतकुत्सा प्रतीयते, अश्वकादिशब्दैश्च विद्यमानकुत्सस्य प्रतीतिरिति विरोधोऽत आह—**वर्तमाने क्त इति** ॥ **क्रियाऽवयवेति** । यस्य कस्यचिदवयवस्य भूतत्वेन समुदाये भूतत्वमारोप्य क्तः । तत्रारोपितभूतत्वेऽपि केषाञ्चिदवयवानां वास्तववर्तमानत्वेन न क्षतिरिति भावः ॥ **उपात्तकुत्स इति** । वाच्यत्वेनाङ्गीकृतकुत्स इत्यर्थः ॥ **अङ्गीकृतेति** । 'वाच्यत्वेन' इत्यादिः ॥ **प्रकृत्यर्थेति** । वस्तुगत्या कुत्साविशिष्टो योऽर्थस्तत्प्रतिपादकेभ्य इति तत्पक्षे सूत्रार्थः ॥ **अनुगृहीता**—वाच्यत्वेन स्वीकृता **कुत्सा** येन तादृशपदसामानाधिकरण्ये इत्यर्थः । तेनैव कुत्साया उक्तत्वात्प्रकृतेः कुत्सादिविशिष्टवाचकत्वाभावादव्ययादिभ्यो न भवति प्रत्यय इति भावः । नन्वेवम् 'अव्ययसर्वनाम्नाम्—'इत्यस्य वैयर्थ्यमत आह—**यदा त्वङ्गीकृतेति** ॥ **आश्रितकुत्सेभ्यः**—वाच्यत्वेनाश्रितकुत्सेभ्यः ॥

( ५८८१ प्रत्ययाविशेषणत्वाक्षेपवार्तिकम् ॥ १ ॥ )

**॥ * ॥ कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः ॥ * ॥**

( भाष्यम् ) **कुत्सितादीनामर्थे चेल्लिङ्गवचनयोरनुपपत्तिः । पट्टकम्, पट्टका, पट्टकः, पट्टकौ, पट्टकाः—इति । एकोऽयमर्थः कुत्सितं नाम तस्यैकत्वादेकवचनमेव प्राप्नोति ।**

( प्रदीपः ) **लिङ्गवचनानुपपत्तिरिति**—यथेष्टं लिङ्गवचनानुपपत्तिरित्यर्थः । एतच्चोपलक्षणम्, कुत्सनमात्रस्य प्रत्ययेनाभिधाने षष्ठ्यपि द्रव्यवाचिनः प्राप्नोति । यद्यपि गुणगुणिनोरत्र सर्वदा सोऽयमित्यभेदसंबन्धेन षष्ठ्या अप्रसङ्गः—गुणवचनानां चाश्रयतो लिङ्गवचनानि—इति दोषपरिहारोऽस्ति; तथापि निर्दोषप्रकृत्यर्थविशेषणपक्षसंभवात् प्रत्ययार्थपक्षो भाष्यकारेण नाश्रितः ॥

( उद्योतः ) **यथेष्टं लिङ्गेति** । कुत्सितशब्दाभिधेयस्य नपुंसकत्वात्स्त्रीपुँल्लिङ्गानुपपत्तिरित्यर्थः ॥ **षष्ठ्यपीति** । 'देवदत्तस्य पङ्कः' इत्यादौ ॥

( वार्तिकावतरणभाष्यम् )

**अस्तु तर्हि कुत्सितादिसमानाधिकरणात् प्रातिपदिकादिति ॥**

( ५८८२ प्रकृतिविशेषणत्वाक्षेपवार्तिकम् ॥ २ ॥ )

**॥ * ॥ कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो यथा टाबादिषु ॥ * ॥**

( भाष्यम् ) **कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो भवति, यथा—टाबादिषु ।**

**कथं च टाबादिषु ?**

**उक्तं तत्र—*स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः* इति । एवमिहापि कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो भवति–इदं घृतकम्, इदं तैलकम्—इदंशब्दादपि प्राप्नोति ॥**

( प्रदीपः ) **इदंशब्दादिति** । कुत्सितत्वयुक्तार्थवृत्तित्वात्तस्य ॥

( ५८८३ सिद्धान्तवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे प्रत्ययविधानात् ॥ * ॥**

( भाष्यम् ) **सिद्धमेतत् ।**

**कथम् ?**

**येन कुत्सितादयोऽर्था गम्यन्ते तद्युक्तात्स्वार्थे प्रत्ययो भवतीति वक्तव्यम् ।**

**सिद्ध्यति । सूत्रं तर्हि भिद्यते ॥**

**यथान्यासमेवास्तु ।**

**ननु चोक्तं—कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिरिति ।**

**नैष दोषः । नायं प्रत्ययार्थः ।**

**किं तर्हि ?**

**प्रकृत्यर्थविशेषणमेतत् । कुत्सितादिषु यत्प्रातिपदिकं वर्तते तस्मात्कादयो भवन्ति ।**

**कस्मिन्नर्थे ?**

**स्वार्थ इति । स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥**

( प्रदीपः ) **सिद्धं त्विति** । येन धर्मेण कुत्सादयस्तद्धर्मयुक्तार्थाभिधायिनः स्वार्थे प्रत्ययविधानमित्यर्थः ॥

( उद्योतः ) **येन धर्मेणेति** । यथाऽश्वक इत्यादौ अश्वसाध्यधावनादेः सम्यगननुष्ठानादिनेत्यर्थः । घृतादिशब्दसन्निधाने इदंशब्दः प्रत्यक्षविषयत्वेनैव तद्बोधको न तु कद्वृतत्वादिनेति भावः ॥

---

( ९८४ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३६ )

## २२४१ ठाजादावूर्ध्वं द्वितीयादचः ॥ ५ । ३ । ८३ ॥

( प्रकृतिविकाराधिकरणम् )

( पूर्वाचार्याणां कारिकाव्याख्यानभाष्यम् )

**चतुर्थात्—**

**चतुर्थाल्लोपो वक्तव्यः बृहस्पतिदत्तकः, बृहस्पतिकः । प्रजापतिदत्तकः, प्रजापतिकः ।**

**अनजादौ च**

**अनजादौ च लोपो वक्तव्यः । देवदत्तकः, देवकः । यज्ञदत्तकः, यज्ञकः ।**

**लोपः पूर्वपदस्य च ।**

**पूर्वपदस्य च लोपो वक्तव्यः । देवदत्तकः, दत्तकः । यज्ञदत्तकः, दत्तकः ।**

**अप्रत्यये तथैवेष्टः**

**देवदत्तः, दत्तः । यज्ञदत्तः, दत्तः ।**

**उवर्णाल्ल इलस्य च ॥**

**उवर्णादिलस्य च लोपो वक्तव्यः । भानुदत्तकः, भानुलः । वसुदत्तकः, वसुलः ।**

( प्रदीपः ) **अप्रत्यय इति** । प्रत्ययाभावेऽपि पूर्वोत्तरपदयोरन्यतरस्य वा लोप इत्यर्थः । **भाष्ये तु पूर्वपदलोप** उदाहरणमात्रम् ॥

**उवर्णादिति** । लोपस्य 'ल' इति पूर्वाचार्यसंज्ञा, तत्र 'आदेः परस्य' इतीकारलोपः ॥

( उद्योतः ) **लोपः पूर्वपदस्य चेति**—अजाद्यनजादिसाधारणम् । **चेनोत्तरपदसङ्ग्रहः** ॥ **पूर्वोत्तरपदयोरिति** । लक्ष्यानुसारेण च व्यवस्था ॥ भाष्ये—**इलस्य चेति** । चेनोत्तरपदस्यापि ॥

( पदकृत्यभाष्यम् )

**अथ ठग्रहणं किमर्थम्, न इके कृते अजादावित्येव सिद्धम् ?**

---

१ 'आदेः परस्य' इत्यनेन ॥

२ 'ठस्येकः' इत्यनेन ॥

( ५७८४ ठग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

॥ * ॥ ठग्रहणमुको द्वितीयत्वे कविधानार्थम् ॥ * ॥

( भाष्यम् ) ठग्रहणं क्रियते, उको द्वितीयत्वे कविधिर्यथा स्यात् । वायुदत्तकः, वायुकः । पितृदत्तकः, पितृकः ॥

( ५८८५ ठग्रहणाभावे दोषवार्तिकम् ॥ २ ॥ )

॥ * ॥ अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः ॥ * ॥

( भाष्यम् ) अजादिलक्षणे हि माथितिकादिवत्प्रसज्येत । तद्यथा—मथितं पण्यमस्य माथितिक इति अकारलोपे कृते तान्तादिति कादेशो न भवति । एवमिहापि न स्यात् ॥

( प्रदीपः ) कादेशो न भवतीति । संनिपातलक्षणपरिभाषाया आश्रयणात् । यदा च देवभान्वादिभ्यष्ठज्विधीयते तदेकादेशाभावादजादिलक्षणलोपाप्रसङ्गात्तदर्थमपि ठग्रहणम् ॥

( उद्योतः ) सन्निपातेति । ठग्रहणे कृते तु तत्सामर्थ्यादिकादेशात्पूर्वमेव लोप इति भावः । एतेन 'व्यचश्चित्त्वस्य सामान्यापेक्षज्ञापकत्वेनेकस्य सर्वतः पूर्वं वृत्तिः, अत एव शौवस्तिकादिसिद्धिः' इति परास्तम् । ज्ञापकसिद्धस्यासार्वत्रिकत्वाच्च । एवं च फलान्तरमपि संभवतीत्याह—यदेति ॥

( ५८८६ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे तदादेर्लोपवचनम् ॥ * ॥

( भाष्यम् ) द्वितीयादचो लोपे संध्यक्षरद्वितीयत्वे तदादेर्लोपो वक्तव्यः । लहोडः, लहिकः । कहोडः, कहिकः ॥

( प्रदीपः ) तदादेरिति । सन्ध्यक्षरात्परस्य लोपे प्राप्ते तदादेर्लोपवचनम् ॥

---

( ९८५ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३७ )

## २२४२ शेवलसुपरिविशालवरुणार्यमादीनां तृतीयात् ॥ ५ । ३ । ८४ ॥

( ५८८७ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ वरुणादीनां च तृतीयात् स चाकृतसंधीनाम् ॥ * ॥

( भाष्यम् ) वरुणादीनां च तृतीयाल्लोप उच्यते, स चाकृतसंधीनां वक्तव्यः । सुपर्याशीर्दत्तः—सुपरिकः, सुपरियः, सुपरिलः ॥

( प्रदीपः ) वरुणादीनामिति । आदिशब्दः प्रकारे । एकसूत्रोपात्तत्वं च सादृश्यं निमित्तम् ॥ सुपरिक इति । संहिताकार्ये तु कृते लोपे सति सुपर्यिक इति स्यात् ॥

( उद्योतः ) कृतसन्धिकार्यादित्यर्थकप्रथमादित्यधिकारादाह ( भाष्ये )—अकृतसन्धीनामिति ॥ सुपर्यिक इति । सुपर्याशीर्दत्तशब्दात्प्रत्यये इत्यर्थः ॥

( आक्षेपभाष्यम् )

इह षडङ्गुलिः षडिक इत्यजादिलोपे कृते पदसंज्ञा न प्राप्नोति ।

तत्र को दोषः ?

जश्त्वं न स्यात् ॥

( प्रदीपः ) जश्त्वन्न स्यादिति । भसंज्ञया पदसंज्ञाया अन्तर्वर्तिविभक्त्याश्रयायाः-तद्धिताश्रयायाश्च द्विविधाया अप्येकसंज्ञाधिकाराद्बाधितत्वात् ॥

( उद्योतः ) भाष्ये—अजादिलोपे कृत इति । 'एकाक्षरपूर्वपदानाम्' इति वक्ष्यमाणवचनेनेति भावः ॥ द्विविधाया अपीति । समानाश्रयत्वादिति भावः ॥

( ५८८८ समाधानवार्तिकम् ॥ ५ ॥ )

॥ * ॥ षडिके जश्त्वे उक्तम् ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

*सिद्धमचः स्थानिवत्त्वात्* इति । यद्येवं,

( प्रदीपः ) सिद्धमच इति । षडङ्गुलिशब्देऽङ्गुलिशब्दस्थानेन लोपे कृते 'यस्येति च' इत्यकारलोपः क्रियते । तस्य स्थानिवत्त्वात् भसंज्ञा प्रत्यकारान्तमेतद्भवति । अन्तर्वर्तिविभक्त्याश्रया तु षकारान्तस्य पदसंज्ञा, ततो भिन्नावधिकत्वाद्भसंज्ञया पदसंज्ञा न बाध्यत इति तन्निबन्धनजश्त्वप्रवृत्तिः । या तु स्वादौ पदमिति पदसंज्ञा सैवैकावधिकत्वाद्भसंज्ञया बाध्यते । न च पदान्तविधिं प्रति न स्थानिवदिति स्थानिवत्त्वनिषेधोऽत्रावतरति । विधिशब्दस्य भावसाधनस्य तत्राश्रयणात् । इह पदान्तस्य कस्यचिदविधेयत्वात् ॥

( उद्योतः ) अङ्गुलिशब्दस्थानेनेति । 'अजिनान्तस्योत्तरपदलोपश्च' इति सूत्रे एकदेशे स्वरितत्वप्रतिज्ञानादुत्तरपदांशमपहाय लोपपदमात्रमनुवर्तते । न च सवितृशब्दात् ठे 'तृ'शब्दस्य लोपापत्तिः, उपेन्द्रदत्ते 'चतुर्थादच' इति लोपापत्तिः । अनभिधानेनातिप्रसङ्गनिरासादिति भावः ॥ इह पदान्तस्येति । जश्त्वस्य पूर्वमेव निष्पन्नत्वेनेदानीं विधेयत्वाभावादिति भावः । वस्तुतोऽत्रैकादेशपर्यन्तं तत्तत्सपादसप्ताध्यायीस्थकार्यप्रवृत्तियोग्यतया न पूर्वं जश्त्वमितीदं चिन्त्यम् । तस्माद्द्वितीयादच ऊर्ध्वं लोपविधायकसामर्थ्येनात्र भत्वेन स्थानिवत्त्वप्रतिषेध इति तात्पर्यम् ॥

---

१ मथितशब्दात् 'तदस्य पण्यम्' इति प्रत्यये 'ठस्येकः' इतीकादेशे 'यस्येति च' इत्यकारलोपे कृते 'इसुसुक्तान्तात्कः' इत्यनेन कादेशो न स्यादित्यर्थः ॥

२ 'सुपर्याशीः' इत्येव पाठः क. पुस्तके ॥

( ५८८९ प्रत्याक्षेपवार्तिकम् ॥ ६ ॥ )

॥*॥ वाचिकादिषु पदवृत्तप्रतिषेधः ॥*॥

( भाष्यम् ) वाचिकादिषु पदवृत्तस्य प्रतिषेधो वक्तव्यः । वागाशीर्दत्तः, वाचिक इति ॥

( प्रदीपः ) पदवृत्तप्रतिषेध इति । पदस्य यद्वृत्तं—कार्यं तत्प्रतिषेध इत्यर्थः ॥

( ५८९० प्रत्याक्षेपनिरासवार्तिकम् ॥ ७ ॥ )

॥ * ॥ सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ।

कथम् ?

एकाक्षरपूर्वपदानामुत्तरपदस्य लोपो वक्तव्यः । वाचिकः[1] ॥

( आक्षेपभाष्यम् )

इहापि तर्हि प्राप्नोति—षडङ्गुलिः, षडिक इति ॥

( ५८९१ समाधानवार्तिकम् ॥ ८ ॥ )

॥*॥ षषष्ठाजादिवचनात् सिद्धम् ॥*॥

( भाष्यम् ) षषष्ठाजादिवचनात्सिद्धमेतत् ॥

( प्रदीपः ) सिद्धमिति । उत्तरपदस्याज्झल्समुदायत्वात्तल्लोपस्यानजादेशत्वादस्थानिवत्त्वात्तुल्यावधिकया भसंज्ञया द्विविधाऽपि पदसंज्ञा बाध्यत इति पदनिबन्धनकार्याप्रसङ्गः ॥

अत्रेदं चोद्यते—संज्ञाशब्दैकदेशे लुप्ते संज्ञास्वरूपानुपलम्भात्कथं संज्ञिनोऽवगमः ? न हि यस्य 'देवदत्तः' इति संज्ञा कृता स देवशब्दाद्दत्तशब्दाद्वा प्रतीयते । न वैकदेशेन समुदायोऽनुमीयते । समुदायस्त्वर्थवाचक इति युक्तं कल्पयितुम्, उच्चार्यमाणस्य प्रत्यायकत्वात् । एवं तर्ह्यनुनिष्पन्नत्वादवयवानामपि संज्ञात्वम् । तत्र वर्णानामनुनिष्पादिनां शास्त्रेणानन्वख्यानादसाधुत्वम् । पदानामेव तु संज्ञैकदेशानां साधुत्वमिष्यत इति लोपविधानद्वारेण तदभ्यनुज्ञायते । यदुक्तम्—

तुल्यायामनुनिष्पत्तौ 'दे-य-सो' इत्यसाधवः ।
न ह्यन्वाख्यायते शास्त्रे तेषु दत्तादिवत्स्मृतिः ॥ इति ॥

दृष्टश्चायं लोके व्यवहारः—यत्समुदायस्य संज्ञात्वे तदेकदेशः प्रयुज्यते तत्र समुदायस्य मुख्यं संज्ञात्वम्, अवयवानां त्वनुनिष्पन्नम् ॥

( उद्द्योतः ) षषष्ठेति—( भाष्ये ) अत एव सूत्रे 'ऊर्ध्वं द्वितीयादचः' इति चरितार्थम् । अन्यथा 'द्व्यचः' इत्येव उत्तरपदलोपग्रहणानुवृत्त्या सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अन्यत्र त्वनभिधानात्त्वचाऽपि नेष्यत एवेत्याहुः ॥

न हि यस्येति । सा देवशब्दाद्दत्तशब्दाद्वोच्चारिताम्न प्रतीयते—न श्रोत्रेन्द्रियजन्यज्ञानविषया भवतीत्यर्थः । 'न हि यस्य देवदत्त इति संज्ञा कृता स देवशब्दात्'[2] इत्यादिः क्वचित्पाठः ॥ अनुमीयत इति । स्मर्यत इत्यर्थः । परोक्षत्वसादृश्यादनुमितिरिव स्मृतिरुक्ताऽत्रेत्याहुः ॥ उच्चार्यमाणस्य प्रत्यायकत्वादिति । एतच्च 'अणुदित्-' सूत्र उपपादितम् ॥ देयसो इति । देवस्याद्यं 'दे' इति, यज्ञदत्तस्य 'य' इति, सोमस्य 'सो' इति । तेषु—वर्णेषु दत्तादिवत्—तेष्विव शास्त्रे स्मृतिः—अन्वाख्यायकं वचनम् । अन्वाख्यायते—क्रियत इत्यर्थः ॥ तदेकदेश इति । 'देवदत्तः' 'दत्तः' इत्यादौ ॥

( ९८६ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३८ )

## २२४३ अल्पे ॥ ५ । ३ । ८५ ॥

( ९८७ विधिसूत्रम् ॥ ५ । ३ । २ आ. ३९ )

## २२४४ ह्रस्वे ॥ ५ । ३ । ८६ ॥

( कनोऽधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थमिमावुभावर्थौ निर्दिश्येते, न यदल्पं ह्रस्वमपि तद्भवति, यच्च ह्रस्वमल्पमपि तद्भवति ?

( प्रदीपः ) किमर्थमिति । वंशादिष्वल्पत्वह्रस्वत्वयोः समावेशदर्शनादन्यतरोपादानेन सिध्यतीति प्रश्नः ॥

( समाधानभाष्यम् )

नैतयोरावश्यकः समावेशः । अल्पं घृतम्, अल्पं तैलमित्युच्यते । न कश्चिदाह—ह्रस्वं घृतम्, ह्रस्वं तैलमिति ।

तथा ह्रस्वः पटः, ह्रस्वः शाटक उच्यते, न कश्चिदाह—अल्पः पटः, अल्पः शाटक इति ॥

( प्रदीपः ) न कश्चिदाहाल्पः पट इति । ननु चोच्यत एव लोके 'अल्पः पटः' इति ? यद्यप्युच्यते, तथाप्यायामविस्तारहीनोऽल्प उच्यते । यस्त्वायामहीनो विस्तीर्णश्च स ह्रस्व उच्यते, न त्वल्पः, अपि तु महान् ॥

( उद्द्योतः ) नैतयोरिति ॥ दीर्घत्वप्रतिद्वन्द्वि ह्रस्वत्वम्, महत्त्वप्रतिद्वन्द्वि अल्पत्वमिति भेद इति भावः ॥

( ९८८ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४० )

## २२४६ कुटीशमीशुण्डाभ्यो रः ॥ ५ । ३ । ८८ ॥

( रप्रत्ययाधिकरणम् )

( ५८९२ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् ॥ * ॥

( भाष्यम् ) कुटीशमीशुण्डाभ्यः प्रत्ययसंनि-

[1] 'वाचिकः' इत्येतत् क. छ. पुस्तके न दृश्यते ॥

[2] इदानीमयमेव पाठ उपलभ्यते ॥

योगेन पुंवद्भावो वक्तव्यः । कुटी-कुटीरः । शमी-शमीरः । शुण्डा-शुण्डार इति ॥

( प्रदीपः ) पुंवद्वचनमिति । प्रकृतिप्रत्ययसमुदायस्यायं पुंवद्भावो न तु प्रकृतेरिति स्त्रीप्रत्ययो न निवर्तते ॥

( उद्योतः ) ननु पुंवद्वचने स्त्रीप्रत्ययनिवृत्तिरपि स्यादत आह—प्रकृतीति । कुटीशमीशुण्डाभ्यो यः प्रत्ययस्तत्सन्नियोगेन—तत्सम्बन्धेन विशिष्टस्य शब्दस्य पुंवदिति वार्तिकार्थः । गमकत्वात्सापेक्षत्वेऽपि वृत्तिः ॥

( वार्तिकप्रयोजनभाष्यम् )

किं पुनः कारणं न सिध्यति ?

स्वार्थिकोऽयं, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥

( ५८९३ उपसंख्यानानर्थक्यबोधकवार्तिकम् ॥ २ ॥ )

॥ * ॥ उक्तं वा ॥ * ॥

( भाष्यम् ) किमुक्तम् ?

स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानीति ॥

---

( ९८९ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४१ )

## २२४९ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ॥ ५ । ३ । ९१ ॥

( ष्टरच्प्रत्ययाधिकरणम् )

( ५८९४ पूर्वपक्षिवार्तिकम् ॥ १ ॥ )

॥ * ॥ वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः ॥ * ॥

( भाष्यम् ) वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधो वक्तव्यः । कृशो वत्सो वत्सर इति मा भूदिति ॥

( प्रदीपः ) कार्श्ये प्रतिषेध इति । 'तनुत्वे' इति सामान्येनोपादानादतिप्रसङ्ग इति भावः ॥

( उद्योतः ) शरीरकार्श्ये प्राप्नोतीति प्रतिषेधारम्भः । प्रवृत्तिनिमित्तकार्श्ये एवेष्यत इत्युत्तरम् ॥

( वार्तिकान्यथासिद्धिप्रदर्शकभाष्यम् )

स तर्हि प्रतिषेधो वक्तव्यः ।

न वक्तव्यः । यस्य गुणस्य हि भावात् द्रव्ये शब्दनिवेशस्तदभिधाने तस्मिन् गुणे वक्तव्ये प्रत्ययेन भवितव्यम् । न च कार्श्यस्य भावात् द्रव्ये वत्सशब्दः ॥

( प्रदीपः ) यस्य गुणस्येति । अन्तरङ्गत्वात् प्रवृत्तिनिमित्तस्यैव तानवे प्रत्यय इति भावः ॥

---

( ९९० विधिसूत्रम् ॥ ५ । ३ । २ आ. ४२ )

## २२५० किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ॥ ५ । ३ । ९२ ॥

( ९९१ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४३ )

## २२५१ वा बहूनां जातिपरिप्रश्ने डतमच् ॥ ५ । ३ । ९३ ॥

( डतरच्डतमचोरधिकरणम् )

( ५८९५ सूत्रांशाक्षेपवार्तिकम् ॥ १ ॥ )

॥ * ॥ किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम् ॥ * ॥

( भाष्यम् ) किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाधिग्रहणमनर्थकम् ।

किं कारणम् ?

बहिर्धारणं निर्धारणमिति । यावता द्वयोरेकस्यैव बहिर्धारणं भवति ॥

( प्रदीपः ) उपाध्यानर्थक्यमिति । अयं भावः—द्वयोरित्यनर्थकम्, बहूनामपि निर्धारणे डतरच इष्टत्वात्, अजातिपरिप्रश्नेऽपि कतमशब्ददर्शनात् 'वा बहूनां' इत्यत्र जातिपरिप्रश्नग्रहणं न कर्तव्यम् । अथ वा द्वयोरित्यस्य निर्धारणषष्ठ्यन्तत्वादेकस्येति न वक्तव्यम् ॥

( उद्योतः ) इष्टत्वादिति । 'बहुष्वासीनेषु कश्चित्कञ्चित्पृच्छति—कतरो देवदत्तः' इति 'प्रत्ययः' इति सूत्रे भाष्यप्रयोगादिति भावः ॥ अजातिपरिप्रश्नेऽपीति । 'कतमा कतमा एषामाढ्यता' इति 'प्रकारे गुणवचनस्य' इति भाष्ये प्रयोगादिति भावः । वार्तिके द्विबह्वर्थे इत्युपलक्षणमिति[1] तात्पर्यम् । ननु 'द्वयोः' इत्यस्य वैयर्थ्यपरतया भाष्यव्याख्याने किं कारणम्, 'बहिर्धारणम्' इत्यादिभाष्याऽसङ्गतिः, न हि तेन ग्रन्थेन 'द्वयोः' इत्यस्य प्रत्याख्यानं लभ्यते किन्त्वेकग्रहणस्य-इति चेन्न, तस्य भाष्यपाठस्याऽसाम्प्रदायिकत्वमित्याशयेनैवं व्याख्यानात् ॥ तं पाठमभ्युपगम्याऽप्याह—अथ वेति । इदं चिन्त्यं, 'प्रत्यय'सूत्रस्थभाष्यप्रयोगविरोधात्, प्रकृतवार्तिके 'द्विबह्वर्थे प्रत्ययविधानात्' इति हेतूपादानस्यासङ्गत्यापत्तेश्च ॥

( वा बहूनामिति सूत्रांशाक्षेपभाष्यम् )

अपर आह—'बहूनां जातिपरिप्रश्ने डतमच्' इत्यत्र बहुग्रहणमनर्थकम् ।

किं कारणम् ?

किमित्येतत्परिप्रश्ने वर्तते, परिप्रश्नश्चानिर्ज्ञाते,

---

1 केचित्तु—द्वयोर्बहूनां च मध्ये निर्धारणविषयीभूतेऽर्थे प्रत्ययविधानादुपाधेरेकग्रहणस्य ग्रहणमनर्थकम् । प्रत्ययसूत्रस्थकतर इति 'प्रकारे गुणवचनस्य' इति सूत्रस्थ कतमा 'एषामाढ्यतमा—' इति भाष्यप्रयोगानुरोधेन किं कारणं—इत्यादेरपपाठकल्पनापेक्षयाऽनयोर्भाष्यप्रयोगादेव साधुत्वकल्पने लाघवमिति भाष्यार्थमाहुः ॥

अनिर्ज्ञातं च बहुषु । द्व्येकयोः पुनर्निर्ज्ञातम् । निर्ज्ञातत्वात् द्व्येकयोः परिप्रश्नो न, परिप्रश्नाभावात् किमेव नास्ति कुतः प्रत्ययः ॥

( प्रदीपः ) बहुग्रहणमिति । डतमच उत्सर्गस्य द्वयोरेकस्य निर्धारणे डतरचोऽपवादस्य विधानात् बहूनामेव निर्धारणे डतमच् भविष्यतीत्यर्थः । 'किं कारणं किमेतत्' इत्यादिरिहाग्रन्थः । 'किमः संख्यापरिमाणे डति च' इत्यत्रत्य एवायं ग्रन्थ इत्याहुः । न हीह संख्याग्रहणमस्ति येनास्य ग्रन्थस्योपयोगः स्यात् । अत्यन्तासंबद्धश्चेहायं ग्रन्थः, एकद्विविषयस्यापि प्रश्नस्य संभवात्–'को भवान्' 'कतरो भवतोः कठः' इति ॥

( उद्द्योतः ) 'अपर आह' इति भाष्यं पूर्वसूत्रस्योपाधिसत्त्वमाश्रित्यैतत्सूत्रस्योपाधिप्रत्याख्यानपरतया व्याचष्टे—डतमच इति । केचित्तु—'द्विबह्वर्थे' इत्यस्य 'द्वयोर्विहितस्य बह्वर्थेऽपि विधानदर्शनाद्बह्वर्थे विहितस्य द्व्यर्थेऽपि विधानदर्शनात्' इत्यर्थेन बहुग्रहणप्रत्याख्यानपरमपीदं वार्तिकम् । तद्ध्वनयन्नाह भाष्ये—अपर आहेति—इत्याहुः ।

( ९९२ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४४ )

## २२५२ एकाच्च प्राचाम् ॥ ५ । ३ । ९४ ॥

( प्राग्ग्रहणाक्षेपभाष्यम् )

प्राग्वचनं किमर्थम् ?

विभाषा यथा स्यात् ।

( ५८९६ प्राग्ग्रहणानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्राग्वचनानर्थक्यं च विभाषाप्रकरणात् ॥ * ॥**

( भाष्यम् ) प्राग्वचनमनर्थकम् ।

किं कारणम् ?

विभाषाप्रकरणात् । प्रकृता महाविभाषा तयैव सिद्धम् ॥

( ९९३ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४५ )

## २२५३ अवक्षेपणे कन् ॥ ५ । ३ । ९५ ॥

( कनोऽधिकरणम् )

( सूत्राक्षेपभाष्यम् )

अवक्षेपणे कन् विधीयते, कुत्सिते कः, क एतयोरर्थयोर्विशेषः ?

अवक्षेपणं करणम्, कुत्सितं कर्म ।

अवक्षेपणं वै कुत्सितं करणं तेन यत्कुत्स्यते तदपि कुत्सितं भवति । तत्र कुत्सितमित्येव[1] सिद्धं भवति ॥

( प्रदीपः ) क एतयोरर्थयोर्विशेष इति । यद्यपि ककनोः स्वरभेदस्तथाप्यसत्यर्थभेदे 'कुत्सिते कंश्च' इत्येव वक्तव्यम् । न तु पृथग्योगद्वयम् । पृथग्योगकरणात्तु नूनमनयोरर्थयोर्भेदः स तु न निश्चीयते इति प्रश्नः ॥ अवक्षेपणमिति । येनावक्षिप्यते–निन्द्यते तद्वाचिनः कन्प्रत्ययः, यस्तु स्वयं कुत्स्यते ततः क इति विषयविभागः ॥ अवक्षेपणं वै कुत्सितमिति । न हि स्वयमकुत्सितमवक्षेपणं भवतीत्यवक्षेपणस्यापि कुत्सितत्वमस्तीत्यर्थः ॥

( प्रयोजनभाष्यम् )

एवं तर्हि यत्परस्य कुत्सार्थमुपादीयते तदिहोदाहरणम् । व्याकरणकेन नामायं गर्वितः । याज्ञिक्यकेन नामायं गर्वितः ।

यत्स्वकुत्सार्थमुपादीयते तत्तत्रोदाहरणम् । देवदत्तकः, यज्ञदत्तकः ॥

( प्रदीपः ) यत्परस्य कुत्सार्थमिति । व्याकरणादिकं स्वयमकुत्सितमप्याश्रयविशेषे मदमुपाहरदवक्षेपणं परस्य भवतीति तद्वाचिनः कन्प्रत्ययः ॥

( उद्द्योतः ) परस्येति । आश्रयस्येत्यर्थः ॥

( ९९४ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४६ )

## २२५६ लुम्मनुष्ये ॥ ५ । ३ । ९८ ॥

( कनो लुबधिकरणम् )

( आक्षेपभाष्यम् )

किमर्थं मनुष्ये लुबुच्यते, न लुगेवोच्येत ?

( ५८९७ समाधानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ लिङ्गसिद्ध्यर्थम् लुम्मनुष्ये ॥ * ॥**

( भाष्यम् ) लिङ्गसिद्ध्यर्थं मनुष्ये लुबुच्यते । चञ्चेव चञ्चा । वध्रिकेव वध्रिका । खरकुटीव खरकुटी ॥

( प्रदीपः ) लिङ्गसिध्यर्थमिति । वचनं त्वभिधेयवदेव भवति—चञ्चे मनुष्याविति । तदुक्तम्—'हरीतक्यादिषु व्यक्तिः' इति । लुकि तु मनुष्यलिङ्गप्रसङ्गः ॥

( उद्द्योतः ) ननु युक्तवद्भावेन लिङ्गवचनयोरुभयोर्विधानाल्लिङ्गमात्रग्रहणमयुक्तमत आह—वचनं त्विति । हरीतक्यादिष्वस्य पाठादिति भावः । 'मनुष्यलुपि प्रतिषेधः' इति विशेषणविषयमिति बोध्यम् ॥

( ९९५ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४७ )

## २२५७ जीविकार्थे चापण्ये ॥ ५ । ३ । ९९ ॥

( सूत्रोदाहरणप्रदर्शकभाष्यम् )

'अपण्ये' इत्युच्यते, तत्रेदं न सिध्यति—शिवः, स्कन्दः, विशाख इति ।

[1] 'तत्र कुत्सित इत्येव' इति पाठः च. छ. पुस्तकयोः ॥

**किं कारणम् ?**
**मौर्यैर्हिरण्यार्थिभिरर्चाः प्रकल्पिताः ।**
**भवेत्तासु न स्यात् ।**
**यास्त्वेताः संप्रतिपूजार्थास्तासु भविष्यति ॥**

( प्रदीपः ) **यास्त्वेता इति** । याः परिगृह्य गृहाद् गृहमटन्ति तास्वित्यर्थः । यास्तु विक्रीयन्ते तासु न भवति—'शिवकान् विक्रीणीते' इति ॥

( उद्द्योतः ) मौर्या विक्रेतुं प्रतिमाशिल्पवन्तः, **तैरर्चाः प्रकल्पिताः**—'विक्रेतुम्' इति शेषः । अतस्तासां पण्यत्वात्तत्र प्रत्ययश्रवणप्रसङ्ग इति भावः । तत्र प्रत्ययश्रवणमिष्टमेवेति वदन् सूत्रस्योदाहरणं दर्शयति भाष्ये—**भवेदित्यादि** । **यास्त्वेता इति च** ॥ **सम्प्रति पूजार्थाः**—**सम्प्रति**—स्वनिर्माणसमकालमेव फलजनिका या **पूजा**—जीविकाप्रदत्वेन तदर्था इत्यर्थः । तदाह—**याः परिगृह्येति** । यास्तु गृहे पूज्यन्ते शिष्टैस्तासु शिवाभेदबुद्धेः सत्त्वेन सादृश्यबुद्ध्यभावेन प्रत्ययस्यैवाभावः । एवं चित्रेष्वपि द्रष्टव्यम् ॥

( ९९६ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४८ )

## २२६४ समासाच्च तद्विषयात्
## ॥ ५ । ३ । १०६ ॥

( छप्रत्ययाधिकरणम् )

( तत्पदार्थप्रतिपादकभाष्यम् )

**तदित्यनेन किं प्रतिनिर्दिश्यते ?**
**छः ॥**

( प्रदीपः ) **तदित्यनेनेति** । इवार्थश्छश्च प्रकृत इति कस्य सर्वनाम्ना परामर्श इति **प्रश्नः** । आचार्यदेशीय आह—**छ इति** ॥

( उद्द्योतः ) **आचार्यदेशीय इति** । छस्य विधेयतया प्राधान्येन तस्यैव परामर्शो युक्त **इत्यभिमानः** ॥

( सूत्रार्थोपपादकभाष्यम् )

**कथं पुनः समासो नाम छविषयः स्यात् ।**
**एवं तर्हीवार्थः ।**
**यदि तर्हि समासोऽपीवार्थे, प्रत्ययोऽपि, समासेनोक्तत्वात्प्रत्ययो न प्राप्नोति ।**
**एवं तर्हि द्वाविवार्थौ ।**
**कथम् ?**
**काकागमनमिव तालपतनमिव काकतालम्, काकतालमिव काकतालीयम् ॥**

( प्रदीपः ) **कथं पुनरिति** । अनेनैव छस्य विधानाच्छविषयस्यानुवादानुपपत्तिरित्यर्थः ॥ **एवं तर्हीवार्थ इति** । प्रधानस्यापि छस्य परामर्शस्यायुक्तत्वाद् गुणभूतस्यैवेवार्थस्य परामर्शः । छे च विधीयमानेऽस्मादेव ज्ञापकादिवार्थे समासः, सुप्सुपेति वा[1] ॥ **समासेनोक्तत्वादिति** । वचनसामर्थ्यात्स्यादिति चेत् शस्त्रीश्यामादिभ्योऽतिप्रसङ्गः ॥ **एवं तर्हीति** । शस्त्रीश्यामादीनां त्वन्तर्भूतेवार्थानामुपमेयप्रधानानामुपमेयान्तरेण संबन्धाभावाच्छस्याप्रसङ्गः ॥

**काकागमनमिवेति** । वृत्तिविषये काकतालशब्दौ काकतालसमवेतक्रियावाचिनौ । तत्र काकागमनं देवदत्तागमनस्योपमानम्, तालपतनं दस्यूपनिपातस्य । तालेन तु यः काकस्य वधः स देवदत्तस्य दस्युना वधस्योपमानमिति वधादिः काकतालीयादिशब्दवाच्यः संपद्यते ॥

( उद्द्योतः ) **छविषयस्येति** । समासस्येत्यर्थः ॥ शस्त्रीश्यामादीनां वक्ष्यमाणरीत्योदाहरणत्वासम्भवादाह—**छे च विधीयमानेऽस्मादेवेति** । छप्रत्ययविषय एव ज्ञापकसिद्धः समासः, सन्नियोगशिष्टत्वात्; 'सुप्सुपा' इत्ययं चाभिधानस्वाभाव्यादित्यर्थः ॥ **सुप्सुपेति वेति** । अत्रापि पक्षे इवार्थान्तर्भावेण वृत्तौ ज्ञापकमेवाश्रयणीयम्, पूर्वत्रोभयोर्ज्ञापकसिद्धत्वाश्रयणमिति विशेषः ॥ **अतिप्रसङ्ग इति** । यद्यत्यन्तस्वार्थिक इति भावः ॥ नन्वेवमपि शस्त्रीश्यामादौ दोषोऽत आह—**शस्त्रीति** । यद्यपि शस्त्र्युपमितदेवदत्तस्यान्यत्रोपमानत्वं वक्तुं शक्यं, तथापि तत्र यदि श्यामत्वेनैव सादृश्यं तर्हि शस्त्रीश्यामपदप्रयोगेणैव सिद्धावितरवैयर्थ्यम्, धर्मान्तरेण तु सादृश्यं न प्रतीयत इति भावः । **किञ्च तद्विषयादित्यस्येवार्थविषयसर्वावयवकादि**त्यर्थः । शस्त्रीश्यामेत्यादौ पूर्वपदमेव इवार्थविषयमिति न दोषः ॥ **वृत्तिविषय इति** । तत्राचोपमायां[2] उपमेयं गम्यम्, तच्च कृद्वाच्यक्रियारूपमेव, क्रियोपमेयत्वस्य क्रियायामेव सम्भवात् । तदाह—**तत्रेति** । अत्र पूर्वोत्तरपदयोः काकागमनसदृशतालपतनसदृशयोर्लक्षणा, सामानाधिकरण्येन[1] च तदर्थयोरन्वयः । एतेन 'पूर्वोत्तरपदयोरनन्वयेनासामर्थ्यात्समासो दुर्लभः' इत्यपास्तम् । उपमेयवाचकतत्तत्पदसमभिव्याहारेण कदाचित्काकमरणे कदाचित्तत्कृतोपभोगे लक्षणा, उपमानमात्रवाचकाभावाच्चेदृशे विषये उपमानलोपव्यवहार आलङ्कारिकाणाम् । तदाह—**तालेन त्विति** । अतर्कितोपनतत्वं च साधारणधर्म इति बोध्यम् ॥

( ९९७ विधिसूत्रम् ॥ ५ । ३ । २ आ. ४९ )

## २२७६ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ्
## ॥ ५ । ३ । ११८ ॥

( यञोऽधिकरणम् )

( ५८९८ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अणो गोत्राद्गोत्रवचनम् ॥ * ॥

**( भाष्यम् ) अणो गोत्रात् गोत्रग्रहणं कर्तव्यम् ।**

---

१ असामर्थ्येऽपि सुप्सुपेति प्रवृत्तौ ज्ञापकाश्रयणमेव, घनश्यामादाविवार्थान्तर्भावस्य क्लृप्तत्वात् । समासविध्यकल्पनाल्लाघवमत्र पक्षे बोध्यम् ॥
२ 'तत्राचोपमायां' इति ग. पाठः ॥

१ सामानाधिकरण्येनेति । ईदृशसामानाधिकरण्येनान्वयस्य समासप्रयोजकत्वा हेरिदं चिन्त्यम् । एकदेशवृत्तिदेवदत्तचैत्रयोर्बोधेच्छायामिह चैत्रदेवदत्त इत्यपि स्यात्, तस्मादसामर्थ्येऽपि ज्ञापकात्समास इत्येव न्यायः ॥

गोत्रादिति वक्तव्यम् । इह मा भूत्—आभिजितो मुहूर्तः, आभिजितः स्थालीपाक इति ।

गोत्रमिति च वक्तव्यम् ।

किं प्रयोजनम् ?

आभिजितकः । गोत्राश्रयो वुञ् यथा स्यात् ।

गोत्रमिति शक्यमकर्तुम् ।

कथमाभिजितकः ?

गोत्रादयं स्वार्थिको गोत्रमेव भवति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये पञ्चमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

॥ पादश्च समाप्तः ॥

( प्रदीपः ) अणो गोत्रादिति । गोत्रेणाण्विशेष्यते । गोत्रे यो विहितोऽण् तदन्तेभ्योऽभिजिदादिभ्यो यञ् यथा स्यात् ॥ आभिजित इति । एकत्र 'नक्षत्रेण युक्तः कालः' इत्यण् । अपरत्र 'साऽस्य देवता' इति ॥ गोत्रमिति च वक्तव्यमिति । एवं मन्यते—'गोत्रचरणाद्वुञ्' इत्यत्र गोत्रग्रहणस्य स्वरितत्वात् 'गोत्रे कुञ्जादिभ्यः च्फञ्' इति गोत्राधिकारविहितप्रत्ययस्य ग्रहणे सति अस्य यञो ग्रहणं न स्यात् । गोत्रत्वातिदेशात्तु भवति ॥ आभिजितक इति । आभिजित्यस्यायमिति वुञ् । 'आपत्यस्य च तद्धितेऽनाति' इति यलोपः ॥ गोत्राद्यमिति । 'गोत्रचरणाद्वुञ्' इत्यत्र गोत्रग्रहणेनार्थो गृह्यते । तेन तद्वाचिनः प्रत्ययो विधीयमानोऽस्मादपि यञो भवति । गोत्राधिकारविहितप्रत्ययग्रहणे त्वौपगव इत्यादावणायन्ताद्वुञ्न स्यात् ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ।

( उद्द्योतः ) अणन्तप्रकृतिकगोत्रप्रत्ययान्तादित्यर्थभ्रमं वारयति—गोत्रेणेति ॥ अत्र गोत्रमपत्यमात्रम्, अपत्याधिकारादन्यत्वात् ॥ ननु स्वार्थिकत्वादेवास्य गोत्रत्वं सिद्धमत आह—एवं मन्यत इति । 'गोत्रमिति वक्तव्यम्' इति पाठः, गोत्रवदिति तदर्थः । 'गोत्र इति वक्तव्यम्' इति पाठे गोत्रे यः प्रत्ययस्तद्वदिति वक्तव्यमित्यर्थः ॥ भाष्ये—वुञ्यथा स्यादिति । ननु 'जातिलक्षणो ङीष्, आपत्यत्वप्रयुक्तः 'यञश्च' इति 'ङीप् यथा स्यात्' इत्यपि वक्तुं युक्तमिति चेन्न, मण्डूकप्लुत्याऽस्त्रियामित्यस्यानुवृत्तेः स्त्रियामेतदप्रवृत्तेरित्याशयात् । स्पष्टं चेदं वृत्तौ ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते पञ्चमाध्यायस्य तृतीये पादे द्वितीयमाह्निकम् ॥

पादश्च समाप्तः ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | आह्निके २ | आह्निकमंडलयोगः | सर्वयोगः |
| व्याख्यातसूत्राणि | ९४८ | २६ | २३ | ४९ | ९९७ |
| अव्याख्यातसूत्राणि | १२१० | २८ | ४२ | ७० | १२८० |
| समुदितसूत्राणि | २१५८ | ५४ | ६५ | ११९ | २२७७ |
| वार्तिकानि | ५७९५ | ३७ | ६६ | १०३ | ५८९८ |

( ९९८ विधिसूत्रम् ॥ ५ । ४ । १ आ. १ )

## २२७८ पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ॥ ५ । ४ । १ ॥

( वुनोऽधिकरणम् )

( ५८९९ सूत्रैकदेशानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥ * ॥

( भाष्यम् ) पादशतग्रहणमनर्थकम् ।

किं कारणम् ?

अन्यत्रापि दर्शनात् । अन्यत्रापि हि वुन् दृश्यते—द्विमोदकिकां ददाति ॥

(प्रदीपः) पादशतग्रहणमिति । द्वौ द्वौ माषौ ददातीत्यादावतिप्रसङ्गो न भवति, अनभिधानात् । 'यस्य–' इतिलोपेन सिद्धे पुनर्लोपविधानमपरनिमित्तकत्वार्थम् । तेन लोपस्य[1]स्थानिवत्वात् द्विपदिकेत्यादौ 'पादः पत्' इति पद्भावः सिध्यति ॥

(उद्योतः) अपरनिमित्तकत्वार्थमिति । सहविधाने हि तत्वं न, नियमतः पूर्ववर्तिबुद्धिविषयस्यैव निमित्तत्वादिति 'धिन्विकृण्व्योः–' इति सूत्रे भाष्ये स्पष्टम् ॥

( ९९९ विधिसूत्रम् ॥ ५ । ४ । १ आ. २ )

## २२८० स्थूलादिभ्यः प्रकारवचने कन् ॥ ५ । ४ । ३ ॥

( कनोऽधिकरणम् )

( ५९०० उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् ॥ * ॥

( भाष्यम् ) कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानं कर्तव्यम् । चञ्चत्कः, बृहत्कः ॥

( प्रदीपः ) चञ्चत्क इति । सादृश्यस्य द्योतकः कन् प्रत्ययः । अचञ्चन्नपि यश्चञ्चन्निव लक्ष्यते स चञ्चत्कः, यथा—मणिः स्पन्दमानप्रभत्वात् । अबृहन्नपि बृहन्निव प्रसृतप्रभत्वाद्यो दृश्यते स बृहत्कः ॥

( उद्योतः ) सूत्रे प्रकारशब्देन सादृश्यं गृह्यते, तदाह—सादृश्येति ॥ चञ्चन्निवेति । विद्युदिव क्षणदृश्यमानप्रभ इत्यर्थः ॥ स्पन्दमानेति । गलत्प्रभत्वादित्यर्थः ॥

[1] 'लोपस्यास्यास्थानिवत्वात्' इति च. छ. पाठः ॥

( १००० विधिसूत्रम् ॥ ५ । ४ । १ आ. ३ )

## २२८१ अनत्यन्तगतौ क्तात् ॥ ५।४।४ ॥

( ५९०१ पूर्वविप्रतिषेधबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अनत्यन्तगतौ क्तान्तात्तमादयः पूर्वविप्रतिषिद्धम् ॥ * ॥

( भाष्यम् ) अनत्यन्तगतौ क्तान्तात्तमादयो भवन्ति पूर्वविप्रतिषेधेन ।

अत्यन्तगतौ क्तान्तात्कन् भवतीत्यस्यावकाशः—अनत्यन्तगतेर्वचनं प्रकर्षस्यावचनम्—भिन्नकम् छिन्नकम् ।

तमादीनामवकाशः-प्रकर्षस्य वचनमनत्यन्तगतेरवचनम्—पटुतरः, पटुतमः ।

उभयवचने उभयं प्राप्नोति—भिन्नतरकम्, छिन्नतरकम् ।

तमादयो भवन्ति पूर्वविप्रतिषेधेन ॥

( प्रदीपः ) भिन्नतरकमिति । भेदस्य प्रकर्षानत्यन्तगत्योर्युगपद्विवक्षायां पूर्वविप्रतिषेधात्तरपि कृते क्तान्तत्वाभावात्कन्न प्राप्नोतीत्याह—तदन्ताच्चेति । स्वार्थः पुनरनत्यन्तगतियुक्त एव, न तु शुद्धः । शुद्धे हि स्वार्थे कनि सत्यनत्यन्तगतिर्न द्योतिता स्यात् ॥ नन्वेष स्वार्थमात्रे कन् प्रतिपादितः, दृश्यते चासौ; यथैवं सूत्रमभिन्नतरकं भवति, बहुतरकं व्याप्यते, सुकरतरकं मन्यत इति । एवं तर्हि 'न सामिवचने' इति प्रतिषेधेन स्वार्थिकः कन्नस्तीति ज्ञाप्यते । न हि सामिकृतादिभ्यः 'अनत्यन्तगतौ क्तात्' इत्यस्य कनः प्रसङ्गः, असमासे सामिवचनेनैवानत्यन्तगतेर्द्योतनात् । समासेभ्यस्तु क्तान्तत्वाभावाच्च कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमिति वचनात्सामिशब्दस्य गतिकारकत्वाभावात् । तस्मात्स्वार्थिकस्यैवासौ कनो निषेधः स्वार्थिकं[1] कनं ज्ञापयति ॥

( उद्योतः ) भेदस्य प्रकर्षेति । भेदगतप्रकर्षस्येत्यर्थः ॥ इत्याहेति । अत आहेत्यर्थः ॥ नन्वेष इति । 'तदन्ताच्च' इति वचनविहितः ॥ स्वार्थमात्रे इति । न त्वनत्यन्तगतियुक्ते इत्यर्थः ॥ दृश्यते चेति । तदयुक्तेऽपि स्वार्थमात्रे इत्यर्थः ॥ समासेभ्य इति । समासरूपेभ्यः सामिकृतादिभ्य इत्यर्थः ॥ क्तान्तत्वाभावाच्चेति । प्रत्ययग्रहणपरिभाषयेति भावः । चेनासमासोक्तहेतोः सङ्ग्रहः ॥ गतिकारकत्वाभावादिति । एवञ्च 'कृद्ग्रहणे–' इति न्यायेनापि न समासे क्तान्तत्वमिति भावः । अस्य क्रियाविशेषणत्वात् कारकत्वमस्त्येवेति चिन्त्यम् ॥ ज्ञापयतीति । ननु 'न सामि–' इति सूत्रस्य प्रत्याख्यास्यमानत्वात्कथमेतज्ज्ञापकमिति चेन्न, तस्य भाष्यस्य 'पूर्वसूत्रविहितस्य नायं निषेधः' इत्यर्थमात्रतात्पर्यकत्वात् । तत्र सूत्रे 'प्रकृत्यभिहितत्वात्' इति भाष्यस्य प्रकृतिसहचरितसामिशब्देनाभिहितत्वा-

[1] 'स्वार्थिकं हि कनं' इति च. छ. पाठः ॥

दित्यर्थः । 'सुकरतरकं' इत्यादौ यावादेराकृतिगणत्वात् कनः सिद्धया ज्ञापकस्य नोपयोग इत्यन्ये ॥

( ५९०२ उपसंख्यानवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तदन्ताच्च स्वार्थे कन्वचनम् ॥ * ॥

( भाष्यम् ) तदन्ताच्च स्वार्थे कन्वक्तव्यः । भिन्नतरकम्, छिन्नतरकम् ॥

( १००१ निषेधसूत्रम् ॥ ५ । ४ । १ आ. ४ )

## २२८२ न सामिवचने ॥ ५ । ४ । ५ ॥

( ५९०३ सूत्रानर्थक्यबोधकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ सामिवचने प्रतिषेधानार्थक्यं प्रकृत्यभिहितत्वात् ॥ * ॥

( भाष्यम् ) सामिवचने प्रतिषेधोऽनर्थकः ।

किं कारणम् ?

प्रकृत्यभिहितत्वात् । प्रकृत्याऽभिहितः सोऽर्थ इति कृत्वा कन्न भविष्यति ॥

( १००२ विधिसूत्रम् ॥ ५ । ४ । १ आ. ५ )

## २२८४ अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः ॥ ५ । ४ । ७ ॥

( खप्रत्ययाधिकरणम् )

( ५९०४ प्रत्ययानुपपत्तिप्रदर्शकवार्तिकम् ॥ १ ॥ )

## ॥ * ॥ अध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् ॥ * ॥

( भाष्यम् ) अध्युत्तरपदात्प्रत्ययविधेरनुपपत्तिः ।

किं कारणम् ?

विग्रहाभावात् । विग्रहपूर्विका तद्धितोत्पत्तिः, न चाध्युत्तरपदेन विग्रहो दृश्यते ॥

( प्रदीपः ) विग्रहाभावादिति । अन्यत्र विग्रहपूर्विका वृत्तिर्दृश्यते, यथा—यावो यावक इति । यत्र तु विग्रहो नेष्यते तत्र नित्यग्रहणं क्रियते, यथा—'त्रैमेन्नित्यम्' इति । इह तु महाविभाषाधिकारस्य न किंचिन्निवर्तकमस्तीति विग्रहः प्राप्नोति, न चासौ दृश्यत इति प्रत्ययविधानं नोपपद्यत इत्यर्थः ॥

( उद्द्योतः ) ननु वृत्त्यभावो न विग्रहाभावनियतः, नित्यसमासादीनां दर्शनात्-अत आह—अन्यत्रेति ॥ नोपपद्यत इति । नित्यपदाभावान्न नित्यं प्रत्ययः, विकल्पस्तु नेष्यत इत्यनुपपत्तिरिति भावः ॥

( ५९०५ न्यासान्तरेण प्रत्ययोपपादकवार्तिकम् ॥ २ ॥ )

## ॥ * ॥ तस्मात्तत्रेदमिति सधीनट् ॥ * ॥

( भाष्यम् ) तस्मात्तत्रेदमिति सधीनट्प्रत्ययो वक्तव्यः । राजनीदम्, राजाधीनम् ।

( प्रदीपः ) सूत्रमुपालभ्य न्यासान्तरं पठति—तस्मात्तत्रेदमिति । तत्र महाविभाषाधिकारात्पक्षे वाक्यं भवति—राजनीदमायत्तमिति । पक्षे प्रत्ययः—राजाधीनमिति ॥

( न्यासान्तराक्षेपभाष्यम् )

यदि सधीनट् क्रियते सकारस्येत्संज्ञा न प्राप्नोति ।

इह च स्त्र्यधीनः, श्र्वधीन इत्यङ्गस्येति इयङुवङौ स्याताम् ।

सूत्रं च भिद्यते ॥

( प्रदीपः ) भाष्यकारो न्यासान्तरं दूषयति—यदीति । पदसंज्ञा च नलोपाद्यर्थमवश्यमभ्युपेया ॥

( उद्द्योतः ) नन्वधीनप्रत्यय एवास्त्वत आह—पदसंज्ञा चेति । सा च सित्वं विना दुर्लभेति भावः । 'अभ्युपेया' इति पाठे[1] ईङो दैवादिकाद्यो यति रूपम् ॥ नन्वधीनट् सिच्चेति न्यासः कार्य इत्यभिप्रायेण भाष्ये दोषान्तरमाह—इह चेति । 'तमादयः प्राक्कनः' इति प्राधिकम्, 'विभाषा सुप-' इति सूत्रे महाविभाषया वाक्ये सिद्धे 'विभाषेति कल्पाद्यर्थम्' इति भाष्येण, 'एकाच्च प्राचाम्' इति सूत्रे 'महाविभाषयैव सिद्धे प्राचांग्रहणं न कर्तव्यम्' इति भाष्येण च तथा बोधनात् ॥

( अनुपपत्तिनिरासभाष्यम् )

यथान्यासमेवास्तु ।

ननु चोक्तम् *अध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावात्* इति ।

नैष दोषः । अस्ति कारणं येनात्र विग्रहो न भवति ।

किं कारणम् ?

नित्यप्रत्ययोऽयम् ।

( नित्यप्रत्ययप्रतिपादकभाष्यम् )

के पुनर्नित्यप्रत्ययाः । तमादयः प्राक्कनः, ञ्यादयः प्राग्वुनः, आमादयः प्राङ्मयटः, बृहतीजात्यन्ताः, समासान्ताश्चेति ।

( प्रदीपः ) तमादय इति । 'अवक्षेपणे कन्' इत्यस्मात्कनः प्रागित्यर्थः । 'शुक्लः' इत्युक्ते सामान्यशब्दत्वात् प्रकर्षस्यानवगमात्प्रकर्षाद्युपाधिद्योतनयावश्यप्रयोज्यास्तमादय इति सामर्थ्यात्ते नित्याः ॥ आमादय इति । 'किमेत्तिङव्ययघात्-' इत्यारभ्य 'तत्प्रकृतवचने मयट्' इत्यस्मात् प्रागित्यर्थः ॥ बृहतीजात्यन्ता इति । बहुवचननिर्देशादेतत्सूत्रविहितस्य खस्य ग्रहणम् ॥

---

1 अयमेव पाठः साम्प्रतमुपलभ्यते ॥ 2 'इङो' इति पाठः ख. पुस्तके ॥

(उद्द्योतः) शुक्ल इत्युक्त इति । सामान्यशब्दात्—सामान्यबोधकादस्माच्छब्दात् प्रकर्षानवगमादित्यर्थः । 'सामान्यशब्दत्वात्' इति क्वचित्पाठः । सामर्थ्यात्ते नित्या इति तु चिन्त्यमेव, प्रकरणादिसत्त्वे तन्मात्रादपि तादृग्बोधस्य वक्तुं शक्यत्वात्, तुल्यन्यायात्पाशादीनामपि नित्यत्वापत्तेश्च । तस्माद्भाष्योक्त्या वाचनिकमेषां नित्यत्वं बोध्यम् ॥

( अध्युत्तरपदादिति वार्तिकस्य प्रकृत्यनुपपत्तिप्रदर्शकपरं भाष्यम् )

**एवं तर्हि नायं प्रत्ययविधिरुपालभ्यते ।**

**किं तर्हि ?**

**प्रकृतिरुपालभ्यते, अध्युत्तरपदा प्रकृतिर्नास्ति ।**

**किं कारणम् ?**

**विग्रहाभावात् । विग्रहपूर्विका समासप्रवृत्तिः, न चाधिना विग्रहो दृश्यते ॥**

( प्रदीपः ) **किं तर्हि ? प्रकृतिरिति** । प्रकृत्यभावात् प्रत्ययोऽपि न प्राप्नोति । एतच्च शौण्डादिष्वधिशब्दस्य पाठमनपेक्ष्योच्यते ॥

( अनुपपत्तिनिरासभाष्यम् )

**एवं तर्हि बहुव्रीहिर्भविष्यति ।**

**किं कृतं भवति ?**

**भवति वै कश्चिदस्वपदविग्रहोऽपि बहुव्रीहिः तद्यथा—शोभनं मुखमस्याः सुमुखीति ।**

**नैवं शक्यम् ।**

**इह हि महदधीनमित्यात्वकपौ प्रसज्येयाताम् ।**

**एवं तर्ह्यव्ययीभावो भविष्यति ।**

**एवमप्यधेः पूर्वनिपातः प्राप्नोति ।**

**राजदन्तादिषु पाठः करिष्यते ।**

**अथवा सप्तमीसमासोऽयम् । अधिः शौण्डादिषु पठ्यते ॥**

( प्रदीपः ) **एवं तर्हि बहुव्रीहिरिति** । वृत्तिविषये ससाधनक्रियावाचित्वादधिशब्दस्य राजाऽधिकृतो यस्मिंस्तद्राजाऽधीनमिति बहुव्रीहिः करिष्यते । विशेषणत्वविवक्षया च राजादीनां पूर्वनिपातः । यदि त्वतिखट्वादिवद्राजानमधिगत इति तत्पुरुषः क्रियते तदाऽधेः पूर्वनिपातः स्यात् ॥ **कपूचेति** । 'शेषाद्विभाषा' इत्यनेन । तस्मिंश्च सत्यध्युत्तरपदत्वाभावात् खो न स्यात् ॥ **एवमप्यधेरिति** । यथा—अधिस्त्रीति ॥ **राजदन्तादिष्विति** । ननु विभक्त्यर्थवृत्तेरधेरव्ययीभावो विधीयमानोऽधिकरणप्रधानः स्यात्, नाधेयप्रधानः । नैष दोषः । साहचर्यादाधेयप्रधानो भविष्यति । खप्रत्यये च कृते कुटीरादिवदयथेष्टं लिङ्गसंख्यं भविष्यति । राजदन्तादिषु च 'आधेयेऽधिः' इत्येवं विशिष्य पठितव्यं, तेनाधिस्त्रीत्यादावधिकरणप्रधानत्वेऽधेः परनिपाताभावः ॥ **अधिः शौण्डादिष्विति** । 'अधिरीश्वरे' इत्यधेः कर्मप्रवचनीयत्वात् 'यस्य चेश्वरवचनम्' इति सप्तम्यन्ता राजादयोऽधिना समस्यन्ते । एवं च वाक्यमपि भवति । यथाऽधिब्रह्मदत्ते पञ्चाला इति, एवं राजन्यधि राजाधीनमिति । वृत्तिविषये चाधिशब्द ईशितव्ये वर्तते । अथ वाऽधिकरण एव सप्तमी, वृत्तिविषये च ससाधनक्रियावचनोऽधिर्न तु वाक्ये इत्यस्वपदेन विग्रहः—राजन्यधिकृतं राजाधीनं[1], राजायत्तमित्यर्थः ॥

( उद्द्योतः ) नन्वधिशब्दस्याधिकरणशक्तिप्रधानत्वात्सामानाधिकरण्याद्यभावेन कथं बहुव्रीहिरत आह—**वृत्तिविषये इति** ॥ **ससाधनेति** । क्रियाविशिष्टसाधनवचनादित्यर्थः ॥ **विशेषणत्वविवक्षयेति** । 'राजदन्तादित्वात्' इति वक्तुं युक्तम् ॥ **तस्मिंश्च सत्यध्युत्तरपदत्वाभावादिति** । समासावयवत्वे कस्य तच्चरमावयवत्वेनाधेस्तच्चरमावयवत्वाभाव इति भावः ॥ **साहचर्यादिति** । अधिकरणत्वशक्तेराधेयाविनाभावेन सा तत्सहचरितेति तयाऽऽधेयं लक्ष्यमिति भावः ॥ ननु लक्षणयाऽऽधेयप्रधानत्वेऽपि स्वगतलिङ्गाद्यागाच्छक्तिप्रधाने सामान्ये नपुंसकत्वस्यैव सत्त्वेन खान्तमपि नपुंसकमेव स्यादत आह—**कुटीरादिवदिति** ॥ नन्वेवमधिस्त्रीत्यादावप्यधेः परनिपातापत्तिरत आह—**राजदन्तादिषु चेति** ॥

नन्वधियोगे कथं सप्तमीत्यत आह—**अधिरिति** ॥ 'राजाधीनो देवदत्तः' इति सामानाधिकरण्यसिद्धये आह—**वृत्तिविषये चेति** । **अथ वा अधिकरण एवेति** । 'कर्तृकर्मणोः—' इति सूत्रस्थभाष्यरीत्याऽधिकृतार्थत्वेऽप्यधेस्तदर्थस्य कारकविभक्त्यर्थान्वयप्रयोजकक्रियात्वाभावाच्चिन्त्यमिदम् । तस्मात्समासालौकिके सप्तम्यन्तेन समासविधानात्सप्तमीस्थितिरिति बोध्यम् ॥

---

( १००३ विधिसूत्रम् ॥ ५ । ४ । १ आ. ६ )

## २२८५ विभाषाऽञ्चेरदिक् स्त्रियाम् ॥ ५ । ४ । ८ ॥

( प्रदीपः ) इह विभाषाग्रहणं पूर्वस्य विधेर्नित्यत्वज्ञापनार्थम् । 'द्वयोर्विभाषयोर्मध्ये नित्या विधयः' इति न्यायात् ॥

( उद्द्योतः ) **द्वयोरिति** । 'पादशतस्य—' इत्यादौ महाविभाषाऽधिकारादिति भावः ॥

( पदकृत्यभाष्यम् )

**दिग्ग्रहणं किमर्थम् ?**

**अस्त्रियामितीयत्युच्यमाने 'प्राचीना ब्राह्मणी' 'अवाचीना शिखा' इत्यत्रापि प्रसज्येत । दिग्ग्रहणे पुनः क्रियमाणे न दोषो भवति ।**

( प्रदीपः ) **दिग्ग्रहणमिति** । अञ्चत्यन्तः स्त्रियां वर्तमानो दिश्येव वर्तत इति **प्रश्नः** ॥ **प्राचीना ब्राह्मणीति** । क्रियानिमित्तको दिग्देशकालनिमित्तको वा ब्राह्मण्यादौ स्त्रियां वर्तत इति खस्य प्रतिषेधाभावः ॥

---

१ 'राजाधीनं' इत्यस्य छ. पुस्तके पाठो न ॥

( उद्द्योतः ) नन्वञ्चत्यन्तस्य दिग्देशकालबोधकस्य कथं ब्राह्मण्यां वृत्तिरत आह—क्रियानिमित्तक इति । प्रकर्षेणाञ्चतीति क्रियानिमित्तक इत्यर्थः ॥ दिग्देशेत्यादि । तत्तद्दिगादिस्थे लक्षणेति भावः ॥ स्त्रीत्वाभाव इति । एवञ्च नायं स्त्रीविषय इति भावः ॥

( पदकृत्यभाष्यम् )

**अथ स्त्रीग्रहणं किमर्थम्, न यावता दिक्शब्दः स्त्रीविषय एव ।**

**भवति वै कश्चिद्दिक्शब्दोऽस्त्रीविषयोऽपि ।**

**तद्यथा,—प्राक्, प्राचीनम् । प्रत्यक्, प्रतीचीनम् । उदक्, उदीचीनम् ॥**

( प्रदीपः ) **प्रागिति** । प्राचीशब्दाद् दिग्वाचिनः 'दिक्शब्देभ्यः—' इत्यस्तातेरुत्पन्नस्य 'अञ्चेर्लुक्' इति लुक् । ततोऽव्ययत्वात् स्त्रीत्वाभावः । खे तु कृते शब्दान्तरत्वान्नपुंसकत्वम् ॥

( १००४ विधिसूत्रम् ॥ ५ । ४ । १ आ. ७ )

## २२९१ णचः स्त्रियामञ् ॥ ५।४।१४ ॥

( अञोऽधिकरणम् )

( स्त्रीग्रहणस्य ज्ञापकत्वोपपादकभाष्यम् )

**स्त्रीग्रहणं किमर्थम्, न स्वार्थिकोऽयम्?**

**स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ।**

**एवं तर्हि सिद्धे सति यत् स्त्रीग्रहणं करोति तज्ज्ञापयत्याचार्यः-स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानीति ।**

**किमेतस्य ज्ञापने प्रयोजनम्?**

**गुडकल्पा द्राक्षा, तैलकल्पा प्रसन्ना, पयस्कल्पा यवागूरित्येतत्सिद्धं भवति ॥**

( १००५ विधिसूत्रम् ॥ ५ । ४ । १ आ. ८ )

## २२९६ एकस्य सकृच्च ॥ ५ । ४ । १९ ॥

( सुचोऽधिकरणम् )

( अभ्यावृत्तिपदार्थबोधकभाष्यम् )

**सकृदादेशेऽभ्यावृत्तिग्रहणं निवर्त्यम् ।**

**किं प्रयोजनम्?**

**पुनः पुनरावृत्तिरभ्यावृत्तिः, न चैकस्य पुनः पुनरावृत्तिर्भवति ॥**

( प्रदीपः ) **सकृदादेश इति** । अभ्यावृत्तिगणने सकृच्छब्दस्यासामर्थ्यात् पुनः पुनरावृत्तिः क्रियायाः क्रियाभ्यावृत्तिः, तद्गणने वर्तमानात् संख्याशब्दात् कृत्वसुजित्येवं पूर्वसूत्रार्थमाश्रित्येदमुच्यते । यदा त्वभिमुखी वृत्तिरभ्यावृत्तिर्जन्मलक्षणोच्यते तदा तदनुवृत्तावपीह दोषाभावः । अस्मिन् पक्षे धात्वर्थस्यानुवादक आङ् । यथा—'अधिपरी अनर्थकौ' इति ॥ **किं प्रयोजनमिति** । अभिमुखी प्रवृत्तिरभ्यावृत्तिरित्यर्थे न दोष इति **प्रश्नः** ॥ **न चैकस्येति** । ननु चैकस्यैव पुनःपुनरावृत्तिः, यथा—पञ्चकृत्वो भुङ्क्ते इति । एकैवात्र भुजिक्रिया निवृत्तभेदाऽऽख्यातेनाभिधीयते । तस्याः पञ्चावृत्तयः पञ्चसंख्यया गण्यन्ते । सत्यमेतत् । अयं त्वत्रार्थः—न चैकस्य पुनः पुनरावृत्तिर्भवतीति । इह सकृद् भुङ्क्ते इति भोजनमेककालं विवक्षितं तस्यैकशब्दवाच्यस्य कालभेदादप्यलब्धभेदस्य पुनरावृत्त्यभावादभ्यावृत्त्यभावः, तत्र यथा—साधु पचतीति भवति, एवमेकं भुङ्क्ते इति प्राप्ते सकृच्छब्दप्रयोगार्थमिदं सूत्रम् ॥

( उद्द्योतः ) नन्वभ्यावृत्तिः-जन्म, तद्गणने सकृच्छब्दस्यापि वृत्तिसम्भवादाह—**पुनः पुनरिति** ॥ **अभिमुखीति** । व्यवहाराभिमुखी वृत्तिर्जन्मेत्यर्थः ॥ नन्वत्रार्थे आङुपादानं व्यर्थमत आह—**अस्मिन् पक्ष इति** ॥ **एकैवात्रेति** । एकत्वविशिष्टैवाख्यातेनाभिधीयत इत्यर्थः, शब्दशक्तिस्वभावादिति भावः ॥ **पञ्चावृत्तय इति** । कृत्वसुजादिसमभिव्याहारे सङ्ख्याशब्दानां तत्सङ्ख्यजन्मपरता, तत्सङ्ख्यावृत्तिपरता वेत्यर्थः ॥ **इति भोजनमिति** । सकृच्छब्देनेत्यर्थः ॥ **तस्यैकस्येति** । निवृत्तभेदस्यैवाख्यातेन प्रत्यायनादिति भावः । **एककालस्येत्यस्य** प्रयोजनं—**कालभेदादप्यलब्धभेदस्येति** । अत एव—**पुनरावृत्त्यभावादिति** ॥ **इदं सूत्रमिति** । तत्र चाभ्यावृत्त्यसम्भवात्तन्निवृत्तिरावश्यकीति भावः ॥ **एकस्येति** भाष्यस्य-एककालस्य एकशब्दबोध्यस्य चेत्यर्थ इति तात्पर्यम् ॥

( एकदेशिनः क्रियाग्रहणानुवृत्तौ फलभाष्यम् )

**अथ क्रियाग्रहणमनुवर्तत उताहो न?**

**किं चार्थोऽनुवृत्त्या?**

**बाढमर्थः । इह मा भूत्—एको भुङ्क्ते इति ॥**

( प्रदीपः ) **अथ क्रियाग्रहणमिति** । प्रधाने निवर्तमाने गुणस्यापि निवृत्त्या भाव्यमिति मत्वा **प्रश्नः** ॥ **किं चार्थ इति** । यदि प्रयोजनमस्ति ततः स्वरितत्वात् क्रियाग्रहणं निवर्तमानेऽप्यभ्यावृत्तिग्रहणेऽनुवर्तिष्यत इति भावः ॥ **एको भुङ्क्ते इति** । अनेकोऽपि भुङ्क्ते इति तन्निवृत्त्यर्थं एकशब्दप्रयोगः ॥

( उद्द्योतः ) **प्रधाने**—अभ्यावृत्तिपदे ॥ **स्वरितत्वादिति** । एकदेशे स्वरितत्वप्रतिज्ञानादित्यर्थः ॥ ननु 'भुङ्क्ते' इत्येकवचनेनैव कर्त्रेकत्वप्रतीतेः 'एकः' इति व्यर्थमत आह—**अनेकोऽपीति** । तादृशप्रयोगस्यापि दर्शनादिति भावः ॥

( क्रियाग्रहणानुवृत्तावाक्षेपभाष्यम् )

**अथानुवर्तमानेऽपि क्रियाग्रहण इह कस्मान्न भवति—एकः पाक इति ॥**

( प्रदीपः ) **अथानुवर्तमानेऽपीति** । यथा—'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इत्यादिषु क्रियाप्रदेशेषु पाकादेर्ग्रहणं 'भोक्तुं पाकः' इत्यादिसिद्ध्यर्थं तथेहापि ग्रहणेन भाव्यमिति मत्वा **प्रश्नः** ॥

( उद्योतः ) ननु घञन्तवाच्यस्य द्रव्यरूपत्वेन क्रियात्वाभावात्कथं तत्र कृत्वसुचः प्राप्तिरत आह—यथा तुमुन्ण्वुलाविति ॥

( प्रतिबन्द्युत्तरभाष्यम् )

**पूर्वयोश्चापि योगयोः कस्मान्न भवति—द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दश पाका इति ?**

**नैतत् क्रियागणनम् ।**

**किं तर्हि ?**

**द्रव्यगणनमेतत् ।**

**कथम् ?**

**कृदभिहितो भावो द्रव्यवद्भवतीति ॥**

**इहापि तर्हि द्रव्यगणनान्न प्राप्नोति—सकृद्भुक्त्वा—सकृद्भोक्तुमिति ।**

**पूर्वयोश्चापि योगयोः—द्विर्भुक्त्वा—द्विर्भोक्तुम्, त्रिर्भुक्त्वा—त्रिर्भोक्तुम्, पञ्चकृत्वो भुक्त्वा—पञ्चकृत्वो भोक्तुम्, दशकृत्वो भुक्त्वा—दशकृत्वो भोक्तुमिति द्रव्यगणनान्न प्राप्नोति ॥**

( प्रदीपः ) **द्वौ पाकाविति ।** यदैकमेव पाक्यं द्विष्पक्वं तदैतदुदाहरणम्—सुवर्णस्य द्वौ पाकाविति । एवं ह्यभ्यावृत्तिर्भवति, तद्भेदाच्च पाक्यस्य भेदः । यदा तु पाक्यद्रव्यभेदात्पाकभेदस्तदाऽभ्यावृत्त्यभावादेव पूर्वयोगाभ्यां प्रत्ययाप्रसङ्गः ॥ **नैतत् क्रियागणनमिति ।** अभ्यावृत्तिग्रहणादेव क्रियासंप्रत्ययः सिद्धः । न हि द्रव्यगुणयोः स्वभावसिद्धयोः शब्देन प्रतिपाद्यमानयोरभ्यावृत्तिः संभवति, साध्यार्थविषयत्वात्तस्याः । तस्मात् क्रियाविशेषप्रतिपत्त्यर्थं क्रियाग्रहणं कृतं, तेन साध्यस्वभावैव क्रिया गृह्यते । पाकादिभिस्तु शब्दैः सिद्धस्वभावाऽभिधीयते, सिद्धतायां घञादिविधानात् । यद्यपि धातुनाऽत्र साध्यस्वभावा क्रियाऽभिधीयते तथापि प्रत्ययार्थस्य प्राधान्यात्साध्यत्वं गुणभूतमिति क्रियाग्रहणादिह सिद्धताधर्मयुक्तपाकाग्रहः । अन्यत्र तु धातुवाच्यक्रियाश्रयं पाकादिष्वपि कार्यं भवति । यादृशी च पूर्वसूत्रे क्रिया गृहीता तादृश्येवेहानुवर्तेत इत्येकः पाक इत्यत्राप्ययं परिहार उपपन्नः ॥ यथोक्तं न्यायमप्रतिपद्य 'कृदभिहितः—' इति सामान्येनाभिधानाद् घञादीनामव्ययकृतां च विशेषमबुद्ध्वा पृच्छति—**इहापि तर्हीति ॥**

( उद्योतः ) ननु पाक्यद्वयस्य पाकद्वयेऽभ्यावृत्त्यभावात्प्रत्ययप्राप्तिरेव नेत्यत आह—**यदैकमेवेति ।** 'यदैकमेव पाक्यं द्विपाकम्' इति पाठः ॥ **द्विपाकमिति**—बहुव्रीहिः । 'द्विष्पाकम्' इति त्वपपाठः । 'द्विष्पक्वं' इति क्वचित्पाठः ॥ नन्वेकस्य पाकद्वयं व्यर्थमत आह—**तद्भेदाच्चेति ।** पाकभेदाच्च पाक्यभेदः, तत्कृतः पाक्यस्य विशेष इत्यर्थः ॥ नन्वेकपाक्यस्य वारंवारं पाके क्रियागणनस्य सम्भवादाह—**अभ्यावृत्तिग्रहणादेवेति ।** द्रव्यगुणयोर्न गणनायोग्यं पुनः पुनर्जन्म, यत एकैव तेषामुत्पत्तिः, क्रियायास्तु धातुतो निवृत्तभेदाया एव प्रत्ययेन भवति पुनः पुनरुत्पत्तेति प्रतीतिः, आवृत्तिश्च । द्रव्यस्य स्वनिवृत्तभेदस्यैव शब्देनोपादानान्न पुनः पुनरुत्पत्तिः, नाऽभ्यावृत्तिः, पुनः पुनर्जन्मयोग्यस्य जन्मैव चाभ्यावृत्तिपदेनोच्यते; अभिमुखीत्यर्थकाभिपदस्वारस्यादिति भावः । तदाह—**न हीति ॥ स्वभावसिद्धयोः शब्देनेति ।** सिद्धतया शब्देन प्रतिपाद्यमानयोरित्यर्थः । तस्यापि श्वेतत इत्यादेः शब्दात्साध्यत्वेन प्रतीतौ सम्भवत्येवाभ्यावृत्तिरित्येवमुक्तम् । **केचित्तु**—साध्यत्वविशिष्टा धातुना, सिद्धत्वविशिष्टा घञोच्यत इति वदन्ति, तन्मते शङ्कते—**यद्यपीति ॥**

**साध्यस्वभावेति ।** सैवेत्यर्थः ॥ **साध्यत्वं**—तद्विशिष्टा क्रिया गुणभूतमित्यत्र हेतुः ॥ **प्रत्ययार्थप्राधान्यादिति ।** सिद्धत्वसाध्यत्वधर्मभेदेन तस्मिन् विशेष्यताविशेषणतयोः स्वीकारादिति भावः ॥ **क्रियाग्रहणादिहेति ।** प्रधानतया भासमानसाध्यक्रियाग्रहणादित्यर्थः ॥

( पुनः पुनरावृत्तावित्यर्थे दोषभाष्यम् )

**यदि खल्वपि पुनः पुनरावृत्तिरभ्यावृत्तिर्द्विरावृत्ते सकृदिति स्यात्, त्रिरावृत्ते द्विरिति ॥**

( प्रदीपः ) दोषान्तरं चाह—**यदि खल्वपीति ।** आद्या हि क्रियाप्रवृत्तिरभ्यावृत्तिर्न भवति । किं तर्हि ? अभिमुखीति । एतच्चाभिग्रहणाल्लभ्यते । अन्यथा हि क्रियावृत्तिगणन इति ब्रूयात् ॥

( उद्योतः ) **आद्या हीति ।** आवृत्तिशब्दस्य द्वितीयादिप्रवृत्तावेव रूढत्वादिति भावः ॥

( अभ्यावृत्तिपदार्थबोधकभाष्यम् )

**एवं तर्ह्यनुवर्तते—अभ्यावृत्तिग्रहणम् । न तु पुनः पुनरावृत्तिरभ्यावृत्तिः ।**

**किं तर्हि ?**

**अभिमुखी प्रवृत्तिरभ्यावृत्तिः । पूर्वा च परे प्रत्यभिमुखी, परे च पूर्वां प्रत्यभिमुख्यौ ॥**

( प्रदीपः ) **पूर्वा चेति ।** अस्ति हि तासां प्रवृत्तीनामेकसाधनानां परस्परापेक्षा—एतावत्य एताः प्रवृत्तय इति । सकृद्भुङ्क्ते इत्यादौ त्वेकस्या अपि वृत्तेः स्वरूपलाभं प्रत्याभिमुख्यमस्ति ॥

( उद्योतः ) **एतावत्य एताः प्रवृत्तय इति ।** 'प्रवृत्तयो जन्मानीति व्यवहारे' इति शेषः । **एकसाधनानामित्यनेन**—भिन्नकर्मकर्तृकत्वे आवृत्तिव्यवहाराभाव इति सूचितम् ॥

नन्वेवमपि वृत्त्यन्तरापेक्षत्वादाभिमुख्यस्यैकप्रवृत्तावभावात्कथमत्रानुवर्तेत इत्युक्तिरत आह—**सकृद्भुङ्क्ते इत्यादौ त्विति ॥ स्वरूपलाभमिति ।** स्वरूपमात्रप्रयुक्तेदृशव्यवहारलाभं प्रतीत्यर्थः जन्मार्थकाभ्यावृत्तिग्रहणादेकः पाको द्वौ पाकावित्याद्यपि सिद्धमिति ॥

( क्रियाग्रहणानुवृत्तावपि दोषाभावोपपादकभाष्यम् )

**यदप्युच्यते—अनुवर्तमानेऽपि क्रियाग्रहण इह कस्मान्न भवति—एकः पाक इति, पूर्वयोश्चापि योगयोः—द्वौ पाकौ, त्रयः पाकाः, चत्वारः पाकाः, पञ्च पाकाः, दश पाका इति ।**

**परिहृतमेतत्—नैतत् क्रियागणनम् ।**

**किं तर्हि ?**

**द्रव्यगणनमेतत् । कृदभिहितो भावो द्रव्यवद्भवतीति ।**

**ननु चोक्तमिहापि तर्हि द्रव्यगणनान्न प्राप्नोति—सकृद्भुक्त्वा, सकृद्भोक्तुमिति—पूर्वयोश्चापि योगयोः-द्विर्भुक्त्वा-द्विर्भोक्तुम्, त्रिर्भुक्त्वा-त्रिर्भोक्तुम्, पञ्चकृत्वो भुक्त्वा-पञ्चकृत्वो भोक्तुम्, दशकृत्वो भुक्त्वा-दशकृत्वो भोक्तुमिति—द्रव्यगणनान्न प्राप्नोतीति ।**

**नैष दोषः ।**

**क्रियागणनाद्भविष्यति ।**

**कथम् ?**

**कृदभिहितो भावो द्रव्यवदपि क्रियावदपि यद्यपि ॥**

**( प्रदीपः ) द्रव्यवदपीति ।** यथा द्रव्यं लिङ्गसंख्यासाधनैः संबध्यते तथा घञाद्यभिहितो भाव इत्यर्थः । अव्ययकृदभिहितस्तु भावो लिङ्गसंख्यासाधनसंबन्धाभावात् साध्यस्वभाव एव प्रतीयते न तु सिद्धस्वभाव इति क्रियावदेवासौ भवति न तु द्रव्यवदिति तत्र क्रियाभ्यावृत्तिसद्भावाद्भवत्येव प्रत्ययः । अविप्रतिपत्तिविषयाख्यातवाच्यक्रियापेक्षश्च 'क्रियावत्' इत्यतिदेशः । पूर्वसूत्रे संख्याग्रहणमनियतविशेषवाचिभूर्यादिनिवृत्त्यर्थम् । ते हि बहुगणशब्दाभ्यां नियमार्थाभ्यां संख्याप्रदेशेषु निषिद्धग्रहणाः ॥

अभ्यावृत्तिग्रहणं किमर्थम् ? पञ्चपाका इत्यत्र क्रियामात्रगणने मा भूत् । अभ्यावृत्तिग्रहणे च क्रियमाणे क्रियाग्रहणात् क्रियाया विशेषो गृह्यते नान्यथा । तदेवं यदैकस्या एव क्रियाया जन्मलक्षणाः प्रवृत्तयो गण्यन्ते तदा कृत्वसुजादयो भवन्ति नान्यदा । यदि तर्हि घञाद्यन्तप्रयोगे कृत्वसुजादयो न भवन्ति कथं 'द्विरावृत्तिः' 'द्विः प्रयोगो द्विर्वचनम्' इत्यादयः प्रयोगाः ? 'द्विर्वचनेऽचि' इति ज्ञापकात् क्वचित् घञाद्यन्तप्रयोगेऽपि कृत्वोऽर्थप्रत्ययो भवतीत्यदोषः । गणनग्रहणं यत्र साक्षादभ्यावृत्तिगणनं तत्र प्रत्ययार्थम्, अन्यथा क्रियाभ्यावृत्तावित्युच्यमाने सप्तदशप्राजापत्यानजांस्तूपरानेकवर्णानालभेतेत्यत्राप्यालम्भनक्रियाया आभिमुख्येन प्रवृत्तिसंभवात् साधनभेदसामर्थ्यप्रतिपन्नभेदालम्भनक्रियाभ्यावृत्तिविषये साधनगणनवाचिनोऽपि सप्तदशशब्दात् प्रत्ययः स्यात् । इह 'पञ्चकृत्वः पाकः' इत्यादौ करोत्यादिक्रियापेक्षः प्रत्ययः । यथा 'पञ्चकृत्वः पटो रक्तः' इति ॥

**( उद्द्योतः )** एतदजानान एकदेश्याह—**यदपीत्यादिना क्रियावदित्यन्तेन** । 'द्वौ पाकौ' इत्यादौ न जन्मगणने द्व्यादीनां वृत्तिः, तथा सति 'पाकौ' इत्यादौ द्विवचनाद्यनापत्तिरिति तत्त्वम् ॥ 'द्रव्यवदपि क्रियावदपि' इति भाष्यं-लक्ष्यभेदेन व्यवस्थितमित्याह—**यथेति ॥ साधनैरिति** । साधनपदेन शक्तिः ॥ ननु तस्यापि क्रियात्वे 'क्रियावत्' इति वतिरनुपपन्नोऽत आह—**अविप्रतिपत्तीति । द्रव्यवदिति**—वतिरप्येवम् ॥ ननु गणने वृत्तिः सङ्ख्याशब्दानामेवेति पूर्वत्र सङ्ख्याग्रहणं व्यर्थमत आह—**पूर्वसूत्रे इति ॥ अनियतविशेषवाचीति** । अनियतसङ्ख्याविशेषवाचीत्यर्थः ॥ **निषिद्धग्रहणा इति** । वस्तुतस्तेषां सङ्ख्यात्वमेव नेत्युक्तं बहुगणेति सूत्रे ॥

**अभ्यावृत्तिग्रहणं किमर्थमिति** । सङ्ख्यायाः क्रियागणन इत्युक्तावपि निवृत्तभेदायाः क्रियायाः स्वरूपेण गणनासम्भवादभ्यावृत्तिद्वारकगणन एव भविष्यतीति किं तेनेति प्रश्नः ॥ **क्रियाविशेष इति** । स चोक्तरूपः ॥ **यदैकस्या एवेति** । एतेन 'पञ्चकृत्वः पच्यते' इत्यादौ जन्मभेदेन क्रियाभेदाद्बहुवचनं स्यादित्यपास्तम्, जन्मभेदेऽपि क्रियाया एकत्वेनैव प्रतीतेः, शब्दशक्तिस्वभावेन जन्मगतसंख्यायास्तत्रानारोपात् ॥ **क्वचिदिति** । तेन 'सिद्धान्वाख्यानमेव' इति सूचितम् । एतेन 'साध्यस्वभावैव यत्र क्रिया' इत्यादिग्रन्थस्य प्रागुक्तस्यायुक्तत्वं सूचितं स्वयमेवेति दिक् ॥ ननु गणनग्रहणं व्यर्थं, यावता सङ्ख्या गणनात्मिकैव । न च 'शतं वारान् भुङ्क्ते' इत्यादौ प्रत्ययव्यावृत्त्यर्थं वारशब्देनाभ्यावृत्तेरुक्तत्वेन सङ्ख्याशब्दस्य तद्वृत्तित्वाभावादत आह—**गणनग्रहणमिति ॥ सप्तदश प्राजापत्यानिति** । अभिमुखी प्रवृत्तिः-जन्म ॥ **साधनभेदेति** । तद्भेदेन सामर्थ्यादर्थतो न तु शब्दतः प्रतिपन्नो भेदो यया तादृशी या-आलम्भनक्रिया तदभ्यावृत्तिविषये इत्यर्थः । शब्दतस्तदभ्यावृत्त्यप्रतीतावप्यर्थतस्तत्प्रतीतिरस्त्येवेति तत्रापि कृत्वसुजादिप्रसङ्ग इति भावः । न चालम्भनक्रियायाः प्रतिपशु वस्तुतोऽभ्यावृत्तिसत्त्वेऽपि सप्तदशपदस्य न तद्वृत्तित्वमिति वाच्यम्, तदभावेऽभ्यावृत्तिविषये सङ्ख्यावाचकात्प्रत्यय इत्येवार्थः स्यादिति तद्भावात् । एवञ्च 'शतं वारान् भुङ्क्ते' इत्यपि प्रत्युदाहरणं बोध्यम् । **केचित्तु** व्याख्यानतः 'अभ्यावृत्तिरूपसङ्ख्यायां वर्तमानात्सङ्ख्यावाचकात्प्रत्ययः' इत्यर्थेन न प्रागुक्ता दोषाः । तस्माद्गणनायां ये प्रसिद्धाः सङ्ख्यावाचकास्तद्ग्रहणार्थम् । तेन उभशब्दात् युग्मशब्दाच्च न कृत्वसुच्, न ह्येक उभौ त्रय इति लोके गण्यत इत्याहुः ॥

ज्ञापकस्य सुज्विषयत्वादाह—**इह पञ्चेति ॥ पटो रक्त इति** । क्रियत इति शेषः ॥

( १००६ विधिसूत्रम् ॥ ५ । ४ । १ आ. ९ )

## २३०१ देवतान्तात्तादर्थ्ये यत् ॥ ५ । ४ । २४ ॥

( यतोऽधिकरणम् )

( देवताशब्दस्य जातिवाचित्वे दोषभाष्यम् )

**देवतान्तादित्युच्यते तत्रेदं न सिद्ध्यति—पितृदेवत्यमिति ।**

**किं कारणम् ?**

**न हि पितरो देवता ॥**

**( प्रदीपः ) न हि पितर इति ।** देवताशब्दस्य जातिविशेषवाचित्वाद्भिन्नजातीयाभिधायिना सामानाधिकरण्याभावात्

समासाभावात्प्रकृतिरेव नास्ति कुतः प्रत्यय इत्यर्थः ॥ **दिवेरिति** । क्रियाशब्दो देवताशब्दो न तु जातिवाचीत्यर्थः ॥

( उद्योतः ) ननु पितॄणामपि श्राद्धादौ देवतात्वमस्त्येवेत्यत आह—**देवताशब्दस्येति** ॥ **क्रियाशब्द इति** । तेन त्यज्यमानहविरुद्देश्यत्वं, मन्त्रस्तुत्यत्वञ्च देवतात्वमिति भावः ॥

( देवताशब्दस्य क्रियावाचित्वमाश्रित्य दोषभावबोधकंभाष्यम् )

**नैष दोषः । दिवेरैश्वर्यकर्मणो देवः, तस्मात्स्वार्थे तल् । एवं च कृत्वा देवदेवत्यमपि सिद्धं भवति ॥**

( प्रदीपः ) **देवदेवत्यमिति** । जातिशब्दत्वे तु देवताशब्दस्य द्वयोः पर्यायत्वाद्युगपत्प्रयोगो न स्यात् ॥

( उद्योतः ) **द्वयोः**—देवदेवताशब्दयोः ॥

( १००७ विधिसूत्रम् ॥ ५ । ३ । १ आ. १० )

## २३०४ देवात्तल् ॥ ५ । ४ । २७ ॥

( तलोऽधिकरणम् )

( ५९०६ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ तलि स्त्रीलिङ्गवचनम् ॥ * ॥

**( भाष्यम् ) तलि स्त्रीलिङ्गं वक्तव्यम् । देवता । किं पुनः कारणं न सिद्ध्यति?**

**देवशब्दोऽयं पुंलिङ्गः स्वार्थिकश्चायम्, स्वार्थिकाश्च प्रकृतितो लिङ्गवचनान्यनुवर्तन्ते ॥**

( ५९०७ सिद्धान्तवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ उक्तं वा ॥ * ॥

**( भाष्यम् ) किमुक्तम्?**

**स्वार्थिका अतिवर्तन्तेऽपि लिङ्गवचनानीति ॥**

( १००८ विधिसूत्रम् ॥ ५ । ४ । १ आ. ११ )

## २३०७ लोहितान्मणौ ॥ ५ । ४ । ३० ॥

( कनोऽधिकरणम् )

( ५९०८ एकदेशिन उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ लोहिताल्लिङ्गबाधनं वा ॥ * ॥

**( भाष्यम् ) लोहिताल्लिङ्गबाधनं वेति वक्तव्यम् । लोहितिका, लोहिनिका ॥**

( प्रदीपः ) **लोहितादिति** । प्रतिपदविधेर्बलवत्वात् पूर्वमेव कन् स्यात् । तथा च 'लोहिनिका' इति न सिध्येदिति वचनं नित्ये लिङ्गार्थप्रत्ययबाधे प्राप्ते विकल्पार्थम् ॥

( उद्योतः ) ननु सुबन्तात्तद्धितोत्पत्तेः पूर्वं लिङ्गबोधकप्रत्यये ततः कनि लोहिनिकेति सिद्धम्, स्त्रीप्रत्ययस्य ङीपो वैकल्पिकत्वेन तदभावे 'लोहितका' इति च—इति किमर्थं वचनमत आह—**प्रतिपदेति** । यद्यपि 'लोहितकः' इत्यत्र चारितार्थ्यादिदमप्रयोजकं, तथाप्यर्थान्तराभावेन 'कुत्सिते' इति सूत्रोक्तन्यायाप्रवृत्त्या अस्मादेव वा वचनाज्ज्ञापकादल्पन्तस्वार्थिकानां सुबुत्पत्तेः प्राक् प्रातिपदिकादेवोत्पत्त्यङ्गीकारेण परत्वादन्तरङ्गत्वाच्च कना नित्यं स्त्रीप्रत्ययबाधनं प्राप्तमिति विकल्पेन तद्बाधबोधनार्थं वचनमावश्यकमिति तात्पर्यम् । एतज्ज्ञापकादेव चात्र ङ्याप्पदस्यासम्बन्धः । तेन 'घृतिका' इत्येवेति प्रपञ्चितं ङ्याप्सूत्रेऽस्माभिः ॥

( ५९०९ एकदेशिन उपसंख्यानवार्तिकम् ॥ २ ॥ )

### ॥ * ॥ अक्षरसमूहे छन्दस उपसंख्यानम् ॥ * ॥

**( भाष्यम् ) अक्षरसमूहे छन्दस उपसंख्यानं कर्तव्यम् । ओ श्रावयेति चतुरक्षरम् । अस्तु श्रौषडिति चतुरक्षरम् । ये यजामह इति पञ्चाक्षरम् । यजेति द्व्यक्षरम् । द्व्यक्षरो वषट्कारः । एष वै सप्तदशाक्षरश्छन्दस्यः प्रजापतिर्यज्ञमनुविहितः ॥**

( ५९१० एकदेशिन उपसंख्यानवार्तिकम् ॥ ३ ॥ )

### ॥ * ॥ छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् ॥ * ॥

**( भाष्यम् ) छन्दसि बहुभिर्वसव्यैरुपसंख्यानं कर्तव्यम् । हस्तौ पृणस्व बहुभिर्वसव्यैः ॥**

( उद्योतः ) (भाष्ये)—**बहुभिर्वसव्यैरिति** । इदं छन्दसि दृश्यमानयत्प्रत्ययान्तोपलक्षणम् ॥

( ५९११ एकदेशिन उपसंख्यानवार्तिकम् ॥ ४ ॥ )

### ॥ * ॥ अग्निरीशे वसव्यस्येति ॥ * ॥

**( भाष्यम् ) अग्निरीशे वसव्यस्येत्युपसंख्यानं कर्तव्यम् ॥**

( उद्योतः ) तद्धनयन्नुदाहरति—**ईशे वसव्यस्येति** ॥

( ५९१२ एकदेशिप्रत्याख्याने सिद्धान्तवार्तिकम् ॥ ५ ॥ )

### ॥ * ॥ उक्तं वा ॥ * ॥

**( भाष्यम् ) किमुक्तम्?**

***स्वार्थविज्ञानात्सिद्धम्* इति । अपस्यो वसानाः । अपो वसानाः ॥ स्व ओक्ये । स्व ओके ॥ कव्योऽसि हव्यसूदन । कविरसि ॥ रौद्रेणानीकेन कव्यतायै । कवितायै ॥ आमुष्यायणस्य । अमुष्यपुत्रस्य ॥ क्षेम्यस्येशे । क्षेमस्येशे ॥ क्षेम्यमध्यवस्यति । क्षेममध्यवस्यति ॥ आयुर्वर्चस्यम् । वर्च एव वर्चस्यम् ॥ निष्कैवल्यम् । निष्केवलम् ॥ उक्थ्यम् । उक्थम् ॥ जन्यं ताभिः सजन्यं ताभिः । जनं ताभिः सजनं ताभिः ॥ स्तोमैर्जनयामि नव्यम् । नवम् ॥ प्रणो नव्येभिः । नवैः ॥ ब्रह्म पूर्व्यम् । पाथः पूर्व्यम् । तनुषु पूर्व्यम् । पूर्वम् ॥ पूर्व्याहः । पूर्वाहः ॥ पूर्व्या विशः । पूर्वा विशः ॥ पूर्व्यासः । पूर्वासः ॥ स प्र पूर्व्यः । स प्र पूर्वः ॥ अग्निं वः पूर्व्यम् । पूर्वम् ॥ तं जुषस्व यविष्ठ्य । यविष्ठ ॥ होत्रवाहं यविष्ठ्यम् । यविष्ठम् ॥**

त्वं ह यद्यविष्ठ्य । यविष्ठ ॥ समावद्वसति समावद्गृह्णाति । समं वसति समं गृह्णाति ॥ समावद्देवयज्ञे हस्तौ । समम् ॥ समावद्वीर्यावद्यानि । समानि ॥ समावद्वीर्याणि करोति । समानि ॥ य ईवत उ लोकम् । य ईवते ब्रह्मणे । य ईयते ॥

( प्रदीपः ) स्वार्थविज्ञानात् सिद्धमिति । 'वसोः समूहे च' इत्यत्रोक्तम् ॥ अपस्यो वसाना इति । अप्शब्दाद् द्वितीयाबहुवचनान्तात् यत् प्रत्ययो विभक्तेश्चालुक् ॥

( उद्योतः ) तदेतद्वचनद्वयम्—'अक्षरसमूहे च्छन्दसः' इति 'छन्दसि बहुभिर्वसव्यैः' इति च प्रत्याचष्टे—उक्तं चेति ॥ क्वोक्तं तत्राह—वसोः समूहे चेति । अस्यार्थः—यथा छन्दस्यन्यत्रापि स्वार्थिकाः प्रत्ययाः 'यत्' 'य' 'आ' 'वत्' आदयो दृश्यन्ते, यथा वा 'ईवतः' इत्यादौ दीर्घः, तथाऽत्रापि स्वार्थिकस्तत एव सिद्ध इतीदं वचनं व्यर्थमिति । तदेव ध्वनयन् प्रयोगान्दर्शयति—अपस्यो वसाना इति । यत्तु कैयटेन चतुर्थशेषे 'स्वार्थविज्ञानात्' इत्यस्य 'वसोरिति योगविभागात्स्वार्थे भविष्यति' इति व्याख्यानं कृतं; तच्चिन्त्यम्, तावताऽपि 'अपस्य' इत्याद्यसिद्धेः ॥ विभक्तेश्चालुगिति । छान्दसत्वादिति भावः । अत एव यदन्तात्प्रथमैकवचनं पुंलिङ्गता च ॥

केचित्तु—'वसोः' इति योगविभागेन स्वार्थिकयता 'वसव्यैः' इति 'वसव्यस्य' इति च सिद्धम्, वार्तिके 'बहुभिर्वसव्यैः' इति वसुशब्दस्यैवोपलक्षणम् । स्वार्थविज्ञानादित्यस्य कैयटोक्तैव व्याख्या । अपस्य इत्याद्यर्थं च वार्तिकान्यारभ्याण्येव' इति व्याचख्युः । तन्मते गौरवं स्पष्टमेव, भाष्ये तत्साधकवचनानुक्तेरुदाहरणमात्रोपन्यासाच्च । 'आमुष्यायणस्यामुष्यपुत्रस्य क्षेम्यस्येशे' इति वाक्ये 'क्षेम्यस्य' इत्युदाहरणम् । आमुष्यायणाऽऽमुष्यपुत्रयोरलुक् 'आमुष्यायण—' इत्यादिवार्तिकात्, मनोज्ञादिपाठाच्च । अत्र क्षेम्ये यप्रत्ययः, अन्तोदात्तस्येष्टत्वात् । अन्यथा 'यतोऽनावः' इत्याद्युदात्तत्वं स्यात् ॥ समावदिति । समशब्दात्स्वार्थे वतुप्, छान्दसत्वाद्दीर्घः । तदपि छन्दस्यन्यत्रावश्यकमित्याह—य ईवत इति ॥

( ५९१३ उपसंख्यानवार्तिकम् ॥ ६ ॥ )

**॥ * ॥ नवस्य नू त्नप्तनखाश्च ॥ * ॥**

( भाष्यम् ) नवस्य नू इत्ययमादेशो वक्तव्यः, त्नप्तनखाश्च प्रत्यया वक्तव्याः । नूत्नं, नूतनं, नवीनम् ॥

( ५९१४ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

**॥ * ॥ नश्च पुराणे प्रात् ॥ * ॥**

( भाष्यम् ) नश्च पुराणे प्राद् वक्तव्यः । त्नप्तनखाश्च प्रत्यया वक्तव्याः । प्रणम्, प्रत्नम्, प्रतनम्, प्रीणम् ॥

---

( १००९ विधिसूत्रम् ॥ ५ । ४ । १ आ. १२ )

## २३१२ तद्युक्तात्कर्मणोऽण् ॥५।४।३६॥

( अणोऽधिकरणम् )

( तत्पदार्थप्रकाशकभाष्यम् )

तदित्यनेन किं प्रतिनिर्दिश्यते ? वागेव । यदेव वाचा व्याह्रियते तत्कर्मणा क्रियते ॥

( प्रदीपः ) यदेव वाचेति । 'इदं त्वया कर्तव्यम्' इति संदेशवाचं श्रुत्वा यत् कर्म क्रियते तत्कार्मणमित्यर्थः ॥

( उद्योतः ) इदं त्वयेति । 'यदेव वाचा व्याह्रियते' इति भाष्यस्य-सन्देशद्वारा प्राप्यत इत्यक्षरार्थः । एवं च व्याहृतार्था वाक् तच्छब्देन परामृश्यत इति भावः । परन्त्विदं वागेवेति भाष्यस्यैवकारविरुद्धम् । व्याह्रियत इत्यस्य कथ्यत इत्येवार्थ उचितः, अन्यथा 'वाचो व्याहृतार्थायाम्' इत्यस्यैव प्रक्रान्तत्वात्प्रश्नस्योत्तरस्यैवकारस्य चासङ्गतेरित्यन्ये । वार्तिके सान्नाय्यग्रहणमन्तोदात्तार्थम्, रूपं तु 'पाय्यसान्नाय्य—' इत्येव सिद्धम् ॥

( ५९१५ उपसंख्यानवार्तिकम् ॥ १ ॥ )

**॥ * ॥ अण्प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दसि ॥ * ॥**

( भाष्यम् ) अण्प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दस्युपसंख्यानं कर्तव्यम् । कौलालः । वारुडः । नैषादः । चाण्डालः । आमित्रः ॥

( ५९१६ उपसंख्यानवार्तिकम् ॥ २ ॥ )

**॥ * ॥ भागरूपनामभ्यो धेयः ॥ * ॥**

( भाष्यम् ) भागरूपनामभ्यो धेयो वक्तव्यः । भागधेयम् । रूपधेयम् । नामधेयम् ॥

( ५९१७ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ मित्राच्छन्दसि ॥ * ॥**

( भाष्यम् ) मित्राच्छन्दसि धेयो वक्तव्यः । मित्रधेये यतस्व ॥

( ५९१८ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

**॥ * ॥ अणमित्राच्च ॥ * ॥**

( भाष्यम् ) अणमित्राच्चेति वक्तव्यम् । मैत्रः । आमित्रः ॥

( सान्नाय्यादीनां निपातनभाष्यम् )

सान्नाय्यानुजावरानुषूकचातुष्प्राश्यराक्षोघ्नवैयातवैकृतवारिवस्कृताग्रायणाग्रहायणसान्तपनानि निपात्यन्ते । सान्नाय्यम् । आनुजावरः । आनुषूकः । चातुष्प्राश्यः । राक्षोघ्नः । वैयातः । वैकृतः । वारिवस्कृतः । आग्रायणः । आग्रहायणः । सान्तपनः ॥

( उद्योतः ) अनुजावर इति । अत एव निपातनात्समासः ॥ चातुष्प्राश्यम्—आधाने ब्रह्मौदनस्य नाम ॥ आग्रायणं—कर्मविशेषः ॥

( ५९१९ उपसंख्यानवार्तिकम् ॥ ५ ॥ )

**॥ * ॥ आग्नीध्रसाधारणादञ् ॥ * ॥**

( भाष्यम् ) आग्नीध्रसाधारणादञ् वक्तव्यः । आग्नीध्रम्, साधारणम् ॥

( ५९२० उपसंख्यानवार्तिकम् ॥ ६ ॥ )

॥ * ॥ अयवसमरुद्भ्यां छन्दसि ॥ * ॥

( भाष्यम् ) अयवसमरुद्भ्यां छन्दस्यञ्वक्तव्यः । आयवसे वर्धन्ते । मारुतं शर्धः ॥

( ५९२१ उपसंख्यानवार्तिकम् ॥ ७ ॥ )

॥ * ॥ नवसूरमर्तयविष्ठेभ्यो यत् ॥ * ॥

( भाष्यम् ) नवसूरमर्तयविष्ठेभ्यो यद्वक्तव्यः । नव्यः । सूर्यः । मर्त्यः । यविष्ठ्यः ॥

( ५९२२ उपसंख्यानवार्तिकम् ॥ ८ ॥ )

॥ * ॥ क्षेमाद्यः ॥ * ॥

( भाष्यम् ) क्षेमाद्यो वक्तव्यः । क्षेम्यस्तिष्ठन् प्रतरणः सुवीरः ॥

( १०१० विधिसूत्रम् ॥ ५ । ४ । १ आ. १३ )

## २३१९ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ॥ ५ । ४ । ४२ ॥

( शसोऽधिकरणम् )

( ५९२३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ॥ * ॥

( भाष्यम् ) बह्वल्पार्थान्मङ्गलामङ्गलवचनं कर्तव्यम् । बहुशो देहि । अनिष्टेषु श्राद्धादिषु मा भूत्, इष्टेषु प्राशित्रादिषु यथा स्यात् । अल्पशो देहि । इष्टेषु प्राशित्रादिषु मा भूत्, अनिष्टेषु श्राद्धादिषु यथा स्यात् ॥

( उद्द्योतः ) अनिष्टेष्विति । अनिष्टश्राद्धादिदानेषु विषये बहूनि श्राद्धादिदानानि देहीत्यर्थे 'बहुशो देहि' इति मा भूत् ॥ प्राशित्रम्—पुरोडाशादीनि, तत्साध्यकर्मविषयदानानि बहूनि देहीत्यर्थे यथा स्यादित्यर्थः । एवमग्रेऽपि ॥

( १०११ विधिसूत्रम् ॥ ५ । ४ । १ आ. १४ )

## २३२१ प्रतियोगे पञ्चम्यास्तसिः ॥ ५ । ४ । ४४ ॥

( तसिप्रत्ययाधिकरणम् )

( ५९२४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ तसिप्रकरण आद्यादिभ्य उपसंख्यानम् ॥ * ॥

( भाष्यम् ) तसिप्रकरण आद्यादिभ्य उपसंख्यानं कर्तव्यम् । आदितः । अध्यतः । अन्ततः ॥

( १०१२ विधिसूत्रम् ॥ ५ । ४ । १ आ. १५ )

## २३२७ कृभ्वस्तियोगे संपद्यकर्तरि च्विः ॥ ५ । ४ । ५० ॥

( च्विप्रत्ययाधिकरणम् )

( ५९२५ सूत्रपूरकवार्तिकम् ॥ १ ॥ )

॥*॥ च्विविधावभूततद्भावग्रहणम् ॥*॥

( भाष्यम् ) च्विविधावभूततद्भावग्रहणं कर्तव्यम् । इह मा भूत्—संपद्यन्ते यवाः, संपद्यन्ते शालय इति ॥

( प्रदीपः ) च्विविधाविति । अभूततद्भावग्रहणं वार्तिके दृष्ट्वाऽन्यैः सूत्रे प्रक्षिप्तम् ॥

( वार्तिकावतरणभाष्यम् )

अथ क्रियमाणेऽपि वै अभूततद्भावग्रहण इह कस्मान्न भवति—संपद्यन्तेऽस्मिन् क्षेत्रे शालय इति ?

( प्रदीपः ) संपद्यन्ते अस्मिन्निति । अभूत्वा भवन्ति संपद्यकर्तारश्चेति च्विप्रसङ्गः । एतच्चोपलक्षणम्, कृभ्वस्तियोगाभावादत्र च्वेरप्रसङ्गात् । तस्मादिदमुदाहरणम्—भवन्त्यस्मिन् क्षेत्रे शालय इति ॥

( उद्द्योतः ) एतच्चोपलक्षणमिति । संपद्यन्ते यवा इत्यप्येवम् । भवन्ति यवा इत्युदाहरणं बोध्यम् । 'संपद्यकर्तरि' इत्यत्रासादेव निपातनात्कर्तरि पाघ्रादित्वाभावेऽपि शः । दिवादित्वाच्छ्यन् ॥ संपद्यमाने—स्वाद्यर्थकर्तरीत्यर्थः । कर्मधारयः समासः ॥

( ५९२६ सूत्रांशपूरकवार्तिकम् ॥ २ ॥ )

॥ * ॥ प्रकृतिविवक्षाग्रहणं च ॥ * ॥

( भाष्यम् ) प्रकृतिविवक्षाग्रहणं च कर्तव्यम् ॥

( प्रदीपः ) प्रकृतिविवक्षाग्रहणं चेति । तेनात्र प्रकृतेरविवक्षितत्वात् च्वेरभावः । यदा तु प्रकृतिरेव विकारात्मतामापद्यमाना विकारभेदेन भवनक्रियायां कर्त्री विवक्ष्यते तदा च्विप्रत्ययः—'अङ्कुरीभवन्ति यवाः' इति । अत्राभूततद्भाव एव प्रकृतिविवक्षाग्रहणेन व्याख्यात इत्याहुः । येन रूपेण प्रागभूतं कारणं तेन रूपेण तस्य भावोऽभूततद्भाव इत्याश्रयणादतिप्रसङ्गाभावः । संपद्यकर्तृत्वादेवाभूततद्भावे लब्धे पुनस्तदुपादानाद्यथोक्तविशेषलाभः, अथ वा जन्मग्रहणे कर्तव्येऽभूततद्भावग्रहणाद्यथोक्तार्थपरिग्रहः । विकारशब्दाच्च प्रकृतिविकारभेदविवक्षायां प्रकृतौ विकारावस्थां प्राप्नुवत्यां वर्तमानात् स्वार्थे च्विप्रत्ययः ॥

( उद्द्योतः ) प्रकृतिविवक्षेति । प्रकृतेरुपादानकारणस्यान्यरूपेण विवक्षेत्यर्थः ॥ प्रकृतेरविवक्षितत्वादिति । प्रकृतेरन्यरूपेणाविवक्षितत्वादित्यर्थः । तदाह—यदा त्विति । 'विकाराभेदेन' इति पाठ उचितो 'विकारात्मना संपद्यमान–' इत्यस्य व्याख्यारूपत्वात् । 'विकारभेदेन' इति पाठे तु—भेदघटितसाहश्येनेत्यर्थः । अनेन विकार-

१ 'विकारात्मना सम्पद्यमाना' इति च पाठः ॥

शब्दस्य स्वसदृशप्रकृतिपरत्वं गौण्या वृत्त्येति सूचितम् । अत एव 'ओत्' सूत्रे, 'आन्महतः—' इति सूत्रे च 'गोऽभवत्' 'महद्भूतः' इत्यादौ प्रगृह्यसंज्ञा-आत्वं च गौणमुख्यन्यायेन वारितम् ॥ भाष्ये—अभेदेनेति । सादृश्यमूलकाभेदेनेति व्याख्येयम् ॥ तेन रूपेण तस्य भाव इति । अत एव विकृतिवाचकादेव प्रत्यय इत्याहुः ।

नन्वजातस्य जन्म भाव इत्येव शब्दात्प्रतीयत इति कथं तत इयदर्थलाभोऽत आह—संपद्येति ॥ नन्वाधिक्यरूपेऽर्थेऽपि संपत्तिरित्यादौ संपदेः प्रयोगदर्शनान्न नियमेनोक्तार्थलाभस्ततोऽत आह—अथ वा जन्मेति ॥ प्रकृतिविकारभेदविवक्षायामिति । तद्धटितसादृश्यविवक्षायामित्यर्थः । 'अभेद' इति पाठे—सादृश्यमूलकाभेदविवक्षायामित्यर्थः । विकारावस्थां प्राप्नुवत्यां प्रकृतौ वर्तमानादित्यन्वयः । गौण्या वृत्त्येति भावः । एवं च च्व्यन्ते प्रकृतेरेव कर्तृत्वमित्युक्तं भवति । 'अह्नीभूतः' इत्यादि तु च्छान्दसम् । 'कारणीभूतः' इत्यादि त्वसाध्वेवेति बोध्यम् ॥

( ५९२७ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

**॥ * ॥ समीपादिभ्य उपसंख्यानम् ॥ * ॥**

**( भाष्यम् ) समीपादिभ्य उपसंख्यानं कर्तव्यम् । समीपीभवति । अभ्याशीभवति । अन्तिकीभवति ॥**

( प्रदीपः ) **समीपादिभ्य इति** । प्रकृतिविकारभावाभावान्न प्राप्नोतीति वचनम् ॥

( 'समीपादिभ्यः' इति वार्तिकप्रत्याख्यानभाष्यम् )

**किं पुनः कारणं न सिध्यति ?**

**न ह्यसमीपं समीपं भवति ।**

**किं तर्हि ?**

**असमीपस्थं समीपस्थं भवति ॥**

**तत्तर्हि वक्तव्यम् ?**

**न वक्तव्यम् । तात्स्थ्यात्ताच्छब्द्यं भविष्यति ॥**

( प्रदीपः ) **तात्स्थ्यादिति** । असमीपस्थस्य तस्य समीपस्थत्वभावात्सिद्धः सूत्रेण प्रत्यय इत्यर्थः ॥

( उद्योतः ) **समीपस्थत्वभावादिति** । समीपस्थत्वसादृश्यभावादित्यर्थः । मुख्यसमीपस्थत्वे तु नेष्यते प्रत्यय इति भावः ॥

( १०१३ विधिसूत्रम् ॥ ५ । ४ । १ आ. १६ )

## २३३४ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ॥ ५ । ४ । ५७ ॥

( डाचोऽधिकरणम् )

( चित्करणप्रयोजनभाष्यम् )

**किमर्थश्चकारः ?**

**स्वरार्थः । चितोऽन्त उदात्तो भवतीत्यन्तोदात्तत्वं यथा स्यात् ॥**

( चित्करणस्य निष्फलत्वद्योतकभाष्यम् )

**नैतदस्ति प्रयोजनम् । एकाजयं तत्र नार्थः स्वरार्थेन चकारेणानुबन्धेन । प्रत्ययस्वरेणैव सिद्धम् ॥**

**अत उत्तरं पठति—**

( ५९२८ चित्करणप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ डाचि चित्करणं विशेषणार्थम् ॥ * ॥**

**( भाष्यम् ) डाचि चित्करणं क्रियते विशेषणार्थम् ।**

**क विशेषणार्थेनार्थः ?**

**'लोहितादिडाज्भ्यः क्यष्' ३।१।१३ इति । 'डा' इति ह्युच्यमान इडा अतोऽपि प्रसज्येत ।**

**अर्थवद्ग्रहणे नानर्थकस्येतीत्येवमेतस्य न भविष्यति ।**

**इदं तर्हि प्राप्नोति—नाभा पृथिव्या निहितो दविद्युतत् । तस्माच्चकारः कर्तव्यः ॥**

( उद्योतः ) भाष्ये—**इत्येवमेतस्येति** । 'सूत्रे ग्रहणम्' इति शेषः ॥ **इदं तर्हि नाभा पृथिव्या इति** । अत्र ङेर्डादेशे 'नाभा' इति, तदनुकरणे पटपटायतीत्यादाविव नाभा इति भवतीत्यर्थे क्यषो वारणायेति भावः ॥

( १०१४ विधिसूत्रम् ॥ ५ । ४ । १ आ. १७ )

## २३४४ मद्रात् परिवापणे ॥ ५।४।६७ ॥

( उपसंख्यानभाष्यम् )

**भद्राच्चेति वक्तव्यम् । भद्राकरोति ॥**

( १०१५ अधिकारसूत्रम् ॥ ५ । ४ । १ आ. १८ )

## २३४५ समासान्ताः ॥ ५ । ४ । ६८ ॥

( अधिकाराधिकरणम् )

( अन्तग्रहणप्रयोजनभाष्यम् )

**अन्तग्रहणं किमर्थम् ?**

**अन्तो यथा स्यात् ।**

**नैतदस्ति प्रयोजनम् । प्रत्ययपरत्वेनाप्येतत्सिद्धम् ॥**

**इदं तर्हि प्रयोजनम्—तद्ग्रहणेन ग्रहणं यथा स्यात् ।**

**कानि पुनस्तद्ग्रहणस्य प्रयोजनानि ?**

( प्रदीपः ) **अन्तग्रहणमिति** । समीपवचनमन्तशब्दं मत्वा प्रश्नः ॥ अवयववचनाश्रयेणोत्तरमाह—**अन्तो यथा स्यादिति** ॥ इतरोऽगृहीताभिप्राय आह—**नैतदस्तीति** । इतरोऽभिप्रायं प्रकाशयन्नाह—**इदं तर्हीति** ॥

( ५९२९ तद्ग्रहणप्रयोजनवार्तिकम् ॥ १ ॥ )

**॥ * ॥ प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः ॥ * ॥**

**( भाष्यम् ) अव्ययीभावः प्रयोजनम् । प्रति-**

१ 'इद तर्हि' इति छ. पाठः ॥

राजम्, उपराजम् । अव्ययीभावश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात् ।

नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ।

इदं तर्हि प्रयोजनम्—"नाव्ययीभावादतोऽम्त्वपञ्चम्याः" (२।४।८३) इत्येष विधिर्यथा स्यात् । अव्ययीभाव ॥

द्विगु । द्विगुसंज्ञा च प्रयोजनम् । पञ्चगवम्, दशगवम् । द्विगुश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात् ।

नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ।

इदं तर्हि प्रयोजनम्—द्विपुरी, त्रिपुरी-द्विगोरकारान्तादिति ईकारो यथा स्यात् ।

एतदपि नास्ति प्रयोजनम् ।

पुरशब्दोऽयमकारान्तस्तेन समासो भविष्यति । आतश्चाकारान्तः ।

एवं ह्याह—

**क्षेमे सुभिक्षे कृतसञ्चयानि**
**पुराणि राज्ञां विनयन्ति कोपम् । इति ॥**

इदं तर्हि प्रयोजनम्—द्विधुरी, त्रिधुरी-द्विगोरकारान्तादिति ङीब् यथा स्यात् । द्विगु ॥

द्वन्द्व । द्वन्द्वसंज्ञा च प्रयोजनम् । वाक्त्वचम्, स्रक्त्वचम् । द्वन्द्वश्च समासो नपुंसकलिङ्गो भवतीति नपुंसकलिङ्गता यथा स्यात् ।

नैतदस्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥

इदं तर्हि प्रयोजनम्—कोशश्च निषच्च कोशनिषदम्—कोशनिषदिनी "द्वन्द्वोपतापगर्ह्यात् प्राणिस्थादिनिः" (५।२।१२८) इतीनिर्यथा स्यात् । द्वन्द्व ॥

तत्पुरुष । तत्पुरुषसंज्ञा च प्रयोजनम् । परमधुरा, उत्तमधुरा-"परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" (२।४।२६) इति परवल्लिङ्गता यथा स्यात् ।

नैतदस्ति प्रयोजनम् । उत्तरपदार्थप्रधानस्तत्पुरुषः ॥

इदं तर्हि प्रयोजनम्—अर्धधुरा ।

एतदपि नास्ति प्रयोजनम् । लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य ॥

इदं तर्हि—निर्धुरः । अव्ययं तत्पुरुषे प्रकृतिस्वरं भवतीत्येष स्वरो यथा स्यात् । तत्पुरुष ॥

बहुव्रीहि । बहुव्रीहिसंज्ञा च प्रयोजनम् । उच्चधुरः, नीचधुरः । बहुव्रीहौ प्रकृत्या पूर्वपदं भवतीत्येष स्वरो यथा स्यात् ॥

( उद्योतः ) भाष्ये—पुरशब्दोऽयमकारान्त इति । 'ऋक्पूर्–' इति सूत्रे पूर्ग्रहणं च न कार्यम् । तेन च न समासः, अनभिधानादिति भावः ॥ द्विधुरी त्रिधुरीति । न चाकारान्तोत्तरपदत्वाभावात् कथं क्लीवत्वम् । लिङ्गस्य लोकाश्रयत्वेनादोषात् । लिङ्गप्रकरणं तूदाहरणमात्रं, न नियम इति बोध्यम् । अत एव 'द्विनावमर्धखारम्'इत्यादौ परवल्लिङ्गशास्त्रसत्त्वेऽपि नपुंसकत्वं दृश्यते । यत्तु द्विधुरीत्यादौ वाचनिकक्लीवत्वाभावेऽपि धूःशब्दस्य स्वाभाविकक्लीवत्वात्परवल्लिङ्गताभिप्रायमिदं भाष्यमिति तन्न, तस्य 'स नपुंसकम्' इत्यनेन बाधादित्याहुः ॥ द्वन्द्वेति । अत्र च 'अतः' इति वर्तत इति भावः ॥ भाष्ये—निर्धुर इति । न चात्र समासावयवत्वेऽपि परत्वात्पूर्वं पूर्वपदप्रकृतिस्वरे ततः समासान्ते सति शिष्टत्वात्समासान्तस्वरस्यैवावास्थितिरिति वाच्यं, समासान्तानां समासात्प्रागलौकिकवाक्ये प्रवृत्त्याऽन्तरङ्गत्वात् । तत्र समासानवयवत्वे पूर्वपदप्रकृतिस्वरप्रयुक्तनिघातस्योत्तरपद एव प्रवृत्तिः स्यात्, न तु समासान्ताकारस्यापीति स्वरद्वयश्रवणप्राप्तिर्दोषः ॥ इत्येष इत्यस्य—एष एवेत्यर्थः । ननु 'यावतः पदत्वं भावि तावति सन्निहिताञ्मात्रस्य निघातः' इति सिद्धान्तात्तस्याऽपि निघातः सुपपाद इति वाच्यं, 'तत्पुरुष' इत्यादि श्रुत्या तत्संज्ञप्रकृतिकसुबन्तपदस्यैव ग्रहणात् । यद्यपि प्रकृते न तस्य पदत्वं कदाचिदपि, तथापि पदत्वयोग्यमित्यर्थो भविष्यति । न चैवमपि समासान्ते तत्प्रयुक्तनिघाते च पूर्वपदस्योदात्तस्वरितयोगित्वाभावात् कथं पूर्वपदप्रकृतिस्वरप्राप्तिरिति वाच्यं, इचश्चित्त्वेन समासान्तविधौ 'आद्युदात्तश्च' इत्यस्यासंबन्धज्ञापनेनादोषात् । अस्वरकस्यैवाकारस्य श्रवणं स्यादिति च दोष इति दिक् ॥

( १०१६ निषेधसूत्रम् ॥ ५ । ४ । १ आ. १९ )

## २३४६ न पूजनात् ॥ ५ । ४ । ६९ ॥

( निषेधाधिकरणम् )

( सूत्रार्थोपपादकभाष्यम् )

इदं विप्रतिषिद्धम् ।

को विप्रतिषेधः ?

परिगणिताभ्यः प्रकृतिभ्यः समासान्तो विधीयते, न च तत्र काचित् पूजनान्ता प्रकृतिर्निर्दिश्यते ॥

नैतद्विप्रतिषिद्धम् । नैवं विज्ञायते याभ्यः प्रकृतिभ्यः समासान्तो विधीयते न चेत्ताः पूजनान्ता भवन्तीति ।

कथं तर्हि ?

न चेत्ताः पूजनात्परा भवन्तीति ॥

( उद्योतः ) न चेत्ताः पूजनात्परा इति । पूजनात्परो यः शब्दस्तदन्ता इत्यर्थः ॥

( ५९३० उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ पूजायां स्वतिग्रहणम् ॥ * ॥

( भाष्यम् ) पूजायां स्वतिग्रहणं कर्तव्यम् । सुराजा, अतिराजा ।

क मा भूत्?

परमगवः, उत्तमगवः ॥

( ५९३१ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ प्राग्बहुव्रीहिग्रहणं च ॥ * ॥

( भाष्यम् ) प्राग् बहुव्रीहिग्रहणं च कर्तव्यम् ।

इह मा भूत्—स्वक्षः, अत्यक्ष इति ॥

(उद्द्योतः) प्राग्बहुव्रीहिग्रहणमिति । 'बहुव्रीहौ संख्येये-' इत्यतः प्राक् समासान्तविधेरभावात् 'बहुव्रीहौ सक्थ्यक्ष्णोः-' इत्यतः प्रागित्यर्थः ॥

( १०१७ निषेधसूत्रम् ॥ ५ । ४ । १ आ. १९ )

## २३४७ किमः क्षेपे ॥ ५ । ४ । ७० ॥

( क्षेपेग्रहणानर्थक्यबोधकभाष्यम् )

क्षेप इति किमर्थम्?

कस्य राजा किंराजः ॥

क्षेप इति शक्यमकर्तुम् ।

कस्मान्न भवति—कस्य राजा किंराज इति?

लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैवेति ॥

( १०१८ विधिसूत्रम् ॥ ५ । ४ । १ आ. २० )

## २३५० बहुव्रीहौ संख्येये डजबहुगणात् ॥ ५ । ४ । ७३ ॥

( समासान्ताधिकरणम् )

( ५९३२ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् ॥ * ॥

( भाष्यम् ) डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं कर्तव्यम् ।

किं प्रयोजनम्?

निस्त्रिंशाद्यर्थम् । निस्त्रिंशानि वर्षाणि, निश्चत्वारिंशानि वर्षाणि ॥

( उद्द्योतः ) संख्यायास्तत्पुरुषस्येति । सङ्ख्यान्तस्य तत्पुरुषस्य समासान्तो डजित्यर्थः ॥ निस्त्रिंशाद्यर्थमित्यादिशब्दः प्रकारे, तेन यत्र डित्वफलसंभावना तत्रैवेदम् । तेन 'अतिद्विः'इत्यत्र न ॥

( ५९३३ सूत्रपर्युदासवार्तिकम् ॥ २ ॥ )

॥ * ॥ अन्यत्राधिकलोपात् ॥ * ॥

( भाष्यम् ) अन्यत्राधिकलोपादिति वक्तव्यम् ।

इह मा भूत्—एकाधिका विंशतिरेकविंशतिः । द्व्यधिका विंशतिर्द्वाविंशतिः ।



( उपसंख्यानभाष्यम् )

अव्ययादेरिति च वक्तव्यम् ।

इह मा भूत्—गोत्रिंशत्, गोचत्वारिंशदिति ।

तत्तर्हि वक्तव्यम् ।

यद्यप्येतदुच्यते, अथ वै तर्हि—अन्यत्राधिकलोपादित्येतन्न क्रियते ॥

(उद्द्योतः) भाष्ये—तत्तर्हीति । 'अव्ययादेः'इत्येतदित्यर्थः ॥ अथ वै तर्हीति–एवं तर्हीत्यर्थकं, तथापीत्यर्थकं वा । अत्र—अन्यत्राधिकलोपादित्येतदेकविंशतिरित्यादौ तत्पुरुषस्वीकर्तृवार्तिकनये । तत्र 'द्वन्द्व एव'इति भाष्यमते तु तदनावश्यकमेवेत्याहुः ॥

( १०१९ विधिसूत्रम् ॥ ५ । ४ । १ आ. २१ )

## २३५१ ऋक्पूरब्धूःपथामानक्षे ॥ ५ । ४ । ७४ ॥

( 'अनक्षे' इत्यत्र पक्षद्वयेऽपि दोषोपपादकभाष्यम् )

अनक्ष इति कथमिदं विज्ञायते-न चेदक्षधूरन्तः समास इति, आहोस्विन्न चेदक्षः समासार्थ इति ।

किं चातः?

यदि विज्ञायते—न चेदक्षधूरन्तः समास इति । सिद्धमक्षस्य धूः—अक्षधूरिति ।

इदं तु न सिध्यति—दृढधूरयमक्षः ।

अस्तु तर्हि—न चेदक्षः समासार्थ इति ।

सिद्धं दृढधूरक्ष इति ।

इदं तु न सिध्यति—अक्षस्य धूः—अक्षधूरिति ।

( प्रदीपः ) कथमिदमिति । यद्यक्ष इति स्वरूपग्रहणम्—अक्षे पूर्वपदे धूरन्तात्समासान्तो न भवति–इति तदा 'न चेदक्षधूरन्तः समासः' इत्ययं पक्षो भवति, यदा त्वक्ष इत्यर्थग्रहणं तदा 'न चेदक्षः समासार्थः' इत्ययं पक्षः । उभयथा च दोषप्रसङ्ग इति प्रश्नः । 'अक्षधूरन्तः' इत्यस्यायमर्थः–अक्षशब्दस्य यः समीपे धूःशब्दस्तदन्तः समास इति ॥

( उद्द्योतः ) सन्देहोपपत्तये पक्षद्वयबीजं दर्शयति—यद्यक्ष इति । 'अक्षधूरन्तः' इति भाष्यस्यार्थमाह—अक्षशब्दस्य समीपे इति । इदमर्थकथनम्, न तु विग्रहः, समीपपदार्थान्वयेऽसामर्थ्यात्समासाप्राप्तेः । तस्मात्समीपेऽवयवत्वारोपेण समासः ॥ समीपे इति । आरोपबीजकथनम् । अक्षपूर्वपदको धूरन्त इति मध्यमपदलोपी समासो वा ॥

( 'अनक्षे' पदार्थबोधकभाष्यम् )

एवं तर्हि नैवं विज्ञायते—न चेदक्षधूरन्तः समास इति, नापि—न चेदक्षः समासार्थ इति ।

कथं तर्हि?

न चेदक्षस्य धूरिति । एवं च कृत्वा नापि न चेदक्षधूरन्तःसमास इति विज्ञायते, नापि न चेदक्षः समासार्थ इति—अथ चोभयोर्न भवति ॥

( प्रदीपः ) न चेदक्षस्य धूरिति । अक्षस्य धूरपेक्षयाऽधिकरणत्वादनक्ष इत्यधिकरणसप्तमी । चक्रसंबद्धः काष्ठविशेषः शकटावयवोऽक्षः ॥

( उद्द्योतः ) भाष्ये–न चेदक्षस्येति । अधिकरणत्वाविवक्षायां तन्मूलकावयवावयविभावसंबन्धविवक्षया षष्ठी ॥

( १०२० विधिसूत्रम् ॥ ५ । ४ । १ आ. २२ )

## २३५३ अक्ष्णोऽदर्शनात् ॥ ५।४।७६ ॥

( 'अदर्शनात्' इत्यस्य निष्फलत्वबोधकभाष्यम् )

अदर्शनादित्युच्यते तत्रेदं न सिध्यति—कवराक्षम्[1] ।

अदर्शनादिति शक्यमकर्तुम् ।

कथं—ब्राह्मणाक्षि, क्षत्रियाक्षि ?

अप्राण्यङ्गादिति वक्तव्यम् ॥

(प्रदीपः) 'अदर्शनात्' इति वचनादक्षीवाक्षीत्यक्षिसदृशार्थवृत्तिरिहाक्षिशब्द उपात्तः । लवणाक्षमित्याद्युदाहरणम् । दर्शनवाचित्वे तु ब्राह्मणाक्षीत्यादौ समासान्ताभावः ॥ कवराक्षमिति । अश्वानां बहुच्छिद्रकं मुखावरणमुच्यते । तेनाश्वाः पश्यन्तीति दर्शनत्वात्समासान्ताप्रसङ्गः । एवं गवाक्षेऽपि ॥ अप्राण्यङ्गादिति । तेन गवाक्षकबराक्षे सिध्यतः ॥

(उद्द्योतः) नन्वक्षिशब्दस्य दर्शनबोधकत्वात् 'अक्ष्णोऽदर्शनात्' इत्ययुक्तमत आह–अदर्शनादिति वचनादिति ॥ लवणाक्षमिति । लवणमक्षीवेति विग्रहः ॥ अप्राण्यङ्गादितीति । सूत्रस्थदर्शनशब्दो व्याख्यानेन चक्षुःपर्याय इति भावः ॥

( १०२१ विधिसूत्रम् ॥ ५ । ४ । १ आ. २३ )

## २३५४ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ॥ ५ । ४ । ७७ ॥

( सूत्रघटकपदोपपादकभाष्यम् )

आद्यास्त्रयो बहुव्रीहयः—अद्रष्टा चतुर्णामचतुरः, विद्रष्टा चतुर्णां विचतुरः, सुद्रष्टा चतुर्णां सुचतुरः ॥

ततः परे एकादश द्वन्द्वाः—स्त्रीपुंस, धेन्वनडुह, ऋक्साम, वाङ्मनस, अक्षिभ्रुव, दारगव, ऊर्वष्ठीव, पदष्ठीव, नक्तन्दिव, रात्रिन्दिव, अहर्दिव ॥

ततोऽव्ययीभावः—सह रजसा सरजसम् ॥

ततस्तत्पुरुषः—निश्चितं श्रेयो निःश्रेयसम् ॥

ततः षष्ठीसमासः—पुरुषस्यायुः पुरुषायुषम् ॥

ततो द्विगू-द्वे आयुषी द्व्यायुषम्, त्रीण्यायूंषि त्र्यायुषम् ॥

ततो द्वन्द्वः—ऋक् च यजुश्च ऋग्यजुषम् ॥

जातादय उक्षान्ताः समानाधिकरणाः—जात उक्षा जातोक्षः, महानुक्षा महोक्षः, वृद्ध उक्षा वृद्धोक्षः ॥

ततोऽव्ययीभावः—शुनः समीपमुपशुनम् ॥

ततः सप्तमीसमासः—गोष्ठे श्वा गोष्ठश्वः ॥

( प्रदीपः ) अद्रष्टा चतुर्णामिति । अर्थप्रदर्शनमेतत्, अदृश्यानि चत्वार्यस्येति अन्यपदार्थबहुव्रीहय आद्यास्त्रयः कर्तव्याः ॥

( उद्द्योतः ) अद्रष्टा चतुर्णामित्यर्थे बहुव्रीह्यसंभवादाह—अर्थप्रदर्शनमिति । अहर्दिवेत्यत्राऽस्मादेव निपातनाद्द्वन्द्वः ॥ त्रिचतुरा इत्यत्र 'सङ्ख्ययाऽव्यया–'इति बहुव्रीहौ डजपवादोऽच् ॥

( ५९३४ उपसंख्यानवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् ॥ * ॥

( भाष्यम् ) चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानं कर्तव्यम् । त्रिचतुराः, उपचतुराः ॥

( १०२२ विधिसूत्रम् ॥ ५ । ४ । १ आ. २४ )

## २३५५ ब्रह्महस्तिभ्यां वर्चसः ॥ ५ । ४ । ७८ ॥

( उपसंख्यानभाष्यम् )

पल्यराजभ्यां चेति वक्तव्यम् । पल्यवर्चसम्, राजवर्चसम् ॥

( १०२३ विधिसूत्रम् ॥ ५ । ४ । १ आ. २५ )

## २३६४ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ॥ ५ । ४ । ८७ ॥

( ५९३५ अहर्ग्रहणे विशेषार्थबोधकवार्तिकम् ॥ १ ॥ )

### ॥ * ॥ अहर्ग्रहणं द्वन्द्वार्थम् ॥ * ॥

( भाष्यम् ) अहर्ग्रहणं द्वन्द्वार्थं द्रष्टव्यम् ॥

1 'कम्बराक्षम्' इति ख. ज. पाठः ॥

किमुच्यते द्वन्द्वार्थमिति, न पुनस्तत्पुरुषार्थमपि स्यात्?

तत्पुरुषाभावात्। न हि रात्र्यन्तोऽहरादिस्तत्पुरुषोऽस्ति ॥

(उद्द्योतः) भाष्ये—न हीति। अन्यतरस्य गौणत्वेन प्रकारान्तरेण वा संभवेऽपि न तथा प्रयोगोऽस्तीति भावः ॥

(१०२४ विधिसूत्रम् ॥ ५।४।१ आ. २६)

## २३६५ अह्नोऽह्न एतेभ्यः ॥ ५।४।८८ ॥

(५९३६ सूत्रानर्थक्यबोधकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ अह्नोऽह्नवचनानर्थक्यं चाहष्टखोर्नियमवचनात् ॥ * ॥

(भाष्यम्) अह्नोऽह्नवचनमनर्थकम्।

किं कारणम्?

अहष्टखोर्नियमवचनात्। "अहष्टखोरेव" (६।४।१४५) इत्येतन्नियमार्थं भविष्यति ॥

(प्रदीपः) अह्नोऽह्नवचनानर्थक्यमिति। 'अह्न एतेभ्यः' इत्येतावत् सूत्रमज्विधानार्थं कर्तव्यम्, टजचोरत्र विशेषाभावात्। 'रात्राह्नाहाः पुंसि'इति वचनात् स्त्रियां वृत्त्यभावात् तत्राहष्टखोरेवेति नियमाट्टिलोपाभावादल्लोपेन पूर्वाह्णादयः सिद्धा इति नार्थोऽह्नादेशविधानेनेत्यर्थः ॥

(उद्द्योतः) स्त्रियां वृत्त्यभावादिति। अयं भावः—यद्यपि 'द्वयोरह्नोर्भवाः' इत्यर्थे सङ्ख्यापूर्वस्य स्त्रीत्वसंभवः। 'रात्राह्नाहाः—' इत्यस्य रात्राह्नशब्दघटितसमासमात्रार्थनिमित्तलिङ्गस्यान्तरङ्गस्य सार्वत्रिकस्य च बाधेनोपपत्तौ बहिर्भूततद्धितार्थनिमित्तलिङ्गबाधकत्वे मानाभावात्, तथाऽपि तत्र ङीबभाव एव, उपसर्जनत्वात्। 'पुण्याहम्'इत्यत्र 'उत्तमैकाभ्याञ्च'इति निषेधाद्विशेषाऽभाव एव, पुण्यसुदिनाभ्यामह्नः क्लीबत्वस्य सत्त्वाच्च। सर्वैकदेशसङ्ख्याताऽव्ययपूर्वपदस्य तु 'रात्राह्नाहाः'—इति वचनात्स्त्रीत्वमेव नास्तीति केचित्। अन्ये त्वेवं सत्युपस्थितरात्राह्नाहशब्दार्थविशेष्यत्वप्राप्तलिङ्गस्यैव बाधः स्यान्न तु बहिर्भूतसमाहारविशेष्यत्वप्राप्तस्य—इति, अत्रान्तरङ्गन्यायाप्रासिरेव—इति, तद्धितार्थेद्विगुरपि न स्त्रीलिङ्ग इति कैयटाशयमाहुः। परे तु सूत्रमतेऽप्यस्य टजपवादाऽजह्नादेशोभयविधायकत्वमेव, 'समासान्ताः' इत्यनुवृत्तस्य विभक्तिविपरिणामे मानाऽभावात्, नियमासरणमूलकं सूत्रमित्युभयोरावश्यकम्। अच्प्रकरणासरणमूलकत्वञ्चाधिकं त्वया कल्प्यम्। 'टजचोः'इत्यादि कैयटस्तु स्वरूपनिरूपणपर इत्याहुः ॥

(१०२५ विधिसूत्रम् ॥ ५।४।१ आ. २७)

## २३८० अनसन्तान्नपुंसकाच्छन्दसि ॥ ५।४।१०३ ॥

(विकल्पोपसंख्यानभाष्यम्)

अनसन्तान्नपुंसकाच्छन्दसि वेति वक्तव्यम्। ब्रह्मसामम्, ब्रह्मसाम। देवच्छन्दसम्, देवच्छन्दः ॥

(१०२६ विधिसूत्रम् ॥ ५।४।१ आ. २८)

## २३९० बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ॥ ५।४।११३ ॥

(षचाक्षेपभाष्यम्)

किमर्थं षच् प्रत्ययान्तरं विधीयते, न टच्प्रकृतः सोऽनुवर्तिष्यते ॥

अत उत्तरं पठति—

(उद्द्योतः) भाष्ये—न टच्प्रकृत इति। टचि चित्त्वादन्तोदात्तत्वे ङीप्यप्युदात्तनिवृत्तिस्वरेणान्तोदात्तत्वं भविष्यतीति भावः ॥

(५९३७ षच्करणस्य सार्थक्यबोधकवार्तिकम् ॥ १ ॥)

### ॥ * ॥ षचि प्रत्ययान्तरकरणमनन्तोदात्तार्थम् ॥ * ॥

(भाष्यम्) षचि प्रत्ययान्तरं क्रियते।

किं प्रयोजनम्?

अनन्तोदात्तार्थम्। अनन्तोदात्ताः प्रयोजयन्ति—चक्रसक्थम्, चक्रसक्थी ॥

(प्रदीपः) अनन्तोदात्तार्थमिति। 'सक्थं चाक्रान्तात्' इति विभाषाऽन्तोदात्तत्वं विधीयते। तत्रान्तोदात्तान् ङीब्ङीषोर्नास्ति विशेषः, ङीप उदात्तनिवृत्तिस्वरेणान्तोदात्तत्वात्। यदा तु पूर्वपदप्रकृतिस्वरेणानुदात्तत्वं तदा ङीषि सतीकारस्योदात्तत्वं भवति, ङीपि तु सत्यनुदात्त ईकारः स्यादित्यर्थः ॥ चक्रसक्थीति। अयुक्तोऽयं पाठः, अत्र ह्यक्रान्तादिति विकल्पनिषेधाच्चित्वान्नित्येनान्तोदात्तत्वेन भाव्यम्। तस्मात् 'गौरसक्थी'इत्यन्तोदात्तत्वाभावपक्ष उदाहार्यः ॥

(उद्द्योतः) ननु टजन्तो नित्यान्तोदात्त इत्यनन्तोदात्तार्थं इत्ययुक्तमत आह—सक्थञ्चेति। कृतसमासान्तः सक्थशब्दोऽन्तोदात्तो वा भवति चक्रशब्दान्तात्परश्चेन्न भवतीत्यर्थः ॥ गौरसक्थीति। 'चक्रसक्थी' इति भाष्ये पाठः। 'वञ्चु प्रलम्भने' इत्यस्य निष्ठायां रूपमित्यन्ये ॥

(१०२७ विधिसूत्रम् ॥ ५।४।१ आ. २९)

## २३९२ द्वित्रिभ्यां ष मूर्ध्नः ॥ ५।४।११५ ॥

(षप्रत्ययाक्षेपभाष्यम्)

किमर्थं मूर्ध्नः षः प्रत्ययान्तरं क्रियते न षच्प्रकृतः सोऽनुवर्तिष्यते ॥

( ५९३८ षप्रत्ययस्य फलबोधकं वार्तिकम् ॥ १ ॥ )

॥ * ॥ मूर्ध्नश्च षवचनम् ॥ * ॥

( भाष्यम् ) किम् ?

अनन्तोदात्तार्थमित्येव । द्विमूर्धः, त्रिमूर्धः ॥

( प्रदीपः ) द्विमूर्ध इति । यद्यत्र षच् स्यात् तदा चित्वाच्चित्स्वमन्तोदात्तत्वं स्यात् । 'द्वित्रिभ्यां पाद्न्मूर्द्धसु बहुव्रीहौ' इति तु विभाषाऽन्तोदात्तत्वं यदा समासान्तविधेरनित्यत्वाद् द्विमूर्द्धेति समासान्ताभावस्तदा सावकाशम् । षे तु सति समासान्तपक्षेऽपि पक्षेऽन्तोदात्तत्वम्, पक्षे पूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वमिति स्वरद्वयसिद्धिः ॥

( उद्द्योतः ) तदा चित्त्वादिति । चित्त्वसामर्थ्येन चित्स्वरस्य पूर्वपदप्रकृतिस्वरबाधकत्वादिति भावः ॥ ननु 'द्वित्रिभ्यां पाद्न्'इति विकल्पः सामर्थ्याच्चित्स्वरस्य बाधकः स्यादत आह—द्वित्रिभ्यामिति ॥ अनित्यत्वादिति । अत्र चेदमेव षविधानं ज्ञापकमिति भावः ॥ षे तु सतीति । न च तदा मूर्धन्शब्दोत्तरपदकबहुव्रीहेरभावः, समासान्तानां समासावयवत्वेन तदक्षतेः ॥

( १०२८ विधिसूत्रम् ॥ ५ । ४ । १ आ. ३० )

## २३९३ अप्पूरणीप्रमाण्योः ॥५।४।११६॥

( ५९३९ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ अपि प्रधानपूरणीग्रहणम् ॥ * ॥

( भाष्यम् ) अपि प्रधानपूरणीग्रहणं कर्तव्यम् । प्रधानं या पूरणीति वक्तव्यम् । इह मा भूत्—कल्याणी पञ्चमी अस्य पक्षस्य कल्याणपञ्चमीकः पक्षः ॥

अथेह कथं भवितव्यम्—कल्याणी पञ्चमी यासां रात्रीणामिति ?

कल्याणीपञ्चमा रात्रय इति भवितव्यम् । रात्रयोऽत्र प्रधानम् ॥

( प्रदीपः ) कल्याणपञ्चमीकः पक्ष इति । अत्र वर्तिपदार्थ एव पूरणी न त्वन्यपदार्थः, पक्षस्य तिरोहितावयवभेदस्यान्यपदार्थत्वात् । यथा वृक्ष इत्यस्य शब्दस्यावयव्यभिधेयो न तु शाखादयोऽवयवाः, अनुमीयमानत्वाशब्दार्थत्वादित्यप्राधान्यं पूरण्याः ॥

कल्याणीपञ्चमा इति । अत्रावयवेन विग्रहः समुदाय उद्भूतावयवभेदः समासार्थ इति रात्रिषु पञ्चम्या अन्तर्भावादन्यपदार्थत्वात् प्राधान्यं पूरण्याः ॥

( उद्द्योतः ) ननु पक्षस्य पञ्चदशतिथ्यात्मकत्वेन पूरण्यपि प्रधानमेवेत्यत आह—पक्षस्येति ॥ अवयवेन—तद्बोधकेन । विग्रहः—वर्तिपदार्थबोधनम् । तद्बोधनस्यैव विग्रहफलत्वात् ॥

( ५९४० उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ नेतुर्नक्षत्रे उपसंख्यानम् ॥ * ॥

( भाष्यम् ) नेतुर्नक्षत्रे उपसंख्यानं कर्तव्यम् । पुष्यनेत्राः, मृगनेत्राः ॥

( ५९४१ उपसंख्यानवार्तिकम् ॥ ३ ॥ )

॥ * ॥ छन्दसि च ॥ * ॥

( भाष्यम् ) छन्दसि च नेतुरुपसंख्यानं कर्तव्यम् । बृहस्पतिनेत्राः, सोमनेत्राः ॥

( ५९४२ उपसंख्यानवार्तिकम् ॥ ४ ॥ )

॥ * ॥ मासात् भृतिप्रत्ययपूर्वपदाट्ठज्विधिः ॥ * ॥

( भाष्यम् ) मासात् भृतिप्रत्ययपूर्वपदात् ठच् विधेयः, पञ्चकमासिकः, षट्कमासिकः, दशकमासिकः ॥

( प्रदीपः ) पञ्चकमासिक इति । पञ्च भृतिरस्य मासस्य पञ्चको मासः । 'सोऽस्यांशवस्नभृतयः' इति संख्यायाः कन् । पञ्चको मासोऽस्येति बहुव्रीहौ कृते स्वार्थे ठच् ॥

( १०२९ विधिसूत्रम् ॥ ५ । ४ । १ आ. ३१ )

## २३९५ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ॥ ५ । ४ । ११८ ॥

( उपसंख्यानभाष्यम् )

खरखुराभ्यां च नस् वक्तव्यः । खरणाः, खुरणाः ।

शितिना अर्चना अहिना इति नैगमाः । शितिनाः, अर्चनाः, अहिनाः ॥

( प्रदीपः ) खरखुराभ्यामिति । आदेशप्रत्यययोः प्रसङ्गे केवलादेशविधानार्थं वचनम् ॥

( १०३० विधिसूत्रम् ॥ ५ । ४ । १ आ. ३२ )

## २३९६ उपसर्गाच्च ॥ ५ । ४ । ११९ ॥

( उपसंख्यानभाष्यम् )

वेर्ग्रो वक्तव्यः । विग्रः ।

(प्रदीपः) विग्र इति । विगता नासिका यस्य स विग्रः ॥

( उपसंख्यानभाष्यम् )

( ख्यश्च वक्तव्यः । विख्यः ॥ )[1]

1 ङ. पुस्तके नैतद्दृश्यते ॥

( १०३१ विधिसूत्रम् ॥ ५ । ४ । १ आ. ३३ )

## २४०८ ऊधसोऽनङ् ॥ ५ । ४ । १३१ ॥

( ५९४३ उपसंख्यानवार्तिकम् ॥ १ ॥ )

॥ * ॥ ऊधसोऽनङि स्त्रीग्रहणम् ॥ * ॥

( भाष्यम् ) ऊधसोऽनङि स्त्रीग्रहणं कर्तव्यम् । इह मा भूत्—महोधाः पर्जन्य इति ॥

---

( १०३२ नियमसूत्रम् ॥ ५ । ४ । १ आ. ३४ )

## २४१२ गन्धस्येदुत्पूतिसुसुरभिभ्यः ॥ ५ । ४ । १३५ ॥

( ५९४४ उपसंख्यानवार्तिकम् ॥ २ ॥ )

॥ * ॥ गन्धस्येत्त्वे तदेकान्तग्रहणम् ॥ * ॥

( भाष्यम् ) गन्धस्येत्त्वे तदेकान्तग्रहणं कर्तव्यम् । इह मा भूत्—शोभना गन्धा अस्य सुगन्ध आपणिक इति ॥

अथानुलिप्ते कथं भवितव्यम् ?

यदि तावद्यदनुगतं तदभिसमीक्षितम् 'सुगन्धिः' इति भवितव्यम् । अथ यत्प्रविशीर्णम् 'सुगन्धः' इति भवितव्यम् ॥

( प्रदीपः ) गन्धशब्दोऽस्ति द्रव्यवाची—गन्धान् पिनष्टीति । अस्ति च गुणवाची—चन्दनगन्ध इति । तत्र गुणवाचिग्रहणार्थमाह—**गन्धस्येत्त्व इति** । रूपादिसमुदायात्मकस्य द्रव्यस्य गन्धलक्षणो गुण एकान्तो भवति । रूपादिव्यतिरिक्तावयविद्रव्यवादिपक्षे त्वेकान्त इवैकान्तः, तत्स्थस्योपलम्भादित्याश्रीयते ॥ **यदनुगतमिति** । अनुगतं निलीनमविभागापन्नं कुङ्कुमादिर्यदा देवदत्तादेर्भवति तदा तत्स्थत्वाद्गन्धस्यैकान्तत्वादित्वं भवति ॥ **प्रविशीर्णमिति** । विभागेनावस्थितं देवदत्तादेः पृथगुपलभ्यमित्यर्थः ॥

( उद्योतः ) नन्वेकान्तशब्देनावयव उच्यते, गुणश्च कथमवयवोऽत आह—**रूपादीति** । 'अयुतसिद्धावयवानुगतस्तत्समूहो द्रव्यम्' इति पतञ्जलेर्मतम् ॥ न्यायनये आह—**रूपादिव्यतिरिक्तेति** ॥ **तत्स्थस्येति** । ततो भेदेनागृह्यमाणस्येत्यर्थः । तत्स्थत्वात्ततो भेदेनागृह्यमाणत्वात् ॥

---

( १०३३ विधिसूत्रम् ॥ ५ । ४ । १ आ. ३५ )

## २४३१ शेषाद्विभाषा ॥ ५।४।१५४ ॥

( शेषपदार्थबोधकभाष्यम् )

शेषादित्युच्यते कः शेषो नाम ?

याभ्यः प्रकृतिभ्यः समासान्तो न विधीयते स शेषः ॥

( प्रदीपः ) **कः शेष इति** । अनेकस्योपयुक्तत्वात्किमपेक्षः शेष आश्रीयत इति प्रश्नः ॥ इतरः सामान्येनाह—**याभ्य इति** । समासान्तविशेषस्तु न प्रदर्शितः ॥

( उद्योतः ) **किमपेक्ष इति** । किं कबपेक्षः, उत समासान्तमात्रापेक्षः, उतानन्तरबहुव्रीह्यधिकारापेक्ष इत्यर्थः ॥ **सामान्येनेति** । समासान्तमात्रापेक्षत्वेनेत्यर्थः ॥ **न प्रदर्शित इति** । अग्रे तु वक्ष्यति ॥

( शेषपदस्य फलबोधकभाष्यम् )

किमर्थं पुनः शेषग्रहणं क्रियते ?

याभ्यः प्रकृतिभ्यः समासान्तो विधीयते ताभ्यः कब्मा भूदिति ।

नैतदस्ति प्रयोजनम् ।

ये प्रतिपदं विधीयन्ते ते तत्र बाधका भविष्यन्ति ।

अनवकाशा हि विधयो बाधका भवन्ति सावकाशाश्च समासान्ताः ।

कोऽवकाशः ?

विभाषा कप् यदा न कप् सोऽवकाशः । कपः प्रसङ्गे उभयं प्राप्नोति । परत्वात्कप् प्राप्नोति । तस्माच्छेषग्रहणं कर्तव्यम् ॥

( प्रदीपः ) **किमर्थमिति** । सामान्येन विभाषा कब्विधीयताम् । तस्य विशेषे समासान्ता बाधका भविष्यन्तीति प्रश्नः ॥ **परत्वात्कप्प्राप्नोतीति** । उपदशा उपविंशा इत्यादिषु नित्यं डजादय इष्यन्ते ॥

( उद्योतः ) ननु शेषपदार्थप्रदर्शनेनैव फलमप्युक्तप्रायमिति 'किमर्थम्' इति प्रश्नोऽनुपपन्नोऽत आह—**सामान्येनेति** ॥ **उपदशा इत्यादि** । इदं चिन्त्यम् । अस्य बहुव्रीहेः शेषाधिकारस्थत्वाभावात् । स्पष्टश्चेदमुक्तं बहुव्रीहिप्रकरणे भाष्ये । स्वयञ्च 'स्वक्ष इत्यादौ नित्यं षजिष्यते' इति वक्तुमुचितम् ॥

( शेषग्रहणे पक्षद्वयोपपादकभाष्यम् )

किं पुनरिदं शेषग्रहणं कबपेक्षम्—यस्माद्बहुव्रीहेः कब्न विहित इति, आहोस्वित्समासान्तापेक्षम्—यस्माद् बहुव्रीहेः समासान्तो न विहित इति ?

किं चातः ?

(प्रदीपः) **किं पुनरिति** । पूर्वं 'याभ्यः प्रकृतिभ्यः' इति सामान्येनोक्तं ततो विशेषज्ञापनाय प्रश्नः । यद्यपि कबपेक्षे शेषत्वे शेषग्रहणमनर्थकमन्तरेणापि शेषग्रहणमशेषान्नित्यं कब्विधानसामर्थ्याद्विभाषितकप्प्रसङ्गाभावाच्छेषादेव कब्विकल्पविज्ञानात्, तथापि विचारमात्रं क्रियते ॥

( उद्योतः ) **विशेषज्ञापनायेति** । गुरुणा विशेषं ज्ञापयितुमित्यर्थः ॥

( प्रथमपक्षे दोषोपपादकभाष्यम् )

**यदि विज्ञायते—कबपेक्षम्,**

**अनृचः-बह्वृच इत्यत्रापि प्राप्नोति ॥**

( प्रदीपः ) **अनृच इति** । ऋगन्तात्कब्न विहित इति शेषत्वात्पक्षे परत्वात्कप्प्रसङ्गः । कबभावपक्षेऽस्त्वकारस्यावकाशः, समासान्तरं च ॥

( द्वितीयपक्षे दोषोपपादकभाष्यम् )

**अथ समासान्तापेक्षम्,**

**अनृक्कं साम-बह्वृक्कं सूक्तमिति न सिद्ध्यति ॥**

( उद्द्योतः ) भाष्ये-अथ **समासान्ताऽपेक्षमनृक्कमिति** । प्रियपथिकादेरुपलक्षणमिदम् ॥

( प्रथमपक्षे दोषान्तरोपपादकभाष्यम् )

**अस्तु कबपेक्षम् ।**

**कथमनृचो बह्वृच इति?**

**विशेष एतद् वक्तव्यम्—'अनृचो, माणवे बह्वृचश्चरणाख्यायाम्' इति ।**

**इदं तर्हि—ऊधसोऽनङि स्त्रीग्रहणं चोदितं तस्मिन् क्रियमाणेऽपि प्राप्नोति ॥**

( प्रदीपः ) **विशेष एतदिति** । तत एव विशेषविषयाद्वचनादत्र कब्न भविष्यतीत्यर्थः ॥ **तस्मिन् क्रियमाणेऽपीति** । अक्रियमाणे स्त्रीग्रहणे कुण्डोध्नीत्यत्र पक्षे परत्वात्कप्प्राप्नोति । क्रियमाणेऽपि स्त्रीग्रहणे तस्य नपुंसकनिवृत्त्यर्थत्वात् पक्षे परत्वात्कपः प्रसङ्ग एव । एतच्चोदाहरणमात्रम् । उपदशादिषु पक्षे कप्प्रसङ्गात् ॥

( उद्द्योतः ) ननु विशेषवचनसत्त्वेऽपि पक्षे कप्कुतो नेत्यत आह—**तत एवेति** । विनिगमनाविरहेण—'अनृचो माणवे एव' 'माणवेऽनृच एव' इत्युभयविधनियमाश्रयणादिति भावः । ऊधसोऽनङि दोष इत्युक्ते स्त्रीग्रहणेन पुनर्विधानार्थेन कपो बाध इति कश्चिद्भ्राम्येत्तो भाष्ये-स्त्रीग्रहणं चोदितम् ॥ 'तस्मिन्क्रियमाणेऽपि' इत्युक्ते, तत्र अपिशब्दार्थमाह—**अक्रियमाणे इति** । क्रियमाणे प्रागुक्तानुपपत्तिपरिहारायाह—**तस्य नपुंसकेति** । एवञ्च पुनर्विधाने मानाभाव इति भावः । उपदशा इत्यत्र दोषश्चिन्त्यः, शेषाधिकारस्थत्वाभावेन तत्र कपोऽप्राप्तेः ॥

( शेषग्रहणस्यापेक्ष्यनिर्धारकभाष्यम् )

**एवं तर्हि नैव कबपेक्षं शेषग्रहणम्, नापि समासान्तापेक्षम् ।**

**किन्तर्हि?**

**अनन्तरो यो बहुव्रीह्यधिकारः सोऽपेक्ष्यते । अनन्तरे बहुव्रीह्यधिकारे यस्माद् बहुव्रीहेः समासान्तो न विहित इति ।**

**कथमनृचः-बह्वृच इति?**

**वक्तव्यमेवैतत्—'अनृचो माणवे, बह्वृचश्चरणाख्यायाम्' इति ॥**

( प्रदीपः ) **नैव कबपेक्षमिति** । शेषग्रहणानर्थक्यप्रसङ्गात् । यस्माद्धि नित्यः कब्विहितस्तस्माद्विभाषा न प्राप्नोति, विरोधात्—इति पूर्वोक्तन्यायात् समासान्तापेक्षमपि न भवति, अनृक्कं बह्वृक्कमित्यत्र कपोऽप्रसङ्गात् ॥ **अनन्तरे बहुव्रीह्यधिकार इति** । एवं च 'ऊधसोऽनङ्' इत्यनन्तरे बहुव्रीह्यधिकारेऽनङो विधानात्कुण्डोध्नीत्यादौ स्त्रियां कब्न भवति ॥ **कथमनृच इति** । बहुव्रीह्यधिकारात्प्रागकारविधानाच्छेषत्वात्पक्षे कप्प्रसङ्गः ॥ **वक्तव्यमेवैतदिति** । यद्येवं समासान्तापेक्षेऽपि शेषत्वेऽनृचबह्वृचयोर्विशेषवचनादन्यत्रानृक्कबह्वृक्कयोः पक्षे कपः सिद्धत्वात्कस्यचिद्दोषस्याप्रसङ्गात्किमर्थमनन्तरबहुव्रीह्यधिकारापेक्षः शेष आश्रीयते । बहुव्रीह्यधिकाराच्च तत्पुरुषादिभ्य कपोऽप्रसङ्गः । किं चोपदशा इत्यादौ पक्षे कप्प्राप्नोति, अनन्तरे बहुव्रीह्यधिकारे डचो विधानात् । तथा प्रियपथः प्रियधुर इत्यत्रापि प्राप्नोति । तस्मात्समासान्तापेक्षमेव शेषत्वमाश्रयणीयमिति चिन्त्यमेतद्भाष्यम् ॥

( उद्द्योतः ) **आनर्थक्यप्रसङ्गादिति** । प्रागुक्तदोषाच्चेत्यपि बोध्यम् ॥ **अनन्तरे इति** । उपदशा इत्यादिबहुव्रीहेस्तु शेषाधिकारस्थत्वाभावान्न ततः कप्, अत एव 'दक्षिणपूर्वा' 'सपुत्रः' इत्यादौ न कबिति भावः ॥ **चिन्त्यमेतद्भाष्यमिति** । वस्तुतस्तु पूर्वोक्तपक्षोपमर्देनैवास्य भाष्यस्य प्रवृत्तेरनन्तरबहुव्रीह्यपेक्षया शेषग्रहणमेवोचितम् । 'प्रियः पन्था यस्य' इत्यर्थेऽपि प्रियपथिक इत्यादेः पक्षे सिद्धिरेव च प्रयोजनम्, भाष्यादिष्टत्वस्यैव लाभात् । 'समासान्ताः' इतिसूत्रस्थ 'उच्चधुरः' इति प्रयोगस्तु कबभावपक्षे बोध्यः । न च समाससामान्यापेक्षत्वेन 'ऋक्पूः—' इत्यादेरन्तरङ्गत्वात्कपं बाधित्वा तस्यैव प्रवृत्त्यापत्तौ कथं 'प्रियपथिकः' इष्ट इति वाच्यं, तस्यापि प्रकृतिविशेषापेक्षत्वेन समत्वात् । सामान्यापेक्षत्वेनान्तरङ्गत्वस्य भाष्ये क्वाप्यनाश्रयणाच्च । न च 'बहुव्रीहौ सक्थ्यक्ष्णोः—' इत्यतः पूर्वमेव कप्प्रकरणपाठेन विशेषविधिभिः परत्वाद्बाधेनैव सिद्धौ तदर्थकशेषग्रहणं व्यर्थमिति वाच्यम्, 'विभाषा श्यावा—' इत्यादिविषये पक्षे कबापत्तेः, मम त्वनुक्तसमासान्तबहुव्रीहित्वाभावान्न दोष इति सुधियो विचारयन्तु ॥

—————

( १०३४ विधिसूत्रम् ॥ ५ । ४ । १ आ. २६ )

## २४३३ ईयसश्च ॥ ५ । ४ । १५६ ॥

( ५९४५ पूर्वपक्षिवार्तिकम् ॥ १ ॥ )

**॥ * ॥ ईयस उपसर्जनदीर्घत्वं च ॥ * ॥**

( भाष्यम् ) **ईयस उपसर्जनदीर्घत्वं चेति वक्तव्यम् । बह्व्यः श्रेयस्योऽस्य बहुश्रेयसी, विद्यमानश्रेयसी ॥**

( प्रदीपः ) **उपसर्जनदीर्घत्वमिति** । ह्रस्वापवादो दीर्घत्वं विधेयम् ॥

( उद्द्योतः ) **ह्रस्वापवाद इति** । 'गोस्त्रियोः' इत्येतद्ध्रस्व-

त्यर्थः । अत एव वार्तिके उपसर्जनपदं चरितार्थम् । तेन हि उपसर्जनत्वप्रयुक्तं दीर्घविधानमिति लभ्यते । न चैवं वचनेन वचनप्रत्याख्यानमयुक्तं, नपुंसकह्रस्वप्रतिबन्धाय तदावश्यकमित्याशयात् । अत एव तत्र 'पुंवत्' इत्युक्तम् । अन्यथा 'न' इत्येव वदेदित्याहुः ॥

( ५९४६ पूर्वपक्षिवार्तिकम् ॥ १ ॥ )

॥ * ॥ पुंवद्वचनात्सिद्धम् ॥ * ॥

( भाष्यम् ) पुंवद्वचनात्सिद्धमेतत् । पुंवद्भावोऽत्र भवति—ईयसो बहुव्रीहौ पुंवद्वचनमिति ॥

इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरण-महाभाष्ये पञ्चमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

॥ पादश्च समाप्तः ॥

पञ्चमोऽध्यायः समाप्तः ॥

(प्रदीपः) पुंवद्वचनादिति । 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वः प्राप्त पुंवद्भावेन विनिवर्त्यते । यथा पुंविषयस्येकारस्य ह्रस्वो न भवति, एवमीयसः परस्य–इति श्रवणं भवति । बहुश्रेयसीत्यत्र हल्ङ्यादिलोपे विवदन्ते । केचिदाहुः–हल्ङ्यादिलोपेन न भाव्यम्, ङ्यापोः स्त्रीप्रत्यययोर्ग्रहणात्; स्त्रीप्रत्यये चानुपसर्जने तदादिनियमाभावादत्रोपसर्जनत्वान्ङीपस्तदादिनियमाद्धल्ङ्यादिलोपस्य प्रसङ्गाभावात् । अन्ये त्वाहुः–दीर्घग्रहणं तत्र ह्रस्वनिवृत्त्यर्थं कृतम्—अतिखट्व इत्यत्र लोपो मा भूदिति । यदि चोपसर्जने तदादिनियमः स्यात्तदा हल्ङ्यादिलोपस्य प्रसङ्गाभावात्तद्व्यावृत्तये दीर्घग्रहणं न कुर्यात्, कृतं तु यथेष्टमुपसर्जनादपि दीर्घाल्लोपं ज्ञापयतीति बहुश्रेयसीति सिद्धमिष्टम् ॥

इत्युपाध्यायजैय्यटपुत्रकैय्यटकृते भाष्यप्रदीपे पञ्चमस्याध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

( उद्योतः ) केचिदाहुरिति । अत्रारुचिबीजन्तु ङ्यावन्तान्तात्परत्वसत्त्वेन लोपप्रवृत्तेरक्षतत्वात् । अत एव दीर्घग्रहणं चरितार्थमित्याशयेनाह—अन्ये त्वाहुरिति ॥ लोपं ज्ञापयतीति । स्वादीनां प्रत्ययत्वेन ङ्यापोश्च प्रत्ययत्वेन द्वेधा यस्माद्विहितस्तदादेरुपस्थित्या तदन्तविधिद्वयेन पूर्वोक्तार्थज्ञापनद्वारेति भावः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्योते पञ्चमाध्यायस्य चतुर्थे पादे प्रथममाह्निकम् ॥

पादोऽध्यायश्च समाप्तः ॥

हरिदीक्षितपादाब्जसेवनावाप्तबुद्धिना ।
भट्टनागेशविदुषा कृतोऽयं संग्रहो मुदा ॥

| | अस्मिन् पादे सूत्रवार्तिकसंख्या । | | |
|---|---|---|---|
| | प्राक्तनयोगः | आह्निके १ | सर्वयोगः |
| व्याख्यातसूत्राणि | ९९७ | ३७ | १०३४ |
| अव्याख्यातसूत्राणि | १२८० | १२३ | १४०३ |
| समुदितसूत्राणि | २२७७ | १६० | २४३७ |
| वार्तिकानि | ५८९८ | ४८ | ५९४६ |

| | पञ्चमाध्यायस्थसूत्रवार्तिकसंख्या । | | | | |
|---|---|---|---|---|---|
| | प्रथमपादे | द्वितीयपादे | तृतीयपादे | चतुर्थपादे | समग्रेऽध्याये |
| आह्निकानि | २ | २ | २ | १ | ७ |
| व्याख्यातसूत्राणि | ६० | ६२ | ४९ | ३७ | २०८ |
| अव्याख्यातसूत्राणि | ७६ | ७८ | ७० | १२३ | ३४७ |
| समुदितसूत्राणि | १३६ | १४० | ११९ | १६० | ५५५ |
| वार्तिकानि | ११२ | ९७ | १०३ | ४८ | ३६० |



# चतुर्थपञ्चमाध्यायस्थसूत्रवार्तिकपाठः ।

## अथ चतुर्थोऽध्यायः ।

### प्रथमः पादः ।

१ ङ्याप्प्रातिपदिकात् ।

*ङ्याप्प्रातिपदिकग्रहणमङ्गभपदसंज्ञार्थम् ॥ १ ॥
*यच्छयोश्च लुगर्थम् ॥ २ ॥
*वृद्धावृद्धावर्णस्वरद्व्यज्लक्षणे च प्रत्ययविधौ तत्सम्प्रत्ययार्थम् ॥ ३ ॥
*ङ्याब्ग्रहणमनर्थकं प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणात् ॥ ४ ॥
*सर्वनामस्वरसमासतद्धितविधिलुगलुगर्थम् ॥ ५ ॥
*मानिनि च विधिप्रतिषेधार्थम् ॥ ६ ॥
*प्रत्ययग्रहणोपचारेषु च ॥ ७ ॥
*अतिप्रसङ्ग उपपदविधौ ॥ ८ ॥
*यञिञोः फकि ॥ ९ ॥
*समासान्तेषु च ॥ १० ॥
*महदात्त्वे प्रियादिषु ॥ ११ ॥
*ञ्नित्स्वरे ॥ १२ ॥
*राज्ञः स्वरे ब्राह्मणकुमारयोः ॥ १३ ॥
*समाससंघातग्रहणेषु च ॥ १४ ॥
*विभक्तौ चोक्तम् ॥ १५ ॥
*तद्धितविधानार्थं तु ॥ १६ ॥
*विप्रतिषेधाद्धि तद्धितबलीयस्त्वम् ॥ १७ ॥
*तत्र समासान्तेषु दोषः ॥ १८ ॥
*स्यूङोश्च ग्रहणम् ॥ १९ ॥
*तदन्तस्य च प्रत्ययार्थेनायोगात्तद्धितानुत्पत्तिः ॥२०॥
*उक्तं वा ॥ २१ ॥

२ स्वौजसमौट्छष्टाभ्याम्भिस्ङेभ्याम्भ्यस्ङसिभ्याम्भ्यस्ङसोसाम्ङ्योस्सुप् ।

३ स्त्रियाम् ।

*स्त्रियामिति स्त्र्यर्थाभिधाने चेट्टाबादयो द्विवचनबहुवचनानेकप्रत्ययानुपपत्तिः ॥ १ ॥
*स्त्र्यर्थस्य च प्रातिपदिकार्थत्वात् स्त्रियामिति लिङ्गानुपपत्तिः ॥ २ ॥
*स्त्रीसमानाधिकरणादिति चेद् भूतादिष्वतिप्रसङ्गः ॥ ३
*षट्संज्ञकेभ्यश्च प्रतिषेधः ॥ ४ ॥
*सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः ॥ ५ ॥



*गुणवचनस्य चाश्रयतो लिङ्गवचनभावात् ॥ ६ ॥
*भावस्य च भावयुक्तत्वात् ॥ ७ ॥
*स्त्रीविषये ङ्यापोरप्रसिद्धिरकारान्तादर्शनात् ॥ ८ ॥
*सर्वेषां तु स्वरवर्णानुपूर्वीज्ञानार्थ उपदेशः ॥ ९ ॥
*तस्मात्सिद्धम् ॥ १० ॥

४ अजाद्यतष्टाप् ।

*शूद्रा चामहत्पूर्वा ॥ १ ॥
*जातिः ॥ २ ॥

५ ऋन्नेभ्यो ङीप् ।

६ उगितश्च ।

*धातोरुगितः प्रतिषेधः ॥ १ ॥
*अञ्चतेश्चोपसंख्यानम् ॥ २ ॥
*उगित्यञ्चतिग्रहणात्सिद्धमधातोः ॥ ३ ॥

७ वनो र च ।

*वनो न हशः ॥ १ ॥
*रविधाने बहुव्रीहेरुपसंख्यानं प्रतिषिद्धत्वात् ॥ २ ॥
*अनो बहुव्रीहिप्रतिषेधे वोपधालोपिनो वावचनम् ॥ ३ ॥

८ पादोऽन्यतरस्याम् ।

९ टाबृचि ।

१० न षट्स्वस्रादिभ्यः ।

११ मनः ।

१२ अनो बहुव्रीहेः ।

१३ डाबुभाभ्यामन्यतरस्याम् ।

१४ अनुपसर्जनात् ।

*अनुपसर्जनग्रहणमनर्थकं प्रातिपदिकेन तदन्तविधिप्रतिषेधात् ॥ १ ॥
*ज्ञापकं तु पूर्वत्र तदन्ताप्रतिषेधस्य ॥ २ ॥
*पूर्वसूत्रनिर्देशो वाऽऽपिशलमधीत इति ॥ ३ ॥
*जातिशब्देभ्यस्त्वतिप्रसङ्गः ॥ ४ ॥
*सिद्धं तु जातेरनुपसर्जनत्वात् ॥ ५ ॥
*अनुपसर्जनाधिकारे जातेर्ङीष्विधाने सुपर्ण्या उपसंख्यानम् ॥ ६ ॥
*न वा समासस्यानुपसर्जनत्वाजातिवाचकत्वाच्च शब्दस्य सामान्येन ङीष्विधानम् ॥ ७ ॥

१५ टिड्ढाणञ्द्वयसज्दघ्नञ्मात्रच्तयप्ठक्ठञ्कञ्क्वरपः ।

*ढग्रहणे सानुबन्धकस्योपसंख्यानम् ॥ १ ॥

*अननुबन्धकग्रहणे हि न सानुबन्धकस्य ॥ २ ॥

*अञ्ग्रहणमनर्थकं तदन्ताद्धि ङीन्विधानम् ॥ ३ ॥

*न वा जात्यधिकारात् ॥ ४ ॥

*अनधिकारे हि पुंयोगादाख्यायां ङीन्प्रसङ्गः ॥ ५ ॥

*ख्युन उपसंख्यानम् ॥ ६ ॥

१६ यञश्च ।

*आपत्यग्रहणं द्वीपाद्यञः प्रतिषेधार्थम् ॥ १ ॥

१७ प्राचां ष्फ तद्धितः ।

*तद्धितवचनं षितः प्रातिपदिकादीकारार्थम् ॥ १ ॥

१८ सर्वत्र लोहितादिकतन्तेभ्यः ।

*लोहितादिषु शाकल्यस्योपसंख्यानम् ॥ १ ॥

१९ कौरव्यमाण्डूकाभ्यां च ।

*कौरव्यमाण्डूकयोरासुरेरुपसंख्यानम् ॥ १ ॥

*छश्च ॥ २ ॥

२० वयसि प्रथमे ।

*वयस्यचरमे ॥ १ ॥

२१ द्विगोः ।

२२ अपरिमाणबिस्ताचितकम्बल्येभ्यो न तद्धितलुकि ।

२३ काण्डान्तात् क्षेत्रे ।

२४ पुरुषात् प्रमाणेऽन्यतरस्याम् ।

२५ बहुव्रीहेरूधसो ङीष् ।

*ऊधसो नकारो लिङ्गाधिकारे ॥ १ ॥

*न वा समासान्ताधिकारे स्त्रीग्रहणात् ॥ २ ॥

*इतरथा हि कब्विधिप्रसङ्गः ॥ ३ ॥

२६ संख्याऽव्ययादेर्ङीप् ।

२७ दामहायनान्ताच्च ।

*दामहायनान्तात्संख्याऽऽदेः ॥ १ ॥

*तत्पुरुषविज्ञानाद्वा सिद्धम् ॥ २ ॥

२८ अन उपधालोपिनोऽन्यतरस्याम् ।

२९ नित्यं संज्ञाछन्दसोः ।

३० केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजाच्च ।

३१ रात्रेश्चाजसौ ।

३२ अन्तर्वत्पतिवतोर्नुक् ।

*अन्तर्वत्पतिवदिति गर्भभर्तृसंयोगे ॥ १ ॥

३३ पत्युर्नो यज्ञसंयोगे ।

३४ विभाषा सपूर्वस्य ।

*पत्युः सपूर्वादुपसर्जनसमास उपसंख्यानम् ॥ १ ॥

*सिद्धं तु पत्युः प्रातिपदिकविशेषणत्वात् ॥ २ ॥

३५ नित्यं सपत्न्यादिषु ।

३६ पूतक्रतोरै च ।

*पूतक्रत्वादीनां पुंयोगप्रकरणे वचनम् ॥ १ ॥

*लिङ्गसंनियोगेन सर्वत्रागमादेशानां वचने लिङ्गलुकि तत्कृतप्रसङ्गः ॥ २ ॥

*सिद्धं त्वागमादेशानामङ्गतः स्त्रीप्रकरणे वचनात् ॥३

*लिङ्गलुकि वा प्रकृतिप्रत्यापत्तिवचनम् ॥ ४ ॥

३७ वृषाकप्यग्निकुसितकुसीदानामुदात्तः ।

३८ मनोरौ वा ।

३९ वर्णादनुदात्तात्तोपधात्तो नः ।

*असितपलितयोः प्रतिषेधः ॥ १ ॥

*छन्दसि क्नमेके ॥ २ ॥

*वर्णान्ङीब्विधाने पिशङ्गादुपसंख्यानम् ॥ ३ ॥

४० अन्यतो ङीष् ।

४१ षिद्गौरादिभ्यश्च ।

४२ जानपदकुण्डगोणस्थलभाजनागकालनीलकुशकामुककबराद् वृत्त्यमत्रावपनाकृत्रिमाश्राणास्थौल्यवर्णानाच्छादनायोविकारमैथुनेच्छाकेशवेशेषु ।

*नीलादोषधौ ॥ १ ॥

*प्राणिनि च ॥ २ ॥

*वा संज्ञायाम् ॥ ३ ॥

४३ शोणात् प्राचाम् ।

४४ वोतो गुणवचनात् ।

*गुणवचनान्ङीबाद्युदात्तार्थम् ॥ १ ॥

*खरुसंयोगपधप्रतिषेधश्च ॥ २ ॥

४५ बह्वादिभ्यश्च ।

४६ नित्यं छन्दसि ।

४७ भुवश्च ।

४८ पुंयोगादाख्यायाम् ।

*गोपालिकादीनां प्रतिषेधः ॥ १ ॥

*पुंयोगादाख्यायां तद्धितलुग्वचनम् ॥ २ ॥

*सुबन्तसमासवचनाच्चाकारान्तानुपपत्तिः ॥ ३ ॥

*सिद्धं तु स्त्रियाः पुंशब्देनाभिधानात् ॥ ४ ॥

*गतिकारकोपपदानां कृद्भिः सह समासवचनम् ॥५॥

*प्रयोजनं क्तादल्पाख्यायाम् ॥ ६ ॥

*जातेर्ङीष्विधाने ॥ ७ ॥

*समासान्तस्य णत्वे ॥ ८ ॥

*कृदन्तात्तद्धिते वृद्धिस्वरौ च ॥ ९ ॥

*अवदातायां तु ङीप्प्रसङ्गः ॥ १० ॥

४९ इन्द्रवरुणभवशर्वरुद्रमृडहिमारण्ययवयवनमातुलाचार्याणामानुक्।

*हिमारण्ययोर्महत्त्वे ॥ १ ॥

*यवाद्दोषे ॥ २ ॥

*यवनाल्लिप्याम् ॥ ३ ॥

*उपाध्यायमातुलाभ्यां वा ॥ ४ ॥

*मुद्गलाच्छन्दसि लिच्च ॥ ५ ॥

*आचार्यादणत्वं च ॥ ६ ॥

*अर्यक्षत्रियाभ्यां वा ॥ ७ ॥

५० क्रीतात् करणपूर्वात्।

५१ क्तादल्पाख्यायाम्।

५२ बहुव्रीहेश्चान्तोदात्तात्।

*अन्तोदात्ते जातप्रतिषेधः ॥ १ ॥

*पाणिगृहीत्यादीनां विशेषे ॥ २ ॥

*बहुलं तणि ॥ ३ ॥

*प्रबद्धविलून्याद्यर्थम् ॥ ४ ॥

*अन्तोदात्तादबहुनञ्सुकालसुखादिपूर्वात् ॥ ५ ॥

*जातिपूर्वाद्वा ॥ ६ ॥

५३ अस्वाङ्गपूर्वपदाद्वा।

५४ स्वाङ्गाच्चोपसर्जनादसंयोगोपधात्।

*उपसर्जनग्रहणमनर्थकं बहुव्रीह्यधिकारात् ॥ १ ॥

*बह्वजर्थमिति चेत्स्वाङ्गग्रहणात्सिद्धम् ॥ २ ॥

*अनन्तोदात्तार्थमिति चेत् सहादिकृतत्वात्सिद्धम् ॥ ३

*स्वाङ्गसमुदायप्रतिषेधार्थं तु ॥ ४ ॥

५५ नासिकोदरौष्ठजङ्घादन्तकर्णशृङ्गाच्च।

*नासिकादीनां विभाषायां पुच्छाच्च ॥ १ ॥

*कबरमणिविषशरेभ्यो नित्यम् ॥ २ ॥

*उपमानात्पक्षाच्च पुच्छाच्च ॥ ३ ॥

*नासिकादिभ्यो विभाषायाः सहनञ्विद्यमानपूर्वेभ्यः प्रतिषेधो विप्रतिषेधेन ॥ ४ ॥

५६ न क्रोडादिबह्वचः।

५७ सहनञ्विद्यमानपूर्वाच्च।

५८ नखमुखात् संज्ञायाम्।

५९ दीर्घजिह्वी च च्छन्दसि।

६० दिक्पूर्वपदान्ङीप्।

*दिक्पूर्वपदान्ङीबोऽनुदात्तत्वम् ॥ १ ॥

*ङीब्विधाने ह्यन्यत्रापि ङीब्विषयान्ङीप्प्रसङ्गः ॥ २ ॥

६१ वाहः।

६२ सख्यशिश्वीति भाषायाम्।

६३ जातेरस्त्रीविषयादयोपधात्।

*योपधप्रतिषेधे हयगवयमुकयमनुष्यमत्स्यानामप्रतिषेधः ॥ १ ॥

६४ पाककर्णपर्णपुष्पफलमूलवालोत्तरपदाच्च।

*सदक्काण्डप्रान्तशतैकेभ्यः पुष्पात् प्रतिषेधः ॥ १ ॥

* सम्भस्त्राजिनशणपिण्डेभ्यः फलात् प्रतिषेधः ॥२॥

*श्वेतश्च ॥ ३ ॥

*मूलान्नञः ॥ ४ ॥

६५ इतो मनुष्यजातेः।

*इतो मनुष्यजातेरिञ उपसंख्यानम् ॥ १ ॥

६६ ऊङुतः।

*ऊङ्प्रकरणेऽप्राणिजातेश्चारज्ज्वादीनाम् ॥ १ ॥

६७ बाह्वन्तात्संज्ञायाम्।

६८ पङ्गोश्च।

६९ ऊरूत्तरपदादौपम्ये।

७० संहितशफलक्षणवामादेश्च।

७१ कद्रुकमण्डल्वोश्छन्दसि।

७२ संज्ञायाम्।

७३ शार्ङ्गरवाद्यञो ङीन्।

७४ यङश्चाप्।

*षाच्च यञश्चाप् ॥ १ ॥

७५ आवट्याच्च।

*अन उपधालोपिन ऊधसो ङीष् पूर्वविप्रतिषिद्धम् १

*आवट्याद्यञः ष्फश्चापः ॥ २ ॥

७६ तद्धिताः।

७७ यूनस्तिः।

७८ अणिञोरनार्षयोर्गुरूपोत्तमयोः ष्यङ् गोत्रे।

*ष्यङ्ङ्यनादेशे यलोपवचनम् ॥ १ ॥

*ङ्विरण्विधिः ॥ २ ॥

*आदेशेऽन्लोपवचनम् ॥ ३ ॥

*न वा ष्यङो लोपनिमित्तत्वात् ॥ ४ ॥

७९ गोत्रावयवात्।

*गोत्रावयवादगोत्रार्थमिति चेत्तदनिष्टम् ॥ १ ॥

*गोत्रादिति चेद्वचनानर्थक्यम् ॥ २ ॥

*अगुरूपोत्तमार्थमिति चेत् सर्वेषामवयवत्वात्सर्वप्रसङ्गः ॥ ३ ॥

*सिद्धं तु रौढ्यादिषूपसंख्यानात् ॥ ४ ॥

८० क्रौड्यादिभ्यश्च।

८१ दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धिभ्योऽन्यतरस्याम्।

८२ समर्थानां प्रथमाद्वा ।
*समर्थवचनमनर्थकम्, न ह्यसमर्थेनार्थाभिधानम् १
*प्रथमवचनमनर्थकं न ह्यप्रथमेनार्थाभिधानम् ॥ २ ॥
*वावचने चोक्तम् ॥ ३ ॥

८३ प्राग्दीव्यतोऽण् ।
*प्राग्वचनं सकृद्विधानार्थम् ॥ १ ॥
*अधिकारात्सिद्धमिति चेदपवादविषयेऽण्प्रसङ्गः ॥२॥
*तस्मात् प्राग्वचनम् ॥ ३ ॥
*न वा क्व चिद्वावचनात् ॥ ४ ॥

८४ अश्वपत्यादिभ्यश्च ।

८५ दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः ।
*(ण्यप्रकरणे) वाज्यतिपितृमतां छन्दस्युपसंख्यानम् ॥ १ ॥
*पृथिव्या आञौ ॥ २ ॥
*देवस्य यञञौ ॥ ३ ॥
*बहिषष्टिलोपश्च यञ् च ॥ ४ ॥
*ईकक्च ॥ ५ ॥
*ईकञ् छन्दसि ॥ ६ ॥
*स्थाम्नोऽकारः ॥ ७ ॥
*लोम्नोऽपत्येषु बहुषु ॥ ८ ॥
*सर्वत्र गोरजादिप्रसङ्गे यत् ॥ ९ ॥
*ण्यादयोऽर्थविशेषलक्षणादणपवादात्पूर्वविप्रतिषिद्धम् ॥ १० ॥

८६ उत्सादिभ्योऽञ् ।
*अञ्प्रकरणे ग्रीष्मादच्छन्दसि ॥ १ ॥

८७ स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात् ।
*नञ्स्नञौ भवनादिति चेद्वत्यर्थे प्रतिषेधः ॥ १ ॥
*वतेः प्रागिति चेद् भाव उपसंख्यानम् ॥ २ ॥

८८ द्विगोर्लुगनपत्ये ।
*द्विगोर्लुकि तन्निमित्तग्रहणम् ॥ १ ॥
*अर्थविशेषासंप्रत्ययेऽतन्निमित्तादपि ॥ २ ॥

८९ गोत्रेऽलुगचि ।
*गोत्रेऽलुगचीति चेदितरेतराश्रयत्वादप्रसिद्धिः ॥ १ ॥
*विप्रतिषेधात्तु लुकश्छविधानम् ॥ २ ॥
*गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ द्व्येकयोरलुक् ॥ ३ ॥
*एकवचनद्विवचनान्तस्य प्रवृत्तौ बहुषु लोपो यूनि ४
*गार्गभार्गविकाग्रहणं वा नियमार्थम् ॥ ५ ॥
*उक्तं वा ॥ ६ ॥

९० यूनि लुक् ।
*यूनि लुगचीति चेत् प्रत्ययस्यायथेष्टप्रसङ्गः ॥ १ ॥
*सिद्धं त्वविशेषेण लुग्वचनं हलि च प्रतिषेधः ॥२॥
*प्रयोजनं सौवीरगोत्रेभ्यो णठक्छाः ॥ ३ ॥
*इञ्ण्यौ सर्वत्र ॥ ४ ॥
*प्राग्दीव्यतोऽधिकारे यूनो वृद्धवदतिदेशः ॥ ५ ॥

९१ फक्फिञोरन्यतरस्याम् ।

९२ तस्यापत्यम् ।
*तद्धितार्थनिर्देशे लिङ्गवचनमप्रमाणं तस्याविवक्षितत्वात् ॥ १ ॥
*सर्वनामनिर्देशे विशेषाऽसंप्रत्ययः सामान्यनिर्देशात् ॥ २ ॥
*सामान्यचोदनास्तु विशेषेषु ॥ ३ ॥
*अपत्याभिधाने स्त्रीपुँल्लिङ्गस्याप्रसिद्धिर्नपुंसकत्वात् ॥४
*सिद्धं तु प्रजनस्य विवक्षितत्वात् ॥ ५ ॥
*एकार्थे शब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वम् ॥ ६ ॥
*अवयवान्यत्वाच्च ॥ ७ ॥

९३ एको गोत्रे ।
*उत्पादयितारं प्रत्यपत्ययोगात् तस्य च विवक्षितत्वादेकवचनं गोत्रे ॥ १ ॥
*तत्र प्रत्ययान्ताद्गोत्रे प्रतिषेधो गोत्रे नियतत्वात् ॥२॥
*परमप्रकृतेश्चोत्पत्तिः ॥ ३ ॥
*स्त्रियां चानियमः ॥ ४ ॥
*यूनि चान्तर्हितेऽप्राप्तिः ॥ ५ ॥
*सर्वेषामपत्ययोगात् प्रत्ययान्ताद् गोत्रे प्रतिषेधार्थमेको गोत्रे ॥ ६ ॥
*नियमानुपपत्तिश्च ॥ ७ ॥
*न ह्येकस्मिन्नपत्येऽनेकप्रत्ययप्राप्तिः ॥ ८ ॥
*अपत्यान्तरे शब्दान्तरात्प्रत्ययान्तरप्राप्तिः ॥ ९ ॥
*तस्मात्प्रतिषेधः ॥ १० ॥
*संज्ञाकारिभ्यो वा प्रत्ययोत्पत्तिः ॥ ११ ॥
*गोत्राद्यूनीति च ॥ १२ ॥
*तच्च जात्यादिनिवृत्त्यर्थम् ॥ १३ ॥

९४ गोत्राद्यून्यस्त्रियाम् ।

९५ अत इञ् ।
*इञो वृद्धावृद्धाभ्यां फिञ्फिनौ विप्रतिषेधेन ॥ १ ॥
*तद्राजश्च ॥ २ ॥

९६ बाह्वादिभ्यश्च ।
*बाह्वादिप्रभृतिषु येषां दर्शनं गोत्रभावे लौकिके ततोऽन्यत्र तेषां प्रतिषेधः ॥ १ ॥
*सम्बन्धिशब्दप्रत्ययानां च तत्सदृशात्प्रतिषेधः ॥२॥

९७ सुधातुरकङ् च ।
*सुधातृव्यासयोः ॥ १ ॥

९८ गोत्रे कुञ्जादिभ्यश्च्फञ् ।

९९ नडादिभ्यः फक् ।

१०० हरितादिभ्योऽञः ।
१०१ यञिञोश्च ।
१०२ शरद्वच्छुनकदर्भाद्भृगुवत्साग्रायणेषु ।
१०३ द्रोणपर्वतजीवन्तादन्यतरस्याम् ।
१०४ अनृष्यानन्तर्ये बिदादिभ्योऽञ् ।
*अनृष्यानन्तर्यवचनमनर्थकं संज्ञागोत्राधिकारात् ॥ १
१०५ गर्गादिभ्यो यञ् ।
१०६ मधुबभ्र्वोर्ब्राह्मणकौशिकयोः ।
१०७ कपिबोधादाङ्गिरसे ।
१०८ वतण्डाच्च ।
१०९ लुक् स्त्रियाम् ।
११० अश्वादिभ्यः फञ् ।
१११ भर्गात् त्रैगर्ते ।
११२ शिवादिभ्योऽण् ।
११३ अवृद्धाभ्यो नदीमानुषीभ्यस्तन्नामिकाभ्यः ।
११४ ऋष्यन्धकवृष्णिकुरुभ्यश्च ।
*ऋषिस्त्र्यणो ढग्ढकौ विप्रतिषेधेन ॥ १ ॥
*द्व्यचो ढको ढूग्ढञौ ॥ २ ॥
*न वर्ष्यणः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ ३ ॥
*तस्मादृषिभ्योऽण्विधानेऽन्यादिप्रतिषेधः ॥ ४ ॥
*ढकः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ ५ ॥
*तस्मात्तन्नामिकाण्यद्व्यचः ॥ ६ ॥
*ऋष्यन्धकवृष्णिकुर्वणः सेनान्ताण्ण्यः ॥ ७ ॥
११५ मातुरुत्संख्यासम्भद्रपूर्वायाः ।
११६ कन्यायाः कनीन च ।
११७ विकर्णशुङ्गच्छगलाद्वत्सभरद्वाजात्रिषु ।
११८ पीलाया वा ।
११९ ढक् च मण्डूकात् ।
१२० स्त्रीभ्यो ढक् ।
१२१ द्व्यचः ।
१२२ इतश्चानिञः ।
१२३ शुभ्रादिभ्यश्च ।
१२४ विकर्णकुषीतकात् काश्यपे ।
१२५ भ्रुवो वुक् च ।
१२६ कल्याण्यादीनामिनङ् ।
१२७ कुलटाया वा ।
१२८ चटकाया ऐरक् ।
*चटकायाः पुँल्लिङ्गनिर्देशः ॥ १ ॥
*स्त्रियामपत्ये लुग्वक्तव्यः ॥ २ ॥
१२९ गोधाया ढ्रक् ।
१३० आरगुदीचाम् ।
*आरग्वचनमनर्थकं रका सिद्धत्वात् ॥ १ ॥
१३१ क्षुद्राभ्यो वा ।
१३२ पितृष्वसुश्छण् ।
१३३ ढकि लोपः ।
१३४ मातृष्वसुश्च ।
१३५ चतुष्पाद्भ्यो ढञ् ।
१३६ गृष्ट्यादिभ्यश्च ।
१३७ राजश्वशुराद्यत् ।
*राज्ञोऽपत्ये जातिग्रहणम् ॥ १ ॥
१३८ क्षत्राद् घः ।
१३९ कुलात् खः ।
१४० अपूर्वपदादन्यतरस्यां यड्ढकञौ ।
१४१ महाकुलादञ्खञौ ।
१४२ दुष्कुलाड्ढक् ।
१४३ स्वसुश्छः ।
१४४ भ्रातुर्व्यच्च ।
१४५ व्यन्सपत्ने ।
*व्यन्वचनमनर्थकं प्रत्ययार्थाभावात् ॥ १ ॥
१४६ रेवत्यादिभ्यष्ठक् ।
१४७ गोत्रस्त्रियाः कुत्सने ण च ।
*गोत्रस्त्रियाः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ १ ॥
*लुगर्थमिति चेन्न लुक्प्रतिषेधात् ॥ २ ॥
*व्यवहितत्वादप्रतिषेध इति चेन्न पुंवद्भावात् ॥ ३ ॥
*फिनर्थं तु ॥ ४ ॥
*पुंवद्भावप्रतिषेधार्थं च ॥ ५ ॥
*गोत्राद्यून्यस्त्रियामिति वचनादप्रयोजनम् ॥ ६ ॥
*अवंश्यत्वाद्वा स्त्रियाः प्रयोजनम् ॥ ७ ॥
१४८ वृद्धाट्ठक् सौवीरेषु बहुलम् ।
१४९ फेरछ च ।
१५० फाण्टाहृतिमिमताभ्यां णफिञौ ।
*फाण्टाहृतेः प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ १ ॥
*पुंवद्भावप्रतिषेधार्थं तु ॥ २ ॥
*उक्तं वा ॥ ३ ॥
१५१ कुर्वादिभ्यो ण्यः ।
*वामरथस्य कण्वादिवत्स्वरवर्जम् ॥ १ ॥
१५२ सेनान्तलक्षणकारिभ्यश्च ।
१५३ उदीचामिञ् ।
*उदीचामिञ्विधौ तक्ष्णोऽण्वचनम् ॥ १ ॥

*शिवादिरिति चेण्ण्यविधिः ॥ २ ॥
*सिद्धं तूदीचां वा ण्यवचनात् ॥ ३ ॥
१५४ तिकादिभ्यः फिञ् ।
१५५ कौसल्यकार्मार्याभ्यां च ।
*फिञ्प्रकरणे दगुकोसलकर्मारच्छागवृषाणां युट् च ॥ १ ॥
१५६ अणो द्व्यचः ।
१५७ उदीचां वृद्धादगोत्रात् ।
१५८ वाकिनादीनां कुक् च ।
*कुकि प्रत्ययादेरादेशानुपपत्तिरनादित्वात् ॥ १ ॥
*पूर्वान्ते नलोपवचनम् ॥ २ ॥
*सिद्धं त्वादिष्टस्य कुग्वचनात् ॥ ३ ॥
*कारिभ्य इञोऽगोत्रात्फिञ् विप्रतिषेधेन ॥ ४ ॥
१५९ पुत्रान्तादन्यतरस्याम् ।
१६० प्राचामवृद्धात् फिन् बहुलम् ।
१६१ मनोर्जातावञ्यतौ षुक् च ।
१६२ अपत्यं पौत्रप्रभृति गोत्रम् ।
*पौत्रप्रभृतेर्गोत्रसंज्ञायां यस्यापत्यं तस्य पौत्रप्रभृतिसंज्ञाकरणम् ॥ १ ॥
*जीवद्वंश्यञ्च कुत्सितम् ॥ २ ॥
१६३ जीवति तु वंश्ये युवा ।
*जीवति तु वंश्ये युवेति पौत्रप्रभृत्यपेक्षं च ॥ १ ॥
*तच्च दैवदत्त्यर्थम् ॥ २ ॥
*वृद्धस्य च पूजायाम् ॥ ३ ॥
*आपत्यो वा गोत्रम् ॥ ४ ॥
*परमप्रकृतेश्चापत्यः ॥ ५ ॥
*आपत्याजीवद्वंश्यात्स्वार्थे द्वितीयो युवसंज्ञः ॥ ६ ॥
*स चास्त्रियाम् ॥ ७ ॥
*एकोगोत्रग्रहणानर्थक्यं च ॥ ८ ॥
*बहुवचनलोपिषु च सिद्धम् ॥ ९ ॥
१६४ भ्रातरि च ज्यायसि ।
१६५ वाऽन्यस्मिन् सपिण्डे स्थविरतरे जीवति ।
१६६ वृद्धस्य च पूजायाम् ।
१६७ यूनश्च कुत्सायाम् ।
१६८ जनपदशब्दात् क्षत्रियादञ् ।
*क्षत्रियादेकराजात्सङ्घप्रतिषेधार्थम् ॥ १ ॥
*क्षत्रियग्रहणानर्थक्ये चोक्तम् ॥ २ ॥
*क्षत्रियसमानशब्दाज्जनपदात्तस्य राजन्यपत्यवत् ॥ ३ ॥
१६९ साल्वेयगान्धारिभ्यां च ।
१७० द्व्यञ्मगधकलिङ्गसूरमसादण् ।
*अणो द्व्यङ्ण्येञो विप्रतिषेधेन ॥ १ ॥
*ण्यङः कुरुनादिभ्यो ण्यः ॥ २ ॥
१७१ वृद्धेत्कोसलाजादाञ्ञ्यङ् ।
१७२ कुरुनादिभ्यो ण्यः ।
१७३ साल्वावयवप्रत्यग्रथकलकूटाश्मकादिञ् ।
१७४ ते तद्राजाः ।
१७५ कम्बोजाल्लुक् ।
*कम्बोजादिभ्यो लुग्वचनं चोडाद्यर्थम् ॥ १ ॥
१७६ स्त्रियामवन्तिकुन्तिकुरुभ्यश्च ।
१७७ अतश्च ।
*अत इति तदन्तग्रहणमवन्त्यादिभ्यो लुग्वचनात् ॥ १ ॥
*यौधेयादिप्रतिषेधो ज्ञापकः पर्श्वादिलुकः ॥ २ ॥
१७८ न प्राच्यभर्गादियौधेयादिभ्यः ।

---

## अथ चतुर्थोऽध्याये
### द्वितीयः पादः ।

१ तेन रक्तं रागात् ।
*रक्तादीनामर्थाभिधाने प्रत्ययविधानादुपाध्यानर्थक्यम् ॥ १ ॥
२ लाक्षारोचनाट्ठक् ।
*ठक्प्रकरणे शकलकर्दमाभ्यामुपसंख्यानम् ॥ १ ॥
*नील्या अन् ॥ २ ॥
*पीतात्कन् ॥ ३ ॥
*हरिद्रामहारजनाभ्यामञ् ॥ ४ ॥
३ नक्षत्रेण युक्तः कालः ।
*नक्षत्रेण चन्द्रमसो योगात्तद्युक्तात्काले प्रत्ययविधानम् ॥ १ ॥
*तत्रोत्तरपदलोपः ॥ २ ॥
*लिङ्गवचनानुपपत्तिश्च ॥ ३ ॥
*कालयोगात्सिद्धम् ॥ ४ ॥
*तथा च संप्रत्ययः ॥ ५ ॥
४ लुबविशेषे ।
५ संज्ञायां श्रवणाश्वत्थाभ्याम् ।
६ द्वन्द्वाच्छः ।
७ दृष्टं साम ।
*दृष्टं साम कलेर्ढक् ॥ १ ॥
*सर्वत्राग्निकलिभ्यां ढक् ॥ २ ॥
८ कलेर्ढक् ।
९ वामदेवाड्ड्यड्ड्यौ ।
१० परिवृतो रथः ।
*परिवृतो रथ इति तदेकान्तग्रहणम् ॥ १ ॥
११ पाण्डुकम्बलादिनिः ।
१२ द्वैपवैयाघ्रादञ् ।

१३ कौमारापूर्ववचने ।
*कौमारापूर्ववचन इत्युभयतः स्त्रिया अपूर्वत्वे ॥ १ ॥
*पुंयोगात् स्त्र्यभिधानम् ॥ २ ॥
१४ तत्रोद्धृतममत्रेभ्यः ।
१५ स्थण्डिलाच्छयितरि व्रते ।
१६ संस्कृतं भक्षाः ।
१७ शूलोखाद्यत् ।
१८ दध्नष्ठक् ।
१९ उदश्वितोऽन्यतरस्याम् ।
२० क्षीराड्ढञ् ।
२१ सास्मिन् पौर्णमासीति ।
*सास्मिन् पौर्णमासीति संज्ञाग्रहणम् ॥ १ ॥
*असंज्ञायां हि गरीयानुपसंयोगः ॥ २ ॥
२२ आग्रहायण्यश्वत्थाट्ठक् ।
२३ विभाषा फाल्गुनीश्रवणाकार्तिकीचैत्रीभ्यः ।
२४ सास्य देवता ।
२५ कस्येत् ।
२६ शुक्राद्घन् ।
२७ अपोनप्त्रपांनप्तृभ्यां घः ।
२८ छ च ।
*छप्रकरणे पैङ्गाक्षीपुत्रादिभ्य उपसंख्यानम् ॥ १ ॥
*शतरुद्राद् घ च ॥ २ ॥
२९ महेन्द्राद्घाणौ च ।
३० सोमाट्ट्यण् ।
३१ वाय्वृतुपित्रुषसो यत् ।
३२ द्यावापृथिवीशुनासीरमरुत्वदग्नीषोमवास्तोष्पतिगृहमेधाच्छ च ।
३३ अग्नेर्ढक् ।
३४ कालेभ्यो भववत् ।
*कालेभ्यो भवे प्रत्ययमात्रप्रसङ्गः ॥ १ ॥
*यः कालेभ्यो भवे तस्य विधाने प्रातिपदिकमात्रप्रसङ्गः ॥ २ ॥
*सिद्धं तूभयनिर्देशात् ॥ ३ ॥
३५ महाराजप्रोष्ठपदाट्ठञ् ।
*ठञ्प्रकरणे तदस्मिन् वर्तत इति नवयज्ञादिभ्य उपसंख्यानम् ॥ १ ॥
*पूर्णमासादण् ॥ २ ॥
३६ पितृव्यमातुलमातामहपितामहाः ।
*पितृमातृभ्यां भ्रातरि व्यड्डुलचौ ॥ १ ॥
*मातृपितृभ्यां पितरि डामहच् ॥ २ ॥
*मातरि षिच्च ॥ ३ ॥
*महो वा छन्दस्यानङोऽवग्रहदर्शनात् ॥ ४ ॥
*अवेर्दुग्धे सोढदूसमरीसचः ॥ ५ ॥
*तिलान्निष्फलात्पिञ्जपेजौ ॥ ६ ॥
*पिञ्जश्छन्दसि डिच्च ॥ ७ ॥
३७ तस्य समूहः ।
३८ भिक्षादिभ्योऽण् ।
*भिक्षादिषु युवतिग्रहणानर्थक्यं पुंवद्भावस्य सिद्धत्वात् ॥ १ ॥
३९ गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद्वुञ् ।
*वृद्धाच्च ॥ १ ॥
*अजो वुञ्पूर्वविप्रतिषिद्धम् ॥ २ ॥
*ठक् विप्रतिषेधात् ॥ ३ ॥
४० केदाराद्यञ्च ।
*गणिकायाश्च ॥ १ ॥
४१ ठञ्कवचिनश्च ।
४२ ब्राह्मणमाणववाडवाद्यन् ।
*यन्प्रकरणे पृष्ठादुपसंख्यानम् ॥ १ ॥
४३ ग्रामजनबन्धुभ्यस्तल् ।
*गजसहायाभ्यां च ॥ १ ॥
*अह्नः खः ॥ २ ॥
*क्रतौ ॥ ३ ॥
*पर्श्वाः सण् ॥ ४ ॥
४४ अनुदात्तादेरञ् ।
४५ खण्डिकादिभ्यश्च ।
*अञ्प्रकरणे क्षुद्रकमालवात्सेनासंज्ञायाम् ॥ १ ॥
४६ चरणेभ्यो धर्मवत् ।
४७ अचित्तहस्तिधेनोष्ठक् ।
४८ केशाश्वाभ्यां यञ्छावन्यतरस्याम् ।
४९ पाशादिभ्यो यः ।
*पृथग्वातादर्शनादसमूहः ॥ १ ॥
*शीघ्रत्वे तु ॥ २ ॥
५० खलगोरथात् ।
५१ इनित्रकट्यचश्च ।
*खलादिभ्य इनिः ॥ १ ॥
५२ विषयो देशे ।
*विषयाभिधाने जनपदे लुब् बहुवचनविषयात् ॥ १ ॥
*गान्धार्यादिभ्यो वा ॥ २ ॥
*राजन्यादिभ्यो वा वुञ् ॥ ३ ॥
*बैल्ववनादिभ्यो नित्यम् ॥ ४ ॥
*न वाऽभिधेयस्य निवासविषयत्वाद् निवासविवक्षायां लुब्विषयविवक्षायां प्रत्ययः ॥ ५ ॥
५३ राजन्यादिभ्यो वुञ् ।

५४ भौरिक्याद्यैषुकार्यादिभ्यो विधल्भक्तलौ ।
५५ सोऽस्यादिरिति च्छन्दसः प्रगाथेषु ।
*छन्दसः प्रत्ययविधाने नपुंसकात्स्वार्थे उपसंख्यानम् ॥ १ ॥
५६ संग्रामे प्रयोजनयोद्धृभ्यः ।
५७ तदस्यां प्रहरणमिति क्रीडायां णः ।
५८ घञः सास्यां क्रियेति ञः ।
५९ तदधीते तद्वेद ।
६० क्रतूक्थादिसूत्रान्ताट्ठक् ।
*तस्येदम्प्रत्ययाल्लुक् ॥ १ ॥
६१ क्रमादिभ्यो वुन् ।
६२ अनुब्राह्मणादिनिः ।
६३ वसन्तादिभ्यष्ठक् ।
६४ प्रोक्ताल्लुक् ।
६५ सूत्राच्च कोपधात् ।
६६ छन्दोब्राह्मणानि च तद्विषयाणि ।
*अन्यत्राभिधेयस्यानित्यत्वात् छन्दोब्राह्मणानां तद्विषयवचनम् ॥ १ ॥
*तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥ २ ॥
*सिद्धं तु प्रोक्ताधिकारे तद्विषयवचनात् ॥ ३ ॥
*याज्ञवल्क्यादिभ्यः प्रतिषेधः ॥ ४ ॥
*इनिर्वा प्रोक्ते तद्विषयः ॥ ५ ॥
*काश्यपकौशिकग्रहणं च कल्पे नियमार्थम् ॥ ६ ॥
६७ तदस्मिन्नस्तीति देशे तन्नाम्नि ।
६८ तेन निर्वृत्तम् ।
६९ तस्य निवासः ।
७० अदूरभवश्च ।
७१ ओरञ् ।
*ओरञ्विधेर्नद्यां मतुब्विप्रतिषिद्धम् ॥ १ ॥
७२ मतोश्च बह्वजङ्गात् ।
७३ बह्वचः कूपेषु ।
७४ उदक्च विपाशः ।
७५ संकलादिभ्यश्च ।
७६ स्त्रीषु सौवीरसाल्वप्राक्षु ।
७७ सुवास्त्वादिभ्योऽण् ।
७८ रोणी ।
७९ कोपधाच्च ।
८० वुञ्छण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसंकाशबलपक्षकर्णसुतंगमप्रगदिन्वराहकुमुदादिभ्यः ।
८१ जनपदे लुप् ।
८२ वरणादिभ्यश्च ।
८३ शर्कराया वा ।
८४ ठक्छौ च ।
८५ नद्यां मतुप् ।
*नद्यां मतुब्वचनं मत्वर्थेऽण्विधानात् ॥ १ ॥
*निर्वृत्ताद्यर्थं च ॥ २ ॥
८६ मध्वादिभ्यश्च ।
८७ कुमुदनडवेतसेभ्यो ड्मतुप् ।
८८ नडशादाड्ड्वलच् ।
८९ शिखाया वलच् ।
९० उत्करादिभ्यश्छः ।
९१ नडादीनां कुक्च ।
*कुटि प्रत्ययादेरादेशात्तुपपत्तिरनादित्वात् ॥ १ ॥
*पूर्वान्ते ह्रस्वत्वम् ॥ २ ॥
*सिद्धं त्वादिष्टस्य कुग्वचनात् ॥ ३ ॥
*संनियोगात्सिद्धम् ॥ ४ ॥
९२ शेषे ।
*शेषवचनं घादीनामपत्यादिष्वप्रसङ्गार्थम् ॥ १ ॥
*तस्येदंवचनात्प्रसङ्गः ॥ २ ॥
*विप्रतिषेधात्सिद्धम् ॥ ३ ॥
*न वा परत्वाद्घादीनाम् ॥ ४ ॥
*अणपवादत्वाच्चाणिविषये घादिप्रसङ्गः ॥ ५ ॥
९३ राष्ट्रावारपाराद्घखौ ।
*अवारपाराद्विगृहीतादपि ॥ १ ॥
*विपरीताच्च ॥ २ ॥
९४ ग्रामाद्यखञौ ।
९५ कत्र्यादिभ्यो ढकञ् ।
९६ कुलकुक्षिग्रीवाभ्यः श्वास्यलङ्कारेषु ।
९७ नद्यादिभ्यो ढक् ।
९८ दक्षिणापश्चात्पुरसस्त्यक् ।
९९ कापिश्याः ष्फक् ।
१०० रङ्कोरमनुष्येऽण्च ।
*रङ्कोरमनुष्यग्रहणानर्थक्यं मनुष्यतत्स्थयोर्वुञ्विधानात् ॥ १ ॥
*अमनुष्ये मनुष्यस्थे ष्फगणोऽज्ञापकमिति चेन्नानिष्टत्वात् ॥ २ ॥
*अण्ग्रहणं च कच्छादिभ्योऽण्वचनात् ॥ ३ ॥
१०१ द्युप्रागपागुदक्प्रतीचो यत् ।
१०२ कन्थायाष्ठक् ।
१०३ वर्णौ वुक् ।

१०४ अव्ययात्त्यप् ।

*अव्ययात्त्यप्याविष्ट्यस्योपसंख्यानं छन्दसि ॥ १ ॥

*अव्ययतीररूप्योत्तरपदोदीच्यग्रामकोपधविधे-वृद्धाच्छो विप्रतिषेधेन ॥ २ ॥

*तेभ्यष्ठञ्ञिठौ ॥ ३ ॥

*न वा ठञादीनां छापवादत्वात्तद्विषये चाभावादि-तरेषाम् ॥ ४ ॥

*कोपधादणः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ ५ ॥

*तस्मादन्तोदात्ते कोपधप्रतिषेधः ॥ ६ ॥

*छादोर्देशे कालाट्ठञ् ॥ ७ ॥

*नक्षत्रादण् ॥ ८ ॥

*अव्ययाट्ट्युट्युलौ ॥ ९ ॥

*शरीरावयवाद्यत् ॥ १० ॥

*वर्गान्ताच्चाशब्दे यत्खौ ॥ ११ ॥

*बह्वचोऽन्तोदात्ताट्ठञ् ॥ १२ ॥

*आयस्थानेभ्यष्ठक् ॥ १३ ॥

*विद्यायोनिसंबन्धेभ्यो वुञ् ॥ १४ ॥

*ऋतष्ठञ् ॥ १५ ॥

*रूप्यमयटौ ॥ १६ ॥

*अचित्ताट्ठक् ॥ १७ ॥

*गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ॥ १८ ॥

*णिनिरन्तेवासिब्राह्मणेभ्यः ॥ १९ ॥

*पत्रपूर्वादञ् ॥ २० ॥

*द्वन्द्वाद् वुन् वैरमैथुनिकयोः ॥ २१ ॥

*गोत्रचरणाद् वुञ् ॥ २२ ॥

*कण्वादीञोऽण्विधेः ॥ २३ ॥

*ठञ्ञिठाभ्यामोर्देशे ठञ् ॥ २४ ॥

*न वा ठञोऽनवकाशत्वात् ॥ २५ ॥

*योपधप्रस्थादीनां वुञ् ॥ २६ ॥

*ओश्च ठञः ॥ २७ ॥

*जनपदानामकाणौ ॥ २८ ॥

*न वा वुञपवादत्वादणः ॥ २९ ॥

*कोपधादणोऽकेकान्ताच्छः ॥ ३० ॥

*धन्ववुञश्च ॥ ३१ ॥

*न वा छस्य पुनर्वचनं छापवादनिवृत्त्यर्थम् ॥ ३२ ॥

१०५ ऐषमोह्यःश्वसोऽन्यतरस्याम् ।

१०६ तीररूप्योत्तरपदादञ्ञौ ।

१०७ दिक्पूर्वपदादसंज्ञायां ञः ।

१०८ मद्रेभ्योऽञ् ।

१०९ उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात् ।

११० प्रस्थोत्तरपदपलद्यादिकोपधादण् ।

१११ कण्वादिभ्यो गोत्रे ।

११२ इञश्च ।

११३ न द्व्यचः प्राच्यभरतेषु ।

११४ वृद्धाच्छः ।



११५ भवतष्ठक्छसौ ।

११६ काश्यादिभ्यष्ठञ्ञिठौ ।

११७ वाहीकग्रामेभ्यश्च ।

११८ विभाषोशीनरेषु ।

११९ ओर्देशे ठञ् ।

१२० वृद्धात् प्राचाम् ।

१२१ धन्वयोपधाद्वुञ् ।

१२२ प्रस्थपुरवहान्ताच्च ।

१२३ रोपधेतोः प्राचाम् ।

१२४ जनपदतदवध्योश्च ।

*जनपदतदवध्योर्वुञ्विधानेऽवयवमात्रात्प्रसङ्गः ॥ १ ॥

*जनपदादिति चेद्वचनानर्थक्यम् ॥ २ ॥

१२५ अवृद्धादपि बहुवचनविषयात् ।

१२६ कच्छाग्निवक्त्रवर्तोत्तरपदात् ।

१२७ धूमादिभ्यश्च ।

१२८ नगरात् कुत्सनप्रावीण्ययोः ।

१२९ अरण्यान्मनुष्ये ।

१३० विभाषा कुरुयुगन्धराभ्याम् ।

*कुरुयुगन्धरेभ्यो वावचनान्मनुष्यतत्स्थयो-र्वुञ्विधानम् ॥ १ ॥

१३१ मद्रवृज्योः कन् ।

१३२ कोपधादण् ।

१३३ कच्छादिभ्यश्च ।

*साल्वानां कच्छादिषु पाठोऽणूविधानार्थः ॥ १ ॥

*न वाऽपदातिगोयवागूग्रहणमवधारणार्थम् ॥ २ ॥

१३४ मनुष्यतत्स्थयोर्वुञ् ।

१३५ अपदातौ साल्वात् ।

१३६ गोयवाग्वोश्च ।

१३७ गर्तोत्तरपदाच्छः ।

*गर्तोत्तरपदाच्छविधेर्जनपदाद् वुञ् विप्रतिषिद्धम् ॥ १ ॥

१३८ गहादिभ्यश्च ।

*गहादिषु पृथिवीमध्यस्य मध्यमभावः ॥ १ ॥

*चरणसम्बन्धेन निवासलक्षणोऽण् ॥ २ ॥

१३९ प्राचां कटादेः ।

१४० राज्ञः क च ।

१४१ वृद्धादकेकान्तखोपधात् ।

*अकेकान्तग्रहणे कोपधग्रहणं सौसुकाद्यर्थम् ॥ १ ॥

१४२ कन्थापलदनगरग्रामह्रदोत्तरपदात् ।

१४३ पर्वताच्च ।

१४४ विभाषा मनुष्ये ।

१४५ कृकणपर्णाद्भारद्वाजे ।

## अथ चतुर्थोऽध्यायः ।

### तृतीयः पादः ।

१ युष्मदस्मदोरन्यतरस्यां खञ्च ।

*युष्मदस्मद्भ्यां प्रत्ययविधाने योगविभागः ॥ १ ॥

*समसंख्याप्रतिषेधार्थः ॥ २ ॥

२ तस्मिन्नणि च युष्माकास्माकौ ।

*आदेशवचने च ॥ १ ॥

*तत्र पुनः खञ्ग्रहणम् ॥ २ ॥

३ तवकममकावेकवचने ।

*एकार्थग्रहणं च ॥ १ ॥

४ अर्धाद्यत् ।

*अर्धाद्यद्विधाने सपूर्वाट्ठञ् ॥ १ ॥

*दिक्पूर्वपदाद्यच्च ॥ २ ॥

५ परावराधमोत्तमपूर्वाच्च ।

६ दिक्पूर्वपदाट्ठञ् च ।

७ ग्रामजनपदैकदेशादञ्ठञौ ।

८ मध्यान्मः ।

९ अ सांप्रतिके ।

१० द्वीपादनुसमुद्रं यञ् ।

११ कालाट्ठञ् ।

१२ श्राद्धे शरदः ।

१३ विभाषा रोगातपयोः ।

१४ निशाप्रदोषाभ्यां च ।

१५ श्वसस्तुट् च ।

*श्वसस्तुड्व्यादेशानुपपत्तिरमादित्वात् ॥ १ ॥

*पूर्वान्ते कप्रतिषेधः ॥ २ ॥

*सिद्धं त्वादिष्टस्य तुड्वचनात् ॥ ३ ॥

*संनियोगाद्वा ॥ ४ ॥

१६ संधिवेलाद्यृतुनक्षत्रेभ्योऽण् ।

१७ प्रावृष एण्यः ।

१८ वर्षाभ्यष्ठक् ।

१९ छन्दसि ठञ् ।

२० वसन्ताच्च ।

२१ हेमन्ताच्च ।

२२ सर्वत्राण्च तलोपश्च ।

*हेमन्तस्याणि तलोपवचनामर्थक्यं हेम्नः प्रकृत्यन्तरत्वात् ॥ १ ॥

*अलोपदर्शनाच्च ॥ २ ॥

२३ सायंचिरंप्राह्णेप्रगेऽव्ययेभ्यष्ट्युट्युलौ तुट् च ।

*सायंचिरयोर्मकारान्तत्वं प्रत्ययसंनियुक्तम् ॥ १ ॥

*प्राह्णप्रगयोरेदन्तत्वम् ॥ २ ॥

*तुड्युक्तम् ॥ ३ ॥

*पूर्वान्ते विसर्जनीयः ॥ ४ ॥

*सिद्धं त्वादिष्टस्य तुड्वचनात् ॥ ५ ॥

*संनियोगाद्वा ॥ ६ ॥

२४ विभाषा पूर्वाह्णापराह्णाभ्याम् ।

*पूर्वाह्णापराह्णाभ्यां सुबन्तवचनं सप्तमीश्रवणार्थम् १

*अलुग्वचनं ज्ञापकमिति चेदव्ययात्सप्तमीप्रसङ्गः ॥२॥

२५ तत्र जातः ।

*तत्र जातादिषु वचनं नियमार्थम् ॥ १ ॥

२६ प्रावृषष्ठप् ।

२७ संज्ञायां शरदो वुञ् ।

२८ पूर्वाह्णापराह्णार्द्रामूलप्रदोषावस्करादुन् ।

२९ पथः पन्थ च ।

३० अमावास्याया वा ।

३१ अ च ।

३२ सिन्ध्वपकराभ्यां कन् ।

३३ अणञौ च ।

३४ श्रविष्ठाफल्गुन्यनुराधास्वातितिष्यपुनर्वसुहस्तविशाखाषाढाबहुलाल्लुक् ।

*लुक्प्रकरणे चित्रारेवतीरोहिणीभ्यः स्त्रियामुपसंख्यानम् ॥ १ ॥

*फल्गुन्यषाढाभ्यां टानौ ॥ २ ॥

*श्रविष्ठाषाढाभ्यां छण् ॥ ३ ॥

*न वा नक्षत्रेभ्यो बहुलं लुग्वचनात् ॥ ४ ॥

३५ स्थानान्तगोशालखरशालाच्च ।

३६ वत्सशालाभिजिदश्वयुक्शतभिषजो वा ।

३७ नक्षत्रेभ्यो बहुलम् ।

३८ कृतलब्धक्रीतकुशलाः ।

३९ प्रायभवः ।

*प्रायभवग्रहणमनर्थकं तत्र भवेन कृतत्वात् ॥ १ ॥

*अनित्यभवः प्रायभव इति चेन्मुक्तसंशयेन तुल्यम् २

४० उपजानूपकर्णोपनीवेष्ठक् ।

४१ सम्भूते ।

४२ कोशाड्ढञ् ।

*विकारे कोशाड्ढञ् ॥ १ ॥

*संभूते ह्यर्थानुपपत्तिः ॥ २ ॥

४३ कालात्साधुपुष्प्यत्पच्यमानेषु ।

४४ उप्ते च ।

४५ आश्वयुज्या वुञ् ।

४६ ग्रीष्मवसन्तादन्यतरस्याम् ।

४७ देयमृणे ।

४८ कलाप्यश्वत्थयवबुसाद् वुन् ।

४९ ग्रीष्मावरसमाद्वुञ् ।

५० संवत्सराग्रहायणीभ्यां ठञ् च ।
५१ व्याहरति मृगः ।
५२ तदस्य सोढम् ।
५३ तत्र भवः ।
*तत्रप्रकरणे पुनस्तत्रवचनं कालनिवृत्त्यर्थम् ॥ १ ॥
५४ दिगादिभ्यो यत् ।
५५ शरीरावयवाच्च ।
५६ दृतिकुक्षिकलशिवस्त्यस्त्यहेर्ढञ् ।
५७ ग्रीवाभ्योऽण् च ।
५८ गम्भीराञ्ञ्यः ।
५९ अव्ययीभावाच्च ।
*ञ्यप्रकरणे परिमुखादिभ्य उपसंख्यानम् ॥ १ ॥
*अव्ययीभावाद्विधाने उपकूलादिभ्यः प्रतिषेधः ॥२॥
६० अन्तःपूर्वपदाट्ठञ् ।
*समानस्य तदादेश्च अध्यात्मादिषु चेष्यते ॥ १ ॥
*ऊर्ध्वंदमाच्च देहाच्च ॥ २ ॥
*लोकोत्तरपदस्य च ॥ ३ ॥
*मुखपार्श्वतसोरीयः ॥ ४ ॥
*कुग्जनस्य परस्य च ॥ ५ ॥
*ईयः कार्योऽथ मध्यस्य ॥ ६ ॥
*मण्मीयौ चापि प्रत्ययौ ॥ ७ ॥
*मध्यो मध्यं दिनण् चास्मात् ॥ ८ ॥
*स्थाम्नो लुगजिनात्तथा ॥ ९ ॥
*बाह्यो दैव्यः पाञ्चजन्यो गाम्भीर्यं च ञ्य इष्यते ॥१०॥
६१ ग्रामात् पर्यनुपूर्वात् ।
६२ जिह्वामूलाङ्गुलेश्छः ।
६३ वर्गान्ताच्च ।
६४ अशब्दे यत्खावन्यतरस्याम् ।
६५ कर्णललाटात्कनलंकारे ।
६६ तस्य व्याख्यान इति च व्याख्यातव्यनाम्नः ।
*भवव्याख्यानयोर्युगपदधिकारोऽपवादविधानार्थः १
*कृतनिर्देशौ हि तौ ॥ २ ॥
*तत्र व्याख्यातव्यनाम्नो ग्रहणं भवार्थम् ॥ ३ ॥
*व्याख्याने ह्यवचनात्सिद्धम् ॥ ४ ॥
*भवे मन्त्रेषु लुग्वचनम् ॥ ५ ॥
*कल्पे च व्याख्याने ॥ ६ ॥
*न वा तादर्थ्यात्ताच्छब्द्यम् ॥ ७ ॥
६७ बह्वचोऽन्तोदात्ताट्ठञ् ।
६८ क्रतुयज्ञेभ्यश्च ।
६९ अध्यायेष्वेवर्षेः ।
७० पौरोडाशपुरोडाशात् ष्ठन् ।
७१ छन्दसो यदणौ ।
७२ द्व्यजृद्ब्राह्मणर्क्प्रथमाध्वरपुरश्चरणनामाख्याताट्ठक् ।
*नामाख्यातग्रहणं संघातविगृहीतार्थम् ॥ १ ॥
७३ अणृगयनादिभ्यः ।
७४ तत आगतः ।
७५ ठगायस्थानेभ्यः ।
७६ शुण्डिकादिभ्योऽण् ।
७७ विद्यायोनिसंबन्धेभ्यो वुञ् ।
७८ ऋतष्ठञ् ।
७९ पितुर्यच्च ।
८० गोत्रादङ्कवत् ।
८१ हेतुमनुष्येभ्योऽन्यतरस्यां रूप्यः ।
८२ मयट् च ।
८३ प्रभवति ।
८४ विदूराञ्ञ्यः ।
८५ तद्गच्छति पथिदूतयोः ।
८६ अभिनिष्क्रामति द्वारम् ।
८७ अधिकृत्य कृते ग्रन्थे ।
*अधिकृत्य कृते ग्रन्थे लुबाख्यायिकाभ्यो बहुलम् ॥१॥
८८ शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः ।
*द्वन्द्वे देवासुरादिभ्यः प्रतिषेधः ॥ १ ॥
८९ सोऽस्य निवासः ।
९० अभिजनश्च ।
९१ आयुधजीविभ्यश्छः पर्वते ।
९२ शण्डिकादिभ्यो ञ्यः ।
९३ सिन्धुतक्षशिलादिभ्योऽणञौ ।
९४ तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यकः ।
९५ भक्तिः ।
९६ अचित्ताददेशकालाट्ठक् ।
९७ महाराजाट्ठञ् ।
९८ वासुदेवार्जुनाभ्यां वुन् ।
९९ गोत्रक्षत्रियाख्येभ्यो बहुलं वुञ् ।
१०० जनपदिनां जनपदवत्सर्वं जनपदेन समानशब्दानां बहुवचने ।
*सर्ववचनं प्रकृतिनिर्ह्रासार्थम् ॥ १ ॥
*तच्च मद्रवृज्यर्थम् ॥ २ ॥
१०१ तेन प्रोक्तम् ।
*प्रोक्तग्रहणमनर्थकं तत्रादर्शनात् ॥ १ ॥
*ग्रन्थे च दर्शनात् ॥ २ ॥
*छन्दोऽर्थमिति चेत्तुल्यम् ॥ ३ ॥

१०२ तित्तिरिवरतन्तुखण्डिकोखाच्छण् ।
१०३ काश्यपकौशिकाभ्यामृषिभ्यां णिनिः ।
१०४ कलापिवैशम्पायनान्तेवासिभ्यश्च ।
*प्रत्यक्षकारिग्रहणम् ॥ १ ॥
*कलापिखाडायनग्रहणं ज्ञापकं वैशम्पायनान्तेवासिषु प्रत्यक्षकारिग्रहणस्य ॥ २ ॥
*छन्दोग्रहणं चेतरथा ह्यतिप्रसङ्गः ॥ ३ ॥
१०५ पुराणप्रोक्तेषु ब्राह्मणकल्पेषु ।
*पुराणप्रोक्तेषु ब्राह्मणकल्पेषु याज्ञवल्क्यादिभ्यः प्रतिषेधस्तुल्यकालत्वात् ॥ १ ॥
१०६ शौनकादिभ्यश्छन्दसि ।
१०७ कठचरकाल्लुक् ।
१०८ कलापिनोऽण् ।
१०९ छगलिनो ढिनुक् ।
११० पाराशर्यशिलालिभ्यां भिक्षुनटसूत्रयोः ।
१११ कर्मन्दकृशाश्वादिनिः ।
११२ तेनैकदिक् ।
११३ तसिश्च ।
११४ उरसो यच्च ।
११५ उपज्ञाते ।
११६ कृते ग्रन्थे ।
*कृते ग्रन्थे मक्षिकादिभ्योऽण् ॥ १ ॥
*तद्विशेषेभ्यश्च ॥ २ ॥
*योगविभागात्सिद्धम् ॥ ३ ॥
११७ संज्ञायाम् ।
११८ कुलालादिभ्यो वुञ् ।
११९ क्षुद्राभ्रमरवटरपादपादञ् ।
१२० तस्येदम् ।
*तस्येदमित्यसंनिहितेऽप्राप्तिरिदमः प्रत्यक्षवाचित्वात् ॥ १ ॥
*सिद्धं तु यद्योगा षष्ठी तत्र ॥ २ ॥
*अनन्तरादिषु च प्रतिषेधः ॥ ३ ॥
*सिद्धं तु परिगणनात् ॥ ४ ॥
*स्वे ग्रामजनपदमनुष्येभ्यः ॥ ५ ॥
*पत्राद्वाह्ये ॥ ६ ॥
*रथाद्रथाङ्गे ॥ ७ ॥
*वहेस्तुरणिट् च ॥ ८ ॥
*अग्नीधः शरणे रञ्भं च ॥ ९ ॥
*समिधामाधाने षेण्यण् ॥ १० ॥
*चरणाद्धर्माम्नाययोः ॥ ११ ॥
१२१ रथाद्यत् ।
१२२ पत्रपूर्वादञ् ।
१२३ पत्राध्वर्युपरिषदश्च ।
१२४ हलसीराट्ठक् ।
१२५ द्वन्द्वाद्वुन् वैरमैथुनिकयोः ।
*वैरे देवासुरादिभ्यः प्रतिषेधः ॥ १ ॥
१२६ गोत्रचरणाद्वुञ् ।
१२७ सङ्घाङ्कलक्षणेष्वञ्यञिञामण् ।
*सङ्घादिषु घोषग्रहणम् ॥ १ ॥
*सङ्घादिषु प्रत्ययस्य णित्करणानर्थक्यं वृद्धत्वात्प्रातिपदिकस्य ॥ २ ॥
*लिङ्गपुंवद्भावप्रतिषेधार्थं तु ॥ ३ ॥
१२८ शाकलाद्वा ।
१२९ छन्दोगौक्थिकयाज्ञिकबह्वृचनटाञ्ञ्यः ।
१३० न दण्डमाणवान्तेवासिषु ।
१३१ रैवतिकादिभ्यश्छः ।
*कौपिञ्जलहास्तिपदादण् ॥ १ ॥
१३२ आथर्वणिकस्येकलोपश्च ।
१३३ तस्य विकारः ।
*तस्यप्रकरणे तस्यपुनर्वचनं शैषिकनिवृत्त्यर्थम् ॥ १ ॥
*तस्येदंवचनात् प्रसङ्गः ॥ २ ॥
*न वा संप्रत्ययः ॥ ३ ॥
*अवयवे चाप्राण्योषधिवृक्षेभ्योऽनिवृत्तिः ॥ ४ ॥
*अण्मयटोश्च विप्रतिषेधानुपपत्तिर्मयडुत्सर्गात् ॥ ५ ॥
*अनुवृत्तौ हि छोत्सर्गापवादविप्रतिषेधान्मयट् ॥ ६ ॥
१३४ अवयवे च प्राण्योषधिवृक्षेभ्यः ।
*विकारावयवयोरुक्तम् ॥ १ ॥
१३५ बिल्वादिभ्योऽण् ।
*बिल्वादिषु गवीधुकाग्रहणं मयट्प्रतिषेधार्थम् ॥ १ ॥
१३६ कोपधाच्च ।
१३७ त्रपुजतुनोः षुक् ।
१३८ ओरञ् ।
१३९ अनुदात्तादेश्च ।
*अनुदात्तादेरञो विधाने आद्युदात्तान्ङीष उपसंख्यानम् ॥ १ ॥
*पदस्य ह्यनुदात्तादित्वम् ॥ २ ॥
*न वा समर्थस्यानुदात्तादित्वात् ॥ ३ ॥
*पदग्रहणं परिमाणार्थम् ॥ ४ ॥
१४० पलाशादिभ्यो वा ।
१४१ शम्याः ष्लञ् ।
१४२ मयड्वैतयोर्भाषायामभक्ष्याच्छादनयोः ।
*मयड्वैतयोर्वचनमपवादविषयेऽनिवृत्त्यर्थम् ॥ १ ॥
*एतयोरित्यर्थनिर्देशः ॥ २ ॥

१४३ नित्यं वृद्धशरादिभ्यः ।
१४४ गोश्च पुरीषे ।
१४५ पिष्टाच्च ।
१४६ संज्ञायां कन् ।
१४७ व्रीहेः पुरोडाशे ।
१४८ असंज्ञायां तिलयवाभ्याम् ।
१४९ द्व्यचश्छन्दसि ।
१५० नोत्वद्वर्ध्रबिल्वात् ।
१५१ तालादिभ्योऽण् ।
१५२ जातरूपेभ्यः परिमाणे ।
१५३ प्राणिरजतादिभ्योऽञ् ।
१५४ ञितश्च तत्प्रत्ययात् ।

*विकारावयवयोर्विकारावयवयुक्तत्वान्मयट्प्रतिषेधार्थं ञितश्च तत्प्रत्ययादञो विधानम् ॥ १ ॥
*न वा दृष्टो ह्यवयवे समुदायशब्दो विकारे च प्रकृतिशब्दस्तस्मान्मयडभावः ॥ २ ॥
*विकारावयवशब्दात्प्रसङ्ग इति चेन्न तेनानभिधानात् ॥ ३ ॥
*अभिधाने ह्यन्यतोऽपि मयट्प्रसङ्गः ॥ ४ ॥
*तस्मात्तत्प्रत्ययान्ताल्लुग्वचनम् ॥ ५ ॥

१५५ क्रीतवत्परिमाणात् ।

*क्रीतवत्परिमाणादङ्कं च ॥ १ ॥
*अणो वृद्धान्मयट् ॥ २ ॥
*ओरञोऽनुदात्तादेरञश्च ॥ ३ ॥
*मयटः प्राण्यञ्विप्रतिषेधेन ॥ ४ ॥
*न वाऽनवकाशत्वादपवादो मयट् ॥ ५ ॥
*प्राण्यञश्च ॥ ६ ॥
*तस्मान्मयड्विधाने प्राणिप्रतिषेधः ॥ ७ ॥
*अनुदात्तादेरञः प्राण्यञ्विप्रतिषेधेन ॥ ८ ॥

१५६ उष्ट्राद्वुञ् ।
१५७ उमोर्णयोर्वा ।
१५८ एण्या ढञ् ।
१५९ गोपयसोर्यत् ।
१६० द्रोश्च ।
१६१ माने वयः ।
१६२ फले लुक् ।

*फले लुग्वचनानर्थक्यं प्रकृत्यन्तरत्वात् ॥ १ ॥
*एकान्तदर्शनात्प्रसङ्ग इति चेद्वृक्षे लुग्वचनम् ॥ २ ॥

१६३ प्लक्षादिभ्योऽण् ।
१६४ जाम्ब्वा वा ।
१६५ लुप् च ।

*लुप्प्रकरणे फलपाकशुषामुपसंख्यानम् ॥ १ ॥
*पुष्पमूलेषु च बहुलम् ॥ २ ॥

१६६ हरीतक्यादिभ्यश्च ।
१६७ कंसीयपरशव्ययोर्यञञौ लुक् च ।

---

## अथ चतुर्थोऽध्याये

### चतुर्थः पादः ।

१ प्राग्वहतेष्ठक् ।

*ठक्प्रकरणे तदाहेति माशब्दादिभ्य उपसंख्यानम् १
*आहौ प्रभूतादिभ्यः ॥ २ ॥
*पृच्छतौ सुस्नातादिभ्यः ॥ ३ ॥
*गच्छतौ परदारादिभ्यः ॥ ४ ॥

२ तेन दीव्यति खनति जयति जितम् ।
३ संस्कृतम् ।
४ कुलत्थकोपधादण् ।
५ तरति ।
६ गोपुच्छाट्ठञ् ।
७ नौद्व्यचष्ठन् ।
८ चरति ।
९ आकर्षात् ष्ठल् ।

*आकर्षात्पर्पादेर्भस्त्रादिभ्यः कुसीदसूत्राच्च । आवसथात्किसरादेः षितः षडेते ठगधिकारे ॥१॥

१० पर्पादिभ्यः ष्ठन् ।
११ श्वगणाट्ठञ् च ।
१२ वेतनादिभ्यो जीवति ।
१३ वस्नक्रयविक्रयाट्ठन् ।
१४ आयुधाच्छ च ।
१५ हरत्युत्सङ्गादिभ्यः ।
१६ भस्त्रादिभ्यः ष्ठन् ।
१७ विभाषा विवधात् ।

*वीवधाच्चेति वक्तव्यम् ॥ १ ॥

१८ अण् कुटिलिकायाः ।
१९ निर्वृत्तेऽक्षद्यूतादिभ्यः ।
२० त्रेर्मम्नित्यम् ।

*त्रेर्मम्नित्यवचनं विषयार्थम् ॥ १ ॥
*तत्र यथाधिकारं तद्विषयप्रसङ्गः ॥ २ ॥

२१ अपमित्ययाचिताभ्यां कक्कनौ ।
२२ संसृष्टे ।
२३ चूर्णादिनिः ।
२४ लवणाल्लुक् ।

*लवणाल्लुग्वचनानर्थक्यं रसवाचित्वात् ॥ १ ॥
*असंसृष्टे च दर्शनात् ॥ २ ॥
*संसृष्टे चादर्शनात् ॥ ३ ॥

२५ मुद्गादण् ।
२६ व्यञ्जनैरुपसिक्ते ।
२७ ओजः सहोऽम्भसा वर्तते ।
२८ तत्प्रत्यनुपूर्वमीपलोमकूलम् ।
२९ परिमुखं च ।
३० प्रयच्छति गर्ह्यम् ।
*प्रयच्छति गर्ह्याय ॥ १ ॥
*मेस्याल्लोपो वा ॥ २ ॥
*वृद्धेर्वृधुषिभावः ॥ ३ ॥
३१ कुसीददशैकादशात् ष्ठन्ष्ठचौ ।
३२ उञ्छति ।
३३ रक्षति ।
३४ शब्ददर्दुरं करोति ।
३५ पक्षिमत्स्यमृगान् हन्ति ।
३६ परिपन्थं च तिष्ठति ।
३७ माथोत्तरपदपदव्यनुपदं धावति ।
३८ आक्रन्दाट्ठञ् च ।
३९ पदोत्तरपदं गृह्णाति ।
४० प्रतिकण्ठार्थललामं च ।
४१ धर्मं चरति ।
*अधर्माच्च ॥ १ ॥
४२ प्रतिपथमेति ठंश्च ।
४३ समवायान् समवैति ।
४४ परिषदो ण्यः ।
४५ सेनाया वा ।
४६ संज्ञायां ललाटकुक्कुट्यौ पश्यति ।
४७ तस्य धर्म्यम् ।
४८ अण् महिष्यादिभ्यः ।
४९ ऋतोऽञ् ।
*नृनराभ्यामञ्वचनम् ॥ १ ॥
*विशसितुरिड्लोपश्च ॥ २ ॥
*विभाजयितुर्णिलोपश्च ॥ ३ ॥
५० अवक्रयः ।
५१ तदस्य पण्यम् ।
५२ लवणाट्ठञ् ।
५३ किसरादिभ्यः ष्ठन् ।
५४ शलालुनोऽन्यतरस्याम् ।
५५ शिल्पम् ।
५६ मड्डुकझर्झरादणन्यतरस्याम् ।
५७ प्रहरणम् ।
५८ परश्वधाट्ठञ् च ।
५९ शक्तियष्ट्योरीकक् ।
६० अस्तिनास्तिदिष्टं मतिः ।
६१ शीलम् ।
६२ छत्रादिभ्यो णः ।
६३ कर्माध्ययने वृत्तम् ।
६४ बह्वच्पूर्वपदाट्ठच् ।
६५ हितं भक्षाः ।
*हितं भक्षा इति चतुर्थीनिर्देशः ॥ १ ॥
*इतरथा ह्यनिर्देशः ॥ २ ॥
६६ तदस्मै दीयते नियुक्तम् ।
६७ श्राणामांसौदनाट्टिठन् ।
६८ भक्तादणन्यतरस्याम् ।
६९ तत्र नियुक्तः ।
७० अगारान्ताट्ठन् ।
७१ अध्यायिन्यदेशकालात् ।
७२ कठिनान्तप्रस्तारसंस्थानेषु व्यवहरति ।
७३ निकटे वसति ।
७४ आवसथात् ष्ठल् ।
७५ प्राग्घिताद्यत् ।
७६ तद्वहति रथयुगप्रासङ्गम् ।
*वहत्यभिधाने रथशकटहलसीरेभ्यः प्रत्यय-
विधानानर्थक्यं विहितत्वात् ॥ १ ॥
*शब्दभेदादविधानमिति चेदर्थाश्रयत्वात् प्रत्यय-
विधानस्यार्थसामान्यात्सिद्धम् ॥ २ ॥
७७ धुरो यड्ढकौ ।
७८ खः सर्वधुरात् ।
७९ एकधुराल्लुक् च ।
८० शकटादण् ।
८१ हलसीराट्ठक् ।
८२ संज्ञायां जन्याः ।
*जन्या इति निपातनानर्थक्यं पञ्चमीनिर्देशात् ॥ १ ॥
८३ विध्यत्यधनुषा ।
*विध्यत्यकरणेन ॥ १ ॥
*इतरथा ह्यनिष्टप्रसङ्गः ॥ २ ॥
८४ धनगणं लब्धा ।
८५ अन्नाण्णः ।
८६ वशं गतः ।
८७ पदमस्मिन्दृश्यम् ।
८८ मूलमस्याबर्हि ।
८९ संज्ञायां धेनुष्या ।
९० गृहपतिना संयुक्ते ञ्यः ।
९१ नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्य-
तुल्यप्राप्यवध्यानाम्यसमसमितसंमितेषु ।
९२ धर्मपथ्यर्थन्यायादनपेते ।

९३ छन्दसो निर्मिते ।
९४ उरसोऽण् च ।
९५ हृदयस्य प्रियः ।
९६ बन्धने चर्षौ ।
९७ मतजनहलात्करणजल्पकर्षेषु ।
९८ तत्र साधुः ।
९९ प्रतिजनादिभ्यः खञ् ।
१०० भक्ताण्णः ।
१०१ परिषदो ण्यः ।
१०२ कथादिभ्यष्ठक् ।
१०३ गुडादिभ्यष्ठञ् ।
१०४ पथ्यतिथिवसतिस्वपतेर्ढञ् ।
१०५ सभाया यः ।
१०६ ढश्छन्दसि ।
१०७ समानतीर्थेवासी ।
१०८ समानोदरे शयित ओ चोदात्तः ।
१०९ सोदराद्यः ।
११० भवे छन्दसि ।
१११ पाथोनदीभ्यां ड्यण् ।
११२ वेशन्तहिमवद्भ्यामण् ।
११३ स्रोतसो विभाषा ड्यड्ड्यौ ।
११४ सगर्भसयूथसनुताद्यन् ।
११५ तुग्राद्घन् ।
११६ अग्राद्यत् ।
११७ घच्छौ च ।
११८ समुद्राभ्राद्घः ।
११९ बर्हिषि दत्तम् ।
१२० दूतस्य भागकर्मणी ।
१२१ रक्षोयातूनां हननी ।
१२२ रेवतीजगतीहविष्याभ्यः प्रशस्ये ।
१२३ असुरस्य स्वम् ।
१२४ मायायामण् ।
१२५ तद्वानासामुपधानो मन्त्र इतीष्टकासु लुक् च मतोः ।
१२६ अश्विमानण् ।
१२७ वयस्यासु मूर्ध्नो मतुप् ।
१२८ मत्वर्थे मासतन्वोः ।
*मासतन्वोरनन्तरार्थे वा ॥ १ ॥
*लुगकारेकाररेफाश्च ॥ २ ॥
१२९ मधोर्ञ च ।
१३० ओजसोऽहनि यत्खौ ।
१३१ वेशोयशआदेर्भगाद्यल् ।
१३२ ख च ।
१३३ पूर्वैः कृतमिनियौ च ।
१३४ अद्भिः संस्कृतम् ।
१३५ सहस्रेण संमितौ घः ।
१३६ मतौ च ।
१३७ सोममर्हति यः ।
१३८ मये च ।
१३९ मधोः ।
१४० वसोः समूहे च ।
*अक्षरसमूहे छन्दस उपसंख्यानम् ॥ १ ॥
*छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् ॥ २ ॥
*अग्निरीशे वसव्यस्य ॥ ३ ॥
*स्वार्थविज्ञानात्सिद्धम् ॥ ४ ॥
१४१ नक्षत्राद् घः ।
१४२ सर्वदेवात्तातिल् ।
१४३ शिवशमरिष्टस्य करे ।
१४४ भावे च ।

## अथ पञ्चमोऽध्यायः ।

### प्रथमः पादः ।

१ प्राक् क्रीताच्छः ।
*प्राग्वचन उक्तम् ॥ १ ॥
२ उगवादिभ्यो यत् ।
*यञ्ड्यावञः पूर्वविप्रतिषिद्धं सनङ्गूपानहौ प्रयोजनम् ॥ १ ॥
*ढञ्च ॥ २ ॥
*हविरपूपादिभ्यो विभाषाया यत् ॥ ३ ॥
*अश्वविकारेभ्यश्च ॥ ४ ॥
*नाभेर्नभभावे प्रत्ययानुपपत्तिः प्रकृत्यभावात् ॥ ५ ॥
*सिद्धं तु शाखादिषु वचनात् ह्रस्वत्वं च ॥ ६ ॥
*नभ्यात्तु लुग्वचनम् ॥ ७ ॥
३ कम्बलाच्च संज्ञायाम् ।
४ विभाषा हविरपूपादिभ्यः ।
*हविरपूपादिभ्योऽप्राप्ते ॥ १ ॥
५ तस्मै हितम् ।
६ शरीरावयवाद्यत् ।
*यत्प्रकरणे रथाच्च ॥ १ ॥
७ खलयवमाषतिलवृषब्रह्मणश्च ।
८ अजाविभ्यां थ्यन् ।
९ आत्मन्विश्वजनभोगोत्तरपदात्खः ।
*भोगोत्तरपदात्खविधानेऽनिर्देशः पूर्वपदार्थहितत्वात् ॥ १ ॥
*भोगीनरिति चेद्वावचनम् ॥ २ ॥

*राजाचार्याभ्यां नित्यम् ॥ ३ ॥
*खविधाने पञ्चजनादुपसंख्यानम् ॥ ४ ॥
*सर्वजनाट्ठञ्च ॥ ५ ॥
*महाजनान्नित्यम् ॥ ६ ॥

१० सर्वपुरुषाभ्यां णढञौ ।
*सर्वाण्णस्य वावचनम् ॥ १ ॥
*पुरुषाद्वधे ॥ २ ॥

११ माणवचरकाभ्यां खञ् ।

१२ तदर्थं विकृतेः प्रकृतौ ।
*तदर्थमिति कृत्स्नानामभ्यण्ठञ् ॥ १ ॥
*न वा प्रयोजनेन कृतत्वात् ॥ २ ॥

१३ छदिरुपधिबलेर्ढञ् ।
*उपध्यर्थमिति प्रत्ययानुपपत्तिरुपध्यभावात् ॥ १ ॥
*सिद्धं तु कृदन्तस्य स्वार्थेऽञ्वचनात् ॥ २ ॥

१४ ऋषभोपानहोर्ञ्यः ।

१५ चर्मणोऽञ् ।

१६ तदस्य तदस्मिन्स्यादिति ।

१७ परिखाया ढञ् ।

१८ प्राग्वतेष्ठञ् ।

१९ आर्हादगोपुच्छसंख्यापरिमाणाट्ठक् ।
*ठगादयः प्रागर्हाच्चेदर्हे तद्विधिः ॥ १ ॥
*वस्ने वचनात्सिद्धमिति चेन्मांसौदनिकादिष्वप्राप्तिः २
*आर्हाच्चेद्भोजनादिष्वतिप्रसङ्गः ॥ ३ ॥
*उक्तं वा ॥ ४ ॥

२० असमासे निष्कादिभ्यः ।
*निष्कादिष्वसमासग्रहणं ज्ञापकं पूर्वत्र तदन्ताप्रतिषेधस्य ॥ १ ॥
*प्राग्वतेः संख्यापूर्वपदानां तदन्तग्रहणमलुकि ॥ २ ॥

२१ शताच्च ठन्यतावशते ।
*शतप्रतिषेधेऽन्यशतत्वेऽप्रतिषेधः ॥ १ ॥

२२ संख्याया अतिशदन्तायाः कन् ।
*तिप्रतिषेधाड्डतिग्रहणमिति चेदर्थवद्ग्रहणात्सिद्धम् १

२३ वतोरिड्वा ।

२४ विंशतित्रिंशद्भ्यां ड्वुनसंज्ञायाम् ।

२५ कंसाट्टिठन् ।
*टिठन्नर्धाच्च ॥ १ ॥
*कार्षापणाद्वा प्रतिश्च ॥ २ ॥

२६ शूर्पादञन्यतरस्याम् ।

२७ शतमानविंशतिकसहस्रवसनादण् ।

२८ अध्यर्धपूर्वद्विगोर्लुगसंज्ञायाम् ।
*द्विगोर्लुगनपत्ये ॥ १ ॥

*संज्ञाप्रतिषेधानर्थक्यं च तन्निमित्तत्वाल्लोपस्य ॥ २ ॥
*उक्तं संख्यात्वे प्रयोजनं तस्मादिहाध्यर्धग्रहणानर्थक्यम् ॥ ३ ॥

२९ विभाषा कार्षापणसहस्राभ्याम् ।
*कार्षापणसहस्राभ्यां सुवर्णशतमानयोरुपसंख्यानम् १

३० द्वित्रिपूर्वान्निष्कात् ।

३१ बिस्ताच्च ।
*द्वित्रिभ्यां द्वैयोग्यम् ॥ १ ॥
*तत्र च बहुग्रहणम् ॥ २ ॥

३२ विंशतिकात् खः ।

३३ खार्या ईकन् ।
*खार्या ईकन् केवलायाश्च ॥ १ ॥
*काकिण्याश्चोपसंख्यानम् ॥ २ ॥
*केवलायाश्च ॥ ३ ॥

३४ पणपादमाषशताद्यत् ।

३५ शाणाद्वा ।
*शतशाणाभ्यां वा ॥ १ ॥
*द्वित्रिपूर्वादण्च ॥ २ ॥

३६ द्वित्रिपूर्वादण् च ।

३७ तेन क्रीतम् ।
*तेन क्रीतमिति करणात् ॥ १ ॥
*अकर्त्रेकान्तात् ॥ २ ॥
*संख्यैकवचनाद् द्विगोश्चोपसंख्यानम् ॥ ३ ॥
*उक्तं वा ॥ ४ ॥

३८ तस्य निमित्तं संयोगोत्पातौ ।
*तस्यनिमित्तप्रकरणे वातपित्तश्लेष्मभ्यः शमनकोपनयोरुपसंख्यानम् ॥ १ ॥
*संनिपाताच्च ॥ २ ॥

३९ गोद्व्यचोऽसंख्यापरिमाणाश्वादेर्यत् ।
*यत्प्रकरणे ब्रह्मवर्चसाच्च ॥ १ ॥

४० पुत्राच्छ च ।

४१ सर्वभूमिपृथिवीभ्यामणञौ ।

४२ तस्येश्वरः ।

४३ तत्र विदित इति च ।

४४ लोकसर्वलोकाट्ठञ् ।

४५ तस्य वापः ।

४६ पात्रात् ष्ठन् ।

४७ तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते ।
*तदस्मिन् दीयतेऽस्मा इति च ॥ १ ॥

४८ पूरणार्धाट्ठन् ।
*ठन्प्रकरणेऽनन्तादुपसंख्यानम् ॥ १ ॥

४९ भागाद्यच्च ।
५० तद्धरति वहत्यावहति भाराद्वंशादिभ्यः ।
५१ वस्नद्रव्याभ्यां ठन्कनौ ।
५२ सम्भवत्यवहरति पचति ।
*तत्पचतीति द्रोणादण्च ॥ १ ॥
५३ आढकाचितपात्रात् खोऽन्यतरस्याम् ।
५४ द्विगोष्ठंश्च ।
५५ कुलिजाल्लुक्खौ च ।
*कुलिजाच्चेति सिद्धे लुक्खग्रहणानर्थक्यं पूर्वस्मिन् त्रिकभावात् ॥ १ ॥
५६ सोऽस्यांशवस्नभृतयः ।
५७ तदस्य परिमाणम् ।
५८ संख्यायाः संज्ञासंघसूत्राध्ययनेषु ।
*संज्ञाया स्वार्थे ॥ १ ॥
*ततः परिमाणिनि ॥ २ ॥
*जीवितपरिमाणे चोपसंख्यानम् ॥ ३ ॥
*जीवितपरिमाणे चेत्यनर्थकं वचनं कालादिति सिद्धत्वात् ॥ ४ ॥
*इह वचने हि लुक्प्रसङ्गः ॥ ५ ॥
*अन्येभ्योऽपि दृश्यते खारशताद्यर्थम् ॥ ६ ॥
*उक्तं वा ॥ ७ ॥
*स्तोमे डविधिः पञ्चदशाद्यर्थः ॥ ८ ॥
५९ पङ्क्तिविंशतित्रिंशच्चत्वारिंशत्पञ्चाशत्षष्टिसप्तत्यशीतिनवतिशतम् ।
*विंशत्यादयो दशदर्थे चेत्समासवचनानुपपत्तिः ॥१॥
*परिमाणिनि चेत् पुनः स्वार्थे प्रत्ययविधानम् ॥ २ ॥
*षष्ठीवचनविधिश्च ॥ ३ ॥
*अनारम्भो वा प्रातिपदिकविज्ञानाद्यथा सहस्रादिषु ४
६० पञ्चद्दशतौ वर्गे वा ।
६१ सप्तनोऽञ्छन्दसि ।
६२ त्रिंशच्चत्वारिंशतोर्ब्राह्मणे संज्ञायां डण् ।
६३ तदर्हति ।
६४ छेदादिभ्यो नित्यम् ।
*छेदादिपथिभ्यो विग्रहदर्शनान्नित्यग्रहणानर्थक्यम् १
*विकारार्थमिति चेद्कडादिभिस्तुल्यम् ॥ २ ॥
६५ शीर्षच्छेदाद्यच्च ।
६६ दण्डादिभ्यो यः ।
६७ छन्दसि च ।
६८ पात्राद्घंश्च ।
६९ कडंकरदक्षिणाच्छ च ।
७० स्थालीबिलात् ।
७१ यज्ञर्त्विग्भ्यां घखञौ ।
*यज्ञर्त्विग्भ्यां तत्कर्मार्हतीत्युपसंख्यानम् ॥ १ ॥
७२ पारायणतुरायणचान्द्रायणं वर्तयति ।
*तद्वर्तयतीत्यनिर्देशस्तत्रादर्शनात् ॥ १ ॥



*इक्ष्वज्योश्च दर्शनात् ॥ २ ॥
७३ संशयमापन्नः ।
७४ योजनं गच्छति ।
*योजनं गच्छतीति क्रोशशतयोजनशतयोरुपसंख्यानम् ॥ १ ॥
*ततोऽभिगमनमर्हतीति च ॥ २ ॥
७५ पथः ष्कन् ।
७६ पन्थो ण नित्यम् ।
७७ उत्तरपथेनाहृतं च ।
*आहृतप्रकरणे वारिजङ्गलस्थलकान्तारपूर्वपदादुपसंख्यानम् ॥ १ ॥
*अजपथशङ्कुपथाभ्यां च ॥ २ ॥
*मधुकमरिचयोरण् स्थलात् ॥ ३ ॥
७८ कालात् ।
७९ तेन निर्वृत्तम् ।
८० तमधीष्टो भृतो भूतो भावी ।
*अधीष्टभृतयोर्द्वितीयानिर्देशोऽनर्थकस्तत्रादर्शनात् १
*सिद्धं तु चतुर्थीनिर्देशात् ॥ २ ॥
८१ मासाद्वयसि यत्खञौ ।
८२ द्विगोर्यप् ।
८३ षण्मासाण्ण्यच्च ।
८४ अवयसि ठंश्च ।
*अवयसि ठंश्चेत्यनन्तरस्यानुकर्षः ॥ १ ॥
८५ समायाः खः ।
८६ द्विगोर्वा ।
८७ रात्र्यहःसंवत्सराच्च ।
८८ वर्षाल्लुक् च ।
८९ चित्तवति नित्यम् ।
९० षष्टिकाः षष्टिरात्रेण पच्यन्ते ।
*षष्टिके संज्ञाग्रहणम् ॥ १ ॥
*उक्तं वा ॥ २ ॥
९१ वत्सरान्ताच्छश्छन्दसि ।
९२ संपरिपूर्वात् ख च ।
९३ तेन परिजय्यलभ्यकार्यसुकरम् ।
९४ तदस्य ब्रह्मचर्यम् ।
*तदस्य ब्रह्मचर्यमिति महानाम्न्यादिभ्य उपसंख्यानम्१
*तच्चरतीति च ॥ २ ॥
*अवान्तरदीक्षाभ्यो डिनिः ॥ ३ ॥
*अष्टाचत्वारिंशतो ड्वुंश्च ॥ ४ ॥
*चातुर्मास्यानां यलोपश्च ॥ ५ ॥
*चतुर्मासाण्ण्यो यज्ञे तत्र भवे ॥ ६ ॥
*संज्ञायामण् ॥ ७ ॥

९५ तस्य दक्षिणा यज्ञाख्येभ्यः ।
९६ तत्र च दीयते कार्यं भववत् ।
*कार्यग्रहणमनर्थकं तत्रभवेन कृतत्वात् ॥ १ ॥
९७ व्युष्टादिभ्योऽण् ।
*अण्प्रकरणेऽग्निपदादिभ्य उपसंख्यानम् ॥ १ ॥
९८ तेन यथाकथाचहस्ताभ्यां णयतौ ।
९९ संपादिनि ।
१०० कर्मवेषाद्यत् ।
१०१ तस्मै प्रभवति संतापादिभ्यः ।
१०२ योगाद्यच्च ।
१०३ कर्मण उकञ् ।
१०४ समयस्तदस्य प्राप्तम् ।
१०५ ऋतोरण् ।
१०६ छन्दसि घस् ।
१०७ कालाद्यत् ।
१०८ प्रकृष्टे ठञ् ।
१०९ प्रयोजनम् ।
११० विशाखाषाढादण्मन्थदण्डयोः ।
१११ अनुप्रवचनादिभ्यश्छः ।
*छप्रकरणे विशिपूरिपदिरुहिप्रकृतेरनात्सपूर्वपदादुपसंख्यानम् ॥ १ ॥
*स्वर्गादिभ्यो यत् ॥ २ ॥
*पुण्याहवाचनादिभ्यो लुक् ॥ ३ ॥
११२ समापनात् सपूर्वपदात् ।
११३ ऐकागारिकट् चौरे ।
*एकागारान्निपातनानर्थक्यं ठञ्प्रकरणात् ॥ १ ॥
११४ आकालिकडाद्यन्तवचने ।
*आकालान्निपातनानर्थक्यं ठञ् प्रकरणात् ॥ १ ॥
*आकालाट्ठंश्च ॥ २ ॥
११५ तेन तुल्यं क्रिया चेद्वतिः ।
११६ तत्र तस्येव ।
११७ तदर्हम् ।
११८ उपसर्गाच्छन्दसि धात्वर्थे ।
*स्त्रीपुंसाभ्यां वत्युपसंख्यानम् ॥ १ ॥
११९ तस्य भावस्त्वतलौ ।
*स्त्रीपुंसाभ्यां त्वतलोरुपसंख्यानम् ॥ १ ॥
*वावचनं च ॥ २ ॥
*अपवादसमावेशाद्वा सिद्धम् ॥ ३ ॥
*तस्य भाव इत्यभिप्रायादिष्वतिप्रसङ्गः ॥ ४ ॥
*सिद्धं तु यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ ॥ ५ ॥
*यद्वा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने ॥ ६ ॥
*उक्तं वा ॥ ७ ॥
*त्वतलभ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थम् ॥ ८ ॥
*वा छन्दसि ॥ ९ ॥
*नञ्समासादन्यो भाववचनः स्वरोत्तरपदवृद्ध्यर्थम् ॥ १० ॥
१२० आ च त्वात् ।
*आ च त्वादिति चकारकरणमपवादसमावेशार्थम् ॥ १ ॥
१२१ न नञ्पूर्वात्तत्पुरुषादचतुरसंगतलवणवटयुधकतरसलसेभ्यः ।
*न नञ्पूर्वादित्युत्तरस्य प्रतिषेधः ॥ १ ॥
१२२ पृथ्वादिभ्य इमनिज्वा ।
*पृथ्वादिभ्यो वावचनमण्समावेशार्थम् ॥ १ ॥
१२३ वर्णदृढादिभ्यः ष्यञ् च ।
१२४ गुणवचनब्राह्मणादिभ्यः कर्मणि च ।
*ब्राह्मणादिषु चातुर्वर्ण्यादीनामुपसंख्यानम् ॥ १ ॥
*अर्हतो नुम्च ॥ २ ॥
१२५ स्तेनाद्यन्नलोपश्च ।
१२६ सख्युर्यः ।
१२७ कपिज्ञात्योर्ढक् ।
१२८ पत्यन्तपुरोहितादिभ्यो यक् ।
१२९ प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ् ।
१३० हायनान्तयुवादिभ्योऽण् ।
*अण्प्रकरणे श्रोत्रियस्य घलोपश्च ॥ १ ॥
१३१ इगन्ताच्च लघुपूर्वात् ।
१३२ योपधाद्गुरूपोत्तमाद्वुञ् ।
१३३ द्वन्द्वमनोज्ञादिभ्यश्च ।
१३४ गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु ।
१३५ होत्राभ्यश्छः ।
१३६ ब्रह्मणस्त्वः ।

## अथ पञ्चमेऽध्याये
### द्वितीयः पादः ।

१ धान्यानां भवने क्षेत्रे खञ् ।
२ व्रीहिशाल्योर्ढक् ।
३ यवयवकषष्टिकाद्यत् ।
४ विभाषा तिलमाषोमाभङ्गाणुभ्यः ।
*तिलादिभ्यः खञ् ॥ १ ॥
*उमाभङ्गयोरधान्यत्वात् ॥ २ ॥
५ सर्वचर्मणः कृतः खखञौ ।
६ यथामुखसंमुखस्य दर्शनः खः ।
*संमुखेति समस्यान्तलोपः ॥ १ ॥

७ तत्सर्वादेः पथ्यङ्गकर्मपत्रपात्रं व्याप्नोति ।
८ आप्रपदं प्राप्नोति ।
९ अनुपदसर्वान्नायानयं बद्धाभक्षयतिनेयेषु ।
१० परोवरपरम्परपुत्रपौत्रमनुभवति ।
*परोवरे परस्योत्ववचनम् ॥ १ ॥
*परपरतराणां परम्परभावः ॥ २ ॥
११ अवारपारात्यन्तानुकामं गामी ।
१२ समां समां विजायते ।
*समां समां विजायते इति यलोपवचनाद्लुग्विज्ञानम् ॥ १ ॥
*समां समां विजायत इति यलोपवचनाद्लुग्विज्ञानमिति चेदुत्तरपदस्य लुग्वचनम् ॥ २ ॥
*सिद्धं तु पूर्वपदस्य यलोपवचनात् ॥ ३ ॥
*अनुत्पत्तावुत्तरपदस्य वावचनम् ॥ ४ ॥
१३ अद्यश्वीनावष्टब्धे ।
१४ आगवीनः ।
*गोराङ्पूर्वादा तस्य गोः प्रतिदानात्कारिणि खः ॥१॥
१५ अनुग्वलंगामी ।
१६ अध्वनो यत्खौ ।
१७ अभ्यमित्राच्छ च ।
१८ गोष्ठात् खञ् भूतपूर्वे ।
१९ अश्वस्यैकाहगमः ।
२० शालीनकौपीने अधृष्टाकार्ययोः ।
२१ व्रातेन जीवति ।
२२ साप्तपदीनं सख्यम् ।
२३ हैयङ्गवीनं संज्ञायाम् ।
*ह्योगोदोहस्य हियङ्गवादेशः संज्ञायां तस्य विकारे ॥ १ ॥
२४ तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ।
२५ पक्षात्तिः ।
२६ तेन वित्तश्चुञ्चुप्चणपौ ।
२७ विनञ्भ्यां नानाञौ न सह ।
२८ वेः शालच्छङ्कटचौ ।
२९ संप्रोदश्च कटच् ।
*कटच्प्रकरणे अलाबूतिलोमाभ्यो रजस्युपसंख्यानम् ॥ १ ॥
*भङ्गायाश्च ॥ २ ॥
*गोष्ठादयः स्थानादिषु पशुनामादिभ्यः ॥ ३ ॥
*उपमानाद्वा सिद्धम् ॥ ४ ॥
३० अवात् कुटारच्च ।
३१ नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः ।
३२ नेर्बिडज्बिरीसचौ ।
३३ इनच्पिटच्चिकचि च ।
*इनच्पिटच्काः चिकचिचिकादेशाश्च ॥ १ ॥
*क्लिन्नस्य चिल्पिल्लश्चास्य चक्षुषी ॥ २ ॥
३४ उपाधिभ्यां त्यकन्नासन्नारूढयोः ।
३५ कर्मणि घटोऽठच् ।
३६ तदस्य संजातं तारकादिभ्य इतच् ।
३७ प्रमाणे द्वयसज्दघ्नञ्मात्रचः ।
*वत्वन्तात्स्वार्थे द्वयसज्मात्रचौ बहुलम् ॥ १ ॥
३८ पुरुषहस्तिभ्यामण् च ।
३९ यत्तदेतेभ्यः परिमाणे वतुप् ।
*वतुप्प्रकरणे युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम् ॥ १ ॥
४० किमिदंभ्यां वो घः ।
४१ किमः संख्यापरिमाणे डति च ।
४२ संख्याया अवयवे तयप् ।
*अवयवविधानेऽवयविनि प्रत्ययः ॥ १ ॥
४३ द्वित्रिभ्यां तयस्यायज्वा ।
४४ उभादुदात्तो नित्यम् ।
४५ तदस्मिन्नधिकमिति दशान्ताड्डः ।
*डविधाने परिमाणशब्दानामाधिक्यस्याधिकरणाभावादनिर्देशः ॥ १ ॥
*सिद्धं तु पञ्चमीनिर्देशात् ॥ २ ॥
४६ शदन्तविंशतेश्च ।
*शद्ग्रहणेऽन्तग्रहणं प्रत्ययग्रहणे यस्मात्स तदादेरधिकार्थम् ॥ १ ॥
*संख्याग्रहणं च ॥ २ ॥
*विंशतेश्च ॥ ३ ॥
४७ संख्याया गुणस्य निमाने मयट् ।
*निमाने गुणिनि ॥ १ ॥
*भूयसः ॥ २ ॥
*एकोऽन्यतरः ॥ ३ ॥
*समानानाम् ॥ ४ ॥
*निमेये चापि दृश्यते ॥ ५ ॥
४८ तस्य पूरणे डट् ।
*तस्य पूरण इत्यतिप्रसङ्गः ॥ १ ॥
*सिद्धं तु संख्यापूरण इति वचनात् ॥ २ ॥
*यस्य वा भावादन्यसंख्यत्वं तत्र ॥ ३ ॥
४९ नान्तादसंख्यादेर्मट् ।
*मडादिषु यस्यादिस्तन्निर्देशः ॥ १ ॥
*प्रत्ययान्तरे हि सति स्वरे दोषः ॥ २ ॥
५० थट् च छन्दसि ।

५१ षट्कतिकतिपयचतुरां थुक् ।
*चतुरश्छयतावाद्यक्षरलोपश्च ॥ १ ॥
*थट्थुकोः पृथक्करणं पदान्तविधिप्रतिषेधार्थम् ॥२॥
५२ बहुपूगगणसङ्घस्य तिथुक् ।
*बहुकतिपयवतूनां लिङ्गविशिष्टादुत्पत्तिः ॥ १ ॥
*पुंवद्वचनं च ॥ २ ॥
५३ वतोरिथुक् ।
५४ द्वेस्तीयः ।
५५ त्रेः संप्रसारणं च ।
५६ विंशत्यादिभ्यस्तमडन्यतरस्याम् ।
५७ नित्यं शतादिमासार्धमाससंवत्सराच्च ।
५८ षष्ठ्यादेश्चासंख्यादेः ।
५९ मतौ छः सूक्तसाम्नोः ।
*छप्रकरणे अनेकपदादपि ॥ १ ॥
*सिद्धं तु प्रातिपदिकविज्ञानात् ॥ २ ॥
*स्वं रूपं शब्दस्याशब्दसंज्ञेति वचनात् ॥ ३ ॥
*आम्नायशब्दानामान्यभाव्यं स्वरवर्णानुपूर्वी-देशकालनियतत्वात् ॥ ४ ॥
*पदैकदेशसुबलोपदर्शनाच्च ॥ ५ ॥
६० अध्यायानुवाकयोर्लुक् ।
*अध्यायानुवाकाभ्यां वा लुक् ॥ १ ॥
६१ विमुक्तादिभ्योऽण् ।
६२ गोषदादिभ्यो वुन् ।
६३ तत्र कुशलः पथः ।
६४ आकर्षादिभ्यः कन् ।
६५ धनहिरण्यात्कामे ।
*धनहिरण्यात्कामाभिधाने ॥ १ ॥
*षष्ठ्यर्थे ह्यनिष्टप्रसङ्गः ॥ २ ॥
६६ स्वाङ्गेभ्यः प्रसिते ।
६७ उदराट्ठगाद्यूने ।
६८ सस्येन परिजातः ।
६९ अंशं हारी ।
७० तन्त्रादचिरापहृते ।
७१ ब्राह्मणकोष्णिके संज्ञायाम् ।
७२ शीतोष्णाभ्यां कारिणि ।
७३ अधिकम् ।
७४ अनुकाभिकाभीकः कमिता ।
७५ पार्श्वेनान्विच्छति ।
७६ अयःशूलदण्डाजिनाभ्यां ठक्ठञौ ।
७७ तावतिथं ग्रहणमिति लुग्वा ।
*तावतिथं ग्रहणमिति लुग्वावचनानर्थक्यं विभाषाप्रकरणात् ॥ १ ॥
*तावतिथेन गृह्णातीति लुक् च ॥ २ ॥
७८ स एषां ग्रामणीः ।
७९ शृङ्खलमस्य बन्धनं करभे ।
*शृङ्खलमस्य बन्धनं करभ इत्यनिर्देशः ॥ १ ॥
*सिद्धं तु तद्वन्निर्देशाल्लुक् च ॥ २ ॥
८० उत्क उन्मनाः ।
८१ कालप्रयोजनाद्रोगे ।
८२ तदस्मिन्नन्नं प्राये संज्ञायाम् ।
*प्राये संज्ञायां वटकेभ्य इनिः ॥ १ ॥
८३ कुल्माषादञ् ।
८४ श्रोत्रियंश्छन्दोऽधीते ।
*श्रोत्रियंश्छन्दोऽधीत इति वाक्यार्थे पदवचनम् ॥१॥
*छन्दसो वा श्रोत्रभावः, तदधीत इति घंश्च ॥ २ ॥
८५ श्राद्धमनेन भुक्तमिनिठनौ ।
*इनिठनोः समानकालग्रहणम् ॥ १ ॥
*उक्तं वा ॥ २ ॥
८६ पूर्वादिनिः ।
८७ सपूर्वाच्च ।
८८ इष्टादिभ्यश्च ।
८९ छन्दसि परिपन्थिपरिपरिणौ पर्यवस्थातरि ।
९० अनुपद्यन्वेष्टा ।
९१ साक्षाद् द्रष्टरि संज्ञायाम् ।
९२ क्षेत्रियच्परक्षेत्रे चिकित्स्यः ।
*क्षेत्रियः श्रोत्रियवत् ॥ १ ॥
*परक्षेत्राद्वा तत्र चिकित्स्य इति परलोपो घच्च ॥२॥
९३ इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्र-जुष्टमिन्द्रदत्तमिति वा ।
९४ तदस्यास्त्यस्मिन्निति मतुप् ।
*मतुप्प्रभृतयः सन्मात्रे इति चेदतिप्रसङ्गः ॥ १ ॥
*उक्तं वा ॥ २ ॥
*गुणवचनेभ्यो मतुपो लुक् ॥ ३ ॥
*अव्यतिरेकात्सिद्धमिति चेद् दृष्टो व्यतिरेकः ॥ ४ ॥
*तथा च लिङ्गवचनसिद्धिः ॥ ५ ॥
९५ रसादिभ्यश्च ।
*रसादिभ्यः पुनर्वचनमन्यनिवृत्त्यर्थम् ॥ १ ॥
९६ प्राणिस्थादातो लजन्यतरस्याम् ।
९७ सिध्मादिभ्यश्च ।
*लजन्यतरस्यामिति समुच्चयः ॥ १ ॥
*पिच्छादिभ्यस्तुन्दादीनां नानायोगकरणं ज्ञापकमसमावेशस्य ॥ २ ॥
*वस्य च पुनर्वचनं सर्वविभाषार्थम् ॥ ३ ॥

९८ वत्सांसाभ्यां कामबले ।
९९ फेनादिलच्च ।
१०० लोमादिपामादिपिच्छादिभ्यः शनेलचः ।
*नप्रकरणे दद्रुा ह्रस्वत्वं च ॥ १ ॥
*विष्वगित्युत्तरपदलोपश्चाकृतसन्धेः ॥ २ ॥
१०१ प्रज्ञाश्रद्धार्चाभ्यो णः ।
*वृत्तेश्च ॥ १ ॥
१०२ तपःसहस्राभ्यां विनीनी ।
१०३ अण्च ।
*तपसो विन्वचनमण्विधानात् ॥ १ ॥
*अणूप्रकरणे ज्योत्स्नादिभ्य उपसंख्यानम् ॥ २ ॥
१०४ सिकताशर्कराभ्यां च ।
१०५ देशे लुबिलचौ च ।
१०६ दन्त उन्नत उरच् ।
१०७ ऊषसुषिमुष्कमधो रः ।
*रप्रकरणे खमुखकुञ्जेभ्य उपसंख्यानम् ॥ १ ॥
*नगाच्च ॥ २ ॥
१०८ द्युद्रुभ्यां मः ।
१०९ केशाद्वोऽन्यतरस्याम् ।
*वप्रकरणे मणिहिरण्याभ्यामुपसंख्यानम् ॥ १ ॥
*छन्दसीवनिपौ च ॥ २ ॥
*मेधारथाभ्यामिरन्निरचौ ॥ ३ ॥
११० गाण्ड्यजगात् संज्ञायाम् ।
१११ काण्डाण्डादीरन्नीरचौ ।
११२ रजःकृष्यासुतिपरिषदो वलच् ।
*वलच्प्रकरणेऽन्येभ्योऽपि दृश्यते ॥ १ ॥
११३ दन्तशिखात् संज्ञायाम् ।
११४ ज्योत्स्नातमिस्राशृङ्गिणोर्जस्विन्नूर्जस्वल-
गोमिन्मलिनमलीमसाः ।
११५ अत इनिठनौ ।
*इनिठनोरेकाक्षरात्प्रतिषेधः ॥ १ ॥
११६ व्रीह्यादिभ्यश्च ।
*शिखायवखदादिभ्यो नियमस्यावचनं निवर्तकत्वात् १
११७ तुन्दादिभ्य इलच्च ।
११८ एकगोपूर्वाट्ठञ् नित्यम् ।
११९ शतसहस्रान्ताच्च निष्कात् ।
१२० रूपादाहतप्रशंसयोर्यप् ।
*यप्प्रकरणेऽन्येभ्योऽपि दृश्यते ॥ १ ॥
१२१ अस्मायामेधास्रजो विनिः ।
१२२ बहुलं छन्दसि ।
*छन्दोविन्प्रकरणेऽष्ट्रामेखलाद्वयोभयरुजा-
हृदयानां दीर्घश्च ॥ १ ॥
*सर्वत्रामयस्य ॥ २ ॥
*शृङ्गवृन्दाभ्यामारकन् ॥ ३ ॥
*फलबर्हाभ्यामिनच् ॥ ४ ॥
*हृदयाच्चालुरन्यतरस्याम् ॥ ५ ॥
*शीतोष्णतृप्रेभ्यस्तन्न सहते ॥ ६ ॥
*हिमाच्चेलुः ॥ ७ ॥
*बलाच्चोलः ॥ ८ ॥
*वातात्समूहे च ॥ ९ ॥
*पर्वमरुद्भ्यां तप् ॥ १० ॥
*ददातिवृत्तं वा ॥ ११ ॥
१२३ ऊर्णाया युस् ।
१२४ वाचो ग्मिनिः ।
१२५ आलजाटचौ बहुभाषिणि ।
१२६ स्वामिन्नैश्वर्ये ।
१२७ अर्शआदिभ्योऽच् ।
१२८ द्वन्द्वोपतापगर्ह्यात्प्राणिस्थादिनिः ।
१२९ वातातीसाराभ्यां कुक्च ।
१३० वयसि पूरणात् ।
१३१ सुखादिभ्यश्च ।
१३२ धर्मशीलवर्णान्ताच्च ।
१३३ हस्ताज्जातौ ।
१३४ वर्णाद्ब्रह्मचारिणि ।
१३५ पुष्करादिभ्यो देशे ।
*इनि प्रकरणे बलाद्बाहूरुपूर्वपदादुपसंख्यानम् ॥१॥
*सर्वादेश्च ॥ २ ॥
*अर्थाच्चासंनिहिते ॥ ३ ॥
*तदन्ताच्च ॥ ४ ॥
१३६ बलादिभ्यो मतुबन्यतरस्याम् ।
१३७ संज्ञायां मन्माभ्याम् ।
१३८ कंशंभ्यां बभयुस्तितुतयसः ।
१३९ तुन्दिबलिवटेर्भः ।
१४० अहंशुभयोर्युस् ।

## अथ पञ्चमेऽध्याये
### तृतीयः पादः ।

१ प्राग्दिशो विभक्तिः ।
*विभक्तित्वे प्रयोजनमित्प्रतिषेधः ॥ १ ॥
*तौ चोक्तम् ॥ २ ॥
*इदमो विभक्तिस्वरश्च ॥ ३ ॥
*त्यदादिविधयश्च ॥ ४ ॥
२ किंसर्वनामबहुभ्योऽद्व्यादिभ्यः ।
*बहुग्रहणे संख्याग्रहणम् ॥ १ ॥
*द्व्यादिप्रतिषेधात्किम उपसंख्यानम् ॥ २ ॥
३ इदम इश् ।

४ एतेतौ रथोः ।
५ एतदोऽन् ।
*एतद इति योगविभागः ॥ १ ॥
*एतदश्च थम उपसंख्यानम् ॥ २ ॥
६ सर्वस्य सोऽन्यतरस्यां दि ।
७ पञ्चम्यास्तसिल् ।
१० सप्तम्यास्त्रल् ।
*तसिलादयो विभक्त्यादेशाश्चेत् सुब्लुक्स्वरगुणदीर्घैत्त्वौत्त्वस्यायादिविधिप्रतिषेधः ॥ १ ॥
*पञ्चमीनिर्देशात्सिद्धम् ॥ २ ॥
*अनादेशे स्वार्थविज्ञानात्समानशब्दाप्रतिषेधः ॥ ३ ॥
८ तसेश्च ।
*तसेस्तसिल्वचनं स्वरार्थम् ॥ १ ॥
९ पर्यभिभ्यां च ।
*पर्यभिभ्यां च सर्वोभयार्थे ॥ १ ॥
११ इदमो हः ।
१२ किमोऽत् ।
१३ वा ह च च्छन्दसि ।
१४ इतराभ्योऽपि दृश्यन्ते ।
१५ सर्वैकान्यकिंयत्तदः काले दा ।
१६ इदमो र्हिल् ।
१७ अधुना ।
१८ दानीं च ।
*दानीमिति निपातनात्स्वरसिद्धिः ॥ १ ॥
*उक्तं वा ॥ २ ॥
१९ तदो दा च ।
*तदो दावचनमनर्थकं विहितत्वात् ॥ १ ॥
२० तयोर्दार्हिलौ च च्छन्दसि ।
*तयोरिति प्रातिपदिकनिर्देशः ॥ १ ॥
२१ अनद्यतने र्हिलन्यतरस्याम् ।
२२ सद्यःपरुत्परार्यैषमःपरेद्यव्यद्यपूर्वेद्युरन्येद्युरन्यतरेद्युरितरेद्युरपरेद्युरधरेद्युरुभयेद्युरुत्तरेद्युः ।
*समानस्य सभावो द्यश्चाहनि ॥ १ ॥
*पूर्वपूर्वतरयोः परभाव उदारी च संवत्सरे ॥ २ ॥
*इदमः समसण् ॥ ३ ॥
*परस्मादेद्यव्यहनि ॥ ४ ॥
*इदमोऽश्भावो द्यश्च ॥ ५ ॥
*पूर्वान्यान्यतरेतरापराधरोभयोत्तरेभ्य एद्युसुच् ॥ ६ ॥
*द्युश्चोभयात् ॥ ७ ॥
२३ प्रकारवचने थाल् ।
२४ इदमस्थमुः ।
२५ किमश्च ।
२६ था हेतौ च च्छन्दसि ।
२७ दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः ।
२८ दक्षिणोत्तराभ्यामतसुच् ।
२९ विभाषा परावराभ्याम् ।
३० अञ्चेर्लुक् ।
३१ उपर्युपरिष्टात् ।
*ऊर्ध्वस्योपभावो रिल्रिष्टातिलौ च ॥ १ ॥
३२ पश्चात् ।
*अपरस्य पश्चभाव आतिश्च प्रत्ययः ॥ १ ॥
*दिक्पूर्वपदस्य च ॥ २ ॥
*अर्धोत्तरपदस्य च समासे ॥ ३ ॥
*अर्धे च ॥ ४ ॥
३३ पश्च पश्चा च च्छन्दसि ।
३४ उत्तराधरदक्षिणादातिः ।
३५ एनबन्यतरस्यामदूरेऽपञ्चम्याः ।
*अपञ्चम्या इति प्रागसः ॥ १ ॥
३६ दक्षिणादाच् ।
३७ आहि च दूरे ।
३८ उत्तराच्च ।
३९ पूर्वाधरावराणामसि पुरधवश्चैषाम् ।
४० अस्ताति च ।
४१ विभाषाऽवरस्य ।
४२ संख्याया विधार्थे धा ।
*धाविधानं धात्वर्थेपृथग्भावे ॥ १ ॥
४३ अधिकरणविचाले च ।
४४ एकाद्धो ध्यमुञन्यतरस्याम् ।
*सहभावे ध्यमुञ् ॥ १ ॥
४५ द्वित्र्योश्च धमुञ् ।
*धमुञन्तात् स्वार्थे डदर्शनम् ॥ १ ॥
४६ एधाच्च ।
४७ याप्ये पाशप् ।
*पाशपि कुत्सितग्रहणम् ॥ १ ॥
४८ पूरणाद्भागे तीयादन् ।
४९ प्रागेकादशभ्योऽच्छन्दसि ।
५० षष्ठाष्टमाभ्यां ञ च ।
५१ मानपश्वङ्गयोः कन्लुकौ च ।
५२ एकादाकिनिच्चासहाये ।
*एकादाकिनिचि द्विबह्वर्थे प्रत्ययविधानम् ॥ १ ॥
*सिद्धं तु संख्यादेशवचनात् ॥ २ ॥
*असहायस्य वा ॥ ३ ॥

५३ भूतपूर्वे चरट् ।
५४ षष्ठ्या रूप्य च ।
५५ अतिशायने तमबिष्ठनौ ।
*अतिशायने बहुव्रीहावुक्तम् ॥ १ ॥
*शुक्लतरस्य शुक्लभावात्प्रकृतेः प्रत्ययविज्ञानम् ॥ २ ॥
*तदन्ताच्च स्वार्थे छन्दसि दर्शनं श्रेष्ठतमायेति ॥३॥
५६ तिङश्च ।
५७ द्विवचनविभज्योपपदे तरबीयसुनौ ।
*तरबीयसुनोरेकद्रव्यस्योत्कर्षापकर्षयोरुपसंख्यानम् १
*सिद्धं तु गुणप्रधानत्वात् ॥ २ ॥
५८ अजादी गुणवचनादेव ।
५९ तुश्छन्दसि ।
६० प्रशस्यस्य श्रः ।
६१ ज्य च ।
६२ वृद्धस्य च ।
६३ अन्तिकबाढयोर्नेदसाधौ ।
६४ युवाल्पयोः कनन्यतरस्याम् ।
६५ विन्मतोर्लुक् ।
६६ प्रशंसायां रूपप् ।
*प्रकृतेर्लिङ्गवचनाभावात् तिङ्प्रकृतेरम्भाववचनम् १
*सिद्धं तु क्रियाप्रधानत्वात् ॥ २ ॥
*वृषलादिभ्य उपसंख्यानम् ॥ ३ ॥
*सिद्धं तु प्रकृत्यर्थवैस्पष्ट्यवचनात् ॥ ४ ॥
६७ ईषदसमाप्तौ कल्पब्देश्यदेशीयरः ।
*ईषदसमाप्तौ क्रियाप्रधानत्वाल्लिङ्गवचनानुपपत्तिः १
*प्रकृत्यर्थविशेषणत्वात्सिद्धम् ॥ २ ॥
*प्रकृत्यर्थे चेल्लिङ्गवचनानुपपत्तिः ॥ ३ ॥
*सिद्धं तु तत्संबन्ध उत्तरपदार्थे प्रत्ययवचनात् ॥४॥
*क्तान्तात्प्रत्ययविधानानुपपत्तिः, क्तस्य भूतकाल-
लक्षणत्वात्कल्पादीनां चासमासिवचनात् ॥ ५ ॥
*सिद्धं तु आशंसायां भूतवद्वचनात् ॥ ६ ॥
६८ विभाषा सुपो बहुच्पुरस्तात्तु ।
*बहुचि सुब्ग्रहणात्पूर्वत्र तिङो विधानम् ॥ १ ॥
*स्वरः प्रातिपदिकत्वात् ॥ २ ॥
*तुग्रहणं नित्यपूर्वार्थम् ॥ ३ ॥
*तमादिभ्यः कल्पादयो विप्रतिषेधेन ॥ ४ ॥
*तमादिरीषत्प्रधानत्वात् ॥ ५ ॥
६९ प्रकारवचने जातीयर् ।
७० प्रागिवात् कः ।
७१ अव्ययसर्वनाम्नामकच्प्राक् टेः ।
७२ कस्य च दः ।
*अकच्प्रकरणे तूष्णीमः काम् ॥ १ ॥
*शीले को मलोपश्च ॥ २ ॥
*क्षम्बहुजकक्षु नानादेशत्वादुत्सर्गप्रतिषेधः ॥ ३ ॥
*कविधेस्तमादयः पूर्वविप्रतिषिद्धम् ॥ ४ ॥
*कदाचित् छिन्नकतरादयः ॥ ५ ॥
*एकदेशिप्रधानश्च समासः ॥ ६ ॥
*उत्तरपदार्थप्रधानश्च संज्ञायां कन्विध्यर्थम् ॥ ७ ॥
*कदाचिद्द्वन्द्वः ॥ ८ ॥
७३ अज्ञाते ।
७४ कुत्सिते ।
*कुत्सितादीनामर्थे चेल्लिङ्गवचनानुपपत्तिः ॥ १ ॥
*कुत्सितादिसमानाधिकरणादिति चेदतिप्रसङ्गो
यथा टाबादिषु ॥ २ ॥
*सिद्धं तु येन कुत्सितादिवचनं तद्युक्तात्स्वार्थे
प्रत्ययविधानात् ॥ ३ ॥
७५ संज्ञायां कन् ।
७६ अनुकम्पायाम् ।
७७ नीतौ च तद्युक्तात् ।
७८ बह्वचो मनुष्यनाम्नष्ठज्वा ।
७९ घनिलचौ च ।
८० प्राचामुपादेरडज्वुचौ च ।
८१ जातिनाम्नः कन् ।
८२ अजिनान्तस्योत्तरपदलोपश्च ।
८३ ठाजादावूर्ध्वं द्वितीयादचः ।
*ठग्रहणमुको द्वितीयत्वे कविधानार्थम् ॥ १ ॥
*अजादिलक्षणे हि माथितिकादिवत् प्रसङ्गः ॥ २ ॥
*द्वितीयादचो लोपे सन्ध्यक्षरद्वितीयत्वे
तदादेर्लोपवचनम् ॥ ३ ॥
८४ शेवलसुपरिविशालवरुणार्यमादीनां
तृतीयात् ।
*वरुणादीनां च तृतीयात् स चाकृतसंधीनाम् ॥१॥
*षडिके जरत्वे उक्तम् ॥ २ ॥
*वाचिकादिषु पदवृत्तप्रतिषेधः ॥ ३ ॥
*सिद्धमेकाक्षरपूर्वपदानामुत्तरपदलोपवचनात् ॥ ४ ॥
*षषष्ठाजादिवचनात् सिद्धम् ॥ ५ ॥
८५ अल्पे ।
८६ ह्रस्वे ।
८७ संज्ञायां कन् ।
८८ कुटीशमीशुण्डाभ्यो रः ।
*कुटीशमीशुण्डाभ्यः प्रत्ययसंनियोगेन पुंवद्वचनम् १
*उक्तं वा ॥ २ ॥
८९ कुत्वा डुपच् ।
९० कासूगोणीभ्यां ष्टरच् ।
९१ वत्सोक्षाश्वर्षभेभ्यश्च तनुत्वे ।
*वत्सादिभ्यस्तनुत्वे कार्श्ये प्रतिषेधः ॥ १ ॥
९२ किंयत्तदो निर्धारणे द्वयोरेकस्य डतरच् ।

९३ वा बहूनां जातिपरिप्रश्ने डतमच् ।
*किमादीनां द्विबह्वर्थे प्रत्ययविधानादुपाध्यानर्थक्यम् ॥ १ ॥
९४ एकाच्च प्राचाम् ।
*प्राग्वचनानर्थक्यं च विभाषाप्रकरणात् ॥ १ ॥
९५ अवक्षेपणे कन् ।
९६ इवे प्रतिकृतौ ।
९७ संज्ञायां च ।
९८ लुम्मनुष्ये ।
*लिङ्गसिद्ध्यर्थम् लुम्मनुष्ये ॥ १ ॥
९९ जीविकार्थे चापण्ये ।
१०० देवपथादिभ्यश्च ।
१०१ वस्तेर्ढञ् ।
१०२ शिलाया ढः ।
१०३ शाखादिभ्यो यः ।
१०४ द्रव्यं च भव्ये ।
१०५ कुशाग्राच्छः ।
१०६ समासाच्च तद्विषयात् ।
*अणो गोत्राद्गोत्रवचनात् ॥ १ ॥
१०७ शर्करादिभ्योऽण् ।
१०८ अङ्गुल्यादिभ्यष्ठक् ।
१०९ एकशालायाष्ठजन्यतरस्याम् ।
११० कर्कलोहितादीकक् ।
१११ प्रत्नपूर्वविश्वेमात्थाल्छन्दसि ।
११२ पूगाञ्ञ्योऽग्रामणीपूर्वात् ।
११३ व्रातच्फञोरस्त्रियाम् ।
११४ आयुधजीविसंघाञ्ञ्यड्वाहीकेष्वब्राह्मणराजन्यात् ।
११५ वृकाट्टेण्यण् ।
११६ दामन्यादित्रिगर्तषष्ठाच्छः ।
११७ पर्श्वादियौधेयादिभ्योऽणञौ ।
११८ अभिजिद्विदभृच्छालावच्छिखावच्छमीवदूर्णावच्छ्रुमदणो यञ् ।
११९ ञ्यादयस्तद्राजाः ।

## अथ पञ्चमेऽध्याये
### चतुर्थः पादः ।

१ पादशतस्य संख्यादेर्वीप्सायां वुन् लोपश्च ।
*पादशतग्रहणमनर्थकमन्यत्रापि दर्शनात् ॥ १ ॥
२ दण्डव्यवसर्गयोश्च ।
३ स्थूलादिभ्यः प्रकारवचने कन् ।
*कन्प्रकरणे चञ्चद्बृहतोरुपसंख्यानम् ॥ १ ॥
४ अनत्यन्तगतौ क्तात् ।
*अनत्यन्तगतौ क्तान्तात्तमादयः पूर्वविप्रतिषिद्धम् १
*तदन्ताच्च स्वार्थे कन्वचनम् ॥ २ ॥
५ न सामिवचने ।
*सामिवचने प्रतिषेधानार्थक्यं प्रकृत्यभिहितत्वात् १
६ बृहत्या आच्छादने ।
७ अषडक्षाशितङ्ग्वलंकर्मालंपुरुषाध्युत्तरपदात्खः ।
*अध्युत्तरपदात् प्रत्ययविधानानुपपत्तिर्विग्रहाभावात् ॥ १ ॥
*तस्मात्तत्रेदमिति सधीनट् ॥ २ ॥
८ विभाषाऽञ्चेरदिक् स्त्रियाम् ।
९ जात्यन्ताच्छ बन्धुनि ।
१० स्थानान्ताद्विभाषा सस्थानेनेति चेत् ।
११ किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे ।
१२ अमु च च्छन्दसि ।
१३ अनुगादिनष्ठक् ।
१४ णचः स्त्रियामञ् ।
१५ अणिनुणः ।
१६ विसारिणो मत्स्ये ।
१७ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच् ।
१८ द्वित्रिचतुर्भ्यः सुच् ।
१९ एकस्य सकृच्च ।
२० विभाषा बहोर्धाऽविप्रकृष्टकाले ।
२१ तत्प्रकृतवचने मयट् ।
२२ समूहवच्च बहुषु ।
२३ अनन्तावसथेतिहभेषजाञ्ञ्यः ।
२४ देवतान्तात्तादर्थ्ये यत् ।
२५ पादार्घाभ्यां च ।
२६ अतिथेर्ञ्यः ।
२७ देवात्तल् ।
*तलि स्त्रीलिङ्गवचनम् ॥ १ ॥
*उक्तं वा ॥ २ ॥
२८ अवेः कः ।
२९ यावादिभ्यः कन् ।
३० लोहितान्मणौ ।
*लोहिताल्लिङ्गबाधनं वा ॥ १ ॥
*अक्षरसमूहे छन्दस उपसंख्यानम् ॥ २ ॥
*छन्दसि बहुभिर्वसव्यैरुपसंख्यानम् ॥ ३ ॥
*अग्निरीशे वसव्यस्येति ॥ ४ ॥
*उक्तं वा ॥ ५ ॥
*नवस्य नू त्नप्तनखाश्च ॥ ६ ॥
*नश्च पुराणे प्रात् ॥ ७ ॥

३१ वर्णे चानित्ये ।
३२ रक्ते ।
३३ कालाच्च ।
३४ विनयादिभ्यष्ठक् ।
३५ वाचो व्याहृतार्थायाम् ।
३६ तद्युक्तात्कर्मणोऽण् ।
*अण्प्रकरणे कुलालवरुडनिषादचण्डालामित्रेभ्यश्छन्दसि ॥ १ ॥
*भागरूपनामभ्यो धेयः ॥ २ ॥
*मित्राच्छन्दसि ॥ ३ ॥
*अणमित्राच्च ॥ ४ ॥
*आग्नीध्रसाधारणादञ् ॥ ५ ॥
*अयवसमरुद्भ्यां छन्दसि ॥ ६ ॥
*नवसूरमर्तयविष्ठेभ्यो यत् ॥ ७ ॥
*क्षेमाद्यः ॥ ८ ॥
३७ ओषधेरजातौ ।
३८ प्रज्ञादिभ्यश्च ।
३९ मृदस्तिकन् ।
४० सस्नौ प्रशंसायाम् ।
४१ वृकज्येष्ठाभ्यां तिल्तातिलौ च च्छन्दसि ।
४२ बह्वल्पार्थाच्छस्कारकादन्यतरस्याम् ।
*बह्वल्पार्थान्मङ्गलामङ्गलवचनम् ॥ १ ॥
४३ संख्यैकवचनाच्च वीप्सायाम् ।
४४ प्रतियोगे पञ्चम्यास्तसिः ।
*तसिप्रकरण आद्यादिभ्य उपसंख्यानम् ॥ १ ॥
४५ अपादाने चाहीयरुहोः ।
४६ अतिग्रहाव्यथनक्षेपेष्वकर्तरि तृतीयायाः ।
४७ हीयमानपापयोगाच्च ।
४८ षष्ठ्या व्याश्रये ।
४९ रोगाच्चापनयने ।
५० कृभ्वस्तियोगे संपद्यकर्तरि च्विः ।
*च्विविधावभूततद्भावग्रहणम् ॥ १ ॥
*प्रकृतिविवक्षाग्रहणं वा ॥ २ ॥
*समीपादिभ्य उपसंख्यानम् ॥ ३ ॥
५१ अरुर्मनश्चक्षुश्चेतोरहोरजसां लोपश्च ।
५२ विभाषा साति कार्त्स्न्ये ।
५३ अभिविधौ संपदा च ।
५४ तदधीनवचने ।
५५ देये त्रा च ।
५६ देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम् ।
५७ अव्यक्तानुकरणाद्द्व्यजवरार्धादनितौ डाच् ।
*डाचि विवकरणं विशेषणार्थम् ॥ १ ॥

५८ कृञो द्वितीयतृतीयशम्बबीजात् कृषौ ।
५९ संख्यायाश्च गुणान्तायाः ।
६० समयाच्च यापनायाम् ।
६१ सपत्रनिष्पत्रादतिव्यथने ।
६२ निष्कुलान्निष्कोषणे ।
६३ सुखप्रियादानुलोम्ये ।
६४ दुःखात् प्रातिलोम्ये ।
६५ शूलात् पाके ।
६६ सत्यादशपथे ।
६७ मद्रात् परिवापणे ।
६८ समासान्ताः ।
*प्रयोजनमव्ययीभावद्विगुद्वन्द्वतत्पुरुषबहुव्रीहिसंज्ञाः ॥ १ ॥
६९ न पूजनात् ।
*पूजायां स्वतिग्रहणम् ॥ १ ॥
*प्राग्बहुव्रीहिग्रहणं च ॥ २ ॥
७० किमः क्षेपे ।
७१ नञस्तत्पुरुषात् ।
७२ पथो विभाषा ।
७३ बहुव्रीहौ संख्येये डजबहुगणात् ।
*डच्प्रकरणे संख्यायास्तत्पुरुषस्योपसंख्यानं निस्त्रिंशाद्यर्थम् ॥ १ ॥
*अन्यत्राधिकलोपात् ॥ २ ॥
७४ ऋक्पूरब्धूःपथामानक्षे ।
७५ अच्प्रत्यन्ववपूर्वात् सामलोम्नः ।
७६ अक्ष्णोऽदर्शनात् ।
७७ अचतुरविचतुरसुचतुरस्त्रीपुंसधेन्वनडुहर्क्सामवाङ्मनसाक्षिभ्रुवदारगवोर्वष्ठीवपदष्ठीवनक्तन्दिवरात्रिन्दिवाहर्दिवसरजसनिःश्रेयसपुरुषायुषद्व्यायुषत्र्यायुषर्ग्यजुषजातोक्षमहोक्षवृद्धोक्षोपशुनगोष्ठश्वाः ।
*चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानम् ॥ १ ॥
७८ ब्रह्महस्तिभ्यां वर्चसः ।
७९ अवसमन्धेभ्यस्तमसः ।
८० श्वसोऽवसीयः श्रेयसः ।
८१ अन्ववतप्ताद्रहसः ।
८२ प्रतेरुरसः सप्तमीस्थात् ।
८३ अनुगवमायामे ।
८४ द्विस्तावा त्रिस्तावा वेदिः ।
८५ उपसर्गादध्वनः ।
८६ तत्पुरुषस्याङ्गुलेः संख्याव्ययादेः ।

८७ अहःसर्वैकदेशसंख्यातपुण्याच्च रात्रेः ।

*अहर्ग्रहणं द्वन्द्वार्थम् ॥ १ ॥

८८ अह्नोऽह्न एतेभ्यः ।

*अह्नोऽह्नवचनानर्थक्यं चाह्नष्टखोर्नियमवचनात् ॥ १ ॥

८९ न संख्यादेः समाहारे ।
९० उत्तमैकाभ्यां च ।
९१ राजाहःसखिभ्यष्टच् ।
९२ गोरतद्धितलुकि ।
९३ अग्राख्यायामुरसः ।
९४ अनोऽश्मायःसरसां जातिसंज्ञयोः ।
९५ ग्रामकौटाभ्यां च तक्ष्णः ।
९६ अतेः शुनः ।
९७ उपमानादप्राणिषु ।
९८ उत्तरमृगपूर्वाच्च सक्थ्नः ।
९९ नावो द्विगोः ।
१०० अर्धाच्च ।
१०१ खार्याः प्राचाम् ।
१०२ द्वित्रिभ्यामञ्जलेः ।
१०३ अनसन्तान्नपुंसकाच्छन्दसि ।
१०४ ब्रह्मणो जानपदाख्यायाम् ।
१०५ कुमहद्भ्यामन्यतरस्याम् ।
१०६ द्वन्द्वाच्चुदषहान्तात् समाहारे ।
१०७ अव्ययीभावे शरत्प्रभृतिभ्यः ।
१०८ अनश्च ।
१०९ नपुंसकादन्यतरस्याम् ।
११० नदीपौर्णमास्याग्रहायणीभ्यः ।
१११ झयः ।
११२ गिरेश्च सेनकस्य ।
११३ बहुव्रीहौ सक्थ्यक्ष्णोः स्वाङ्गात्षच् ।

*षचि प्रत्ययान्तरकरणमनन्तोदात्तार्थम् ॥ १ ॥

११४ अङ्गुलेर्दारुणि ।
११५ द्वित्रिभ्यां ष मूर्ध्नः ।

*मूर्ध्नश्च षवचनम् ॥ १ ॥

११६ अप्पूरणीप्रमाण्योः ।

*अपि प्रधानपूरणीग्रहणम् ॥ १ ॥
*नेतुर्नक्षत्रे उपसंख्यानम् ॥ २ ॥
*छन्दसि च ॥ ३ ॥
*मासात् भृतिप्रत्ययपूर्वपदाट्ठञ्विधिः ॥ ४ ॥

११७ अन्तर्बहिर्भ्यां च लोम्नः ।
११८ अञ्नासिकायाः संज्ञायां नसं चास्थूलात् ।
११९ उपसर्गाच्च ।
१२० सुप्रातसुश्वसुदिवशारिकुक्षचतुरश्रैणी-पदाजपदप्रोष्ठपदाः ।
१२१ नञ्दुःसुभ्यो हलिसक्थ्योरन्यतरस्याम् ।
१२२ नित्यमसिच् प्रजामेधयोः ।
१२३ बहुप्रजाश्छन्दसि ।
१२४ धर्मादनिच् केवलात् ।
१२५ जम्भा सुहरिततृणसोमेभ्यः ।
१२६ दक्षिणेर्मा लुब्धयोगे ।
१२७ इच् कर्मव्यतिहारे ।
१२८ द्विदण्ड्यादिभ्यश्च ।
१२९ प्रसम्भ्यां जानुनोर्ज्ञुः ।
१३० ऊर्ध्वाद्विभाषा ।
१३१ ऊधसोऽनङ् ।

*ऊधसोऽनङि स्त्रीग्रहणम् ॥ १ ॥

१३२ धनुषश्च ।
१३३ वा संज्ञायाम् ।
१३४ जायाया निङ् ।
१३५ गन्धस्येदुत्पूतिसुसुरभिभ्यः ।

*गन्धस्येत्त्वे तदेकान्तग्रहणम् ॥ १ ॥

१३६ अल्पाख्यायाम् ।
१३७ उपमानाच्च ।
१३८ पादस्य लोपोऽहस्त्यादिभ्यः ।
१३९ कुम्भपदीषु च ।
१४० संख्यासुपूर्वस्य ।
१४१ वयसि दन्तस्य दतृ ।
१४२ छन्दसि च ।
१४३ स्त्रियां संज्ञायाम् ।
१४४ विभाषा श्यावारोकाभ्याम् ।
१४५ अग्रान्तशुद्धशुभ्रवृषवराहेभ्यश्च ।
१४६ ककुदस्यावस्थायां लोपः ।
१४७ त्रिककुत् पर्वते ।
१४८ उद्विभ्यां काकुदस्य ।
१४९ पूर्णाद्विभाषा ।
१५० सुहृद्दुर्हृदौ मित्रामित्रयोः ।
१५१ उरःप्रभृतिभ्यः कप् ।
१५२ इनः स्त्रियाम् ।
१५३ नद्यृतश्च ।
१५४ शेषाद्विभाषा ।
१५५ न संज्ञायाम् ।
१५६ ईयसश्च ।

*ईयस उपसर्जनदीर्घत्वं च ॥ १ ॥
*पुंवद्वचनात्सिद्धम् ॥ २ ॥

१५७ वन्दिते भ्रातुः ।
१५८ ऋतश्छन्दसि ।
१५९ नाडीतन्त्र्योः स्वाङ्गे ।
१६० निष्प्रवाणिश्च ।

चतुर्थपञ्चमाध्यायगतसूत्रवार्तिकपाठः समाप्तः ॥

( श्लोकार्थोपसंहारभाष्यम् )

डारौरसः कृते टेरे यथा द्वित्वं प्रसारणे ॥
समसंख्येन नार्थोऽस्ति सिद्धं स्थानेऽर्थतोऽन्तरः ॥
आन्तर्यतो व्यवस्था त्रय एवेमे भवन्तु सर्वेषाम्॥
टेरेत्वं च परत्वात्कृतेऽपि तस्मिन्निमे सन्तु ॥

( प्रदीपः ) डारौरसः कृते टेर इति । परत्वाट्टेरेत्वे पुनः प्रसङ्गविज्ञानाड्डारौरसो भवन्ति । यथेजतुरीजुरिति कृते सारणे द्विर्वचनम् ॥ एष एवार्थ आर्यया दर्शितः—आन्त- इति । य एवामी त्रयः श्रूयन्ते त एव सर्वेषां सन्तु ॥

( डादेशे सर्वादेशत्वाधिकरणम् )

( १६७३ वार्तिकम् ॥ ४ ॥ )

## ॥ * ॥ डाविकारस्य शित्करणं सर्वादेशार्थम् ॥ * ॥

( भाष्यम् ) डाविकारः शित्कर्तव्यः । किं प्रयोजनम् ? । सर्वादेशार्थम् "शित्सर्वस्य" इति सर्वादेशो यथा स्यात् । अक्रियमाणे हि शकारे 'अलोऽन्त्यस्य विधयो भवन्ति' इत्यन्त्यस्य प्रसज्येत ॥

( प्रदीपः ) डाविकार इति । डादेश इत्यर्थः । नानुबन्धकृतमनेकाल्त्वमित्यन्त्यस्य स्यादिति डा शकव्यः ॥

( उद्योतः ) डाया विकारे इत्यर्थेऽनुपपत्तिरत आह—डादेश इति ॥ कर्मधारय इति भावः ॥ नानुबन्धकृतमिति । अनुबन्धत्वयोग्यकृतमित्यर्थः । ध्वनितं चेदमनेकाल्शिदिति सूत्रे भाष्ये ॥

( १६७४ वार्तिकम् ॥ ५ ॥ )

## ॥ * ॥ निघातप्रसङ्गस्तु ॥ * ॥

( भाष्यम् ) निघातस्तु प्राप्नोति । श्वः कर्ता । तासेः परं लसार्वधातुकमनुदात्तं भवतीत्येष स्वरः प्राप्नोति ॥

( प्रदीपः ) श्वः कर्तेति । तिपो डादेशस्तस्य तास्यनुदात्तेन्ङिदित्यनुदात्तत्वं प्राप्नोति । यस्तु तिङ्ङतिङ इति निघातः स नलुडिति प्रतिषिद्धः ॥

( उद्योतः ) भाष्ये—निघातप्रसङ्गस्त्विति । शित्वेऽशित्वे च सर्वथाऽयं दोष इति सूचयितुं तुशब्दः ॥ ननु श्वःपदयोगे तिङन्तनिघात एव भविष्यतीति किमनेन लसार्वधातुकानुदात्तत्वकारेणेत्यत आह—यस्त्विति ॥

( प्रथमवार्तिकप्रत्याख्यानभाष्यम् )

यत्तावदुच्यते—*डाविकारस्य शित्करणं सर्वादेशार्थम्* इति ॥

( १६७५ शित्करणप्रत्याख्यानवार्तिकम् ॥ ६ ॥ )

## ॥ * ॥ सिद्धमलोन्त्यविकारात् ॥ * ॥

( भाष्यम् ) सिद्धमेतत् ॥ कथम् ? । अलोन्त्यविकारात् ॥

( आक्षेपभाष्यम् )

अस्त्वयमलोन्त्यस्य । का रूपसिद्धिः—कर्ता ? ॥

( १६७६ समाधानवार्तिकम् ॥ ७ ॥ )

## ॥ * ॥ डिति टेर्लोपाल्लोपः ॥ * ॥

( भाष्यम् ) डिति टेर्लोपेन लोपो भविष्यति ॥

( प्रदीपः ) डितीति । आकारे डिति परतः सतकारस्य टिसंज्ञकस्य लोपः ॥

( बाधकभाष्यम् )

अभत्वान्न प्राप्नोति ॥

( समाधानसाधकभाष्यम् )

डित्करणसामर्थ्याद्भविष्यति ॥

( प्रदीपः ) डित्करणसामर्थ्यादिति । तत एवानङ्गस्यापीति बोद्धव्यम्, नह्यन्त्यस्य डादेशे कृते सतकारमङ्गम्, प्रत्यये परतोऽङ्गसंज्ञाविधानात् ॥

( १६७७ शित्करणप्रत्याख्यानवार्तिकम् ॥ ८ ॥ )

## ॥ * ॥ अनित्त्वाद्वा ॥ * ॥

( भाष्यम् ) अथ वा अनित्त्वादेतत्सिद्धम् ॥ किमिदमनित्त्वादिति ? । अन्त्यस्यायं स्थाने भवन्प्रत्ययः स्यात् । असत्यां प्रत्ययसंज्ञायामित्संज्ञा न । असत्यामित्संज्ञायां लोपो न । असति लोपेऽनेकाल् । यदानेकाल् तदा सर्वादेशः । यदा सर्वादेशः तदा प्रत्ययः । यदा प्रत्ययस्तदेत्संज्ञा । यदेत्संज्ञा तदा लोपः ॥

( प्रदीपः ) अनित्त्वादिति । अनित्संज्ञकत्वादित्यर्थः । अन्त्यस्येति । प्रत्ययस्य ह्यवयवः स्यात्, न तु प्रत्ययः, तकारादेः समुदायस्य प्रत्ययत्वात् ॥

( उद्योतः ) भाष्ये—अनित्त्वाद्वेति । इयमेकदेशयुक्तिः ॥ अनुबन्धत्वयोग्यत्वेन तत्कृतानेकाल्त्वाभावात् ॥ शुद्ध इत्यादौ प्रत्ययशब्दः उपदिश्यमानप्रत्ययावयवपरोऽपीति अन्त्यादेशेऽपि इत्संज्ञासिद्धिः ॥

( १६७८ शित्करणप्रत्याख्यानवार्तिकम् ॥ ९ ॥ )

## ॥ * ॥ प्रश्लिष्टनिर्देशाद्वा ॥ * ॥

( भाष्यम् ) अथ वा प्रश्लिष्टनिर्देशोयम्—डा आ डा । सः "अनेकाल्शित्सर्वस्य" इति सर्वादेशो भविष्यति ॥

---

१ तसिल्, टेरेत्वे इत्यर्थः । इमे, डारौरसः । ( र. ना. )

२ तिप इकारस्य डादेशे तकारश्रवणापत्तिरिति भावः ।

३ अचोन्त्यादि समुदायपदेन 'आसत' इति समुदायस्य ग्रहणेन सनकारस्यैव टिसंज्ञकत्वादिति भावः ।

(प्रदीपः) प्रश्लिष्टनिर्देशादिति । तत्रानेन कृतैकादेशेन समुदायः प्रत्याख्यते । सोनेकाल्त्वात् सर्वादेशः प्रवर्तते । सर्वादेशे च तस्मिन् कृते एकादेशः क्रियते ॥

(उद्द्योतः) सर्वादेशे च तस्मिन् कृते एकादेश इति । कृतैकादेशनिर्देशसामर्थ्याद् आदेशकाले एकादेशस्य नैव प्रवृत्तिरित्यर्थः ॥

(प्रत्याख्याननिराकरणभाष्यम्)

यदा तर्ह्ययमन्त्यस्य स्थाने भवति तदा तिङ्ग्रहणेन ग्रहणं न प्राप्नोति ॥

(प्रदीपः) सिद्धमलोन्त्यविकारादिति यदुक्तं तत्र दोषमुद्भावयति—यदा तर्हीति । अक्तपरिमाणस्य तिङ्संज्ञासंबन्धात्तिशब्दस्यान्त्यादेशे कृते रूपान्तरयोगात्तिङ्ग्रहणेनाग्रहणात्पदत्वं न स्यादित्यर्थः ॥

(उद्द्योतः) ननु तिङवयवमादायैव सा किं न स्यादत आह—अक्तपरिमाणस्येति ॥

(१६७९ प्रत्याख्यानसाधकवार्तिकम् ॥ १० ॥)

॥ * ॥ तिङ्ग्रहणमेकदेशविकृतस्यानन्यत्वात् ॥ * ॥

(भाष्यम्) 'एकदेशविकृतमनन्यवद्भवति' इति तिङ्ग्रहणेन ग्रहणं भविष्यति ॥

(प्रदीपः) एकदेशविकृतमिति । पचतु पचन्त्वित्यादौ यथा ॥

(उद्द्योतः) भाष्ये—अनन्यवदिति । अर्धाधिकविकारान्यायेनासिद्धेः स्थानिवदित्यतिदेशप्रवृत्तेरुपलक्षणमिदमिति बोध्यम् ॥

(आक्षेपभाष्यम्)

स्वरः कथम् ? ॥

(१६८० वार्तिकम् ॥ ११ ॥)

॥ * ॥ स्वरे विप्रतिषेधात्सिद्धम् ॥ * ॥

(भाष्यम्) [१इदमिह संप्रधार्यम्—] डारौरसः क्रियन्तामनुदात्तत्वमिति । किमत्र कर्तव्यम् ? । परत्वादनुदात्तत्वम् ॥ नित्या डारौरसः कृतेऽप्यनुदात्तत्वे प्राप्नुवन्ति, अकृतेऽपि प्राप्नुवन्ति ॥ अनुदात्तत्वमपि नित्यं कृतेष्वपि डारौरस्सु प्राप्नोति, अकृतेष्वपि प्राप्नोति ॥ अनित्यमनुदात्तत्वम् । अन्यस्य कृतेषु डारौरस्सु प्राप्नोति, अन्यस्याकृतेषु । शब्दान्तरस्य च प्राप्नुवन्विधिरनित्यो भवति ॥ डारौरसोऽप्यनित्याः । अन्यथास्वरस्य कृतेऽनुदात्तत्वे प्राप्नुवन्ति । अन्यथास्वरस्याकृते । स्वरभिन्नस्य च प्राप्नुवन्त्योऽनित्या भवन्ति । उभयोरनित्ययोः परत्वादनुदात्तत्वम् । अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानाद् डारौरसः । टिलोपे उदात्तनिवृत्तिस्वरेण सिद्धम् ॥

(समाधानभाष्यम्)

न सिध्यति । किं कारणम् ? । अन्तरङ्गत्वाद् डारौरसः । तत्रान्तरङ्गत्वाड्डारौरस्सु कृतेषु अनुदात्तत्वं क्रियतां टिलोप इति ॥ किमत्र कर्तव्यम् ? । परत्वाट्टिलोपेन भवितव्यम् ॥

(उद्द्योतः) भाष्ये—तत्रान्तरङ्गत्वादिति । तासेः परं लसार्वधातुकमित्यनुदात्तत्वस्य बहिरङ्गत्वादित्यर्थः ॥ परत्वाट्टिलोपेनेति । डित्त्वसामर्थ्येनाभस्याप्यन्त्यस्य टेरिति शास्त्रस्य प्रवृत्त्या तस्य परत्वादिति भावः ॥ एवं चानुदात्ते उदात्तलोपाभावादुदात्तनिवृत्तिस्वराप्राप्तौ प्रत्ययस्वरप्राप्तावुदात्तत्वमेव श्रूयेतेति तात्पर्यम् ॥

(वार्तिकतात्पर्यान्तरभाष्यम्)

एवं तर्हि *स्वरविप्रतिषेधात् सिद्धम्* । न्याय्य एवायं स्वरविप्रतिषेधः । इदमिह संप्रधार्यम्—अनुदात्तत्वं क्रियतामुदात्तनिवृत्तिस्वर इति । किमत्र कर्तव्यम् ? । परत्वादनुदात्तत्वम् । अनुदात्तत्वे कृते पुनःप्रसङ्गविज्ञानादुदात्तनिवृत्तिस्वरो भविष्यति ॥

(प्रदीपः) न्याय्य एवायमिति । पूर्वप्रदर्शितो हि डारौरसामन्तरङ्गत्वादन्याय्यः । अयं तु न्याय्यः ॥

अथ वा परविप्रतिषेध एवायं न पूर्वविप्रतिषेध इति न्याय्यत्वमुच्यते ॥ इदमिहेति । डारौरस्सु कृतेषु टिलोपे च कृते संप्रधारणेयम् ॥

(उद्द्योतः) किमपेक्षया न्याय्यत्वमित्याशङ्कयाह—पूर्वं प्रदर्शित इति ॥ न्याय्य एवेति भाष्यस्य न्याय्यस्त्वयमित्यर्थः ॥ अथवेति व्याख्या तु चिन्त्या पूर्वमपि परविप्रतिषेधस्यैवोक्तेरिति बोध्यम् ॥ टिलोपात्पूर्वमेतत्संप्रधारणाया असंभवादाह—डारौरस्स्विति ॥ टिलोपे चेति । परत्वादिति भावः ॥ भाष्ये—पुनःप्रसङ्गविज्ञानादित्यस्यापि पर्जन्यवल्लक्षणप्रवृत्त्या लसार्वधातुकानुदात्तत्वे कृते इत्यर्थः ॥

(आक्षेपभाष्यम्)

तदेतत्क सिद्धं भवति यत् पिद्वचनम् । यत्त्वपिद्वचनं तत्र न सिध्यति ? ॥

(प्रदीपः) नन्वकृतेऽनुदात्तत्वे उदात्तनिवृत्तिस्वरो न प्राप्नोति । तत्कथमनयोर्विप्रतिषेध इत्याह—तदेतदिति । तिपोनुदात्तस्य स्थाने डादेशः स्थानिवद्भावादनुदात्तस्तत्रोदात्तनिवृत्तिस्वरस्सिध्यति यत्तु तशब्दस्य स्थाने क्रियते तत्र परत्वाट्टिलोपे कृतेऽनुदात्ते उदात्तलोपो न कृत इत्युदात्तनिवृत्तिस्वरो न सिध्यति पुनः प्रसङ्गविधानात्त्वनुदात्तत्वमेव स्यादित्यर्थः ॥

१ अयं कोष्ठकान्तर्गतो भाष्यपाठः क्वापि नोपलभ्यते ।